
॥ अथ श्रीमदानंदरामायणप्रारंभः ॥

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥ श्रीकुलदेवताभ्योनमः ॥ ॥ वाल्मीकिरुवाच ॥ ॥ वामेभूमिसुतापुरस्तुहनुमान्पृष्ठेसुमित्रासुतःश त्रुघ्नोभ
रतश्चपार्श्वदलयोर्वाय्वादिकोणेषुच ॥ सुग्रीवश्चविभीषणश्चयुवराट्तारासुतोजांबवान्मध्येनीलसरोजकोमलरुचिंरामंभजेश्यामलम् ॥ १ ॥ आदौरावणमर्दनंद्विजगिराती
र्थाटनंसेनयासाकेतेदशवाजिमेधकरणंपत्न्याविलासाटनम् ॥ श्रीपुत्रग्रहणंस्तुषार्थमटनंपृथ्व्याश्वसंरक्षणंरामार्चादिनिरूपणंदयितयास्वीयंस्थलारोहणम् ॥ २ ॥ एकदापार्व
तीदेवीशंकरंप्राहहर्षिता ॥ कैलासवासिनंनत्वाराममत्त्यैकतत्परा ३ ॥ पार्वत्युवाच ॥ शंभोत्वयापुराणानिकथितानिममांतिके ॥ रघुनाथस्यचरितंजन्मकर्मसमन्वितम्
४ कथयस्वाधुनादेवममप्रीतिविवर्द्धनम् ॥ आनंददायकंकर्मरघुवीरेणयत्कृतम् ५ ॥ श्रीशिवउवाच ॥ सम्यक्पृष्टंत्वयाकांतेरामचंद्रकथानकम् ॥ कथयामिसविस्तारंमहामं
गलकारकम् ६ आदिनारायणाद्ब्रह्माऽभून्मरीचिर्विधेःसुतः ॥ मरीचेःकश्यपःपुत्रस्तत्सुतःसूर्यउच्यते ७ सूर्यपुत्रःश्राद्धदेवोमनुर्वैवस्वतस्त्विति ॥ सएवप्रोच्यतेतस्ये
क्ष्वाकुःपुत्रःप्रतापवान् ८ इक्ष्वाकोस्तुविकुक्षिर्हिशशादश्चसएवहि ॥ विकुक्षेस्तुककुत्स्थश्चसएवात्रपुरंजयः ९ सएवोक्तश्चेंद्रवाहःककुत्स्थनृपतेःसुतः ॥ अनेनास्तस्य
पुत्रोभूद्विश्वरंधिश्चतत्सुतः १० चंद्रश्चंद्रस्यपुत्रोभूद्युवनाश्वःप्रतापवान् ॥ शावस्तोयुवनाश्वस्यशावस्तस्यसुतोमहान् ११ बृहदश्वइतिख्यातस्तस्माज्जज्ञेनृपोत्तमः ॥
कुवलयाश्वनृपतिर्दृढाश्वस्तत्सुतःस्मृतः १२ हर्यश्वइतितत्पुत्रोनिकुंभस्तत्सुतःस्मृतः ॥ बर्हणाश्वोनिकुंभस्यबर्हणाश्वनृपोत्तमात् १३ कृताश्वनृपतिःप्रोक्तःश्येनजि
त्तत्सुतःस्मृतः ॥ युवनाश्वःश्येनजितोयुवनाश्वनृपोत्तमात् १४ मांधातात्रसदस्युर्हिसएवकथितोभुवि ॥ पुरुकुत्सश्चमांधातुःपुरुकुत्सस्यवैपुनः १५ त्रस्यदस्युरितिख्या
तोऽनरण्यश्चापितत्सुतः ॥ अनरण्यस्यहर्यश्वोहर्यश्वस्यारुणःसुतः १६ त्रिबंधनोऽरुणाज्जातस्त्रिबंधनसुतोमहान् ॥ सत्यव्रतःसएवात्रत्रिशंकुरितिविस्मृतः १७ सत्यव्रत
स्यपुत्रोऽभूद्धरिश्चंद्रःप्रतापवान् ॥ रोहितस्तत्सुतःप्रोक्तस्तस्माच्चहरितःस्मृतः १८ हरितस्यसुतश्चंपःसुदेवश्चंपदेहजः ॥ सुदेवाद्विजयःप्रोक्तस्तत्पुत्रोभरुकःस्मृतः १९
भरुकस्यवृकःपुत्रोवृकपुत्रस्तुबाहुकः ॥ बाहुकात्सगरोजज्ञेऽसमंजाःसगरात्मजः २० असमंजसःपुत्रोऽभूदंशुमानितिनामतः ॥ तस्यपुत्रोदिलीपस्तुदिलीपाच्चभगीरथः
२१ भगीरथाच्छ्रुतोजातःश्रुतान्नाभःप्रकीर्त्यते ॥ नाभस्यासिंधुद्वीपश्चह्ययुतायुश्चतत्सुतः २२ ऋतुपर्णस्त्वयुतायोःसुदासस्तस्यकीर्त्यते ॥ मित्रसहस्सएवात्रकल्माषां
घ्रिस्सएवहि २३ सुदासस्याश्मकःपुत्रोमूलकोऽश्मकदेहजः ॥ सएवनारीकवचोमूलकस्यसुतोमहान् २४ नाम्नादशरथःप्रोक्तस्तस्यपुत्रःप्रतापवान् ॥ नाम्नात्वैडविडः
१ प्रोक्तस्तस्यविश्वसहःस्मृतः २५ तस्यपुत्रस्तुखट्वांगःखट्वांगाद्दीर्घबाहुकः ॥ दिलीपश्चसएवाऽत्रतस्यपुत्रोरघुःस्मृतः २६ रघोःपुत्रोह्यजःप्रोक्तस्तस्माद्दशरथःस्मृतः ॥
राज्ञोदशरथाज्जातःश्रीरामःपरमेश्वरः २७ यस्यनामान्यनंतानिगृणंतिमुनयःसदा ॥ विष्णोरारम्यकथिताएकषष्टिर्नृपामया २८ एकषष्टिर्नृपाश्चाऽथेमध्येरामोविराजते ॥
तस्यतेचरितंकृत्स्नंसंक्षेपाच्चब्रवीम्यहम् २९ इक्ष्वाकुवंशप्रवरःक्षत्रियोलोकविश्रुतः ॥ बल्वान्सरयूतीरेऽयोध्यायांपार्थिवोत्तमः ३० नाम्नादशरथःश्रीमान्जंबुद्वीपपतिर्म

१ सीतयेतिपाठः । २ स्वीयपुरीतिपाठः ।

हान् ॥ शशासराज्यंधर्मेणसैन्येनसंवृतः ३१ अयोध्यायास्तुसान्निध्येदेशेश्रीकोसलाह्वये ॥ कोसलायांमहापुण्यःकोसलाख्योनृपोमहान् ३२ तस्यासीद्दुहितारम्याकौ
सल्यापतिकामुका ॥ तस्यादशरथेनैवविवाहोनिश्चितोमुदा ३३ लग्नार्थंतंसमानेतुंदूतादशरथंनृपम् ॥ ययुर्विनिश्चयंकृत्वाविवाहदिवसस्यच ३४ तदादशरथश्चापिसाके
तेसरयूजले ॥ नौकास्थोजलजांक्रीडांचक्रेवैमंत्रिबंधुभिः ३५ निशायांसेनयायुक्तःस्तुतोमागधवंदिभिः ॥ रत्नदीपप्रकाशैश्चनृत्युवीरयोषितः ३६ तस्मिन्कालेतुलंका
यांविधिंपप्रच्छरावणः ॥ कस्मान्मेमरणंब्रह्मन्तत्त्वंमांवक्तुमर्हसि ३७ तद्रावणवचःश्रुत्वाकथयामासतंविधिः ॥ कौसल्यायांदशरथाद्रामःसाक्षाज्जनार्दनः ३८ चतुर्धापु
त्ररूपेणभूत्वात्वांसहनिष्यति ॥ पंचमेऽहनिलग्नस्यराज्ञोदशरथस्यहि ३९ दिवसोनिश्चितोविप्रैःकोसलाख्येनरावण ॥ तद्विधेर्वचनंश्रुत्वापुष्पकस्थोदशाननः ४०
अयोध्यांसत्वरंगत्वाराक्षसैःपरिवेष्टितः ॥ नौकास्थंतंदशरथंजित्वायुद्धैःसुदारुणैः ४१ बभंजनिजपादेनतांनौकांसरयूजले ॥ तदासर्वेमृतास्तत्रसरय्वानिर्मलेजले ४२
दशरथसुमंत्रौद्वौनौकाखंडोपरिस्थितौ ॥ शनैःशनैःप्रवाहेणगत्वाभागीरथींनदीम् ४३ ततःसमुद्रमध्येहिजीवितावीश्वरेच्छया ॥ रावणःकोसलांगत्वाकृत्वापरमसंगरम् ४४
कोसलाख्यंनृपंजित्वाकौसल्यांतांजहाररसः ॥ ततःप्रमुदितोलंकांययावाकाशवर्त्मना ४५ दृष्ट्वातिमिंगिलंमत्स्यंवसंतंलवणार्णवे ॥ चित्तेविचारयामासदेवास्तेममशत्रवः
४६ लङ्कायाश्चहरिष्यन्तिकौसल्यांगुप्तविग्रहाः ॥ अतस्तिमिंगिलायेमांन्यासभूतांकरोम्यहम् ४७ इतिनिश्चित्यमनसिपेटिकायांनिधायताम् ॥ मत्स्यंसमर्प्यहृष्टात्मा
ययौलंकांदशाननः ४८ तिमिंगिलोपितामास्येधृत्वाऽब्धौव्यचरत्सुखम् ॥ अग्रेदृष्ट्वारिपुंस्वीयंतेनयुद्धार्थमुद्यतः ४९ द्वीपेतांपेटिकांस्थाप्यसंग्रामंरिपुणाऽकरोत् ॥ एत
स्मिन्नन्तरेनौकाखंडंतंद्वीपमागतम् ५० तदातौमंत्रिनृपतीद्वीपंतमारुरुहतुः ॥ तत्रतांपेटिकांदृष्ट्वासमुद्घाट्याऽतिविस्मितौ ५१ तस्यांदृष्ट्वाऽथकौसल्यांज्ञात्वावृत्तंपरस्प
रम् ॥ तयामुहूर्तसमयेद्वीपेदशरथोनृपः ५२ गांधर्वाख्यंविवाहंचचकारमुदिताननः ॥ ततोराजाऽथकौसल्यासुमंत्रोमंत्रिसत्तमः ५३ त्रयःस्थित्वापेटिकायांतद्द्वारंपिदधुः
पुनः ॥ तिमिंगिलोरिपुंजित्वाचकारास्येतुपेटिकाम् ५४ लंकायांरावणश्चापिसमाहूयविधिंपुनः ॥ उवाचप्रहसन्वाक्यंसभायांसंस्थितःसुखम् ५५ विधेतवमृषावाक्यं
रावणेनमयाकृतम् ॥ हतोदशरथस्तोयेकौसल्यागोपितामया ५६ तद्रावणवचःश्रुत्वासभायांपद्मसंभवः ॥ दीर्घस्वरेणप्रोवाचओंपुण्याहमितिस्फुटम् ५७ रावणः
संभ्रमात्प्राहकिमिदंव्याहृतंत्वया ॥ विधिःप्रोवाचलग्नंहिजातंदशरथस्यहि ५८ तदाविधिंमृषाकर्तुंदूतान्संप्रेष्यसादरम् ॥ तिमिंगिलात्समानीयपेटिकांब्रह्मणोंतिके
५९ समुद्घाट्यददर्शाऽसौतत्रतस्यांदशाननः ॥ तदाऽतिचकितःक्रुद्धस्तान्हंतुंखड्गमाददे ६० तदाऽतिसंभ्रमाद्वेधारावणंवाक्यमब्रवीत् ॥ किंकरोषिदशास्यत्वं
माऽधुनासाहसंकुरु ६१ कौसल्यैकास्थापिताऽस्यांपेटिकायांत्वयापुरा ॥ त्रयस्तत्रतुसंजाताभविष्यंत्यत्रकोटिशः ६२ भविष्यतिवधस्तेऽद्यरामोऽद्यैवजनिष्य
ति ॥ साहसंकुरुमाद्यैवसत्यायुषिदशानन ६३ यद्भविष्यंतद्भवतुतदग्रेमास्तुसांप्रतम् ॥ एतान्दूतैःप्रेषयाऽद्यसाकेतंत्वंसुखीभव ६४ नभविष्यतिमद्वाणीमृषा

१ जीवंताविति पाठः । २ खंडस्तंद्वीपमप्राप्तः इति पाठः

तद्विधेर्वचनंसत्यंमत्त्वाभीतोदशाननः ॥ पेटिकांप्रेषयामाससाकेतंस्वभटैर्जवात् ६६ साकेतेपेटिकांत्य
जानीहिनिश्चयम् ॥ यद्भाव्यंतद्भवत्येवगहनाकर्मणोगतिः ६५ तद्विधेर्वचनंसत्यंमत्त्वाभीतोदशाननः ॥ पेटिकांप्रेषयामाससाकेतंस्वभटैर्जवात्
क्त्वाभटास्तेरावणंगताः ॥ अयोध्यायांमहानासीत्संभ्रमोनृपदर्शनात् ६७ अयोध्यावासिनांनृणांकोसलाधिपतेरपि ॥ ततःपुनर्विवाहस्यसंभ्रमंकोसलाधिपः ६८ कृत्वा
स्वराज्यंजामात्रेददौप्रीत्याहिपुत्रिकाम् ॥ तदारभ्यकोसलेंद्राःप्रोच्यंतेरविवंशजाः ६९ ततोराजादशरथःसुमित्रांमगधेशजाम् ॥ विवाहेनाऽपरांपत्नींचकारदयितांप्रि
याम् ७० कैकेयनृपतेःकन्यांकैकेयींपद्मलोचनाम् ॥ विवाहेनाऽकरोद्भार्यांतृतीयांपरमादरात् ७१ तथान्यानिसप्तशतकलत्राण्यऽकरोन्नृपः ॥ एवंराजादशरथःशशा
सजगतीतलम् ७२ दानैर्भोगैर्दशरथोबभूवजरठोमहान् ॥ नाऽभवत्संततिस्तस्यधार्मिकस्याऽवनीपतेः ७३ कौसल्याचसुमित्राचकैकेयीचगिरींद्रजे ॥ एताःकुलीनाः
सुभगारूपयौवनसंयुताः ७४ तस्मिन्शासतिराज्यंतुस्थितेऽयोऽध्यापुरिप्रिये ॥ देवानांदानवानांचराज्यार्थंविग्रहोमहान् ७५ तत्रवागभवच्छ्रेष्ठायत्रायोध्यापतिर्महान् ॥
जयस्तत्रनसंदेहस्तांश्रुत्वापवनोजवात् ७६ प्रार्थयामासनृपतिंगत्वायुद्धायसादरम् ॥ ततोगत्वादशरथश्चकारकदनंमहत् ७७ एतस्मिन्नंतरेतत्रसंग्रामेऽतिभयावहे ॥
भिन्नाक्षंस्वरथंराजानाविंददिष्टसंभ्रमात् ७८ राज्ञोंतिकेस्थितासुभ्रूःकैकेयीरणकौतुकम् ॥ पश्यंतीस्वरथंभिन्नंददर्शसमरांगणे ७९ अक्षवत्सानिजंहस्तंचकारजयहेतवे ॥
तयातुपूर्वंबाल्यत्वान्मध्यास्यंकस्याचिन्मुनेः ८० कृष्णवर्णकृतंतेनशप्ताऽप्यपवादतः ॥ मुखमग्रेनिरीक्ष्यंतिनैवलोकाःकदाचन ८१ ततस्तंगंतुमुद्युक्तंकैकेयीवामहस्त
तः ॥ दंडादिकंददौतस्यमुनेर्हस्तेऽतिभक्तितः ८२ तस्यैददौवरंविप्रस्तववामकरोवरात् ॥ भवितावज्रकठिनःकापिनाशंनचैष्यति ८३ कैकेयीतंवरंस्मृत्वास्वंचकाराक्ष
वत्कम् ॥ अथजित्वारणेदैत्यान्दृष्ट्वातत्कर्मपार्थिवः ८४ ददौवरौद्वौतस्यैसन्यासभूतौकृतौतया ॥ यदाऽहंयाचयिष्यामितदात्वंदेहितौमम ८५ तथेत्युक्त्वानृपःपत्नींय
योस्वनगरींप्रति ॥ एकदासनिशायांतुमृगयायांमहावने ८६ चकारवारिबंधंचावधीद्वनचरानबहून् ॥ एतस्मिन्नंतरेतत्रवनेवाराणसीपथा ८७ करंडस्थौस्वपितरौस्व
स्कंधेश्रवणोवहन् ॥ कौशीनेतुंययौवैश्योधर्मबाधाभयान्निशि ८८ नीरंपातुंशिशोदेहिचाक्योश्चेतिप्रार्थितः ॥ ताभ्यांकरंडकेन्यस्यतटाकेजलसंनिधौ ८९ गत्वाजलेस्व
यंकुंभंन्युब्जंतस्थौजलेक्षणम् ॥ कुंभस्यन्युब्जतःशब्दोबभूवकरिणोयथा ९० वनद्विपोनहंतव्यश्चेतिजानन्नपिनृपः ॥ वैश्यंराजाद्विपंमत्त्वाविव्याधसपतत्रिणा ९१ पं
पातश्रावणस्तोयेहाकेनाऽहंप्रताडितः ॥ ब्रुवतश्चेतितद्वाक्यंश्रुत्वाऽभूद्विह्वलोनृपः ९२ गत्वाजलाद्बहिर्वेगात्तंकृत्वाऽऽकर्ण्यताद्गिरा ॥ सर्ववृत्तंविशल्यंतंचकारमयविह्व
लः ९३ तावंधावपितत्पुत्रवधंश्रुत्वारुरुदतुः ॥ कारयित्वानृपतिनाचितिंपुत्रसमन्वितौ ९४ दशरथायतौशापंददतुःपुत्रदुःखितौ ॥ पुत्रशोकादावयोर्हियथामृत्युस्तवा
स्त्विति ९५ ययौनृपोऽपिनगरींगुरुंवृत्तंन्यवेदयत् ॥ वसिष्ठोनृपतेर्दोषशांत्यर्थंतुरगाध्वरम् ९६ नृपेणकारयामाससाकेतेसरयूतटे ॥ रोमपादइतिख्यातस्तस्मैदशरथः
सखा ९७ शांतांस्वकन्यांप्रायच्छत्तद्राष्ट्रेऽभूदवर्षणम् ॥ विभांडकाश्रमंवारनारीःसंप्रेष्यतत्सुतम् ९८ रोमपादोमोहयित्वाऋष्यशृंगंसमानयत् ॥ वारस्त्रियोवनेगत्वास

१ शास्तासजगतीतलेइतिपाठः । २ विग्रहोऽभवदितिपाठः । ३ एषसंभ्रमादितिपाठः । ४ गत्वाकृत्वाजलेकुंभमितिपाठः । ५ तथांतःश्रावणस्तोयेइतिलिखितपुस्तकपाठः । ६ दत्वात्विति पाठः ।

येनैर्गें
मानिन्युर्ऋष्यशृंगीसुतम् ९९ नाटचैर्संगीतवादित्रैर्विभ्रमालिंगनार्हणैः ॥ तत्प्रतापादभूद्दृष्टिः पुत्रोऽपिनृपतेरभूत् १०० ततस्तुष्टोरोमपादस्तस्मैशांतांददौसुताम् ॥ दशरथो
ऽपिस्वपुरीमानयामासतंमुनिम् १ सतुराज्ञोऽनपत्यस्यनिरूप्येष्टिंमरुत्वतः ॥ प्रत्यक्षंहिचकाराग्निर्यज्ञकुंडात्सपायसम् २ आविर्भूत्वास्वयंवन्हिर्ददौराज्ञेसुपायसम् ॥
राज्ञाविभक्तंस्त्रीभ्यस्तत्कैकेय्याऽदुष्टभावतः ३ अहरत्पायसंहस्ताद्गृध्रीशापविमोचकम् ॥ सुवर्चलाऽप्सरोमुख्याऽनृत्यभंगात्स्वयंभुवा ४ शप्ताजातातुसाऽऽग्रीतयावेधाःसु
तोषितः ॥ तस्यैतुष्टोविधिःप्राहकैकेयीपायसंयदा ५ प्राक्षिपस्यंजनिगिरौतदातेभवितागतिः ॥ अप्सरात्वंपूर्ववच्चभविष्यासिनसंशयः ६ तस्मात्सापायसंनीत्वाक्षिप
दंजनिपर्वते ॥ निजंस्वरूपंसालब्ध्वाजगामसुरमंदिरम् ७ ततस्ताभ्यांतुकैकय्यैदत्तंकिंचितुपायसम् ॥ अथताभक्षयामासुरंतर्गर्भास्तदाऽभवन् ८ आसंस्तासांदोहदा
स्तेपुत्राणांभाविकर्मभिः ॥ पुत्राणांभाविकर्माणिविदुस्तेदोहदैर्जनाः १०९ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेवाल्मीकीयेसारकांडेप्रथमःसर्गः ॥१॥
॥ श्रीशिवउवाच ॥ एतस्मिन्नंतरेभूमिर्दशास्यादिप्रपीडिता ॥ ब्रह्मणाप्रार्थयामासविष्णुंसोऽपितदाऽब्रवीत् १ भूम्यामवतरिष्यामिभवंतुकपयःसुराः ॥ गंधर्वीदुंदुभीना
म्नीभूम्याःकार्यार्थसिद्धये २ मंथराऽस्त्रेभवत्वद्धाराज्यविघ्नार्थसिद्धये ॥ पश्चात्पुनर्द्वापरांतिकुब्जात्वंकंसमंदिरे ३ अथविष्णुश्चैत्रमासिनवम्यांमध्यगेरवौ ॥ सूतिकागृहम
ध्येऽत्रकौसल्यायाःपुरोऽभवत् ॥ चतुर्भुजःपीतवासामेघश्यामोमहाद्युतिः ४ साऽपिदृष्ट्वाबालभावंप्रार्थयामासतंहरिम् ॥ ततोजातस्तदाबालःक्षणादुक्मविभूषितः ५
हेमवर्णःकंजनेत्रश्चंद्रास्यस्तपनप्रभः ॥ ततःसुमित्रापुरतःशेषोऽभूद्बालरूपधृक् ६ आविर्भूतौद्वौयमलौकैकेय्याःशंखचक्रके ॥ एवंतेजनिताबालाश्चत्वारःसमयेशुभे ७
देवदुंदुभयोनेदुःपुष्पवृष्टिःशुभाऽपतत् ॥ जातकर्मादिसंस्कारान्गुरुणानृपतिस्तदा ८ कारयामासविधिवन्नचतुर्वारयोषितः ॥ ज्येष्ठंरामंतुकौसल्यातनयंप्राहवैगुरुः ९
सुमित्रातनयंनाम्नालक्ष्मणंगुरुरब्रवीत् ॥ ततोभरतशत्रुघ्ननामनीप्राहवैगुरुः १० रमणाद्राम एवासौलक्षणैर्लक्ष्मणस्त्विति ॥ भरणाद्भरतश्चेतिशत्रुघ्नःशत्रुतर्जनात् ११ अं
थवद्वृधिरेसर्वेलक्ष्मणोराघवेणहि ॥ शत्रुघ्नोभरतेनाऽपिचकारक्रीडनादिकम् १२ रुक्मकंकणमंजीरनूपुरैस्तेविभूषिताः ॥ केयूररशनाहारकुंडलैरतिशोभिताः १३ शृंखे
लाबद्धरुक्मादिनिर्मितेषुवरेषुच ॥ मंचकेषुकुमारास्तेविरेजुरुक्ममालिनः १४ भालेस्वर्णमयाश्वत्थपर्णान्यतिमहांतिच ॥ मुक्ताफलाग्रलंबीनिशोभयंतिस्मबालकान् ॥
१५ कंठेरत्नमणिव्रातमध्यद्वीपिनखांचिताः ॥ कर्णयोःस्वर्णसंपन्नरत्नार्जुनसुतालकाः १६ सिंजानमणिमंजीरकटिसूत्रांगदैर्युताः ॥ स्मितवक्त्राल्पदशनाइंद्रनीलमणि
प्रभाः १७ अंगणेरिंगमाणाश्चसंस्कारैःसंस्कृताःशुभाः ॥ तेतातंरंजयामासुर्मातृंश्चापिविशेषतः १८ कौसल्यानृपतिश्चापिनानावस्त्रैःसुभूषणैः ॥ शोभयामासतुर्बाला
न्नानाव्याघ्रनखादिभिः १९ रामःस्वपितरंदृष्ट्वाभोजनस्थंत्वरान्वितः ॥ दुद्रावकवलंपात्राद्गृहीत्वासपुनर्बहिः २० कौसल्याबालकंधर्तुंदुद्रावनृपचोदिता ॥
नतस्याःकरगश्चासीद्योगिनामप्यगोचरः २१ परिवृत्यस्वयंरामःकरेणमृदुलेनच ॥ कौसल्यास्येनृपास्येऽपिकवलावकरोन्मुदा २२ एवंनानाकौतुकैश्च

१ ब्रह्मार्पितइतिपाठः । २ भवेद्धात्रीतिपाठः । ३ इदधर्ममुद्रितपुस्तकेधिकं । ४ एवमितिपाठः । ५ अनेकरुक्मरत्नादीतिपाठः । ६ कवलंददौसुवेतिपाठः ।

रंजयामासराघवः ॥ नानाशिशुक्रीडनकैश्चेष्टितैर्मुग्धभाषितैः २३ बालकृत्रिमयुद्धैश्चगमनैर्मुखचुंबनैः ॥ पितरौनिजचारित्रैर्वाहनारोहणादिभिः २४ ततस्तेबालकाः
सर्वेवस्त्रालंकारभूषिताः ॥ सभायांपितरंनत्वातस्थुःसिंहासनोपरि २५ अथपित्रोपनीतास्तेगुरुणामुनिभिर्मुदा ॥ गर्भात्संवत्सरेषष्ठेजन्मतःपंचमेसमे २६ ब्रह्मवर्चस
कामस्यकार्यंविप्रस्यपंचमे ॥ राज्ञोबलार्थिनःषष्ठेवैश्यस्यार्थार्थिनोऽष्टमे २७ विद्वद्भिश्चोपनयनमेवंशास्त्रेषुनिर्णयः ॥ गुरोरास्यात्सुमुहूर्तेवेदान्सांगांश्चतुर्विधान् २८ चं
कुर्मुखोद्गतानेवकलाःशास्त्रादिकान्यपि ॥ ब्रह्मचर्यसमाप्तौतेतीर्थान्याजग्मुरादरात् २९ सेनयामंत्रिसहितावसिष्ठेनसमन्विताः ॥ षण्मासैःपुनरागत्यसाकेतंविविशुर्मुदा
३० एवंतेमतिमंतश्चप्रियाराज्ञोवशेस्थिताः ॥ पितरंरंजयामासुःपौरान्जानपदानपि ३१ ॥ ॥ इति श्रीशतकोटिरामायणांतर्गतश्रीमदानंदरामायणेवाल्मीकीये
सारकांडे रामजन्म नाम द्वितीयः सर्गः ॥ २ ॥ ॥ श्रीशिवउवाच ॥ ॥ एतस्मिन्नंतरेऽयोध्यांविश्वामित्रोययौमुनिः ॥ यज्ञसंरक्षणार्थायराजानंमु
निरब्रवीत् १ रामंचलक्ष्मणंचापिमह्यंदेहिकियद्दिनम् ॥ गुरुणामंत्र्यराजाऽपिप्रेषयामासतौतदा २ जग्मतुर्यज्ञरक्षार्थंगाधिजेनरथस्थितौ ॥ ततःप्रहृष्टोगाधेयः
स्थित्वाकामाश्रमेपथि ३ प्रभातेस्नातयोःस्नातःप्रादाद्विद्यास्तयोर्मुदा ॥ माहेश्वरींचमद्विद्यांधनुर्विद्यापुरःसराम् ४ शास्त्रीमर्त्यांलौकिकींचरथविद्यांगजोद्भवाम् ॥
अश्वविद्यांगदाविद्यांमंत्राह्वानविसर्जने ५ क्षुत्तृट्श्रमविलोपिन्यौबलामतिबलामपि ॥ सर्वविद्यास्त्ववाप्याथहृष्टौतौरामलक्ष्मणौ ६ वनौकसांहितार्थायजघ्न
तुस्तत्रराक्षसान् ॥ पथिपांथजनध्वंसकारिणींनामताटिकाम् ७ राक्षसीमेकबाणेनजघानरघुनंदनः ॥ अप्सरासामुनिंपूर्वंक्षोभयामासकानने ८ राक्षसीतस्यशापेनब
भूवसुंदकामिनी ॥ मारीचश्चसुबाहुश्चसुंदात्तस्याःसुतावुभौ ९ रामबाणाद्गतिस्तस्यैकीर्तितामुनिनापुरा ॥ साप्राप्यदिव्यदेहत्वंनत्वारामंदिवंगता १० विश्वामित्राश्रमं
रामोगत्वातद्यज्ञघातकान् ॥ राक्षसान्निशितैर्बाणैर्जघानरघुनंदनः ११ प्रारंभंरणयज्ञस्यचकाररघुनंदनः ॥ हत्वासहस्रशःश्रीमान्राक्षसान्निशितैःशरैः १२ क्षिप्त्वाबा
णेनमारीचंशतयोजनसागरे ॥ हत्वासुबाहुंचैकेनबाणेनरघुसत्तमः १३ कृत्वागाधिजयज्ञस्यसमाप्तिंरघुनंदनः ॥ नाकरोद्रणयज्ञस्यसमाप्तिंस्वकृतस्यच १४ कालानल
मद्धसंतंदद्वातत्तृप्तिहेतवे ॥ श्रुत्वाजनकगेहेवैतत्कन्यायाःस्वयंवरम् १५ रामलक्ष्मणसंयुक्तोमुनिस्तंनगरंययौ ॥ गमनावसरेमार्गेभर्तृशप्तांशिलांमुनिः १६ मुनिरूपमहे
द्रेणभुक्तांरहसिशोभनाम् ॥ गौतमस्यांगनांनाम्नाह्यहल्यांकथयत्तयोः १७ ब्रह्मणानिर्मिताऽहल्याद्विमुखीगोःपरिक्रमात् ॥ दत्तापुरागौतमायविसृज्येंद्रादिकान्सुरान् १८
तत्स्मरन्मघवावैरंतांभुक्त्वामुनिशापतः ॥ सहस्रभगवान्जातःसहस्रलोचनस्ततः १९ श्रीरामचंद्रोनिजपादपद्मस्पर्शेनतांगौतमधर्मपत्नीम् ॥ निष्कल्मषामद्भु
तरूपयुक्तांचकारदेवःकरुणासमुद्रः २० नदीरूपाजनस्थानेऽहल्यागौतमशापतः ॥ रामेणभ्रमतारण्येस्वांघ्रिस्पर्शात्समुद्धृता २१ कल्पभेदाद्ददंतीत्थंमुनयश्चापि
केचन ॥ नैवंशापोस्तिसर्वेषुकल्पेषुसत्कथातथा २२ ततस्तौसुरगंधर्वैर्वर्षितौपुष्पवृष्टिभिः ॥ दत्वाऽहल्यांगौतमायजग्मतुर्जाह्नवींप्रति २३ रामंनौकांकांक्ष

१ चतुर्मुखोद्गतानेवेतिपाठः । २ सर्वविद्यामवाप्येतिपाठः । ३ नैकरूपास्तीतिपाठः ।

माणंनौकापोवाक्यमब्रवीत ॥ ॥ नाविकउवाच ॥ ॥ आदावहंक्षालयित्वापादरेणूंस्तवप्रभो २४ पश्चान्नौकांस्पर्शयामितवपादौरघूद्वह ॥ नोचे
त्वत्पादरजसास्पृष्टानारीभविष्यति २५ क्षाल्यामितवपादपङ्कजंनाथदारुदृषदोःकिमंतरम् ॥ मानुषीकरणचूर्णमस्तितेइतिलोकेहिकथाप्रथीयसी २६ अस्तिमे
गृहिणीगेहेकिंकरोम्यपरांस्त्रियम् ॥ इतितद्वाक्यमाकर्ण्यविहस्यरघुनंदनः २७ तेनसंक्षालितपदोनौकांतामारुरोहसः ॥ ततस्तीर्त्वाजाह्नवींतेमिथिलांमुनिभिर्य
युः २८ मिथिलायांसमाहूताकोटिशःपार्थिवाययुः ॥ सारणास्यादशास्योऽपिययौश्रुत्वास्वमंत्रिभिः २९ अनाहूतोपुष्पकेणसेनयापरिवातः ॥ नययोपुत्रवि
रहाद्राजादशरथस्तदा ३० अस्यादरेर्विदेहेनसमाहूतोऽपिभक्तितः ॥ श्रीरामलक्ष्मणाभ्यांचविश्वामित्रोमुनीश्वरैः ३१ शनैर्मुदासमिथिलांवहिश्चोपवनंययौ ॥
विश्वामित्रंसमानेतुंजनकोमंत्रिभिःसह ३२ यावद्गंतुंमनश्चक्रेतावच्छिष्यःसमाययौ ॥ विश्वामित्रस्यतंदृष्ट्वाननामजनकस्तदा ३३ ततःशिष्यःकरंधृत्वाजनक
स्यकरेणहि ॥ नीत्वारहसिप्रोवाचवचनंस्वगुरोःस्फुटम् ३४ त्वामाहगाधिजोराजन्राज्ञोदशरथस्यहि ॥ मयापुत्रौसमानीतौवीरौश्रीरामलक्ष्मणौ ३५ तौसीतोर्मिलयोः
पाणिग्रहणंहिकरिष्यतः ॥ पणीकृतंत्वयाचापंरामोऽयंखंडयिष्यति ३६ अतोवरविधानेनतौपुरींनेतुमर्हसि ॥ एतद्वृत्तंचापभंगपर्यंतंमास्फुटंकुरु ३७ इत्युक्त्वाजनकंशि
ष्यःस्वगुरुंशीघ्रमाययौ ॥ जनकोऽपिमुदायुक्तस्तूष्णीमेवपुरींनिजाम् ३८ तोरणाद्यैःशोभयित्वासैन्येनपरिवेष्टितः ॥ वारणेंद्रंपुरस्कृत्यसभार्यस्तैर्नृपैःसह ३९ सुमेधादिप्र
मदाभिर्नानावाद्यैर्मनोहरैः ॥ विश्वामित्रांतिकंगत्वानत्वासंपूज्यतंमुनिम् ४० अज्ञातइवतौपृष्ट्वाश्रुत्वातद्वृत्तमादरात ॥ वस्त्रालंकारभूषाद्यैःसत्कृत्यविधिवन्नृपः ४१ गजयो
स्तौसमारोप्यचामराद्यैःसुवीजितौ ॥ विश्वामित्रेणमुनिनानिनायमिथिलांपुरीम् ४२ ननृतुर्वारनार्यश्चतुष्टुवुर्बंदिमागधाः ॥ नेदुर्नानासुवाद्यानिजगुस्तेतुनटादयः ४३
तदातौहट्टमार्गेणजग्मतुश्चाऽतिशोभितौ ॥ श्रुत्वाचपुरनार्यश्चवीरौश्रीरामलक्ष्मणौ ४४ समागताविति मुदागोपुराट्टालसंस्थिताः ॥ कंजनेत्रैर्ददृशुस्तौववृषुःपुष्पवृष्टिभिः
४५ तदापरस्परंप्रोचुःसीतायोग्योवरस्त्वयम् ॥ रामोऽस्माकंरोचतेहिकरोत्वेवंविधिस्तुसः ४६ उर्मिलायास्तुयोग्योऽयंलक्ष्मणोऽस्तिसुलक्षणः ॥ अस्माकंसुकृतैरद्य
तयोरेतौपतीशुभौ ४७ श्रीरामलक्ष्मणौरम्यौभवतश्चोत्तमोत्तमौ ॥ एवंतासांकामिनीनांवचनानिनृपात्मजौ ४८ शुश्रुवतुःशुभान्येवगूध्वोस्यौताददर्शतुः ॥ ततस्तेमि
लिताःसर्वेनृपाःप्रोचुःपरस्परम् ४९ एतादृशोविदेहेनयदास्माभिःसमागतम् ॥ तदोत्सवःकृतोनैवह्यनयोःक्रियतेकथम् ५० किमंतःस्थेनराज्ञाऽद्यसीतारामायसाऽर्पि
ता ॥ किमस्माकंसमाहूयमानभंगोऽद्यनःकृतः ५१ एवंतेषांनृपाणांचवचनानिनृपात्मजौ ॥ जनकोगाधिजश्चापिशुश्रुवुस्तेसमंततः ५२ ततःशनैःशनैर्वीरौगवाक्षैः
स्त्रीभिरीक्षितौ ॥ जग्मतुर्वाद्यघोषाद्यैर्जनकस्यसभांप्रति ५३ ततोऽवतरतुर्वीरौगजाभ्यांमुनिनासह ॥ तत्स्वयंवरशालायामुपविष्टेषुराजसु ५४ विश्वामित्रानुगौतौहि
मुनिशालांप्रजग्मतुः ॥ ऋद्धायांमुनिशालायांमुनेरग्रेनिषीदतुः ५५ एवंसभायामृद्धायांराज्ञाकन्याप्रतिग्रहे ॥ प्रतिज्ञातंममधनुस्तत्सज्जंत्वमुपस्थितम् ५६ यदाऽधीता



१ अर्धश्लोकः मुद्रितपुस्तके नास्ति । २ भंगेति पाठः । ३ शालायांसूपविष्टे ष्विति पाठः ।

धनुर्विद्यामत्तःपरशुधारिणा ॥ तदादत्तंमयातस्मैधनुस्त्रिपुरदाहकम् ५६ तेनैकविंशद्वारंहिनिःक्षत्रापृथिवीकृता ॥ सहस्रबाहुर्निहतःस्वपितुर्घातकारणात् ५७
तन्मैथिलांगणेस्थाप्यजामदग्न्योनृपंययौ ॥ अश्ववत्तद्धनुःकृत्वाजानकीक्रीडनंव्यधात् ५८ जामदग्न्यस्तेनसीतांज्ञात्वालक्ष्मींतादिच्छया ॥ ददौनृपंपणार्थंतद्धनुरन्यैर्दु
रासदम् ५९ पणीकृतंधनुस्तच्चविदेहेनस्वयंवरे ॥ ततःसभायांवृद्धायांजनकःप्राहशंकितः ६० संस्थाप्यराज्ञांपुरतस्तन्मेचापमनुत्तमम् ॥ शस्त्रागारात्समानीतंवृषैःपं
चशतैस्तुयत् ६१ सीतास्वयंवरार्थंयन्न्यस्तंपरशुधारिणा ॥ नृपःप्राहसभामध्येयोवीरस्त्वद्यसंसदि ६२ करिष्यतिधनुःसज्जंतस्मैसीतांवरिष्यति ॥ तत्तस्यवचनंश्रुत्वाधनु
र्दृष्ट्वाऽचलोपमम् ६२ अधोमुखास्तदासर्वेबभूवुःपार्थिवोत्तमाः ॥ केचिद्भूमेःसमुद्वोढुंधनुःशक्तानचाऽभवन् ६४ भूमेरुच्चालितेकेचिदूर्ध्वंनेतुंनचाशकन् ॥ सर्वेऽप्युच्चालने
तस्यनृपाःशक्तानचाऽभवन् ६५ सज्जीकारःकुतस्तस्यमनसाऽप्यविचिंतितः ॥ धनुःसज्जीकृतौसर्वान्नृपानज्ञात्वापराङ्मुखान् ६६ तदातिगर्वसंरूढःसभायांरावणोऽब्र
वीत् ॥ धनुषःसन्निधिंगत्वाविहसन्जनकंप्रति ६७ येनवैनिर्जितादेवास्त्रैलोक्यंस्ववशेकृतम् ॥ आंदोलितोभुजाभिर्हिकैलासोयेनवैमया ६८ तस्यमेजनकाऽद्यत्वंबलंपा
र्थिवसंसदि ॥ द्रष्टुमिच्छसिकिंत्वस्मिन्लघुचापेतृणोपमे ६९ एवंवदन्दशास्यःसन्नग्रेभूत्वामहद्धनुः ॥ गृहीतुंवामहस्तेनचालयामासवैतदा ७० नतच्चचालकिंचिच्च
तदादक्षिणसत्करम् ॥ पुरःकृत्वागृहीतुंतच्चालयामासवैपुनः ७१ नतच्चचालतदपितदाश्चर्येणरावणः ॥ भुजाभ्यांचालयामासतदाचापंचचालन ७२ एवंक्रमेणसर्वाभि
र्भुजाभिश्चालयन्धनुः ॥ विंशद्दोर्भिरेकदेशंचापस्योर्ध्वंचकारसः ७३ एकोनविंशद्दोर्भिश्चधृत्वाचैवमहद्धनुः ॥ गुणंभूम्यांनिपतितंगृहीतुंहिदशाननः ७४ किंचिद्भूत्वा
विनम्रःसदोष्णाजग्राहतंगुणम् ॥ एतस्मिन्नंतरेतच्चपपातहृदयेधनुः ७५ नतद्विंशद्भुजाभिश्चचचालहृदयाद्धनुः ॥ तदासभायांमूर्च्छांस्यःपपातसदशाननः ७६ मुकुटः
पतितोभूमौमुक्तकच्छोऽप्यभूत्तदा ॥ तदाविजहसुःसर्वेसभायांपार्थिवोत्तमाः ७७ तदाप्राणांतिकंचासाद्रावणस्यसभांगणे ॥ अक्षीणिभ्रामयामासलालास्येभ्योविनिर्य
यौ ७८ तदातंवेष्टयामासुर्मंत्रिणोराक्षसास्तदा ॥ धनुरुच्चालनेशक्तास्तेऽभवन्नैवसंसदि ७९ सद्यस्त्वेपुदशास्यःसविष्ठामूत्रंतदाऽकरोत् ॥ ततःसभायांजनकःपुनःप्राहाति
शंकितः ८० कोऽपिवीरोऽस्तिभूम्यांवाकिंनिर्वीरंहिभूतलम् ॥ चेदस्तिकश्चित्सदसितर्हिसोऽद्यसभांगणे ८१ जीवदानंकरोत्वस्मैदशास्यायनृपाग्रतः ॥ इतिवाक्यशरा
घातभिन्नौतौरामलक्ष्मणौ ८२ ददर्शतुर्गाधिजस्यमुखंतौस्फुरितभ्रुवौ ॥ विश्वामित्रस्तदाप्राहरामंचोत्तिष्ठराघव ८३ किमंतंरावणस्याऽद्यत्वंपश्यसिसभांगणे ॥ जीव
२ यैनंराक्षसेंद्रंसज्जंकुरुधनुस्त्विदम् ८४ तन्मुनेर्वचनंश्रुत्वातथेत्युक्त्वासराघवः ॥ तदोत्थायासनाद्वेगात्प्रणनाममुनीश्वरम् ८५ निष्कास्यकंठाद्धारादीन्कटिंबद्ध्वातदाप्र
भुः ॥ मुकुटादिदृढंकृत्वाशनैःप्रापसभांगणम् ८६ तंराममागतंदृष्ट्वाजनाःसर्वेऽतिविस्मिताः ॥ चकिताःपार्थिवाःसर्वेददृशुर्नेत्रपंकजैः ८७ परस्परंतदाप्रोचुःकिंमूढोऽ
स्तिशिशुस्त्वयम् ॥ यत्रास्माभिःस्थितंतूष्णींतत्रायंकिंकरिष्यति ८८ केचिदाहुर्दशास्यंहिद्रष्टुंबालःसमागतः ॥ केचिदूचुर्बालचेष्टाक्रियतेशिशुनाऽत्रहि ८९ केचिदूचुः
किमर्थंहिहाराशुक्तास्त्वनेनाहि ॥ केचिदूचुर्गाधिजेनचापंप्रतिसुयोजितः ९० केचिदूचुर्वैरबुद्ध्याचोदितःकिंशिशुस्त्वयम् ॥ वधार्थंचापघातेनविश्वामित्रेणराघवः ९१

केचिदूचुर्बलंत्वस्यमुनिनाऽत्रनिरीक्षितुम् ॥ चोदितोऽस्त्यत्रश्रीरामश्चापेऽयंकिंकरिष्यति ९२ एवंनानाविधांस्तर्कान्यावत्कुर्वंतिपार्थिवाः ॥ तावद्दृष्ट्वाऽग्रतोरामंजनकः
प्राहगाधिजम् ९३ किमर्थंप्रेषितस्त्वत्रमुनेबालःसभांगणे ॥ यत्रैतेरावणाद्याश्चनृपाःसर्वेऽतिकुंठिताः ९४ तस्मिंश्चापेत्वयंबालःकिमागत्यकरिष्यति ॥ यत्त्वयाशिष्यत्वा
क्येनपूर्वंचाहंप्रबोधितः ९५ तत्सर्वंतुमृषैवाद्यचापाग्रेमुनिसत्तम ॥ कायंबालःकोमलांगःक्वेदंचापंसुदुर्धरम् ९६ किंचातकस्तृषाक्रांतःसागरंशोषयिष्यति ॥ एतस्मिन्नं
तरेसर्वाःसुमेधाद्याःस्त्रियश्चताः ९७ गवाक्षजालरंध्रैश्चप्रासादोपरिसंस्थिताः ॥ ददृशुःसुकुमारांगंरामंपंकजलोचनम् ९८ द्विजराजाननंचारुदोर्दंडद्वयशोभितम् ॥ हेम
वर्णोपमरुचिंशृंखलानूपुरांघ्रिणम् ९९ शृंखलाकंकणवरद्वयशोभितसत्करम् ॥ दिव्यकुंडलमुकुटरत्नालंकारशोभितम् १०० सुजंघंसुपदंश्वूरंसुजानुंसुंदरोदरम् ॥ सुरकं
घंसुहनुंकंबुकंठंत्रिवलिशोभितम् १ स्मितास्यंकोमलोष्ठंचसुदंतावलिरंजितम् ॥ सुनासंसुकपोलंचकंजपत्रायतेक्षणम् २ सुशुभालंचसुस्निग्धंकुंचितालकशोभितम् ॥ सु
क्तामाणिक्यरत्नादिनानाऽलंकारशोभितम् ३ मुक्तारत्नपुष्पमालान्यस्तमप्यातिशोभितम् ॥ न्यस्तहारंन्यस्तवस्त्रंबद्धपीतांबरान्वितम् ४ दिव्यमुद्रांगुलिलसत्पंकज
द्वयसत्करम् ॥ एवंदृष्ट्वास्त्रियोरामंसभांगणविराजितम् ५ न्यस्तकोदंडतूणीरंशिवचापाभिसंमुखम् ॥ प्रार्थयामासुस्ताःसर्वाऊर्ध्वास्याऊर्ध्वसत्कराः ६ पश्यंत्योगगने
शंभुंमोहान्नारायणंविधिम् ॥ साक्षान्नारायणंरामनज्ञात्वाताश्चवैस्त्रियः ७ हेशंभोहेरमाकांतहेविधेऽस्मत्पुराकृतैः ॥ व्रतदानादिपुण्यैश्चचापंसज्जीकरोत्वयम् ८ युष्माभिर्नःसु
कृतैश्चकर्तव्यंपुष्पवद्धनुः ॥ अद्याऽस्यकंठदेशेऽत्रमालांसीतादधात्वियम ९ नोभवत्वद्यनेत्राणांसाफल्यंदर्शनादिह ॥ सीतयारामचंद्रस्यवेदिकायांस्थितस्यहि ११० ए
तस्मिन्नंतरेसीतारामंदृष्ट्वासभांगणे ॥ दिव्यप्रासादसंरूढासखीभिःपरिवेष्टिता ११ प्रोच्चचालासनाद्वेगादानंदस्वेदसंप्लुता ॥ सख्यास्तुलस्याःकंठेस्वांदोर्लतांक्षिप्यसा
दरम् १२ अब्रवीन्मधुरंवाक्यंरत्नालंकारमंडिता ॥ किंपणोऽत्रकृतःपित्राममशत्रुस्वरूपिणा १३ क्वरामःसुकुमारांगःक्वेदंचापंनगोपमम् ॥ हाविधेकिंकरोष्यद्यकिम
स्त्यंतर्गतंतव १४ रामाद्विनान्यंपुरुषंमनसाहंनरोचये ॥ यदितातोबलाद्दन्यंमांदास्यतितदाह्यहम् १५ त्यजामिजीवितंत्वद्यप्रासादपतनादिना ॥ हेशंभोहेवि घेदुर्गेहे
सावित्रिसरस्वति १६ हेगायत्रिस्वरेभानोमघवन्यमतोयप ॥ हेकुबेरानलरमेहेविष्णोखगनायक १७ हेफणींद्रनिशानाथहेसर्वेनिर्जरादयः ॥ युष्माकंप्रार्थयाम्यद्यप्रसा
दैर्निजपल्लवम् १८ सर्वैरेतन्महच्चापंकर्तव्यंतुपुष्पवत् ॥ प्रवेशनीयंयुष्माभिःश्रीरामभुजदंडयोः १९ चतुर्दशवत्सराणिमुनिवृत्त्यनुवर्तिनी ॥ विचरामिवनेचाहंधनुःसज्जं
करोत्वयम् १२० एवंनानाविधैर्वाक्यैःसीतादेवान्प्रतोषयत् ॥ एवंप्रासादसंस्थायाःसीतायाविविधानिच २१ तथातासांहिनारीणांनृपाणांजनकस्यच ॥ वाक्यानिशृण्वन्
श्रीरामःकिंचित्कृत्वास्मिताननम् २२ ययौचापंनमस्कृत्यकृत्वातंचप्रदक्षिणम् ॥ पुनर्नत्वाशिवंध्यात्वाध्यात्वादशरथंनृपम् २३ कौसल्यांचगुरुंध्यात्वावामहस्तेनतद्
धौ ॥ सव्यहस्तेनचापस्यगुणंधृत्वारघूत्तमः २४ वामहस्तेननम्रंतच्चकारसदसिक्षणात् ॥ तदानेनेदुर्वाद्यानितुष्टुवुर्बंदिमागधाः २५ एतस्मिन्नंतरेरामवामहस्तबलाद्
नुः ॥ मध्येऽभवद्विखंडंतच्छैवंप्राचीनमुत्तमम् २६ चापभंगान्महानादस्तदाऽभूद्गगनांगणे ॥ चकंपेधरणीत्वंचाऽऽलिंगयन्मांभयाद्दृढम् २७ चुक्षुभुःसागराःसर्वेनिनेदु

स्तादिशोदश ॥ तारानिपेतुर्धरणींशिरःशेषोऽप्यचालयत् २८ ववुर्वाताःसुगंधाश्चदेवास्तेगगनास्थिताः ॥ वादयामासुर्वाद्यानिपुष्पौघैःसमवाकिरन् २९ स्वर्वेश्यान
नृतुःखेहिदेवास्तोषंप्रपेदिरे ॥ तदानिनेदुःसदसिमेयोंदुंदुभयोवराः १३० नववाद्यस्वनाःसर्वेबभूवुर्जयनिःस्वनाः ॥ ननृतुर्वारनार्यश्चतुष्टुवुर्मागधादयः ३१ स्त्रियोगवा
क्षरंध्रेश्चरामंपुष्पैरवाकिरन् ॥ तदासरावणस्तूष्णींलज्जयाऽऽनतमस्तकः ३२ मुकुटैरपिहीनश्चमुक्तकच्छोऽतिविव्हलः ॥ सभायांनक्षणंतस्थौतूर्णंलंकापुरींययौ ३३ रा
मेणभग्नंतच्चापंदृष्ट्वानार्योमुदान्विताः ॥ चक्रुर्जयस्वनैर्घोषान्करैश्चकुश्चतालिकाः ३४ सीताऽपिमुदिताजाताहर्षरोमांचनिर्भरा ॥ अनिमेषाकंजनेत्रारामसुत्कंठिताऽह्य
भूत् ३५ एतस्मिन्नंतरेराजाजनकःप्राहमंत्रिणः ॥ करिणीस्थामत्रसीतामानयध्वंसमुत्सवैः ३६ रक्षणीयानिजैःसैन्यैर्वेष्टयित्वासमंततः ॥ तथेतितेमंत्रिणश्चययुर्वेगेनजा
नकीम् ३७ प्रोचुस्तेमधुरंवाक्यंप्रबद्धकरसंपुटाः ॥ हेसीतेकंजनयनेधन्यासिगजगामिनि ३८ रविवंशोद्भवेनाद्यदशरथसुतेनच ॥ रामेणभग्नंसदसिचापमुत्तिष्ठवेगतः ३९
करिणीपृष्ठमारुह्यरामंत्वंगंतुमर्हसि ॥ रामकंठेऽर्पयस्वाद्यरत्नमालांमुदान्विता १४० तन्मंत्रिणांवचःश्रुत्वासीतानत्वास्वमातरम् ॥ सखीभिःकरिणीपृष्ठेसंस्थिताऽसी
न्मुदान्विता ४१ तदग्रेनववाद्यानिनिनेदुर्मंजुलानिवै ॥ निनेदुःपृष्ठभागेऽपिनानावाद्यानिवैमुहुः ४२ चित्रोष्णीषाःकंचुकिनःशतशोवेत्रपाणयः ॥ सीताकरिण्याश्चा
ऽग्रेतेदुद्रुवुर्दीर्घनिःस्वनाः ४३ वारयन्जनसंमर्दंसीतांद्रष्टुंजनैःकृतम् ॥ ननृतुर्वारनार्यश्चवभूवुर्यत्रनिःस्वनाः ४४ तुष्टुवुर्मागधाद्याश्चनटागानंप्रचक्रिरे ॥ करिणींवे
ष्टयामासुःसीतादास्यःसहस्रशः ४५ अश्वारूढाश्चामरादिबिभ्रंत्योरुक्मशोभिताः ॥ ततोऽश्वसंस्थाःशतशस्तांययुश्चोपमातरः ४६ जरठाःशस्त्रधारिण्यःस्वर्णदंडलस
त्कराः ॥ ततःपुरुषवद्वेषान्बिभ्रंत्यःप्रमदोत्तमाः ४७ ययुस्तरुण्यःशतशःशस्त्रहस्ताःसुभूषिताः ॥ गोपितास्याःकंचुकिन्यस्तुरगादिषुसंस्थिताः ४८ ततस्तेमंत्रिणः
सर्वेनानावाहनसंस्थिताः ॥ स्वसैन्यैर्वेष्टयामासुःसीतायाःकरिणींमुदा ४९ चामरैर्व्यजनैःसख्योमुहुःसीतामवीजयन् ॥ स्त्रियोगवाक्षरंध्रेश्चसीतांपुष्पैरवाकिरन् १५०
एवंनानासमुत्साहैःशनैःसीतातडित्प्रभा ॥ नवरत्नमयींमालांबिभ्रतीदक्षिणेकरे ५१ रामंनेत्रकटाक्षैश्चपश्यंतीमुदितानना ॥ सभायांराघवंगत्वाकरिण्याश्चाऽवरुह्यच५२
शनैःपद्भ्यांययौरामंतद्वीवायांसुलज्जिता ॥ मुमोचनिजबाहुभ्यांरत्नमालांमुदान्विता ५३ चकारनमनंरामपादयोःस्थाप्यवैशिरः ॥ तस्थावधाङ्मुखीसीतासभाया
मतिलज्जिता ५४ ददर्शसीतांरामोऽपिहारशोभितहृत्स्थलाम् ॥ अवापतोषंनितरांननामगाधिजंप्रभुः ५५ तदारामंसमालिंग्यविश्वामित्रोमुनीश्वरः ॥ निवेशयन्निजां
केतंप्रेम्णाऽवघ्रायमस्तके ५६ तदासजनकःसीतांगाधिजकिन्यवेशयत् ॥ सीतयारघुनाथेनशुशुभेसमुनिस्तदा ५७ मानयामाससमुनिर्जन्मसाफल्यतांहृदि ॥ ततःस
भायांजनकोविश्वामित्रंवचोऽब्रवीत् ५८ प्रसादात्तवरामस्यलामोजातोऽद्यमेमुने ॥ धन्योऽस्म्यहंकुलंधन्यंधन्यौतौपितरौमम ५९ योऽहंश्रीरामश्वशुरश्चेतिलोकेप्रथां
गतः ॥ इत्युक्त्वागाधिजंनत्वाप्रणनामरघूत्तमम् १६० तदातेपार्थिवाःसर्वेसीतांदृष्ट्वातडित्प्रभाम् ॥ बिंबोष्ठींचंद्रवदनांतन्नेत्रशरताडिताः ६१ बभूवुर्विकलास्तत्रदुर्दैवंमे

१ अयमधिकःएकस्मिन्पुस्तके । २ हृत्स्थलः इ०पा० ।

निरेनिजम् ॥ केचिन्मूर्च्छांययुस्तत्रतान्समागत्यमैथिलः ६२ प्रार्थयामासनृपतीन्विषण्णान्सदसिस्थितान् ॥ नेष्टश्रीम्लानवदनान्लज्जयानतकंधरान् ६३ युष्मा
भिर्मेऽत्रकन्यायाविवाहंविनिवर्त्यच ॥ गंतव्यंस्वपुराण्येवकरणीयाकृपामयि ६४ तदातेपार्थिवाःसर्वेमंत्रांश्चक्रुःपरस्परम् ॥ यदियुद्धेविजेतव्यःश्रीरामोऽध्वरणांगणे ६५
तर्ह्यस्मिन्समयेदुष्टेजयोनोनभविष्यति ॥ कुमुहूर्तेवयंयातास्तूर्ष्णींगत्वापुराणिहि ६६ सुमुहूर्तेपुनर्योद्धुंयास्यामःसकलाबलैः ॥ भविष्यतितदाऽस्माकंजयोयुद्धेविनि
श्चयात् ६७ यदारामंबाणभिन्नंपश्यामःपतितंरणे ॥ भविष्यामःकृतकृत्यास्तदासर्वेवयंनृपाः ६८ तदैवाऽस्यापमानस्यदुःखंमर्मस्थलंगतम् ॥ त्यजामःपार्थिवाःसर्वेजि
ष्यामोराघवंयदा ६९ किमर्थमधुनावैरंदर्शनीयंनृपायवै ॥ इतिसंमंत्र्यतेसर्वेतथेत्युक्तान्नृपोत्तमम् १७० कृत्वासीताविवाहंचगच्छामःस्वस्थलानिहि ॥ तदातान्सकलंव
स्तुगृहाणिजनकोमुदा ७१ कल्पयामासविधिवन्मुनींश्चापिरघूत्तमम् ॥ ततोगाधिजवाक्येनविदेहःप्रेष्यमंत्रिणः ७२ समानेतुंदशरथंतत्प्रतीक्षांचकारसः ॥ तेऽपिग
त्वामंत्रिणश्चदृष्ट्वादशरथंनृपम् ७३ वृत्तंनिवेद्यसकलंतंनत्वातत्पुरःस्थिताः ॥ वृत्तंदशरथःश्रुत्वातुतोषनितरांतदा ७४ सैन्येननागरैःसर्वैःस्त्रीभिर्जानपदैःसह ॥ मिथि
लामगमच्छीघ्रंतदादशरथोनृपः ७५ तदामहोत्सवेनैवनृपंदशरथंपुरीम् ॥ नेतुंगजंपुरस्कृत्यजनकःपार्थिवेर्ययौ ७६ तदादशरथाग्रेतौदृष्ट्वाकैकेयजासुतौ ॥ श्रीरामलक्ष्म
णावत्रकुतःप्राप्तौव्यचिंतयत् ७७ तावद्रामलक्ष्मणाभ्यांयुक्तंतंगाधिजंमुनिम् ॥ स्वसेनायांनृपोदृष्ट्वाविस्मयंप्रापमैथिलः ७८ ततोदशरथंनत्वावसिष्ठंप्रणिपत्यच ॥ गा
धिजेजनकःप्राहकावेतौरामरूपिणौ ७९ ततस्तंगाधिजःप्राहरामांशाद्भरतस्त्वयम् ॥ लक्ष्मणांशाच्चशत्रुघ्नःकैकेय्यानंदनाविमौ १८० तच्छ्रुत्वाजनकःप्राहराजानंगाधि
जंगुरुम् ॥ सीतांरामायदास्यामिलब्ध्वांभूम्यामयोनिजाम् ८१ देहजामूर्मिलानाम्नींलक्ष्मणायार्पयाम्यहम् ॥ कुशध्वजस्यमेबंधोःश्रुतकीर्तिश्चमांडवी ८२ वर्तेतेबा
लिकेरम्येरूपयौवनमंडिते ॥ सीतोर्मिलाभ्यामपियेमयानित्यंप्रलालिते ८३ दास्याम्यहंभरतायमांडवींमंडनान्विताम् ॥ शत्रुघ्नायश्रुतकीर्तिमर्पयाम्यहमादरात् ८४
एवंस्नुषाश्चतस्रश्चत्वमंगीकुरुपार्थिव ॥ तथेतिजनकंप्राहराजादशरथोमुदा ८५ ततोदशरथःप्राहशतानंदंपुरोहितम् ॥ अहल्याजठरोद्भूतंमैथिलाग्रेस्थितंमुनिम् ८६
कथंलब्धाभुवःसीतातत्सर्वंवक्तुमर्हसि ॥ शतानंदस्तथेत्युक्त्वाब्रवीद्दशरथंनृपम् ८७ ॥ शतानंदउवाच ॥ सम्यक्पृष्टंत्वयाराजन्शृणुष्वैकाग्रमानसः ॥ आसीत्पुरानृपःक
श्चित्पद्माक्षइतिविश्रुतः ८८ सदृष्ट्वासकलाँल्लोकान्लक्ष्मीकामैकतत्परान् ॥ चिंतयामासमनसिलक्ष्मींकन्यांकरोम्यहम् ८९ तपसैवनिजांकेतांरंजयामिनिरंतरम् ॥ इति
निश्चित्यसनृपस्तस्वातीव्रंमहत्तपः १९० दृष्ट्वाप्रसन्नासाग्रेतुलक्ष्मीर्वचनमब्रवीत् ॥ दुहितामेभवत्वंहिसाप्राहनृपतिंप्रति ९१ परतंत्राऽस्म्यहंराजन्विष्णुंत्वंप्रार्थयाऽधुना ॥ सचे
द्दास्यतिमांतेहितर्ह्यहंदुहितातव ९२ भविष्यामिनसंदेहस्तथेत्युक्त्वानृपःपुनः ॥ तप्त्वातीव्रंतपोविष्णुंचकारवरदोन्मुखम् ९३ नत्वातंनृपतिःप्राहदेहिकन्यांरमांमम ॥
तद्राजवचनंश्रुत्वामातुलिंगफलंहरिः ९४ पद्माक्षायददौश्रेष्ठंस्वयमंतर्दधेविभुः ॥ तद्भित्वान्नृपतिःकन्यांददर्शकनकप्रभाम् ९५ तांदृष्ट्वासामिलाषःसकन्यांमेनेनिजांशुभाम् ॥

१ भग्नेतिपाठः ।

पद्माक्षनृपतेःकन्यांपद्मांलोकासुदेतिते १६ आह्वयामासुस्तांरम्यांसर्वचित्तैकरंजनीम् ॥ शकलेमातुलिंगस्यभूत्वैकत्रफलंपुनः १७ जातंदृष्ट्वादधाराथस्वहस्तेनृपतेःसुता ॥
सात्ववर्धतनृपतेरंकेचंद्रकलायथा १८ शुक्लपक्षेचतांदृष्ट्वापद्माक्षोचिंतयद्धृदि ॥ कस्मैदेयामयाकन्याह्यस्यैयोग्योवरोत्रकः ११ ततःसंमंत्र्यनृपतिःस्वयंवरमथारभत ॥ स्वयं
वरेऽथपद्मायायज्ञारमंचकारसः २०० स्वयंवराययज्ञायपत्रैराकारयन्नृपान् ॥ तेपिशृंगारयुक्ताश्चययुःपद्मास्वयंवरम् १ पद्मास्वयंवरंश्रुत्वाययुस्तत्रमुनीश्वराः ॥ ययुर्देवाः
सगंधर्वादानवामानवाःखगाः २ नगानद्यःसमुद्राश्चभूरुहाःकामरूपिणः ॥ ययुर्यक्षाःकिन्नराश्चराक्षसारावणादयः ३ सर्वान्समागतान्दृष्ट्वापद्माक्षःप्राहतान्प्रति ॥ आका
शनीलवर्णेनयःस्वांगंपरिलेपयेत ४ ददामितस्मैपद्मेयंसत्यंज्ञेयंवचोमम ॥ तद्राजवचनंश्रुत्वादुर्घटंनृपसत्तमाः ५ पद्मासौंदर्यसंभ्रांतास्तांहर्तुंतेसमुद्यताः ॥ तान्कन्याहर
णोद्युक्तान्नृपान्दृष्ट्वासनिर्जरान् ६ चकारसंगरंतैःसपद्माक्षोलोमहर्षणम् ॥ तद्बाणपीडितादेवामानवाविमुखारणे ७ बभूवुस्तत्रदैत्यैश्चपद्माक्षोनिहतोरणे ॥ ततस्तेमी
लिताःसर्वेतांधर्तुंदुद्रुवुर्जवात ८ सादृष्ट्वाधर्तुंमुद्युक्तान्जुहावाग्नौकलेवरम् ॥ तामदृष्ट्वानृपाद्यास्तेविचिन्वन्नगरेतदा ९ बभंजुर्नृपगेहानिभूमिंचकुरितस्ततः ॥ स्मशानतु
ल्यंनगरंजातंवैक्षणमात्रतः २१० पद्माक्षनृपतेर्लक्ष्मीसंगाज्जातेदृशीदशा ॥ तस्मान्नमुनयोलक्ष्मींकामयंतिकदाचन ११ लक्ष्म्याचितस्यचांचाल्यंभयंशोकोवधोऽपि
च ॥ भवत्येवमहद्दुःखंतस्मात्तांपरिवर्जयेत १२ पद्माक्षेनिहतेयुद्धेनृपपत्न्यःसहस्रशः ॥ भर्त्रासहैवगमनंचक्रुस्ताभयनिर्भराः १३ ततस्तेदैत्यवर्याद्याययुःस्वंस्वंस्थलंप्र
ति ॥ एकदावह्निकुंडात्सापद्माशक्तिःस्थिराहरेः १४ बहिर्निर्गत्यकुंडस्यसमीपेसमुपाविशत ॥ एतस्मिन्नंतरेतत्रपुष्पकस्थोदशाननः १५ विचरन्जगतींजेतुमाकाशव
र्त्मनाययौ ॥ सारणस्तांददर्शाऽथवह्निकुंडेबहिःस्थिताम् १६ सारणोदर्शयामासरावणायवचोऽब्रवीत ॥ पुरासुराऽसुराद्याश्चयांधर्तुंसमुपस्थिताः १७ सेयंपद्माक्षनृपतेःक
न्यापद्माऽग्निसन्निधौ ॥ तत्सारणवचःश्रुत्वातांदृष्ट्वाकाममोहितः १८ यानाज्जवादुत्पपाततांधर्तुंसानलेविशत ॥ तामग्नौसंप्रविष्टांसदृष्ट्वाज्ञात्वाऽथतत्स्थलम् १९
ततःप्राहदशास्यःसत्वयादेवानृपादयः ॥ कृत्वाग्नौवसतींपद्मेश्रमग्रस्ताःकृताःपुरा २२० तदद्यवासस्थानंतेमयाज्ञातंमनोरमे ॥ पद्मेऽधुनाऽहंत्वांधर्तुंशोधयाम्यनलस्थ
लम् २१ इत्युक्त्वाजलकुंभैश्चसिषेचाग्निंदशाननः ॥ यावत्पश्यतिरक्षायांतावत्तत्रददर्शह २२ पंचरत्नानिदिव्यानिगृहीत्वातानिरावणः ॥ करंडिकायांसंस्थाप्य
विमानेनययौपुरीम् २३ करंडिकांदेवगेहेसंस्थाप्यरावणस्तदा ॥ रात्रौमंदोदरींप्राहमंचकस्थोरहःस्थितः २४ हेमंदोदरिरत्नानिमयात्वत्तोषदानिहि ॥ समानीतानियत्ने
नत्वदथसुरसद्मनि २५ करंडिकायांवर्ततेगच्छगृण्हीष्वतानिहि ॥ तद्दशास्यवचःश्रुत्वासाययौनिर्जरगृहान् २६ करंडिकांतत्रदृष्ट्वातांनेतुंपतिसन्निधौ ॥ यावदुच्चाल्यामा
सनचचालतदाशुवः २७ तदासालज्जितागत्वारावणायन्यवेदयत ॥ तच्छ्रुत्वासप्रहस्याऽथस्वयंनेतुंययौतदा २८ तांसोऽप्युच्चाल्यामासनचचालकरंडिका ॥
यदाविंशद्भुजैर्धृ[1]त्यानचचालकरंडिका २९ तदासविस्मयाविष्टोभयंमेनेदशाननः ॥ तत्रैवोद्घाटयामासरावणस्तांकरंडिकाम् २३० तावद्ददर्शतस्यांसकन्यांसूर्यप्रभोप

१ नहिसमानियत्नेनेतिपाठः।

माम् ॥ ततेजोहततेजस्कान्यासंश्चक्षूंषिरक्षसाम् ३१ तांद्रष्टुंबालिकांरम्यांययुःसुहृत्सुतादयः ॥ तदामंदोदरींप्राहतस्याहृत्तंरणोद्भवम् ३२ पद्माक्षकुलजात्यादिसर्ववृत्तं
दशाननः ॥ क्रोधान्मंदोदरीप्राहभयभीतादशाननम् ३३ इयंकन्याप्रचंडाचकुलविध्वंसकारिणी ॥ लंकांकिमर्थमानीताह्यस्याज्ञात्वाऽपिचेष्टितम् ३४ दुष्टांस्ववंशघाता
यत्यजैनांसत्वरंवने ॥ बालत्वेऽपिदृशीगुर्वीतारुण्येकिंकरिष्यति ३५ वधोऽस्यास्तवजानेऽहंमृत्युरेवभविष्यति ॥ स्थापनीयानलंकायामियमद्यैवरावण ३६ इतितस्या
वचःश्रुत्वासत्यंमेनेदशाननः ॥ मंत्रिभिश्चाथसंमंत्र्यदूतानाज्ञापयत्तदा ३७ करंडिकेयंनीत्वाऽद्यविमानेस्थाप्ययत्नतः ॥ त्यक्तव्यामभवाक्यात्तुवनेगच्छतवेगतः ३८
ततस्तेराक्षसाःसर्वेसंमील्यपुष्पकेऽथताम् ॥ करंडिकांतुसंस्थाप्यनिन्युश्चाकाशवर्त्मना ३९ दशास्यपत्नीतानाहकार्याभूमिगतात्वियम् ॥ स्थापनीयाबहिर्नेयंदर्शनाद्ब
घंकारिणी २४० गृहस्थाश्रमयुक्तोयस्तथाचविजितेंद्रियः ॥ वृद्धिमेष्यतितद्गेहेकुमारीऽयंशुभानना ४१ चराचरेषुसर्वत्रआत्मरूपेणयःस्थितः ॥ तस्यगेहेचिरंकालं
स्थास्यतीयंनसंशयः ४२ इतिमंदोदरीवाक्यंश्रुत्वादूताःसविस्तरम् ॥ यावत्तेगंतुमुद्युक्तास्तावत्कन्यावचोऽब्रवीत् ४३ यास्याम्यहंपुनर्लंकांराक्षसानांवधायच ॥ निध
नायदशास्यस्यसपुत्रस्यसमंत्रिणः ४४ अथतृतीयवेलायामागत्याऽहंपुनस्त्विह ॥ निकुंभजंपौंड्रकंतंशतशीर्षंचरावणम् ४५ हनिष्यामिपुनर्गत्वापुनर्यास्यामित्वत्पुरीम् ॥
अहंचतुर्थवेलायामद्भुतंमूलकासुरम् ४६ कुंभकर्णसुतंशूरंमर्दयिष्याम्यहंपुनः ॥ ततस्यावचनंश्रुत्वाहृदिविद्धोदशाननः ४७ जातास्तेराक्षसाःसर्वेभयभीताःशवोपमाः ॥
रावणश्चिंतयामासहंतव्याचैवबालिका ४८ तीक्ष्णंखड्गंकरेधृत्वापद्मांदुद्रावरावणः ॥ हंतुकामंपतिंदृष्ट्वामयकन्यान्यवारयत् ४९ साहसंकुरुमाऽद्यैवसत्यात्सुघिदशानन ॥
भविष्यतिवधस्त्वद्यतवनास्यावचोमृषा २५० यद्भविष्यतिभवतुतदग्रेत्यजकानने ॥ कालांतरेणयोमृत्युस्तमद्यत्वंकिमिच्छसि ५१ इतिभार्यावचःश्रुत्वातूष्णीमासदशा
ननः ॥ ततःसापेटिकादूतैर्नीतायानेनवैजवात् ५२ पश्यन्वनानिसर्वाणिसीतायांमैथिलस्यच ॥ कृताभूमिगतादूतैस्तदासवःकरंडिका ५३ ततोययुःपुनर्लंकांदूता
स्तेरावणस्यच ॥ न्यवेदयन्रावणायसर्ववृत्तंयथाकृतम् ५४ साभूमिःसूर्यग्रहणेविदेहेनसमर्पिता ॥ ब्राह्मणायद्विजश्चापितांकर्षयितुमुद्यतः ५५ पश्यन्मुहूर्तंविप्रःसम्प्र
त्यब्दंवैपुनःपुनः ॥ चिरकालेनदृष्ट्वाऽथमुहूर्तंपरमोदयम् ५६ शूद्रेणकर्षयामासभूमिंकृष्यर्थमादरात् ॥ तदाहलसिंताग्रेणनिर्गतासाकरंडिका ५७ तांगृहीत्वासशूद्रोऽपि
ययौभूमिपतिंद्विजम् ॥ समत्वातांनिधानंतुहर्षात्प्राहाद्विजोत्तमम् ५८ श्रेष्ठस्तवमुहूर्तोऽयंमहाभाग्यंतवद्विज ॥ इमांहलाग्रसंभूतांगृहाणत्वंकरंडिकाम् ५९ निधानपूरि
तांगुर्वींमयायत्नेनवाहिताम् ॥ ततःसद्विजवर्यस्तुतांजग्राहकरंडिकाम् २६० तामानीयविदेहायसभामध्येददौमुदा ॥ नृपतिंप्राहवृत्तंतद्विप्रःश्रुत्वानृपोऽपिसः ६१ उ
वाचब्राह्मणंभक्त्यामयाभूमिःसमर्पिता ॥ तस्यांलब्धात्वयाचेयंतवैवाऽस्तुकरंडिका ६२ विदेहनृपतेर्वाक्यंश्रुत्वोवाचाद्विजःपुनः ॥ मह्यंसमर्पितापूर्वंभूमिरेवत्वयानृप ६३
नेयंकरंडिकारम्यावसुपूर्णासमर्पिता ॥ यद्भूम्यांवर्त्ततेवित्तंतन्नृपस्यनसंशयः ६४ मामामधर्मःस्पृशतुगृहाणेमांकरंडिकाम् ॥ एवंनृपस्यविप्रेणकलहोऽभूत्सुदारुणः ६५

१ दशाननःइतिपाठः । २ स्वेतिपाठः । ३ सिताग्रेणेतिपाठः ।

तदासभासदः सर्वेंनृपर्तिवाक्यमब्रुवन् ॥ माकार्यःकलहोराजन्पश्यास्यांकिंतुवर्तते ६६ तांतदोद्घाटयामासदूतैर्नृपतिसत्तमः ॥ तस्यांदृष्ट्वाबालिकांतुविस्मयंप्रापपार्थि
वः ६७ द्विजस्त्यक्त्वाययौगेहंपालयामासतांनृपः ॥ तदाखेचरवाद्यानिनेदुःकुसुमवृष्टिभिः ६८ ववर्षुःसुरसंघाश्चतांकन्यांजनकंनृपम् ॥ गंधर्वागायनंचक्रुर्ननृतुश्चाप्स
रोगणाः ६९ तदामेनेनिजांकन्यांजनकस्तोषमापसः ॥ जातकंकारयामासविप्रैस्तस्याःसविस्तरम् २७० ददौदानानिविप्रेभ्योननृतुर्वारयोषितः ॥ मातुलिंगान्निर्ग
तायामातुलिंगीतिसास्मृता ७१ अग्निवासादग्निगर्भातथारत्नावतीतिच ॥ रत्नांतरनिवासाच्चप्रोच्यतेजगतीतले ७२ धरण्यानिर्गतायस्मात्तस्माद्धरणिजेतिच ॥ जन
केनाऽवितायस्माज्जानकीतिप्रकीर्त्यते ७३ सीराग्रान्निर्गतायस्मात्सीतेत्यत्रप्रगीयते ॥ पद्माक्षनृपतेःकन्यातस्मात्पद्मेतिसास्मृता ७४ एवंनामान्यनंतानिसीतायाःसंति
भोनृप ॥ आकाशनीलवर्णाभवपुषाऽनेनजानकी ७५ लब्धारामेणपद्माक्षप्रतिज्ञासफलीकृता ॥ एवंत्वयायथापृष्टंतथात्वांविनिवेदितम् ७६ चतस्रस्त्वंस्नुषास्त्वत्रक
र्तुमर्हसिभोनृप ॥ श्रीशिवउवाच ॥ एतस्मिन्नंतरेतत्रपूर्वंदशरथेनच ७७ समाहूताययुःसैन्यैःस्त्रीपुत्रैःश्वशुराश्चते ॥ कोसलोमागधेशश्चकैकेयश्चयुधाजितः ७८ मानया
मासतान्राजाजनकोपिमुदान्वितः ॥ ततोदशरथंपूज्यश्रीरामंलक्ष्मणंतथा ७९ भरतंचापिशत्रुघ्नंसंपूज्याभरणादिभिः ॥ निनायजनकस्तुष्टःस्वपुरींपरमोत्सवैः २८०
तदारामोनृपंनत्वाराज्ञाचालिंगितोमुहुः ॥ वसिष्ठंगाधिजंनत्वाकोसल्यादिप्रणम्यच ८१ राज्ञोदशरथस्याग्रेतैःस्त्रीभिर्बन्धुभिःसह ॥ गजारूढोययावग्रेतेऽप्यभूवन्गज
स्थिताः ८२ नदत्सुवाद्यसंघेषुस्तुवत्सुमागधादिषु ॥ नर्तत्सुवारनारीषुविवेशनगरींप्रभुः ८३ तदाऽसीत्संभ्रमःपौरस्त्रीणांश्रीरामदर्शने ॥ विसृज्यस्वीयकृत्यानिदुद्रुवुर्गो
पुरादिषु ८४ कट्यांनिधायबालांश्चददृशूरघुनंदनम् ॥ राजमार्गगतंरामंववर्षुःपुष्पवृष्टिभिः ८५ एवंमहोत्सवैर्वासस्थलंदशरथःसुतैः ॥ ययौवस्त्रान्नतोयौघैःपरिपूर्णम
नोरमम् ८६ कृत्वाज्योतिर्विदालग्नदिवसस्यविनिश्चयम् ॥ मंडपांश्चतोरणानिपताकाश्चध्वजांस्तथा ८७ रोपयामासुःसर्वत्रमंत्रिणोमिथिलांपुरीम् ॥ मार्गाश्चंदनलिप्ता
श्चपुष्पैराच्छादिताअपि ८८ मालाभिस्तोरणैःपुष्पघोषाद्यैस्तेप्रकाशिरे ॥ ततोमुहूर्तसमयेवधूच्छिष्टान्निशांशुभाम् ८९ सुतैलाढ्यांस्त्रियःसर्वाःकौसल्याद्यास्तुमातरः ॥
रामादीन्परिलिप्याद्यौनीराजनपुरःसरम् २९० कलकुंभांस्तोयपूर्णांश्चतुर्दिक्षुसदीपकान् ॥ संस्थाप्यस्नापयामासुर्महावाद्यपुरःसरम् ९१ तदाभ्यंगंस्वयंचाऽपिकृत्वास
स्नुश्चमातरः ॥ रामादीन्पुरतःकृत्वावस्त्रालंकारभूषिताः ९२ अभ्यंगपूर्वकंसस्नौराजादशरथोऽपिसः ॥ समाहूयनृपस्त्रीश्चसभार्यास्वस्तिकेगुरुः ९३ मुक्ताविनिर्मितेरा
ज्ञःपार्श्वेवामेन्यवेशयत् ॥ अग्रेरामादिकान्कृत्वाताःस्त्रियोऽवनताननाः ९४ हरिद्राकुंकुमालिप्तचरणारेजिरेंऽगणे ॥ वसिष्ठोब्राह्मणैर्युक्तोराज्ञारामादिभिर्मुदा ९५ कृत्वा
गणपतेःपूजांपुण्याहादित्रयंक्रमात् ॥ कारयामासविधिवत्प्रतिष्ठांदेवकस्यच ९६ ग्रामाचारंकुलाचारंवृद्धाचारंतथापुनः ॥ देशाचारंचप्रमदाचारादीनकरोन्नृपः ९७ तो
यकुंभंमंडपादिकानांपूजनमाकरोत् ॥ कौसल्याद्याःस्त्रियःसर्वाहरित्पीतारुणैर्वरैः ९८ हेमतंत्वंकितैर्वस्त्रैर्विरेजुर्मंडपांगणे ॥ जनकश्चनृपैर्युक्तोमहावाद्यपुरःसरम् ९९ रा
मादीन्सनिजंगेहंनेतुकामःसमाययौ ॥ मंडपेपूजयामासरामादीन्जनकस्तदा ३०० हेमतंतूद्भवैर्दिव्यवस्त्रैराभरणादिभिः ॥ तदाविरेजुस्तेबालाःसर्वेप्रमुदिताननाः ३०१

ततस्तेवारणेंद्रस्थादिव्यचामरवीजिताः ॥ शृण्वंतोवाद्यघोषांश्चवर्षिताःपुष्पवृष्टिभिः २ हरिद्राकितधान्यैश्चमांगल्यैर्मौक्तिकादिभिः ॥ मातृभिर्वारणस्त्रीपुसंस्थिताभि
र्मुहुर्मुहुः ३ एवंतेराघवाद्याश्चपुरस्त्रीभिर्निरीक्षिताः ॥ प्रासादोपरिसंस्थाभिर्लाजाभिर्वर्षितामुहुः ४ ददृशुर्नर्तनान्यग्रेवारस्त्रीणांस्मिताननाः ॥ वाटिकाःपुष्पवृक्षाणांवर
मृत्पात्रनिर्मिताः ५ तथाकृत्रिमवृक्षांश्चपताकाश्चध्वजांस्तथा ॥ वन्हिसंगादोषधीनांपुष्पवृक्षविनिर्मितान् ६ तडित्प्रभोपमांश्चापिगगनांतर्विराजितान् ॥ वह्निसंगादौ
षधीभ्यःप्रकारान्विविधान्वरान् ७ चंद्रज्योत्स्नाकृत्रिमांश्चदीपवृक्षान्सहस्रशः ॥ दीपमालाश्चव्याघ्रादीन्कृत्रिमान्रथसंस्थितान् ८ औषधीभिःपूरितांश्चकेकीचकोपमा
दिकान् ॥ ददृशुर्वारणेंद्रस्थाएवंतेराघवादयः ९ तदादेवाविमानस्थाददृशुःकौतुकंमुदा ॥ एवंनानोत्सवैर्बालाययुर्जनकमंदिरम् ३१० अवरुह्यगजेंद्रेभ्यस्तस्थुस्तेमंडपां
गणे ॥ मधुपर्कविधानानिविष्टरादीनिचक्रमात् ११ तयोर्गुरूचक्रतुस्तौवसिष्ठगौतमात्मजौ ॥ वाल्मीक्यादिमुनिगणैर्वेष्टितौतुष्टमानसौ १२ ततःपूजांवधूनांचमुदादश
रथोनृपः ॥ चकारगुरुणायुक्तस्तदासमंडपांगणे १३ ततोलग्नमुहूर्तेतान्वधूभिश्चपृथग्वरान् ॥ वेदिकासुस्थितान्कृत्वादंपत्योरंतरेपटान् १४ धृत्वामंगलघोषांश्चमुनि
भिश्चक्रतुर्गुरू ॥ तदातूष्णींसमायातिराशुश्रुवुःसकलाजनाः १५ पुष्पौघैःपीतधान्यैश्चववर्षुर्दम्पतीन्स्त्रियः ॥ श्रीदेवीतनयौशिवःसुखकरोमित्रःशशीकंपनःसर्वेतेमुनयश्चला
दशादिशःसपांमृगेंद्राःखगाः ॥ नद्यःपुण्यसरोवराणिदितिजास्तीर्थानिकंजासनश्चेंद्रोवन्हियमरानदाजलधयःकुर्वंतुवोमंगलम् १६ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रब
लंतदेव ॥ विद्याबलंदैवबलंतदेवकाशीपतेर्यत्स्मरणंविधेयम् १७ एवंमंगलशब्दैश्चमहावाद्यपुरःसरम् ॥ तेषामंतःपटान्मुक्त्वाओंपुण्योस्त्वूचतुर्गुरू १८ तासांतेपाणिग्र
हणविधानंविधिपूर्वकम् ॥ लाजाहोमादिकंसर्वंचक्रुर्मंगलपूर्वकम् १९ तदामहावाद्यघोषानिनेदुर्मंडपांगणे ॥ ननृतुर्वारनार्यश्चजगुर्मागधबंदिनः ३२० नटामंगलगीतै
श्चतुष्टुवुस्तेमहास्वनैः ॥ तदादानान्यनेकानिचक्रतुस्तौनृपोत्तमौ २१ अथतेबालकाःसर्वेवधूःस्थाप्यकटीपुवे ॥ कौशल्यादिवनिताभिर्जग्मुस्तेभोजनगृहम् २२ तत्रा
म्रसिंचनंचक्रुःसंपूज्यत्वांचमामपि ॥ ततोरामादिकाःसर्वेस्वस्वपत्न्यापृथङ्मुदा २३ चक्रुस्तेभोजनंहृष्टाःस्त्रीभिःसर्वत्रवेष्टिताः ॥ राजादशरथश्चापिसुहृद्भिश्चनृपोत्तमैः
२४ पौरैर्जानपदैर्विप्रैर्मुनिभिःपरिवारितः ॥ जनकस्यगृहेगत्वाचकारभोजनंमुदा २५ कौसल्याद्याःस्त्रियःस्त्रीभिश्चक्रुर्भोजनमुत्तमम् ॥ सुमेधयाप्रार्थितास्तावंदिताश्चमु
हुर्मुहुः २६ एवंनानासमुत्साहांश्चकारजनकोमुदा ॥ अथतेबालकाःसर्वेस्त्रीवाक्यान्मातृसन्निधौ २७ स्वस्वपत्न्यापादयोःस्वशिरोभिर्नमनंमुहुः ॥ चक्रुस्तुष्टचेतसस्ते
तास्तानेसुःपृथक्पृथक् ॥ कुंकुमांकितपादाश्चतेषामंकेबुतादृशः २८ श्रीरामःसमवाप्यभूमितनयामाद्यांजगत्स्वामिनींसर्वात्मावरहेतुसुंदरतनुःकारुण्यपूर्णेक्षणः ॥ वि
द्युद्वर्णविराजमानवसनस्त्रैलोक्यचूडामणिःशोभामापजगत्त्रयेप्यनुपमांमुक्ताविराजद्गलः २९ चतुर्थेदिवसेरात्रौवंशपात्रविराजितैः ॥ दीपैर्नीराजिताःसर्वेविरेजूराघवादयः
३३० रामादीनांपारिबर्हान्ददौसजनकस्तदा ॥ नियुतान्वारणेंद्रांश्चशिबिकाश्चाऽपितान्मिताः ३१ तुरगान्दशलक्षांश्चनियुतान्स्यंदनान्ददौ ॥ नानालंकारस्वासां
सिगोदासीसेवकादिकान् ३२ ददौसराघवादिभ्योयेषांसंख्यानविद्यते ॥ एवंसम्मानितास्तेनतेबालजनकेनहि ३३ पूर्ववदुत्सवाद्यैश्चस्वस्वपत्न्यासमन्विताः ॥

गजारूढान्नृत्यगीतैस्ताभिःस्वमंडपंययुः ३४ ततोराजामासमेकंनिनायन्नृपवाक्यतः ॥ ततःसैन्येनस्वपुरींगंतुंपुर्याबहिर्ययौ ३५ सीताद्यानिर्ययुर्मुग्धाःसाश्रुनेत्राःसु
विव्हलाः ॥ सुमेधाताःसमालिंग्यसांत्वयित्वाविसर्जयत् ३६ अथराजादशरथोजनकंविनिवर्तयत् ॥ तदादशरथंप्राहजनकःसाश्रुलोचनः ३७ श्वसन्कवोष्णम्लानास्यो
विरहाद्गद्गदाक्षरः ॥ एतावत्कालपर्यंतंसीताद्यालालितामया ३८ अधुनात्वभिमास्त्वथैलालयस्वकृपेक्षणैः ॥ इत्युक्त्वान्नृपतिंनत्वामिथिलांजनकोययौ ३९ ततोदशर
थश्चापिस्नुषाद्भीतनयादिभिः ॥ नृपैःसैन्येनस्वपुरींययौमार्गेशनैःशनैः ३४० अथगच्छतिश्रीरामेमैथिलाद्योजनत्रयम् ॥ निमित्तान्यतिघोराणिददर्शनृपसत्तमः ४१
नत्वावसिष्ठंपप्रच्छकिमिदंमुनिपुंगव ॥ निमित्तानीहदृश्यंतेविषमानिसमंततः ३४२ वसिष्ठस्तमथोप्राहभयमागामिसूच्यते ॥ पुनरप्यभयंतेऽद्यशीघ्रमेवभविष्यति ४३
मृगाःप्रदक्षिणंयांतित्वांपश्यशुभसूचकाः ॥ एवंवैवदतस्तस्यववौघोरतरोऽनिलः ४४ मुष्णंश्चक्षूंषिसर्वेषांपांसुवृष्टिभिरर्दयत् ॥ ततोददर्शपरमंजामदग्न्यंमहाप्रभम् ४५
नीलमेघनिभंप्रांशुंजटामंडलमंडितम् ॥ धनुःपरशुहस्तंचसाक्षात्कालमिवास्थितम् ४६ कार्तवीर्यांतकंरामंदृप्तक्षत्रियमर्दनम् ॥ प्राप्तंदशरथस्याग्रेरक्तास्यंरक्तलोचनम्
४७ तंदृष्ट्वाभयसंत्रस्तोराजादशरथस्तदा ॥ अर्घ्यादिपूजांविस्मृत्यत्राहित्राहीतिचाब्रवीत् ४८ दंडवत्प्रणिपत्याहपुत्रप्राणान्प्रयच्छमे ॥ इतिब्रुवंतंराजानमनादृत्यर
घूत्तमम् ४९ उवाचनिष्ठुरंवाक्यंक्रोधात्प्रचलितेंद्रियः ॥ त्वंरामइतिमन्नाम्नाचरसिक्षात्रियाधम ३५० द्वंद्वयुद्धंप्रयच्छाशुयदित्वंक्षात्रियोऽसिमे ॥ पुराणंजर्जरंचापंभंक्त्वा
त्वंकत्थसेमुधा ५१ इदंतुवैष्णवंचापमारोपयसिचेद्गुणम् ॥ तर्हियुद्धंत्वयासार्द्धंकरोमिरघुवंशज ५२ नचेत्सर्वान्हनिष्यामिक्षत्रियांतकरस्त्वहम् ॥ इतितद्वचनंश्रुत्वा
राघवोवाक्यमब्रवीत् ५३ वयमेकगुणाःस्वामिन्यूयंचैवगुणाधिकाः ॥ गोविप्रदेवनारीषुराघवानास्त्रधारिणः ५४ मयैतैश्चजीवितानितवपादार्पितानिहि ॥ यथेच्छंवा
तयास्माकंविप्रैर्युद्धंकरोमिन ५५ इतिब्रुवतिरामेवैचचालवसुधाभृशम् ॥ क्रुद्धंदृष्ट्वाजामदग्न्यंक्षत्रियांतमुपस्थितम् ५६ अंधकारोबभूवाथचुक्षुभुःसप्तसागराः ॥ रामोदाशर
थिर्वीरोवीक्ष्यतंभार्गवंरुषा ५७ धनुराच्छिद्यतद्धस्तादारोप्यगुणमंजसा ॥ तूणीराद्बाणमादायसंधायाकृष्यवीर्यवान् ५८ उवाचभार्गवंरामःशृणुब्रह्मन्वचोमम ॥ लक्ष्यंद
र्शयबाणस्यह्यमोघोरामसायकः ५९ लोकान्पादयुगंवापिवदशीघ्रंममाज्ञया ॥ एवंवदतिश्रीरामेभार्गवोविकृताननः ३६० संस्मरन्पूर्ववृत्तांतमिदंवचनमब्रवीत् ॥ राम
राममहाबाहोजानेत्वांपरमेश्वरम् ६१ पुराणपुरुषंविष्णुंजगत्सर्गलयोद्भवम् ॥ बाल्येऽहंतपसाविष्णुमाराधयितुमंजसा ६२ गत्वाहितीर्थेगोमत्यांतपसातोष्यशार्ङ्गिणम् ॥
अहर्निशंमहात्मानंनारायणमनन्यधीः ६३ यस्यांशेनमयाभूम्यामवतारोधृतोऽस्तिहि ॥ भूभारहरणार्थायकार्तवीर्यवधेप्सया ६४ ततःप्रसन्नोदेवेशःशंखचक्रग
दाधरः ॥ उवाचमांरघुश्रेष्ठप्रसन्नमुखपंकजः ६५ ॥ श्रीभगवानुवाच ॥ उत्तिष्ठतपसोब्रह्मन्फलितंतेतपोमहत् ॥ मच्चिदंशेनयुक्तस्त्वंजहिहैहयपुंगवम् ६६ कार्तवीर्यंपितृ
हणंयदर्थंतपसःश्रमः ॥ ततस्त्रिःसप्तकृत्वस्त्वंहत्वाक्षत्रियमंडलम् ६७ कृत्स्नांभूमिंकश्यपायदत्त्वाशांतिमुपावह ॥ त्रेतायुगेदाशरथिर्भूत्वारामोऽहमव्ययः ६८ उत्पत्स्ये

१ करोम्यहमितिपाठः ।

परयाभक्त्यातदाद्रक्ष्यसिमांपुनः ॥ मत्तेजःपुनरादास्येत्वयिदत्तंमयापुरा ६९ तदातपश्चरँल्लोकेतिष्ठत्वंब्रह्मणोदिनम् ॥ इत्युक्त्वाऽतर्दधेदेवस्तथासर्वंमयाकृतम् ३७०
सएवविष्णुस्त्वंरामजातोऽसिब्रह्मणाऽर्थितः ॥ मयिस्थितंतुत्वत्तेजस्त्वयैवपुनराहृतम् ७१ अद्यमेसफलंजन्मप्रतीतोसिममप्रभो ॥ नमोऽस्तुजगतांनाथनमस्तेभक्तिभा
वन ७२ नमःकारुणिकानंतरामचंद्रनमोस्तुते ॥ देवयद्यत्कृतंपुण्यंमयालोकजिगीषया ७३ तत्सर्वंतवबाणायभूयाद्रामनमोऽस्तुते ॥ ततोमुक्त्वाशरंरामस्तत्कर्मभस्म
सात्करोत् ७४ ततःप्रसन्नोभगवान्श्रीरामःकरुणामयः ॥ जामदग्न्यंतदाप्राहवरंवरयचेतिसः ७५ ततःप्रीतेनमनसाभार्गवोराममब्रवीत् ॥ यदिमेऽनुग्रहोरामतवास्तिमधु
सूदन ७६ त्वद्भक्तसंगस्त्वत्पादेममभक्तिःसदास्तुवै ॥ तथेतिराघवेणोक्तःपरिक्रम्यप्रणम्यतम् ७७ पूजितस्तदनुज्ञातोमहेंद्राचलमन्वगात् ॥ रावणेनजितादेवाःसगर्वो
रावणोमहान् ७८ सहस्रबाहुनाबद्धःसोऽर्जुनोभार्गवेणहि ॥ हतःक्षणेनसमरेसोऽप्यश्रीभार्गवोऽपिच ७९ जितस्तद्धनुषाबाणमोचनाद्राघवेणहि ॥ एवंश्रीरामचंद्रस्यपौ
रुषंकिंवदाम्यहम् ३८० अथराजादशरथोरामंमृतमिवागतम् ॥ दृढमालिंग्यहर्षेणनेत्राभ्यांजलमुत्सृजत् ८१ ततःप्रीतेनमनसास्वस्थचित्तःपुरींययौ ॥ अयोध्यायांसु
मंत्रोऽपितंपश्रुत्वासमागतम् ८२ नगरींशोभयामासपताकाध्वजतोरणैः ॥ वारणेंद्रंपुरस्कृत्यरामंप्रत्युद्ययौजवात् ८३ अथोनदत्सुवाद्येषुराजापुत्रैःसुहृज्जनैः ॥ विवेश
नगरंपौरैःपश्यभृत्यादिकंपथि ८४ रामाद्याःस्वस्वपत्न्यातेगजसंस्थाययुःपुरीम् ॥ ननृतुर्वारनार्यश्चतुष्टुवुर्मागधादयः ८५ एवंराजागृहंगत्वाबालकैःस्वीयसद्मनि ॥ रमा
पूजाःकारयित्वाददौदानान्यनेकशः ८६ तदालंकारवस्त्राद्यैःसुहृदःपार्थिवादयः ॥ रामादीन्पूजयामासुस्तथादशरथंनृपम् ८७ दशरथोऽपितान्सर्वान्पूजयामासवैभवैः ॥
ततस्तेसुहृदःसर्वेनृपाश्चस्वस्वस्थलंययुः ८८ प्रीत्यायुधाजितंराजास्थापयामासस्वांतिकम् ॥ रामाद्यारमयामासुःस्वस्वदाराःस्वसद्मसु ८९ ॥ पार्वत्युवाच ॥ श्रीविष्णोस्तु
चिदंशेनजामदग्न्यस्त्वयास्मृतः ३९० तद्वच्चायंराघवःकिंतुदमेसंशयंप्रभो ॥ श्रीशिवउवाच ॥ अंशावंशेनविधृताअवताराश्चविष्णुना ९१ रामकृष्णावतारौचपूर्णरूपे
णतौधृतौ ॥ वरिष्ठौसकलेष्वेवावतारेषुहिताबुभौ ९२ तयोरपिवरःपूर्वःसत्यसंधोजितेंद्रियः ॥ ज्ञेयोरामावतारोहिनानेनसदृशःपरः ९३ कृष्णःकृष्णरुचिर्ज्ञेयःश्रीरामोरु
क्मसंरुचिः ॥ एवंगिरींद्रजेप्रोक्तंसीतायाश्चस्वयंवरम् ॥ अस्याध्यायस्यश्रवणान्मंगलंलभ्यतेनरैः ३९४ ॥ इतिश्रीशतकोटिचरितांतर्गतश्रीमदानंदरामायणे वाल्मी
कीयेसारकांडेसीतास्वयंवरोनामतृतीयःसर्गः ॥ ३ ॥ ॥ श्रीशिवउवाच ॥ अथसीतायुतःश्रीमान्रामःसाकेतसंस्थितः ॥ बुभुजेविविधान्भोगान्राजसेवापरो
ऽभवत् १ शरत्कालाश्विनेमासिजनकेनस्वमंत्रिणः ॥ आव्हानायचराजानंप्रेषितास्त्वरितंययुः २ तानागतान्दशरथःशीघ्रंसत्कृत्यसादरम् ॥ पप्रच्छागमनेहेतुंतेपिन
त्वातमूचिरे ३ दीपावल्युत्सवार्थंत्वांसकुटुंबंसमंत्रिणम् ॥ पौरजानपदैःसाकमाव्हयामासतेसुहृत् ४ तत्तेषांवचनंश्रुत्वादूतानाज्ञापयन्नृपः ॥ क्रियतांनगरेराष्ट्रे
गमनंमिथिलांप्रति ५ सुमुहूर्तेततोराजाहस्त्यश्वरथपत्तिभिः ॥ पौरैर्जानपदैःसाकंययौकरिविराजितः ६ राज्ञःपृष्ठेसमाजग्मुर्गजोपरिविराजिताः ॥ रामलक्ष्मण

१ सगर्वादितिपाठः । २ अष्टाविंशेत्त्विति पाठः ।

भरतशत्रुघ्नास्तेस्वलंकृताः ७ कौसल्याद्याराजदाराःस्नुषाभिस्ताःपृथक्पृथक् ॥ रत्नमाणिक्यमुक्तादिशोभितासुवरासुच ८ करिणीषुसमासीनावेष्टितावेत्रपाणिभिः ॥
धात्रिकाभिःस्वदासीभिर्ययुर्वस्त्रादिभूषिताः ९ आगतंनृपतिंश्रुत्वाजनकःपौरवासिभिः ॥ प्रत्युज्जगामहर्षेणनिनायनगरींप्रति १० वाद्यघोषनिनदैश्चदुंदुभीनांमहास्व
नैः ॥ वारांगनानांनृत्याद्यैर्गायकानांचगायनैः ११ मार्गेमार्गेमहासौधारूढस्त्रीणांकदंबकैः ॥ पुष्पवृष्टिविवर्षाभिर्ययौपथिहृष्टनृपः १२ ततोगृहाणिरम्याणिपूरितान्यन्न
वारिभिः ॥ प्रविवेशनृपश्रेष्ठोजनकेनातिमानितः १३ ततोनानासमुत्साहैर्मिष्टान्नैर्नृत्यगायनैः ॥ वस्त्राभरणैःसर्वान्जामातॄंश्चविशेषतः १४ मणिरत्नादिदीपैश्चमुहुर्नीरा
जनैरपि ॥ जनकःपूजयामासदीपावल्यांमहादिने १५ दीपोत्सवैर्महापुण्यैर्बलिराज्यंप्रवर्तते ॥ आनंदःसर्वलोकानांमंगलानिगृहेगृहे १६ अभ्यंगोद्वर्तनाद्यैश्चवरपकान्न
भोजनैः ॥ गोदासदासीदानैश्चहस्त्यश्वरथपत्तिभिः १७ चकारतुष्टान्जामातॄन्जनकोनृपतिंतथा ॥ नृपपत्नीःस्वदुहितॄरयोध्यास्थादिकान्क्रमात् १८ ततःप्रस्थानमकरो
त्पुरींदशरथोनृपः ॥ ततोराजादशरथःसैन्येनपरिवेष्टितः १९ ययौशनैःशनैर्मार्गेसुहृन्मंत्रिपुरःसरः ॥ एतस्मिन्नंतरेमार्गेसीतार्थंधनुषापुरा २० भग्नमानानृपतयःपूर्व
वैरमनुस्मरन् ॥ असंख्याताःससैन्यास्तेरुरुधुर्नृपतिंपथि २१ तान्दृष्ट्वानृपतींश्चापिकिमेतदितिविह्वलः ॥ मंत्रिभिर्मंत्रयामासजनकःस्वजनैरपि २२ एतस्मिन्नंतरेरा
मःश्रुत्वाचिंतार्णवेनिजम् ॥ निमग्नंपितरंशीघ्रंययौलक्ष्मणसंयुतः २३ नत्वादशरथंरामःकिंचिन्नम्रमिदंब्रवीत् ॥ तातराजन्नकर्तव्याचिंतासतिमयित्वया २४ क्षणादेवव
धिष्यामिपश्यत्वंकौतुकंमम ॥ ततोरामवचःश्रुत्वाराजाऽऽलिंग्यरघूत्तमम् २५ प्राहषड्वार्षिकोबालस्त्वंकथंयोद्धुमिच्छसि ॥ अरण्येसकुटुंबोऽहंवेष्टितोऽस्मिनृपाधमैः ॥
२६ अहमेवगमिष्यामियोद्धुंत्वंरक्षवाहिनीम् ॥ तत्तातवचनंश्रुत्वारामस्तंपुनरब्रवीत् २७ यदामेकुंठितांशक्तिंपश्यसित्वंरणांगणे ॥ तदामेकुरुसाहाय्यंतावदत्रस्थिरोभव
२८ स्वांवाहिनींसकुटुंबांतातत्वंरक्षमद्गिरा ॥ इत्युक्त्वापितरंनत्वासज्जीकृत्यशरासनम् २९ जगामरथमारुह्यलक्ष्मणोऽपितमन्वगात् ॥ तौदृष्ट्वाभरतश्चाथशत्रुघ्नोऽपिजगा
मसः ३० तान्दृष्ट्वादशसाहस्रींराजसेनामचोदयत् ॥ ततस्तेपार्थिवाःसर्वेरथस्थंतंरघूत्तमम् ३१ निरीक्ष्यदर्शयामासुःस्वसेनायांपरस्परम् ॥ समागतोऽयंश्रीरामःस्व
पितृस्यंदनस्थितः ३२ एषवैसुमहच्छ्रीमान्तविटपीसंप्रकाशते ॥ विराजत्युज्ज्वलस्कंधःकोविदारध्वजोरथे ३३ दशरथाज्ञयातस्यरथेशस्त्रौघपूरिते ॥ ध्वजबद्धपताको
च्चकोविदारेस्थितःस्वयम् ३४ एवंवदंतस्तेसर्वेरथैर्योद्धुंसमाययुः ॥ ततोऽभवन्महद्युद्धंघोरंतत्रपरस्परम् ३५ अस्त्रैःशस्त्रैर्भिंदिपालैःशतघ्नीभिःपरश्वधैः ॥ रामस्यसैनिका
न्मुक्त्वाराजानोराममन्वयुः ३६ तेववर्षुर्महाशस्त्रैर्बाणैर्व्याप्यदिगंबरम् ॥ तान्दृष्ट्वानृपतीन्सर्वान्राममेवाभिसम्मुखान् ३७ लक्ष्मणःप्राद्रवच्छीघ्रंभरतोऽपिसशत्रुहा ॥
स्वामितारकवद्घोरमासीद्युद्धंसुदारुणम् ३८ ततोनृपतयःसर्वेशस्त्रौघैर्भरतंतदा ॥ तेविध्यामूर्च्छितंचक्रुःस्यंदनात्पतितोभुवि ३९ भरतंपतितंदृष्ट्वाशत्रुघ्नंविव्यधुःशरैः ॥
तंचापिविरथंकृत्वादुद्रुवुर्लक्ष्मणंनृपाः ४० ववर्षुर्निशितैर्बाणैश्चकुर्स्तंव्याकुलंरणे ॥ तथैवराघवंचापिशरैराच्छादयन्नृपाः ४१ ततःश्रीरामचंद्रोऽपिलीलयासमरांगणे ॥

१ सद्दुहितास्विति पाठः । २ कार्तिकेयः ।

पश्यत्सुजालरंध्रेभ्यःकौसल्याद्यासुमातृषु ४२ सीतयाभ्रातृपत्नीषुपित्रामंत्रिकुलेष्वपि ॥ टणत्कृत्यमहच्चापंवायव्यास्त्रेणतान्नृपान् ४३ शुष्कपर्णवदुद्धूयप्राक्षिपदब्धिरोध सा. कां.
आ. रा. सि ॥ मोहनास्त्रेणशेषान्हिमोहयामासराघवः ४४ लुलुंठसकलंसैन्यंहस्त्यश्वरथसंकुलम् ॥ ततोमूर्च्छितमालोक्यभरतंकैकयीरणे ४५ करिण्याःशीघ्रमुत्प्लुत्यशुशोचाऽङ्के १
॥ ९ ॥ निधायतम् ॥ ततोदशरथश्चापिकौसल्याद्यानृपस्त्रियः ४६ सांत्वयित्वाऽथतान्रामःसौमित्रिंप्राहवेगतः ॥ इतोविदूरेसौमित्रेमुद्गलस्यतपोनिधेः ४७ आश्रमोऽस्तिहित
त्रत्वंगत्वावल्लीःशुभावहाः ॥ संजीविन्यादिकाःसर्वाःशीघ्रमानयलक्ष्मण ४८ मुनेस्तपःप्रभावेनबहवःसंतितत्रवै ॥ तथेतिलक्ष्मणोगत्वास्यंदनस्थस्त्वरान्वितः ४९ अवरु
ह्यरथाद्वीरःसंविवेशाश्रमंमुनेः ॥ निवारितःसबटुभिःसमाधिविरमेमुनेः ५० याच्ञांकृत्यशुभावल्लीःप्राप्स्यसेत्वंनचान्यथा ॥ कालातिक्रमभीत्यासलक्ष्मणोऽपिरघूत्तमम्
५१ वृत्तंनिवेदयामासपुनस्तंराघवोऽब्रवीत् ॥ निवारयित्वाबटुकान्अविनाशस्त्रैस्त्वरान्वितः ५२ आनयत्वंशुभावल्लीर्माशंकांचमुनेःकुरु ॥ सोऽपिरामाज्ञयागत्वानिवार्य
बटुकानक्षणात् ५३ बलात्कारेणतावल्लीर्गृहीत्वाराममागतः ॥ भरतंजीवयामासविशल्यंकृत्यसानुजम् ५४ ततःसमुत्थितंदृष्ट्वाकैकेयीभरतंमुदा ॥ संतोषंपरमंचक्रेकैके
यींपितरंतदा ५५ राघवंसासमालिंग्यभरतंपरिषस्वजे ॥ ततोराजाऽतिसंतुष्टःसमालिंग्यरघूत्तमम् ५६ हर्षान्नानोत्सवांस्तत्रचकारगुरुणाद्विजैः ॥ ततस्तेबटवःसर्वेहा
हाकृत्यमुनीश्वरम् ५७ वृत्तंनिवेदयामासुःसमाधिविरमेमुनेः ॥ समुद्गलोऽपितच्छ्रुत्वाविस्मयेनाऽब्रवीद्वटून् ५८ कोलक्ष्मणःकिमर्थंकस्याज्ञयासोऽहरद्द्रुतम् ॥ विदित्वा
सकलंवृत्तमागच्छध्वंत्वरान्विताः ५९ तथेतितेदशरथंगत्वाप्रोचुस्त्वरान्विताः ॥ कस्त्वंकिमर्थंयानीतावल्लयोलक्ष्मणहस्ततः ६० तान्दृष्ट्वाक्रोधसंयुक्तान्राजाचिंतातुरो
ऽब्रवीत् ॥ अहंदशरथोवल्लयोभरतार्थंममाज्ञया ६१ आनीतामुनयेसर्वंब्रुवध्वंनतिपूर्वकाः ॥ अहमप्यागमिष्यामिमुनिंसांत्वयितुंजवात् ६२ ततस्तेमुनयेसर्वंनृपनामा
द्यवर्णयन् ॥ श्रुत्वारामस्यपितरंक्रोधंसंहृत्यवेगतः ६३ दर्शनार्थंमतिंचक्रेतावद्दृष्टोनृपःपुरः ॥ बद्धकरसंपुटंतंप्रणमंतंनृपोत्तमम् ६४ प्रार्थयंतंसमुत्थाप्यपूजयामाससा
दरम् ॥ रामाद्यानृपपुत्राश्चकौसल्याद्यानृपस्त्रियः ६५ प्रणम्याऽथमुनिंस्तुत्वातस्थुर्मुद्गलभार्यया ॥ सुमत्यापूजिताःसर्वाराजदाराविशेषतः ६६ ततोदशरथःप्राहमुनिं
स्तुत्वापुनःपुनः ॥ मयाऽपराधितंराज्ञाक्षम्यतांतत्त्वयामुने ६७ मुनिर्दशरथंप्राहह्युपकारोमहान्कृतः ॥ नोचेत्कथंदर्शनंमेध्यानस्थस्यसुतस्यते ६८ श्रीरामस्यससी
तस्यनृवेषस्यहिमायया ॥ इतितस्यवचःश्रुत्वादृष्ट्वातुष्टंमुनीश्वरम् ६९ उवाचनृपतिर्नत्वाकिंचित्प्रमुमनामुनिम् ॥ ज्ञात्वानृपस्यसमुनिर्हृद्गतंप्रष्टुकामुकम् ७० एकांते
तुलसीखंडेनीत्वातंनृपमेवसः ॥ पप्रच्छकिंतेवांछाऽस्तिवदस्वकथ्यतेमया ७१ तमब्रवीद्दशरथःश्रीरामस्यहिभावियत् ॥ हिताहितंसविस्तारंज्ञातुमिच्छेमुनीश्वर ७२ ॥ ९ ॥
नृपस्यवचनंश्रुत्वाराजानंमुनिरब्रवीत् ॥ मुद्गलउवाच ॥ साक्षान्नारायणोविष्णुःसर्वव्यापीजनार्दनः ७३ भूभारहरणार्थायतवापिवरदानतः ॥ अवतीर्णोऽस्तित्वत्तोहितवपु
प्यमहोदयात् ७४ अधर्मस्यविनाशंचवृद्धिंधर्मस्यसादरम् ॥ निग्रहंखलुदुष्टानांसज्जनानांचपालनम् ७५ करिष्यतिमहानेषतवपुत्रोरघूत्तमः ॥ दशवर्षसहस्राणिदशवर्षश

१ मुनयःसर्वेऽपिपाठः ।

तानिच ७६ करिष्यतिमहद्राज्यंगतेत्वयिदिवंनृप ॥ सप्तद्वीपपतिश्चायंभविष्यतिनृपोमहान् ७७ द्वौतौभविष्यतःपुत्रौचतस्रश्चस्नुषास्तथा ॥ चतुर्विंशतिपौत्राश्चपौत्र्यस्तुद्वा
दशैवहि ७८ असंख्याताःप्रपौत्राद्याभविष्यंतिसुतस्यते ॥ कियद्दिनैरयंवृंदाशापंभोक्तुंहिदंडके ७९ गमिष्यतिततःपश्चान्महद्राज्यंकरिष्यति ॥ ततस्यवचनंश्रुत्वानृपःप्राह
मुनिंपुनः ८०॥दशरथउवाच॥कावृंदाकस्यभार्यासाकथंशप्तोहरिस्तया ॥ तत्सर्वंविस्तरेणैवकथयस्वमुनीश्वर ८१॥मुद्गलउवाच॥पुराजलंधरेणासीद्युद्धंश्रीशंकरस्यच ॥ वृंदा
पातिव्रत्यबलाद्रक्षितंविष्णुनातदा ८२ ज्ञात्वातद्दर्शितपथापार्वत्याधर्षणादिना ॥ जालंधरपुरंगत्वातद्दैत्यपुटभेदनम् ८३ पातिव्रत्यस्यभंगायवृंदायाश्चाकरोन्मतिम् ॥ अथ
वृंदारकादेवीस्वप्नमध्येददर्शह ८४भर्तारंमहिषारूढंतैलाभ्यक्तंदिगंबरम् ॥ दक्षिणाशागतंमुंडंतमसाप्यावृतंतदा ८५ततःप्रबुद्धासाबालातंस्वप्नंस्वंविचिन्वती ॥ कुत्रापिनाल
भच्छर्मगोपुराट्टालभूमिषु ८६ ततःसखीद्वययुतानगरोद्यानमागता ॥ वनाद्वनांतरंयाताददर्शाऽतिविभीषणौ ८७राक्षसौसिंहवक्त्रादौदंष्ट्रानयनभीषणौ ॥ तौदृष्ट्वाविह्वलाऽती
वपलायनपरातदा ८८ ददर्शतापसंशांतंससशिष्यंमौनमास्थितम् ॥ ततस्तत्कंठमासज्यनिजबाहुलतांभयात् ८९ मुनेर्मांरक्षशरणमागतामित्यभाषत ॥ ततस्यावचनंश्रु
त्वाध्यानंमुक्त्वासवैमुनिः ९० उन्मील्यनयनेवृंदांहदिदृष्ट्वाऽब्रवीद्वचः ॥ तिष्ठत्वंबालिकेह्यत्रमाभयंकुरुसर्वथा ९१ इत्युक्त्वापुरतोदृष्ट्वाराक्षसौमुनिसत्तमः ॥ निर्भर्त्स्ययंतौहुंकारैः
क्रोधेनमहताऽवृतः ९२ तौतद्धुंकारतस्त्रस्तौपलायनपरौतदा ॥ तत्सामर्थ्यंमुनेर्दृष्ट्वावृंदासाविस्मयावृता ९३ प्रणम्यदंडवद्भूमौमुनिंवचनमब्रवीत् ॥ वृंदोवाच ॥ रक्षि
ताऽद्यत्वयाघोराद्भयादस्मात्कृपानिधे ९४ किंचिद्विज्ञप्तुमिच्छामिकृपयातद्वदस्वमाम् ॥ जलंधरोहिमेभर्तारुद्रंयोद्धुंगतःप्रभो ९५ सतत्रास्तेकथंयुद्धेतन्मेकथयसुव्रत ॥
12 मुनिस्तद्वाक्यमाकर्ण्यकृपयोर्ध्वमवैक्षत ९६ तावत्कपीसमायातौतंप्रणम्याग्रतःस्थितौ ॥ ततस्तद्भ्रूलतासंज्ञाप्रयुक्तौगगनांतरात् ९७ गत्वाक्षणार्धादागम्यवानरावग्र
तःस्थितौ ॥ शिरःकबंधहस्तौचदृष्ट्वाब्धितनयस्यसा ९८ पपातमूर्च्छिताभूमौभर्तृव्यसनदुःखिता ॥ कमंडलुजलैःसिक्तामुनिनाऽऽश्वासितातदा ९९ रुदित्वासाशुचि
रंवृंदातंमुनिंवाक्यमब्रवीत् ॥ वृंदोवाच ॥ कृपानिधेमुनिश्रेष्ठजीवयैनंमुनिप्रियम् १०० त्वमेवास्यपुनःशक्तोजीवनायमतोमम ॥ मुनिरुवाच ॥ नायंजीवयितुंशक्यो
रुद्रेणनिहतोयुधि १ तथापित्वत्कृपाविष्टःपुनःसंजीवयाम्यहम् ॥ इत्युक्त्वांतर्दधेयावत्तावत्सागरनंदनः २ वृंदामालिंग्यतद्वक्त्रंचुचुंबप्रीतमानसः ॥ अथवृंदाऽपिभर्तारंदृष्ट्वा
हर्षितमानसा ३ रेमेतद्वनमध्यस्थातद्युक्ताबहुवासरम् ॥ कदाचित्सुरतस्यांतेदृष्ट्वाविष्णुंतमेवाहि ४ निर्भर्त्स्यक्रोधसंयुक्तावृंदावचनमब्रवीत् ॥ वृंदोवाच ॥ धिक्त्वेदं
४ हरेशीलंपरदाराभिगामिनः ५ त्वंज्ञातोऽसिमयासम्यक्मायीप्रत्यक्षतापसः ॥ यौत्वयामाययाद्वौतौस्वकीयौदर्शितौमम ६ तावेवराक्षसौभूत्वातवभार्यांविनेष्यतः ॥
जयविजयनामानौज्ञातौकृत्रिमरूपिणौ ७ त्वंचापिभार्यादुःखार्तोवनेकपिसहायवान् ॥ भवसर्वेश्वरोऽपित्वंयत्तेशिष्यत्वमागतौ ८ पुण्यशीलसुशीलौतौकपिरूपधरावु
भौ ॥ अतस्तेवानरैरस्तुसंगतिर्दंडकेवने ९ बटुरूपधरःशिष्योयस्ताक्ष्यश्चेतिविद्ध्यहम् ॥ इत्युक्त्वासातदावृंदाप्रविवेशहुताशनम् ११० ततोजालंधरोदैत्योनिहतोयु

१ गगनांगणेइतिपाठः ।

षिशंभुना ॥ तस्माद्राजन्निदानींतौकुंभकर्णदशाननौ ११ जातौसागरमध्येतौलंकायामधुनास्थितौ ॥ नीत्वाजनकजांबालांपंचवट्यास्तुमाधवः १२ पालयित्वाऽथ सा. कां.
आ. रा. षण्मासान्रामबाणान्मरिष्यतः ॥ रामोऽपिवालिनंहत्वासुग्रीवेणसमन्वितः १३ शिलाभिःसागरंबद्ध्वासीतामादाययास्यति ॥ यात्रायज्ञविलासांश्चसप्तद्वीपप्ररक्षणम् ॥
१४ करिष्यतिदयितयाबंधुभिश्चयथासुखम् ॥ इदंगोप्यंत्वयाराजन्कथनीयंनकुत्रचित् १५ ॥ ॥ श्रीशिवउवाच ॥ इत्युक्त्वामुद्गलःसर्वंभाविरामस्यकौतुकात् ॥
॥ १० ॥ चरित्रंवर्णयामासयदायद्यत्करिष्यति १६ तत्सर्वंनृपतिःश्रुत्वातुष्टःपप्रच्छतंपुनः ॥ पूर्वजन्मनिकश्चाहंकिंमयासुकृतंकृतम् १७ तत्सर्वंवदमांब्रह्मन्यस्माज्जातोहरिःसु १
तः ॥ ममसाक्षाद्रामचंद्रोलक्ष्मीःसीतात्वभूत्स्नुषा १८ इतितस्यवचःश्रुत्वानृपमाहपुनर्मुनिः ॥ ॥ मुद्गलउवाच ॥ ॥ आसीत्सह्याद्रिविषयेकरवीरपुरेपुरा १९ ब्रा
ह्मणोधर्मवित्कश्चिद्धर्मदत्तइतिश्रुतः ॥ विष्णुव्रतकरःसम्यग्विष्णुपूजारतःसदा १२० द्वादशाक्षरविद्यायांजपनिष्ठोऽतिथिप्रियः ॥ कदाचित्कार्तिकेमासिहरिजागरणा
यसः २१ रात्र्यांतुर्यावशेषायांजगामहरिमंदिरम् ॥ हरिपूजोपकरणान्प्रगृह्यव्रजतातदा २२ तेनदृष्टासमायाताराक्षसीभीमनिःस्वना ॥ वक्रदंष्ट्रालल्लज्जिह्वानिमग्नारक्त
लोचना २३ दिगंबराशुष्कमांसालंबोष्ठीघर्घरस्वना ॥ तांदृष्ट्वाभयसंत्रस्तःकंपितावयवस्तदा २४ पूजोपकरणैःसर्वैःपयोमिश्चाऽहनद्बलात् ॥ संस्मृत्ययद्धरेर्नामतुलसीयु
क्तवारिणा २५ सोहनद्वारिणातस्मात्तत्पापंलयमागतम् ॥ अथसंस्मृत्यसापूर्वजन्मकर्मविपाकजम् २६ स्वांदशामब्रवीद्विप्रंदंडवच्चप्रणम्यसा ॥ ॥ कलहोवाच ॥
पूर्वकर्मविपाकेनदशामेतांगतास्म्यहम् २७ तत्कथंतुपुनर्विप्रयाम्यहंगतिमुत्तमाम् ॥ ॥ मुद्गलउवाच ॥ तांदृष्ट्वाप्रणतामार्तांवदमानांस्वकर्मच २८ अतीवविस्मितो
विप्रस्तदावचनमब्रवीत् ॥ धर्मदत्तउवाच ॥ केनकर्मविपाकेनत्वंदशामीदृशींगता २९ कुतःप्राप्ताचाकिंशीलातत्सर्वंविस्तराद्वद ॥ कलहोवाच ॥ सौराष्ट्रनगरेब्रह्मन्भिक्षु
नामाऽभवद्द्विजः १३० तस्याऽहंगृहिणीब्रह्मन्कलहाख्याऽतिनिष्ठुरा ॥ नकदाचिन्मयाभर्तुर्वचसाऽपिशुभंकृतम् ३१ नार्पितंतस्यमिष्टान्नंभर्तुर्वचनभंगया ॥ पाककाले
मयानित्यंयद्यच्चान्नंमनोरमम् ३२ तत्तत्पूर्वंस्वयंभुक्त्वापश्चाद्भर्त्रेनिवेदितम् ॥ एकदासपतिर्मित्रंममवृत्तंन्यवेदयत् ३३ नैवशृणोतिमेपत्नीमद्वाक्यंकिंकरोम्यहम् ॥ तेनश्रु
त्वातुसकलंक्षणंसंचिंत्यवैहृदि ३४ उवाचमत्पतिंकिंचिद्युक्तिंतांतिवदाम्यहम् ॥ निषेधोक्त्यावदस्वत्वंगृहिणीसाकरिष्यति ३५ तववाक्येनकार्यादियत्किंचित्तववांछि
तम् ॥ तथेतिमित्रवाक्येनगृहमेत्यपतिर्मम ३६ मामाहदयितेमात्वंभोजनार्थंसमाह्वय ॥ ममामित्रंमहद्दुष्टंतच्छ्रुत्वास्वपतेर्वचः ३७ तदाभर्तामयोक्तःसमित्रंतेसाधुसम्म
तम् ॥ समाह्वयाम्यशनार्थमद्यैवब्राह्मणोत्तमम् ३८ ततोमयासमाहूतःस्वयंगत्वापतेःसखा ॥ तदारभ्यनिषेधोक्त्याकार्यमाज्ञापयत्पतिः ३९ एकदासपितुर्दृष्ट्वाक्षयाहःस्व ॥ १० ॥
पतिर्मम ॥ मामाहदयितेश्राद्धंनकरिष्याम्यहंपितुः १४० तद्वाक्यंस्वपतेःश्रुत्वामयाविप्रानिमंत्रिताः ॥ मयाधिक्धिक्कृतोभर्ताकथंश्राद्धंकरोषिन ४१ पुत्रधर्मंनजाना
सिकागतिस्तेभविष्यति ॥ ततःपुनःसमामाहपक्वान्नान्यद्यमाकुरु ४२ द्विजंनिमंत्रयस्वैकंमाविस्तारंकुरुप्रिये ॥ ततस्यवचनंश्रुत्वामयाष्टादशभूसुराः ४३ निमंत्रितास्तुश्रा
द्धार्थंपक्वान्नानिकृतानिहि ॥ ततःपुनःसमामाहप्रियेशृणुवचोमम ४४ मयासहाद्यैत्वंमिष्टंपाकंभुक्त्वाततःपरम् ॥ स्त्रीयोच्छिष्टंत्वयाविप्रान्परिवेषणमाचर ४५ तन्मयावचनं

श्रुत्वापातीर्विग्धिक्कृतःपुनः ॥ कथमादौस्वयंभुक्त्वापश्चाद्विप्रान्समर्पयेत् ४६ एवंसर्वनिषेधोक्त्याश्राद्धंसामेंचकारसः ॥ पिंडदानादिकंकृत्वामामाहसपतिःपुनः ४७अ
हमुपोषणंत्वद्यकरिष्यामिनसंशयः ॥ तत्तस्यवचनंश्रुत्वामिष्टान्नेनसभोजितः ४८ ततोदैववशाद्भर्ताविस्मृत्वामाहमांपुनः ॥ नीत्वापिंडान्क्षिपस्वाद्यसत्तीर्थेपरमादरात् ४९
ततोमयाशौचकूपेनीत्वापिंडाविसर्जिताः ॥ ततःखिन्नमनाविप्रोहाहेत्युक्त्वास्थिरोभवत् १५० क्षणंविचिंत्यमामाहपिंडान्मात्वंबहिःकुरु॥ तदोत्तीर्यैशौचकूपेमयापिंडाबहिः
कृताः ५१ ततःपुनःसमामाहपिंडान्तीर्थेक्षिपस्वमा ॥ तदातीर्थेमयाक्षिप्तास्तेपिंडाःपरमादरात् ५२ एवंमयाकदाभर्तुर्वचनंनकृतंतदा ॥ कलहप्रिययानित्यंमच्यु
द्विग्नमनायदा ५३ परिणेतुंततोऽन्यांवैमनश्चक्रेपतिर्मम ॥ ततोगरंसमादायप्राणस्त्यक्तोमयाद्विज ५४ अथबध्वावध्यमानांमांनिन्युर्यमकिंकराः ॥ यमश्चमांतदादृष्ट्वा
चित्रगुप्तमपृच्छत ५५ ॥ यमउवाच ॥ अनयाकिंकृतंकर्मफलंशुभमथाशुभम् ॥ प्राप्नोत्येषाचतत्कर्मचित्रगुप्तावलोकय ५६ ॥ कलहोवाच ॥ चित्रगुप्तस्तदावाक्यंम
र्त्सयन्मामुवाचह ॥ चित्रगुप्तउवाच ॥ अनयातुशुभंकर्मकृतंकिंचिन्नविद्यते ५७ मिष्टान्नंभुज्यमानेयंनभर्तरितदर्पितम् ॥ अतश्चवल्गुलीयोन्यांस्वविष्ठादावातिष्ठतु ५८
पतिद्वेष्टिसदात्वेषानित्यंकलहकारिणी ॥ विष्ठादाशूकरीयोन्यांतस्मातिष्ठत्वियंयम ५९ पाकभांडेसदाभुंक्तेगुप्तंचैकायतस्ततः ॥ तस्माद्दोषाद्विडालाऽस्तुस्वजाताप
त्यभक्षिणी १६० भर्तारमपिचोद्दिश्यह्यात्मघातःकृतोऽनया ॥ तस्मात्प्रेतशरीरेऽपितिष्ठत्वेकातिनिंदिता ६१ अतश्चैषामरुदेशेप्रापितव्याहरेर्भटैः ॥ तत्रप्रेतशरीर
स्थाचिरंतिष्ठत्वियंततः ६२ ऊर्ध्वंयोनित्रयंचैषाभुनक्त्वशुभकारिणी ॥ कलहोवाच ॥ ततोदूतैःप्रापिताहंमरुदेशंक्षणाद्विज ६३ दत्त्वाप्रेतशरीरंमांगतास्तेस्वस्थलं
प्रति ॥ साहंपंचदशाब्दानिप्रेतदेहस्थिताकिल ६४ क्षुत्तृड्भ्यांपीडिताऽत्यर्थंदुःखितास्वेनकर्मणा ॥ ततःक्षुत्पीडितानित्यंशरीरंवणिजस्त्वहम् ६५ प्रविश्यदक्षिणेप्रा
प्ताकृष्णावेण्यास्तुसंगमे ॥ तत्तीरसंश्रितायावत्तावत्तस्यशरीरतः ६६ शिवविष्णुगणैर्दूरमपाकृष्टाबलादहम् ॥ ततःक्षुत्क्षामयादृष्टोभ्रमंत्यात्वंमयाद्विज ६७ त्वद्धस्ततु
लसीवारिसंस्पर्शाद्गतपातका ॥ तत्कृपांकुरुविप्रेंद्रकथंमुक्ताभवाम्यहम् ६८ योनित्रयाद्ग्रभाव्यादस्माच्चप्रेतभावतः॥मामुद्धरमुनिश्रेष्ठत्वामहंशरणंगता ६९ इत्थंनिशम्य
कलहावचनंद्विजश्चतत्पापकर्मभयविस्मयदुःखयुक्तः ॥ तद्ग्लानिदर्शनकृपाचलचितवृत्तिर्ध्यात्वाचिरंसुवचनंनिजगाददुःखात् १७० ॥ इतिश्रीशतकोटिरामचरितांत
र्गतश्रीमदानंदरामायणे वाल्मीकीये सारकांडेवृंदाशापकलहाख्यानंनामचतुर्थःसर्गः ॥ ४ ॥ ॥ धर्मदत्तउवाच ॥ विलयंयांतिपापानितीर्थदानव्रतादिभिः ॥ प्रेतदेहे
स्थितायास्तेतेषुनैवाऽधिकारिता १ त्वद्ग्लानिदर्शनादस्मात्खिन्नंचममानसम् ॥ नैवनिर्वृतिमायातित्वामनुद्धृत्यदुःखिताम् २ पातकंचतवात्युग्रंयोनित्रयविपाक
दम् ॥ नैवाल्पैःक्षीयतेपुण्यैःप्रेतत्वंचातिगर्हितम् ३ तस्मादाजन्मजनितंयन्मयाकार्तिकव्रतम् ॥ तत्पुण्यस्यार्धभागेनसद्गतित्वमवाप्नुहि ४ कार्तिकव्रतपुण्येननसा
म्यंयांतिसर्वथा ॥ यज्ञदानानितीर्थानिव्रतान्यपिततोध्रुवम् ५ ॥ मुद्गलउवाच ॥ इत्युक्त्वाधर्मदत्तोऽसौयावत्तामभ्यषेचयत् ॥ तुलसीमिश्रतोयेनश्रावयन्द्वादशाक्ष

१ इत्येकतिपाठः।

रम् ६ तावत्प्रेतत्वनिर्मुक्ताज्वलदग्निशिखोपमा ॥ दिव्यरूपधराजातालावण्येनयथोर्वशी ७ ततःसादंडवद्भूमौप्रणनामयथाद्विजम् ॥ उवाचसातदावाक्यंहर्षगद्गदभा
षिणी ८ ॥ कलहोवाच ॥ त्वत्प्रसादाद्द्विजश्रेष्ठविमुक्तानिरयादहम् ॥ पापाब्धौमज्जमानायास्त्वंनौभूतोऽसिमेध्रुवम् ९ ॥ ॥ मुद्गलउवाच ॥ इत्थंसावदतीविप्रंदद
॥ ११ ॥ शोयांतमंबरात् ॥ विमानंसुंदरंयुक्तंविष्णुरूपधरैर्गणैः १० अथसातद्विमानस्थैर्विमानेचाधिरोपिता ॥ पुण्यशीलसुशीलाद्यैरप्सरोगणसेविता ११ तद्विमानंतदाऽपश्य १
द्धर्मदत्तःसविस्मयः ॥ पपातदंडवद्भूमौदृष्ट्वातौपुण्यरूपिणौ १२ पुण्यशीलसुशीलौचसमुत्थाऽऽप्यानतंद्विजम् ॥ समभ्यनंदयन्वाणींप्रोचतुर्धर्मसंयुताम् १३ ॥ गणावूच
तुः ॥ साधुसाधुद्विजश्रेष्ठयस्त्वंविष्णुरतःसदा ॥ दीनानुकंपीधर्मज्ञोविष्णुव्रतपरायणः १४ आबाल्यात्त्वयाह्येतद्यत्कृतंकार्तिकव्रतम् ॥ तवतस्यार्धदानेनपुण्यंद्वैगुण्य
मागतम् १५ त्वत्पुण्यस्यार्धभागेनयदस्याःपूर्वकर्मजम् ॥ जन्मांतरशतोद्भूतंपापंतद्विलयंगतम् १६ स्नानैरेवगतंपापंयदस्याःपूर्वकर्मजम् ॥ हरिजागरणाद्यैश्चविमा
नमिदमागतम् १७ वैकुंठंनीयतेसाधोनानाभोगयुतात्वियम् ॥ दीपदानभवैःपुण्यैस्तैजसंरूपमाश्रिता १८ तुलसीपूजनाद्यैश्चकार्तिकव्रतकैःशुभैः ॥ विष्णुसान्निध्यगा
जातात्वयादत्तैःकृपानिधे १९ त्वमप्यस्यभवस्यांतेभार्याभ्यांसहयास्यसि ॥ वैकुंठभुवनंविष्णोःसान्निध्यंचसरूपताम् २० तेधन्याःकृतपुण्यास्तेतेषांचसफलोभवः ॥
यैर्भक्त्याराधितोविष्णुर्धर्मदत्तत्वयायथा २१ सम्यगाराधितोविष्णुःकिंनयच्छतिदेहिनाम् ॥ औत्तानपादिर्येनैवध्रुवत्वेस्थापितःपुरा २२ यन्नामस्मरणादेवदेहिनोयां
तिसद्गतिम् ॥ ग्राहगृहीतोनागेंद्रोयन्नामस्मरणात्पुरा २३ विमुक्तःसंनिधिंप्राप्तोजातोऽयंजयसंज्ञकः ॥ ग्राहोऽयंविजयोनाम्नाश्रीविष्णोश्चितनादभूत् २४ यतस्त्वयार्चितो
विष्णुस्तत्सान्निध्यंप्रयास्यसि ॥ बहून्यष्टसहस्राणिभार्याद्वययुतस्यते २५ ततःपुण्यक्षयंप्राप्तेयदायास्यसिभूतलम् ॥ सूर्यवंशोद्भवोराजाविख्यातस्त्वंभविष्यसि २६
नाम्नादशरथस्तत्रभार्याद्वययुतःपुनाम् ॥ तृतीयेयंतदाभार्यापुण्यस्यैवार्धभागिनी २७ कलहाकैकयीनाम्नीभविष्यतिनसंशयः ॥ तत्राऽपितवसान्निध्यंविष्णुर्दास्यतिभूत
ले २८ अत्मानंतवपुत्रत्वंप्रकल्प्यामरकार्यकृत् ॥ रामनाम्नारावणादीन्हत्वाराज्यंकरिष्यति २९ तवाजन्मव्रतादस्माद्विष्णुसंतुष्टिकारणात् ॥ नयज्ञानचदानानिन
तीर्थान्यधिकानिवै ३० अतस्त्वमग्रेऽपिधर्मज्ञनित्यंविष्णुव्रतेस्थितः ॥ त्यक्तमात्सर्यदंभोऽपिभवस्वसमदर्शनः ३१ कार्तिकेमाघवैमाघेचैत्रेमासचतुष्टये ॥ प्रत्यब्दंत्वंध
र्मदत्तप्रातःस्नायीसदाभव ३२ एकादशीव्रतेतिष्ठतुलसीवनपालकः ॥ ब्राह्मणानपिगाश्चापिवैष्णवांश्चसदाभज ३३ मसूरिकाश्चारनालंवृंताकादीनिखादमा ॥ एवंत्वमपि
देहांतेतद्विष्णोःपरमंपदम् ३४ प्राप्नोषिधर्मदत्तत्वतद्भक्त्यैवयथावयम् ॥ पुण्यशीलसुशीलाख्यौजयश्चविजयस्तथा ३५ धन्योऽसिविप्राग्र्ययतस्त्वयैतद्व्रतंकृतंतुष्टिकरंजग
द्गुरोः ॥ यदर्द्धभागात्सफलान्मुरारेःप्रणीयतेऽस्माभिरियंसलोकताम् ३६ ॥ मुद्गलउवाच ॥ इत्थंतौधर्मदत्तंतमुपदिश्यविमानगौ ॥ तयाकलहयासार्द्धं वैकुंठभुवनंगतौ ३७ ध ॥ ११ ॥
र्मदत्तोऽप्यसौराजन्प्रत्यब्दंतद्व्रतेस्थितः ॥ देहांतेपरमंस्थानंभार्याभ्यामन्वितोऽभ्यगात् ३८ बहून्यब्दसहस्राणिस्थित्वावैकुण्ठसद्मनि ॥ ततःपुण्यक्षयेजातेजातोऽसित्वंनृपो

१ सुशीलाभ्यामितिपाठः । २ भार्याभ्यांइतिपाठः ।

महान् ३९ त्रिभिस्त्रीभिर्दशरथतेविष्णुःपुत्रतांगतः ॥ रामोऽयंलक्ष्मणःशेषोभरतोऽब्जोऽरिःशत्रुहा ४० एवंसर्वंमयाख्यातंयथापृष्टंत्वयामम ॥ धन्यस्त्वंयस्यतनयःसाक्षान्ना
रायणोऽभवत् ४१॥श्रीशिवउवाच ॥ इत्युक्त्वानृपतिंपूज्यविससर्जमुनिस्तदा ॥ आलिंग्यरामंसौमित्रिंमेनेचकृतकृत्यताम् ४२ तदाराजास्वसैन्येनमहाहर्षसमन्वितः ॥
अयोध्यामगमद्रम्यांगोपुराट्टालमंडिताम् ४३ नृपमागतमाज्ञायमंत्रिणःपुरवासिनः ॥ पताकातोरणाद्यैश्चदिव्यचंदनसेचनैः ४४ नगरींभूषयित्वातेनृत्यवाद्यादिमंगलैः ॥
निन्युःकुटुंबसहितंराजानंनगरींप्रति ४५ राममागतमाज्ञायगोपुराट्टालपंक्तिषु ॥ कन्यांनिवायबालांश्चस्त्रियःस्थित्वानिजैःकरैः ४६ सुवर्णकुसुमाद्यैश्चववृषुःपुष्पवृष्टि
भिः ॥ काश्चिन्मार्गोपरिस्थित्वाकुंभदीपादिमंगलैः ४७ आर्तिक्याद्यैश्चराजानंसरामंशांतिकारकैः ॥ पूजयंतिस्मताःसर्वाराजमार्गेपृथक्पृथक् ४८ एवंनानासमुत्साहै
र्नर्तनैर्वारयोषिताम् ॥ दुंदुभीनांनिनादैश्चगायकानांचगायनैः ४९ सौधोद्भवगवाक्षैश्चस्त्रीमुक्तापुष्पवृष्टिभिः ॥ ययौस्वशिबिरंराजावीज्यमानःसुचामरैः ५० ततस्ता
न्जनकामात्यान्वस्त्रालंकारवाहनैः ॥ सत्कृत्यभोजनाद्यैश्चप्रेषयामासमैथिलम् ५१ एवंसर्वेषूत्सवेषुजनकोवार्षिकेषुसः ॥ निनायमिथिलांराममातृभिःपार्थिवेनच ५२
उत्तरोत्तरतःपूज्यतोषयामासराघवम् ॥ रामोऽपिरमयामासलीलाभिर्नृपतिंतदा ५३ मासैःषड्भिर्जनकजालब्धीश्रीराघवाच्छुभा ॥ लग्नाच्चैकादशेवर्षेरजोयुक्ताबभूवह
५४ तद्वार्तांजनकःश्रुत्वापत्नीभिर्मंत्रिभिःसह ॥ अयोध्यामगमच्छीघ्रंराजाप्रत्युज्जगामतम् ५५ परस्परंसमालिंग्यसाकेतमिथिलाधिपौ ॥ नृत्यवाद्यसमुत्साहैरयोध्यां
विशतुःसुखम् ५६ ततोमहासमुत्साहैर्नानामंडपतोरणैः ॥ कदलीस्तंभमालाभिरिक्षुदंडैःसुचामरैः ५७ चतुर्द्वारैर्मंडपैश्चघंटाघोषैःसदर्पणैः ॥ किंकिणीजालघोषैश्चावि
15 तानैर्दीपराजिभिः ५८ वसिष्ठोमुनिभिःसार्द्धंगर्भाधानविधिंशुभम् ॥ कारयामासरामेणसीतायाश्चाऽतिहर्षितः ५९ तदावस्त्रैरलंकारैर्जनकोनृपतिंमुदा ॥ पूजयामाससस्त्रीकंस्नुषापुत्रसमन्वितम् ६० मासमेकमतिक्रम्यययौस्वनगरींसुखम् ॥ रामोऽपिसीतयासार्द्धंनानाभोगान्सुपुष्कलान् ६१ बभुजे हेमरत्नादिनिर्मितेषुगृहेषुसः ॥ रुक्मम
ङनयुक्ताभिर्दासीभिर्वीजितःसुखम् ६२ एवंतासांनृपसुतपत्नीनांचपृथक्पृथक् ॥ यथाकालेविधानेपुगर्भाधानादिकेषुच ६३ आगत्यजनकश्चकेनानोत्साहान्मुदान्वितः ॥
अयोध्यानगरीमध्येवाद्यघोषोगृहेगृहे ६४ मंगलानिचसर्वत्रनकुत्राप्यस्त्यमंगलम् ॥ नदरिद्रीक्रणीनासीन्नाधिव्याधिप्रपीडितः ६५ रामादिभिश्चतुर्भिस्तैर्वधुभिस्तद
नंतरम् ॥ पृथग्गेहेषुभार्याभिर्गार्हस्थ्यमध्यनुष्ठितम् ६६ रामःप्रातःसमुत्थायकृतशौचादिसत्क्रियः ॥ आरुह्यशिबिकांदिव्यांस्नानार्थंशरयूंनदीम् ६७ गत्वाकूलेवाहनादि
विसृज्यरघुनंदनः ॥ गच्छंस्तस्याःपावनार्थंशरय्वाःपुलिनेमुदा ६८ मंत्रिभिर्वेष्टितोगत्वानत्वातांशरयूनदीम् ॥ स्नात्वानित्यविधिंकृत्वाब्राह्मणैःपरिवारितः ६९ दत्त्वादा
नान्यनेकानिगोभूधान्यरसादिभिः ॥ संपूज्यशरयूंपुण्यांब्राह्मणान्पूज्यसादरम् ७० ययौरथंसमारुह्यरुक्मघर्षघनबंधितम् ॥ रुक्मतंतुरज्जुभिश्चसर्वतःपरिवेष्टितम् ७१
पट्टकूलादिवसनैर्वरैराच्छादितंशुभम् ॥ वाजिवाहंसारथिनासुस्नातेनप्रचोदितम् ७२ किंकिणीवरमालाभिर्घंटाभिरतिगर्जितम् ॥ रुक्मदंडधरैर्दूतैरग्रेदर्शितसत्पथम् ७३

१ लग्नेऽथैकादशेवर्षेइतिपाठः ।

पथिनीराजितःस्त्रीभिर्वर्षितःपुष्पवृष्टिभिः ॥ प्रापस्वीयंगृहंरामःसूर्यकोटिसमप्रभम् ७४ अवरुह्यरथाद्रामःपादयोर्धृत्यपादुके ॥ विवेशसीतासंदत्तपादार्घ्याचमनोगृहम्
७५ गत्वाऽग्निहोत्रशालायांसीतयाऽऽसनसंस्थितः ॥ अग्निहोत्रादिविधिनावन्हिंहुत्वाततःपरम् ७६ स्फटिकस्यचलिंगस्यकर्ममार्गर्यथाविधि ॥ लोकानांशिक्षणार्थाय
कृत्वापूजनमुत्तमम् ७७ जानक्यादत्तपक्वान्ननैवेद्यादिसमर्प्यच ॥ ब्राह्मणान्पूज्यदानाद्यैस्तोष्यलब्ध्वातदाशिषः ७८ तुलसींचगुरुंधेनुमश्वत्थंमुनिपादपम् ॥ पूजयि
त्वारविंदेवंब्रह्मयज्ञंविधायच ७९ गुरोर्मुखाच्चपौराणींकथांश्रुत्वातुसीतया ॥ गुरुंपुनःप्रपूज्याऽथबंधुभिःपरिवेष्टितः ८० प्रार्थितश्चमुहुःपत्न्याब्राह्मणैःपरिवारितः ॥ ना
रिकेलकपित्थाम्रसुरंभाजंबुदाडिमैः ८१ खर्जूरिकापनसाद्यैःपक्वान्नैर्घृतपाचितैः ॥ उपहारंसुखंकृत्वातांबूलंपरिगृह्यच ८२ दिव्यवस्त्राणिसंगृह्यदृष्ट्वाऽऽदर्शेनिजंमुखम् ॥
निरीक्षितश्चवैदेह्यारुह्यस्यंदनमुत्तमम् ८३ वेष्टितोमंत्रिदूताद्यैस्तूर्यध्वानेपुरःसरम् ॥ मातृगेहंततोगत्वाताःप्रणम्याविनिर्गतः ८४ सव्यांप्रदक्षिणांकृत्वागत्वाराजगृहंप्र
ति ॥ सिंहासनस्थंराजानंनत्वास्थित्वातदाज्ञया ८५ पौरकार्याण्यनेकानिकृत्वाराज्ञाविसर्जितः ॥ ययौस्यंदनमास्थायनृपंनत्वापुनःपुनः ८६ तूर्यगीतनिनादैश्चनर्त
नैर्वारयोषिताम् ॥ ययौस्वीयंगृहंरामःस्यंदनादवरुह्यच ८७ भूमिजादत्तपाद्यार्घ्याचमनीयासनादिकम् ॥ गृहीत्वायद्बहिर्गत्वाकृतंतत्तान्यवेदयत् ८८ सर्वंहृत्तंकौतुकेन
हास्यगीतादिमंगलैः ॥ रमयित्वाभूमिकन्यांदिव्यवस्त्रादिभूषिताम् ८९ ततोमध्यान्हसमयेसरय्वांवाऽथसद्मनि ॥ स्नात्वामाध्यान्हिकंकर्मचकाररघुनंदनः ९० नित्यंय
त्राकरोत्स्नानंसरयूनिर्मलेजले ॥ तदाख्ययाऽभवत्तीर्थंरामतीर्थमितिस्फुटम् ९१ तद्विख्यातंत्रिभुवनेचैत्रमासिविशेषतः ॥ माध्यान्हिकंचसंपाद्यब्राह्मणैर्मंत्रिभिर्जनैः ॥
९२ इष्टैःसुवर्णपात्रेषुत्रिपदासुघृतेषुच ॥ परिष्कृतेषुजानक्यासीतयागतिलाघवात् ९३ क्वणत्कंकणमंजीरकिंकिणीनूपुरादिषु ॥ नदत्सुभोजनंचक्रेराघवोहर्षपूरितः ॥
९४ करशुद्धिंविधायाऽथभुक्त्वातांबूलमुत्तमम् ॥ ततःशतपदंगत्वानिद्रांकृत्वातुसीतया ९५ पुनर्वस्त्राणिसंगृह्यलब्ध्वाशस्त्राणिसादरम् ॥ धनुर्बाणौकरेधृत्वारथेस्थित्वा
ऽथबंधुभिः ९६ पुष्पारामोद्यानकादीन्दृष्ट्वातुकौतुकेनच ॥ वाद्यघोषैर्नर्तनाद्यैर्गत्वास्वीयंगृहंपुनः ९७ सायंसंध्यादिसंपाद्यपुनर्हुत्वासविस्तरम् ॥ शंभुंभक्त्यापुनःपूज्य
कृत्वाचैवोपहारकम् ९८ रत्नकांचनमाणिक्यनिर्मितेमंचकेवरे ॥ दिव्यप्रासादमध्येससीतयारघुनायकः ९९ हास्यगीतविनोदाद्यैर्निद्रांचक्रेततःपरम् ॥ एवंनानास
मुत्साहैर्निनायार्कसमाःसुखम् १०० एकदाराघवंराजाज्ञात्वाशुद्धन्वाक्यतः ॥ वसिष्ठवाक्यतश्चापिचरित्रैश्चाप्यमानुषैः १ साक्षान्नारायणंविष्णुंमत्वाहूयरहःस्थितः ॥
पप्रच्छविनयेनैवहृद्विभावंविधायच २ रामनारायणस्त्वंहिभूभारहरणायच ॥ मत्तोजातोसीतिलोकावदंत्यज्ञानबुद्धयः ३ अतःपृच्छामितेराममायायामोहितस्तव ॥ किंचि
ज्ज्ञानोपदेशेननाशयाऽज्ञानजांमतिम् ४ दारापत्यादिगेहेषुस्थितानैवोपशाम्यति ॥ तांपितुर्वचनंश्रुत्वाराजानंराघवोऽब्रवीत् ५ ॥ श्रीरामउवाच॥ शृणुराजन्प्रवक्ष्यामितव
ज्ञानार्थमुत्तमम् ॥ शृणोतुममंमातेयंकौसल्याऽपितवप्रिया ६ नश्वरंभासतेचैतत्सविश्वंमायोद्भवंनृप॥ यथाशुक्तौरौप्यभासःकाचभूम्यांजलस्यच ७ यथारज्जौसर्पभासोमृगतोये

१ महाधेनुमितिपाठः । २ परिवेषितेष्वितिपाठः ।

जलस्पृहा ॥ तद्वदात्मनिभासोयंकल्प्यतेनश्वरोऽबुधैः ८ अज्ञानदृष्टिभिर्नित्यंमन्यतेनतुपंडितैः ॥ आत्माशुद्धोनिर्व्यलीकःसच्चिदानंदलक्षणः ९ यस्यांऽशाशिनविश्वेशब्रह्मा
द्याःसकलावयम् ॥ स्थित्युत्पत्तिविनाशार्थंनानारूपाणिमायया १०धार्यतेनत्वद्राजन्नतेष्वासक्तएवसः ॥ यथापद्मंनस्पृशतिजलंमायांतथाऽमलः ११आत्मानित्योनस्पृश
तिपरमानंदविग्रहः ॥ देहागारसुतस्त्रीषुमामकेतिचयामतिः १२ उपसंहृत्यबुद्ध्यासंन्यस्यब्रह्मणिचिद्घने ॥ यद्यत्किंचिद्भासतेऽत्रतत्तन्नारायणात्मकम् १३पश्यत्वंसर्वभावेनसु
च्यतेभवसंकटात् ॥ सत्यंशौचंदयाशांतिःक्षमाचेंद्रियनिग्रहः १४ अहिंसाभगवद्भक्तिर्वेदमार्गानुवर्तनम् ॥ इत्याद्यायेगुणाराजन्तान्भजस्वनिरंतरम् १५चौर्यंद्यूतंविवादंचमा
त्सर्यंदंभमेवच ॥ क्रौर्यंलोभंभयंक्रोधंशोकंनिंद्यप्रवर्तनम् १६ वेदविप्रयतीनांचसाधूनांमानभंगनम् ॥ निंदापैशून्यमनिशंत्यजदूरंस्वतोनृप १७ पूर्वंत्वयातपस्तप्तंपुत्रस्त्वंया
चितंमम ॥ तस्माज्जातोस्मित्वत्तोऽहंकौसल्यायांनृपोत्तम १८ यन्मयाकथितंचैतदज्ञानमलनाशनम् ॥ गोपनीयंप्रयत्नेनकथनीयंनकुत्रचित् १९ तद्रामवचनंश्रुत्वागत
मायामलोनृपः ॥ सद्भावपरिपूर्णस्तुरोमांचितवपुर्धरः १२० प्रणनामराघवस्यचरणौदृढभावतः ॥ ततोरामंपुनःप्राहपितरंनिर्मलाशयम् २१ नेदंयोग्यंत्वयाराजन्वंद
नादिशिशुंप्रति ॥ माययानरवेषस्यममोपहासकारणम् २२ मनसैवचमांनित्यंभजभावेनसादरम् ॥ मच्चित्तोमद्गतप्राणोमयिभक्तिंदृढांकुरु २३ इत्युक्त्वापितरौनत्वागृही
त्वाज्ञांतयोःप्रभुः ॥ ययौरथसमारूढःश्रीरामःस्वनिकेतनम् २४ कदामातुर्गृहंगत्वासीतयाभोजनंव्यधात् ॥ कदाभ्रातृगृहेष्वेवकदापंक्तौपितुःस्वयम् २५ कदादशरथं
तातंभोजनार्थंनिजेगृहे ॥ भार्यापुत्रादिभिर्युक्तंपौरैर्विप्रैःसमन्वितम् २६ मुदारामःसमाहूयभोजयामाससादरम् ॥ श्रीरामदर्शनार्थंतेतपोवननिवासिनः २७ अयोध्यान
गरीमेत्यद्वारपैरनिषेधिताः ॥ शतशःप्रत्यहंरामंदृष्ट्वास्तुत्वापुनःपुनः २८ आतिथ्यंरघुनाथस्यगृहीत्वातुष्टमानसाः ॥ सप्तपंचदिनान्येवस्थित्वापुण्यकथादिभिः २९
रमयित्वारमानाथंजग्मुःस्वंस्वंवराश्रमम् ॥ यत्रयत्रहिरामस्यप्रीतिंज्ञात्वाविदेहजा ३० तत्तच्चकारसासाध्वीहास्यक्रीडासनादिकम् ॥ विवाहानंतरंरामःसमाद्वादशसीत
या ३१ रमयामाससाकेतेमहाक्रीडापुरःसरम् सहस्रवर्षैर्विज्ञेयंश्रेष्ठंवर्षंकृतेयुगे ३२ शतवर्षैश्चत्रेतायांद्वापारेदशवर्षजम् ॥ कलेर्मानेनबोद्धव्यंशून्यहासात्त्रिविक्रमात् ३३
एवंश्रीरामचंद्रेणभोगाभुक्ताःसुरोपमाः ॥ यस्मिन्नृतौचयद्द्रव्यंफलपुष्पादिकंशुभम् ३४ तत्सर्वंसर्वदैवासीद्रामेसाकेतसंस्थिते ॥ अनावृष्टिर्नवैकुत्रतस्कराणांभयंनहि ३५
हिंस्रादीनांभयंनासीदयोध्याविषयेप्रिये ॥ युधाजिन्नामकैकेय्याभ्राताभरतमातुलः ३६ निनायभरतंस्वीयराज्येशत्रुघ्नसंयुतम् ॥ कौतुकेनतृपंपृष्ट्वाकैकेयींप्रणिपत्यच ३७
एवंरामस्यमांगल्यंबालत्वेऽपिसुखावहम् ॥ येशृण्वंतिनराभक्त्यानतेषामस्त्यमंगलम् ३८ एवंयथात्वयापृष्टंतथासर्वंमयोदितम् ॥ रामेणाचरितंयच्चनृणांमांगल्यदायकम्
३९ एवंगिरींद्रजेप्रोक्तंबाललीलादिकौतुकम् ॥ रामचंद्रस्यसंक्षेपात्तवप्रीत्यैसुखावहम् १४० ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेवाल्मीकीयेबालच
रित्रेसारकांडेरामदिनचर्यावर्णनंनामपंचमःसर्गः ॥५॥ श्रीशिवउवाच ॥ एवंत्रेतायुगेरामंनगर्यांसीतयासुखम् ॥ क्रीडंतंनारदोऽर्कैन्द्रेययावाकाशवर्त्मना १ अथरामोमुनिं

१ बुद्ध्यात्वमितिपाठः । २ नित्यकर्मेतिपाठः । ३ दृष्ट्वेतिपाठः । ४ द्वादशेवर्षे ।

पूज्यसीतयालक्ष्मणेनच ॥ शुश्राववचनंतस्यसुरैर्विज्ञापितंचयत् २ निहत्यरावणंयुद्धेततोराज्यंकुरुष्वंहि ॥ अंगीकृत्यरघुश्रेष्ठस्तंमुनिंविससर्जयत् ३ अथरामो
ब्रवीत्सीतांममराज्याभिषेचनम् ॥ कर्तुंकामोऽस्तितत्राहंविघ्नमुत्पाद्यदंडकम् ४ गच्छामिरावणादीनांवधार्थंलक्ष्मणेनच ॥ अयोध्यायांवसात्रत्वंकौसल्यांपार्थिवं
भज ५ तद्रामवचनंश्रुत्वाप्रणिपत्यरघूत्तमम् ॥ उवाचमधुरंवाक्यंवनंमांत्वंनयप्रभो ६ कारणान्यत्रवैत्रीणिसंतितानिवदाम्यहम् ॥ बाल्येकररेखांमेदृष्ट्वाकश्चि
द्द्विजाग्रणीः ७ वनप्रयाणंमामाहमत्रोसिसत्यवाग्द्विजः ॥ भवत्वद्यप्रयाणान्मेदंडकंहित्वयासह ८ अन्यत्त्वयंवरेपूर्वंसुरानपिमयोदितम् ॥ यदाचापांतिकंप्राप्तःसज्जि
तुंत्वंसभांगणे ९ चतुर्दशवत्सराणिमुनिवृत्त्यनुवर्तिनी ॥ विचरिष्याम्यरण्येऽहंधनुःसज्जंकरोत्वयम् १० तत्सत्यंकुरुमद्वाक्यंप्रयाणाद्दंडकेत्वया ॥ अन्यच्छ्रुतंमया
पूर्वंरामायणमनुत्तमम् ११ तत्रसीतांविनारामोनगतोऽस्तिहिदंडकम् ॥ तस्मात्त्वंमांरघुश्रेष्ठदंडकंनेतुमर्हसि १२ तत्सीतावचनंश्रुत्वातथास्त्वितिवचोऽब्रवीत् ॥ वि
हस्यराघवःश्रीमान्समालिंग्यविदेहजाम् १३ अथराजादशरथःश्रीरामायाऽभिषेचनम् ॥ यौवराज्यपदेकर्तुंमुद्युक्तःप्राहवैगुरुम् १४ यौवराज्यपदेराममभिषेक्तुंत्व
मर्हसि ॥ तद्राजवचनंश्रुत्वागुरुर्दशरथंनृपम् १५ कौसल्यागृहमानीयबोधयामासवैरहः ॥ राजन्शृणुत्वंकौसल्यासुमित्रेशृणुतंत्विमे १६ रावणस्यवधार्थंहिरामःश्वोदंड
कंवनम् ॥ गमिष्यतिलक्ष्मणेनसीतयाकैकयीवरात् १७ तस्माद्ज्ञातवतूर्ष्णींसंभारानभिषेचितुम् ॥ कारयस्वसुमंत्रेणसमाहूयनृपादिकान् १८ श्रीरामविरहाद्राजन्ब्रा
ह्मणस्याऽपिशापतः ॥ अचिरादेवस्वर्लोकंत्वंगमिष्यसिपार्थिव १९ कौसल्येयंरामराज्योत्सवंपश्यतुवैपुनः ॥ अंतरिक्षाद्विमानस्थस्त्वंपश्यसिमहोत्सवम् २० दुर्ले
घ्याभाविनीरेखाब्रह्मादीनांनृपोत्तम ॥ इतिश्रुत्वागुरोर्वाक्यंतेनराजासभांययौ २१ रामराज्याभिषेकायसंभारानकरोन्मुदा ॥ दूतैराकारयामासनृपान्दशरथस्तदा २२
ऋषीश्वराःसमाजग्मुर्नानाश्रमनिवासिनः ॥ नगरींशोभयामासुर्द्रुताश्चित्रध्वजोत्तमैः २३ पताकाभिस्तोरणैश्चहेमकुम्भैर्मनोरमैः ॥ गुरुराज्ञापयामाससुमंत्रंनृपमंत्रिणम्
२४ श्वःप्रभातेमध्यकक्षेकन्यकाःस्वर्णभूषिताः ॥ तिष्ठन्तुषोडशगजाःस्वर्णरत्नादिभूषिताः २५ चतुर्दंतःसमायातुऐरावतकुलोद्भवः ॥ नानातीर्थोदकैःपूर्णाःस्वर्ण
कुंभाःसहस्रशः २६ स्थाप्यतांतत्रवैव्याघ्रचर्माणित्रीणिवानव ॥ श्वेतच्छत्रंरत्नदंडंमुक्तामणिविराजितम् २७ दिव्यमाल्यानिवस्त्राणिदिव्यान्याभरणानिच ॥ मुनयः
संस्कृतास्तत्रातिष्ठंतुकुशपाणयः २८ नर्तक्योवारमुख्याश्चगायकावैदिकास्तथा ॥ नानावादित्रकुशलावादयंतुनृपांगणे २९ हस्त्यश्वरथपादातावहिस्तिष्ठंतुसायुधाः ॥
नगरेयानितिष्ठंतिदेवतायतनानिच ३० तेषुप्रवर्ततांपूजानानाबलिभिरादृताः ॥ राजानःशीघ्रमायांतुनानोपायनपाणयः ३१ इत्यादिश्यवसिष्ठस्तुरथेनरघुनंदनम् ॥
गत्वासंमानितस्तेनसर्ववृत्तंन्यवेदयत् ३२ निमित्तमात्रस्त्वंरामश्चोगमिष्यसिदंडकान् ॥ चतुर्दशसमास्तत्रस्थित्वासंहृत्यरावणम् ३३ बंधुनासीतयासार्धंततोराज्यं
करिष्यसि ॥ लौकिकींवृत्तिमालंब्यस्वीकुरुष्वपितुर्वचः ३४ अद्यत्वंसीतयासार्द्धमुपवासंयथाविधि ॥ कृत्वाशुचिर्भूमिशायीभवरामजितेंद्रियः ३५ इत्युक्त्वारथ

१ करोत्विति इतिपाठः । २ ससुतास्तत्रेतिपाठः ।

मारुह्यदृष्ट्वारामंसलक्ष्मणम् ॥ जानकींचापिसगुरुर्ययौराजगृहंपुनः ३६ कौसल्याचसुमित्रातेरामराज्याभिषेचनम् ॥ श्रुत्वापिश्रुत्वाश्रीगुरोरास्यात्स्नेहसमन्विते ३७ चक्रतुःपूजनंदेव्यास्तद्विघ्नोपशमस्पृहे ॥ बलिदानैःशांतिपाठैर्मुनिवृंदसमन्विते ३८ अथापराण्हेसौधस्थादास्याःपुत्रीतुमंथरा ॥ शोभितांनगरींदृष्ट्वापृष्ट्वावृद्धांपथिस्थिताम् ३९ श्रुत्वाश्रीरामराज्यार्थंययौवेगेनकैकयीम् ॥ सर्ववृत्तंनिवेद्याथतूष्णीमासीत्तदाक्षणम् ४० तच्छ्रुत्वाकैकयीचापितस्यैभूषणमर्पयत् ॥ एतस्मिन्नंतरेवाण्यादेववाक्यात्सुमोहिता ४१ तुष्टांदृष्ट्वातुकैकेयींभर्त्सयंत्याहतांपुनः ॥ मूढेकथंत्वंतुष्टाऽसिहतभाग्याऽसिवेद्म्यहम् ४२ रामेराज्यपदंप्राप्तेकौसल्यायाश्वकेकये ॥ दासीभविष्यसित्वंहिअतोमद्वचनंकुरु ४३ वरेणन्यासभूतेनराज्यंश्रीभरतायहि ॥ नृपंप्रार्थयरामस्यद्वितीयेनवरेणच ४४ दंडकारण्यगमनंचतुर्दशसमाःपदा ॥ क्रोधागारंप्रविश्याद्यकुरुष्वयन्मयेरितम् ४५ तन्मंथरोक्तंस्वहितंमत्त्वासापितथाऽकरोत् ॥ मोहितासाऽविवेकेनश्रीराघवसुरेच्छया ४६ ततोनिशायांराज्ञासाज्ञाताक्रोधगृहस्थिता ॥ गत्वातत्रनृपःशीघ्रंददर्शकैकयींतदा ४७ विकीर्यमाणकेशांतांत्यक्ताऽलंकारमंडनाम् ॥ भूमौशयानांतांदृष्ट्वाज्ञात्वातस्यामनोगतम् ४८ रामायदंडकारण्यंयौवराज्यंसुतायच ॥ वराभ्यांयाचितंज्ञात्वाहेत्युक्त्वामूर्च्छितोऽभवत् ४९ प्रभातेतत्सुमंत्रेणवृत्तंश्रुत्वानृपंययौ ॥ कैकेयीमंत्रिणापृष्टासुमंत्रंप्राहसातदा ५० अत्राऽनयस्वश्रीरामंद्रष्टुंतंवांछतेनृपः ॥ सोप्याहरामंनृपतिमपृष्ट्वानानयाम्यहम् ५१ तदाशनैर्नृपःप्राहशीघ्रमानयराघवम् ॥ सुमंत्रोप्यानयामासराघवंपार्थिवाज्ञया ५२ ततोरामोनृपंगत्वाश्रुत्वाकैकेयजागिरा ॥ आत्मानंदंडकेवासंवरदानंपितुःपुरा ५३ तथेत्यंगीचकाराथनृपंवचनमब्रवीत् ॥ मातेशोकोऽस्तुहेतातह्यहंगच्छामिदंडकान् ५४ तद्रामवचनंश्रुत्वाहाहेत्युक्त्वानृपोऽब्रवीत् ॥ मांविसृज्यकथंघोरंविपिनंगंतुमिच्छसि ५५ तस्यतद्वचनंश्रुत्वासांत्वयामासराघवः ॥ अहंप्रतिज्ञांनिस्तीर्यशीघ्रंयास्यामितंपुरम् ५६ इदानींगंतुमिच्छामिव्येतुमातुश्चहृच्छयः ॥ मातरंचसमाश्वास्यह्यनुनीयचजानकीम् ५७ आगत्यपादौवंदित्वातवयास्येसुखंवनम् ॥ इत्युक्त्वातौपरिक्रम्यमातरंद्रष्टुमाययौ ५८ नत्वास्वमातरंरामःसमाश्वास्यपुनःपुनः ॥ नत्वाप्रदक्षिणाःकृत्वातामामंत्र्यययौगृहम् ५९ सर्ववृत्तंतुसीतांसकथयामासराघवः ॥ सीतयालक्ष्मणेनाऽपिवनंगंतुपुनःपुनः ६० प्रार्थितश्चतथेत्युक्त्वात्वरयामासतौपुनः ॥ सर्वस्वंब्राह्मणान्दत्वासीतयाऽग्निसमन्वितः ६१ पद्भ्यामेवशनैर्भ्रात्राययौरामोनृपांतिकम् ॥ गच्छंतंपथिश्रीरामंपद्भ्यांदृष्ट्वापुरौकसः ६२ परस्परेणतेवृत्तंश्रुत्वाव्याकुलमानसाः ॥ बभूवुस्तान्वामदेवःकथयामाससादरात् ६३ नारदागमनंरामप्रतिज्ञांरावणस्यच ॥ वधादिकंसविस्तारंविष्णुंमनुजरूपिणम् ६४ पौराःश्रुत्वागतक्लेशाह्यभूवन्पथिसंस्थिताः ॥ ततोनत्वानृपंरामःकैकेयींवाक्यमब्रवीत् ६५ अंबागतोऽहंविपिनंगंतुमाज्ञांददस्वमाम् ॥ ततःसावल्कलादीनिददौरामादिकांस्तदा ६६ रामस्तान्परिधायाथस्वयंसीतांसंशिक्षयत् ॥ तद्दृष्ट्वाकैकेयींप्राहगुरुःक्रोधेनभर्त्सयन् ६७ जडेपापिणिदुर्वृत्तेरामएवत्वयावृतः ॥ वनवासायदुष्टेत्वंसीतायैकिंप्रदास्यसि ६८ इत्युक्त्वादिव्यवस्त्राणिसीतायैसगुरुर्ददौ ॥ राजादशरथोप्याहसुमंत्रंरथमानय ६९ रथमारुह्यगच्छंतुवनंवनचरप्रियाः ॥

१ पृष्टेतिपाठः । २ कृत्वामतिज्ञामितिपाठः । ३ समीक्ष्यदितिपाठः ।

रामः प्रदक्षिणंकृत्वापितरौरथमारुहत् ७० सीतयालक्ष्मणेनाथचोदयामाससारथिम् ॥ कौसल्यांचसुमित्रांचतातमाश्वास्यवैपुनः ७१ समाश्वास्यजनान्रामस्तमसाती
रमाययौ ॥ माघमासेसितेपक्षेपंचम्यांपरमेऽहनि ७२ प्राप्तेह्यष्टादशेवर्षेराघवायमहात्मने ॥ आसीद्वनप्रयाणंहिस्वपुर्यास्तमसातटम् ७३ इंद्राद्यानिर्जराश्चकुस्तदात
॥ १४ ॥ न्मार्गसत्क्रियाम् ॥ आसन्शुभाश्वशकुनारामस्यव्रजतोवनम् ७४ उषित्वैकांनिशांतत्रशृंगवेरपुरंययौ ॥ गुहेनमानितश्चापितत्ररात्रिंनिनायसः ७५ गुहानीतैर्वटक्षीरैर्बं १
बंधराघवोजटाम् ॥ प्रभातेसीतयाऽऽरुह्यनौकायांलक्ष्मणेनसः ७६ प्रेषयामाससरथंसुमंत्रंनगरींप्रति ॥ गुहस्तांवाहयामासनौकांस्वज्ञातिभिस्तदा ७७ गंगामध्यगता
गंगांप्रार्थयामासजानकी ॥ देविगंगेनमस्तेऽस्तुनिवृत्तावनवासतः ७८ रामेणसहिताऽहंत्वांलक्ष्मणेनचपूजये ॥ सुरामांसोपहारैश्चनानाबलिभिरादृता ७९ इत्युक्त्वापर
कूलंतुगत्वारामोगुहंतदा ॥ विसर्जयित्वातत्रैकांनिशांनीत्वाशनैःशनैः ८० भरद्वाजाश्रमंगत्वातस्थौतेनातिमानितः ॥ ततःप्रयागेयमुनांतीर्त्वांनत्वामहावनम् ८१ वा
ल्मीकेराश्रमंगत्वातस्थौतेनातिपूजितः ॥ चित्रकूटेलक्ष्मणेनपर्णशालांमनोरमाम् ८२ कृत्वामासिर्षद्गोहूतैर्बलिंदत्त्वारघूत्तमः ॥ तस्थौतस्यांसुखंभ्रात्रासीतयास्वगृहे
यथा ८३ शयनासनपाकाग्निदेवादीनांपृथक्पृथक् ॥ तत्रासन्विविधाःशालास्तरुवल्लिविराजिताः ८४ कंदैर्मूलैर्वनोद्भूतैर्मृगमांसफलादिभिः ॥ मुनीश्वराणामातिथ्यंच
कुर्वंस्तेस्वगृहेयथा ८५ एकदानिद्रितंरामंसीतांकेऽवनिरीक्ष्यच ॥ ऐंद्रःकाकस्तदागत्यनखैस्तुंडेनचास्पृशत् ८६ सीतांगुष्ठंस्तुदुरक्तंविददारामिषाशया ॥ निद्राभंगभयाद्ग
तुंःसीतयाननिवारितः ८७ सीतांगुष्ठंतुकाकेनभिन्नंदृष्ट्वारघूत्तमः ॥ अभिद्रवंतंरक्तास्यमीषिकास्त्रंमुमोचसः ८८ केनाप्यरक्षितस्यास्त्रभयाद्ब्रह्मांडगोलके ॥ स्वंशरणमा
गतस्यपुनर्नारदवाक्यतः ८९ ईषिकास्त्रेणकाकस्यबिभेदनयनंक्षणात् ॥ एवंनानाकौतुकानिकुर्वंस्तत्रस्थौसुखंप्रभुः ९० सुमंत्रोऽपिपुरींगत्वानृपंवृत्तंन्यवेदयत् ॥ सोऽपि
राजाराघवेतिजल्पन्स्वंजीवितंजहौ ९१ नृपंमृतंगुरुर्ज्ञात्वातैलद्रोण्यांनिधायतम् ॥ युधाजिन्नगराहूतैःकैकेय्यास्तनयावुभौ ९२ आनयामासभरतशत्रुघ्नौवेगतस्तदा ॥
तावुभावपिवेगेनस्वांपुरींसंविवेशतुः ९३ मात्रासंपादितंकृत्यंज्ञात्वाधिक्कृत्यमातरम् ॥ भरतःपितरंवह्निंददौसरयुसैकते ९४ वीराणांमातरस्ताश्चजग्मुर्नस्वामिनादि
वम् ॥ पितुरुत्तरकार्यादिकर्मकृत्वासविस्तरम् ९५ मंथरांताडयामासमातुरग्रेपुनःपुनः ॥ प्रार्थितोऽप्यभिषेकार्थंराज्यमंगीचकारन ९६ ततोमंत्रिजनैःसार्कमातृभिःपु
रवासिभिः ॥ परिवर्तयितुंरामंययौसभरतस्तदा ९७ गुहेनमानितश्चापिभरद्वाजाश्रमंययौ ॥ तपोबलेनभूस्वर्गंनिर्मायभरतंमुनिः ९८ ससैन्यंपूजयामासतंनत्वाभरतोऽपि
सः ॥ मुनिसंदर्शितपथाचित्रकूटेऽग्रजंययौ ९९ दृष्ट्वारामंतुशालायांसीतयाबंधुनास्थितम् ॥ नत्वातेनालिंगितश्चसर्ववृत्तंन्यवेदयत् १०० रामःश्रुत्वामृतंतातंगत्वामदा
किनींनदीम् ॥ स्नात्वातिलांजलिंदत्त्वाययौशालांनिजांगिरौ १०१ ततस्तंप्रार्थयामासभरतोगुरुणासह ॥ राज्यार्थंराघवश्चापिनेत्युवाचपुनःपुनः २ प्रायोपवेशनंतत्रद ॥ १४ ॥
र्भेषुभरतस्तदा ॥ चकारनिग्रहंतस्यज्ञात्वागुरुमचोदयत् ३ रामाज्ञयागुरुश्चापिभरतंबोधयत्तदा ॥ भूभारहरणार्थायविष्णुःसाक्षाद्रघूत्तमः ४ अत्रजातोऽस्तिदेवानांव
चनाद्रावणादिकान् ॥ हंतुंगच्छतिरामोऽयमात्वंनिग्रहमाचर ५ ततोज्ञात्वाहरिंरामंभरतोराममब्रवीत् ॥ राज्यार्थंपादुकेदेहितयोःसेवांकरोम्यहम् ६ जटावल्कलधारी

चवसामिनगराद्वहिः ॥ प्रतीक्षांतवराजेंद्रवर्षाणिचचतुर्दश ७ कृत्वाचतुर्दशेवर्षेपूर्णेगुप्तेरवौत्वहम् ॥ प्रवेक्ष्याम्यनलंरामसत्यमेतद्वचोमम ८ ततस्यवचनंश्रुत्वातथेत्युक्त्वा
रघूत्तमः ॥ राज्यार्थंस्वीयपदयोःपादुकेरत्नभूषिते ९ ददौरामस्तदातस्मैततस्तंसविसर्जयत् ॥ गृहीत्वापादुकेदिव्येभरतोरत्नभूषिते १० मस्तकोपरितेबद्धाकृतक
त्यममन्यत ॥ ततोनत्वारघुश्रेष्ठंपरिक्रम्यपुनःपुनः ११ सैन्येनमातृभिःशीघ्रंराममामंत्र्यसोययौ ॥ संप्रार्थयत्कैकयीसारामचंद्रंपुनःपुनः १२ मयाऽपराधितंरामत
त्क्षंतव्यंरघूत्तम ॥ तामाहरामचंद्रोऽपिनत्वयामेऽपराधितम् १३ मच्छंदान्मंथरावाक्यात्त्वंवाण्यामोहितातदा ॥ सुखंगच्छांवस्वपुरींनक्रोधोऽस्तिममत्वयि १४ इत्यु
क्तारामचंद्रेणभरतेनान्ववर्तत ॥ भरतःपूर्वमार्गेणययौस्वनगरींमुदा १५ सर्वान्स्थाप्यनगर्यांतुनंदिग्रामममकल्पयत् ॥ तस्थौसभरतस्तत्रस्थाप्यसिंहासनोपरि १६ रा
मस्यपादुकेदिव्येफलमूलाशनःस्वयम् ॥ राजकार्याणिसर्वाणियावंतिपृथिवीपतेः १७ तानिपादुकयोःसम्यङ्निवेदयतिराघवः ॥ गणयन्दिवसान्येवरामागमन
कांक्षया १८ स्थितोरामार्पितमनाःसाक्षाद्ब्रह्ममुनिर्यथा ॥ रामोऽपिचित्रकूटाद्रौवसन्मुनिभिरादृतः १९ चकारसीतयाक्रीडांविपिनेरम्यपर्वते ॥ मनःशिलासुतिलकं
सीतायाभालकेऽकरोत् २० गंडयोश्चित्रवल्लीःसंचकारनिजहस्ततः ॥ वृक्षारुणदलैश्चित्रैःकोमलैःकुसुमादिभिः २१ एवंक्रीडन्सुखंरामस्तस्थौपत्न्याऽनुजेनच ॥ ना
गरास्तंसदाजग्मूरामदर्शनलालसाः २२ दृष्ट्वातज्जनसंबाधंरामस्तत्याजतंगिरिम् ॥ अन्वगात्सीतयाभ्रात्राह्यत्रेराश्रममुत्तमम् २३ नत्वाऽत्रिंमानितस्तेनतस्थौतत्रदिन
त्रयम् ॥ गृहस्थामनुसूयांतांसीताऽत्रेर्वचनात्तदा २४ नत्वातयालिंगितासातदंकेसमुपाविशत् ॥ अनुसूयातदासीतांपूजयामाससादरम् २५ दिव्येददौकुंडलेद्वेनि
र्मितेविश्वकर्मणा ॥ दुकूलेद्वेददौतस्यैनिर्मलेभक्तिसंयुता २६ अंगरागंचसीतायैददावत्रेस्तुसाप्रिया ॥ नत्यक्ष्यतेंगशोभात्वांकदापिजनकात्मजे २७ पातिव्रत्यं
पुरस्कृत्यराममन्वेहिजानकि ॥ कुशलीराघवोयातुत्वयाभ्रात्रापुनर्गृहम् २८ भोजयित्वायथान्यायंरामंसीतासमन्वितम् ॥ अत्रिर्विसर्जयामासरामोनत्वाययौवनम्
२९ एवंवर्षमतिक्रांतंरामस्यगिरिवासिनः ॥ यथासुखंलक्ष्मणेनजानक्यासहितस्यच ३० एवंगिरींद्रजेऽयोध्यापुर्यांरामेणयत्कृतम् ॥ चरित्रंतन्मयाकिंचित्त्वदग्रेवि
निवेदितम् ३१ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वाल्मीकीये सारकांडे अयोध्याचरित्रे दंडकवनप्रवेशनं नाम षष्ठःसर्गः ॥ ६ ॥ ॥
॥ श्रीशिवउवाच ॥ अथरामःसीतयातुलक्ष्मणेनसमन्वितः ॥ ययौसदंडकारण्यंसज्जंकृत्वामहद्धनुः १ अग्रेययौस्वयंरामस्तत्पृष्ठेजानकीययौ ॥ तस्याःपृष्ठेससौमित्रि
र्ययौधृतशरासनः २ वनेदृष्ट्वाऽथकासारंस्नात्वापीत्वाजलंसुखम् ॥ भुक्त्वाफलानिपक्वानितस्थुस्तत्रक्षणंत्रयः ३ एतस्मिन्नंतरेतत्रविराधंनामराक्षसम् ॥ तेतंददृशुरायां
तंमहासत्त्वंभयानकम् ४ करालदंष्ट्रवदनंभीषयंतंस्वगर्जितैः ॥ वामांसन्यस्तशूलाग्रग्रथितानेकमानुषम् ५ भक्षयंतंगजव्याघ्रमहिषंवनगोचरम् ॥ ज्यारोपितंधनुर्धृत्वा
रामोलक्ष्मणमब्रवीत् ६ रक्षत्वंजानकीमत्रसंहनिष्यामिराक्षसम् ॥ सतुदृष्ट्वारमानाथंलक्ष्मणंजानकींतदा ७ कोयुवामितितौप्राहततोरामस्तमब्रवीत् ॥ नामकर्मनिजं
सर्वंकैकेय्याऽपिचयत्कृतम् ८ तद्रामवचनंश्रुत्वाविहस्यराक्षसोऽब्रवीत् ॥ मांनजानासिरामत्वंविराधंलोकविश्रुतम् ९ मद्भयान्मुनयःसर्वेत्यक्त्वावनमितोगताः ॥ यदि

जीवितुमिच्छास्तित्यक्त्वासीतांनिरायुधौ १० पलायेतांनचेच्छीघ्रंभक्षयामियुवामहम् ॥ इत्युक्त्वाराक्षसःसीतामादातुमभिदुद्रुवे ११ रामश्चिच्छेदतद्वाहूशरेणप्रहस
न्निव ॥ ततःक्रोधपरीतात्माव्यादायाविकटंमुखम् १२ राममभ्यद्रवद्रामश्चिच्छेदपरिधावतः ॥ पदद्वयंतदासर्पइवास्येनययौपुनः १३ ततोर्द्धचंद्राकारेणानेदतोराघ
वेणसः ॥ ततःसीतासमालिंग्यप्रशशंसरघूत्तमम् १४ देवदुंदुभयोनेदुर्दिविदेवगणेरिताः ॥ ततोविराधकायात्तुपुरुषश्चविनिर्गतः १५ नत्वारामंनिजंवृत्तंकथयामाससाद
रम् ॥ दुर्वाससाहंशप्तस्तुपुराविद्याधरःशुभः १६ इदानींमोचितःशापात्त्वयाकालांतराद्विभो ॥ इत्युक्त्वाराघवंस्तुत्वाविमानेनययौदिवम् १७ विराधेस्वर्गतेरामोलक्ष्मणे
नचसीतया ॥ जगामशरभंगस्यवनंसर्वसुखावहम् १८ शरभंगंततोनत्वातेनसंमानितोबहु ॥ तस्थौतत्रनिशामेकांशरभंगोमुनीश्वरः १९ तस्मैसमर्प्यस्वंपुण्यमारुरोह
चितिंतदा ॥ स्तुत्वातंसविमानेनवैकुंठंपरमंययौ २० ततःशनैःसुतीक्ष्णस्यययावाश्रममुत्तमम् ॥ नत्वातंपूजितस्तेनसुखंतस्थौरघूद्वहः २१ एतस्मिन्नंतरेतत्रनानाश्रम
निवासिनः ॥ मुनयोराघवंद्रष्टुंसमाजग्मुःसहस्रशः २२ सर्वेतेराघवंनत्वास्तुत्वानिन्युर्निजंनिजम् ॥ आश्रमंसीतयाभ्रात्राचक्रुःपूजांसविस्तराम् २३ एकरात्रंत्रिरात्रंवापंच
सप्तदिनानिवा ॥ पक्षमात्रंद्विमासंवासार्द्धमासमथापिवा २४ त्रिमासान्पंचमासंवापष्ठाष्टैकादशाऽथवा ॥ साग्रंसंवत्सरंवापिस्वाश्रमेषुरघूत्तमम् २५ संस्थाप्यचक्रुराति
थ्यमधिकंचोत्तरोत्तरम् ॥ पत्न्याऽनुजेनश्रीराममेवंपूज्यविसर्जयन् २६ भ्रमतेवंहिरामेणनववर्षाणिदंडके ॥ आश्रमेषुमुनीनांचव्यतिक्रांतानि वैसुखम् २७ बहवोनिहता
स्तत्रराक्षसाभ्रमतातदा ॥ राघवेणसहभ्रात्राक्रीडताऽवनिकन्यया २८ नानाश्रमारामपुष्पवनोपवनभूमिषु ॥ नदीजलतटाकाद्रिशिखरादिस्थलेष्वपि २९ जंब्वाम्रं
भाद्राक्षादिनानावृक्षतलेषुहि ॥ चकारसीतयाक्रीडांरामोदेव्यायथाशिवः ३० अथरामोययौकुंभसंभवस्यानुजाश्रमम् ॥ सुमतिःपूजयामासराघवंसीतयान्वितम् ३१ त
तःसीतायुतोरामःशनैर्भ्रात्रामुदान्वितः ॥ अगस्त्तेराश्रमंप्रापनानावृक्षविराजितम् ३२ प्रत्युद्गम्यमुनिश्चापिमुनिभिर्वहुभिर्वृतः ॥ राघवंतंसमालिंग्यस्वाश्रमंतेनसोय
यौ ३३ अथतंपूजयामासराघवंकुंभसंभवः ॥ रामोऽपिमानितस्तेनतस्थौतत्रकियद्दिनम् ३४ ततःस्तुत्वारमानाथमगस्त्योमुनिसत्तमः ॥ ददौचापंमहेंद्रेणरामार्थंस्थापि
तंपुरा ३५ अक्षय्यौबाणतूणीरौखड्गंरत्नविभूषितम् ॥ ततोरामोमुनेर्वाक्याद्गौतम्याउत्तरेतटे ३६ ययौपंचवटींरम्यांमार्गेदृष्ट्वाऽथपक्षिणम् ॥ जटायुषंनगाकार
मरुणात्मजमुत्तमम् ३७ सखायंस्वपितुश्चापिसंभाष्याथविशेषतम् ॥ तत्रकृत्वामहाशालांयथापूर्वंकृतागिरौ ३८ मृगमांसैर्बलिंदत्वातस्थौरामोयथासुखम् ॥ सीतांसं
रक्षयामासजटायुःपक्षिराट्स्वयम् ३९ राघवस्यपंचवट्यांसीतयाक्रीडतःसुखम् ॥ सार्द्धत्रीणिवत्सराणिह्यतिक्रांतानिपार्वति ४० वनेशूर्पणखापुत्रंतपंतंसांबनामकम् ॥
ब्रह्मादादौदिव्यखड्गंतंसांबोनददर्शसः ४१ तद्गृत्वाऽक्ष्मणःखड्गंवृक्षान्वल्लीर्बभंजसः ॥ वृक्षगुल्मेहतःसांबस्ततोराघवमब्रवीत् ४२ प्रायश्चित्तंब्रह्महणंमांवदत्वंरघूत्तम ॥
रामोऽप्याहहतःसांबोराक्षसोनमुनिर्हतः ४३ तच्छुत्वालक्ष्मणस्तुष्टःसांबमाताऽपितच्छुतम् ॥ तत्स्मरंतीपुत्रदुःखंराक्षसीकामरूपिणी ४४ विचचारशूर्पणखानाम्नीसा

१ स्वाश्रमांस्त्विवतिपाठः । २ बहुभिरितिपाठः ।

सर्वघातिनी ॥ एकदापंचवट्यांसारामंदृष्ट्वाऽथराक्षसी ४५ पुत्रदुःखसमाक्रांताधृत्वारूपंमनोहरम् ॥ कापट्यबुद्ध्याश्रीरामंसानुजंहंतुमुद्यता ४६ उवाचमधुरंवाक्यंवं
स्त्रालंकारमंडिता ॥ कौयुवांकात्वियंरम्याकिमर्थमागतावनम् ४७ कुतःसमागतावत्रकाऽधुनागच्छतःपुरः ॥ ततस्यावचनंश्रुत्वारामःसर्वंन्यवेदयत ४८ ततःसाराघवं
प्राहभवभर्तामममभो ॥ सोप्याहदयितामेऽस्तिबहिस्तिष्ठतिलक्ष्मणः ४९ प्रार्थयामासमौमित्रिंसातंसोप्युत्तरंददौ ॥ अहंदासोऽस्मिरामस्यत्वंतुदासीभविष्यसि ५०
ततःक्रोधेनसासीतांधर्तुंवेगेनदुद्रुवे ॥ तदातांराघवःप्राहममायंशरउत्तमः ५१ चिन्हार्थंलक्ष्मणायत्वंनीत्वादर्शयवेगतः ॥ मद्बाणदर्शनात्कार्यंसिद्धिंनेष्यतिलक्ष्मणः ५२
इत्युक्काराघवोबाणंददौतस्यैक्षुरोपमम् ॥ सत्यंमत्वारामवाक्यंसाययौलक्ष्मणंपुनः ५३ लक्ष्मणायरामबाणंदर्शयामासराक्षसी ॥ सदृष्ट्वाद्भुतंबंधोस्तंसंधायशरासने ॥
५४ मुमोचबाणंवेगेनरामनाम्नांकितंशुभम् ॥ सशरोराक्षसींगत्वाघ्राणकर्णौष्ठहृद्ध्वान् ५५ संछित्वारामतूणीरंविवेशक्षणमात्रतः ॥ घ्राणकर्णौष्ठहृज्जातरहितासाऽपिराक्ष
सी ५६ हाहतास्मीतिजल्पंतीययौबंधून्खरादिकान् ॥ दृष्ट्वास्वसांताद्दशींतित्रिशिरःखरदूषणाः ५७ तन्मुखात्सकलंवृत्तंश्रुत्वातेक्रोधसंयुताः ॥ चतुर्दशमहाघोरान्राक्ष
सान्प्रेषयंस्तदा ५८ तान्रामःक्षणमात्रेणचतुर्दशशरैर्यमम् ॥ संप्रदर्श्यनिजंलोकंप्रेषयामासलीलया ५९ तान्राक्षसान्हतान्श्रुत्वाखराद्यास्तेत्रयःक्रुधा ॥ युद्धायनिर्य
युःसैन्यैःसहस्रैश्चचतुर्दश ६० रामोऽपिबंधुंसीतांचगुहायांस्थाप्यवेगतः ॥ चकारराक्षसैर्युद्धंशस्त्रैरस्त्रैर्भयावहम् ६१ चतुर्दशसहस्राणिस्वीयरूपाणिराघवः ॥ कृत्वाते
षांचपुरतःशरैस्तान्मर्दयत्क्षणात ६२ हत्वाखरंदूषणंचतथात्रिशिरसंशरैः ॥ चतुर्दशसहस्रांस्तान्प्रेषयामासस्वंपदम् ६३ मुहूर्तेनैतुरामेणसहस्राणिचतुर्दश ॥ मितासे
नाखराद्यैश्चनिहतागौतमीतटे ६४ खराद्याःकंटकायत्रस्थितास्तत्रत्रिकंटकम् ॥ क्षेत्रंख्यातंत्र्यंबकाख्यंतदेवप्रोच्यतेभुवि ६५ जनस्थानंसुरासुराणांददौवस्तुंरघूद्वहः ॥
अथसीतासमालिंग्यराघवंप्रशशंससा ६६ अथतांजानकींप्राहरायोरहसिसादरम् ॥ सीतित्वंत्रिविधाभूत्वारजोरूपावसानले ६७ वामांगेमेसत्वरूपावसछायातमोमयी ॥
पंचवट्यांदशास्यस्यमोहनार्थंवसात्रवै ६८ तद्रामवचनंश्रुत्वातथासीताचकारसा ॥ ततःशूर्पणखालंकांगत्वारावणमब्रवीत ६९ धिक्त्वांराक्षसराजानंवृत्तंचारैर्नवेत्सि
यः ॥ चतुर्दशसहस्रासासेनात्वद्बंधुभिःसह ७० मानुषेणैवरामेणजनस्थानेनिपातिता ॥ ततस्यावचनंश्रुत्वातांदृष्ट्वाताद्दशींतदा ७१ सिंहासनाच्चचालाथपुनःपप्रच्छतां
स्वसाम् ॥ वदकिंकारणंयुद्धेप्राहसाराक्षसेश्वरम् ७२ स्त्रीरत्नांजानकींदृष्ट्वामयाचित्तेविचिंतितम् ॥ रावणार्थंविनेष्यामिधर्तुंतांतत्पुरोगता ७३ तावद्बाणेननीताऽहंदशा
६ मेतांतुरावण ॥ सौमित्रिणापंचवट्यामाज्ञयाराघवस्यच ७४ सांबोऽपिमेहतःपुत्रस्तप्यमानोनिरर्थकम् ॥ मत्तोषार्थंकृतंयुद्धंबंधुभिस्तेनिपातिताः ७५ यद्यस्तिपौरुषं
किंचित्तर्हिसीतांसमानय ॥ नोचेदधोमुखस्तिष्ठयथास्त्रीगतभर्तृका ७६ ततस्यावचनंश्रुत्वासांत्वयामासतांस्वसाम् ॥ तौरामलक्ष्मणौहत्वातवशोकाश्रुमार्जनम् ७७
करोम्यहंलोहितेनतयोःखेदंभजस्वमा ॥ एवंनानाविधैर्वाक्यैःसांत्वयित्वास्वसांमुहुः ७८ स्वहितस्योपदेष्टारंमातुलंतपसिस्थितम् ॥ ययौरथेनमारीचंतस्मैवृत्तंन्यवेदयत

१ सर्वतःक्रुधेतिपाठः । २ क्रुधावित्यर्थः । ३ योगतइतिपाठः । ४ मुहूर्तैकेनरामेणेतिपाठः ।

७९ सोथतंभीषयामासभागिनेयंमुहुर्मुहुः ॥ विश्वामित्राध्वरेत्यक्तमात्मानंतंन्यवेदयत् ८० रामाख्ययारथंरत्नंरजतरुक्मभूषितम् ॥ श्रुत्वाऽहंरादियात्किंचिद्रामंमत्वावि
भेम्यहम् ८१ केनतेशिक्षिताबुद्धिरियंलंकाविघातिनी ॥ आप्तरूपोस्तिकःशत्रुर्येनेयंशिक्षितामतिः ८२ कथांनकुरुरामस्यतंदृष्ट्वात्वंमरिष्यसि ॥ ततःक्रोधेनतंप्राहयदि
नायासिराघवम् ८३ मयातर्हिवधिष्यामित्वामतःकुरुमद्वचः ॥ भूत्वात्वंमृगरूपश्चरामस्त्वामनुयास्यति ८४ त्वंशब्दंकुरुरामस्यलक्ष्मणस्तेनयास्यति ॥ ततस्त्वांजान
कींविगाह्लंकांस्वामानयाम्यहम् ८५ लंकायास्तवदास्यामिस्वीयराज्यार्द्धमादरात् ॥ इतितस्याग्रहंदृष्ट्वामारीचोहृद्यचिंतयत् ८६ रामहस्तान्मृतिःश्रेष्ठामाऽस्तुरावणहस्त
तः ॥ इतिनिश्चित्यमारीचस्तथेत्युक्त्वाययौतदा ८७ रावणेनरथेस्थित्वागत्वापंचवटींप्रति ॥ भूत्वाहेममयश्चित्रोमोहयामासजानकीम् ८८ साछायातामसीदृष्ट्वामृगंरा
घवमब्रवीत् ॥ क्रीडार्थंमांमृगंचेमंधृत्वादेहिरघूत्तम ८९ मृगश्चेद्बाणभिन्नांगःकरोमिकंचुकींत्वचः ॥ तत्तस्यावचनंश्रुत्वाज्ञात्वासर्वंरघूत्तमः ९० सीतायारक्षणेबंधुंसंस्था
प्याशुमृगंययौ ॥ ततःपलायनंचक्रेमृगोरामंविकर्षयन् ९१ रामबाणेनभिन्नांगःशब्दंदीर्घंचकारसः ॥ हासौमित्रेसमागच्छहाहतोस्म्यत्रकानने ९२ इत्युक्त्वारामवद्वा
चाममारुधिरंवमन् ॥ तंशब्दंजानकीश्रुत्वाचोदयामासलक्ष्मणम् ९३ सोप्याहरामवचनंनेदंसीतेभयंत्यज ॥ ततःसातंपुनःप्राहजानामितवचेष्टितम् ९४ भरतस्यो
पदेशेनमृतिंरामस्यवांछसि ॥ अथवामेऽभिलाषोस्तितर्हिप्राणांस्त्यजाम्यहम् ९५ तत्क्रूरवचनंतस्याःश्रुत्वाज्ञात्वामहद्भयम् ॥ जानकींप्राहसौमित्रिर्मातःशृणुवचोमम
९६ राघवाज्ञांपुरस्कृत्यरक्षतस्त्वांममत्वया ॥ ताडितंवाक्शरेणाद्यमोक्ष्यस्यस्याचिरात्फलम् ९७ तथापिशृणुमद्वाक्यंयन्मयात्रोच्यतेहितम् ॥ मयैतांधनुषारेखां
कृतांत्वत्परितोऽधुना ९८ त्वद्रक्षणार्थंदुष्टानांदुर्विलंघ्यांमहत्तमाम् ॥ मात्वमुल्लंघयस्वेमांप्राणैःकंठगतैरपि ९९ इत्युक्त्वाधनुषःकोट्याकृत्वारेखांसमंततः ॥ बाह्य
देशेपंचवट्याःसौमित्रिःपरिघोपमाम् १०० नत्वासीतांततस्तूर्णींययौरामंत्वरान्वितः ॥ एतस्मिन्नंतरेतत्ररावणोभिक्षुरूपधृक् १ गत्वापंचवटीद्वारंरेखायाश्चबहिःस्थि
तः ॥ नारायणेतिवैचोक्त्वातूष्णींतस्थौसरावणः २ तावच्छायामयीसीताभिक्षांतस्मैसमर्पितुम् ॥ ययौद्वारंदीर्घहस्तागृह्णीष्वेत्यब्रवीच्चतम् ३ तदाभिक्षुःपुनःप्राहसी
तांपंकजलोचनाम् ॥ नांगीकरोम्यंतरेणभिक्षामेतांत्वयार्पिताम् ४ गार्हस्थ्यंचेद्राघवस्यरक्षितुंत्वंसमिच्छसि ॥ तर्हिरेखांसमुल्लंघ्यमांभिक्षांदातुमर्हसि ५ तद्भिक्षुवच
नंश्रुत्वाऽधर्मोऽभून्मेतिशंकिता ॥ रेखाबहिःसव्यपादंदत्वादीर्घलसत्करा ६ गृह्णीष्वेमांवरांभिक्षामितितंप्राहजानकी ॥ ततोदशास्यस्तांधृत्वाभिक्षुरूपंविसृज्यच ७
खरवाहेरथेसीतांसंस्थाप्याथन्यवर्तत ॥ यावद्गच्छतिवेगेनतावद्दृष्टोजटायुषा ८ चकारतुमुलंयुद्धंरावणेनसपक्षिराट् ॥ निजपक्षमुखेनाथचूर्णीकृत्यरथोत्तमम् ९ ख
रानष्टौविनिष्पिष्यबभंजतद्धनुर्महत् ॥ मुकुटानदशसंच्छिद्यकृत्वादेहंतुजर्जरम् ११० मूर्च्छितंरावणंकृत्वातांसीतांसंन्यवर्तयत् ॥ स्वस्थीभूतोदशास्योऽपिताडयामा
सतंपदा ११ क्रोधेनमहताविष्टःपक्षिणाजर्जरीकृतः ॥ ततोजटायुःपतितोवमन्रक्तंमुखेनसः १२ ततोविहायसासीतांनिनायरावणःपुनः ॥ रामरामेतिजल्पंतींसीताम्

१ रामनाम्नअक्षरैकदेशमपि । २ मयासहेत्यर्थः । ३ मृगश्चायमितिपाठः । ४ श्रुत्वातस्याःइतिपाठः । ५ ससीतःसन्यवर्ततेतिपाठः ।

न्यस्तलोचना १३ उत्तरीयेबबंधाऽथपथिस्वाभरणानिसा ॥ दृष्ट्वाऽथःपर्वतेप्रोच्चैःसंस्थितान्पंचवानरान् १४ प्राक्षिपत्कपिमध्येऽथसूचनार्थंरघूत्तमम् ॥ ततोदशास्य स्तांनीत्वाह्यशोकेसंन्यवेशयत् १५ प्रार्थयामासतांसीतांनोत्तरंसाददौतदा ॥ तस्याःसंरक्षणार्थायराक्षसीश्चसहस्रशः १६ आज्ञापयद्दशास्यःसस्वयंगेहंविवेशह ॥ तदें द्रोब्रह्मवाक्येनपायसंवर्षतुष्टिदम् १७ ददौरहसिसीतायैतेनतुष्टाबभूवसा ॥ समर्प्यपायसंकिंचिद्रामायलक्ष्मणायच १८ सुरानतिथयेदत्वादत्वाधेनुंचखेचरान् ॥ दत्वाऽथ त्रिजटांकिंचिद्भक्षयामासजानकी १९ संमंत्र्यरावणेनाऽपिराक्षसाश्चैवषोडश ॥ प्रेषितारामघातार्थंतेकबंधेनभक्षिताः १२० यत्रयत्रपंचवट्यांरामत्राणभयान्मृगः ॥ चचार गौतमीतीरेसंस्थानंतत्रतत्रहि २१ स्थानसंज्ञान्यनेकानिजातानिचपुराणिहि ॥ मृगस्यपतितंयत्रनूपुरंपरिधावतः २२ नूपुराख्योमहाग्रामःप्रोच्यतेगौतमीतटे ॥ रा मबाणप्रहारेणचपलाक्षोऽपतद्भुवि २३ मृगोयत्रमहांस्तत्रचापल्यग्राममीर्यते ॥ गोदातटेग्रावभूम्यांरामबाणहतोमृगः २४ पतितोयत्रतच्चिन्हंदृश्यतेऽद्यापिमानवैः ॥ सौमित्रिचापजारेखापंचवट्याःसमन्ततः २५ अद्यापिदृश्यतेस्पष्टानदीरूपाभयावहा ॥ पाषाणभूम्यांतत्रैवरावणस्यपदंमहत् २६ अद्यापिदृश्यतेमीमंगर्तरूपंनरोत्तमैः ॥ खराद्यैर्युद्धसमयेपंचवट्यांविदेहजा २७ गुहायांगोपिताभर्त्रासाऽद्यापितत्रदृश्यते ॥ तथारामोलक्ष्मणोऽपिपंचवट्यांसदैवहि २८ दृश्यतेऽद्यापिमोदेविसज्ज्ञैर्ज्ञानदृष्टि भिः ॥ अज्ञानदृष्टिभिस्तेतुदृश्यंतेग्रावरूपिणः २९ रामतीर्थंरामकृतंसीतालक्ष्मणसंस्कृते ॥ तीर्थेतत्रतुगौतम्यांदृश्यतेऽद्यापिमानवैः १३० रामेणसीतयायत्रशय्यायां पर्वतोपरि ॥ कृतंपूर्वंतुशयनंरामशय्यागिरिःस्मृतः ३१ शय्यारूपाणिदृश्यंतेऽद्यापितत्रतृणानिहि ॥ रामोऽपिलक्ष्मणंदृष्ट्वाश्रुत्वासीतावचोऽशुभम् ३२ निवेदितंलक्ष्म णेनक्रोधाश्रुस्मयचेतसा ॥ निमित्तान्यतिघोराणिदृष्ट्वाचैवसमंततः ३३ ययौपंचवटींव्यग्रस्तत्रसीतांददर्शन ॥ ततोमानुषभावंतुदर्शयनसकलाञ्जनान् ३४ विचिन्वन्सर्व तःसीतांगृध्रराजंददर्शसः ॥ ततःसपक्षिवचसारावणेनहृतांप्रियाम् ३५ ज्ञात्वातंयोजयामासवन्हिनाजीवितक्षये ॥ तत्पुष्टचर्यवन्यमांसंक्षिप्त्वास्नात्वारघूत्तमः ३६ ययौद क्षिणमार्गेणविचिन्वन्मूढवत्प्रभुः ॥ पूर्ववदग्निहोत्रंसचकारकुशभार्यया ३७ एतस्मिन्नंतरेदेवित्वयाप्रोक्तस्त्वहंपुरा ॥ त्वयायस्यजपोनित्यंक्रियतेराघवस्यहि ३८ सोऽयं स्त्रीविरहात्पश्यमूढवद्भ्रमतेवने ॥ तवेतिवचनंश्रुत्वातदात्वामब्रुवंत्वहम् ३९ देविसाक्षान्महाविष्णुस्त्वयंरामोमहीतले ॥ शिक्षार्थंसकलाँल्लोकान्मूढवद्भ्रमतेवने १४० नारीसंगोनरैस्त्याज्यःसर्वदाऽत्रेतिशिक्षयन् ॥ नारीविषयजंदुःखमीदृशंभ्रमकारकम् ४१ दर्शयन्सकलाँल्लोकानितिसोऽत्राऽटतेवने ॥ इतिमद्वचनंश्रुत्वातत्परीक्षार्थ मुद्यता ४२ त्वंगतासिसमीपंश्रीराघवस्यतदावने ॥ सीतारूपेणतंरामंत्वयाप्रोक्तंशुभंवचः ४३ रामराजीवपत्राक्षमामग्रेपश्यजानकीम् ॥ क्रीडस्वाऽत्रमयासार्धमेहिशी घ्रंसुखीभव ४४ त्वदुक्तंराघवःश्रुत्वाविहस्यत्वांवचोऽब्रवीत् ॥ जानाम्यहंत्वंकासीतिसीतात्वंनासिवेद्म्यहम् ४५ त्वंकिंसीतास्वरूपेणमोहस्यत्रमांवने ॥ एवंपुनःपुनःप्रो क्तायदात्वंराघवेणहि ४६ तदात्वयातत्स्वरूपंज्ञातंसत्यंमयीरितम् ॥ ततोनत्वारामचंद्रंप्रार्थयित्वापुनःपुनः ४७ आगताऽसिपुनर्मांत्वंकैलासशिखरेऽमले ॥

१ पिंडार्थमित्यर्थः ।

19

त्वंकात्वंकिमितिप्रोक्ताराघवेणपुनःपुनः १४८ यात्वंसादंडकेजातात्वंकानाम्नांबिकावने ॥ त्वंलज्जिताऽसिरामेणयत्रतत्रतवस्थले १४९ त्वंलज्जापुरनाम्नासीन्नगरंदं
डकेवने ॥ ततस्तौरामसौमित्रीजग्मतुर्दक्षिणांदिशम् १५० बहवोनिहतामार्गेराक्षसाघोररूपिणः ॥ एतस्मिन्नंतरेऽरण्येकबंधेनधृतौतदा १५१ श्रीरामलक्ष्मणौ
मार्गेयोजनायतबाहुना ॥ दृष्ट्वातंशिरसाहीनंबाहूचिच्छेदतुस्तदा १५२ ततःसदिव्यरूपोऽभून्नत्वारामंवचोऽब्रवीत् ॥ पुरागंधर्वराजोऽहंब्रह्मणोवरदानतः १५३
केनाप्यवध्यस्त्वहसमष्टावक्रंमुनीश्वरम् ॥ रक्षोभवेतिशप्तोहंमुनिनाप्राहमांपुनः १५४ त्रेतायुगेयदारामलक्ष्मणौयोजनायतौ ॥ छेत्स्यतस्तेमहाबाहूतदाशापात्प्रमो
क्ष्यसे १५५ ततोराक्षसदेहोऽहमिंद्रमभ्यद्रवंरुषा ॥ सोऽपिवज्रेणमांरामशिरोदेशेप्रताडयत् १५६ तदाकुक्षौशिरःपादयुगुलंचगतंक्षणात् ॥ ब्रह्मदत्तवरान्मृत्युर्ना
भून्मेवज्रताडनात् १५७ मुखाभावेकथंजीवेदयमित्यमराधिपः ॥ तदामांप्राहकृपयाजठरेतेमुखंभवेत् १५८ बाहूतेयोजनायामावचशीघ्रंभविष्यतः ॥ तदारभ्या
ऽत्रबाहुभ्यांलब्धंतद्भक्षयाम्यहम् १५९ तिष्ठन्त्यग्रेमतंगादिमुनीनांपरिचारिकाः ॥ शबरीदर्शनार्थंत्वंतत्रयाहिरघूत्तम १६० कथयिष्यतिसासीताशुद्धिंतेरघुनंदन ॥
इत्युक्त्वाराघवंनत्वास्तुत्वास्वर्गंययौमुदा १६१ ततोरामोलक्ष्मणेनशबरीसंनिधिंययौ ॥ सापिसंपूज्यश्रीरामंविशेषैर्वनसंभवैः १६२ चितामारोढुमुद्युक्ताराघवं
प्राहहर्षिता ॥ ऋष्यमूकगिरावग्रेसुग्रीवोमंत्रिभिःसह १६३ वर्ततेतस्यसख्येनसीताशुद्धिंलभिष्यसि ॥ गच्छरामइतस्त्वग्रेपंपानामसरोवरम् १६४ तत्तटाकेवृक्षाणां
फलानिविविधानिच ॥ भक्षस्वत्वंजलंपीत्वायाहिसुग्रीवसंनिधिम् ६५ इत्युक्त्वाशबरीरामंनत्वावह्निंविवेशसा ॥ रामसंदर्शनान्मुक्तिंप्राप्तावैकुंठमाययौ ६६ ततोरामः
शनैर्भ्रात्राययौपंपासरोवरम् ॥ फलानिभक्षयामासपीत्वातज्जलमुत्तमम् ६७ ततःशनैर्ययौमार्गेऋष्यमूकाचलंप्रति ॥ पश्यन्वनानिसर्वत्रचिन्तयामासजानकीम् ६८
एवंगिरींद्रजेप्रोक्तमारण्यंचरितंतव ॥ श्रीरामस्यससीतस्यलक्ष्मणेनयुतस्यच १६९ इतिशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेसारकांडेअरण्यचरित्रेखरादिव
धोनामसप्तमःसर्गः ॥ ७ ॥ श्रीशिवउवाच ॥ अथरामोलक्ष्मणेनऋष्यमूकाचलंप्रति ॥ ययौधृतधनुर्बाणोनेत्रैःसर्वत्रचालयन् १ ऋष्यमूकगिरेःपार्श्वेगच्छंतौरामलक्ष्म
णौ ॥ सुग्रीवेणाथतौदृष्टौऋष्यमूकस्थितेनहि २ सुग्रीवस्तौतदादृष्ट्वाचतुर्भिर्मंत्रिभिर्युतः ॥ समन्त्र्यमारुतिंप्राहवालिनाप्रेषितावुभौ ३ मांहंतुंधृतकोदंडौसतूणीरौनराकृ
ती ॥ इतोऽस्माभिःप्रगंतव्यंमंत्रंशृणुमयोच्यते ४ गच्छजानीहिभद्रंतेवटुर्भूत्वाद्विजाकृतिः १ ताभ्यांसंभाषणंकृत्वाजानीहिहृदयंतयोः ५ यदितौदुष्टहृदयौसंज्ञांकुरु
कराग्रतः ॥ साधुत्वेस्मितवक्रोऽभूरेवंजानीहिनिश्चयम् ६ तथेतिवटुरूपेणगत्वानत्वारघूत्तमम् ॥ कौयुवांपुरुषव्याघ्रावितिपप्रच्छमारुतिः ७ ततस्तंलक्ष्मणःप्राहपूर्वं
वृत्तंसविस्तरम् ॥ शबरीवचनाद्रामःसख्यंकर्तुंसमागतः ८ सुग्रीवेणाऽथतच्छ्रुत्वास्वरूपंमारुतिस्तदा ॥ चकारनैजंप्रगटंस्वीयंवृत्तंन्यवेदयत् ९ मत्स्कंधमधिरुह्याद्यपर्वतं ॥ १७ ॥
गंतुमर्हथः ॥ तथेतिमारुतेःस्कंधेसंस्थितौतौबभूवतुः १० उत्पपातगिरेर्मूर्ध्निक्षणादेवमहाकपिः ॥ वृक्षच्छायांसमाश्रित्यतौस्थितौरामलक्ष्मणौ ११ सुग्रीवंमारुतिर्गत्वा

१ मुखवक्रमितिवापाठः ।

रामवृत्तंन्यवेदयत् ॥ ततःप्रज्वाल्यवन्हिंससुग्रीवोराघवेणहि १२ चकारसख्यंवेगेनसमालिंग्यपरस्परम् ॥ वृक्षशाखांस्स्वयंछित्वाविष्टरार्थंददौकपिः १३ हर्षेणमहताविष्टाःसर्वएवावतस्थिरे ॥ लक्ष्मणस्त्वब्रवीत्सर्वंसुग्रीवंवृत्तमात्मनः १४ तच्छ्रुत्वासकलंवृत्तंसुग्रीवःस्वंन्यवेदयत् ॥ सखेशृणुष्वमेवृत्तंवालिनायत्कृतंपुरा १५ मयपुत्रोदुर्मदश्चकिंष्किंधामेकदागतः ॥ कृत्वासदीर्घशब्दंतुवालिनंसमुपाह्वयत् १६ तंश्रुत्वानिर्ययौवालीजघानदृढमुष्टिना ॥ दुद्रावतेनसंविग्नोजगामस्वगुहांप्रति १७ अनुदुद्रावतंवालीवालिपृष्ठेत्वहंगतः ॥ वालीमामाहतिष्ठत्वंबहिर्गच्छाम्यहंगुहाम् १८ इत्युक्त्वाऽऽविश्यसगुहांमासमेकंननिर्ययौ ॥ गुहाद्वारान्मयारक्तंनिर्गतंसन्निरीक्ष्यच १९ निश्चितंमनसावालीदुर्मदेनहतस्त्विति ॥ एतस्मिन्नंतरेश्रुत्वाकिंष्किंधांरिपुवेष्टिताम् २० गुहाद्वारिशिलामेकांनिधायदुर्मदस्यच ॥ यत्नतोमार्गरोधार्थंकिंष्किंधामागतःस्वयम् २१ मांदृष्ट्वारिपवःसर्वेवेगाच्चक्रुःपलायनम् ॥ अनिच्छंतंमंत्रिणोमांतत्पदेसंन्यवेशयन् २२ ततोहत्वारिपुंवालीदृष्ट्वामांस्वपदस्थितम् ॥ संताड्यनगरान्मांसबहिर्निष्कासयत्तदा २३ ततश्चससर्वदेशेषुवादयामासदुंदुभिम् ॥ भूम्यांसुग्रीवपातायश्चसमेवध्योभवेदिति २४ ततोलोकान्परिक्रम्यऋष्यमूकोमयाश्रितः ॥ एकदादुंदुभिर्नामदैत्योमहिषरूपधृक् २५ युद्धायवालिनंरात्रौसमाह्वयतभीषणः ॥ ततोवालीसमागत्यधृत्वाशृंगंकरेणसः २६ हस्ताभ्यांतच्छिरश्छित्वातोलयित्वाक्षिपद्भुवि ॥ पपाततच्छिरोराममतंगाश्रमसन्निधौ २७ रक्तवृष्टिःपपातोच्चैर्मतंगस्तंशपत्क्रुधा ॥ यद्यागतोऽसिमेवालिन्गिरिंशीघ्रंमरिष्यसि २८ एवंशप्तस्तदारभ्यऋष्यमूकंनयात्यसौ ॥ प्रतिज्ञांतिकरोम्यद्यसीतांशीघ्रंसमानये २९ यदानीतारावणेनतदादृष्टामयाऽम्बरे ॥ बध्वोत्तरीयेक्षिप्तानिपश्यत्वंभूषणानिहि ३० इत्युक्त्वादर्शयामाससुग्रीवोभूषणानिहि ॥ तानिदृष्ट्वाऽब्रवीद्रघुरामस्त्वंनिश्चयंवद ३१ त्वयादृष्टानिसीतायांतच्छ्रुत्वालक्ष्मणोऽब्रवीत् ॥ नवेद्म्यहंसमस्तानिवेद्म्यंगुलिभवानिहि ३२ वंदनेयानिदृष्टानिमयानित्यंरघूद्वह ॥ ततोरामोऽतिसंतुष्टोलब्ध्वासीताममन्यत ३३ सुग्रीववचनाद्रामःप्रत्ययार्थंतदाक्षणात् ॥ पादांगुष्ठेनाक्षिपत्तद्दुंदुभेःशिरउत्तमम् ३४ दशयोजनपर्यंतंतथाबाणेनवैपुनः ॥ चक्राकारान्सप्ततालान्दृष्ट्वादेहेह्यहेःप्रभुः ३५ स्वीयांगुष्ठेनसौमित्रेःपदंकिंचिद्विमर्दयच ॥ ऋजुंकृत्वापन्नगंतंशेषांशिनस्थितंभुवि ३६ सुग्रीवप्रत्ययार्थंहिसप्ततालान्विभेदसः ॥ गुहायामेकदातालफलानिस्थापितानिहि ३७ वालिनासप्तनीतानिकेनसर्पददर्शसः ॥ तंशपत्त्वयिवृक्षाश्चभविष्यंतीतिवानरः ३८ सर्पोऽप्याहाऽथतान्छेत्तायस्तेहंतानसंशयः ॥ तद्दृष्ट्वारामसामर्थ्यंतस्मिन्प्रत्ययमापसः ३९ सुग्रीवस्तंपुनःप्राहराघवंतुष्टमानसः ॥ वालिनेसुरनाथेनपुरादत्ताऽस्तिमालिका ४० यांदृष्ट्वारिपवोयुद्धेगतवीर्याभवंतिहि ॥ यापुराकश्यपेनैवतपसादुष्करेणच ४१ शिवाल्लब्धाऽर्पितापुत्रमिन्द्रंतेनाऽपिवालिने ॥ प्रीत्यार्पितामालिकासावालीकंठेदधात्यसौ ४२ तस्यास्त्वंदर्शनाद्रामगतसत्त्वोभविष्यसि ॥ तत्रोपायंचिंतयस्वयेनतेऽथजयोभवेत् ४३ ततस्यवचनंश्रुत्वारामःसर्पंतमब्रवीत् ॥ यश्शापान्मोचितःपूर्वंसप्ततालान्विभिद्यच ४४ गच्छत्वंममवाक्येनकिंष्किंधायांचवालिनम् ॥ निशिविनिद्रितंदृष्ट्वाहरतन्मालिकांशुभाम् ४५ तथेतिरामवाक्येनकिंष्किंधामेत्यपन्नगः ॥ मंचकस्थां

१ इदमर्धंएकस्मिन्पुस्तकेनास्ति ।

जहाराथतांमालांवासवंददौ ४६ ततोरामाज्ञयागत्वासमाहूयाऽथवालिनम् ॥ युद्धंचकारसुग्रीवःश्रीरामोऽपिददर्शतम् ४७ समानरूपौतौदृष्ट्वामित्रघातविशंकया ॥ न
मुमोचतदाबाणंरामःसोऽपिन्यवर्तत ४८ सुग्रीवोराघवंप्राहमांघातयसिवालिना ॥ यदिमद्धननेवांछात्वमेवजहिमांविभो ४९ ततस्यवचनंश्रुत्वासुग्रीवस्यरघूत्तमः ॥ बं
धयामाससुग्रीवकंठेमालांतुबंधुना ५० पुनस्तंप्रेषयामाससोऽपिवालिनमाह्वयत् ॥ ततःश्रुत्वाययौवालीतंताराप्रार्थयत्तदा ५१ श्रुतमंगदवाक्येनमयारामःसमागतः ॥
चकारमैत्रंकिंतेनमाकुरुष्वाऽद्यसंगरम् ५२ गच्छनत्वारमानाथंबंधुमानयसादरम् ॥ यौवराज्यपदंदेहितस्मैमेवचनंशृणु ५३ तत्तारावचनंश्रुत्वावालीतांवाक्यमब्रवीत् ॥
जानाम्यहंराघवंतंनररूपधरंहरिम् ५४ तस्यहस्तान्मृतिर्मेऽस्तिगच्छामिपरमंपदम् ॥ सुखंत्वंतिष्ठतारेऽत्रसुग्रीवंभजसर्वदा ५५ यदात्वयासुग्रीवःकरिष्यतिरतिंप्रि
ये ॥ तदातत्पत्निभोगस्याऽनृण्यंगच्छामिभामिनि ५६ अतएवमालिकामेगुप्ताऽभूत्पश्यमत्प्रिये ॥ अद्याऽहंरामबाणेनपतिष्यामिरणांगणे ५७ अद्यधन्योऽस्म्यहंता
रेधन्यौतौपितरौमम ॥ योऽयंश्रीरामहस्तेनमरिष्यामिरणांगणे ५८ एवमाश्वास्यतांतारांययौवालीत्वरान्वितः ॥ दृष्ट्वावालीमहोत्पातान्संतोषंपरमंययौ ५९ चकार
बंधुनायुद्धंतदाबाणेनराघवः ॥ वृक्षखंडेतिरोभूत्वापातयामासतंभुवि ६० ततस्तारासमागत्यशुशोचवालिनंप्रति ॥ वालीदृष्ट्वारमानाथंतदाप्राहसगद्गदः ६१ वृक्षखंडे
तिरोभूत्वात्वयाऽहंताडितोहृदि ॥ तवाऽद्यदुर्यशोजातंममजातोमहोदयः ६२ किंमयाऽपकृतंतेहित्वयायस्मान्निपातितः ॥ रामःप्राहवालिनंत्वंरुमायांलंपटःसदा ६३
बंधुभार्यांगृहेस्थाप्यबंधुंहंतुंत्वमिच्छसि ॥ दुर्वृत्तंत्वांसमालोक्यमयातस्मान्निपातितः ६४ यथात्वयारुमाभुक्तातथातारांतवप्रियाम् ॥ भोक्ष्यत्ययंहिसुग्रीवोवचनान्मेक
पीश्वर ६५ यद्यपित्वंदुराचारोनिहतोसिरणेमया ॥ तथापिभिल्लरूपेणद्वापरांतेऽघ्रिणंमम ६६ भित्वाप्रभासेबाणेनपूर्ववैरेणवानर ॥ ततोमद्धस्तमरणस्यास्यकारणगौ
रवात् ६७ मुक्तिंगच्छसित्वंवालिन्शुभांजन्मांतरेणहि ॥ ततःप्राहपुनर्वालीमेभविष्यदुदीरितम् ६८ सीताहृतंत्वयापूर्वंरावणेनक्षणेनहि ॥ दत्ताभविष्यदानीयसीतातव
मयातदा ६९ अधुनाप्रार्थयामित्वामंगदंपरिपालय ॥ इत्युक्त्वासतदावालीजहौप्राणान्रणांगणे ७० अंगदेनतदारामःकारयामासतत्क्रियाम् ॥ अथरामंससुग्रीवोराज्या
र्थंप्रार्थयत्तदा ७१ रामस्तमेवराजानंचकारलक्ष्मणेनसः ॥ अथवार्षिकमासान्सवस्तुंरामोविचारयत् ७२ प्रवर्षणगिरेःप्रोच्चशिखरेस्फटिकोद्भवाम् ॥ रम्यांदृष्ट्वागुहांरा
मःपत्रपुष्पसमन्विताम् ७३ निनायवार्षिकान्मासान्चतुरःश्रीरघूद्वहः ॥ एकदालक्ष्मणःस्नात्वायावद्रामंसमागतः ७४ सात्विक्यासीतयायुक्तस्तावद्रामोनिरीक्षितः॥
सौमित्रिणावंदितासाप्युर्वामिलयंययौ ७५ एवंनासीत्तदासीतावियोगोराघवायहि ॥ सुग्रीवोऽथपुरीमध्येचकारराज्यमुत्तमम् ७६ एकदाहनुमद्वाक्याद्वानरान्ससमाह्वय
त् ॥ प्रवर्षणगिरावास्तांतीर्थेंद्रेरामलक्ष्मणे ७७ एतस्मिन्नंतरेरामोदृष्ट्वाप्राप्तंशरद्दतुम् ॥ क्रोधेनप्रेषयामाससुग्रीवंलक्ष्मणायसः ७८ सोऽपिगत्वाऽथकिष्किंधांभीषयामास
वानरान् ॥ आगतंलक्ष्मणंश्रुत्वासुग्रीवोभयविव्हलः ७९ मारुतिंप्रेषयामाससांत्वनार्थंहिलक्ष्मणम् ॥ सगत्वातंसांत्वयित्वाकिष्किंधामानयत्तदा ८० एतस्मिन्नंतरेतारां

१ सुग्रीवंपुष्पवल्लीतुबंधुनाइतिपाठः । २ एवमासीदितिपाठः ।

प्रेषयामासवानरः ॥ साऽपिगत्वामध्यकक्षांसंस्थितातंददर्शह ८१ लक्ष्मणंसांत्वयामासवचोभिर्मधुरैर्निजैः ॥ समाहूतानिसैन्यानिरामार्थंप्लवगेनहि ८२ सुग्रीवेणत्वया
कोपोमाकार्योऽग्यहिदेवर ॥ ततोलक्ष्मणहस्तंसाधृत्वाराजगृहंययौ ८८ दृष्ट्वासुग्रीवराजस्तमासनात्संचचालसः ॥ सुग्रीवंलक्ष्मणःप्राहविस्मृतोऽसिरघूत्तमम् ८४ वाली
येनहतोवीरःसबाणस्त्वांप्रतीक्षते ॥ त्वमद्यवालिनोमार्गंगमिष्यसिमयाहतः ८५ एवमत्यंतपरुषंवदंतंलक्ष्मणंतदा ॥ उवाचहनुमान्वीरःकथमेवंप्रभाषसे ८६ रामका
र्यार्थमनिशंजागर्तिनतुविस्मृतः ॥ इत्युक्त्वातंपूजयित्वासुग्रीवेणसमारुतिः ८७ चकारलक्ष्मणंशांतंसुग्रीवोऽप्यथवानरैः ॥ गत्वातंराघवंनत्वादर्शयामासवानरान् ८८
राघवंसतदाप्राहसुग्रीवःप्लवगाधिपः ॥ देवपश्यसमायातांवानराणांमहाचमूम् ८९ अत्रयूथाधिपतयःपद्मान्यष्टादशस्मृताः ॥ ततोरामाज्ञयासीताशुद्ध्यर्थंतान्दिदेश
सः ९० दिक्षुसर्वासुविविधान्वानरान्प्रेष्यसत्वरम् ॥ याम्यांदिशंजांबवंतमंगदंवायुनंदनम् ९१ नलंसुषेणंशरभंमैंदंसंप्रेषयत्तदा ॥ मासादर्वाङ्निवर्तध्वंनोचेद्वध्याभवि
ष्यथ ९२ ततोरामोमुद्रिकांस्वांददौमारुतिसत्करे ॥ मन्नामाक्षरयुक्तेयंसीतायैदीयतांरहः ९३ ततोरामोनिजंमंत्रंददौतस्मैहनूमते ॥ तन्मंत्रस्यलक्षमितिकृत्वातुजपले
खने ९४ लब्ध्वासामर्थ्यमतुलंलंकांगंतुंसमारुतिः ॥ नत्वारामंपरिक्रम्यजगामकपिभिःसह ९५ तद्वृत्तंराघवःप्राहचित्रकूटेपुराकृतम् ॥ मनःशिलायास्तिलकंसीताभा
लेविनिर्मितम् ९६ गंडयोःपत्रवल्यादिसीतायैकथ्यतांरहः ॥ ततस्तेप्रस्थिताःसर्वेपश्चिमादिषुदिक्षुच ९७ प्रेषितास्तेसमायातानदृष्टासेतितंब्रुवन् ॥ तदांगदाद्याःप्लव
गाःसीतार्थंबभ्रमुर्वने ९८ मत्वाऽयंरावणश्चेतिराक्षसाञ्छतशोऽर्दयन् ॥ सार्द्रास्यान्खेचरान्दृष्ट्वागुहाद्वाराद्विनिर्गतान् ९९ जलार्थंसंप्रविष्टास्तेगुहायांवानरोत्तमाः ॥
तस्यांतानगच्छतस्तूर्णंदिनान्यष्टादशैवहि १०० अतिक्रांतानितिमिरेबभ्रमुस्तइतस्ततः ॥ तत्ररत्नमयेदिव्येगेहेदृष्ट्वास्त्रियंशुभाम् १ संश्राव्यतांनिजंवृत्तंतद्वृत्तंश्रोतु
मुद्यताः ॥ तान्पूज्यकथयामासनैजंवृत्तंतुयोगिनी २ हेमानाम्नीसुताविश्वकर्मणःसामहेश्वरम् ॥ नृत्येनतोषयामासददौतस्यैपुरंमहत् ३ अत्रस्थित्वाचिरंकालंयदागंतुं
समुद्यता ॥ सामांप्राहात्ररामस्यप्रतीक्षांकुरुसद्मनि ४ समागच्छस्वरामस्यकृत्वापूजनमुत्तमम् ॥ इत्युक्त्वासादिवंयाताराघवंपश्यतेमया ५ स्वयंप्रभेतिनाम्नाहंहेमायाः
परिचारिका ॥ अधुनाहूतयुष्माकंसाहाय्यंकिंकरोम्यहम् ६ तत्तस्यावचनंश्रुत्वामत्वास्वीयदिनव्ययम् ॥ तामूचुर्वानराःसर्वेनस्त्वंकुरुगृहाद्बहिः ७ इत्युक्त्वासाक्षणेनैव
तैःसहैवययौबहिः ॥ तद्गिराच्छादितस्वीयनयनैर्वानरैस्तदा ८ नज्ञातंचतयाकेनमार्गेणचबहिःकृतम् ॥ साऽपिगत्वापूज्यरामंदेहंत्यक्त्वादिवंययौ ९ ततस्तेवानराज्ञा
त्वागुहायांस्वदिनव्ययम् ॥ विषण्णाःसागरंदृष्ट्वातस्थुःप्रायोपवेशने ११० जटायोःकीर्तनंचक्रूरामकार्येमृतंपुरा ॥ तच्छ्रुत्वाऽथससंपातिस्तान्हंतुंयःसमुद्यतः ११ ते
भ्यःश्रुत्वामृतिंबंधोर्दत्वातस्मैजलांजलिम् ॥ तेषांश्रुत्वासर्ववृत्तंसीतावृत्तंन्यवेदयत् १२ शतयोजनमध्येऽब्धेर्लंकायांवर्ततेऽधुना ॥ अशोकवनिकायांतुतीर्त्वाऽब्धिंतांप्रप
श्यथ १३ अहंपक्षविहीनोऽस्मिमयागन्तुंनशक्यते ॥ गृध्रत्वाद्दूरदृक्चाऽहंसीतामांदृश्यतेगिरेः १४ अत्राजटायुषापूर्वमुड्डीयाहंबलाद्रविम् ॥ स्प्रष्टुकामस्तदातत्रातोत्रं

१ उदंतमितिपाठः ।

घुर्मयासखे १५ पक्षाभ्यांभस्मसाज्जातौमेपक्षौपतितावुभौ ॥ जटायुःससपक्षश्वगतोदेशांतरंपुनः १६ अहंतदापक्षहीनश्चंद्रशर्माणमुत्तमम् ॥ मुनिंनत्वामयातस्मै
निजवृत्तंनिवेदितम् १७ तदामांसमुनिःप्राहयदात्वंवानरोत्तमान् ॥ सीताशुद्धिंकथयसितदापक्षौभविष्यतः १८ पश्यतांनिर्गतौपक्षौकोमलौमांक्षणादिह ॥ यदानीता
रावणेनपुरासीताविहायसा १९ मत्पुत्रेणतदादृष्टाकथितंचापिमेतदा ॥ धिकृतःसमयाक्रोधात्सात्वयानविमोचिता १२० तदारभ्यगतःक्रोधादद्यापिनसमागतः ॥ इ
त्युक्त्वातान्कपीन्पृष्ट्वाससंपातिर्गतस्तदा २१ अथतेवानराःसर्वेप्रोचुःस्वंस्वंबलंतदा ॥ नकोपिगमनेशक्तःशतयोजनसागरे २२ तदासजांबवान्वृद्धःस्तुत्वातंमारुतिं
मुहुः ॥ जन्मकर्मादिसंश्राव्यलंकांगंतुंदिदेशतम् २३ सोऽपिश्रुत्वासमुद्योगंचकारारुह्यपर्वतम् ॥ निजभाराद्भूमिगतंकृत्वासस्माररराघवम् २४ एवंगिरींद्रजेप्रोक्तंकि
ष्किंधाविषयेकृतम् ॥ चरितंराघवेणेदंपुरापापप्रणाशनम् २५ ॥ इतिश्रीशतकोटिरामचरितान्तर्गतआनंदरामायणेसारकांडेकिष्किंधाचरित्रेऽष्टमःसर्गः ॥ ८ ॥ श्रीशिव
उवाच ॥ अथउड्डीयहनुमान्ययावाकाशवर्त्मना ॥ तद्दृष्ट्वातद्बलंज्ञातुंसुरसांनागमातरम् १ प्रेषयामासुरमराःसाशीघ्रंतत्पुरोययौ ॥ तदासामारुतिंप्राहविशत्वंवदनंमम
२ समाहरघुवीरस्यकार्यंकृत्वाविशाम्यहम् ॥ दृष्ट्वातस्यास्तुनिर्बंधंववर्धततदाकपिः ३ विवर्धितंतयाप्यास्यंतदासूक्ष्मोबभूवह ॥ अंगुष्ठमात्रस्तस्याःसवक्त्रेगत्वाविनिर्ग
तः ४ ज्ञात्वासाऽपिबलंतस्यस्तुत्वातंप्रययौदिवम् ॥ अथाऽब्धिवचनान्मार्गेमैनाकःपर्वतोमहान् ५ जलमध्यात्प्रादुरभूद्विश्रांत्यर्थंहनूमतः ॥ नानामणिमयैःशृङ्गैस्त
स्योपरिनराकृतिः ६ भूत्वायांतंहनूमंतंप्राहमैनाकपर्वतः ॥ आगच्छाऽमृतकल्पानिजग्ध्वापक्कफलानिमे ७ विश्राम्यात्रक्षणंपश्चाद्गमिष्यसियथासुखम् ॥ पुरागिरीणा
मिंद्रेणयुद्धमासीत्सुदारुणम् ८ तदादशरथेनाहंमोचितोस्म्यत्रसंस्थितः ॥ अतस्तदुपकारंहिनिस्तर्तुंनिर्गतोस्म्यहम् ९ गच्छतोरामकार्यार्थंतवविश्रांतिहेतवे ॥ तदा
तंहनुमानाहरामकार्येनमेश्रमः १० विश्रामःस्वामिकार्येऽत्रनकरोम्यद्यभक्षणम् ॥ मैनाकस्तंपुनःप्राहस्वस्पर्शात्पावयस्वमाम् ११ तथेतिस्पृष्ट्वाशिखरंकराग्रेणययौक
पिः ॥ किंचिद्दूरंगतस्याऽस्यछायांछायाग्रहोऽग्रहीत् १२ सिंहिकानामसाघोराजलमध्येस्थितासदा ॥ आकाशगामिनांछायामाक्रम्याकृष्यभक्षयन् १३ तयागृहीतोहनुमां
श्चिंतयामासवीर्यवान् ॥ केनेदंमेकृतंवेगरोधनंविघ्नकारिणा १४ एवंविचिंत्यहनुमानधोदृष्टिंप्रसारयन् ॥ तत्रदृष्ट्वासिंहिकांतांतदास्येन्यपतत्कपिः १५ तस्यांत्रजालंनिष्का
स्यतांहत्वाऽग्रेययौपुनः ॥ ततोऽब्धेर्दक्षिणेकूलेलंकांकृत्वातुपार्श्वतः १६ पपातपरलंकायांतत्रतांरावणस्वसाम् ॥ क्रौंचांहत्वासिंहिकावल्लंकांरात्रौविवेशसः १७ तदालं
कापुरीनाम्नीराक्षसीतंव्यतर्जयत् ॥ हनूमानपितांवाममुष्टिनाऽवज्ञयाऽहनत् १८ तदास्मृत्वाब्रह्मवाक्यंसाप्राहाशुमुखीपुरी ॥ ब्रह्मणोक्तापुराचाहंयदात्वांघर्षयेत्कपिः १९
तदारामोरावणस्यवधार्थमत्रयास्यति ॥ ज्ञातंमयारावणस्यवधंरामःकरिष्यति २० जितंत्वयागच्छलंकामशोकेपश्यजानकीम् ॥ ततोविवेशहनुमाँल्लंकांपश्यन्ययौतदा २१
ददर्शलंकांतांरम्यांगोपुराट्टालमंडिताम् ॥ हट्टवीथीचतुष्काढ्यांत्रिकूटशिखरस्थिताम् २२ पश्यन्समंततःसीतांप्रतिगेहंसमारुतिः ॥ गुहायांनिद्रितंकुंभकर्णंदृष्ट्वाभयान

१ यदात्वंधर्षयिवाकपिःइतिपाठः । २ त्वांवैइतिपाठः ।

कम् २३ दृष्ट्वाविभीषणंरामकीर्तनेहृष्टमानसम् ॥ दृष्ट्वासुलोचनायुक्तंनिद्रितंमेघनिःस्वनम् २४ ययौराजगृहंरात्रौरावणंसदसिस्थितम् ॥ दृष्ट्वास्वयंवायुरूपोदीपराजीर्व्यलो
पयत् २५ अकरोद्दस्त्रहीनांस्तान्रावणादीन्समारुतिः ॥ उल्मुकेनाकरोद्भस्मकूर्चंसरावणस्यच २६ राक्षसीःकोटिशोनग्नाःकृत्वातोयघटान्कपिः ॥ बभंजलीलयातूर्णा
दूतान्पुच्छेनतर्जयत् २७ तदातिविव्हलाःसर्वेप्रोचुस्तेऽथपरस्परम् ॥ कुह्वाऽद्यजानकीसत्यंनःप्राणांतमुपागतम् २८ तच्छ्रुत्वातुष्टचित्तःसययौरावणसद्महम् ॥ अदृष्ट्वा
जानकींतत्रययौपुष्पकमुत्तमम् २९ रावणंनिद्रितंदृष्ट्वावेष्टितंस्त्रीकदंबकैः ॥ दृष्ट्वामंदोदरींतत्रसीतेयमितिशंकितः ३० लक्ष्मणोक्तानिचिन्हानिपश्यंस्तस्यांददर्शन ॥
तथापिसीतासदृशींदृष्ट्वाव्यग्रमनास्त्वभूत् ३१ ॥ पार्वत्युवाच ॥ कथंमंदोदरीसीतासदृशीराक्षसीरिता ॥ सीतांशांशांशजाःसर्वाःस्त्रियश्चेतिश्रुतंमया ३२ ॥ श्रीशिव
उवाच ॥ शृणुष्वकारणंदेविसीतेयंविष्णुनाचिता ॥ तेनैवविष्णुनापूर्वमियंमंदोदरीचिता ३३ एकदाकैकसीमातारावणंप्राहदुःखिता ॥ शेषोच्छ्वासेनमेलिंगंगतंचाद्यर
सातलम् ३४ शिवादानीयमंदेहिआत्मलिंगमनुत्तमम् ॥ तन्मातृवचनंश्रुत्वागायनाद्धरदोन्मुखम् ३५ मामाहरावणोवाक्यंद्वौवरौदेहिमेप्रभो ॥ आत्मलिंगंचमन्मात्रे
पत्न्यर्थंपार्वतींमम ३६ ततस्यवचनंश्रुत्वात्वंदत्ताऽसिगिरींद्रजे ॥ दत्वाऽऽत्मलिंगंसंप्रोक्तोमयात्वंयदिरावण ३७ मार्गेलिंगंभूमिसंस्थंकरोषितर्ह्यहंपुनः ॥ नाग्रेगच्छामि
तत्स्थानात्तत्रैवचवसाम्यहम् ३८ तथेतिरावणश्चोक्त्वादेव्यालिंगेनसोययौ ॥ तदात्वयास्तुतोविष्णुस्तेनागचंदनादिना ३९ कृत्वामंदोदरींनारींमयहस्तेऽर्पिताशुभा ॥
तांनिनायमयःशीघ्रंपातालेस्वीयसद्महम् ४० ततोद्विजस्वरूपेणविष्णुःप्राहदशाननम् ॥ प्रतारितःशिवेनत्वंदत्वादुर्गांतुकृत्रिमाम् ४१ पातालेमयगेहेसागोपिताऽस्तिशि
22 वेनहि ॥ विविच्यसित्वंस्वर्लोकंभूलोकंचेतिशंकया ४२ स्वीयंमत्वातुपातालंतत्रत्वंनगवेष्यसि ॥ त्यजेमांकृत्रिमांदुर्गांपश्यत्वंमयसद्मनि ४३ गिरींद्रजांमहारम्यांपत्नींकृत्वा
सुखंभज ॥ तद्विप्रवचनंसत्यंमत्वामामेत्यवैपुनः ४४ विहस्यरावणःप्राहज्ञातंतेंऽतर्गतंमया ॥ अर्पिताकृत्रिमादेवीमांतांगोप्यरसातले ४५ तवैवास्त्वधुनाचेयंत्वहंनेष्या
मिगोपिताम् ॥ इत्युक्त्वातांविसृज्याऽथपातालंगंतुमुद्यतः ४६ तावन्मार्गेह्यल्पशंकाग्रस्तःप्राहद्विजंतदा ॥ आत्मलिंगंक्षणंहस्तेगृण्हीष्ववचनान्मम ४७ यावन्निर्वर्त्यशंकां
त्वामहमेष्यामिवेगतः ॥ द्विजवेषधरोविष्णुस्तदाप्राहदशाननम् ४८ अतिक्रांतेमुहूर्तेऽथलिंगंस्थाप्यव्रजाम्यहम् ॥ तथेतिरावणश्चोक्त्वातत्करेलिंगमर्पयत् ४९ ततोमू
त्रस्यसाधाराऽखंडिताभूच्चिरंप्रिये ॥ अतिक्रांतेमुहूर्तेऽथलिंगंसागररोधसि ५० पश्चिमेस्थाप्यभूम्यांसययौस्वीयस्थलंहरिः ॥ ततःसरावणश्चापिमूत्रंकृत्वाय
थाविधि ५१ लिंगंदृष्ट्वाभूमिसंस्थंतच्छिरश्चालयत्तदा ॥ तदाभूम्यांगतंलिंगंशिरःकिंचिच्चचालन ५२ अभूद्गर्ताकर्णरंध्रसदृशीतच्छिरःस्थले ॥ गर्तायांतच्छि
रश्चापिकर्णशंकूपमंकृशम् ५३ भुवःकर्णोपमंलिंगंगोकर्णंतद्वदंतिहि ॥ ततःखिन्नमनास्तूर्णींपातालंरावणोययौ ५४ मयगेहेनिरीक्ष्याऽथदेवींमंदोदरींवराम् ॥
मयंसंप्रार्थयामासददौतांरावणायसः ५५ ततोविवाहंनिर्वर्त्यपारिबर्हंददौमयः ॥ रावणायददौशक्तिममोघांशत्रुघातिनीम् ५६ दृष्ट्वामन्दोदरंतस्याःप्राहमन्दोदरी

१ ल्घुशंकाग्रस्तइतिपाठः॥

मिति ॥ तांनाम्नारावणस्तुष्टस्तयास्वयिस्थलंययौ ५७ ततोमात्राऽधिकृतःसपुनस्तपुंत्वरान्वितः ॥ गोकर्णेरावणोगत्वातत्वालब्ध्वाविधेर्वरान् ५८
त्रैलोक्यंस्ववशंकृत्वालंकायांराज्यमापसः ॥ तस्मात्सीतासमानेयंहृष्टामंदोदरीप्रिये ५९ लंकायांवायुपुत्रेणरावणाग्रेविनिद्रिता ॥ मयोऽप्यासीत्सलंकायांएहंकृत्वायथासु
खम् ६० मयबंधुर्गयोनाममहान्वीरःप्रतापवान् ॥ रात्रौविनिद्रितोगेहेब्रह्मदत्तवरात्सुधीः ६१ दशास्यहस्तात्तन्मृत्युर्विधिनोक्तंविचिंत्यच ॥ तस्यवक्षंमारुतिनाहृतंस
दासिवैपुरा ६२ तत्क्षिपद्धेमपर्यंकेरावणस्यकपेस्तदा ॥ विभीषणस्यपर्यंकेवसनंरावणस्यच ॥ क्षिप्त्वाऽपश्यज्जानकींसलंकायांचमुहुःकपिः ॥ ययावशोकवनिकांदृष्ट
प्रासादमंडिताम् ६४ ददर्शतत्रप्रांशुंचशिंशिपानामपादपम् ॥ तन्मूलेराक्षसीमध्येददर्शाऽवनिकन्यकाम् ६५ एकवेणींकृशांदीनांमलिनांवरधारिणीम् ॥ भूमौशयानां
शोचंतींराममरामेतिभाषिणीम् ६६ कृतार्थोऽहमितिप्राहदृष्ट्वासीतांसमारुतिः ॥ शिंशिपानगशाखाग्रपल्लवाभ्यंतरस्थितः ६७ पुराद्दृष्टानलंकारान्तस्यादेहेददर्शन ॥
ततःकिलकिलाशब्दैर्ययौतत्रदशाननः ६८ ददर्शरावणःस्वप्नेकपिःकश्चित्समागतः ॥ अशोकवनिकायांसाद्दृष्टातेनविदेहजा ६९ रामहस्तान्मृतिःशीघ्रंलब्धुंतांघर्षया
म्यहम् ॥ कपिर्दृष्ट्वाराघवायनिवेदयतुमत्कृतम् ७० आगमिष्यतितच्छ्रुत्वारामोमांनिहनिष्यति ॥ इतिनिश्चित्यसययौस्त्रीभिःसंवेष्टितोमुदा ७१ नूपुराणांध्वनिंश्रुत्वावि
ह्वलासीद्विदेहजा ॥ रावणोजानकीमाहमांदृष्ट्वाकिंविलज्जसे ७२ रामंवनचरंराज्यभ्रष्टंत्यक्तसुहृज्जनम् ॥ पित्राहीनंभोगहीनंसदात्वय्यतिनिष्ठुरम् ७३ एकांतवासिनंपिंगजटा
वल्कलधारिणम् ॥ तंत्यक्त्वामांभजस्वाद्यत्रैलोक्येशंमहाबलम् ७४ अप्सरोभिःसेवितंमांभाग्ययुक्तंपदस्थितम् ॥ स्त्रियोमंदोदरीमुख्यास्त्वांभजिष्यंत्यहर्निशम् ७५ म
याराज्यंत्वदधीनंकृतमस्तिभजस्वमाम् ॥ मयास्वजीवितंचापित्वदधीनंकृतंमहत् ७६ इतिनानाविधैर्वाक्यैःप्रार्थयामासरावणः ॥ उवाचाऽधोमुखीसीतानिधायतृण
मंतरे ७६ राघवाद्बिभ्यतानूनंभिक्षुरूपंधृतंत्वया ॥ रहितेराघवाभ्यांत्वंशुनीवहविरध्वरे ७८ हृतवानसिमांनीचतत्फलंप्राप्स्यसेऽचिरात् ॥ यदारामशराघातविदारि
तवपुर्भवान् ७९ भविष्यसिरणेरामंजानीषेमानुषंतदा ॥ श्रुत्वारक्षोधिपःक्रुद्धोजानक्याःपरुषाक्षरम् ॥ वाक्यंक्रोधसमाविष्टःपुनर्वचनमब्रवीत् ८० भवित्रीलंकायांत्रिद
शवदनग्लानिरचिरात्सरामोऽपिस्थातानयुधिपुरतोलक्ष्मणसखः ॥ तथायास्यत्युच्चैर्विपदमनुजेनाऽत्रजटिलोजयःश्रीरामेस्यात्रममबहुतोषोऽत्रतुभवेत् ८१ तद्रावण
वचःश्रुत्वाजानकीप्राहतंपुनः ॥ पद्याक्षरपराण्येवचतुर्धुचरणेष्वपि ८२ त्वमक्षराणिचत्वारिलोप्यश्लोकमसुंपठ ॥ एवंतयाजितोवाक्यमार्गणैःसदशाननः ८३ दुद्रावभी
षयन्सीतांखड्गमुद्यम्यसत्वरः ॥ धृत्वाकरेणतत्पाणिंमंदोदर्यानिषेधितः ८४ माद्रक्ष्यसंतिबह्व्यत्रश्वत्यजेनांकृपणांकृशां ॥ ततोऽब्रवीद्दशग्रीवोराक्षसीर्विकृताननाः ८५ यथा
मेवशगासीताभविष्यतिसकामना ॥ तथायतध्वंत्वरितंतर्जनादरणादिभिः ८६ यदिमासद्वयादूर्ध्वमच्छय्यांनाभिनंदति ॥ तदामेप्रातराशायहत्वाकुरुतमानुषीम् ८७ त
दासीतापुनःप्राहवचनंतंदशाननम् ॥ बाल्यत्वेऽहंसमानीतापेटिकास्थात्वयापुरा ८७ तदामयावचःप्रोक्तंतत्त्वंकिंविस्मृतोऽसिहि ॥ अधुनाऽहंगमिष्यामियास्यामित्व
रितंपुनः ८९ त्वांबंधुपुत्रसैन्याद्यैर्हंतुंचेतिमयेरितम् ॥ तत्स्वीयंवचनंसत्यंकर्तुमत्रागताऽस्म्यहम् ९० त्वांबंधुपुत्रसैन्याद्यैर्निहत्यरामहस्ततः ॥ ततोऽयोध्यापुरींगत्वा

पुनर्यास्यामित्वत्पुरीम् ९१ निकुंभजंपौंड्रकंतंमातामहगृहेस्थितम् ॥ शतशीर्षरावणंचद्वीपांतरनिवासिनम् ९२ साहाय्यार्थंपौंड्रकेणलंकांपाचारितंपुनः ॥ अहंतृतीय
वेलायांसंवधिष्यामितावुभौ ९३ ततःस्वीयस्थलंगत्वापुनर्यास्याम्यहंजवात् ॥ कुंभकर्णोद्भवंवीरंमूलकासुरनामकम् ९४ अत्रैवतुर्यवेलायामागत्यपुष्पकेणहि ॥ अहमे
वहनिष्यामिशितबाणैरणांगणे ९५ अन्यच्चाऽपिस्मराऽद्यत्वंपुरायद्विधिनोदितम् ॥ यद्वाक्याच्चत्वयागत्वाकौसल्यान्नृपतीहृतौ ९६ पेटिकास्थौपुनस्त्यक्तौसाकेतेदैव
योगतः ॥ अतस्त्वंमतुंकामोऽसियतोऽहमाहृतात्वया ९७ गच्छगेहेसुखंभुंक्ष्वरामःशीघ्रंहनिष्यति ॥ इतिसीतावाक्यबाणैर्भिन्नमर्मस्थलोऽपिसः ९८ ययौतूर्ष्णींनिजं
गेहंलज्जितश्चदशाननः ॥ एवंदशाननेयातेराक्षस्योरावणाज्ञया ९९ जानकींतांस्वशब्दैश्चतथाक्रूरोक्तिभिर्मुहुः ॥ आस्यैर्विदीर्णःखड्गाद्यैर्भीषयन्त्यःकरादिभिः २००
निवार्यत्रिजटानाम्नीविभीषणप्रियाऽनुगा ॥ ताःसर्वाराक्षसीर्वगाद्वाक्यमाहाथसादरम् १ नभीषयध्वंरुदतींनमस्कुरुतजानकीम् ॥ सुचिन्है राघवःस्वप्नेमयादृष्टोऽद्यजान
कीम् २ मोचयामासदग्ध्वेमांलंकांहत्वातुरावणम् ॥ रावणोगोमयहृदेतैलाभ्यक्तोदिगंबरः ३ मयाऽद्यदृष्टःस्वप्नेहितस्मादेनांनसाहसम् ॥ कार्यंसेव्यासदाचेयंरामादभय
दायिनी ४ युष्माभिर्दुःखिताचेद्वोभर्त्रेयंघातयिष्यति ॥ इतितत्त्रिजटावाक्यंश्रुत्वातस्थुर्भयाकुलाः ५ तूष्णींमेवतदासीतादुःखात्किंचिदुवाचसा ॥ इदानींमेवमरणंके
नोपायेनमेभवेत् ६ दीर्घवेणीममात्यर्थंमुद्बंधायभविष्यति ॥ यन्मयास्वीयवाग्बाणैर्लक्ष्मणस्ताडितःपुरा ७ तस्मादिमाःपीडयंतिमोक्ष्यतेस्वकृतंमया ॥ मयानिरागः
सौमित्रिस्त्रासितोगौतमीतटे ८ प्रायश्चित्तंकरोम्यद्यतस्यत्यक्त्वास्वजीवितम् ॥ एवंनिश्चितबुद्धिंतांमरणायाऽथजानकीम् ९ दृष्ट्वाशनैर्वायुपुत्रोरामवृत्तंन्यवेदयत् ॥ आ
साकेतनिर्गमाच्चस्वसीतादर्शनावधि ११० सविस्तारंक्रमेणैवसीतातोषार्थमादरात् ॥ सीताक्रमेणतत्सर्वंश्रुत्वाह्याश्चर्यमानसा ११ किमयेदंश्रुतंव्योम्निस्वप्नोदृष्टोऽथवानि
शि ॥ येनमेकर्णपीयूषवचनंसमुदीरितम् १२ सदृश्यतांमहाभागःप्रियवादीममाग्रतः ॥ तच्छ्रुत्वातत्पुरोगत्वानत्वातामब्रवीत्पुनः १३ रामवृत्तंददौतस्यैराघवस्यांगुली
यकम् ॥ तांरामसुद्रिकांदृष्ट्वानत्वातमब्रवीत्कपिम् १४ सर्वंकथयमद्वृत्तंयथादृष्टंत्वयात्रहि ॥ तदातांसांत्वयामासरामोमत्स्वंघसंस्थितः १५ वानरेंद्रैःसमागत्यहत्वारावण
माहवे ॥ त्वांनेष्यतिभयंसीतेत्यजत्वंममवाक्यतः १६ ततःसीताप्रत्ययार्थंरूपंस्वंदर्शयत्कपिः ॥ ततःपुनःप्रत्ययार्थंसीतायैराघवोदितम् १७ मनःशिलायास्तिलकंचि
त्रकूटगिरौकृतम् ॥ कपिस्तत्कथयामासपूर्ववृत्तंसविस्तरम् १८ ततस्तुष्टांजानकींतांमारुतिर्वाक्यमब्रवीत् ॥ अनुज्ञांदेहिमेमातस्त्वभिज्ञानंददस्वमाम् १९ सातंचू
डामणिंपित्रादत्तंकेशांतरस्थितम् ॥ निष्कास्यतत्करेदत्वापूर्वंकाकेनयत्कृतम् २२० चित्रकूटगिरौवृत्तंकथयामासतत्कपिम् ॥ ततोनत्वारामपत्नींचिंतयामासचेतसि
२१ स्वामिकार्यंकृतंचैतदन्यत्किंचित्करोम्यहम् ॥ इतिनिश्चित्यमनसाजानकींपुनरब्रवीत् २२ मातर्मेतीवक्षुद्बोधस्त्वद्यविक्रमदोमहान् ॥ अस्मिन्वनेऽतिमधुरःफल
संघोऽतिदुर्लभः २३ तवाज्ञयाऽद्यसीतेऽहंकरिष्येभक्षणंध्रुवम् ॥ इतितद्वचनंश्रुत्वाजानकीस्वीयकंकणम् २४ निष्कास्यहस्तात्तंप्राहगृह्णीष्वेदंप्लवंगम ॥ अनेनफलसंभा

१ लंकायांचारितमितिपाठः । २ तामितिपाठः । ३ कपिस्तामितिपाठः ।

रानलंकाहट्टात्प्रगृह्यच २९ भुक्त्वापीत्वासुखंगच्छवनेऽस्मिन्त्रोटयस्वमा ॥ तदाकपिःपुनःप्राहपरहस्तफलानिहि २६ नाहंभुंजामिसीतेमेव्रतमस्तिव्रजाम्यहम् ॥ व्रजं
तंमारुतिंदृष्ट्वासीतावचनमब्रवीत् २७ भोबालककपिश्रेष्ठरावणोऽस्तिवनाधिपः ॥ नशक्तिर्नचशक्यंतेकथंत्वंभक्षयिष्यसि २८ ततस्यावचनंश्रुत्वामारुतिःप्राहजानकीम् ॥
श्रीरामेतिपरंमंत्रशस्त्रंमेहृदयांतरे २९ तेनसर्वाणिरक्षांसितृणरूपाणिसांप्रतम् ॥ तदातंजानकीप्राहपतितान्यत्रवैभुवि ३० भुंक्ष्वैतानिफलानित्वंतूष्णींमात्रोटयाऽत्रवै ॥
तथेतिमारुतिश्चोक्त्वावृक्षान्पुच्छेनचालयन् ३१ वृक्षांदोलनमात्रेणनिपेतुश्चफलानिहि ॥ भक्षयामासतान्येवसफलानिक्षणेनसः ३२ ततोवृक्षान्समुत्पाटचलांगूलेनसमारु
तिः ॥ क्षिप्त्वातानन्यवृक्षेषुसमस्तानिफलानिवै ३३ पातयामासभूम्यांतुभक्षयामासतानिसः ॥ भक्षितानिसमस्तानिफलानिवनजानिहि ३४ दृष्ट्वातंदुद्रुवुर्धर्तुंमारुतिं
वनरक्षकाः ॥ राक्षसानागतान्दृष्ट्वावृक्षैस्तांस्ताडयत्कपिः ३५ उत्पाट्याऽशोकवनिकांनिर्वृक्षामकरोत्क्षणात् ॥ सीताश्रयनगंत्यक्त्वावनंशून्यंचकारसः ३६ बभंजचैत्य
प्रासादंहत्वातद्रक्षकान्क्षणात् ॥ ततस्ताराक्षसीःसर्वावनभंगंनिरीक्ष्यच ३७ पप्रच्छुर्जानकींसर्वाःकोऽयंकस्यकुतस्त्विह ॥ ताःसर्वाजानकीप्राहराक्षसाःकामरूपिणः ॥
३८ विचरंतिमुदाभूम्यांविद्ध्यहंभिक्षुरूपिणा ॥ यदाहृतापंचवट्यांरावणेनाहितद्दिनात् ३९ तस्माज्ज्ञेयस्तुयुष्माभिःकोयंमांपृच्छतेऽद्यकिम् ॥ इतितस्यावचःश्रुत्वारा
क्षस्योभयविह्वलाः १४० दशाननंहितद्वृत्तंययुःशीघ्रंनिवेदितुम् ॥ एतस्मिन्नंतरेप्रातर्मंचकेकटिबंधनम् ४१ निरीक्ष्यरावणश्चाथगयस्यचकितस्तदा ॥ भुक्तांमंदोदरी
ज्ञात्वातांहंतुंखड्गमाददे ४२ तदानिवारितःस्त्रीभिःस्त्रीहत्यांमाकरोत्विति ॥ तदाक्रुद्धोदशग्रीवस्तूष्णींगत्वागयगृहम् ४३ अवधीन्निद्रितंवीरंखड्गेनस्वगृहंययौ ॥ तदा
विभीषणःप्रातर्वधोवैस्त्रंस्वमंचके ४४ दृष्ट्वातांसरमांहंतुंदुद्रुवेवर्जितस्तदा ॥ स्त्रीभिर्धृत्वातस्यहस्तंस्त्रीहत्यागर्हितात्विति ४५ विभीषणस्तदारभ्यवधोच्छ्वासममन्यत ॥
एवमासीच्चलंकायांकौतुकंकपिनाकृतम् ४६ अथवेगेनराक्षस्यःसभासंस्थंदशाननम् ॥ वृत्तंनिवेदयामासुःस्खलद्वाण्यावनोद्भवम् ४७ तच्छ्रुत्वारावणःक्रोधात्कपिनोत्पा
टितंवनम् ॥ वनपालंसमाहूयजंबुमालिनमब्रवीत् ४८ राक्षसैर्नियुतैर्गच्छकीशंधृत्वासमानय ॥ तथेतिसययौवेगादशोकवनिकांप्रति ४९ दृष्ट्वासैन्यंदीर्घनादंचकारक
पिकुंजरः ॥ ततस्तेराक्षसाःशस्त्रैर्निजघ्नुर्वानरोत्तमम् ५० ततउत्प्लुत्यहनुमान्तोरणेनसमंततः ॥ निष्पिपेषक्षणादेवमशकानिवयूथपः ५१ हत्वातान्राक्षसान्सर्वांस्त
तोवेगेनमारुतिः ॥ तालवृक्षंसमुत्पाट्यजघानजंबुमालिनम् ५२ तान्सर्वान्निहताञ्छ्रुत्वापंचसेनापतीन्पुनः ॥ रावणःप्रेषयामासहतास्तेतोरणेनच ५३ वायुपुत्रे
णवेमेनलक्षराक्षससंयुताः ॥ सतानपिमृताञ्छ्रुत्वाऽक्षंपुत्रंप्रैषयत्तदा ५४ कपिनामारितःसोऽपिससैन्योमुद्गरेणच ॥ ततःसप्रेषयामासपुत्रमिंद्रजितंपुनः ५५ ततःस
रथमारूढःकोटिराक्षसवेष्टितः ॥ युद्धंचकारकपिनाशस्त्रैरस्त्रैःसुदुर्धरैः ५६ तदापुच्छेनसैन्यायत्कृत्वाप्राकारमुत्तमम् ॥ निष्पिपेषतोरणेनराक्षसान्मारुतिःक्षणात् ५७
ततोवृक्षंसमुत्पाट्यमेघनादमताडयत् ॥ वृक्षेणभिन्नसर्वांगोमेघनादोऽविशद्गृहम् ५८ एतस्मिन्नंतरेब्रह्माप्रार्थयामासमारुतिम् ॥ ब्रह्मास्त्रंमानयन्मेऽद्यत्वंलंकायांहिरावणम्
५९ तथेत्यंगीचकाराऽसौमेघनादंययौविधिः ॥ विधिःप्राहमेघनादंक्वगतोऽद्यपराक्रमः ६० गच्छमेऽस्त्रेणतंबध्वापितुरग्रेसमानय ॥ तद्ब्रह्मवचनंश्रुत्वामेघनादःपुनर्ययौ ६१

ब्रह्मास्त्रेणाऽथबध्वातमानयामासरावणम् ॥ ततोरावणवाक्येनप्रहस्तःप्राहमारुतिम् ६२ कस्त्वंकुतःसमायातःप्रेषितःकेनवावद ॥ ततःसरामवृत्तंहिकथयामासविस्तरा
त् ॥ ततस्तंबोधयामासरावणंवायुनंदनः ६३ विसृज्यमौर्ख्यंह्यादिशद्भावनांभजस्वरामंशरणागतप्रियम् ॥ सीतांपुरस्कृत्यसपुत्रबांधवोरामंनमस्कृत्यविमुच्यसेभयात्
६४ यावन्नगामाःकपयोमहाबलाहरींद्रतुल्यानखदंष्ट्रयोधिनः ॥ लंकांसमाक्रम्यविनाशयंतितेतावद्धुतंदेहिरघूत्तमायताम् ६५ जीवन्नरामेणविमोक्ष्यसेत्वंगुप्तःसुरेंद्रैरपिशंक
रेण ॥ नदेवराजांकगतोनमृत्योःपातालल्लोकानपिसंप्रविष्टः ६६ शुभंहितंपवित्रंचवायुपुत्रवचःखलः ॥ प्रतिजग्राहनैवासौम्रियमाणइवौषधम् ६७ इतितद्वचनंश्रुत्वामा
रुतिंप्राहरावणः ॥ येनविनिर्जितादेवास्तस्यमेपौरुषंत्वया ६८ नदृष्टंवलसेव्यर्थंशृणुकिंचिद्वदामिते ॥ पंचांगपाठकश्चायंपश्यब्रह्माकृतोमया ६९ प्रतिहारस्त्वयंसूर्यः
शशीछत्रधरःकृतः ॥ वरुणोऽयंजलग्राहीमार्जकःपवनस्त्विह १७० अग्निःकृतोऽयंरजकोमालाकारःशचीपतिः ॥ दंडपाणिर्यमश्चाऽत्रदास्यश्चात्रसुरस्त्रियः ७१ मार्तं
डोनापितश्चाऽयंगणपःखररक्षकः ॥ मंगलाद्याग्रहाःसप्तमेसोपानायितासने ७२ शिशुसेवातत्परेयंषष्ठीदेवीमयाकृता ॥ आंदोलितश्चकैलासःकुबेरोऽपिविनिर्जितः ७३
कथंममाग्रेविलपस्यभीतवत्प्लवंगमानामधमोऽसिदुष्टधीः ॥ कएषरामःकतमोवनेचरोनिहन्मिसुग्रीवयुतंनराधमम् ७४ इत्युक्त्वाहंतुमुद्युक्तस्तंदशास्यःसभास्थितः ॥ त
दानिवारयामासरावणंसविभीषणः ७५ परदूतोनहंतव्यइत्यादिवचनैस्तदा ॥ ततःक्रोधसमाविष्टोरावणोलोकरावणः ७६ दूतानाज्ञापयामासछेदनीयंतुलांगुलम् ॥
तद्रावणवचःश्रुत्वाराक्षसास्तेसहस्रशः ७७ स्वायुधैश्छेदयामासुःकुठारक्रकचादिभिः ॥ आयुधान्येवशतशस्तत्पुच्छाघातमात्रतः ७८ बभूवुःशतचूर्णानितस्यरोम्णो
पिनव्यथा ॥ तन्निरीक्ष्यदशास्यःसमारुतिंवाक्यमब्रवीत् ७९ नवीरागोपयंत्यत्रस्वीयंमृत्युमपिक्वचित् ॥ अतस्त्वंवदपुच्छस्ययेनघातोऽद्यतेभवेत् १८० तदाऽमरत्वं
स्वंप्राहकपिस्तच्चमृषेतिसः ॥ मत्वादशास्यस्तंप्राहपुनःसत्यंवदेतिच ८१ तदासमारुतिस्तूष्णींक्षणंचित्तेव्यचिंतयत् ॥ मत्पितुश्चसखावह्निस्तस्मान्नास्तिभयंमम ८२
तस्मात्पुच्छंदीपयित्वालंकांदग्धांकरोम्यहम् ॥ ततस्तरावणंप्राहमारुतिःसदसिस्थितः ८३ पुच्छंमेवह्निनादग्धंभविष्यतिनसंशयः ॥ ततस्यवचनंश्रुत्वारावणोनिज
किंकरान् ८४ आज्ञापयामासपुच्छंदीपयित्वाप्रयत्नतः ॥ लंकायांदर्शनीयोऽयंदृष्ट्वैनंमद्भयंभवेत् ८५ सर्वेषांमद्रिपूणांचतथाचकुस्त्वरान्विताः ॥ तैलाक्तैःशणपट्टैश्चरा
क्षसावसनैरपि ८६ पुच्छंसंवेष्टयामासुस्तदापुच्छंव्यवर्धत ॥ ततोवसनहट्टात्तुवस्त्रकोशान्विलुंठ्यच ८७ तत्पुच्छंवेष्टयामासुर्दृढवस्त्रैरनेकशः ॥ ततःपुरुषनारीणांलं
कास्थानांनृपाज्ञया ८८ बलादाच्छिद्यवस्त्राणिचक्रुःसर्वान्दिगंबरान् ॥ ततःशय्यामंडपांश्चकंचुकीःकंचुकानपि ८९ पौराणांराजगेहाच्चतेवस्त्राणिसमानयन् ॥ दृष्ट्वाऽपू
र्तिंतुपुच्छस्यसभास्थानांनृपस्यच १९० वस्त्रमात्रैःसमस्तैश्चलांगूलंवेष्टयंस्तदा ॥ ध्वजोष्णीषपताकाभिर्विमानावसनैरपि ९१ मंदोदर्यादिवस्त्रैश्चभिक्षूनांवसनादिभिः ॥
८ वेष्टयन्कपिलांगूलंततःसीतांययुश्चराः ९२ तज्ज्ञात्वामारुतिश्चापिपुच्छपूर्तिंप्रदर्शयत् ॥ तदाकोलाहलश्चासीद्वस्त्रार्थंप्रतिसद्मनि ९३ तैलार्थंचघृतार्थंचस्नेहमात्रंस

१ तस्कराइतिपाठः ।

मानयन् ॥ नासीत्त्रिशायांदीपार्थंशिशूनामपिनोघृतम् १४ आसन्स्त्रीपुरुषानग्रालज्जानासीत्परस्परम् ॥ ततस्तद्दीपयामासुर्वन्हिनामस्त्रकंपनैः १५ प्रदीप्तंनाभवत्पु
च्छंततोमारुतिरब्रवीत् ॥ यदास्वीयमुखेनाऽयंयजमानोऽध्वरावणः १६ वन्हिंप्रज्वालयेदत्रतदाज्वालाभविष्यति ॥ तन्मारुतिवचःश्रुत्वायथावग्रेदशाननः १७ यावत्फू
त्कारयामासतत्पुच्छानलमाननैः ॥ तावत्तच्छिरजैःश्मश्रुकूर्चादग्धादशाऽभवन् १८ तदाविंशद्भुजैःस्वीयमुखोपारिदशाननः ॥ ताडयद्वन्हिशांत्यर्थंजहसूराक्षसास्तदा
१९ हास्यंचकारहनुमांस्तदाक्रुद्धःसरावणः ॥ नीयतांमर्कटश्चायमितिदूतान्वचोऽब्रवीत् २०० ततोदूताःकपिंनिन्युर्लंकायांतिसमंततः ॥ शृंखलाभिर्दृढंबध्वाभ्रामयामा
सुरादरात् १ वाद्यघोषैर्दीर्घशब्दैर्वेष्टितंशस्त्रधारिभिः ॥ एवंदिवासर्वलंकांदृष्ट्वोड्डीयसमारुतिः २ धृत्वाऽतिसूक्ष्मरूपंतुदृढबंधविनिर्गतः ॥ यथास्थानंब्रह्मणोऽस्त्रंतथ्ययौपू
र्वमेवहि ३ ततःपश्चिमदिक्संस्थंलंकाद्वारंसमानयत् ॥ निष्कास्यतोरणंद्वाराज्जघानद्वाररक्षकान् ४ हत्वास्वरक्षकांश्चापिप्रासादेपुसमंततः ॥ ददावग्निंस्वपुच्छेनलंकांद
ग्धांचकारसः ५ तदाकोलाहलश्चासील्लंकायांप्रतिसद्मनि ॥ निद्रितान्यपिबालानित्यक्त्वानार्योगृहाद्वहिः ६ दुद्रुवुःप्राणरक्षार्थंदग्धवस्त्राऽल्कास्तदा ॥ क्रमेणरावणादी
नांप्रासादान्ज्वालयन्कपिः ७ तांरावणसभांदग्ध्वाजनान्पुच्छेनताडयत् ॥ अभवन्राक्षसादग्धामुखवाद्यानिचक्रिरे ८ तदासरावणःक्रुद्धोराक्षसैर्दशकोटिभिः ॥ ययौयो
द्धुंमारुतिनातान्सर्वान्तोरणेनसः ९ घातयामासपुच्छेनबध्वाचैकत्रकोटिशः ॥ तथैवलील्यापुच्छंरावणस्यचमस्तके २१० संताडयतत्त्वचंदग्धामकरोन्मारुतिःक्षणा
त् ॥ तत्पुच्छवन्हिनादग्धोमूर्च्छितोऽभूद्दशाननः ११ कपिःश्रीरामकीर्त्यर्थंरावणंनजघानसः ॥ पतितंपितरंदृष्ट्वादृष्ट्वादग्धान्स्वराक्षसान् १२ आत्मनःप्राणरक्षार्थमिंद्र
जिद्दिवंययौ ॥ कपिर्लक्ष्मणप्रीत्यर्थंमेघनादंजघानन १३ एवंसर्वान्विनिर्जित्यगोपुराट्टालमंडिताम् ॥ दग्ध्वालंकांसविस्तारांययौसागरमुत्तमम् १४ तटेपुच्छंस्थापयित्वा
जलजान्रक्षयन्कपिः ॥ तत्तरंगैःशीतलंस्वंकृत्वालांगूलमुत्तमम् १५ निजकंठाच्चधूम्रेणश्लेष्माणंसागरेऽक्षिपत् ॥ ततःकपिःक्षणंतूष्णींस्थित्वासीतांविचिंत्यच १६
ताडयामासहृदयेमत्वादग्धांविदेहजाम् ॥ आत्मानंगर्हयामासस्थित्वासागररोधसि १७ धिक्धिक्मांवानरंमूढंस्वामिपत्न्याश्चदाहकम् ॥ निश्चयेनमयादग्धाजानकी
रामतोषदा १८ नाविचारःकृतःपूर्वंलंकादाहेऽविवेकिना ॥ आत्मघातंकरोम्यद्यपुच्छबंधेनचात्रवै १९ किंरामायेदृशंस्वास्यंदर्शयेऽद्यविगर्हितम् ॥ रामःश्रुत्वाससीता
यावृत्तंशीघ्रंमारिष्यति २२० तद्दुःखेनससौमित्रिर्मरिष्यतिनसंशयः ॥ तयोर्दुःखेनसुग्रीवस्तदर्थंसाचवैरुमा २१ तंश्रुत्वासोंगदश्चापिमरिष्यत्यऽतिलालितः ॥ ताराऽ
पिपुत्रशोकेननृपेनष्टेऽथवानराः २२ प्राप्तेपंचदशेवर्षेभरतोऽपिमारिष्यति ॥ रामदुःखेनकौसल्यासुमित्रापुत्रदुःखतः २३ तथासाकैकयीदुष्टासर्वानर्थकरीतुया ॥ शत्रुघ्नो
बंधुदुःखेनरामार्थंमुनयश्चते २४ राघवोरामभक्ताश्चमंत्रिणःसुहृदस्तथा ॥ सीतापितुःकुलंसर्वंकौसल्यायाःपितुःकुलम् २५ सुमित्रायाश्चकैकेय्यास्तेषांसंबंधिनस्तथा ॥
नष्टेराजकुलेजातेप्रजास्वेच्छानुवर्तिनी २६ मरिष्यतिनसंदेहस्ततःस्थावरजंगमम् ॥ भूमिस्थाःप्राणिनःसर्वेयदानष्टास्तदादिवि २७ हव्यकव्यविहीनास्तेदेवानाशंगता
इव ॥ अकालेप्रलयंदृष्ट्वानष्टांसृष्टिंस्वनिर्मिताम् २८ पश्चात्तापेनधाताऽपिमरिष्यतिनसंशयः ॥ एवंक्रमेणब्रह्मांडंनश्यत्येवनसंशयः २९ एतद्धातनिमित्तोऽहंविधिनानि

मिंतःपुरा ॥ इत्युक्तवंतंखेदेनदेहत्यागार्थमुद्यतम् २३० दृष्ट्वासाकाशजावाणीबभूवबहुहर्षदा ॥ माकुरुष्वकपेखेदंनदग्धाजानकीशुभा ३१ आत्मानंदर्शयित्वातां
शीघ्रंगच्छरघूद्वहम् ॥ तांवाणींहनुमाञ्छ्रुत्वाबभूवहर्षपूरितः ३२ श्रुतंतांजानकींद्रष्टुमशोकवनिकांययौ ॥ तावद्ददर्शलंकायांसुवर्णवेष्टितांभुवम् ३३ तत्कारणंवदाम्यद्य
तच्छृणुष्वगिरींद्रजे ॥ आसीद्गिरिवरोदेवित्रिकूटइतिविश्रुतः ३४ क्षीरोदेनावृतःश्रीमान्योजनायुतमुच्छ्रितः ॥ तावताविस्तृतःपर्यक्त्रिभिःशृंगैःपयोनिधिम् ३५ दि
शःखंरोचयन्नास्तेरौप्यायसहिरण्मयैः ॥ तस्यद्रोण्यांभगवतोवरुणस्यमहात्मनः ३६ उद्यानमृतुमन्नामआक्रीडंसुरयोषिताम् ॥ तस्मिन्सरःसुविपुलंलसत्कांचनपंक
जम् ३७ कुमुदोत्पलकल्हारशतपत्रश्रियोर्जितम् ॥ नैतत्कृतघ्नाःपश्यंतिनृशंसाननास्तिकाः ३८ तस्मिन्सरसिदुष्टात्माविरूपोंतर्जलाशयः ॥ आसीद्ग्राहोगजेंद्राणां
दुराधर्षोमहाबलः ३९ अथदंतोज्ज्वलमुखःकदाचिद्गजयूथपः ॥ आजगामतृषाक्रांतःकरेणुपरिवारितः २४० तृषितःपानकामोयमवतीर्णश्चतत्सरः ॥ पिबतस्तस्य
तत्तोयंग्राहस्तमुपपद्यत ४१ सुलीनःपंकजवनेयूथमध्यगतःकरी ॥ गृहीतस्तेनरौद्रेणग्राहेणाऽतिबलीयसा ४२ गजोह्याकर्षतेतीरंग्राहआकर्षतेजलम् ॥ पश्यंतीनांकरे
णूनांक्रोशंतीनांसुदारुणम् ॥ नीयतेपंकजवनेग्राहेणाव्यक्तमूर्तिना ४३ तथातुरंयूथपतिंकरेणवोविकृष्यमाणंतरसाबलीयसा ॥ विचुक्रुशुर्दीनधियोऽपरेगजाःपार्ष्णिग्र
हास्तारयितुंनचाशकन् ४४ तयोर्युद्धमभूद्घोरंदिव्यवर्षसहस्रकम् ॥ वारुणैःसंयतःपाशैर्निष्प्रयत्नगतिःकृतः ४५ वेष्ट्यमानःसुघोरैस्तुपाशैर्नागेंद्रैस्तथा ॥ विस्फू
र्जितमहाशक्तिर्विक्रोशंश्चमहारवान् ४६ व्यथितःसनिरुत्साहोगृहीतोघोरकर्मणा ॥ परामापदमापन्नोमनसाऽचिंतयद्धरिम् ४७ एकाग्रोनिगृहीतात्माविशुद्धेनांतरात्म
ना ॥ प्रगृह्यपुष्कराग्रेणकांचनंकमलोत्तमम् ४८ नैवेद्यंमनसाध्यात्वापूजयित्वाजनार्दनम् ॥ आपद्विमोक्षमन्विच्छन्गजःस्तोत्रमुदीरयत् ४९ तत्कृतेनस्तवेनैवसुप्रीतः
परमेश्वरः ॥ आरुह्यगरुडंविष्णुराजगामसुरोत्तमः २५० ग्राहग्रस्तंगजेंद्रंचतंग्राहंचजलाशयात् ॥ तज्जहाराप्रमेयात्मातरसामधुसूदनः ५१ जलस्थंदारयामासग्राहं
चक्रेणमाधवः ॥ मोचयामासनागेंद्रंपाशेभ्यःशरणागतम् ५२ आसीद्गजःपुरापांड्यइंद्रद्युम्नइतिश्रुतः ॥ एकदासतपोनिष्ठोबभूवध्यानतत्परः ५३ यदृच्छयाययौतत्र
कुंभजन्मा[1]नृपांतिकम् ॥ ध्यानस्थःसनृपोनैवमुनिंवेदसमागतम् ५४ ददौशापंमुनिर्भूपंदृष्ट्वात्मानंतुनोत्थितम् ॥ तपोमदेनसंभ्रांतस्त्वंयस्मान्नोत्थितोऽसिमाम् ५५
अतोभवगजोभ्रांतोमदेनविपिनेऽचिरात् ॥ तंश्रुत्वानृपतिःशापंतंप्रणम्यपुनःपुनः ५६ विशापंप्रार्थयामासमुनिःप्राहहरेःकरात् ॥ भविष्यतिविमुक्तिस्तेयदाग्राहोधरिष्य
ति ५७ पुरातदैवगंधर्वस्त्वप्सरोगणसेवितः ॥ सरस्यस्मिञ्जलक्रीडांकर्तुंहूहूःसमागतः ५८ सरस्यघमर्षणार्थंदृष्ट्वासदेवलंचिरम् ॥ संस्थितंतंबहिःकर्तुंगंधर्वःसव्याचिं
तयत् ५९ स्वयंभूत्वाजलेलीनस्तत्पादौस्वकरेणहि ॥ दृढंधृत्वाकर्षयंतंज्ञात्वातमशपन्मुनिः २६० ग्राहवन्मेधृतौपादौतस्माद्ग्राहोभवाऽत्रवै ॥ तेनसंप्रार्थितःप्राहहरि
स्त्वामुद्धरिष्यति ६१ एवंतौपूर्वशापेनपतितावतिसंकटे ॥ हरिरुद्धृत्यतौताभ्यांययौस्वीयस्थलंपुनः ६२ क्षुधितेनाथताक्ष्येणप्रार्थितःप्राहतंहरिः ॥ गच्छभक्षस्त्वप

[1] अगस्त्यः ।

तितेगजनककलेवरे ६३ ययौताक्ष्यःसरःपुण्यंतावद्भूभंगदृध्वराट् ॥ कलेवरांतिकंप्राप्तस्तंनिहत्यखगेश्वरः ६४ पदेनैकेनतुभंगमपरेणकलेवरे ॥ धृत्वाताक्ष्यःशुद्धदेशंभक्षणार्थं सा. कां.
आ. रा. मपश्यत ६५ तावत्क्षीरार्णवेजांबूनदवृक्षंसमीक्ष्यसः ॥ आयामविस्तरोच्चैस्तुसहस्रयोजनंशुभम् ६६ तच्छाखायांविशालायांयावत्तस्थौसपक्षिराट् ॥ तावद्भंजतच्छाखा
॥ २३ ॥ वालखिल्यैरधोमुखैः ६७ तपद्भिःषष्टिसाहस्रैश्चिरकालंसमाश्रिता ॥ तांस्तादृशान्विलोक्याऽथतच्छापभयशंकितः ६८ धृत्वास्वचंचुनाशाखांबभ्रामगगनेपुनः ॥ ततोदृ १
ष्ट्वाकश्यपंस्वतातंनत्वाव्यजिज्ञपत् ६९ वदशुद्धांभुवंमेऽद्यकुर्वेऽहंयत्रभोजनम् ॥ तदातंकश्यपःप्राहशतयोजनसागरे २७० लंकानाम्नीशुद्धभूमिस्तत्रत्वंकुरुभोजनम् ॥
तत्पितुर्वचनाल्लंकांययौताक्ष्यःक्षणेनसः ७१ प्रोच्चयोःपक्षयोःशाखांस्थाप्यतान्भक्षयन्मुदा ॥ तत्त्यक्तैरस्थिभिस्तत्रशृंगाणित्रीणिचाभवन् ७२ त्रिकूटइतिनाम्नासलंका
यांगिरिराडभूत् ॥ तेषुशृंगेषुतांशाखांताक्ष्यःसंस्थाप्यसंययौ ७३ वालखिल्यास्तपोंतेतेययुर्विष्णोःपरंपदम् ॥ आसीच्छाखाऽन्तरालेसालंकायांशृंगमूर्द्धसु ७४ ग्रावभू
तांशिवलेननविदुस्तांतुराक्षसाः ॥ लंकाऽग्निनाद्रवीभूतामर्दयंतीक्षपाचरान् ७५ पपाततद्रसेनासील्लंकाभूमिर्हिरण्मयी ॥ तांदृष्ट्वाचकितोवेगाद्वनेसीतांययौकपिः ७६
दृष्ट्वाऽशोकेपुनःसीतांतामाहकपिकुञ्जरः ॥ मत्स्कन्धसंस्थितारामम्रद्यपश्यासिजानकि ७७ साप्राहमोचितामन्यैर्मांरामोनसहिष्यति ॥ नीत्वापुनर्मुद्रिकांत्वंराघवाय
समर्पय ७८ इत्युक्त्वातत्करेसीताददौश्रीराममुद्रिकाम् ॥ ततस्तांमारुतिःस्पृष्ट्वानत्वाशीघ्रंययौपुनः ७९ आरुरोहसुवेलाद्रिंचूर्णंतमकरोद्गिरिम् ॥ एतस्मिन्नन्तरेब्रह्माद
दौपत्रंसविस्तरम् २८० यद्यत्कृतंमारुतिनालंकायांतस्यसूचकम् ॥ तद्गृह्यमारुतिर्वेगान्नत्वास्पृष्ट्वाविधिंपुनः ८१ ततउड्डीयवेगेनययावाकाशवर्त्मना ॥ कुर्वन्शब्दंमहा
घोरंकपीनामूर्ध्वतस्तदा ८२ उदग्दिश्यंतराकिंचित्पपातभुविमारुतिः ॥ ततोदृष्ट्वाकपींस्तत्रदृष्ट्वैकंमुनिसत्तमम् ८३ किंचिद्गर्वसमाविष्टस्तंमुनिंप्राहमारुतिः ॥ मयाश्री
रामकार्यंतुकृतमस्तिमुनीश्वर ८४ पानीयंपातुमिच्छामिदर्शयस्वजलाशयम् ॥ तर्जन्यादर्शयामासमुनिस्तस्मैजलाशयम् ८५ ततःसमारुतिर्मुद्रांमणिंपत्रंमुनेःपुरः ॥
संस्थाप्यनीरंपातुंवैययौकासारमुत्तमम् ८६ ततस्तत्रकपिःकश्चिन्मुद्रिकांमुनिसंनिधौ ॥ कमंडलौप्राक्षिपत्सययौतावच्चमारुतिः ८७ गृहीत्वातंमणिंपत्रंमुनिंपप्रच्छमु
द्रिकाम् ॥ मुनिर्भ्रूसंज्ञयातस्मैकमंडलुमदर्शयत् ८८ ततःकमंडलौतूर्णंमुद्रिकामवलोकयत् ॥ तावद्ददर्शांजनेयस्तास्मिन्श्रीराममुद्रिकाः ८९ दृष्ट्वासहस्रशस्तत्रचकि
तःप्राहतंमुनिम् ॥ कुतस्त्विमामुद्रिकाश्चवदकाममममुद्रिका २९० एतासुत्वंमुनिश्रेष्ठतदातंमुनिरब्रवीत् ॥ यदायदावायुपुत्रैःसीतानांराघवाज्ञया ९१ लंकांगत्वासमानी
ताशुद्धिमुद्रास्तदातदा ॥ मदग्रेस्थापितास्ताश्चकपिभिश्चकमंडलौ ९२ निक्षिप्तास्तास्त्विमाःसर्वाःपश्यैतासुस्वमुद्रिकाम् ॥ तन्मुनेर्वचनंश्रुत्वागतगर्वस्तमब्रवीत् ९३
कियंतोराघवाश्चात्रसमायातामुनीश्वर ॥ मुनिस्तंप्राहनिष्कास्यगणयस्वाऽन्यमुद्रिकाः ९४ कमंडलोरंजलिभिस्तदाऽथमुद्रिकामुहुः ॥ बहिःक्षिपन्मारुतिःसनातं ॥ २१ ॥
तासांददर्शसः ९५ पुनःकमंडलौकृत्वामुनिंनत्वाकपिःक्षणम् ॥ चिंतयामासमनसिमादृशैःशतशःपुरा ९६ समानीतास्तिसीतायाःशुद्धिःकागणनाऽद्यमे ॥ इतिनि
श्चित्यमनसिगतगर्वस्तदाकपिः ९७ पुनर्दक्षिणमार्गेणययौयत्रांगदादयः ॥ प्रायोपवेशनस्थास्तेतंदृष्ट्वातुष्टमानसाः ९८ बभूवुर्वानराःसर्वेसमालिंग्याऽथतंमुहुः ॥ ज्ञा

त्वातन्मुखतःसीतादृष्टाऽशोकवनेत्विति ९९ ययुस्तेराघवंशीघ्रंमार्गेसुग्रीवपालितम् ॥ दृष्ट्वामधुवनंसर्वेदृष्ट्वातंवालिनंदनम् ५२००फलानिभक्षयामासुर्दधिवक्रोन्यषेधयत् ॥
ततस्तेताडयामासुर्दधिवक्रंकपीश्वरम् १ ज्ञात्वातंमातुलमपिसुग्रीवस्यांगदादयः ॥ सगत्वासकलंवृत्तंसुग्रीवायन्यवेदयत् २ सोऽपिश्रुत्वाजनकजादृष्टातैरित्यमन्यत ॥
नोचेन्मधुवनंरम्यंकथमश्नंतिवानराः ३ ततोविसर्जयामासदधिवक्रंकपीश्वरः ॥ मानिषेधस्त्वयाकार्यस्त्वंशीघ्रंप्रेषयस्वतान् ४ ममांतिकंतनोगत्वादधिवक्रस्तथाऽकरोत् ॥
ततःसुग्रीववचनंश्रुत्वातेनसमीरितम् ५ ययुस्तेवानराःसर्वेरामंनत्वापुरःस्थिताः ॥ ततोहर्षान्मारुतिःसब्रह्मपत्रंन्यवेदयत् ६ दत्वाचूडामणिंरामंकाकवृत्तंन्यवेदयत् ॥
तच्छ्रुत्वासकलंवृत्तंज्ञात्वामारुतिनाकृतम् ७ लंकायांब्रह्मपत्रेणरामस्तुष्टोबभूवसः ॥ समालिंग्यहनूमंतंराघवोवाक्यमब्रवीत् ८ तवोपकारिणश्चाहंनपश्याम्यद्यमारुते ॥
कर्तुंप्रत्युपकारंतेधन्योऽसिजगतीतले ९ परिरंभोहिमेलोकेदुर्लभःपरमात्मनः ॥ अतस्त्वंममभक्तोऽसिप्रियोऽसिहरिपुङ्गव १० यत्पादपद्मयुगुलंतुलसीदलाद्यैःसंपूज्यवि
ष्णुपदवीमतुलांप्रयाति ॥ तेनैवकिंपुनरसौपरिरब्धमूर्तीरामेणवायुतनयःकृतपुण्यपुंजः ११ रामंसमारुतिःप्राहभीतभीतोऽतिकंपितः ॥ मयाऽपराधितमितिमुद्राप्राप्तंमु
नेर्वचः १२ तच्छ्रुत्वारामचंद्रोऽपिविहस्योवाचमारुतिम् ॥ मयैवदर्शितंमार्गेकौतुकंमुनिरूपिणा १३ त्वद्गर्वपरिहारार्थंमुद्रिकांमत्करेत्विमाम् ॥ कनिष्ठिकायांत्वंपश्यस
मानीतात्वयाद्यवै १४ तांराममुद्रिकांदृष्ट्वाश्रीरामस्यकरांगुलौ ॥ ननामगतगर्वःसरामंविष्णुममन्यत १५ मय्यप्यस्यैवकृपयापौरुषंचेत्यमन्यत ॥ एवंगिरींद्रजेमोक्तंच
रित्रंसुंदराभिधम् १६ रामार्थंवायुपुत्रेणकृतंसर्वार्थदायकम् १७ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वाल्मीकीये सारकांडे सुंदरचरित्रे सीताशु
द्धिर्नामनवमःसर्गः ॥ ९ ॥ ॥ श्रीशिवउवाच ॥ अथाहमारुतिंरामोमांवदस्वसविस्तरम् ॥ लंकास्वरूपंज्ञात्वाचप्रतीकारंकरोम्यहम् १ तद्रामवचनंश्रुत्वाकथयामा
समारुतिः ॥ लंकादिव्यपुरीदेवत्रिकूटशिखरेस्थिता २ स्वर्णप्राकारसहितास्वर्णाट्टालकसंयुता ॥ परिखाभिःपरिवृतापूर्णाभिर्निर्मलोदकैः ३ नानोपवनशोभाढ्यादि
व्यवापीभिरावृता ॥ गृहैर्विचित्रशोभाढ्यैर्मणिस्तंभमयैःशुभैः ४ पश्चिमद्वारमासाद्यगजवाहाःसहस्रशः ॥ उत्तरद्वारितिष्ठंतिवाजिवाहाःसपत्तयः ५ तिष्ठंत्यर्बुदसंख्या
तागजाश्वरथपत्तयः ॥ रक्षयंतिसदालंकांनानास्त्रकुशलाःप्रभो ७ संक्रमैर्विविधैर्लंकाशतघ्नीभिश्चसंयुता ॥ एवंस्थितायांदेवेशशृणुत्वद्दासचेष्टितम् ८ दशाननबलौघ
स्यचतुर्थांशोमयाहतः ॥ दग्धालंकापुरीस्वर्णप्राकारोधर्षितोमया ९ शतघ्न्यःसंक्रमाश्चैवनाशितामेरघूद्वह ॥ देवत्वद्दर्शनादेवलंकाभस्मीभवेत्पुनः १० सुवेलाद्रिश्चोत्तरे
ऽस्तिपरलंकाऽस्तिपश्चिमे ॥ निकुंभिलादक्षिणेऽस्तितत्रास्तेयोगिनीवटः ११ पूर्वेचलघुलंकाऽस्तिसामध्येकांतिमंडिता ॥ त्रिकूटशिखरेरम्यामत्पुच्छानलध
र्षिता १२ प्रस्थानंकुरुदेवेशगच्छामोलवणार्णवम् ॥ तन्मारुतेर्वचःश्रुत्वासुग्रीवंप्राहराघवः १३ सुग्रीवसैनिकान्सर्वान्प्रस्थानायाभिचोदय ॥ इदानीमेव
विजयोमुहूर्तस्त्वद्यवर्तते १४ आश्विनीशुक्लदशमीश्रवणर्क्षसमन्विता ॥ शुभाऽद्यवानरश्रेष्ठगच्छामोलवणार्णवम् १५ रक्षंतुयूथपाःसेनामग्रेपृष्ठेचपार्श्वयोः ॥ न
लोभवत्वग्रसरःपृष्ठेनीलोऽस्त्वरक्षतु १६ सुषेणःसव्यपार्श्वेमेजांबवानितरेमम ॥ गजोगवाक्षोगवयोमैंदश्चैतेऽद्यवानराः १७ वन्हिनैर्ऋतवाय्वीशचतुर्दिक्षुस

मंततः ॥ रक्षन्तुवानरींसेनांद्विविदाद्यास्तथापरे १८ सर्वेगच्छन्तुसर्वत्रसेनायाःशत्रुघातिनः ॥ आरुह्यमारुतिंचाहंगच्छाम्यग्रेंगदंततः १९ आरुह्यलक्ष्मणोयातु
सुग्रीवत्वंमयासह ॥ आगच्छस्वेतिचाज्ञाप्यहरीन्रामःसलक्ष्मणः २० प्रतस्थेदक्षिणाशायांसेनामध्यगतोविभुः ॥ तदातेकपयश्चकुर्भुभुःकारान्भयानकान् २१ वादया
मासुर्वाद्यानिपणवानकगोमुखैः ॥ वारणेंद्रनिभाःसर्वेवानराःकामरूपिणः २२ गतास्तदादिवारात्रंकचित्तस्थुर्नतेक्षणम् ॥ अभवञ्छकुनालंकांगच्छतोराघवस्याहि
२३ तेसह्यंसमतिक्रम्यमलयंचतथागिरिम् ॥ आययुश्चानुपूर्व्येणतेसर्वेदक्षिणार्णवम् २४ कृतःसेनानिवासश्चराघवेणाऽब्धिसैकते ॥ चक्रुर्मंत्रंसागरस्यतरणार्थंप्लवंगमाः
२५ लंकायांवायुपुत्रेणकृतंदृष्ट्वासरावणः ॥ प्रहस्तादींस्तदाप्राहकथमग्रेभविष्यति २६ एकेनकपिनाऽस्माकंपुरतोज्वालितापुरी ॥ दृष्टासीतावनंभग्नंराक्षसानिहतारणे
२७ ममातिलालितःपुत्रःकनीयान्निहतोरणे ॥ तदातेमंत्रिणःसर्वेदद्दुर्धैर्यंदशाननम् २८ राजन्नुपेक्षितोऽस्माभिर्मर्कटोऽयमितिस्फुटम् ॥ वयंतवाज्ञयाकुर्मोजगत्कृत्स्न
मवानरम् २९ कुंभकर्णस्तदाप्राहरावणंराक्षसेश्वरम् ॥ त्वयायोग्यंकृतंनैतद्यद्धृत्वाजानकीहृता ३० यद्यप्यनुचितंकर्मत्वयाकृतमजानता ॥ सर्वंसमंकरिष्यामिस्वस्थचि
त्तोभवप्रभो ३१ देहिदेवममानुज्ञांहत्वारामंसलक्ष्मणम् ॥ सुग्रीवंवानरांश्चैवागमिष्यामिपुनःक्षणात् ३२ कुंभकर्णवचःश्रुत्वातदाप्राहविभीषणः ॥ महाभागवतःश्रीमान्रा
ममक्त्यैकतत्परः ३३ विलोक्यकुंभश्रवणादिदैत्यान्मत्तप्रमत्तानतिविस्मयेन ॥ विलोक्यकामातुरमप्रमत्तोदशाननंप्राहविशुद्धबुद्धिः ३४ नकुंभकर्णेंद्रजितौचराजंस्तथा
महापार्श्वमहोदरौतौ ॥ निकुंभकुंभौचतथातिऽकायःस्थातुंनशक्तायुधिराघवाग्रे ३५ सीतांचसत्कृत्यमहाधनेनदत्वाऽभिरामायसुखीभवत्वम् ॥ नोचेन्नरामेणविमोक्ष्यसे
त्वंगुप्तःसुरेंद्रैरपिशंकरेण ३६ एवंशुभंरावणःसविभीषणवचोहितम् ॥ आत्मनःप्रतिजग्राहनैवासौसौख्यकारणम् ३७ कालेननोदितोदैत्योविभीषणमथाब्रवीत् ॥ बंधुरूपेण
शत्रुस्त्वंजातोनास्त्यत्रसंशयः ३८ योन्यस्त्वेवंविधंब्रूयाद्वाक्यंहन्मितदैवतम् ॥ उत्तिष्ठगच्छदुर्बुद्धेधिक्त्वांरक्षःकुलाधम ३९ रावणेनैवमुक्तःसपरुषेणविभीषणः ॥ चतु
र्भिर्मंत्रिभिर्युक्तोययौश्रीराघवांतिकम् ४० राघवश्चापितंज्ञात्वातेनसख्यंचकारसः ॥ हनूमतोदधेस्तीरेलंकांचसिकतोद्भवाम् ४१ कारयित्वारघुश्रेष्ठस्तत्रमित्रंविभीष
णम् ॥ लंकायाश्चैवराज्यार्थंवानरैरभ्यषेचयत् ४२ तदाविभीषणंप्राहरामचंद्रोविहस्यच ॥ न्यासभूतात्वियंलंकातावत्कालंतवाऽस्तिमे ४३ यावत्तांरावणंहत्वातवद्दास्या
म्यहंशुभाम् ॥ हनूमतास्त्वियंनाम्नालंकाख्यातिंगमिष्यति ४४ हनुमल्लंकाऽब्धेस्तीरेवर्ततेऽद्यापिपार्वति ॥ विभीषणाद्रावणांतेरामस्तांमोचयिष्यति ४५ एत
स्मिन्नंतरेतत्रगगनस्थःशुकोऽब्रवीत् ॥ प्रेषितोरावणेनैवसुग्रीवंप्राहवेगतः ४६ त्वामाहरावणोराजातवनास्त्यर्थविप्लवः ॥ अहंयद्यहरंभार्यांराजपुत्रस्यकिंतव ४७ किष्किं
धांयाहिहरिभिस्त्वंवैरंकुरुमामया ॥ तंधृत्वावानराःशीघ्रंबबंधुर्लोहबंधनैः ४८ शार्दूलश्चापिसेनांतांदृष्ट्वाविषमभाषत ॥ तच्छ्रुत्वारावणश्चापिदीर्घचिंतापरोऽभवत् ४९
रामःसंमंत्रयामासतदैकांतेस्थितःक्षणम् ॥ विभीषणेनसुग्रीवमारुतिभ्यांसमन्वितः ५० तीर्त्वार्घंजलधेर्गुल्मंसंस्थितोबन्धुनायुतः ॥ सर्वेषांवचनंश्रोतुंराघवेणाऽथसागरः ५१

१ रत्नमितिपाठः ।

९१ मेघवद्गर्जनांकुर्वन्त्वामहस्तेनधिकृतः ॥ अद्यापिसागरस्तत्रतूष्णीमेवसविद्यते ९२ ततःसंमंत्र्यरामस्तुतदासागररोषसि ॥ प्रायोपवेशनंचक्रेदर्भानास्तीर्यवेगतः ९३
दिनद्वयमतिक्रम्यतृतीयदिवसेतदा ॥ उत्थायदर्भशयनात्पुनर्लक्ष्मणमब्रवीत् ९४ पश्यलक्ष्मणदुष्टोऽसौवारिधिर्मामुपागतम् ॥ नाभिनंदतिदुष्टात्मादर्शनार्थममा
नघ ९५ जानातिमानुषोऽयंमांकिंकरिष्यतिवानरैः ॥ अद्यपश्यमहाबाहोशोषयिष्यामिवारिधिम् ९६ पद्ग्यामेवाऽद्यगंच्छंतुवानराविगतज्वराः ॥ इत्युक्त्वाचापमाकृष्य
संदधेबाणमुत्तमम् ९७ तदाचचालवसुधादिशश्चतमसावृताः ॥ चुक्षुभेसागरोवेलांभयाद्योजनमत्यगात् ९८ तिमिनक्रझषामीनाःप्रतप्ताःपरितत्रसुः ॥ एतस्मिन्नंतरे
साक्षात्सागरोदिव्यरूपधृक् ९९ रत्नैरुपायनंरामंसमर्प्यप्रणनामसः ॥ अथतुष्टावदीनात्माप्रार्थयामासराघवम् ६० अभयंदेहिमेरामलंकामार्गंददामिते ॥ इतितद्व
चनंश्रुत्वाराघवःप्राहसागरम् ६१ अमोघोऽयंमहाबाणःकस्मिन्देशेनिपात्यताम् ॥ लक्ष्यंदर्शयमेशीघ्रंबाणस्याऽस्यपयोनिधे ६२ ॥ सागरउवाच ॥ रामोत्तरप्रदे
शेऽस्तिद्रुमकल्पइतिश्रुतः ॥ प्रदेशस्तत्रबहवःपापात्मानोदिवानिशम् ६३ बाधंतेमांरघुश्रेष्ठतत्रतेपात्यतांशरः ॥ रामेणमुक्तोबाणोऽपौक्षणादाभीरमंडलम् ६४ ह
त्वापुनःसमागत्यतूणीरेपूर्ववत्स्थितः ॥ ततोऽब्रवीद्रघुश्रेष्ठंसागरोविनयान्वितः ६५ मयिसेतुंकारयस्वनलेनोपलनिर्मितम् ॥ विश्वकर्मसुतश्चायंवरोलब्धोऽस्त्यनेनहि
६६ द्विजस्यजान्हवीतीयेशालिग्रामस्त्वनेनहि ॥ त्यक्तस्तदातेनशप्तःपाषाणादितरिष्यति ६७ त्वद्धस्तादितिशापोऽयंवरएवाऽत्रसस्मृतः ॥ इत्युक्त्वाराघवंनत्वा
ययौसिंधुरदृश्यताम् ६८ नलमाज्ञापयामाससेत्वर्थंरघुनंदनः ॥ सेतुमारभमाणस्तुविघ्नेशंस्थाप्यराघवः ६९ नवग्रहाणांपूजार्थंपाषाणान्नवसादरम् ॥ नलहस्तेनसंस्था
प्यपूर्वंतत्रमहोदधौ ७० ततःसागरसंयोगेस्वनाम्नालिंगमुत्तमम् ॥ स्थापयामीतिनिश्चित्यमारुतिंवाक्यमब्रवीत् ७१ काशींगत्वाशिवाल्लिंगमाननीयमनुत्तमम् ॥
मुहूर्तमध्येनोचेन्मेमुहूर्तोऽतिक्रमोभवेत् ७२ तद्रामवचनंश्रुत्वातथेत्युक्त्वासमारुतिः ॥ ययावाकाशमार्गेणक्षणाद्वाराणसींमम ७३ तत्रागत्याऽथमांनत्वारामकार्यंन्यवे
दयत् ॥ तच्छ्रुत्वाऽथमयादेविराघवायहनूमते ७४ द्वेलिंगेह्यर्पितेश्रेष्ठेततोऽहंकपिमब्रुवम् ॥ मयाऽपिदक्षिणेगंतुंपूर्वमेवविनिश्चितम् ७५ अगस्तिनाविशेषेणयास्यामि
राघवाज्ञया ॥ एवंमद्वचनंश्रुत्वामारुतिःप्राहमांपुनः ७६ कदाविनिश्चितंपूर्वंत्वयाऽत्रकुंभजन्मना ॥ तत्सर्वंमांवदस्वाऽद्यकृपांकृत्वाममोपरि ७७ तन्मारुतिवचःश्रु
त्वाततोहमब्रुवंकपिम् ॥ मारुतेत्वंशृणुष्वाऽद्यपूर्ववृत्तंवदामिते ७८ कदाचिन्नारदःश्रीमान्स्नात्वाश्रीनर्मदांभसि ॥ श्रीमदोंकारमभ्यर्च्यसर्वदंसर्वदेहिनाम् ७९ व्रजन्विलोक
यांचक्रेपुरोविंध्यंधराधरम् ॥ संसारतापसंहारिरेवावारिपरिष्कृतम् ८० रूपद्वयेनकुर्वंतंस्थावरेणचरणेच ॥ साभिख्येनयथार्थाख्यामुच्चैर्वसुमतीमिमाम् ८१ अथतंनारदं
दृष्ट्वाविंध्यःप्रत्युज्जगामसः ॥ गृहमानीयविधिवत्पूजयामाससादरम् ८२ गतश्रममथालोक्यबभाषेऽवनतोगिरिः ॥ अघसंघःपरिहृतस्त्वदंघ्रिरजसामम ८३ त्वदंगसंगिम
हसासहसाप्यंतरंतमः ॥ सकलाघंकरंचाद्यसुदिनंचाद्यमेमुने ८४ प्राक्तैःसुकृतैरद्यफलितंमेचिरार्जितैः ॥ धराधरत्वंकुलिषुमान्यंमेऽद्यभविष्यति ८५ इतिश्रुत्वातदा

१ कुर्वंतीमितिपाठः ।

किंचिदुच्छ्वस्यस्थितवान्मुनिः ॥ पुनरूचेकुलिशरःसंभ्रमापन्नमानसः ८६ उच्छ्वासकारणंब्रह्मन्ब्रूहिसर्वार्थकोविद ॥ तवाऽहंमार्जयाम्यद्यहृत्खेदंक्षणमात्रतः ८७
धराधरणसामर्थ्यमेवंदोपूर्वंपूरुषैः ॥ वर्ण्यंतेसमुदायात्तदहमेकोदधेधराम् ८८ गौरीगुरुत्वाद्धिमवानाधिपत्याच्चभूभृताम् ॥ संबंधित्वात्पशुपतेःसएकोमानभृत्सताम् ८९
नमेरुःस्वर्णपूर्णत्वाद्रत्नसानुतयाऽथवा ॥ सुरसद्मतयावाऽपिकापिमान्योमतोमम ९० परंशतंनकिंशैलाइलाकलनकेलयः ॥ इहसंतिसतांमान्यामान्यास्तेतुस्वभूमि
षु ९१ मंदेहदेहसंदोहाउदयैकदयाश्रिताः ॥ निषधश्चौषधिधुरोप्यस्तोप्यस्तामितप्रभः ९२ नीलश्चनीलनिचयोमंदरोमंदलोचनः ॥ सर्पालयस्समलयोरायंनावापरे
वतः ९३ हेमकूटत्रिकूटाद्याःकूटोत्तरपदास्तुते ॥ किष्किंधकौंचसह्याद्याभारसह्यानतेभुवः ९४ इतिविंध्यवचःश्रुत्वानारदोहृद्यचिंतयत् ॥ अखर्वगर्वसंसर्गोमहत्त्वाय
नकल्पते ९५ श्रीशैलमुख्याःकिंशैलानेहसंत्यमलश्रियः ॥ येषांशिखरमात्रादिदर्शनंमुक्तयेसताम् ९६ अद्यास्यबलमालोच्यमितिध्यात्वाऽब्रवीन्मुनिः ॥ सत्यमुक्तंहिम
वतागिरिसारविदृण्वता ९७ परंशैलेषुशैलेंद्रमेरुस्त्वामवमन्यते ॥ मयानिःश्वसितंचैतत्त्वयिचापिनिवेदितम् ९८ अथवामद्विधानांहिकेयंचिंतामहात्मनाम् ॥ स्वस्त्य
स्तुतुभ्यमित्युक्त्वाययौसव्योमवर्त्मना ९९ गतेमुनौनिनिंदस्वमतीवोद्विग्नमानसः ॥ चिंतेविचारयामासमेरोःश्रेष्ठ्यंकथंत्विति १०० मेरुंप्रदक्षिणंकुर्यान्नित्यमेषदि
वाकरः ॥ सग्रहर्क्षगणोनूनंमन्यमानोबलाधिकम् १ इतिनिश्चित्यविंध्याद्रिर्ववृधेसस्पृधेक्षणः ॥ निरुध्यब्राघ्नमध्वानंस्वस्थोऽभूद्गगनांगणे २ ततःप्रभातेसूर्योऽसौदिशं
याम्यांसमुद्यतः ॥ गंतुरुद्धंस्वपंथानंदृष्ट्वास्वस्थोऽभवच्चिरम् ३ योजनानांसहस्रेद्वेद्वेशतेद्वेचयोजने ॥ यःस्वस्थश्चनिमेषार्द्धाद्यातिसोऽपिचिरंस्थितः ४ गतेबहुतिथेका
लेप्राच्योदीच्याधूशार्दिताः ॥ चंडरश्मेःकरव्रातपातसंतापतापिताः ५ पाश्चात्यादाक्षिणात्याश्चनिद्रामुद्रितलोचनाः ॥ भ्रमिताएवदृश्यंतेसतारग्रहमंबरम् ६ स्वाहा
स्वधावषट्कारवर्जितेजगतीतले ॥ पंचयज्ञक्रियालोपाच्चकंपेभुवनत्रयम् ७ ततःसुराविधेर्वाक्यादगस्तिंतद्गिरेर्गुरुम् ॥ प्रार्थयामासुश्चात्रेत्यसमुनिर्विव्हलोऽभवत् ८ त
दाऽगस्तिर्मयोक्तस्सगच्छत्वंदक्षिणांदिशम् ॥ वाक्पाशेनगिरिंबद्ध्वामाखिदत्वंभजस्वमाम् ९ अहमप्यचिरेणैवतवखेदापनुत्तये ॥ सेतौश्रीरामपूजार्थंयास्यामिदक्षि
णांदिशम् ११० इतिमद्वचनंश्रुत्वाऽगस्तिस्तुष्टमनास्तदा ॥ मुक्त्वाकाशींययौविंध्यंलोपामुद्रासमन्वितः ११ तमगस्त्यंसपत्नीकंदृष्ट्वाविंध्योऽतिकंपितः ॥ अतिख
र्वतरोभूत्वाविवक्षुरवनीमिव १२ आज्ञाप्रसादःक्रियतांकिंकरोस्मीतिचाब्रवीत् ॥ तद्विंध्यवचनंश्रुत्वाऽगस्तिःप्राहचसादरम् १४ विन्ध्यसाधुरसिप्राज्ञःमांचजानासि
तत्त्वतः ॥ पुनरागमनंचेन्मेतावत्खर्वतरोभव १४ इत्युक्त्वादक्षिणामाशामगस्तिःसययौतदा ॥ वेपमानोगिरिःप्राहपुनर्जन्माऽद्यमेऽभवत् १५ उच्छ्रिराद्वादशाब्दैः
समुनिंपश्यतिदक्षिणे ॥ नागतंतंमुनिंदृष्ट्वापुनःखर्वोऽवतिष्ठते १६ अद्यश्वोवापरश्वोवाह्यागमिष्यतिवैमुनिः ॥ इतिचिन्तामहाभारैर्गिरिराक्रांतवत्स्थितः १७ नाऽद्या
पिमुनिरायातिनाद्यापिगिरिरेधते ॥ अरुणोऽपिचतत्कालेकालज्ञोऽश्वानकालयत् १८ जगत्स्वास्थ्यमवापोच्चैःपूर्ववद्भानुसंचरैः ॥ समुनिर्दंडकंगत्वामद्वाक्यंसंस्मर

१ निषधोनौषधिधुरइतिपाठः । २ भ्रमिताइतिपाठः । ३ मत्खेदमितिपाठः । ४ भाइतिपाठः ।

न्हृदि ।१९ करोतिमत्प्रतीक्षांचतस्माद्यास्याम्यहंकपे ॥ इत्युक्तोमारुतिःकाश्यांमयादेविविसर्जितः १२० जगामाकाशमार्गेणशीघ्रंरामंसमारुतिः ॥ किंचिद्गर्वसमा
विष्टोलिंगद्वयसमन्वितः २१ तद्गर्वंराघवोज्ञात्वासुग्रीवादीन्वचोऽब्रवीत् ॥ मुहूर्तातिक्रमोमेऽद्यभविष्यतिततस्त्वहम् २२ कृत्वालिंगंसैकतंचसेतावद्यस्थापयामिवै ॥
इत्युक्त्वावानरान्सर्वान्मुनिभिःपरिवेष्टितः १२३ सैकतंस्थापयामासलिंगंरामोविधानतः ॥ तदासस्मारमनसिकौस्तुभंरघुनंदनः १२४ तावद्ययौमणिःशीघ्रंखा
त्कोटितपनोपमः ॥ तंबबंधमणिंकंठेकौस्तुभंरघुनंदनः २५ मण्युद्भवैर्धनैर्वस्त्रैरश्वाभरणधेनुभिः ॥ दिव्यान्नैःपायसाद्यैश्चपूजयामासतान्मुनीन् २६ ततस्तेमुनयस्तुष्टा
राघवेणाऽतिपूजिताः ॥ ययुःस्वीयाश्रमान्मार्गेतान्ददर्शसमारुतिः २७ पप्रच्छमारुतिर्विप्रान्यूयंकेनप्रपूजिताः ॥ तेप्यूचुर्लिंगमाराध्यराघवेणैवपूजिताः २८
ततस्तेषांवचनंश्रुत्वाक्रोधाविष्टोव्यचिंतयत् ॥ वृथाऽहंभ्रामितस्तेनरामेणाऽद्यप्रतारितः २९ इत्थंवदन्ययौरामंक्रोधात्स्वीयंपदद्वयम् ॥ भुविसंताडयपतितस्तदाभूम्यां
पदद्वयम् १३० गतंकपिस्तदाराममब्रवीत्किंनमेस्मृतिः ॥ सीताशुद्धिर्मयालंकांगत्वाऽऽनीतेतिसाऽद्यहि ३१ तस्यमेद्योपहासोऽत्रकाशींप्रेष्यत्वयाकृतः ॥ किमर्थं
भ्रामितश्चाहंयदीत्थंतेहृदिस्थितम् ३२ अभविष्यन्मयाज्ञातंचेत्पूर्वंहृद्गतंतव ॥ काशीमहंतर्हिगत्वाकिमर्थंलिंगमानये ३३ एकंत्वदर्थमानीतमपरंलिंगमुत्तमम् ॥
मयाऽऽत्मार्थंसमानीतंतवाग्रेकिंकरोम्यहम् ३४ एवंक्रोधयुतंवाक्यंकिंचिद्गर्वसमन्वितम् ॥ रामःश्रुत्वाकपिंप्राहकपेत्वंसत्यवागसि ३५ मयैतत्स्थापितंलिंगंसमुत्पाटयत्वं
बलात् ॥ स्थापयामित्वयानीतंकाश्याविश्वेश्वराभिधम् ३६ तथेत्युक्त्वामारुतिःससैकतस्येश्वरस्यच ॥ संवेष्ट्यमस्तकेपुच्छंबलेनांदोलयन्मुहुः ३७ त्रुटितंतत्कपेः
पुच्छंपपातभुविमूर्च्छितः ॥ जहसुर्वानराःसर्वेनचचालेश्वरस्तदा ३८ स्वस्थोभूत्वामारुतिश्चगतगर्वस्तदाऽभवत् ॥ ननामराघवंभक्त्याप्रार्थयामासतंमुहुः ३९
मयाऽपराधितंरामतत्क्षमस्वकृपानिधे ॥ तदाहमारुतिंरामस्त्वंमल्लिंगोत्तरेत्विदम् १४० विश्वनाथाभिधंलिंगंस्वीयंसंस्थापयाऽधुना ॥ तथेतिमारुतिर्लिंगंस्थापयामा
ससादरम् ४१ मारुतेश्चैवलिंगायददौरामोवरंतदा ॥ असंपूज्यविश्वनाथंमारुतेत्वत्प्रतिष्ठितम् ४२ ममादौपूजयंत्यत्रयेनरालिंगमुत्तमम् ॥ रामेश्वराभिधंसेतौतेषां
पूजावृथाभवेत् ४३ इत्युक्त्वातंपुनःप्राहरामोराजीवलोचनः ॥ मदर्थंयत्समानीतंत्वयालिंगंमहत्तमम् ४४ विश्वनाथस्यतत्तूष्णीमस्तुदेवालयेचिरम् ॥ अनर्चितमव
न्यांतदप्रतिष्ठितमुत्तमम् ४५ अग्रेकालांतरेणाऽहंतच्चापिस्थापयामिवै ॥ तत्तत्रवर्ततेऽद्यापिलिंगंविश्वेश्वरांतिके ४६ अप्रतिष्ठापितंभूम्यांनकेनाऽपिप्रपूजितम् ॥
पुनःप्राहकपिंरामस्त्वमत्रच्छिन्नलांगुलः ४७ वसभूम्यांगुप्तपादःस्मरन्स्वगर्वितांत्विदम् ॥ ततःकपिःस्वीयमूर्तिंस्थापयामासस्वांशतः ४८ छिन्नपुच्छागुप्तपादासातत्राऽ
द्यापिवर्तते ॥ पतितोमूर्च्छितोयत्रमारुतिस्तत्रतद्वरम् ४९ बभूवमारुतेर्नाम्नातीर्थंपापप्रणाशनम् ॥ रामस्तत्राकरोत्पुण्यंस्वनाम्नातीर्थमुत्तमम् १५० स्वांशेनस्थापया
मासमूर्तिंतत्ररघूद्वहः ॥ सेतुमाधवनाम्नीसावर्ततेऽद्यापिपार्वति ५१ स्वनाम्नालक्ष्मणश्चापिचकारतीर्थमुत्तमम् ॥ ततोरामःस्वहस्तेनस्पृष्ट्वामारुतिलांगुलम् ५२ चकार
पूर्ववद्रम्यंदृढसंधिप्रसादितः ॥ तत्पुच्छवेष्टनाज्जातःकृशोरामेशमस्तकः ५३ सतथैवकृशोऽद्यापितत्रास्तिशिवमस्तकः ॥ तदारभ्यत्यक्तगर्वश्चाभूद्रामेसमारुतिः ५४

 ततोऽहंसैकतांल्लिंगादाविर्भूयरघूद्वहम् ॥ अतुवंदेवितत्सर्वंशृणुष्वतेवदाम्यहम् ५५ राघवेंद्ररघुश्रेष्ठशृणुवृत्तंपुरातनम् ॥ एकदाऽहंपुराभूम्यांमलिनांबरसंयुतः५६भिक्षार्थं 
कौतुकाद्विप्ररूपेणविचरन्सुखम् ॥ ऋषीणामाश्रमाद्येषुह्यटंतंमांविलोक्यच ५७ मद्रूपमोहिताःसर्वाऋषिपत्न्यःसहस्रशः ॥ मत्पृष्ठेताःसमाजग्मुर्भर्तृभिर्वारिताअपि ॥
 ५८ तदातेचुक्षुभुःसर्वेमामज्ञात्वामुनीश्वराः ॥ ददुःशापंमहाघोरंक्रोधसंविग्नमानसाः ५९ रत्यर्थंमोहितानार्यस्त्वयातस्माद्द्विजाधम ॥ पतत्वद्यरतेरंगंतेलिंगंभुविनो 
गिरा १६० एवंद्विजैर्यदाशप्तःपतल्लिंगंतदाभुवि ॥ द्विजंच्छब्रस्यमेरामगतोऽहंगुप्ततांतदा ६१ द्विजनार्योप्यदृष्ट्वामांजग्मुःस्वंस्वंगृहंप्रति ॥ तल्लिंगंववृधेभूम्यांगगनं
व्याप्यसंस्थितम् ६२ तद्दृष्ट्वाचकितोवेधास्तस्यांतंद्रष्टुमुद्यतः ॥ पश्यतस्तस्यकोटयब्दैर्नांतमासीच्चवेधसः ६३ तदामामेत्यसविधिर्भयाद्वृत्तंन्यवेदयत ॥ अकालेप्रल
यस्त्वद्यशंभोऽनेनभविष्यति ६४ तदामयापूर्ववृत्तांविधिंसंश्राव्यसादरम् ॥ त्रिशूलोवेधसेदत्तस्तंच्छेत्तुंसोऽब्रवीच्चमाम ६५ कथंतेऽगंदारयेहंत्वमेवच्छेत्तुमर्हसि ॥ ततोम
यांकंखंडानिकृतानितस्यराघव ६६ त्रिशूलेनापिक्षिप्तानिभूम्यांनिपतितानिहि ॥ तज्जातान्यत्रलिंगानिज्योतिःसंज्ञानिद्वादश ६७ ॐकारःसोमनाथश्चत्र्यंबकोमल्लि
कार्जुनः ॥ नागेशोवैजनाथश्चकाशिविश्वेश्वरस्त्वहम् ६८ केदारेशोमहाकालोभीमेशोघुसृणेश्वरः ॥ एवमेकादशज्ञेयाज्योतिर्लिंगमयाःशुभाः ६९ गंधमादननाम्नेशोमे
रोरीशानदिक्स्थितः ॥ आसीच्चिरंनकस्याऽपिमानवस्याक्षिगोचरः १७० तदातेमुनयःसर्वेशिवंतुद्धातुर्लिंगतः ॥ ददुर्वरंपुनर्लिंगंतवास्तुगिरिजाप्रिय ७१ ततःप्रलय
वातेनगंधमादननामकम् ॥ तन्मेरोरुत्तरशृंगमेकदात्रापतद्भुवि ७२ तदिदंह्यब्धिसंयोगेदक्षिणेसागरांभसि ॥ गंधमादननाम्नेदंशृंगंपश्याऽत्रराघव ७३ गंधमादननाम्नेशं
लिंगंद्वादशमंत्विदम् ॥ त्वत्प्रतिष्ठितलिंगस्यहीशान्यामंतिकेस्थितम् ७४ एतावत्कालपर्यंतंनेदंकैश्चिद्विलोकितम् ॥ अद्यत्वयावानराद्यैर्दृष्टंरूपंष्टंविमोक्षदम् ७५ त्वत्प्र
तिष्ठितलिंगस्यप्रसादादवनीतले ॥ ख्यातिंगतंत्विदंलिंगंयस्मात्तस्माद्रघूत्तम ७६ अस्यांलिंगस्ययज्ज्योतिर्मदीयंत्वत्प्रतिष्ठिते ॥ यास्यत्यद्यसैकतेऽत्रलिंगेसेतौगिरामम
७७ ज्योतिर्लिंगंद्वादशमंतवरामेश्वराभिधम् ॥ वदंत्यत्रजनाःसर्वेह्यद्यारभ्यरघूत्तम ७८ पूजोत्सवादिकंकर्मयच्चत्किंचिद्गिराभम ॥ तत्रैवलिंगेतत्सर्वमस्तुरामेश्वरेसदा ॥
७९ अहंचापिमुनेर्वाक्यादगस्तेस्त्वद्गिरापिच ॥ त्यक्त्वाकाशीमागतोऽस्मित्वल्लिंगेऽस्मिन्वसाम्यहम् १८० प्रणमेत्सेतुबंधेयःपुमान्रामेश्वरंशिवम् ॥ ब्रह्महत्यादिपापेभ्यो
मुच्यतेमदनुग्रहात् ८१ त्वंवदाऽद्यरघुश्रेष्ठवरंयेनजनाःसदा ॥ स्नानार्थमानयिष्यंतिमणिकर्णिजलंमम ८२ तन्मद्वाक्यंसमाकर्ण्यराघवःप्राहहर्षितः ॥ सेतुबंधेनरःस्नात्वा
दृष्ट्वारामेश्वरंशिवम् ८३ संकल्प्यनियतोभूत्वागृहीत्वासेतुवालुकाम् ॥ करंडिकाभिर्यत्नेनगत्वावाराणसींशुभाम् ८४ क्षिप्त्वावेण्यांवालुकांतांत्यक्त्वावालुकरंडिकाम् ॥
आनीयगंगासलिलंरामेशमभिषिच्यच ८५ समुद्रेत्यक्तत्द्भारोब्रह्मप्राप्नोत्यसंशयम् ॥ संकल्पेनविनागंगारामेशंनागमिष्यति ८६ आगताचेत्तदाज्ञेयःसंकल्पःपूर्वजन्मनि॥ 
कृतोऽस्तीत्यत्रमद्वाक्यान्नात्रकार्याविचारणा ८७ एवंनानावरान्रामोयावल्लिंगाथसोऽब्रवीत् ॥ तावत्तत्रसमायातःकुंभजन्मामुनीश्वरः ८८ ननामशंकरंरामंरामोऽपिप्र

१ द्विजवेषिणोमेइतिपाठः । २ द्वादशखंडानीत्यर्थः । ३ वैद्यनाथश्चेतिपाठः ।

तदामुनिःप्राहरामंप्रसादात्तवराघव ८९ दर्शनंविश्वनाथस्यजातंमेऽद्याऽत्रवैचिरात् ॥ अद्याऽत्रतुष्टेर्जातामेलिंगमत्रकरोम्यहम् १९० इत्युक्त्वास्थापया
मासस्वनाम्नालिंगमुत्तमम् ॥ रामेश्वराग्निदिग्भागेकुंभजन्मामुदान्वितः ९१ पूजयामासतल्लिंगमगस्तीश्वरनामकम् ॥ नत्वास्तुत्वाविश्वनाथंरासंरामेश्वरंतथा ९२ दृष्ट्वा
पुरातनंलिंगंगंधमादननामकम् ॥ ययौस्वीयाश्रमंतुष्टःकुंभजन्मामुनीश्वरः ९३ सेतौरामेश्वरस्यैवदेवदेवालयेशुभे ॥ दिश्याग्नेय्यामगस्तीशमीशान्यांगंधमादनम् ९४
वर्ततेऽद्यापिद्वेलिंगेकश्चिज्जानातिवानवा ॥ प्रसिद्धोऽभूत्तुरामेशःस्वर्गमृत्युरसातले ९५ ततोरामाज्ञयासेतुंनलःकर्तुंमनोदधे ॥ किंचिद्गर्वसमाविष्टस्तज्ज्ञातंराघवेणहि
९६ यावदेकांशिलांत्यक्त्वानलोऽन्यांप्राक्षिपच्छिलाम् ॥ तावत्तरंगकल्लोलैःसागरस्यइतस्ततः ९७ गच्छंतिस्मशिलाःसर्वास्ताद्दृष्ट्वाखिन्नमानसः ॥ गतगर्वस्तदारामं
नलोऽवृत्तंन्यवेदयत् ९८ रामःश्रुत्वानलंप्राहरामेतिद्वेऽक्षरेमम ॥ दृषदोःसंधिसिद्ध्यर्थंपृथग्विलिखतांद्वयोः ९९ सर्वत्रैवंलिखित्वाहिदृढःसंधिर्भविष्यति ॥ तथेतिरामव
चनात्तथाचक्रेनलस्तदा २०० कृतःपंचदिनैःसेतुःशतयोजनमुत्तमः ॥ कृतानिप्रथमेनाऽन्हायोजनानिचतुर्दश १ द्वितीयेनतथाचान्हायोजनानांचविंशतिः ॥ तृती
येनतथाचान्हायोजनान्येकविंशतिः २ चतुर्थेनतथाचान्हाद्वाविंशतिरितिश्रुतम् ॥ पंचमेनत्रयोविंशद्योजनानांशतंत्विति ३ विस्तृतोद्वादशप्रोक्तोयोजनानिदृषन्मयः
एवंबबंधसेतुंसनलोवानरसत्तमः ४ येमज्जंतिनिमज्जयंतिचपरान्तेप्रस्तरादुस्तरेवार्धौयेनतरंतिवानरभटान्संतारयंतेऽपिच ॥ नैतेग्रावगुणानवारिधिगुणानोवानराणांगु
४९ णाःश्रीमद्दाशरथेःप्रतापमहिमासोऽयंसमुज्जृंभते ५ तेनैवजग्मुःकपयोयोजनानांशतंद्रुतम् ॥ आरुह्यमारुतिंरामोलक्ष्मणोऽप्यंगदंतथा ६ जगामवायुवल्लंकांसंनिर्विशे
नयाद्भुतः ॥ असंख्याताःसुवेलाद्रिंरुरुहुःप्लवगोत्तमाः ७ ततःसैन्ययुतोरामःसुवेलाद्रिंययौमुदा ॥ दिदृक्षूराघवोलंकामारुरोहाचलंशुभम् ८ सुवेलाद्रिमहारम्यंतरुवल्लि
विराजितम् ॥ ददर्शलंकांविस्तीर्णांरामश्चित्रध्वजाकुलाम् ९ चित्रप्रासादसंबाधांस्वर्णप्राकारतोरणाम् ॥ परिखाभिःशतघ्नीभिःसंक्रमैश्चविराजिताम् १० प्रासादोप
रिविस्तीर्णप्रदेशेदशकन्धरम् ॥ पश्यंतंकपिसैन्यंतंसन्ददर्शरघूद्वहः ११ ततोरामेणमुक्तःसशुकोगत्वादशाननम् ॥ कपिसैन्यंदर्शयंस्तंबोधयामासरावणम् १२ सीतांप्रय
च्छरामायलंकाराज्येविभीषणम् ॥ कृत्वातंशरणंयाहिनोचेद्रामान्नमोक्ष्यसे १३ तच्छ्रुत्वारावणःक्रोधाच्छुकंधिकृत्यवैमुदः ॥ दूतैर्गेहाद्बहिःकृत्वारामसेनांव्यलोकयत्
१४ शुकोऽपिब्राह्मणःपूर्वंवरिष्ठोब्रह्मवित्तमः ॥ अयजत्क्रतुभिर्देवान्विरोधोराक्षसैरभूत् १५ वज्रदंष्ट्रइतिख्यातस्तदैकोराक्षसोमहान् ॥ मांसान्नंयाचितंदृष्ट्वामुनिनाकुंभ
जन्मना १६ शुकभार्यावपुर्धृत्वानरमांसंसमर्पयत् ॥ तदाशप्तःशुकस्तेनत्वंरक्षोभवमाचिरम् १७ रक्षःकृतंपुनर्ध्यानाज्ज्ञात्वातत्प्रार्थितोऽब्रवीत् ॥ रामस्यदर्शनंकृत्वाबोध
यित्वादशाननम् १८ त्वंप्राप्स्यसिनिजंरूपंतस्माज्जातःशुकोद्विजः ॥ सुवेलशिखरेसंस्थःसंमंत्र्यकपिभिस्ततः १९ सूचनार्थंरिपुंरामोऽङ्गदंलंकामचोदयत् ॥ सोऽपिरामा
ज्ञयागत्वानानानीत्युत्तरैस्तदा २२० रावणंबोधयामाससभायांलांगुलासने ॥ संस्थितोऽभीतवद्वालीतनयःस्वस्थमानसः २१ शृणुरावणमद्वाक्यंहितंतेप्रवदाम्यहम् २२
सीतांसत्कृत्यसधनांप्रयच्छराघवंजवात् ॥ रामंनारायणंविद्धिविद्वेषंत्यजराघवे ॥ यत्पादपोतमाश्रित्यज्ञानिनोभवसागरम् २३ तरंतिभक्तिपूतास्तेह्यतोरामोनमानुषः ॥

मद्वाक्यंकुरुराजेंद्रकुलकौशल्यहेतवे २४ एवंनानाविधैर्वाक्यैरंगदेनाऽतिबोधितः ॥ सोऽथनीत्युत्तराण्यस्यनाशृणोद्वानरस्यच २५ उवाचक्रोधसंयुक्तोवानरंसदशाननः ॥
भीषयसेऽद्यर्किमांत्वंगवणंलोकरावणम् २६ येनसर्वेजितादेवाःकैलासःकंपितोमया ॥ तस्यमेऽग्रेमर्कटत्वंकत्थसेर्किंमुधाऽद्याहि २७ क्षणेनराघवौहत्वाहत्वासुग्रीवमारुती ॥
॥ २७ ॥ हत्वाविभीषणंत्वांचवानरान्भक्षयाम्यहम् २८ रावणस्यवचश्चेत्थंश्रुत्वाप्राहांगदश्चतम् ॥ जानाम्यहंपौरुषंतेबलिपाशविचूर्णित २९ शिवपादांगुष्ठभारनम्रकैलासपीडि
त ॥ सहस्रार्जुनवीरात्मसंभवक्रीडनमृग २३० श्वेतद्वीपस्थप्रमदाकरताडितसन्मुख ॥ विष्णुपुत्रोथवैब्रह्मामरीचिस्तत्सुतःस्मृतः ३१ तत्सुतःकश्यपस्तस्यपुत्रोऽभूदिं
द्रनामकः ॥ तेनैवयुद्धकालेतुबध्वाकाराग्रहस्थित ३२ पर्यंकोपरिसंबद्धमन्मूत्रक्षालिताानन ॥ इतितद्वाक्शराघाततर्जितःसदशाननः ३३ दूतानाज्ञापयामास
ताडनीयोमुखेत्वयम् ॥ तथेत्युक्त्वाराक्षसास्तेशस्त्रहस्ताःसहस्रशः ३४ अंगदंदुद्रुवुःशीघ्रंतान्दृष्ट्वावानरोत्तमः ॥ मर्दयामासपुच्छेनतान्सर्वान्क्षणमात्रतः ३५ रावणा
स्येपुसंताडयस्वकराभ्यांमुहुर्मुहुः ॥ तद्धस्तपादौपुच्छेनपूर्वंबध्वासविस्तरम् ३६ ततश्चोड्डीयवेगेनययौप्रासादमस्तकः ॥ सुवेलाद्रौराघवेंद्रंतारेयःसविहायसा ३७ अं
गदंराघवोदृष्ट्वाप्रासादान्वितमस्तकम् ॥ उवाचकिंत्वंबालप्रासादोऽयंत्वयाकथम् ३८ समानीतोऽत्रलंकायामित्रायेयंपुरीमया ॥ अर्पिताऽस्तिततोमित्रवस्त्विदंनस्पृशा
म्यहम् ३९ तद्राघववचःश्रुत्वाचकितःसतदांगदः ॥ प्रासादंमस्तकेदृष्ट्वोर्ध्वांक्षिभ्यामाहराघवम् २४० नज्ञातोऽयंमयारामप्रासादोमस्तकेनमे ॥ उत्पाटितश्चलंकायाःम
मानीतस्तवांतिकम् ४१ पुनर्नीत्वाऽद्यलंकायामेनंसंस्थापयाम्यहम् ॥ इत्युक्त्वापरिवृत्याऽथराघवस्याज्ञयांगदः ४२ प्रासादंपूर्ववत्स्थाप्यलंकायांसययौपुनः ॥ सुवेला
द्रौराघवेंद्रंनत्वावृत्तंन्यवेदयत् ४३ यद्यत्कृतंतुलंकायांसंवादंरावणस्यच ॥ रामोऽपिश्रुत्वातत्सर्वंस्मित्वातंपरिषस्वजे ४४ अथश्रीरामचंद्रोऽपिसुवेलाद्रौस्थितस्तदा ॥
लील्याचापमादायमुमोचशरमुत्तमम् ४५ तेनच्छत्रसहस्राणिकिरीटदशकंतथा ॥ लंकायांराक्षसेंद्रस्यप्रासादेसंस्थितस्यच ४६ चिच्छेदनिमिषार्धेनकपीनांपश्यतां
प्रभुः ॥ एतस्मिन्नंतरेतत्ररामाग्रेसंस्थितोमहान् ४७ नदत्तांजानकींश्रुत्वारावणेनांगदास्यतः ॥ क्रोधेनमहताविष्टःसुग्रीवःप्लवगाग्रणीः ४८ ययावुड्डीयलंकायांदशास्यंरा
क्षसैर्युतम् ॥ प्रासादसंस्थितंछत्रहीनंप्रव्यग्रमानसम् ४९ सुग्रीवोरावणंगत्वाजघानदृढमुष्टिना ॥ पातयामासभूम्यांतंवरसिंहासनात्तदा २५० चक्रतुस्तौबाहुयुद्धंतुमु
लंरोमहर्षणम् ॥ ऊर्वंघ्रिकरहृद्घातैःकपीशराक्षसेश्वरौ ५१ तदासीज्जर्जरांगःसरावणःकपिघाततः ॥ द्रुद्रुवेबाहुयुद्धंतत्त्यक्त्वागेहंविलज्जितः ५२ तदाच्छिद्यतन्मुकुटंय
योरामंकपीश्वरः ॥ ननामराघवंभक्त्यावृत्तंसर्वंन्यवेदयत् ५३ तंसमालिंग्यरामोऽपिसुग्रीवंप्राहसादरम् ॥ यामपृष्ट्वाकथंवंघोगतस्तूष्णींदशाननम् ५४ त्वज्जीवितंविप
न्नंचेत्तर्हिर्किंसीतयामम ॥ भविष्यतिचसौख्यंहिमेदृशंसाहसंकुरु ५५ ततोभेरीमृदंगाद्यैर्वाद्यैस्तेवानरोत्तमाः ॥ लंकांसंवेष्टयामासुश्चतुर्द्वारेषुसंस्थिताः ५६ तदातंमुकुटं ॥ २७ ॥
रामोंगदायरावणस्यच ॥ ददौतुष्टोदलेशायलंकांरोद्धुंप्रचोदयत् ५७ अंगदंदक्षिणद्वारंवायुपुत्रंतुपश्चिमम् ॥ नलंसैन्येनप्राग्द्वारंसुषेणंद्वारमौत्तरम् ५८ ययुस्तेराघवंनं

लिरितिप्रसिद्धमेव ।

त्वालंकांस्वस्वबलैर्युताः ॥ तांलंकांरुरुधुःसर्वेचतुर्द्वारेषुवानराः ५९ दशास्योऽपिगृहंगत्वासुग्रीवजर्जरीकृतः ॥ तस्थौतूष्णींसरहसिस्मरन्सुग्रीवपौरुषम् २६० मालीसु
मालीघतथामाल्यवान्बांधवास्त्रयः ॥ मातामहारावणस्यतेसंमन्त्र्यपरस्परम् ६१ दशाननंबोधयितुंतेभ्यस्त्वेकोययौजवात् ॥ माल्यवानितिनाम्नायोवृद्धिमान्स्नेहसंयुतः
६२ प्राहतंराक्षसंवीरंप्रशांतिनांतरात्मना ॥ शृणुराजन्वचोमेऽद्यश्रुत्वाकुरुयथेप्सितम् ६३ यदाप्रविष्टानगरींजानकीरामवल्लभा ॥ तदादिपुर्यांदृश्यंतेनिमित्तानिदशान
न ६४ घोराणिनाशहेतूनितानिमेवदतःशृणु ॥ खराःस्तनितनिर्घोषामेघाःप्रतिभयंकराः ६५ शोणितान्यभिवर्षंतिलंकामुष्णेनसर्वदा ॥ सीदंतिदेवलिंगानिस्विद्यंति
प्रचलंतिच ६६ कालिकापांडुरैर्दंतैःप्रहसंतेऽग्रतःस्थिता ॥ खरागोषुप्रजायंतेमूषकानकुलैःसह ६७ मार्जारेणतुयुध्यंतेपन्नगागरुडेनच ॥ करालोविकटोमुंडःपुरुषःकृ
ष्णपिंगलः ६८ कालोगृहाणिसर्वेषांकालेकालेत्ववेक्षते ॥ एतान्यन्यानिदृष्टानिनिमित्तान्युद्भवंतिच ६९ अतःकुलस्यरक्षार्थंशांतिंकुरुदशानन ॥ सीतांसत्कृत्यसधनांरा
मायाशुप्रयच्छभोः २७० मातामहवचश्चेत्थंश्रुत्वातंरावणोब्रवीत् ॥ रामेणप्रेषितोनूनंभाषसेत्वमनर्गलम् ७१ गच्छवृद्धोऽसिबंधुस्त्वंसोढंसर्वंत्वयोदितम् ॥ इतोवाकर्णं
पदर्वांदहत्येतद्वचस्तव ७२ इत्युक्तःसरावणेनमाल्यवान्सगृहंययौ ॥ रावणोऽपिसभांगत्वाचोदयामासराक्षसान् ७३ पूर्वद्वारंतुधूम्राक्षंवज्रदंष्ट्रंतुपश्चिमम् ॥ नरांतकंदक्षिणं
तमुत्तरंचमहोदरम् ७४ प्रेषयामाससैन्येनवस्त्राद्यैस्तोषितान्जवात् ॥ चत्वारस्तेऽपिनत्वातंरावणंसंगरंययुः ७५ एवंरामरावणयोःसैन्यानिचपरस्परम् ॥ ययुस्तानिसं
मुखानिसंगरार्थंमहास्वनैः २७२ ॥ ॥ इति श्रीमच्छतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वाल्मीकीये सारकांडे युद्धचरिते रामरावणसेनासंयोगोनामदश
मःसर्गः ॥ १० ॥ ॥ श्रीशिवउवाच ॥ अथतेराक्षसाःसर्वेद्वारेभ्यःक्रोधमूर्च्छिताः ॥ निर्गत्यभिंडिपालैश्चखड्गैःशूलैःपरश्वधैः १ बाणैःकुंतैःशतघ्नीभिःसंक्रमैःशक्तिभिर्दृ
ढम् ॥ निजघ्नुर्वानरानीकंमहाकायामहाबलाः २ राक्षसांश्चतथाजघ्नुर्वानराजितकाशिनः ॥ वृक्षैर्ग्रावैःपर्वतैश्चमुष्टिभिःकरताडनैः ३ तेहयैश्चगजैश्चैवरथैःकांचनसन्निभैः ॥
रक्षोव्याघ्रायुयुधिरेनादयंतोदिशोदश ४ एवंपरस्परंचक्रुर्युद्धंवानरराक्षसाः ॥ नलोजघानधूम्राक्षंवज्रदंष्ट्रंसमारुति ५ नरांतकंसतारेयःसुषेणस्तंमहोदरम् ॥ चतुर्थांशा
वशेषेणनिहतंराक्षसंबलम् ६ तदांगदाद्याश्चत्वारोमहावाद्यमहोत्सवैः ॥ प्रणेमूराममागत्यजयघोषप्रपूरिताः[1] ७ स्वसैन्यंनिहतंदृष्ट्वामेघनादोययौतदा ॥ सर्पास्त्राद्व्याकुलं
रामंचकारसबंधुवानरैः ८ रामःसस्मारतार्क्ष्यंसतार्क्ष्यःसार्पंन्यवारयत् ॥ ततःपुनर्ब्रह्मवराद्दंतर्धानंगतोऽसुरः ९ सर्वास्त्रकुशलोव्योम्निब्रह्मास्त्रेणसमंततः ॥ ववर्षशरजाला
१० निब्रह्मास्त्रंमानयंस्तदा १० क्षणंतूष्णीमुवासाथरामःसबंधुवानरैः ॥ ततःस्वस्थोरघुश्रेष्ठोददर्शपतितंबलम् ११ मूर्च्छांगतंब्रह्मपाशैस्तदालक्ष्मणमब्रवीत् ॥ चापमानय
सौमित्रेब्रह्मास्त्रेणासुरान्क्षणात् १२ भस्मीकरोमितच्छ्रुत्वालंकामिंद्रजितोययौ ॥ विलपंतौस्वसान्निध्येतत्रवायुजराक्षसौ[2] १३ वरदानाद्ब्रह्मणस्तौदृष्ट्वारामःसजीवितौ ॥
तावुवाचरघुश्रेष्ठोयुवाभ्यांजांबवान्रणे १४ गत्वाऽस्तिजीवितश्चेद्विवाच्यस्तर्हिगिराममम ॥ उपायंचिंतयस्वाऽद्यवानराणांसुजीवने[3] १५ तद्रामवचनंश्रुत्वातौविभी

१ जयतोषमपूरिताःइतिपाठः । २ सद्वंधुइतिवापाठः । ३ सुजीवितइतिपाठः ।

षणमारुती ॥ निशीथेतौविचिन्वंतौजांबवंतंप्रजग्मतुः १६ उल्मूकहस्तौतंदृष्ट्वाप्रोचतूराघवेरितम् ॥ जांबवानपितांरामगिरंश्रुत्वाऽतिहर्षितः १७ निमीलिताक्षःप्रो
वाचकौयुवांवायुजोरणे ॥ चेदस्तिजीवितस्तर्हिजीवयिष्यतिवानरान् १८ तदाविभीषणःप्राहत्वयात्यक्त्वांगदादिकान् ॥ पृच्छ्यतेद्यकथंवायुपुत्रस्सपरमादरात् १९ त
दाविभीषणंप्राहजांबवानृक्षसत्तमः ॥ रुद्रावतारःसंजज्ञेवायुपुत्रःप्रतापवान् २० नज्ञेयःकपिवद्यात्रतस्मात्तंत्वंविलोकय ॥ तदाऽब्रवीज्जांबवंतंनत्वासवायुनंदनः २१ यं
त्वंपृच्छसिसोऽद्याहंजीवितोऽस्म्यद्यमारुतिः ॥ विभीषणोद्वितीयोऽयंयस्त्वयापरिभाषते २२ तदासजांबवांस्तुष्टोमारुतिंवाक्यमब्रवीत् ॥ गत्वाक्षीरनिधिंवेगाद्द्रोणाद्रि
त्वंसमानय २३ तथेत्युक्त्वात्वरन्गत्वागंधर्वैर्गोपितंनगम् ॥ कामधेन्वास्वीयधर्मंनेत्रलेपात्प्रदर्शितम् २४ उत्पाट्यपुष्पवद्धृत्वाऽऽनयामासकपिर्जवात् ॥ पर्वतोद्भववल्ली
नामवघ्रायाऽमृतोपमम् २५ सुगंधंजीवयिष्यंतिराक्षसाश्चेतिशंकया ॥ निहतान्राक्षसान्सर्वांस्तदातार्क्ष्यंविभीषणौ २६ चिक्षिपतुःसागरेतान्राघवस्याज्ञयाक्षणात् ॥
तदानींतंगिरिंदृष्ट्वासुषेणःसभिषग्वरः २७ पर्वतोद्भववल्लीभिर्जीवयामासतान्कपीन् ॥ ततःशाखामृगाःसर्वेसमुत्तस्थुर्विजृंभिताः २८ द्रोणाचलंयथास्थानेस्थापयामास
मारुतिः ॥ कुबेरार्पितदिव्यांभःप्रमृज्यनयनेषुच २९ अंतर्हितानांरामाद्यादर्शनंप्रापुराहवे ॥ ततःसंप्रेषयामासरावणःस्वीयमंत्रिणः ३० अतिनादःप्रहस्तश्चमहानाद
दरीमुखौ ॥ देवशत्रुर्निकुंभश्चदेवांतकनरांतकौ ३१ सारणाद्याबलैरन्येयुयुधुर्वानरैःसह ॥ तान्सर्वानंगदाद्यास्तेहत्वातस्थुर्विगर्जिताः ३२ तदाकुंभनिकुंभौद्वौकुंभकर्ण
सुतोत्तमौ ॥ रावणःप्रेषयामासयुद्धार्थंतौप्रजग्मतुः ३३ तदाकुंभोजांबवतानिहतश्चरणाजिरे ॥ अंगदेननिकुंभश्चहतःश्रुत्वादशाननः ३४ अतिकायंस्वीयपुत्रंप्रेषयामा
ससंगरम् ॥ अतिकायेनसौमित्रिःकृत्वासंगरमुल्बणम् ३५ शरेणपातयामासलंकायांतच्छिरोमहत् ॥ तदाययौरावणःसस्वयंयुद्धायवेगतः ३६ सुहृन्मित्रजनैर्युक्तो
वेष्टितःपुरवासिभिः ॥ रणेविभीषणंदृष्ट्वाकोपाच्छक्तिंसुमोचसः ३७ पृष्ठेविभीषणंकृत्वाययावग्रेसलक्ष्मणः ॥ हृदिसंताडितःशक्त्यापपातभुविलक्ष्मणः ३८ लक्ष्म
णंनगरींनेतुंतंययौसदशाननः ॥ नचचालभुजस्तस्यसौमित्रेःशेषरूपिणः ३९ तंनेतुकामंहनूमान्हृदिमुष्ट्याव्यताडयत् ॥ तेनमुष्टिप्रहारेणपपातरुधिरंवमन् ४०
आनयामाससौमित्रिंमारुतिःकपिवाहिनीम् ॥ रथारूढोरावणोऽपिविव्याधमारुतिंशरैः ४१ ततःक्रुद्धेनरामेणबाणेनहृदिताडितः ॥ साश्वध्वजंरथंसूतंराघवोधनुरो
जसा ४२ छत्रंपताकांतरसाचिच्छेदशितसायकैः ॥ अर्धचंद्रेणचिच्छेदतत्किरीटंरविप्रभम् ४३ ततस्तंव्याकुलंदृष्ट्वारामोरावणमब्रवीत् ॥ गच्छाऽद्यलंकामाश्वास्य
श्वस्त्वंपश्यबलंमम ४४ ततोलज्जानतशिरायर्योलंकांदशाननः ॥ रामोऽपिलक्ष्मणंदृष्ट्वामूर्च्छितंप्राहमारुतिम् ४५ द्रोणाचलंसमानीयजीवयेनंतथाकपीन् ॥ तथे ॥ २८ ॥
तिसययौवेगात्तज्ज्ञात्वासदशाननः ४६ प्रार्थयित्वाकालनेमिंतद्विघ्नार्थमचोदयत् ॥ सगत्वाहिमवत्पार्श्वेतपोवनमकल्पयत् ४७ तत्रशिष्यैःपरिवृतोमुनिवेषधरःस्थि
तः ॥ मारुतिश्चाश्रमंदृष्ट्वाजलंपातुंविवेशतम् ४८ मुनिनामानितश्चापिजलकुंभःप्रदर्शितः ॥ मारुतिःप्राहतृप्तिर्मेनैवानेनभविष्यति ४९ तंपुनःप्राहसमुनिस्त

१ तस्मात्तत्वमितिपाठः ।

टाकंनिकटस्थितम् ॥ गच्छाक्षिणीपिधायत्वंजलंपिबयथासुखम् ५० आगच्छाशुपुनश्चात्रसुखंतिष्ठममान्तिकम् ॥ जानामिज्ञानदृष्ट्याहंलक्ष्मणश्चोत्थितस्त्विति ॥
५१ गृहाणमंत्रान्मत्तस्त्वंयैश्चपश्यसितंगिरिम् ॥ गोपितंत्वद्यगंधर्वैर्यंतंत्वंनेतुमिच्छसि ५२ प्लवंगानांजीवनार्थंलंकायांवेगतःकपे ॥ मत्तस्त्वंलब्धविद्यःसन्ददस्व
गुरुदक्षिणाम् ५३ तथेतिमारुतिर्गत्वाकासारमपिबज्जलम् ॥ पिधायनेत्रेतावत्तमग्रसन्मकरीतदा ५४ सोऽपितांदारयामासदृष्ट्वास्येसाममारह ॥ ततोंतरिक्षेसाप्राह
दिव्यरूपात्तुमारुतिम् ५५ पुराऽहंमुनिनास्पृश्याप्रार्थितानरतिर्मया ॥ दत्ताशप्ताऽस्मित्वत्तोमेनिष्कृतिस्तेनकीर्तिता ५६ धान्यमालीतिविख्याताऽप्सराःपू
र्वभवांतरे ॥ आश्रमेयंत्वयादृष्टःकालनेमिर्महासुरः ५७ रावणप्रेषितोमार्गेस्थितस्त्वंजहि वेगतः ॥ तथेतिमारुतिर्गत्वामुनिंप्राहत्वरान्वितः ५८ मुष्टिंबध्वाद्दढांघोरांगृ
हाणगुरुदक्षिणाम् ॥ इत्युक्त्वाताडयामासहृदितंमुष्टिनातदा ५९ पपातभुविरक्तंसवमन्प्राणान्जहौक्षणात् ॥ ततःक्षीरनिधिंगत्वाजित्वागंधर्वसत्तमान् ६० द्रोणाचलं
गृहीत्वासयावद्गच्छतिमारुतिः ॥ विहायसाऽतिवेगेनलंकांतावच्चवैपथि ६१ भरतेनशरंमुक्त्वापर्वतोभुविपातितः ॥ भरतंमारुतिर्दृष्ट्वारामोऽयमितिविव्हलः ६२ उवा
चमधुरंवाक्यंकथमत्रसमागतः ॥ जितःकिंरावणेनत्वंरणंत्यक्त्वापलायितः ६३ एवमुक्तोऽपिभरतःपुनस्तंमारुतिंशरम् ॥ मत्वाऽयंराक्षसश्चेतिसंदधेनिशितंवरम् ६४
बाणहस्तंतमालोक्यभुभुकारंविधायसः ॥ नैवाऽयंराघवश्चेतिमत्वाध्यात्वाक्षणंहृदि ६५ भरतंमारुतिःप्राहरामदूतोऽद्यमेवलम् ॥ पश्यासित्वंतद्गिरिंतांश्रुत्वातंभरतोऽब्र
वीत् ६६ बंधुनाममरामेणकुतोवदसमागमः ॥ तत्रजातःसविस्तारंदंडकारण्यवासिना ६७ ततस्तंमारुतिर्वृत्तंसंश्राव्यराघवस्यतु ॥ भरतेनेषुणादत्तंगिरिंधृत्वाययौ
पुनः ६८ लंकांगत्वासवल्लीभिर्जीवयामासलक्ष्मणम् ॥ वानराश्चभरतस्यरामंवृत्तंन्यवेदयत् ६९ पुनर्नीत्वायथास्थानंतंसंस्थाप्यमहाचलम् ॥ लक्ष्मणोजीवितश्चेतिसं
श्राव्यभरतंपुनः ७० ययावाकाशमार्गेणलंकांसमारुतिर्जवात् ॥ नृपानाकारयामाससाकेतंभरतोऽपिसः ७१ साहाय्यार्थंराघवस्यलंकांगन्तुंमनोदधे ॥ ततःसभायामा
सीनोरावणःप्राहराक्षसान् ७२ गच्छध्वंत्वरितंदूताःपातालेतौमहाबलौ ॥ ऐरावणोमहानुग्रस्तथामैरावणोमहान् ७३ तयोर्मेकथनीयंहियुद्धवृत्तंवयस्ययोः ॥ तथेति
तेगतादूतास्तौतद्वृत्तंन्यवेदयन् ७४ तौश्रुत्वाविह्वलात्मानौलंकायांसमुपस्थितौ ॥ रामंचलक्ष्मणंहर्तुंनिशायांतौसमागतौ ७५ ददर्शतुस्तौपुच्छस्यपरिघंहिहनूमतः ॥
कपीनांतत्रसेनायास्तदाकाशान्महाबलौ ७६ निपेततुःकपीनांतुसेनायांरामलक्ष्मणौ ॥ किंचिद्विनिद्रितौदृष्ट्वाशिलायांसंगरश्रमात् ७७ निन्यतुस्तौशिलांशीघ्रंपा
तालंनिजमंदिरम् ॥ एतस्मिन्नंतरेऽदृष्ट्वासेनायांरामलक्ष्मणौ ७८ मारुतिःपादमार्गेणतयोःपातालमाययौ ॥ एतस्मिन्नंतरेमार्गेलंकादक्षिणदिग्तटे ७९ निकुंभिलायां
स्वपतिंकपोतीप्राहगुर्विणी ॥ नाथाऽद्यनरमांसंमेभोक्तुंस्पृहयतेमनः ८० सप्राहाऽद्यसमानीतौवर्तेतेरामलक्ष्मणौ ॥ रसातलंहिदैत्याभ्यांदेव्यग्रेतौवधिष्यतः ८१
अंथश्वस्तद्वधेजातेमांसमानीयतेऽर्पये ॥ तद्वाक्यंमारुतिःश्रुत्वाकिंचित्तोषयुतोययौ ८२ तावद्ददर्शतद्वारिसस्थितंमकरध्वजम् ॥ सदृष्ट्वातंहनूमंतंपप्र

१ सादरादितिपाठः। २ एवंतयोर्वधेइतिपाठः।

च्छमकरध्वजः ८३ कस्त्वंकुतःसमायातःस्ववृत्तंप्राहमारुतिः ॥ रामदूतस्तुलंकायाश्चानीतौरामलक्ष्मणौ ८४ निद्रितौनिशिदैत्याभ्यामत्रपातालमध्यहि ॥ तयोःशो
घार्थमायातश्चेत्त्वंवेत्सिवदस्वतो ८५ तन्मारुतिवचःश्रुत्वातंप्राहमकरध्वजः ॥ पितामेवर्ततेतत्रक्षेमेणांजनिसंभवः ८६ तच्छ्रुत्वाचकितःप्राहहनुमान्मकरध्वजम् ॥
॥ २९ ॥ हनूमतःकुतःपत्नीसोब्रवीन्मारुतिंपुनः ८७ लंकादाहंपुराकृत्वासागरेशीतलंकृतम् ॥ यदापुच्छंमारुतिनातदातद्धर्मपूरितात् ८८ कंठाच्छ्लेष्मावहिस्त्यक्तःसागरेसो १
ऽपततदा ॥ मकर्याभक्षितःसोपितस्यांजातःसुतोऽस्म्यहम् ८९ तच्छ्रुत्वामारुतिःप्राहसोऽहमेवनसंशयः ॥ तदाननामपितरंतथावृत्तंन्यवेदयत् ९० कामाक्ष्यास्तौ
बलिंकर्तुंनिश्चितौपूर्वमेवहि ॥ तावानेतुंयदोद्युक्तौलंकांगत्वासुरोत्तमौ ९१ श्वःकामाक्ष्याःपुरःकर्तुंतयोर्दानंविनिश्चितम् ॥ गच्छदेवालयेगत्वातत्रस्थित्वाहरस्वतौ ९२
ततःसमारुतिर्गत्वात्रसरेणुस्वरूपधृक् ॥ देवालयेप्रविश्याऽथकपाटानिबबंधसः ९३ तावदैत्यौसमायातौपूजार्थंद्वारिसंस्थितौ ॥ शनैर्देव्याःस्वरेणैवमारुतिस्तौवचो
ऽब्रवीत् ९४ पुजाकार्यागवाक्षेणसजीवौरामलक्ष्मणौ ॥ वनोद्भवैःफलैःपुष्पादिभिःसम्यक्प्रपूजितौ ९५ धृतकोदंडतूणीरौवन्यपुष्पैश्चशोभितौ ॥ देवालयस्यांकिंचि
द्विदारमुद्घाटचवैशनैः ९६ मत्तुष्टचर्थंप्रेषणीयावत्रमामद्यमानवौ ॥ येनकेनप्रकारेणयोमामद्यप्रपश्यति ९७ भविष्यतिनिश्चयेनसोघोनास्त्यत्रसंशयः ॥ तद्देव्यावच
नंश्रुत्वातुष्टांज्ञात्वाऽविकांमुदा ९८ ततस्तौपूजनंदैत्यौगवाक्षेणैवचक्रतुः ॥ पक्वान्नपायसादीनांराशींस्तौप्रमुमोचतुः ९९ पंचामृतघटांश्चापिकोटिशस्तौमुमोचतुः ॥
कोटिशःफलभारांश्चगवाक्षेणमुमोचतुः १०० तत्सर्वंभक्षयित्वासमारुतिःप्राहतौपुनः ॥ किंदत्तंग्रासमात्रंमेभोजनंक्षुधितास्म्यहम् १ तद्देव्यावचनंश्रुत्वातौदैत्यावति
विस्मितौ ॥ दूतैर्विलुंठचहट्टांश्चतथास्वीयपुरौकसाम् २ भक्षणीयपदार्थांस्तौगिरीनिवमुमोचतुः ॥ राजगृहादिषुस्वेषुयद्यद्वस्त्वस्तिसंचितम् ३ तच्चापिदूतैरानी
यदेव्यैशीघ्रंमुमोचतुः ॥ तदाकोलाहलश्चासीत्प्रतिगेहेपुरौकसाम् ४ नासीच्छेषंबालकानांभक्ष्यवस्त्वल्पमपिकचित् ॥ ततस्तौवन्यपुष्पाद्यैर्भूषितौरामलक्ष्मणौ ५ धृतको
दंडतूणीरौद्वारेणैवार्पितौश्रियै ॥ तौदृष्ट्वामारुतिर्नत्वाऽऽलिंग्यश्रीरामलक्ष्मणौ ६ कपाटानितदोद्घाटचदैत्ययोःसव्यतर्जयत् ॥ ततोरामोलक्ष्मणेनबहिर्देवालयात्तदा ७
निर्गत्यशरजालैस्तौजघानक्षणमात्रतः ॥ सैन्यानिसुहृदादींश्चतयोर्बाणैर्जघानसः ८ पुनस्तौजीवितौदैत्यौपुनस्तेननिपातितौ ॥ शतवारंहतावेवंनासीन्मृत्युस्तयोस्तदा ९
ततोऽतिविस्मितोभूत्वात्वरन्गत्वासमारुतिः ॥ इतस्ततोभ्रमन्पुर्यांनारींरहसिसंस्थिताम् ११० ऐरावणभोगपत्नींपप्रच्छमरणंतयोः ॥ साप्राहनागकन्याऽहंबलेनानेन
धर्षिता ११ मैरावणोऽपिमांनित्यंदुष्टबुद्ध्याऽत्रपश्यति ॥ उभाभ्यामपिसक्रीडांदातुंनास्तिबलंमयि १२ मित्रंत्वेकोरिपुस्त्वेकस्त्वितिदुःखंतयोर्मम ॥ अतस्तयोर्वधे
तुष्टिर्ममचापिभविष्यति १३ मारुतेयदिरामोमांस्वस्त्रियंहिकरिष्यति ॥ तर्ह्यहंकथयाम्यद्यतयोर्मृत्युर्यतोभवेत् १४ तच्छ्रुत्वामारुतिःप्राहयदिश्रीगमभारतः ॥ नभ ॥ २९ ॥
विष्यतिभग्नस्तेमंचकस्तर्हितेपतिः १५ भविष्यतिरामचंद्रस्तथेत्युक्त्वातमाहसा ॥ भ्रमरानेकदापूर्वंबालैःकंटकरोपितान् १६ मोचयामासतुस्तौहितेनतुष्टाश्चषट्प

१ तयोर्घातंइतिपाठः ।

दाः ॥ तावूचुस्तेयुवाभ्यांहिमरणाद्रक्षितावयम् १७ यथातथायुवांचापिरक्षामोमरणाद्भयम् ॥ इत्युक्त्वातेस्थिताश्चात्रतेनीत्वाऽमृतमुत्तमम् १८ तद्रक्तबिंदूनस्पृष्ट्वातेप्रकु
र्वंतिसजीवितौ ॥ भ्रमरास्तेतयोर्निद्रास्थानेसंत्यधुनाकपे १९ कोटिशस्तान्मर्दयस्वसोऽपितान्मर्दयत्क्षणात ॥ तत्रैकंशरणंप्राप्तंभ्रमरंप्राहमारुतिः १२० कुरुमंचकग
र्भत्वंगजभुक्तकपित्थवत् ॥ ऐरावणभोगपत्न्याःषट्पदोऽपितथाऽकरोत् २१ ततोनिहत्यतौदैत्यौपुनर्बाणैरघूद्वहः ॥ अभिषिच्यतयोःस्थानेराज्येतंमकरध्वजम् २२ याव
द्गंतुंमनश्चक्रेतावन्मारुतिनार्थितः ॥ नागकन्यागृहंगत्वानानाचित्रविचित्रितम् २३ दृष्ट्वातांचारुवदनांवस्त्रालंकारमंडिताम् ॥ धृत्वाकरेणतद्धस्तंकिंचित्कृत्वास्मिता
ननम् २४ चकारमंचकंभग्नंस्वभारेणरघूत्तमः ॥ ततस्तयाप्रार्थितःसरामस्तांपुनरब्रवीत् २५ त्यक्त्वादेहंभुवंगत्वाभूत्वाब्राह्मणकन्यका ॥ ततस्त्वम्वाचिरंकालंतृतीयेत्वं
तुजन्मनि २६ द्वापरेद्वारकायांहिममपत्नीभविष्यसि ॥ तद्रामवचनंश्रुत्वारामाग्रेऽग्निंप्रविश्यसा २७ कन्याकुमारिनाम्नाऽसीद्द्विजकन्याऽब्धिरोधसि ॥ मारुतेःस्कंधसं
स्थोऽभूत्तदारामोमुदान्वितः २८ राज्येकृत्वामंत्रिणंस्वंलक्ष्मणंमकरध्वजः ॥ अकरोत्तंस्कंधसंस्थंशेषंब्रह्मांडधारकम् २९ ततःक्षणाज्जग्मतुस्तौलंकांश्रीरामलक्ष्मणौ ॥
श्रीरामलक्ष्मणौदृष्ट्वासुग्रीवाद्याश्चवानराः १३० तावालिंग्यमुहुर्नत्वावभूवुस्तोषपूरिताः ॥ रामोऽपिसकलंवृत्तंसुग्रीवादीन्न्यवेदयत् ३१ दैत्यौरामेणनिहतौश्रुत्वासदासि
रावणः ॥ राक्षसांश्चकितःप्राहपूर्ववृत्तंभयान्वितः ३२ मानुषेणैवमृत्युर्मेह्याहपूर्वंपितामहः ॥ अतोनारायणःसाक्षान्मानुषोऽभून्नसंशयः ३३ रामोदाशरथिर्भूत्वामांहंतुंस
मुपस्थितः ॥ यदानरण्यःपूर्वंहिसहतोदीक्षितोमया १३४ तदाशप्तश्चतेनाहंसूर्यवंशोद्भवेनहि ॥ उत्पत्स्यतेचमद्वंशेपरमात्मासनातनः १३५ सएवत्वांपुत्रपौ
त्रैर्बांधवैर्विहनिष्यति ॥ इत्युक्त्वासययौनाकंसोऽधुनासमयोमम ३६ समागतोराघवोमांसमरेसहनिष्यति ॥ विबोध्यकुंभकर्णंतमानयध्वंत्वरान्विताः ३७ तत
स्तेतांगुहांगत्वातच्छ्वासेनविकर्षिताः ॥ यातायातेप्रचक्रुस्तेकुंभकर्णोदरेमुहुः ३८ तदैकत्रबाहुपाशैर्बलंकृत्वाऽथराक्षसाः ॥ गत्वातदंतिकंभीत्यानिजघ्नुस्तंद्रुमैःपदैः
३९ शिलाभिस्ताडयामासुश्चाश्वैरुष्ट्रैर्व्यचूर्णयन् ॥ काष्ठभारैर्महादाहंदेहेचक्रुर्नृपाज्ञया १४० तदाप्रबुद्धश्चोत्थायसूकरान्महिषान्वरान् ॥ कोटिशःस्वमुखेक्षिप्त्वा
जलवापीर्विशोष्यसः ४१ गत्वानत्वाराक्षसेंद्रंबोधयामासरावणम् ॥ एकदाऽहंवनेगत्वादृष्ट्वातंनारदंमुनिम् ४२ पृष्टवांस्त्वंकुत्रयासिकुतश्चागमनंकृतम् ॥ समांप्राह
देवलोकाद्योध्यांप्रतिगम्यते ४३ रावणादीन्रणेहंतुंविष्णुर्जातोऽत्रमानुषः ॥ देववाक्यात्त्वरयितुंरामंगच्छाम्यहंजवात् ४४ इत्युक्त्वामांगतःसोथप्रेषयामासरा
घवम् ॥ इतिश्रुतंमयापूर्वंतवाग्रेतन्निवेदितम् ४५ अतोऽर्पयाद्यरामायसीतांसख्यंकुरुप्रभो ॥ इतितद्वचनंश्रुत्वारावणस्तंवचोऽब्रवीत् ४६ निद्राव्याप्तेऽक्षिणीते
ऽप्यगच्छनिद्रांसुखंकुरु ॥ तद्बंधोःक्रूरवचनंश्रुत्वानत्वाऽथरावणम् ४७ जवाद्ययौसयुद्धायोल्लंघ्यप्रासादमुन्नतम् ॥ कुंभकर्णंततोदृष्ट्वाकपयोभयविह्वलाः ४८ चक्रुः
पलायनंसर्वेरामपार्श्वमुपागताः ॥ कुंभकर्णंतत्रदृष्ट्वाप्रणनामविभीषणः ४९ उवाचप्रणतोभूत्वामयाराजाऽतिबोधितः ॥ सीतांरामायदेहीतितेनधिक्कृतस्त्वहम् १५०

१ तत्क्षणाच्चोजग्मतुश्चतिपाठः ।

तच्छ्रुत्वाऽहंराघवस्यसेवांकर्तुमुपागतः ॥ तच्छ्रुत्वाबंधुवचनंकुंभकर्णस्तमब्रवीत् ९१ सम्यक्कृतंत्वयावत्समदग्रेमास्थिरोभव ॥ युद्धेस्वीयःपरोवाऽत्रज्ञायतेनमयाऽद्यहि ९२
ततोबंधुंनमस्कृत्यरामपार्श्वमुपाययौ ॥ कुंभकर्णोऽपिहस्ताभ्यांपादाभ्यांपेषयन्हरीन् ९३ चचारवानरींसेनांतत्रदृष्ट्वाकपीश्वरम् ॥ त्रिशूलेनाऽथतंभित्वाऽऽनयामासपुरींमुदा
९४ मार्गेस्वस्थःससुग्रीवःकर्णौघ्राणंरिपोर्नखैः ॥ छित्वाययौराघवेंद्रंसोऽपिपौरैर्विलज्जितः ९५ पुनर्ययौरणभुवंतंदृष्ट्वारघुनंदनः ॥ विव्याधनिशितैर्बाणैःसोऽपिरामंद्रु
मैर्नगैः ९६ ताडयामासतान्बाणैर्निवार्यरघुनंदनः ॥ वायव्यास्त्रेणचिच्छेदतद्धस्तौसायुधौक्षणात् ९७ छिन्नबाहुमथायांतंनदंतंवीक्ष्यराघवः ॥ द्वावर्द्धचंद्रौनिशितावा
दायाऽस्यपदद्वयम् ९८ चिच्छेदपतितौपादौलंकाद्वारिमहास्वनौ ॥ निकृत्तपाणिपादोऽपिकुंभकर्णोऽतिभीषणः ९९ वडवामुखवद्वक्त्रंव्यादायरघुनंदनम् ॥ अभिदुद्राव
विनदन्राहुश्चंद्रमसंयथा १६० अपूरयच्छिताग्रैश्चसायकैस्तद्रघूत्तमः ॥ शरपूरितवक्त्रोऽसौचुक्रोशाऽतिभयंकरः ६१ अथसूर्यप्रतीकाशमैंद्रंशरमनुत्तमम् ॥ मुमोचतते
नचिच्छेदकुंभकर्णशिरोमहत् ६२ तदाखेदेववाद्यानिनेदुःकुसुमवृष्टिभिः ॥ ववर्षुरमरारामंतुष्टुवुर्विविधैःस्तवैः ६३ पितृव्यंनिहतंश्रुत्वापितरंचाऽतिविह्वलम् ॥ राव
णिःसांत्वयामासत्वंमेपश्याऽद्यवैबलम् ६४ इत्युक्त्वात्वरितंगत्वामेघनादोनिकुंभिलाम् ॥ रक्तमाल्यांबरधरोहवनायोपचक्रमे ६५ रथार्थंदिव्यशस्त्रार्थंजयार्थमभिचारकैः ॥
योगिनीवटाधोभूम्यांगुहायांसंस्थितोरहः ६६ तोयानिलाऽनलव्याघ्रसर्पराक्षसकंटकैः ॥ आत्मनःपरितःकृत्वाःपरिधीन्सप्तदुर्गमान् ६७ होमकुंडोर्ध्वतःसर्पबद्धाकृष्ण
मघोमुखम् ॥ रक्तपुष्पांबरधरोरक्तचंदनलेपितः ६८ रक्तपुष्पाक्षतागुंजासर्षपैश्चंदनेक्षुभिः ॥ खदिराम्रपलाशोदुंबरभल्लातकास्थिभिः ६९ समिद्भिर्माषमांसादिभल्लात
कफलैरपि ॥ अर्कनिंबबीजपूरकृष्णधत्तूररोचनैः १७० अपामार्गबदरिकानलदालकबंधुकैः ॥ नरमुंडवसांत्रैश्चबिभीतकफलादिभिः ७१ सर्पखंडैश्चमंडूकैस्त्वक्दंतस्नायु
लोमभिः ॥ नानावनचराणांचमांसैरपिसमंत्रकम् ७२ इत्थंचकारहोमंसनिमील्यनयनेरहः ॥ विभीषणोऽपितंदृष्ट्वाहोमधूम्रंभयावहम् ७३ प्राहरामायसकलंहोमारंभंदुरा
त्मनः ॥ समाप्यतेचेद्धोमोऽयंमेघनादस्यदुर्मतेः ७४ तदाऽजय्योभवेद्रामभेघनादःसुरासुरैः ॥ अतःशीघ्रंलक्ष्मणेनघातयिष्यामिरावणिम् ७५ यस्तुद्वादशवर्षाणिनि
द्राहारविवर्जितः ॥ तेनैवमृत्युर्निर्दिष्टोब्रह्मणाऽस्यदुरात्मनः ७६ लक्ष्मणोऽयंयदाऽयोध्यापुर्यास्त्वामनुनिर्गतः ॥ तदादिनिद्राहारादीन्नजानातिरघूत्तम ७७ सेवार्थंत
वराजेंद्रज्ञातंसर्वमिदंमया ॥ ततोरामाज्ञयागत्वालक्ष्मणेनविभीषणः ७८ हनुमत्प्रमुखैर्वीरैर्यूथपैःसर्वतोवृतः ॥ लक्ष्मणंदर्शयामासहोमस्थानंनिकुंभिलाम् ७९ अंगद
स्कंधमारुह्यवन्ह्यस्त्रेणाऽथकंटकान् ॥ ज्वालयामाससौमित्रिर्जघानराक्षसाञ्छरैः १८० गरुडास्त्रेणसर्पांश्चपर्वतास्त्रेणदंष्ट्रिणः ॥ अनलंशांतमकरोत्पर्जन्यास्त्रेणलक्ष्मणः
८१ प्राशयामासहनुमाननिलंक्षणमात्रतः ॥ जलंसंशोषयामासवायव्यास्त्रेणलक्ष्मणः ८२ परिधेष्वपिनष्टेषुतत्राऽदृष्ट्वारिपोःस्थलम् ॥ ययावुत्पाटितुंक्रोधाद्धनुमान्यो ॥ ३० ॥
गिनीवटम् ८३ तदातांदर्शयामासवटस्थायोगिनीगुहाम् ॥ गुहापिधानपाषाणंहनूमान्पादघट्टनैः ८४ चूर्णीकृत्यगुहासंस्थंमेघनादंव्यतर्जयत् ॥ तदासमेघनादोऽपि

१ नरमुंडैर्मर्त्यमांसैरितिपाठः। २ सर्पखंडैःकनेरैश्चइतिपाठः।

त्यक्काहोमंत्वरान्वितः ८५ क्रोधाविष्टोरथेस्थित्वाययौलक्ष्मणसंमुखम् ॥ शस्त्रैरस्त्रैःपर्वताद्यैर्मर्मभिद्भिर्निजोक्तिभिः ८६ चकारलक्ष्मणेनैवयुद्धंतत्तारकामयम् ॥ सौमि
त्रिरपिवाणौघैरथमश्वान्धनुर्ध्वजम् ८७ तद्दृढंकवचंसूतंबिभेदक्षणमात्रतः ॥ ततःसोऽन्येनधनुषामुक्त्वाबाणान्सहस्रशः ८८ पद्यामेवास्थितोभूम्यांचिच्छेदकवचंरि
पोः ॥ तदाक्रुद्धःससौमित्रिर्बाणेनेंद्रजितस्यहि ८९ सशरंदक्षिणभुजंपातयामासतत्क्षणे ॥ तदासवामहस्तेनमेघनादोऽतिविव्हलः १९० दुद्रावलक्ष्मणंहंतुंधृत्वाशूलमनु
त्तमम् ॥ तंचापिमार्गणेनैवसशूलंवामसत्करम् ९१ मेघनादस्यसौमित्रिश्छित्वारावणसन्निधौ ॥ पातयामासलंकायांतदद्भुतमिवाऽभवत् ९२ तदान्यादायस्वमुखंशव
णिर्लक्ष्मणंययौ ॥ लक्ष्मणोऽपिशरंदिव्यंरामनामांकितंशुभम् ९३ मुमोचरघुवीरस्यकृत्वाचिंतनमादरात् ॥ सशरःसशिरस्त्राणंश्रीमज्ज्वलितकुंडलम् ९४ प्रमथ्येंद्रजि
तःकायात्पातयामासतच्छिरः ॥ ततःप्रमुदितादेवाःसौमित्रिंपरितुष्टवुः ९५ पुष्पाणिविकिरंतोवैचक्रुर्नीराजनंमुहुः ॥ गतश्रमःससौमित्रिःशंखमापूरयद्रणे ९६ श्रुत्वा
सीताशंखनादंत्रिजटांप्रेष्यसादरम् ॥ शुश्रावसकलंवृत्तंतद्वाक्यात्प्रतुतोषसा ९७ ततस्तन्मेघनादस्यशिरःसंगृह्यमारुतिः ॥ राघवायदर्शयितुंत्वरयामासलक्ष्मणम् ॥
९८ तदासवानरैर्युक्तोऽगदस्थःसविभीषणः ॥ नानावाद्यनिनादैश्चसौमित्रीराघवंययौ ९९ नत्वातंदर्शयामासमेघनादस्यतच्छिरः ॥ तद्दृष्ट्वाऽऽलिंग्यसौमित्रिंरामस्तुष्टो
ऽभवत्तदा २०० रावणोऽपिभुजंदृष्ट्वाश्रुत्वापुत्रवधंतथा ॥ पपातपुत्रदुःखेनसभायांमूर्च्छितोभुवि २०१ क्रोधात्सखड्गमुद्यम्यययौहंतुंविदेहजाम् ॥ सुपार्श्वोनाममेधा
वीमंत्रीतंसंन्यवारयत् २०२ सखड्गंतत्करंधृत्वास्वहस्तेनत्वरान्वितः ॥ उवाचनीतिसंयुक्तंवचनंरावणंतदा २०३ कथंनामदशग्रीवकोपात्स्त्रीवधमिच्छसि ॥ अस्मा
भिःसहितोयुद्धेहत्वारामंसलक्ष्मणम् २०४ प्राप्स्यसेजानकींशीघ्रमित्युक्तःसन्यवर्तत ॥ सुलोचनाऽपिकांतस्यभुजंकेयूरभूषितम् २०५ दृष्ट्वासमार्गणंस्वीयपुरतःपतितं
भुवि ॥ तदाविलापमकरोत्स्मृत्वातत्पौरुषाणिसा २०६ भुजोऽपिसांत्वयन्तांसलेख्यभूम्यांशरेणहि ॥ स्वलोहिताक्षरैःप्राहमाखेदंभजभामिनि २०७ साक्षाच्छे
षशराघातैर्हतोऽहंमुक्तिमागतः ॥ त्वंचाऽपिगत्वाश्रीरामंनत्वायाचस्वमच्छिरः २०८ तत्त्वांदास्यतिरामोऽपितेनाग्निंविशययाहिमाम् ॥ सुलोचनापठित्वासालिखि
तान्यक्षराणिहि २०९ तुष्टाप्टष्ट्वारावणायमंदोदर्यैविभूषिता ॥ ययौरामंशिबिकयातांदृष्ट्वावानरोत्तमाः २१० सीतेयंरावणेनाऽद्यभयाद्रामंविसर्जिता ॥ इतिमत्वाद्रु
द्रुवुस्तेसीतायादर्शनेच्छया २११ शिबिकांवेष्टयामासुर्ज्ञात्वातांतुसुलोचनाम् ॥ शिबिकावाहकास्येनाऽऽययुःश्रीराघवंपुनः २१२ सुलोचनाऽपिश्रीरामंननामशि
रसामुहुः ॥ भर्तुःशिरःकांक्षमाणांतांरामोवाक्यमब्रवीत् २१३ कृपयातवभर्तारंकरोम्यद्यसजीवितम् ॥ माविशस्वाद्यवन्हिंत्वंरोचतेचेद्वदस्वमाम् २१४ तदासा
प्राहश्रीरामंपुनःसौमित्रिहस्ततः ॥ कुतोभवेत्तन्मरणंमोक्षदंजीवयस्वमा २१५ इत्युक्त्वाराघवंनत्वासस्मितंकपिवाक्यतः ॥ कृत्वाशिरःपतेस्तत्रलब्ध्वासाभर्तृसंच्छिरः
२१६ लंकायास्तौसमानीयभुजौगत्वानिकुंभिलाम् ॥ भर्तृदेहेनसंयोज्यविवेशाऽग्निंयथाविधि २१७ सुलोचनादिव्यदेहावैकुंठंपतिनाययौ ॥ रावणोऽपिसुहृ

१ भूतलेइतिपाठः । २ गलेर्पितमितिपाठः ।

न्मित्रैःपुनर्योद्धुंययौरणम् २१८ ततोरामेणनिहताःसर्वेतेराक्षसायुधि ॥ लंकायांरावणःक्षिप्तःशरेणराघवेणसः २१९ ततःकृत्वारामशिरःकृत्रिमंमयहस्ततः ॥
ययौसीतांदर्शयितुंरावणोऽशोककाननम् २२० एतस्मिन्नन्तरेब्रह्माबोधयामासजानकीम् ॥ कृतमस्तिरावणेनकृत्रिमंरामसच्छिरः २१ तद्दृष्ट्वामाभजस्त्वंचाऽद्य
 खेदंत्वमधुनाऽबले ॥ इतिसंबोध्यतांसीतांब्रह्मांऽन्तर्धानमाययौ २२ रावणोऽपिसमागत्यदर्शयामासतच्छिरः ॥ सीतांप्राहहतोरामस्त्वधुनात्वंभजस्वमाम् २३ तदासा 
धोमुखीप्राहत्वैवाहंशिरांसिहि ॥ रामबाणैश्चपश्यामिपतितानिरणांगणे २४ इतितद्वाक्शराघाततांडितःसदशाननः ॥ ययौतूष्णींस्वयंगेहंलज्जायाऽवनतस्तदा २५
अथरामाज्ञयासर्वेलंकांप्रासादमंडिताम् ॥ ईषिकाचूडहस्तास्तेवानराःकोटिशःक्षणात् २६ ज्वालयामासुःसर्वत्रदत्वावन्हिंमुहुर्मुहुः ॥ तदाकोलाहलश्चासील्लंकादाहे
पुरायथा २७ दग्धांस्वनगरींदृष्ट्वास्वगृहाण्यपिरावणः ॥ दृष्ट्वादग्धानिकपिभिर्मेघाश्चंससृजेजवात् २८ तेनासीदनलःशांतस्तद्दृष्ट्वाकपयोययुः ॥ ततःसरावणःशुक्रव
चनाद्गुहसिस्थिताम् २९ गुहांप्रविश्यचैकांतिमौनीहोमंप्रचक्रमे ॥ लंकाद्वारकपाटादिबध्वासर्वत्रयत्नतः २३० होमद्रव्याणिसंगृह्ययान्युक्तानिमयापुरा ॥ रक्तांबरा
हितोमुंडमालीप्रेतासनस्थितः ३१ परिस्तीर्याऽथशस्त्राणिहोमकुंडंसमंततः ॥ आदद्याद्बालकानांशिरोभिर्मांसलोहितैः ३२ एवंसरिपुघातार्थंचकारहवनंरहः ॥
उत्थितंधूम्रमालोक्यरामंप्राहविभीषणः ३३ यदिहोमसमाप्तिःस्यात्तदाऽजेयोभवेदयम् ॥ ततोरामोहरीन्सर्वान्प्रेषयामाससादरम् ३४ प्राकारंलंघयित्वातेगत्वाराव
णमंदिरम् ॥ हत्वाराक्षसवृंदंतद्गुहारक्षणतत्परम् ३५ नददृशुर्गुहाद्वारंयत्रहोमंचकारसः ॥ ततश्चसरमानामप्रभातेकरसंज्ञया ३६ विभीषणस्यभार्यातान्होमस्था
नमसूचयत् ॥ गुहापिधानपाषाणमंगदःपादघट्टनैः ३७ चूर्णयित्वारावणायताडयामासमुष्टिना ॥ वानरास्तेऽपितंवृक्षैस्ताडयामासुरादरात् ३८ तदातेवानरादृष्ट्वा
तूष्णीमेवस्थितंरिपुम् ॥ समानयन्केशपाशेधृत्वामंदोदरींशुभाम् ३९ विलपंतींमुक्तनीवींविह्वलांहृतकंचुकीम् ॥ दृष्ट्वात्यक्त्वातदाहोममुदतिष्ठत्त्वरान्वितः २४० त
तस्तेवानराःसर्वेययुःश्रीराघवांतिकम् ॥ ततोमंदोदरीप्राहकुरुत्वंवचनंमम ४१ दत्वासीतांराघवायराज्येकृत्वाविभीषणम् ॥ तपश्चर्यामयाऽरण्येकर्तुमर्हसिवैसुखम् ४२
ततस्यावचनंश्रुत्वातांसप्राहदशाननः ॥ रामोविष्णुश्चमांसीताजानामिप्राणवल्लभे ४३ रामहस्ताद्वधंलब्धुंहृतासीतापुरामया ॥ रामहस्तात्त्यक्तदेहोगच्छामिपरमं
पदम् ४४ त्वयाकार्यांक्रियामेहिप्रविशस्वानलंततः ॥ ततःसुखंमयायुक्तागमिष्यसिपरंपदम् ४५ इत्युक्त्वाप्रययौयोद्धुंरथेस्थित्वात्वरान्वितः ॥ राजगृहाद्विनिर्गच्छ
न्नग्रेमुंडीविलोकितः ४६ मुकुटःपतितश्छित्रःसंविग्नोरावणोहृदि ॥ ततोययौरणभुवंववर्षनिशितैःशरैः ४७ विधायकृत्रिमांसीतांमयेनसदशाननः ॥ पश्यतांवानराणां
चस्वरथेतांजघानवै ४८ दिव्येनशितखड्गेनतद्दृष्ट्वातेप्लवंगमाः ॥ हाहेत्युक्त्वादुःखितास्तेययूरामंनिवेदितुम् ४९ तावद्बिभीषणःसमागत्यरामादीन्प्राहसादरम् ॥ कृत्रिमेयं 
हतासीतामाखेदंभजताऽद्याहे २५० ततोऽन्तर्धानमगमद्बिभीषणस्तेऽपिप्लवंगमाः ॥ रामाद्याब्रह्मवाक्येनतुष्टायुद्धायनिर्ययुः ५१ तदासमातलिःशीघ्रंदेवेंद्रवचनाद्रथम् ॥

१ लक्ष्मीः ।

शस्त्रास्त्रवाजिसहितमशनिध्वजशोभितम् ५२ वरच्छत्रसमायुक्तंराघवायन्यवेदयत् ॥ तमारुह्यतदारामश्चकारकदनंमहत् ५३ आग्नेयेनतदाग्नेयंदैवंदैवेनराघवः ॥ अ
स्त्रंराक्षसराजस्यजघानपरमास्त्रवित् ५४ ततस्तुसस्टृजेघोरंराक्षसःसार्पमस्त्रवित् ॥ रामःसर्पांस्ततोदृष्ट्वासौपर्णास्त्रंमुमोचसः ५५ अस्त्रैःप्रतिहतेयुद्धेरामेणदशकंधरः ॥
पार्जन्यंसस्टृजेघोरंवायव्यास्त्रेणराघवः ५६ तदस्त्रंविनिवार्याऽसौवन्ह्यस्त्रंसस्टृजेपुनः ॥ पर्जन्यास्त्रेणपौलस्त्यश्चकारविफलंतदा ५७ नागानामयुतंतुरंगनियुतंसार्द्धंरथानां
शतंपत्तीनांशतकोटिनाशसमयेत्वेकाकबंधच्युतिः ॥ एवंकोटिकबंधनर्तनविधावेकोध्वनिःकिंकिणेर्विंशत्ताःप्रहरार्धतोरघुपतेःकोदंडघंटारणे ५८ तदाखेकौतुकंद्रष्टुंसमाजग्मुः
सुरामुदा ॥ गंधर्वाःकिन्नरायक्षाविमानशतसंस्थिताः ५९ तदाऽशनिध्वजंरम्यंबाणैश्चिच्छेदरावणः ॥ तंदृष्ट्वारामचंद्रोऽपिध्वजहीनंरथंनिजम् २६० मारुतिंप्राहवेगेनक्ष
णंतिष्ठध्वजोपरि ॥ तथेत्युक्त्वामारुतिःसतालमुत्पाटयवेगतः ६१ कृत्वारामरथेदिव्येतस्मिंस्तस्थौस्वयंमुदा ॥ तंमारुतिध्वजंदृष्ट्वारावणःसमरांगणे ६२ तालंच्छत्रंमात
लिंतुरगान्वायुनंदनम् ॥ ऐंद्रंधनुस्तच्चिच्छेदनवबाणैस्त्वरान्वितः ६३ वातात्मजमातलिनौमूर्च्छितौपातितौभुवि ॥ क्षणमात्रेणस्वस्थोऽभूत्तदासवायुनंदनः ६४ त
दारामोवायुपुत्रस्कंधेस्थित्वारणाजिरे ॥ चकारतुमुलयुद्धंरावणेनभयावहम् ६५ रावणःपरिघेणैवसंताड्यमारुतिंहृदि ॥ चकारमूर्च्छितंवेगात्पपातसपुनर्भुवि ६६ त
दासस्माररामोऽपिस्वरथंसमरांगणे ॥ तावद्रथःक्षणादेवाययौखादग्रतःस्थितः ६७ दारुकःसारथिर्यत्रयत्रशस्त्राण्यनेकशः ॥ गदापद्मेतुयत्रास्तिसर्वदागरुडोध्वजे ६८
यस्मिञ्छैब्यश्चसुग्रीवस्तथाचैवबलाहकः ॥ मेघपुष्पश्चचत्वारोवायुवेगाहयोत्तमाः ६९ यत्रछत्रंवरंदिव्यंहेमदण्डंविराजते ॥ चामरेद्वेशुभेयत्रशार्ङ्गंवैयत्रसद्धनुः २७०
तंरथंराघवोदृष्ट्वापरिक्रम्यप्रणम्यच ॥ आरुरोहमुदायुक्तःशार्ङ्गंस्वंधनुराददे ७१ ततोरामःशरैस्तीक्ष्णैर्दशास्यस्यरथंक्षणात् ॥ चकारचूर्णंसाश्वंतंरावणंचाप्यतर्जयत्
७२ तदाऽन्यरथमारूढोरावणोराघवंययौ ॥ ततोरामःशरैस्तीक्ष्णैर्दशाननशिरांसिसः ७३ चिच्छेदतानिगगनेगत्वातोषयुतानिहि ॥ रामहस्तान्मृतिर्जाताऽस्माकंचे
तिविचिंत्यच ७४ वंदनंकर्तुकामानिगगनाच्चरणाजिरे ॥ सस्मितानिपतंतिस्मराघवस्यपदोपरि ७५ रामःशिरांसिदृष्ट्वाऽथविदीर्णास्यानिखात्पुनः ॥ मांहंतुंमद्रवंती
तिमत्त्वामीत्याव्यताडयत् ७६ शरौघैःशतशःशीघ्रंतदद्भुतमिवाऽभवत् ॥ शतमेकोत्तरंछिन्नंशिरसांचैकवर्चसाम् ७७ शतमूर्ध्नोरावणस्यचैकोत्तरसहस्रकम् ॥ छिन्नंतत्क
ल्पभेदेनवदंतीत्यपिकेचन ७८ नदृष्ट्वारावणस्यांतंविभीषणमतेनसः ॥ नाभिदेशेऽमृतंतस्यकुंडलाकारसंस्थितम् ७९ पावकास्त्रेणतच्छीघ्रंशोषयामासराघवः ॥ ततः
शिरांसिबाहूंश्चचिच्छेदरावणस्यसः २८० एकेनमुख्यशिरसाबाहुभ्यांरावणोबभौ ॥ तयोर्युद्धमभूद्घोरंतुमुलंरोमहर्षणम् ८१ ततोदारुकवाक्येनमर्मदेशेव्यताडयत् ॥
ब्रह्मास्त्रेणरघुश्रेष्ठःसमरेदशकंधरम् ८२ सशरोहृदयंभित्वाहत्वातंतुदशाननम् ॥ रामतूणीरमाविश्यमेनेसकृतकृत्यताम् ८३ रावणस्यचदेहोत्थंज्योतिरादित्यवत्स्फुरत् ॥
प्रविवेशरघुश्रेष्ठंदेवानांपश्यतांसताम् ८४ तदादेवास्तुतुष्टुवुस्तंववर्षुःपुष्पवृष्टिभिः ॥ नेदुःखेदेववाद्यानिननृतुश्चाप्सरोगणाः ८५ तदामंदोदरीभर्त्रासहदेहंविसृज्यसा ॥

१ शवेइतिपाठः।

आ. रा. यथौवैकुंठभुवनंरावणेनमुदान्विता ८६ ततोविभीषणेनैवरामोरावणसत्क्रियाम् ॥ कारयित्वालक्ष्मणेनलंकायांतंविभीषणम् ८७ नीत्वाऽभिषेचयित्वाऽथन्यासभूतांतदंतिके ॥ सा. कां.
वायुपुत्रकृतांलंकांमोचयामासराक्षसात् ८८ विभीषणादिभिःशीघ्रमशोकंप्रेष्यमारुतिम् ॥ सीतायैसकलंवृत्तंश्रावयामासराघवः २८९ ॥ इतिश्रीशतकोटिचरितांतर्गतश्रीम
॥ ३२ ॥ दानंदरामायणेवाल्मीकियेसारकांडेयुद्धचरित्रेरावणवधोनामैकादशःसर्गः ॥ ११ ॥ श्रीशिवउवाच ॥ अथतांदिव्यवस्त्रैश्चभूषयित्वाविदेहजाम् ॥ सुस्नातांशिबिकासंस्थांवेष्टि १
तांवेत्रपाणिभिः १ निन्युःश्रीरामसान्निध्यंसुग्रीवाद्यास्त्वरान्विताः ॥ नानावाद्यसमुत्साहैर्नर्तनैर्वारयोषिताम् २ ततोऽवरुह्ययानात्सापभ्द्यांगत्वाशनैःपतिम् ॥ ननामसीताश्री
रामंलज्जिताऽऽसीत्पतेःपुरः ३ रामोऽपिदृष्ट्वातांसीतांशुद्धांज्ञात्वाऽपितांपुनः ॥ सर्वेषांप्रत्ययार्थंहितदावचनमब्रवीत् ४ यथेच्छंगच्छवैदेहिरिपुगेहनिवासिनि ॥ नत्वामंगीक
रोम्यद्यब्रह्मणाप्रार्थितोऽप्यहम् ५ तद्रामवचनंश्रुत्वाकारयित्वाचितांशुभाम् ॥ लक्ष्मणेनाऽथसुस्नातासीतावचनमब्रवीत् ६ रामादन्यंचेतसाऽपिनाहंजानामिपावक ॥
यदिदंमेऽस्तिसत्यंहितर्हित्वंशीतलोभव ७ इतिसाशपथंकृत्वाविवेशानलमुत्तमम् ॥ ततःसदेववाक्यैश्चतथादशरथस्यच ८ वचनाज्जानकींशुद्धांज्ञात्वातामग्रहीत्प्रभुः ॥
सुभूषितांपावकेनस्वांकेसंस्थापितांशुभाम् ९ पंचवट्यांस्वयंतत्रपुरान्यस्तांचपावके ॥ आलिंग्यजानकींरामोनिजांकेसंन्यवेशयत् १० तामसीराजसीचैवसात्विकीया
त्रिधापुरा ॥ जातारावणघातार्थंसाजातैकत्रवैतदा ११ ततोदेवैःस्तुतोरामश्चेंद्रेणसमरेहतान् ॥ वानरादीन्सुधावृष्ट्याजीवयामाससादरम् १२ तत्रैकंवानरंरामोऽद्ट
ष्ट्वापप्रच्छमारुतिम् ॥ राघवंमारुतिःप्राहकुंभकर्णेनभक्षितः १३ यदिकिंचित्तस्यकपेर्नखकेशास्थिलोहितम् ॥ रणेऽभविष्यत्पतितंतर्ह्यद्यामृतवृष्टितः १४ अभविष्य
ज्जीवितःससत्यंविद्धिरघूत्तम ॥ सुधावृष्ट्याराक्षसास्तेजीवयिष्यंतिवैपुनः १५ इतिभीत्यापुराऽस्माभिःसर्वेत्यक्तामहोदधौ ॥ तन्मारुतेर्वचःश्रुत्वायमराजंव्यलोकयत् ॥
१६ यमोऽपिभीत्यारामाग्रेऽर्पयत्तंप्लवगोत्तमम् ॥ तंदृष्ट्वाराघवस्तुष्टस्तदाज्ञांनाकमुत्तमम् १७ गंतुंददौमातलिनेसोऽपिनत्वारघूत्तमम् ॥ रथेनवाजियुक्तेनययौमघवतः
पुरीम् १८ रामस्तुमंगलस्नानंकर्तुंसंप्रार्थितोऽपिहि ॥ विभीषणेनभरतंस्मृत्वानांगीचकारसः १९ ततःसर्वैर्वानरैश्चपुष्पकंचारुरोहसः ॥ रथेनदारुकश्चाऽपिगरुडोमकर
ध्वजः २० विभीषणश्चारुरोहपुष्पकंराघवाज्ञया ॥ ततस्तेनिर्जराःसर्वेराममामंत्र्यखंययुः २१ दृष्ट्वारामंदशरथोविमानेनययौदिवम् ॥ अथतंराघवंप्राहपुष्पकस्थंविभी
षणः २२ रामतेप्रष्टुमिच्छामितत्त्वंमांवक्तुमर्हसि ॥ ऐरावणगृहेरामयदापातालमुत्तमम् २३ पुरागतस्तदातूष्णींकिमर्थंत्वंस्थितःप्रभो ॥ कथंतौनहतौदुष्टौतदेवक्षणमात्र
तः २४ तत्तस्यवचनंश्रुत्वाविहस्यराघवोऽब्रवीत् ॥ अमराणांवधःपूर्वंविधिनामारुतेःकरात् २५ प्रोक्तस्तस्मान्मयातूष्णींप्रतीक्षामारुतेःकृता ॥ अन्यच्चापिजगत्यांहि
मारुतेःपौरुषंजनाः २६ वदंतुयेनश्रीरामलक्ष्मणौमोचितौपुरा ॥ असुराभ्यांहिपातालेसोऽयंश्रीरामसेवकः २७ इतिपौरुषवृद्ध्यर्थंमारुतेर्जगतीतले ॥ ममदासस्यबलि ॥ ३२ ॥
नस्तदातूष्णींस्थितंमया २८ नोचेद्धुंकारमात्रेणपथिहंतुंनकिंक्षमः ॥ ईषिकास्त्रेणकाकस्ययेननेत्रंविदारितम् २९ शतयोजनपर्यंतंमारीचोऽब्धौपतत्त्रिणा ॥ पुरायेनम

१ अभवज्जीवितःसत्यंसत्यंविद्धीतिपाठः ।



यात्यक्तःसोऽहंकिंकुंठितस्तदा ३० तयोवधेतुपातालेनशस्त्रार्थंप्रतीक्षितम् ॥ मारुतेःपौरुषार्थंहिसत्यंवेदविभीषण ३१ इतिरामवचःश्रुत्वामारुतिःसविभीषणम् ॥ तदा
प्राहविहस्याथकिंत्वंतद्विस्मृतोऽसिहि ३२ सेतुकालेराघवेणगर्वदृष्टामयिस्थितम् ॥ लांगूलंखंडितंपूर्वंलिंगोत्पाटनहेतुना ३३ तस्यमेराघवाग्रेहिकिंबलंमन्यसेऽत्रहि ॥
किंविलंबोराघवायतयोरसुरयोर्वधे ३४ वर्धितानिजदासस्यकीर्तिरत्रविभीषण ॥ इतितन्मारुतेर्वाक्यंश्रुत्वारामंविभीषणः ३५ ननामपरयाभक्त्याततःसम्यक्प्रपूज
यत् ॥ अथरामःपुष्पकस्थःसीतयाप्रार्थितोमुहुः ३६ तद्वाक्यगौरवात्तुष्टस्त्रिजटायैवरान्ददौ ॥ वस्त्रालंकारभूषाभिःपूर्वंतुष्टांविधायच ३७ त्रिजटेवचनंमेऽद्यशृ
णुमंगलदायकम् ॥ कार्तिकेमाघवेमाघेचैत्रेमासचतुष्टये ३८ स्नात्वाऽग्रेत्रिदिनंस्नानंत्वत्प्रीत्यर्थंनरोत्तमाः ॥ करिष्यंतिहिहितेनैवकृतकृत्याभविष्यसि ३९ येनैरे
त्रिदिनंस्नानंनकृतंपौर्णिमोर्ध्वतः ॥ तेषांमासकृतंपुण्यंहरत्वंवचनान्मम ४० अन्यच्चापिशृणुष्वत्वंदीयतेयोवरोमया ॥ अशुचीनिगृहाण्येवतथाश्राद्धहवींषिच ॥
४१ क्रोधाविष्टेनदत्तानिविधिपुत्रकृतान्यपि ॥ त्रिजटेतानितुभ्यंहिशृण्वन्यत्त्वंमयोच्यते ४२ पादशौचमनभ्यंगंतिलहीनंचतर्पणम् ॥ सर्वंतत्त्रिजटेतुभ्यंतथाश्रा
द्धमदक्षिणम् ४३ इतिदत्त्वावरान्रामस्त्रिजटासरमान्वितः ॥ सविभीषणसुग्रीवमकरध्वजवानरैः ४४ ययौविहायसासीतांदर्शयन्कौतुकानिसः ॥ पश्यसीते
पुरींलंकांतथारणभुवंशुभाम् ४५ पश्यसेतुंमयाबद्धंशिलाभिर्लवणार्णवे ॥ एतच्चदृश्यतेतीर्थंसेतुबंधमितिस्मृतम् ४६ इत्युक्त्वारघुवीरस्तुराक्षसेंद्रस्यवाक्यतः ॥
पुष्पकाद्भुविचोत्तीर्यधृत्वाकोदंडमुत्तमम् ४७ बभंजसेतुंतत्कोट्याधनुष्कोटिरितीर्यते ॥ अतएवहितत्तीर्थंस्नानात्कैवल्यदायकम् ४८ कोदंडपाणिर्नाम्नाऽऽसीद्राम
मूर्तिश्चतत्रहि ॥ एतस्मिन्नंतरेतत्रसंपातिःसययौतदा ४९ तमालिंग्यरामचंद्रस्तंप्राहस्मितपूर्वकम् ॥ बंधोर्नाम्नाऽत्रतीर्थंत्वंकुरुसेतौमहत्तमम् ५० तथेतिरा
मवचनाद्भ्रातुःसंतोषकाम्यया ॥ तीर्थंचकारसम्पातिर्जटायुमितिविश्रुतम् ५१ ततोरामाज्ञयायानंसंपातिश्चारुरोहसः ॥ ततोयानेनतांसीतांदर्शयन्कौतुकानिहि ॥
35 ५२ ययौरामेश्वरंपूज्यतयाश्रीरघुनंदनः ॥ सीतेऽत्रपश्यमंत्रार्थमेकांतेसंस्थितंपुरा ५३ अत्रदर्भेषुशयनंकृतंपश्यविदेहजे ॥ नवग्रहार्थंप्रक्षिप्तान्पाषाणान्पश्यसागरे
५४ तूष्णीमेवस्थितंपश्यसागरंममवाक्यतः ॥ एवंतांदर्शयन्रामःकिष्किंधांप्रययौक्षणात् ५५ वानराणांस्त्रियःसर्वाविमानेस्थाप्यराघवः ॥ ययौतांदर्शयन्सीतां
कौतुकानिसमंततः ५६ प्रवर्षणगिरिंपश्यऋष्यमूकाचलंतथा ॥ पंपासरोवरंपश्यकृष्णांभीमरथींशुभाम् ५७ पश्यपंचवटींरम्यांगोदातीरविराजिताम् ॥ अगस्तेराश्र
मंपश्यसुतीक्ष्णस्याश्रमंतथा ५८ पश्याऽत्रेराश्रमंसीतेचित्रकूटंसमीक्षय ॥ कालिंदींजान्हवींपश्यभरद्वाजाश्रमंतथा ५९ इत्युक्त्वाजानकींरामोभरद्वाजार्थितस्तदा ॥
तस्थौतस्याश्रमेयानादवरुह्ययथासुखम् ६० माघशुक्लचतुर्थ्यांहिपूर्णेवर्षेचतुर्दशे ॥ भरद्वाजोऽपितपसास्वर्गनिर्मायभूतले ६१ पूजयामासश्रीरामंसीतावानरसंयुतम् ॥
रामोऽपिहृदिसंमन्त्र्यमारुतिंवाक्यमब्रवीत् ६२ अयोध्यांगच्छभरतंमद्वृत्तंकथयस्वतम् ॥ सखायंशृंगवेरेमेवृत्तंकथयगुहकम् ६३ तथेतिगुहकंगत्वाकपिर्वृत्तंन्यवेदयत् ॥
गुहकोऽपिमुदायुक्तस्तदारामांतिकंययौ ६४ ततोऽयोध्यांययौवेगान्मारुतिःस्वविहायसा ॥ नंदिग्रामेऽपिभरतोपूर्णेवर्षेचतुर्दशे ६५ नागतेराघवेवन्हिंसन्नद्धोभूत्प्रवेशितुम् ॥

शत्रुघ्नंभरतःप्राहरावणेनरणांगणे ६६ श्रीरामलक्ष्मणौवीरौहतौमन्येऽद्यनागतौ ॥ आकारितामयासर्वेनृपाएतैर्बलैर्युताः ६७ लंकांगत्वाराघवस्यसाहाय्यंकर्तुमिच्छता ॥
सोहमग्निंविशाम्यद्यत्वावस्ताचलंगते ६८ त्वंगच्छपार्थिवैर्लंकांहत्वायुद्धेदशाननम् ॥ मोचयित्वाजनकजांततोनःपारलौकिकम् ६९ रामादीनांत्रिबंधुनांकर्तुमर्हसिसा
दरम् ॥ इतितद्वाक्यमाकर्ण्यपौराजानपदानृपाः ७० शत्रुघ्नोमातरःसर्वाउर्मिलाद्याःस्त्रियश्चताः ॥ सुमंत्राद्यामंत्रिणश्चपौरनार्यश्चसेवकाः ७१ भरतंवेष्टयामासुःखेदा
द्विह्वलमानसाः ॥ भरतःसांत्वयन्सर्वान्ययौतांशरयूंनदीम् ७२ चितांकृत्वाततःस्नात्वाददौदानान्यनेकशः ॥ सप्तप्रदक्षिणाःकृत्वावन्हिंध्यात्वारघूत्तमम् ७३ सीतांतां
लक्ष्मणंवीरंनत्वामातृर्गुरुंमुनीन् ॥ आराध्यदेवताध्यात्वाह्युत्तराभिमुखःस्थितः ७४ रवौन्यस्तेक्षणःसायंप्रतीक्षन्संस्थितःक्षणम् ॥ महान्कोलाहलश्चासीत्तदास्त्रीपुरुषैः
कृतः ७५ एतास्मिन्नंतरेखस्थस्तद्दृष्ट्वावायुनंदनः ॥ प्रवेष्टुमुद्यतंवेगाद्भरतंगद्गदस्वनः ७६ अब्रवीन्मधुरंवाक्यंसुधयासेचयन्निव ॥ माविशस्वानलंवीरराघवोऽयमागतः
७७ सीतयालक्ष्मणेनाऽपिभरद्वाजाश्रमंप्रति ॥ वानरैःसहितंरामंश्वस्त्वंपश्यसिनिश्चयात् ७८ रामोऽप्युत्कंठितस्त्वांहिद्रष्टुमास्तेजटाधर ॥ इतितद्वाक्सुधाद्यास्तिसेचि
तोभरतोमुदा ७९ वन्हिंनत्वापराहृत्यननामवायुनंदनम् ॥ भरतंमारुतिश्चापिनत्वालिंग्यसविस्तरम् ८० श्रावयामासश्रीरामवृत्तंसंतोषकारकम् ॥ तच्छ्रुत्वाभरतस्तु
ष्टःशोभयामासतांपुरीम् ८१ अयोध्यांतोरणाद्यैश्चपौरैःप्रत्युज्जगामतम् ॥ मस्तकेपादुकेबद्ध्वापुरस्कृत्याऽथवारणम् ८२ माघस्यासितपंचम्यांप्राप्तेपंचदशेऽब्दके ॥
प्रभातेभरतोयाम्येददर्शपुष्पकंखगम् ८३ ननामराघवंदृष्ट्वासाष्टांगंभरतस्तदा ॥ रामोऽप्यालिंग्यभरतंकृत्वारूपाण्यनेकशः ८४ एककालेजनान्सर्वान्पृथक्सपरिषस्व
जे ॥ आदौपश्चान्नरामेणकृतमालिंगनंतदा ८५ रामान्दृष्ट्वाह्यसंख्यातान्जनाश्चासन्सुविस्मिताः ॥ समाश्वास्याऽथभरतंराघवःसाश्रुलोचनः ८६ ननामशिरसामातृर्व
सिष्ठंचाप्यरुन्धतीम् ॥ ततोवाद्यनर्तनाद्यैर्नंदिग्रामंययौशनैः ८७ श्मश्रुकर्मोद्वर्तनंचतैलाभ्यंगंतुबंधुभिः ॥ नंदिग्रामेऽकरोद्रामोनानामांगल्यवस्तुभिः ८८ नववाद्यसु
घोषाश्चनेदुःसर्वत्रसुस्वराः ॥ नार्योनीराजयामासूरत्नदीपैरघूत्तमम् ८९ ततःसीताऽपिश्वश्रूःसाप्रणनामत्वरुंधतीम् ॥ वसिष्ठंब्राह्मणान्वृद्धान्वंदनीयान्यथाक्रमम् ९०
ततःसीतांसमालिंग्यकौसल्याद्याश्चमातरः ॥ स्नापयामासुर्मांगल्यद्रव्यैर्वाद्यपुरःसरम् ९१ वस्त्रालंकारभूषाभिःशुशुभेजानकीतदा ॥ भरतःपादुकेतेतुराघवस्यसुपूजि
ते ९२ योजयामासरामस्यपादयोर्भक्तिसंयुतः ॥ ततोऽतिविनयात्प्राहभरतोरघुनंदनम् ९३ राज्यमेतन्न्यासभूतंमयानिर्यापितंतव ॥ कोष्ठागारंबलंकोशंकृतंदशगुणं
मया ९४ त्वत्तेजसाजगन्नाथपालयस्वपुरंस्वकम् ॥ तथेतिराघवश्चोक्त्वाभरतंसंन्यवेशयत् ९५ ततःसदिव्यवस्त्राणिपरिधायरघूत्तमः ॥ सीतयारथमारुह्यवाद्यघोषैर्जय
स्वनैः ९६ वारांगनानृत्यगीतैर्ययौनिजपुरींप्रति ॥ पौरनार्यश्चसौधस्थाववर्षुःपुष्पवृष्टिभिः ९७ चक्रुर्नीराजनंमार्गेनानाबलिपुरःसरम् ॥ रामोरथात्तदोत्तीर्यसीतांसंप्रे
ष्यवैश्मगृहम् ९८ पुष्पकंप्राहगच्छत्वंकुबेरंवहसर्वदा ॥ तथेतिरामवचनाज्जगामपुष्पकंतुतत् ९९ अथरामःसभामध्येविवेशकपिभिःसह ॥ ददौकपिभ्योगेहानिवस्तुंरम्या

१ समेइतिपाठः ।

णिसादरम् १०० अथरामायराज्यार्थमभिषेकंगुरुस्तदा ॥ चकाश्चुमुहूर्तेवैमहामंगलपूर्वकम् १ हनुमत्प्रमुखाद्यैश्चचतुःसिंधुजलंशुभम् ॥ समानीयन्नृपैःसर्वैर्महावाद्यपु
रःसरम् २ छत्रंचतस्यजग्राहपृष्ठसंस्थःसलक्ष्मणः ॥ दधारसव्यपार्श्वस्थश्चामरंभरतस्तदा ३ शत्रुघ्नोवामपार्श्वस्थोदधारव्यजनंशुभम् ॥ हनूमान्पादुकेदिव्येदधारपुर
तःस्थितः ४ वायव्यादिचतुष्कोणसंस्थितास्तेमहौजसः ॥ सुग्रीवाद्यास्तदाचासंश्चत्वारोराघवेक्षणाः ५ सुग्रीवोजलपात्रंचवरादर्शंविभीषणः ॥ दधारहस्तेतांबूलपा
त्रंसवालिनंदनः ६ वज्रकोशंजांबवांश्चदधारवेगवत्तरः ॥ तस्थौसिंहासनेरामःसपृष्ठांकोपबर्हणः ७ सौमित्रिवामपार्श्वेऽथसंपातिःसंस्थितोऽभवत् ॥ वामपार्श्वेभरतस्यगु
हकःसंस्थितोऽभवत् ८ शत्रुघ्नवामपार्श्वेऽथसंस्थितोमकरध्वजः ॥ हनुमद्वामपार्श्वेचगरुडःसंस्थितोऽभवत् ९ सुग्रीवादिचतुर्णांतेवामपार्श्वेषुसंस्थिताः ॥ श्रीचित्ररथविज
यसुमंत्रदारुकास्तथा १० नानाराजोपकरणधृतहस्तामहौजसः ॥ ययुर्देवासुराःसर्वेयक्षगंधर्वकिन्नराः ११ औषध्यःपर्वतावृक्षाःसागराश्चाऽथनिम्नगाः ॥ मालांचकांच
नींवायुर्ददौवासवचोदितः १२ सर्वरत्नसमायुक्तंमणिकांचनभूषितम् ॥ ददौहारंनरेंद्रायस्वयंशक्रस्तुभक्तितः १३ प्रजगुर्देवगंधर्वानचृतुर्वरयोषितः ॥ देवदुन्दुभयोनेदुः
पुष्पवृष्टिःपपातखात् १४ ततोऽकरवंस्तुतिमहंभरतेनाऽतिपूजितः १५ ॥ श्रीशिवउवाच ॥ सुग्रीवमित्रंपरमंपवित्रंसीताकलत्रंनवमेघगात्रम् ॥ कारुण्यपात्रंशतपत्रने
त्रंश्रीरामचंद्रंसततंनमामि १६ संसारपारंनिगमप्रचारंधर्मावतारंहृतभूमिभारम् ॥ सदाऽविकारंसुखसिंधुसारंश्रीरामचन्द्रंसततंनमामि १७ लक्ष्मीविलासंजगतांनि
वासंलंकाविनाशंभुवनप्रकाशम् ॥ भूदेववासंशरदिन्दुहासंश्रीरामचन्द्रंसततन्नमामि १८ मंदारमालंवचनेरसालंगुणैर्विशालंहतसप्ततालम् ॥ क्रव्यादकालंसुरलोक
पालंश्रीरामचन्द्रंसततंनमामि १९ वेदांतगानंसकलैःसमानंहतारिमानंत्रिदशप्रधानम् ॥ गजेंद्रयानंविगतावसानंश्रीरामचन्द्रंसततन्नमामि २० श्यामाभिरामंन
यनाभिरामंगुणाभिरामंवचनाभिरामम् ॥ विश्वप्रणामंकृतभक्तकामंश्रीरामचन्द्रंसततन्नमामि २१ लीलाशरीरंरणरंगधीरंविश्वैकसारंरघुवंशहारम् ॥ गंभीरनादंजि
तसर्ववादंश्रीरामचंद्रंसततंनमामि २२ खलेकृतांतंस्वजनेविनीतंसामोपगीतंमनसाप्रतीतम् ॥ रागेणगीतंवचनादतीतंश्रीरामचंद्रंसततंनमामि २३ श्रीरामचंद्रस्यवराष्ट
कंत्वांमयेरितंदेविमनोहरंये ॥ पठंतिशृण्वन्तिगृणंतिभक्त्यातेस्वीयकामान्प्रलभंतिनित्यम् २४ इतिस्तुत्वारामचंद्रंसभायांसंस्थितस्त्वहम् ॥ एतस्मिन्नंतरेतत्रराजादशर
थोमहान् २५ दृष्ट्वारामंससीतंचविमानस्थोऽर्कसन्निभः ॥ स्तुत्वारामंपरात्मानंराज्यस्थंबंधुवेष्टितम् २६ उवाचरामंसंतुष्टःसुरानीकविराजितः ॥ दशरथउवाच ॥ धन्यो
ऽहंकृतकृत्योऽहंधन्यौतौपितरौमम २७ धन्योदेशःकुलंधन्यंयस्त्वांराज्याभिषेचितम् ॥ पश्याम्यद्यमहाबाहोधन्यासाजननीतव २८ याकौसल्यासमुत्साहंनेत्राभ्यांतेऽद्यप
१२ श्यति ॥ इत्युक्त्वांतंराजानंननामसरघूत्तमः २९ कौसल्याद्याराजदाराःसर्वेतेपौरवासिनः ॥ लक्ष्मणोभरतश्चैवशत्रुघ्नस्तेऽथमंत्रिणः ३० नमस्काराश्चपंचकुर्विमानस्थंमुदान्वि
ताः ॥ तान्राजापिपृथक्पृष्ट्वासर्वैर्देवगणैर्युतः ३१ पूजितोरामचंद्रेणमयासहन्यवर्तत ॥ ययुःस्वंस्वंपदंसर्वेमयाराज्ञासुरास्तदा ३२ रामेऽभिषिक्तेराजेंद्रेसर्वलोकसुखावहे ॥

सारमितिपाठः । २ विभीतमितिपाठः

वसुधासस्यसंपन्नाफलवंतोमहीरुहाः ३३ गंधहीनानिपुष्पाणिगंधवंतिचकाशिरे ॥ सहस्रशतमश्वानांधेनूनांरघुनंदनः ३४ ददौशतंवृषाणांचद्विजेभ्योवसुकोटिशः ॥ सूर्यकां
तिसमप्रख्यांसर्वरत्नमयींस्रजम् ३५ सुग्रीवायददौप्रीत्याराघवोहर्षसंयुतः ॥अवतंसंददौश्रेष्ठंराक्षसेंद्रायराघवः ३६ अंगदायददौदिव्येराघवोबाहुभूषणे ॥ चंद्रकोटिप्रतीका
शंमणिरत्नविभूषितम् ३७ सीतायैप्रददौहारंप्रीत्यारघुकुलोत्तमः ॥ सातंहारंददौवायुपुत्रंरामसमर्पितम् ३८ तेनहारेणशुशुभेमारुतिर्गौरवेणच ॥ तदाहृष्टाहनूमंतंरामोवचन
मब्रवीत् ३९ मारुतेत्वांप्रसन्नोऽस्मिवरंवरयकांक्षितम् ॥ हनूमानपितंप्राहनत्वारामंप्रहृष्टधीः ४० त्वन्नामस्मरतोराममनस्तृप्यतिनोमम ॥ अतस्त्वन्नामसततंस्मरन्स्था
स्यामिभूतले ४१ यावत्स्थास्यतितेनामलोकेतावत्कलेवरम् ॥ ममतिष्ठतुराजेंद्रवरोऽयंमेऽभिकांक्षितः ४२ यत्रयत्रकथालोकेप्रचरिष्यतितेशुभा ॥ तत्रतत्रगतिर्मेऽस्तुश्रव
णार्थंसदैवहि ४३ देवालयान्नदीतीरात्तीर्थाद्वापिजलाशयात् ॥ विनाऽन्यत्रस्थलेतेऽस्तुकथाषट्घटिकोर्ध्वतः ४४ रामस्तथेतितंप्राहमुक्तस्तिष्ठयथासुखम् ॥ कल्पांतेममसा
युज्यंप्राप्स्यसेनाऽत्रसंशयः ४५ तमाहजानकीप्रीतायत्रकुत्रापिमारुते ॥ स्थितंत्वामनुयास्यंतिभोगाःसर्वेममाज्ञया ४६ ग्रामारामपत्तनेषुव्रजखेटकसद्मसु ॥ वनदु
र्गपर्वतेषुसर्वदेवालयेषुच ४७ नदीषुक्षेत्रतीर्थेषुजलाशयपुरेषुच ॥ वाटिकोपवनाश्वत्थवटवृंदावनादिषु ४८ त्वन्मूर्तिंपूजयिष्यंतिमानवाविघ्नशांतये ॥ भूतप्रेतपिशाचा
द्यानश्यंतिस्मरणात्तव ४९ येचान्येवानराद्याश्चह्ययोध्यांसमुपागताः ॥ अमूल्याभरणैर्वस्त्रैःपूजिताराघवेणते ५० सुग्रीवप्रमुखाःसर्वेवानराःसविभीषणाः ॥ मकरध्वजसं
पातिगुहकाःपार्थिवादयः ॥ यथार्हंपूजितास्तेनरामेणवसनादिभिः ५१ ततःसवभोजनार्थंराघवःसंस्थितोऽभवत् ॥ रामेणप्राणाहुतयोगृहीताश्चेतिमारुतिः ५२ निरी
क्ष्योड्डीयवेगेनरामाग्रेभोजनस्यच ॥ त्रिपदायांस्थितंपात्रंहैमंपक्वान्नपूरितम् ५३ निनायवामहस्तेनधृत्वाखेविहसन्मुदा ॥ स्वयंभुक्त्वारामशेषंप्राक्षिपद्वानरानपि ५४
तदाविभीषणाद्याश्चस्वीयपात्राणिवेगतः ॥ विसृज्यमारुतिंस्तुत्वात्वयासम्यक्कृतंत्विति ५५ तत्क्षिप्तंराघवोच्छिष्टंबुभुजुःसंभ्रमान्विताः ॥ महान्कोलाहलश्चासीद्रामो
च्छिष्टार्थमादरात् ५६ सीतारामौतन्निरीक्ष्यमुदाप्रहसतुस्तदा ॥ एवंनानाकौतुकानिकुर्वंतोराघवांतिके ५७ सुग्रीवाद्याःसुखंतस्थुस्तोषयंतःकियद्दिनम् ॥ एतस्मि
न्नंतरेतत्रपुष्पकंचागमत्पुनः ५८ प्राहदेवकुबेरेणप्रेषितंत्वामहंपुनः ॥ मामाहयत्कुबेरस्तच्छृणुष्वरघुनंदन ५९ जितंत्वंरावणेनादौपश्चाद्रामेणनिर्जितम् ॥ अतस्त्वं
राघवंनित्यंवहयावद्वसेद्भुवि ६० यदागच्छेद्रघुश्रेष्ठोवैकुंठंयाहिमांतदा ॥ तच्छ्रुत्वाराघवःप्राहसुग्रीवादीन्यथास्थले ६१ स्थाप्यशीघ्रमयोध्यायांराजद्वाराद्बहिर्वस ॥
तथेतिरामवचनाद्वानराद्यान्यथास्थले ६२ स्थाप्ययानमयोध्यायांराजद्वाराद्बहिःस्थितम् ॥ चकारराज्यंधर्मेणलंकायांसविभीषणः ६३ प्रशासराज्यंपाताले
धर्मेणमकरध्वजः ॥ चकारतार्क्ष्यःसंपातिर्यौवराज्यपदेनिजे ६४ शशासराज्यंकपिभिःकिष्किंधायांकपीश्वरः ॥ शृंगवेरपुरेराज्यंगुहकश्चाऽकरोन्मुदा ६५ न
त्वारामंवायुपुत्रोययौतप्तुंहिमालयम् ॥ सर्वेविभीषणाद्याश्चपंचमेसप्तमेऽह्नि ६६ दर्शनार्थंराघवस्यसाकेतंप्रययुःसदा ॥ पंचसप्तदिनान्यत्रस्थित्वाश्रीराघवां

१ भक्तवत्सलःइतिपाठः । २ पूजयामासराघवःइतिपाठः ।

तिकम् ६७ यातायातंसदाचकुःस्वस्वराज्याद्रघूत्तमम् ॥ रामोऽपिराज्यमखिलंशशासाऽखिलवत्सलः ६८ अनिच्छंतंहिसौमित्रिंयौवराज्येऽभ्यषेचयत् ॥
लक्ष्मणःपरयाभक्त्यारामसेवापरोऽभवत् ६९ विश्वामित्राध्वरेपूर्वंरणयागस्यपूर्णता ॥ नकृतायाराघवेणसाकृतास्वपदेतदा ॥ रणयागःसविस्ताराद्वर्ण्यतेशृणुपार्व
ति ७० रणांगणंयज्ञकुंडंतत्रवैह्यपलायनम् ॥ तच्चवेदविधानंचब्रह्मसत्वंप्रकीर्तितम् ७१ कर्मणश्चखटाटोपोज्ञेयःशस्त्रखणस्वनः ॥ संमार्जनंतु कृस्तुवयोर्ज्ञेयं
पाषाणघर्षणम् ७१ शस्त्राणांमलशोधार्थंक्रियतेयद्रणांगणे ॥ भूम्यांशराणांविस्तारःपरिस्तरणमुत्तमम् ७३ परिसमूहनंधैर्यंवन्हिःकालानलोमहान् ॥ स्रुवेणवा
णरूपेणमांसाहुतिसमर्पणम् ७४ रक्तधारावसोर्धाराहाहाकारोभयानकः ॥ सॐकारवषट्कारघोषोज्ञेयोरणाध्वरे ७५ अग्नेर्ज्वालाशस्त्रतेजोधूम्रःस्वेदस्त्रवोरणे ॥ ज्वाला
तिशयशांत्यर्थंपृषदाज्यस्यसेचनम् ७६ यत्तदत्रतुवीराणामस्त्रमोचनमुत्तमम् ॥ ज्ञानेनसहजीवस्यबलिर्दीपबलिःस्मृतः ७७ येदेहलोभिनोजीवाबलिर्दीपहाराःस्मृ
ताः ॥ रामहस्तान्मृतिंत्यक्त्वायेकुर्वंतिपलायनम् ७८ देहबंधान्नमुक्तास्तेबलिभक्षणदोषतः ॥ पूर्णाहुतिःशिरोभिर्हिज्ञेयातत्रप्रदक्षिणाः ७९ उच्चाटनंहिसव्येनवीराणां
जयहेतवे ॥ निजपदप्रदानंचज्ञेयासादक्षिणाऽध्वरे ८० सुरैर्यापुष्पवृष्टिस्तज्ज्ञेयंविप्राभिषेचनम् ॥ जयसंपादनंयुद्धेश्रेयःसंपादनंहितत् ८१ चराचराणामानन्दोज्ञेयःस
निजगोत्रिणाम् ॥ भूतानांतर्पणंविप्रभोजनंसंप्रकीर्तितम् ८२ एवंसुबाहुनायुद्धेराघवस्यरणाध्वरः ॥ तथागाधिजयज्ञोऽपिद्वौतौज्ञेयौसहैवहि ८३ कृताध्वरसमाप्तिस्तु
विश्वामित्रेणवैपुरा ॥ विसर्जितोनरामेणदृष्ट्वाऽकृतंरणाध्वरे ८४ कालानलंपुनस्तस्यतृप्त्यर्थंचाकरोन्मतिम् ॥ कृत्वाभूमेर्महत्पात्रंविराधरुधिरेणहि ८५ पात्रस्यप्रोक्षणंकृत्वा
चित्राहुत्यर्थमादरात् ॥ रामःशूर्पणखायाश्चघ्राणंकर्णाविभेदयत् ८६ प्राणाहुतिभ्योरामेणात्रिशिराःखरदूषणौ ॥ मारीचश्चकबंधश्चपंचैतेनिहताःक्षणात् ८७ शिखाबंध
विमोक्षार्थंशबरीभवबंधनात् ॥ कृतामुक्तातुरामेणजलस्पर्शनहेतवे ८८ नेत्रयोर्निहतोवालीदत्तंतद्रुधिरंतदा ॥ कथिलंकापुरीदग्धाकुंभकर्णस्तथौदनः ८९ पक्वान्नमिंद्र
जिज्ज्ञेयःशाकार्थंराक्षसाहताः ॥ वरान्नंसारणोज्ञेयःप्रहस्तोवटकःस्मृतः १९० निकुंभःपर्पटोज्ञेयःकुंभस्तुलवणंस्मृतः ॥ पायसार्थंकालनेमिस्त्वतिकायःसशर्करा ९१
क्षीरमैरावणोज्ञेयोघृतंमैरावणःस्मृतः ॥ दध्योदनःसमाप्तौतुआहवेचसरावणः ९२ हत्वानिवेदितःप्रात्रेतस्यकालानलस्यच ॥ उच्छिष्टबलिसंत्यागःकेशत्वक्कीकसादिनाम्
९३ संत्यागोऽत्ररणेज्ञेयस्तदाहृष्टोऽत्रभूवसः ॥ ततोरणाध्वरस्याऽत्रराघवेणाविसर्जनम् ९४ अयोध्यायांप्रवेशोहिकृतस्तत्तेवदाम्यहम् ॥ अध्वरावभृथस्नानंज्ञेयंराज्याभिषे
चनम् ९५ मंगलानिसमस्तानियज्ञांगविहितानिहि ॥ ज्ञातव्यानीतिरामेणरणयागोविसर्जितः ९६ एवंप्रोक्तोमयादेविरणयागस्सविस्तरः ॥ रामोथपरमात्माऽपिकार्या
ध्यक्षोऽतिनिर्मलः ९७ कर्तृत्वादिविहीनोऽपिनिर्विकारोऽपिसर्वदा ॥ स्वानन्देनाऽपिसंतुष्टोलोकानामुपदेशकृत् ९८ चकारविविधान्धर्मान्गार्हस्थ्यमनुलंब्यच ॥ नपर्यदे
वन्नविधवानचव्यालकृतंभयम् ९९ नव्याधिजंभयंचासीद्रामेराज्यंप्रशासति ॥ औरसानिवरामोऽपिजुगोपपितृवत्प्रजाः २०० सीतयाबंधुभिःसार्द्धंसाकेतेसुखमापसः ॥

१ लवणेनेतिपाठः ।

इदंयुद्धचरित्रंतेप्रोक्तंदेविमयातव २०१॥इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेवाल्मीकीयेसारकांडेयुद्धचरित्रेरामराज्याभिषेकवर्णनंनामद्वादशःसर्गः १२॥
॥ श्रीशिवउवाच ॥ ॥ एकदाराघवंद्रष्टुंमुनिभिःकुंभसंभवः ॥ ययौरामेणसंमानमानितःसउपाविशत् १ उपविष्टाःप्रहृष्टाश्चमुनयोरामपूजिताः ॥ संपृष्टकुशलाःसर्वे
रामंकुशलमब्रुवन् २ कुशलंतेमहाबाहोसर्वत्ररघुनंदन ॥ दिष्ट्येदानींप्रपश्यामोहतशत्रुमरिंदम ३ दिष्ट्यात्वयाहताःसर्वेमेघनादादयोऽसुराः ॥ हत्वारक्षोगणान्सर्वान्कृत
कृत्योऽद्यजीवसि ४ इतितेषांवचःश्रुत्वारामस्तान्प्राहसुस्मितः ॥ किमर्थंमादौयुष्माभिर्मेघनादोऽद्यकीर्तितः ५ इतिरामवचःश्रुत्वाऽगस्तिस्तैरवलोकितः ॥ कुंभयोनि
स्तदारामंप्रीत्यावचनमब्रवीत् ६ शृणुरामयथावृत्तंमेघनादस्यचेष्टितम् ॥ जन्मकर्मवरप्राप्तिंसंक्षेपाद्वदतोमम ७ पुराकृतयुगेरामपुलस्त्योब्रह्मणःसुतः ॥ तृणबिंदुसुतायां
सपुत्रंत्रैलोक्यविश्रुतम् ८ निर्ममेविश्रवानामधेयंवेदानिधिंशुभम् ॥ भरद्वाजसुतायांचविश्रवानिर्ममेसुतम् ९ श्रेष्ठंवैश्रवणंतस्मैप्रसन्नोऽभूद्विधिश्चिरात् ॥ विधिर्वैश्रवणा
याऽथतुष्टस्तत्तपसाददौ १० मनोभिलषितंयानंधनेशत्वमखंडितम् ॥ पुष्पकंचाप्येकदाऽसौद्रष्टुंविश्रवसंययौ ११ पुष्पकेणधनाध्यक्षोब्रह्मदत्तेनभास्वता ॥ नत्वातातंत
दाप्राहनस्थानंब्रह्मणाममा १२ दत्तंस्थेयंमयाकुत्रतद्विचार्यवदस्वमाम् ॥ विश्रवाह्यपितंप्राहविश्वकर्मविनिर्मिता १३ लंकानाम्नीपुरीश्रेष्ठासागरेरितसुमंडिता ॥
त्यक्ताविष्णुभयाद्दैत्याविविशुस्तांरसातलम् १४ सुखंत्वंवसतस्यांहितथेत्युक्ताधनेश्वरः ॥ गत्वातस्यांचिरकालमुवासापितृसंमतः १५ कस्मिंश्चित्त्वथकालेहिसुमालीना
मराक्षसः ॥ दुहित्राव्यचरद्भूम्यांपुष्पकेतंददर्शसः १६ हितायचिंतयामासराक्षसानांमहामनाः ॥ कैकसींतनयामाहगच्छविश्रवसंमुनिम् १७ वरयस्वमुनेस्तेजःप्रतापा
त्तेसुताःशुभाः ॥ भविष्यन्तिधनाध्यक्षतुल्यानोहितकारिणः १८ सासंध्यायांययौशीघ्रंमुनेरग्रेव्यवस्थिता ॥ लिखन्तीभुविपादांगुष्ठेनचाधोमुखीस्थिता १९ तामपृच्छ
न्मुनिःकात्वंसाऽऽहत्वंवेत्तुमर्हसि ॥ ततोध्यात्वामुनिःसर्वंज्ञात्वातांप्रत्यभाषत २० ज्ञातंतवाभिलषितंमत्तःपुत्रानभीप्ससि ॥ दारुणायांतुवेलायामागताऽसिसुमध्यमे २१
अतस्तेदारुणौपुत्रौराक्षसौसंभविष्यतः ॥ साऽब्रवीन्मुनिशार्दूलंत्वत्तोप्येवंविधौसुतौ २२ तामाहांऽतिमजोयस्तेभविष्यतिमहामतिः ॥ ततःसासुषुवेपुत्रान्यथाकालेसुम
ध्यमा २३ रावणंकुंभकर्णंचक्रौंचींशूर्पणखांशुभाम् ॥ कुंभीनसींकनीयांसंतृतीयंतंविभीषणम् २४ रावणःकुंभकर्णश्चत्रयोदुहितरस्तथा ॥ दुर्वृत्ताःप्राणिभक्षाश्चबभूवुर्मुनिहिं
सकाः २५ एकदारावणोमात्रालिंगार्थंप्रेषितःशिवम् ॥ कर्तुंप्रसन्नमकरोत्कैलासेकर्मदुष्करम् २६ किंचित्स्वीयंशिरश्छित्त्वावीणांकर्तुंसमुद्यतः ॥ कृत्वापीठंहिदेहस्यतन्मू
लंशिरसस्तथा २७ तदग्रंपादयोःकृत्वाशंकुनंगुलिभिस्तथा ॥ तंत्रीःकृत्वाऽन्त्रमालाभिःशतशोऽथसहस्रशः २८ एवंकृत्वास्वदेहस्यवीणांषड्जस्वरैर्मुहुः ॥ चकारस्वमुखे
नैवगांधर्वंगायनंशुभम् २९ तदानंदीश्वरंप्राहशंकरोलोकशंकरः ॥ शिरःसंधायहस्तेनत्वयावाच्योऽद्यरावणः ३० आत्मलिंगंराक्षसत्वांशंकरोनप्रदास्यति ॥ हृद्गतंहिम ॥ ३५ ॥
याज्ञातंशंभोस्त्वंयाहिस्वस्थलम् ३१ इत्युक्ताप्रेषणीयःसरावणःस्वस्थलंत्वया ॥ इतिशंभोर्वचःश्रुत्वाययौनंदीसरावणम् ३२ शिरःसंयोज्यहस्तेनशिवोक्तंतंन्यवेदयत्॥

१ तस्मैइतिपाठः ।

तच्छुत्वारावणश्चाऽपिसमतिक्रम्यतांनिशाम् ३३ चकारपूर्ववद्गानंद्वितीयदिवसेपुनः ॥ नंदिनाशंकरश्चाऽपिपूर्ववत्तंन्यवेदयत् ३४ इत्थंदशदिनान्येवगतानिरावणस्यच॥
अथतत्कर्मणातुष्टःशंकरोगायनेनच ३५ भूत्वाप्रसन्नस्तंप्राहवरंवरयचेतिवै ॥ दृष्ट्वाशंभुंरावणोऽपिशिरसातेनसंधितः ३६ वारयामासमन्मात्रेह्यात्मलिंगंतथामम ॥ पत्न्य
र्थंपार्वतींदेहितथेत्युक्त्वाददौशिवः ३७ गृहीत्वागंतुकामंतंपुनःप्राहहरस्तदा ॥ मत्तोषार्थंत्वयावीरदशवारंनिजंशिरः ३८ खड्गेनच्छेदितंयस्मात्तस्मात्तेऽप्यशिरांसिहि ॥
दशविंशद्भुजाश्चापिभविष्यंतिगिरामम ३९ तदासरावणस्तुष्टोगिरिजालिंगसंयुतः ॥ विंशद्भुजोदशग्रीवःस्वस्थलंगंतुमुद्यतः ४० कल्पभेदाच्छताशिराःशतवारंप्रखंडि
तैः ॥ सप्रोक्तःस्वशिरोभिर्द्विशतद्वयभुजःक्वचित् ४१ तस्माद्विहृतवान्विष्णुस्त्वंतांमार्गेप्रतार्यतम् ॥ तथैवाब्धेस्तटेलिंगंगोकर्णेरावणात्त्वया ४२ गृहीत्वास्थापितंपूर्वं
रावणोऽपिगृहंययौ ॥ मंदोदरींहरेर्वाक्याल्लब्ध्वामयसुतांशुभाम् ४३ मातुःकार्यमसंपाद्यतूष्णीमेवाऽतिलज्जितः ॥ मंदोदर्याऽकरोत्स्वीयंविवाहंतोषपूरितः ४४ दृष्ट्वैक
दाधनाध्यक्षंपुष्पकस्थंतुकैकसी ॥ पुत्रानधिक्कारयामासयूयंषंढासूतोपमाः ४५ सापत्नबंधुंयेदृष्ट्वाजायंतेनात्रलज्जिताः ॥ तेमातृवचनंश्रुत्वाययुर्गोकर्णमुत्तमम् ४६ दश
वर्षसहस्राणिकुंभकर्णोऽकरोत्तपः ॥ विभीषणोऽपिधर्मात्मासत्यधर्मपरायणः ४७ पंचवर्षसहस्राणिपादांगुष्ठेनतस्थिवान् ॥ दिव्यवर्षसहस्रंतुधूमाहारोदशाननः ४८ पूर्णे
वर्षसहस्रेस्वंशीर्षमग्नौजुहावसः ॥ एवंवर्षसहस्राणिनवतस्याऽतिचक्रमुः ४९ अथवर्षसहस्रेतुदशमेदशमंशिरः ॥ छेत्तुकामस्यधर्मात्माप्रसन्नोऽभूत्प्रजापतिः ५० उवाचव
चनंब्रह्मावरंवरयकांक्षितम् ॥ तदोवाचदशास्यस्तमवध्यत्वंतृणोम्यहम् ५१ सुपर्णनागयक्षेभ्योदेवेभ्यश्चासुरैरपि ॥ त्वत्तःशंभोर्महाविष्णोर्मानुषामेतृणोपमाः ५२ तथे
38 त्युक्त्वाविधिस्तस्मैदशशीर्षाणिसंददौ ॥ विभीषणायसद्बुद्धिममरत्वंददौमुदा ५३विमोहितंसरस्वत्यादेवेंद्रपदकांक्षिणम् ॥ कुंभकर्णंविधिःप्राहवरंवरयवांछितम् ५४सोऽपित्तं
वरयामासनिद्रांषाण्मासिकींशुभाम् ॥ षाण्मासीयेचैकदिनेऽशनंब्रह्माऽपिदत्तवान् ५५ ततोंतर्द्धानमगमद्विधिस्तेऽपिगृहंययुः ॥ सुमालीवरलब्धांस्तान्ज्ञात्वादौहित्रसत्त
मान् ५६ पातालान्निर्भयःप्रायात्प्रहस्ताद्यैर्भुवंसुखम् ॥ मंत्रिवाक्याद्दशास्योऽपिनिष्कास्यधनदंबलात् ५७ लंकापुर्यांराक्षसैस्तुलंकाराज्यंचकारसः ॥ धनदःपितरंपृ
ष्ट्वात्यक्त्वालंकांमहायशाः ५८ गत्वाकैलासशिखरंतपसातोषयाच्छिवम् ॥ तेनसख्यमनुप्राप्यतेनैवपारिनंदितः ५९ अलकांनगरींतत्रनिर्ममेविश्वकर्मणा ॥ दिक्पालत्वम
नुप्राप्यशिवस्यवरदानतः ६० रावणोविद्युज्जिह्वायददौशूर्पणखांतदा ॥ पारिबर्हंददौतस्यैदंडकारण्यमुत्तमम् ६१ मातृस्वसुःसुतान्बंधूंस्त्रिशिरःखरदूषणान् ॥ साहा
य्यार्थंददौतस्यैतत्कांतितुष्टतेऽचिरात् ६२ कुंभीनसींददौहर्षान्मधुदैत्यायरावणः ॥ ददौमधुवनंतस्यैपारिबर्हमनुत्तमम् ६३ खड्गजिह्वायतांक्रौंचींददौप्रेम्णादशाननः ॥ प
रलंकापारिबर्हंददौतस्यैमनोरमम् ६४वैरोचनस्यदौहित्रींवृत्रज्वालेतिविश्रुताम् ॥ स्वयंदत्तामुदोवाहकुंभकर्णायरावणः ६५ गंधर्वराजस्यसुतांशैलूषस्यमहात्मनः ॥ विभीष
णस्यभार्यार्थंसरमांसमुदावहत् ६६ ततोमंदोदरीपुत्रंमेघनादमजीजनत् ॥ जातमात्रस्तुयोनादंमेघवत्प्रचकारह ६७ततःसर्वेऽब्रुवन्मेघनादोऽयमितिवैजनाः ॥ सुहायांकुंभक

१ न्यपेधयदितिपाठः ।

र्णोऽपिनिद्राव्याप्तोविनिद्रितः ६८ ततःसरावणश्चापिदेवगंधर्वकिन्नरान् ॥ हत्वाऋषीश्वरान्नागांस्त्रियस्तेषामपाहरत् ६९ धनदोऽपिचतच्छ्रुत्वारावणस्याक्रमंतदा ॥ अधर्मं
माकुरुष्वेतिदूतवाक्यैर्न्यवारयत् ७० ततःक्रुद्धोदशग्रीवोजगामधनदालयम् ॥विनिर्जित्यधनाध्यक्षंजहाररतस्यपुष्पकम् ७१ अलकायांयदासीत्ससेनयारावणस्तदा ॥निशाया
मेकदाभ्रातुःकुबेरस्यसुतेनहि ७२ प्रार्थितासापुरारंभाचकारनियतंदिनम् ॥अज्ञातवृत्ताविगेनययौखात्तुपुरस्वना ७३ रावणोऽपिचतांदृष्ट्वाबलाद्देवप्रभुक्तवान् ॥चिरान्मुक्ताऽथवृ
त्तंसाकौबेरीसंन्यवेदयत् ७४ क्रुद्धःसोऽपिददौशापंरावणायमहात्मने ॥ अद्यारभ्यदशास्यश्चेद्विरक्तांस्त्रियमुत्तमाम् ७५ हठाद्भोक्ष्यतिचेत्तर्हिक्षणमात्रान्मरिष्यति ॥ इतिशापं
रावणोऽपिशुश्रावचारवाक्यतः ७६ तदारभ्यास्त्रियंकाममनिच्छंतींनधर्षयत् ॥ ततोयमंचवरुणंनिर्जित्यसमरेसुरः ७७ स्वर्गलोकमगात्तूर्णंदेवराजजिघांसया ॥ ततोरावणमभ्ये
त्यबबंधत्रिदशेश्वरः ७८ तच्छ्रुत्वासहसागत्यमेघनादःप्रतापवान् ॥ कृत्वायुद्धंमहाघोरंजित्वात्रिदशपुंगवम् ७९ इंद्रंधृत्वादृढंबध्वामेघनादोमहाबलः ॥मोचयित्वास्वपितरंगृ
हीत्वेंद्रंययौपुरीम् ८० ब्रह्मातंमोचयामासदेवेंद्रंमेघनादतः ॥ दत्वावरान्राक्षसायब्रह्मास्वभवनंययौ ८१ इंद्रजिन्नामतस्याभूत्तदारभ्यरघूत्तम ॥ रावणादपियश्चासीद्बलिष्ठः
समरप्रियः ८२ मेघनादादयश्चेतितस्मात्प्रोक्तंतवाग्रतः ॥ एतैर्मुनीश्वरैःपूर्वंतान्निमित्तंमयेरितम् ८३ रावणोविजयीलोकान्सर्वान्जित्वाक्रमेणतु ॥ जित्वावह्निंनिर्ऋतिं
चवायुमीशंययौमुदा ८४ कैलासंतोलयामासबाहुभिःपरिघोपमैः ॥ तदाभीताशिवंदेवीदोर्भ्यांसापरिष्वस्वजे ८५ शिवोऽपिवामपादांगुष्ठेनकैलासमूर्द्धनि ॥ भारंदत्वा
गिरिंखर्वंचकाराथशनैःशनैः ८६ तदातद्गिरिसंभूतवाह्निसंधिषुदोर्लताः ॥ विंशच्चापिरावणस्यताआसन्मर्दिताःक्षणात् ८७ सतेनाक्रंदयामासस्तंभसंबद्धचोरवत् ॥ त
दानंदीश्वरेणाऽपिशप्तोऽयंरावणेश्वरः ८८ चंचलंकर्मयस्मात्तेकपितुल्यमतोऽसुर ॥ वानरैर्मानुषैश्चैवनाशंगच्छसिकोपिना ८९ ततःकालांतरेणायंशंभुनैवविमोचितः ॥
शप्तोऽप्यगणयन्वाक्यंययौहैहयपत्तनम् ९० बहिर्गतंनृपंश्रुत्वासहस्रार्जुननामकम् ॥ मध्यान्हेरावणश्चक्रेरेवायांशिवपूजनम् ९१ अधस्तस्मान्नर्मदायाभुजपाशैश्चसेतु
वत् ॥ स्तंभयामासनीरौघंजलक्रीडागतोऽर्जुनः ९२ वेष्टितोऽच्युतनारीभिस्ततोऽयंरावणंतदा ॥ प्लावयामासध्यानस्थंज्ञातस्तत्कर्मणार्जुनः ९३ मुक्ताध्यानादिकंसर्वं
युद्धंचक्रेऽर्जुनेनसः ॥ तेनबद्धोदशग्रीवःकंठेरंतुसुतायतम् ९४ ददौदशाननंप्रीत्याकाष्ठनिर्मितहस्तिवत् ॥ कियत्कालांतरेणैवपुलस्त्येनसमोचितः ९५ ततोऽतिबलमा
साद्यजिघांसुर्हरिपुंगवम् ॥ सागरेध्यानमासीनंपश्चाद्वागेशनैर्ययौ ९६ धृतस्तेनैवकक्षेणवालिनादशकंधरः ॥ भ्रामयित्वातुचतुरःसमुद्रान्रावणंहरिः ९७ किष्किंधां
स्वांययौवेगादग्रेदृष्टांगदंशिशुम् ॥ प्रीत्यातंचुंबनंदातुंदोर्भ्यांकटिंचान्यवेशयत् ९८ तदाबाहोश्चंचलत्वात्कक्षात्सपतितोभुवि ॥ तंदृष्ट्वास्वजनान्स्त्रीश्चदर्शयामासवै
मुदा ९९ प्रेंखस्योपरिपुत्रस्यबबंधाघोमुखंचिरम् ॥ आसीत्सोंगदमूत्रस्यधाराधौताननोऽसुरः १०० स्वयमेवततोवालीबहुकालेगतेसति ॥ ददावाज्ञांदशास्या
यतेनसख्यंचकारसः १०१ रावणःसपुनःस्थित्वापुष्पकेव्यचरत्सुखम् ॥ पश्यन्नानाविधान्वीरान्ययौपातालमुत्तमम् १०२ तत्रदृष्ट्वापुरंरम्यंबलेःकोटिरविप्रभम् ॥

१ स्वयमितिपाठः । २ विपत्नारावणस्यापीतिपाठः । ३ शुद्धःइतिपाठः ।

ततेजोहततेजस्तत्पुष्पकंनचचालवै १०३ ततःस्वयंययौतूष्णीमेकएवदशाननः ॥ पुरंप्रविश्यतद्द्वारित्वांददर्शचवामनम् १०४ कोटिसूर्यप्रतीकाशंपीतकौशे
यवाससम् ॥ चतुर्भुजंसपत्नीकंद्वाररक्षणतत्परम् १०५ त्वांप्राहसदशग्रीवःकोऽत्रराजाऽस्तिमांवद ॥ तूष्णींस्थितोवामनस्त्वमर्पितंनोत्तरंरिपोः १०६ तदा
त्वांबधिरंमत्वासविवेशबलेर्गृहम् ॥ तत्रदृष्ट्वाबलिंपत्न्यासारिक्रीडनतत्परम् १०७ तस्थौतत्रक्षणंतूष्णींबलेर्लक्ष्मींव्यलोकयत् ॥ तावद्दूरंबलेर्हस्तात्क्रीडापाशोऽ
पतद्भुवि १०८ तमानेतुंरावणायबलिराज्ञापयत्तदा ॥ रावणोऽपितमानेतुंययौपाशांतिकंजवात् १०९ मोचचालभुवःपाशंकरेणनचचालसः ॥ विंशद्दोर्भिःक्रमे
णाऽसौयावत्पाशेमचालयत् ११० तावदंगुलयःसर्वाःपाशभारेणपीडिताः ॥ नानिष्क्रसुःपाशतलाच्चूर्णिताःरुधिरस्रुताः १११ तदाचुक्रोशदीर्घंसचिरकालंदशाननः ॥ ततो
विहस्यदास्यातंपाशमानाय्यवैबलिः १२ धिक्धिक्कृत्वारावणंतंगृहान्निष्कासयद्बहिः ॥ ततोघृतोराजदूतैस्तदुच्छिष्टैस्तुपोषितः १३ अश्वानांशकृतंनीत्वाप्राक्षिपत्प्र
त्यहंबहिः ॥ एकदाद्वारपंगत्वाप्रार्थयामासत्वांमुहुः १४ त्वयास्वपादलग्नःस्वपादांगुष्ठेनखेऽर्पितः ॥ तदाऽतिमुदितोलंकांचिरकालेनरावणः १५ ययौमेनेनिजंजन्म
द्वितीयंजातमद्यवै ॥ रावणःपरमप्रीतएवंलोकान्महाबलः १६ कर्तुंतान्स्ववशान्नित्यंबभ्रामपुष्पकस्थितः ॥ दृष्ट्वैकदाऽत्रसाकेतेपूर्वजंतवदीक्षितम् १७ अनरण्यंसंगरे
णचकारपतितंरणे ॥ तदाशप्तोऽनरण्येनमद्वंशेरघुनंदनः १८ भूत्वात्वांसंगरेणैवसकुटुंबंवधिष्यति ॥ इत्युक्त्वासगतोनाकंरावणोऽपिपुरींययौ १९ सनत्कुमारमेकां
तेसंन्निरीक्ष्यैकदाऽसुरः ॥ नत्वापप्रच्छदेवेषुकोवरश्चेतिसादरम् १२० मुनिःप्राहमहाविष्णुंतच्छ्रुत्वाप्राहतंपुनः ॥ विष्णुनायेहतायुद्धेराक्षसाद्यालभंतिकाम् १२१
गतिंचेतिमुनिःप्राहतेमुक्तिंयांतिदुर्लभाम् ॥ पुनःपप्रच्छतंनत्वाकेनोपायेनवैहरेः १२२ भविष्यत्यत्रमेमृत्युस्तदातंमुनिरब्रवीत् ॥ त्रेतायांनररूपेणरामोविष्णुर्भवि
ष्यति १२३ अयोध्यायांतदातेनकृत्वावैरंसुदारुणम् ॥ तस्माद्वधंकुरुष्वत्वमात्मनःपरमात्मनः १२४ तेनगच्छसिमुक्तिंत्वंतच्छ्रुत्वासदशाननः ॥ विरोधार्थंजन
कजामाहरद्भीतमीतटात् १२५ अशोकेरक्षितातेनमातृवत्स्ववधेच्छया ॥ एकदानारदंदृष्ट्वानत्वापप्रच्छरावणः १२६ भगवन्ब्रूहिमेयोद्धुंकुत्रसंतिमहाबलाः ॥ यो
द्धुमिच्छामिबलिभिस्त्वंजानासिजगत्त्रयम् ॥ १२७ मुनिर्ध्यात्वाचिरात्प्राहश्वेतद्वीपनिवासिनः ॥ महाबलामहाकायास्तत्रयाहिमहामते १२८ विष्णुपूजारता
येवैविष्णुनानिहताश्चये ॥ तएवतत्रसंजाताह्यजेयाश्चसुरासुरैः १२९ तच्छ्रुत्वारावणोवेगान्मंत्रिभिःपुष्पकेणतैः ॥ योद्धुकामोययौगर्वाच्छ्वेतद्वीपांतिकंमुदा १३०
तत्प्रभाहततेजस्कंपुष्पकंनाचलत्पुरः ॥ त्यक्त्वाविमानंप्रययौस्वयमेवदशाननः १३१ प्रविशन्नेवतद्द्वीपंधृतोहस्तेनयोषिता ॥ गच्छंत्याकस्यचिद्दास्यापुष्पाण्या
नयितुंवनम् १३२ तयापृष्टःकुतःकोऽसिप्रेषितःकेनवावद ॥ इत्युक्त्वालीलयास्त्रीभिर्हसंतीभिर्मुहुर्मुहुः १३३ मुखेषुताडितोहस्तैर्भ्रामितोऽधोमुखंचिरम् ॥
धृत्वैकंतत्पदंताभिःक्षिप्तःकंदुकवन्मुहुः १३४ परस्परंहिक्रीडद्भिःकयात्यक्तस्तुलीलया ॥ पपातपरलंकायांकौंचायाःशौचकूपके १३५ कृच्छ्राद्धस्तादिनिर्मुक्त

१ स्त्रीभिरितिपाठः।

स्तासांस्त्रीर्णादशाननः ॥ आश्चर्यमतुलंलब्ध्वाचिंतयामासदुर्मतिः १३६ विष्णुनायेहतायुद्धेतेषामेतादृशंबलम् ॥ तद्यंत्रनिहतस्तेनश्वेतद्वीपंव्रजाम्यहम्
१३७ मयिविष्णुर्यथाकुप्येत्तथाकार्यंकरोम्यहम् ॥ इतिनिश्चित्यवैदेहींजहाररावणोवनात् १३८ जानन्नेवंमहालक्ष्मींसजहाराऽवनीसुताम् ॥ मातृवत्पाल
यामासत्वत्तःकांक्षन्वधंनिजम् १३९ ॥ श्रीरामचंद्रउवाच ॥ वालिसुग्रीवयोर्जन्मश्रोतुमिच्छामित्वन्मुखात् ॥ रवींद्रौवानराकारौजज्ञातइतितच्छ्रुतम् १४०
॥ अगस्त्यउवाच ॥ मेरोस्स्वर्णमयेपूर्वंसमायांब्रह्मणःकदा ॥ नेत्राभ्यांपतितंदिव्यमानंदाश्रुजलंतदा ४१ तद्गृहीत्वाकरेब्रह्माध्यात्वाकिंचित्तदत्यजत् ॥ भूमौपतितमा
त्रेणतस्माज्जातोमहाकपिः ४२ तमाहद्रुहिणोवत्सत्वमत्रवससर्वदा ॥ एवंबहुतिथेकालेगतेर्क्षविरजाःसुधीः ४३ कदाचित्पर्यटन्मेरौफलमूलार्थमुद्यतः ॥ अपश्यद्दिव्य
सलिलांवापींमणिशिलाचिताम् ४४ पानीयंपातुमगमत्तत्रच्छायामयंकपिम् ॥ दृष्ट्वाप्रतिकपिंमत्वानिपपातजलांतरे ४५ तत्राऽदृष्ट्वाहरिंशीघ्रंबहिरुत्प्लुत्यसंययौ ॥ अ
पश्यत्सुंदरींनारीमात्मानंविस्मयंगतः ४६ ततोददर्शमघवासोऽत्यजद्वीर्यमुत्तमम् ॥ तामप्राप्यैवतद्वीर्यंवालदेशेऽपतद्भुवि ४७ वालीसमभवत्तत्रशक्रतुल्यपराक्रमः ॥
भानुरप्यागमत्तत्रतदानीमेवभामिनीम् ४८ दृष्ट्वाकामवशोभूत्वाग्रीवादेशेऽसृजन्महत् ॥ बीजंतस्यास्ततःसद्योसुग्रीवोबलवानभूत् ४९ पुत्रद्वयंसमादायगत्वासानिद्रि
ताकचित् ॥ प्रभातेपश्यदात्मानंपूर्ववद्वानराकृतिम् १५० तद्वृत्तंतुविधिःश्रुत्वाकिष्किंधाराज्यमुत्तमम् ॥ ददौसवानरेंद्रायपुत्राभ्यांतत्रसंस्थितः ५१ मृतेर्क्षेविरजस्या
भूद्वालीपुर्यांकपीश्वरः ॥ एवंतेकथितंरामयथापृष्टंत्वयामम ५२ ॥ श्रीरामचंद्रउवाच ॥ यदाऽसौवालिनाबंधुःकिष्किंधायावहिष्कृतः ॥ तदातस्यैवसाचिवःश्रीमान्पव
ननंदनः ५३ नवेदकिंबलंनैजंवालितुल्यपराक्रमः ॥ इतिरामवचःश्रुत्वापुनस्तंमुनिरब्रवीत् ५४ केसरीनामविख्यातःकपिरंजनपर्वते ॥ तस्यास्तांचशुभेपत्न्यौवान
र्योविकदागिरौ ५५ प्लवंगस्यांजनीनाम्नीस्थितातावच्चखात्तदा ॥ पपातपायसमयःपिंडोष्ट्रीमुखाद्भुवि ५६ यदानीतस्तुकैकेय्याकराद्गृध्र्याशुभःपुरा ॥ तंपिंडंभक्षया
मासवानरीह्यमृतोपमम् ५७ एतस्मिन्नंतरेतत्रमार्जारास्यासमागता ॥ पतिनाऽसहितेतेद्वेक्रीडंत्यौवसनंतयोः ५८ अहरत्पवनोवेगाद्दृष्ट्वावायुस्तदूरवः[1] ॥ अंजनींप्रा
र्थयामासतयाभोगंचकारसः ५९ तथैवप्रार्थयामासमार्जारास्यांसनिर्ऋतिः ॥ तयाऽकरोद्रतिंतत्रसोऽपिपर्वतमूर्द्धनि १६० तयोस्ताभ्यांसमुत्पन्नौवानर्यांमारुतात्म
जः ॥ मार्जार्यांःसमभूद्घोरःपिशाचोघर्घरस्वनः ६१ चैत्रेमासिसितेपक्षेहरिदिन्यांमघाभिधे[2] ॥ नक्षत्रेससमुत्पन्नोहनुमान्रिपुसूदनः ६२ महाचैत्रीपूर्णिमायांसमुत्पन्नों
ऽजनीसुतः ॥ वदंतिकल्पभेदेनबुधाइत्यपिकेचन ६३ बालभावेऽपियःपूर्वंदृष्ट्वोद्यंतंविभावसुम् ॥ मत्वापक्वफलंचेतिजिघृक्षुर्लीलयोत्प्लुतः ६४ योजनानांपंचशतंवायु
वेगेनमारुतिः ॥ राहुस्तस्मिन्दिनेदर्शेययौसूर्यरघूत्तम ६५ तावद्दृष्ट्वाघटंकामंरवेरग्रेकपिंस्थितम् ॥ तदाराहुर्भयादेवरविंमुक्त्वेंद्रमाययौ ६६ राहुःप्राहशचीनाथंतव
पीडांकरोम्यहम् ॥ दत्तःपूर्वंत्वयासूर्यःपीडांकर्तुंसुरेश्वर ६७ तत्रविघ्नंसमुत्पन्नंतत्त्वंशीघ्रंनिवारय ॥ तद्राहुवचनादिंद्रःसमारुह्यगजोपरि ६८ देवैर्युतोययौवेगाद्दर्श ॥ ३७ ॥

१ वायुस्तुदूरतःइतिपाठः । २ एकादश्यामित्यर्थः ।

प्लवगंपुरः ॥ तदामुमोचतंवज्रंमघवामारुतिंप्रति ६९ वज्रघातान्मारुतिश्चात्पपातगिरिकंदरे ॥ तदामग्नाहनूस्त्वस्यहनुमानितिवैयतः १७० स्यातिंयतोऽयंसर्वे
त्रतदावायुश्चुकोपह ॥ सांत्वयित्वाहनूमंतंस्वयंस्तब्धोऽभवत्तदा ७१ वायुस्तंभाज्जनाःसर्वेनिपेतुर्धरणीतले ॥ त्रैलोक्यंशववज्जातंहाहाकारोऽभवद्दिवि ७२ तदाधिकृत्यदे
वेंद्रंवेधावायुंययौजवात् ॥ प्रार्थयामासतंनत्वापुनर्वायुंवचोऽब्रवीत् ७३ देवेंद्रस्यापराधंत्वंक्षंतुमर्हसिकंपन ॥ तवपुत्रायदास्यामिवरानद्यहनूमते ७४ तदातुष्टोऽभव
द्वायुश्चचालपूर्ववत्पुनः ॥ अभूत्संजीवितंसर्वंत्रैलोक्यंक्षणमात्रतः ७५ तदाददौवरानब्रह्मामारुतिंपुरतःस्थितम् ॥ भविष्यसित्वममरोवज्रदेहोवरान्मम ७६ तेकुंठिता
गतिर्माऽस्तुकुत्राप्यंजनिसंभव ॥ भविष्यतिहरौभक्तिस्तवनित्यमनुत्तमा ७७ त्वंविष्णोरपिसाहाय्यंकरिष्यसिवरान्मम ॥ इत्युक्त्वांतर्दधेवेधाराहुश्सूर्यंययौपुनः ७८
॥ श्रीरामउवाच ॥ देवेंद्रेणकथंदत्तोरविस्तस्मैसराहवे ॥ तत्सर्वंविस्तरेणैवकथयस्वममाग्रतः ७९ ॥ ॥ अगस्तिरुवाच ॥ ॥ सुधापानादयंराहुर्दैत्योऽभूदमरःस्व
यम् ॥ ग्रहोष्टमोऽभवत्सोऽपियदावांछदयंसुरान् १८० पीडांकर्तुंतदादेवान्सूर्यसोमंददुस्तुवे ॥ ज्ञात्वाधर्मैर्जनाःसर्वेनिजकर्मादिहेतवे ८१ मोचयिष्यंतिराहोश्चशशिनं
भास्करंप्रति ॥ यदायदाभवत्यत्रोपरागोजगतीतले ८२ तदातदाजनाधर्मैर्निजमत्यर्थमादरात् ॥ तोषयित्वासदाराहुंतौतस्मान्मोचयंतिहि ८३ एतत्सर्वंमयाप्रोक्तमुप
रागस्यकारणम् ॥ जन्मकर्मवरादानंमारुतेश्चापिविस्तरात् ८४ अतस्तद्बलमाहात्म्यंकोवाशक्नोतिवर्णितुम् ॥ सएकदामुनीनांहिचाश्रमेषुकुशादिकान् ८५ चकारेत
स्ततःसर्वान्धर्षयन्मुनिबालकान् ॥ तस्यतत्कर्ममुनिभिर्दृष्ट्वाशप्तोंजनीसुतः ८६ अद्यारभ्यकपिश्रेष्ठनज्ञास्यसिस्वपौरुषम् ॥ यदाऽन्यस्यमुखात्स्वीयंबलंश्रोष्यसिविस्त
रात् ८७ भविष्यतितदापूर्वंस्मृतिस्तेपौरुषंपुनः ॥ अतःसुग्रीवसान्निध्येविस्मृतःस्वपराक्रमः ८८ यदास्तुतोजांबवतापुराप्रायोपवेशने ॥ तदास्मृतिस्तस्यजातास्वब
लस्यहनूमतः ८९ एतत्तेसर्वमाख्यातंत्वयापृष्टंमयातव ॥ यथातथासविस्तारंकपिरावणचेष्टितम् १९० रामत्वंपरमेश्वरोऽसिसकलंजानासिविज्ञानदृक्भूतंभव्यमिदंत्रि
कालकलनासाक्षीविकल्पोज्झितः ॥ भक्तानामनुवर्तनायसकलांकुर्वन्क्रियासंहतिंचाशृण्वन्मनुजाकृतिर्मम वचोभासीशलोकार्चितः ९१ ॥ श्रीशिवउवाच ॥ स्तुत्वैवंराघवं
तेनपूजितःकुंभसंभवः ॥ स्वाश्रमंमुनिभिःसार्द्धंमययौगुप्तविग्रहः ९२ विंध्याचलंनिजंरूपंसमुनिर्नैवदर्शयत् ॥ पुनरुत्थास्यतिगिरिश्चेतिमत्वातुतद्भयात् ९३ रामस्तुसी
तयासार्द्धंभ्रातृभिःसहमंत्रिभिः ॥ संसारीवरमानाथोरममाणोऽवसद्गृहे ९४ अनासक्तोऽपिविषयान्बुभुजेप्रिययासह ॥ हनुमत्प्रमुखैःसद्भिर्वानरैःपरिसेवितः ९५ राघवेशास
तिभुवंलोकनाथेरमापतौ ॥ वसुधासस्यसंपन्नाफलवंतश्चभूरुहाः ९६ जनाःस्वधर्मनिरताःपतिभक्तिपराःस्त्रियः ॥ नापश्यत्पुत्रमरणंकश्चिद्राजनिराघवे ९७ समारुह्य
११ विमानाग्र्यंराघवःसीतयासह ॥ वानरैर्भ्रातृभिःसार्द्धंसंचचाराऽवनिंप्रभुः ९८ अमानुषाणिकर्माणिचकारबहुशोभुवि ॥ लोकानामुपदेशार्थंपरमात्मारघूत्तमः ९९ कोटि
शःशिवलिंगानिस्थापयामाससर्वशः ॥ अश्वमेधादिविविधान्यज्ञान्विपुलदक्षिणान् २०० चकारपरमानंदोमानुषंवपुरास्थितः ॥ सीतांतांरमयामाससर्वभोगैरमानुषैः

१ वांछत्स्वयंसुरानितिपाठः ।

 २०१ शशासरामोधर्मेणराज्यंपरमधर्मवित् ॥ कथाःसंस्थापयामाससर्वलोकमलापहाः २०२ एकादशसहस्राणिसैकादशसमानिच ॥ त्रेतायुगभवान्येववर्षाणिरघुनंदनः 
२०३ चकारराज्यंधर्मेणलोकवंद्यपदांबुजः ॥ कलेर्मानेनज्ञेयानिलक्षाण्यैकादशैवहि २०४ सैकादशशतान्यत्ररामोराज्यंचकारसः ॥ एकपत्नीव्रतोरामोराजर्षिः
 सर्वदाशुचिः २०५ यस्यैकमेवतच्चासीत्पत्नीवाक्यंशरस्तथा ॥ गृहमेधीयमखिलमाचरच्छिक्षितुंस्वराट् ६ सीताप्रेम्णाऽनुवृत्त्याचप्रश्रयेणदमेनच ॥ भर्तुर्मनोहरा 
साध्वीभावज्ञासाह्रियाभिया ७ युक्तारंजयामासराजानंराघवंमुदा ॥ एवंगिरींद्रजेप्रीत्यैरामराज्योत्तरोद्भवम् ८ चरितंरघुनाथस्ययथापृष्टंत्वयामम ॥ श्रवणात्सर्व
पापघ्नंमहामंगलकारकम् २०९ सारकांडमिदंदेवियेशृण्वंतिनरोत्तमाः ॥ तेषांमनोरथाःसर्वेपरिपूर्णाभवंतिहि २१० ॥ ॥ इति श्रीमच्छतकोटिरामचरितांतर्गत
श्रीमदानंदरामायणे वाल्मीकीये सारकांडे अगस्तिरामशिवपार्वतीसंवादे त्रयोदशःसर्गः ॥ १३ ॥ ॥ श्रीरामचंद्रार्पणमस्तु ॥ ॥ प्रथमाध्यायश्लोकाः ॥ १०९ ॥
॥ द्वितीये ॥ ३१ ॥ तृतीये ॥ २१४ ॥ चतुर्थे ॥ १७० ॥ पंचमे ॥ १४० ॥ षष्ठे ॥ १३० ॥ सप्तमे ॥ १६९ ॥ अष्टमे ॥ १२९ ॥ नवमे ॥ २१७ ॥
दशमे ॥ २७३ ॥ एकादशे ॥ २८८ ॥ द्वादशे ॥ २०२ ॥ त्रयोदशे ॥ २१० ॥ ॥ एवं श्लोकसंख्या ॥ २९९८ ॥ ॥ छ ॥ ॥ छ ॥



श्रीगणेशायनमः ॥ ॥ श्रीपार्वत्युवाच ॥ ॥ सारकांडंत्वयाशंभोकीर्तितंबहुपुण्यदम् ॥ मयाश्रुतंतुपृच्छामियत्तद्वक्तुंत्वमर्हसि १ कथंकृतावाजिमेधाराघवेणबलीयसा ॥
रामादीनांचतुर्णांहिबंधूनांसंततिंवद २ स्वपुत्रबंधुपुत्राश्चकथंस्त्रीभिःशुयोजिताः ॥ दशवर्षसहस्राणिदशवर्षशतानिच ३ तथैकादशवर्षाणित्रेतायुगभवानिहि ॥ राज्यं
कृतंत्वयाप्रोक्तंविस्तरात्तद्वदस्वमाम् ४ यानियानिचरित्राणिराघवेणकृतानिहि ॥ तानितानिहिकृत्स्नानिविस्तराद्वक्तुमर्हसि ५ इतिदेविवचःश्रुत्वाशंभुस्तांपुनरब्रवी
त् ॥ ॥ श्रीमहादेवउवाच ॥ ॥ सम्यक्पृष्टंत्वयादेविराघवस्यकथानकम् ६ ममापिहर्षःसंजातस्तद्वदामितवांतिकम् ॥ चरितंरघुनाथस्यशतकोटिप्रविस्तरम् ७ एके
कमक्षरंपुंसांमहापातकनाशनम् ॥ वाल्मीकिनाकृतंपूर्वमेकदातद्वदामिते ८ वाल्मीकिस्त्वेकदास्नातुंजगामतमसांनदीम् ॥ शिष्येणसहितोगत्वाभूमौस्थाप्यकमंडलुम्
९ आवश्यकंतुसंपाद्यकृत्वाशौचविधिंततः ॥ यावद्गच्छतिस्नानार्थंदर्भपाणिःसवैमुनिः १० तावद्ददर्शतमसातीरेकौतुकमुत्तमम् ॥ क्रौंचयुग्मेहतःक्रौंचोनिषादेनपतत्रि
णा ११ क्रौंचीशोकसमाविष्टाविललापाऽतिदुःखिता ॥ वियुक्तापतिनातेनद्विजेनसहचारिणा १२ ताम्रशीर्षेणमत्तेनपत्रिणासाहतेनच ॥ तथाविधंद्विजंदृष्ट्वानिषादेन
निपातितम् १३ ऋषेर्धर्मात्मनस्तस्यकारुण्यंसमपद्यत ॥ ततःकरुणयाऽऽविष्टस्त्वधर्मोऽयमितिद्विजः १४ निशाम्यरुदतींक्रौंचीमिदंवचनमब्रवीत् ॥ मानिषादप्रति
ष्ठांत्वमगमःशाश्वतीःसमाः १५ यत्क्रौंचमिथुनादेकमवधीःकाममोहितम् ॥ तस्येत्थंब्रुवतश्चिंताबभूवहृदिवीक्षतः १६ शोकार्तेनास्यशकुनेःकिमिदंव्याहृतंमया ॥ चिं
तयन्समहाप्राज्ञश्चकारमतिमान्मतिम् १७ शिष्यंचैवाऽब्रवीद्वाक्यमिदंसमुनिपुंगवः ॥ पादबद्धोऽक्षरसमस्तंत्रीलयसमन्वितः १८ शोकार्तस्यप्रवृत्तोमेश्लोकोभवतुना
न्यथा ॥ शिष्यस्तुतस्यब्रुवतोमुनेर्वाक्यमनुत्तमम् १९ प्रतिजग्राहसंतुष्टस्तस्यतुष्टोऽभवन्मुनिः ॥ सोऽभिषेकंततःकृत्वातीर्थेतस्मिन्यथाविधि २० तमेवार्थंचिंतयन्नर्थमु
पावर्ततवैमुनिः ॥ भरद्वाजस्ततःशिष्योविनीतःश्रुतवान्गुरोः २१ कलशंपूर्णमादायमहृष्टश्चजगामह ॥ सप्रविश्याश्रमपदंशिष्येणसहधर्मवित् २२ उपविष्टःकथाश्चा
न्याश्चकारध्यानमास्थितः ॥ तत्राजगामलोकानांकर्ताब्रह्मास्वयंप्रभुः २३ चतुर्मुखोमहातेजाद्रष्टुंतंमुनिपुंगवम् ॥ वाल्मीकिरथतंदृष्ट्वासहसोत्थायवाग्यतः २४ प्रांज
लिःप्रयतोभूत्वातस्थौपरमविस्मितः ॥ पूजयामासतंदेवंपाद्यार्घ्यासनवंदनैः २५ प्रणम्यविधिवच्चैनंपृष्ट्वाचैवनिरामयम् ॥ अथोपविश्यभगवानासनेपरमार्चिते २६
महर्षयेवाल्मीकयेसंदिदेशासनंततः ॥ ब्रह्मणासमनुज्ञातःसोऽप्युपाविशदासने २७ उपविष्टेतदातस्मिन्साक्षाल्लोकपितामहे ॥ तद्गतेनैवमनसावाल्मीकिर्ध्यानमास्थितः
१४ २८ पापात्मनाकृतंकष्टंवैरग्रहणबुद्धिना ॥ यस्तादृशंचारुरवंक्रौंचंहन्यादकारणम् २९ शोचन्नेवंपुनःक्रौंचीमुपश्लोकमिमंजगौ ॥ पुनरंतर्गतमनाभूत्वाशोकपरायणः ॥
३० तमुवाचततोब्रह्माप्रहसन्मुनिपुंगवम् ॥ श्लोकएवत्वयाबद्धोनात्रकार्याविचारणा ३१ मच्छंदादेवतेब्रह्मन्प्रवृत्तेयंसरस्वती ॥ रामस्यचरितंकृत्स्नंकुरुत्वमृषिसत्तम ॥
३२ धर्मात्मनोगुणवतोलोकेरामस्यधीमतः ३३ वृत्तंकथयधीरस्ययथातेनारदाच्छ्रुतम् ॥ रहस्यंचप्रकाशंचयद्वृत्तंतस्यधीमतः ३४ रामस्यसहसौमित्रेर्कीशानांरक्ष

१ राक्षसानांचसर्वेशः इतिपाठः ।

सांतथा ॥ वैदेह्याश्चैवयद्वृत्तंप्रकाशंयदिवारहः ३५ तच्चाप्यविदितंसर्वंविदितंतेभविष्यति ॥ नतेवागनृताकाव्येकाचिदत्रभविष्यति ३६ कुरुरामकथांपुण्यांश्लोकनद्धां
मनोरमाम् ॥ यावत्स्थास्यंतिगिरयःसरितश्चमहीतले ३७ तावद्रामायणकथालोकेषुप्रचरिष्यति ॥ यावद्रामायणकथात्वत्कृताप्रचरिष्यति ३८ तावदूर्ध्वमधश्चत्वंमल्लो
 केषुनिवत्स्यसि ॥ इत्युक्त्वाभगवान्ब्रह्मास्वयंरामस्यधीमतः ३९ चरित्रंश्रावयामासवेदवाक्यैःसुपुण्यदैः ॥ ततस्तेनार्चितोब्रह्मातत्रैवांतरधीयत ४० ततःसशिष्योभग
वान्मुनिर्विस्मयमाययौ ॥ तस्याशिष्यास्ततःसर्वेजगुःश्लोकमिमंपुनः ४१ मुहुर्मुहुःप्रीयमाणाःप्राहुश्चभृशविस्मिताः ॥ समाक्षरैश्चतुर्भिर्यःपादैर्गीतोमहर्षिणा ४२ सोऽनु
व्याहरणाद्भूयःशोकःश्लोकत्वमागतः ॥ तस्यबुद्धिरियंजातामहर्षेर्भावितात्मनः ॥ कृत्स्नंरामायणंकाव्यमीदृशैःकरवाण्यहम् ४३ उदारवृत्तार्थपदैर्मनोरमैस्तदास्यरामस्य
चकारकीर्तिमान् ॥ समाक्षरैःश्लोकशतैर्यशस्विनोमुनिःसकाव्यंशतकोटिसंमितम् ४४ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेवाल्मीकीये यात्राकांडे
श्लोकोत्पत्तिरामायणकथनंनामप्रथमःसर्गः ॥ १ ॥ श्रीशिवउवाच ॥ वाल्मीकिनाकृतंदेविशतकोटिप्रविस्तरम् ॥ रामायणंमहाकाव्यंजगृहुर्मुनयश्चते १ आश्रमेतत्पठंति
स्मकथयंतिस्मतेमुदा ॥ तच्छ्रोतुममराःसर्वेविमानैश्चदिविस्थिताः २ श्रुत्वासर्वंसविस्तारंवाल्मीकिंपुष्पवृष्टिभिः ॥ ववर्षुर्जयशब्दैस्तेप्रशशंसुर्मुनीश्वरम् ३ ततोदेवाःस
गंधर्वायक्षनागाःसकिन्नराः ॥ मुनीश्वरागुह्यकाश्चपार्थिवाःपन्नगास्तथा ४ परस्परंतेकलहंचक्रुःकाव्यार्थमादरात् ॥ ब्रह्माद्यानिर्जराःप्रोचुःपन्नगान्दितिजान्नरान् ५ वयं
काव्यंविनेष्यामोदिवंवाल्मीकिनाकृतम् ॥ दितिजाःपन्नगाःप्रोचुर्विनेष्यामोरसातलम् ६ वयंकाव्यंराघवस्यचरित्रंपावनंशुभम् ॥ ऋषीश्वराःसभूपालाःप्रोचुःकाव्यंहि
भूतलात् ७ नेतुंरसातलंस्वर्गंनदास्यामोवयंत्विदम् ॥ काव्यार्थमितितेचक्रुःकलहंरोमहर्षणम् ८ ततोदेविमयासर्वान्निवार्यवचनैर्निजैः ॥ गत्वाऽहंतैस्तुक्षीराब्धौशेषप
र्यंकशायिनम् ९ विष्णुंस्तुत्वातुवेदोक्तैर्मंत्रैर्नानाविधैरपि ॥ नानापूजोपहारैश्चपूजयित्वासविस्तरम् १० कृतवान्गीतवाद्यादितेनविष्णुःप्रबुध्यत ॥ पप्रच्छमांतदाविष्णुः
किमर्थंबोधितोऽस्म्यहम् ११ वृत्तंसर्वंमयादेविकथितंतत्सविस्तरम् ॥ काव्यार्थंकलहंश्रुत्वाप्रहस्यजगदीश्वरः १२ त्रिधाविभज्यकाव्यंतत्क्षणेनभक्तवत्सलः ॥ त्रय
स्त्रिंशत्कोटिलक्षसहस्राणिपृथक्पृथक् १३ शतानित्रीणिश्लोकांश्चत्रयस्त्रिंशच्चशुभावहान् ॥ दशाक्षरमितान्मंत्रान्विभज्यतरमापतिः १४ द्व्यक्षरेयाचमानायमह्यंशेषंददौ
हरिः ॥ उपदिशाम्यहंकाश्यांतेतकालेनृणांश्रुतौ १५ रामेतितारकंमंत्रंतमेवविद्धिपार्वति ॥ लक्ष्मीगरुडशेषेभ्योयाचमानेभ्यआदरात् १६ मंत्रत्रयंपृथक्विष्णुर्द
दौतेभ्योऽतिहर्षितः ॥ शेषोनिनायपातालंलक्ष्मीर्वैकुंठमादरात् १७ पृथिव्यामेवगरुडस्तंदधारमहामनुम् ॥ प्रापुःशेषात्पन्नगाद्याःसर्वेपातालवासिनः १८ स्वर्गे 
प्रापुर्महालक्ष्म्यास्तंमनुंनिर्जरादयः ॥ तार्क्ष्यात्प्रापुर्महामंत्रंसर्वेभूतलवासिनः १९ मंत्रशास्त्रात्तत्स्वरूपंज्ञेयंगुह्यंगिरींद्रजे ॥ ततःपूर्वविभागान्सददौविष्णुःपृथक्पृ
थक् २० एवंविभागंदेवेभ्यो ( ३३३३३३३३३ ) द्वितीयंपरमेश्वरः ॥ मुनीश्वरेभ्यो ( ३३३३३३३३३ ) नागेभ्यस्तृतीयंभागमुत्तमम् ( ३३३३३३३३३ )

१ रम्यामितिपाठः । २ विभागात्तइतिपाठः ।

२१ ततोदेवानिजंभागंस्वर्गंनिन्युर्मुदान्विताः ॥ पातालेपन्नगाश्चाथनिन्युर्भागंमुदानिजम् २२ आसीद्भागोमुनीनांहिपृथिव्यांगिरिजात्मजे ॥ तस्यापिविस्त
रंवक्ष्येविभक्तोविष्णुनायथा २३ सप्तद्वीपेषुसर्वेत्रविभक्तःसप्तधापुनः ॥ कोटचश्चत्वारिलक्षाणिषट्सप्ततिमितानिहि २४ सहस्राणितथैकोनविंशच्चैवतथापुनः ॥
सप्तचत्वारिंशन्मिताःश्लोकाश्चेतिपृथक्पृथक् २५ विभक्तंसप्तधादेविसप्तद्वीपेषुविष्णुना ॥ ( ४७६१९०४७ ) चतुःश्लोकाश्शेषभूतायाचमानायवेधसे ॥
२६ ददौविष्णुस्तुष्टमनानिजभक्तायभक्तितः ॥ पुष्करद्वीपभागश्चवर्षयोर्द्विविधाकृतः २७ कोटचौद्वेह्यष्टत्रिंशच्चलक्षाणिहितथापुनः ॥ सहस्राणिनवैवाथतथापंचशता
निहि २८ त्रयोविंशाश्चश्लोकाश्चषोडशाक्षरजोमनुः ( २३८०९५२३ ) एवंद्विधाकृतौभागौविष्णुनावर्षयोस्त्विह २९ शाकद्वीपादिद्वीपानांपंचानांचपृथक्पृथक् ॥
सप्तस्वपिचवर्षेषुसप्तैवहरिणायथा ॥ तत्तद्भागाविभक्ताश्चतान्छृणुष्वब्रवीम्यहम् ३० अष्टषष्टिहिलक्षाणिसहस्रेद्वेशतानिहि ॥ सप्तैवचतथाश्लोकाएकविंशच्छुभप्रदाः ॥
( ६८०२७५१ ) ३१ विभज्यषट्सुद्वीपेषुहरिणैवयथाक्रमम् ॥ जंबुद्वीपगतोभागोनववर्षेषुसादरम् ३२ विभक्तोविष्णुनादेवियथात्वांचब्रवीम्यहम् ॥ द्विपंचाशल्ल
क्षाणितथागिरिवरात्मजे ३३ सहस्राण्येकनवतिश्लोकाःपंचतथापुनः ॥ सप्ताक्षरमितामंत्रास्त्वेवंहिनवधाकृताः ( ५२९१००५ ) ३४ शेषमेकमक्षरंश्रीरितिस
र्वत्रविष्णुना ॥ नवखंडेषुतत्त्यक्तंतत्सर्वत्रानियोजयत् ३५ नानानामसुमंत्रेषुनतस्यनियमःकृतः ॥ विभज्येतिमहाविष्णुरदृश्यमगमत्तदा ३६ अग्रेकालांतरेदेविदशा
स्योबुद्धिमत्तरः ॥ निजबुद्धिबलादेववेदानांचपृथक्पृथक् ३७ शतशश्चैवखंडानिकरिष्यतिऋजूनिच ॥ ज्ञात्वामंदधियोविप्राभविष्यंतीतिवैकलौ ३८ क्षीणायुषोल्प
प्रचितास्तेषांयोग्यानिरावण ॥ श्रीकृष्णोऽपिपुनर्देविव्यासरूपधरोभुवि ३९ मानवानांहितार्थायकाव्याद्रामायणात्पुनः ॥ भागाद्भारतवर्षांतर्गताद्धिविधानिहि
४० पृथक्पृथक्सप्तदशपुराणानिकरिष्यति ॥ भारतंत्वितिहासंचमहच्छ्रेष्ठंकरिष्यति ४१ भागाद्भारतवर्षान्तर्गतात्सारंविगृह्यच ॥ सव्यासोभारताद्येश्चयदाशांतिंन
गच्छति ४२ सरस्वत्यास्तटेव्यासोऽप्यप्रचित्तोभविष्यति ॥ एतस्मिन्नंतरेब्रह्मानारदायमहात्मने ४३ चतुश्श्लोकैर्विष्णुदत्तैरुपदेशंकरिष्यति ॥ लब्ध्वातान्नारदश्चा
पिसुवीणांरणयन्मुहुः ४४ कीर्तयन्सुस्वरंगत्वामुनिंसत्यवतीसुतम् ॥ तान्श्लोकान्व्यासमुनयेसतदाह्युपदेक्ष्यति ४५ लब्ध्वाव्यासमुनिःश्लोकांस्तान्रामायणसंस्थिता
न् ॥ शांतिंलब्ध्वाततस्तेषांविस्तारंचकरिष्यति ४६ तेषामेवार्थमादायपुराणंपरमोदयम् ॥ अष्टादशसहस्रंहिश्रीमद्भागवताभिधम् ४७ करिष्यत्यष्टादशमंरम्यंजनम
नोहरम् ॥ भागवतस्यातएववाणीभिन्नाभविष्यति ४८ पुराणानांचसर्वेषांवाल्मीकीयैवगीःप्रिये ॥ पृथक्कर्तास्मृतोव्यासःश्रीमद्रामायणंशतम् ४९ करिष्यतितथा
न्यानिसव्यासोविविधानिच ॥ रम्याण्युपपुराणानिसारंसारंविगृह्यच ५० भागाद्भारतखंडांतर्गताद्रामायणाद्भुवि ॥ करिष्यंतितथान्येपिषट्शास्त्राणिमुनीश्वराः ५१
तस्माद्रामायणादेवसारमुद्धृत्यसादरात् ॥ यत्किंचिद्गिरिजेभूम्यांकीर्त्यंतेवैकथानकम् ५२ रामायणांशजंविद्धिश्लोकमात्रमपीह्यत् ॥ ॥ पार्वत्युवाच ॥ ॥ शंभोतेप्रसु

१ सर्वेषुवर्षेष्वितिपाठः । २ भागाज्जंबुद्वीपांतरितिपाठः । ३ करिष्यतितथाव्यासःषट्शास्त्राणिमुनीश्वरःइतिपाठः ।

मिच्छामिव्यासायनारदोमुनिः ५३ स्वयंज्ञात्वाविधेमुखाद्रम्यान्पातकनाशनान् ॥ यान्रामचरितश्लोकांश्चतुरश्चोपदेक्ष्यति ५४ यैःकरिष्यतिसव्यासोमुनिर्भा
गवतंवरम् ॥ तान्श्लोकांश्चतुरस्त्वंमांकृपयावक्तुमर्हसि ५५ ॥ श्रीशिवउवाच ॥ सम्यक्पृष्टंत्वयादेविसावधानमनाःशृणु ॥ नारदोक्तांश्चतुःश्लोकांस्तवाग्रेप्रवदाम्यहम्
५६ नारदायाऽपिकथितावि‍धिनायेपुराशुभाः ॥ ब्रह्मणेविष्णुनापूर्वंश्रीरामचरितंयदा ५७ विभक्तंहितदादत्ताःशेषभूताःसुपुण्यदाः ॥ तान्शृणुष्वचतुःश्लोकान्विष्णु
प्रोक्तान्स्वयंभुवे ५८ ॥ श्रीभगवानुवाच ॥ अहमेवासमेवाग्रेनान्यद्यत्सदसत्परम् ॥ पश्चादहंयदेतच्चयोऽवशिष्येतसोऽस्म्यहम् ५९ ऋतेऽर्थंयत्प्रतीयेतनप्रतीयेतचा
त्मनि ॥ तद्विद्यादात्मनोमायांयथाभासोयथातमः ६० यथामहांतिभूतानिभूतेषूच्चावचेष्वनु ॥ प्रविष्टान्यप्रविष्टानितथातेषुनतेष्वहम् ६१ एतावदेवजिज्ञास्यंतत्त्व
जिज्ञासुनात्मनः ॥ अन्वयव्यतिरेकाभ्यांयत्स्यात्सर्वत्रसर्वदा ६२ ॥ श्रीशिवउवाच ॥ एवंश्लोकाभगवताचत्वारश्चप्रकीर्तिताः ॥ वेधसेयेतवाग्रेतेकीर्तितादेवि वैमया ६३
एतेपवित्राःपापघ्नामर्त्यानांज्ञानदायकाः ॥ अज्ञाननाशनाःसद्यःकीर्तनीयानरोत्तमैः ६४ एवंदेवित्वयापृष्टंयथातत्तेनिवेदितम् ॥ कथाप्रारंभितापूर्वंमधुनाशृणुवच्म्यहम्
६५ ततोरामायणंव्यासोविध्वस्तंमुनिभिःपुनः ॥ कृत्वैकत्रशेषभूतंसप्तकांडमितंशुभम् ६६ चतुर्विंशतिसाहस्रंरक्षिष्यतिमुनिस्तदा ॥ आदावंतेततस्तस्यश्लोकास्त
त्रकियंतिहि ६७ चतुर्विंशतिसाहस्रेव्यासस्यरचिताअपि ॥ भविष्यंतिगिरिजेऽग्रेमंगलाचरणादिषु ६८ रामायणान्यनेकानिपृथगग्रेमुनीश्वराः ॥ भागाद्भारतखंडांत
र्गतात्कुंभोद्भवादयः ६९ करिष्यंत्यत्रशतशस्तानिसर्वाणिपार्वति ॥ वाल्मीकियाद्विनादेविनज्ञेयानिमनीषिभिः ७० सारकांडपुरादेवियदुक्तंचमयातव ॥ वाल्मीकिया
च्चतच्चापिसारमुद्धृत्यवैमया ७१ निवेदितंचह्यधुनापृष्टंरामकथानकम् ॥ सविस्तारंवदस्वेतित्वयातस्मान्मयोदितम् ७२ मानेरामचरित्रस्यशतकोटिप्रविस्तरम् ॥ पंचा
ननोऽप्यहंदेविदिव्यैर्वर्षार्बुदैरपि ७३ रामायणंसविस्तारंव्याख्यातुंनक्षमस्त्विह ॥ यन्निर्मितंचमुनिनास्वतपोभिरनुत्तमम् ७४ अतःसंक्षेपमात्रंहिसारंसारंविगृह्यच ॥
कथयिष्यामितत्प्रीत्यैयात्राकांडंशुभावहम् ७५ रामदासोयथाग्रेहिविष्णुदासंवदिष्यति ॥ शतकोटिमितान्ग्रंथान्संक्षेपाचाहंतथातव ७६ ॥ इतिश्रीशतकोटिरामचरि
तांतर्गतश्रीमदानंदरामायणेयात्राकांडेरामायणविस्तारकथनंनामद्वितीयःसर्गः ॥ २ ॥ पार्वत्युवाच ॥ कोरामदासःकुत्रस्थोविष्णुदासश्चकःस्मृतः ॥ कथंवदिष्यतिगुरुस्त
न्मांवदस्वविस्तरात् १ ॥ श्रीशिवउवाच ॥ भारतेदंडकारण्येगोदानाम्नीविराजिते ॥ क्षेत्रेऽत्रकेनृसिंहाख्योमुनिरग्रेभविष्यति २ रामनामात्तुतत्पुत्रस्तच्छिष्योविष्णुरित्य
पि ॥ गुरुशिष्यौरामसेवासक्तौनित्यंभविष्यतः ३ दास्यत्वाज्जानकीजानेस्ताउभौभूसुरोत्तमौ ॥ रामदासविष्णुदासावितिलोकेपरांप्रथाम् ४ गमिष्यतोऽग्रेभोदेविगौतम्यादं
क्षिणेतटे ॥ रामदासःपितुःश्राद्धंगयायांसंविधायच ५ पृथिव्यांयानितीर्थानितानिगत्वायथाक्रमम् ॥ अध्यापयिष्यतिच्छात्रान्गोदानाम्न्याश्रमे ६ एकदाविष्णुदासःसश्रु
त्वानानाविधाःकथाः ॥ रामदासमुखात्सारकांडरामायणोद्भवम् ७ श्रुत्वाकिंचित्प्रसुधनारामदासंवदिष्यति ॥ विष्णुदासउवाच ॥ गुरोतेप्रष्टुमिच्छामितत्त्वंवक्तुमिहार्हसि ८

१ त्वत्तएवइतिपाठः । २ ज्ञानाद्गृह्यइतिपाठः ।

सारकांडंमयात्वत्तःश्रुतंरामायणस्थितम् ॥ नकिंचित्सौख्यलेशोऽपिजानक्याराघवस्यच ९ श्रुतोऽत्रक्वापिराज्यस्यविस्तारोऽपिनचश्रुतः ॥ कथंयागाःकृतास्तेनसंततिस्त
स्यनश्रुता १० सुतानांबंधुपुत्राणांविवाहादिकमश्रुतम् ॥ तत्सर्वविस्तरात्त्वत्तःश्रोतुमिच्छास्तिमेगुरो ११ तत्त्वंवदमहाभागरघुवीरस्यचेष्टितम् ॥ रम्यंपवित्रमानंददायकं
पातकापहम् १२ ॥ रामदासउवाच ॥ सम्यक्पृष्टंत्वयावत्सरामचंद्रकथानकम् ॥ मंगलंरघुनाथस्यप्रोच्यतेयत्सविस्तरम् १३ सावधानमनास्त्वंतच्छृणुपातकनाशनम् ॥
यथाश्रुतंमयापूर्वंतुष्टत्र्यर्थंतेवदाम्यहम् १४ हत्वादशाननंरामोराज्यंनिहतकंटकम् ॥ अयोध्यायांमुक्तिपुर्यांशशासनीतिमत्तमः १५ नदुर्भिक्षंनचौर्यंचनापमृत्युर्नचेतयः ॥ न
दारिद्र्यभयंचिंताव्याधयश्चकदाचन १६ नभिक्षार्थीनवृद्धोंतोनपापात्माननिष्ठुरः ॥ नक्रोधीनकृतघ्नोऽपिरामेराज्यंप्रशासति १७ एकदाजानकीकांतमेकांतेप्राहलज्जिता ॥ स्मि
तवक्त्राचारुनासादिव्यालंकारमंडिता १८ चामरव्यग्रहस्तासाविनयावनतानना ॥ रामराजीवपत्राक्षरावणारेममप्रभो १९ किंचिद्विज्ञप्तुमिच्छामियद्यनुज्ञांकरोषिहि ॥
विज्ञापयामितर्हित्वांधर्ममूलंमहोदयम् २० तत्सीतावचनंश्रुत्वाजानकींप्राहराघवः ॥ हेसीतेकंजनयनेममप्राणसुखास्पदे २१ शीघ्रंवदस्वयत्तेऽस्तिचित्तेतत्करवाण्यहम् ॥
इतिराघवसन्मानवचनैर्जनकात्मजा २२ नितरांतोषपूरौघपरिपूर्णाऽब्रवीत्पतिम् ॥ श्रीसीतोवाच ॥ यदात्वंराघवश्रेष्ठदंडकंवचनात्पितुः २३ मयासौमित्रिणासाकं
पूर्वंस्वनगराद्गतः ॥ शृङ्गवेरपुरंगत्वाजान्हव्यास्तरणेयदा २४ नौकायांस्थितमस्माभिर्भागीरथ्यांतदापुरा ॥ संकल्पितंमयाकिंचित्तत्त्वांवक्ष्याम्यहंप्रभो २५ देविगंगेन
मस्तेऽस्तुनिवृत्तांवनवासतः ॥ रामेणसहिताऽहंत्वांलक्ष्मणेनचपूजये २६ सुरामांसोपहारैश्चनानाबलिभिरादृता ॥ इत्युक्तंवचनंपूर्वंतज्ज्ञातंभवताऽपिच २७ ततश्चतु
र्दशेवर्षेविमानेनयदागतम् ॥ तदाभरतशत्रुघ्नकौशल्याविरहातुरा २८ अहंताद्विस्मृतारामस्मृतिर्जाताऽद्यमेप्रभो ॥ तन्मत्संकल्पपूर्त्यर्थंगंतुमर्हसिजान्हवीम् २९
मयामातृबंधुभिस्त्वमितितेप्रार्थयाम्यहम् ॥ रोचतेयदितेचित्तेनत्वामाज्ञापयाम्यहम् ३० इतिसीतावचःश्रुत्वाप्रहस्यरघुनंदनः ॥ सीतामालिंग्यबाहुभ्यांहर्षयन्तामुवाच
सः ३१ एतद्वचनचातुर्यंकुतोजानासिमैथिलि ॥ नतत्तेवचनंदेविगंगांप्रतिममैवतत् ३२ वचनात्तववैदेहिश्वोगंताजान्हवींप्रति ॥ कृतेवांच्छाऽस्तिदयितेगंगांगंतुंवद
स्वमे ३३ तच्छ्रुत्वातत्रवेस्थातुंसेनायोग्यंसमंमृद्‌ ॥ कर्तुंकर्तुंहिपंथानंदूतानाज्ञापयाम्यहम् ३४ ततःसीताऽब्रवीद्वाक्यंपुनःश्रीरामचोदिता ॥ यत्रगंगाचशरयूसंगता
स्तिरघूद्वह ३५ तत्रगंगोत्तरेदेशेगंतुमिच्छतिमेमनः ॥ इतिसीतावचःश्रुत्वातथेत्युक्त्वारघूद्वहः ३६ द्वारपालंसमाहूयपटेराच्छाद्यजानकीम् ॥ आज्ञापयत्ततोरामः
शीघ्रंगच्छममाज्ञया ३७ लक्ष्मणंवचनंमेत्वंकथयस्वसविस्तरम् ॥ ज्ञातव्यःश्वोममोद्योगःसीतायाश्चैवकौतुकात् ३८ शरयूसंगमेगंगापूजनार्थंत्वयासह ॥ मातृभिर्भ
त्रिभिःसैन्यैःसुहृद्भिर्भरतेनच ३९ शत्रुघ्नेनपुरस्थैश्चजनैर्विप्रैर्यथासुखम् ॥ सेनानिवेशस्थानानियोजनार्द्धांतराणिच ४० पूरितान्यन्नतोयाद्यैःकल्पनीयानिवैपृथक् ॥
इतिरामवचःश्रुत्वासतथेतित्वरान्वितः ४१ आज्ञाप्रमाणमित्युक्त्वानत्वारामंपुनःपुनः ॥ कथयामाससौमित्रिंरामवाक्यंसविस्तरम् ४२ तद्रामवचनंश्रुत्वायौवराज्य

१ गंगामाहात्म्येवइतिपाठः ।

पदस्थितः ॥ सभायांमंत्रिभिर्युक्तोलक्ष्मणोदूतमब्रवीत ४३ अंगीकृतंरामवाक्यमितिरामंवदस्वतत ॥ तच्छ्रुत्वात्वरितंदूतःकथयामासराघवम् ४४ सभायांलक्ष्मण
श्चापिदूतानाज्ञापयत्तदा ॥ रुक्मदंडकरान्चित्रोष्णीषयुक्तान्विभूषितान् ४५ गच्छध्वंत्वरितायूयंकथयध्वंजनान्पुरि ॥ अयोध्यायांराघवस्यश्वोयात्रार्थंसमुद्यमः ४६
॥ ३ ॥ तथेत्युक्त्वाजवाद्दूताराजमार्गेषुसर्वतः ॥ दीर्घस्वरेणतेप्रोचुश्चोर्ध्वंकृत्वाऽऽत्मसत्करान् ४७ हेजनाःशृणुतस्वस्थाःश्वःसीतारामयोर्मुदा ॥ समुद्योगोऽस्तिपूजार्थंशरय्वाः २
संगमंप्रति ४८ भागीरथ्यांसुहृद्भिश्चसावरोधैर्बलैःसह ॥ इतिसंश्राव्यसकलान्जनान्साकेतवासिनः ४९ तेदूताराजभवनेलक्ष्मणंतंपुनर्ययुः ॥ संश्रावितोजनांश्चा
रारामोद्योगंन्यवेदयन् ५० सभायांलक्ष्मणश्चापिसमाहूयानुगैर्जवात् ॥ तक्षकान्निष्टिकाकारान्दृषत्कर्मसुनैष्ठिकान् ५१ लोहकारांश्चर्मकांश्चभित्तिकर्मादिनैष्ठिकान् ॥
क्रयविक्रयकर्तृंश्चकाष्ठनिर्जीवकारिणः ५२ वासोगृहविदग्धांश्चमहिषैर्जलवाहिनः ॥ नानाकर्मसुनिष्णातान्मुकुद्दालधारिणः ५३ एतानाज्ञापयामासतोषणान्वसनादि
भिः ॥ संमानितान्ससौमित्रिःकथयामाससादरम् ५४ समुद्योगंराघवस्यसीतायाःश्वोबलैःसह ॥ ऋजुर्मार्गोविधातव्यःसमःकर्करवर्जितः ५५ निम्नाभूमिःसमाकार्योड
च्चाभूमिःसमाऽपिच ॥ छिंद्यंतांपर्वताद्वृक्षामार्गस्थादुःखदायकाः ५६ वाप्यःकूपास्तटाकाश्चशोधनीयाःसहस्रशः ॥ नवीनाश्चापिकर्तव्याःसतोयानिर्जलेवने ५७ से
नानिवेशस्थानानियोजनार्द्धेसविस्तरैः ॥ कल्पनीयानियुष्माभिःपूरितान्यन्नवारिभिः ५८ चुल्हचोरन्याविधातव्यापाकशालाःसभित्तयः ॥ वस्त्रैर्गेहानिकार्याणितृणै
श्चापिसहस्रशः ५९ आरक्तखर्परैराच्छादितानिचित्रितानिहि ॥ नानागृहाणिकार्याणिपूरितान्यन्नवारिभिः ६० पुष्पाणांवाटिकाःकार्याःशतशोऽथसहस्रशः ॥ मार्गेमा
र्गेकौतुकार्थंभित्तौचित्राण्यनेकशः ६१ नरस्कंधगताश्चित्रवाटिकाश्चसहस्रशः ॥ पुष्पाणांवाटिकाश्चान्यामृत्पात्रनिर्मिताःशुभाः ६२ मार्गेमार्गेगायकानांस्थलान्यपि
सहस्रशः ॥ सेनानिवासस्थानेषुहस्त्यश्वरथवाजिनाम् ६३ सहस्रशोविधातव्याःशालाःपूर्णास्तृणादिभिः ॥ सुगंधचंदनैर्मार्गाःसेचनीयाःसमंततः ६४ ने[1]मिरेखापि
मामार्गेविचित्रवसनैर्गृहाः ॥ पुष्पैराच्छादनीयास्तेहट्टास्संतुसमंततः ६५ शृंगारैरतिचित्रैश्चहस्त्युष्ट्ररथवाजिनः ॥ वस्त्रालंकारघंटाभिःशोभनीयाःसहस्रशः ६६ श
कटेषुतथोष्ट्रेषुवारणेपुरथादिषु ॥ शतघ्न्यःपरिघाबाणाःशक्तयःकार्मुकान्यपि ६७ स्थापनीयानिशतशोविधातव्याध्वजाअपि ॥ चतुर्ष्वपिविधातव्याध्वजारामरथेषुहि
६८ हनुमत्कोविदारांडजेशबाणांकिताःशुभाः ॥ चतुर्ष्वपिबंधनीयाःपताकाःस्यंदनेषुहि ६९ हरिच्छ्वेतपीतनीलवर्णाःपरमशोभनाः ॥ गजपृष्ठेराघवार्थंहारिद्रूर्णांकि
तासनम् ७० रुक्ममाणिक्यरचितंसितच्छत्रोपशोभितम् ॥ स्थापनीयंमहादिव्यंमुक्ताहारविराजितम् ७१ सीतार्थंकरिणीपृष्ठेनीलवर्णंमहासनम् ॥ रुक्मविद्रुमवैडूर्यर
त्नमुक्ताविराजितम् ७२ मुक्ताफलहेमतंतुगणैराच्छादितंवरम् ॥ सिद्धंकार्यंमहादिव्यंस्वर्णकुंभंविराजितम् ७३ पुष्पमालास्तोरणानिबंधनीयानिवैपथि ॥ नृत्यंतुवारवे ॥ ३ ॥
श्याश्चस्तुतिंकुर्वंतुवंदिनः ७४ द्रव्यैर्वस्त्रैराभरणैःपूजाद्रव्यैश्चगोरसैः ॥ पात्रैर्नानाविधैर्दिव्यैःपूरणीयारथोत्तमाः ७५ अन्यच्चाऽपिमयानोक्तंयच्चयोग्यंहितत्पथि ॥ सि

१ नेमिरेखोपमाइतिपाठः ।

द्वंकार्यंहियोगेनयेनतुष्यतिराघवः ७६ इतिसंदिश्यमेधावीलक्ष्मणःसहमंत्रिभिः ॥ सायंसंध्यादिकंकर्तुंजगामनिजमंदिरम् ७७ सौमित्रेराज्ञयातेऽपितथाचकुर्यथोदिताः ॥
संतुष्टास्तेयथायोग्यंरामसंतोषहेतवे ७८ रामोऽपिसीतयासार्द्धंमंदिरेरत्ननिर्मिते ॥ मंचकेपुष्पशय्यायांसीतामालिंग्यवैदृढम् ७९ रुक्मनेपथ्ययुक्ताभिर्दासीभिश्चमुहुर्मु
हुः ॥ वीजितोवालव्यजनैर्निशिसुप्तःसुखंतदा ८० ॥ ॥ इति श्रीमदानन्दरामायणे यात्राकाण्डे दूताज्ञाकरणंनाम तृतीयः सर्गः ॥ ३ ॥ ॥ रामदासउवाच ॥
ततःप्रातःसमुत्थायश्रुत्वावाद्यध्वनिंतथा ॥ गायनंवंदिभिर्गीतंसीतयासहराघवः १ कृत्वानित्यविधिंसर्वंदत्वादानानिविस्तरात् ॥ ज्योतिर्विदंसमाहूयगोपालाभिधमुत्तमम्
२ नमस्कृत्वाऽथसंपूज्यगणकंराघवोऽब्रवीत् ॥ भोगोपालमहाबुद्धेत्वांपृच्छेऽहंद्विजोत्तम ३ यात्रार्थंजान्हवीतीरंगंतुमिच्छामिसांप्रतम् ॥ अतोमुहूर्तोदातव्यःसम्यग्बु
द्ध्याविविच्यच ४ तद्रामवचनंश्रुत्वागोपालःप्राहराघवम् ॥ पंचांगपट्टंविस्तार्यतत्रदृष्ट्वाबलाबलम् ५ रामराजीवपत्राक्षमुहूर्तस्त्वद्यवर्तते ॥ पूर्वयामेमहान्श्रेष्ठःपुष्यन
क्षत्रमंडितः ६ तस्यवक्ष्येफलंराजन्सावधानमनाःशृणु ॥ शृण्वंतुमुनयःसर्वेशृणोतुतेगुरुर्महान् ७ नयोगयोगंनचलग्नलग्नंनतारकाचंद्रबलंगुरोश्च ॥ योगिन्यराहुर्नतदैव
कालेसर्वाणिकार्याणिकरोतिपुष्यः ८ अस्मिन्नामसुनक्षत्रेप्रस्थानंकुरुसीतया ॥ दत्तोमयामुहूर्तोऽयंयात्रार्थंरघुनायक ९ इतितस्यवचःश्रुत्वालक्ष्मणंराघवोऽब्रवीत् ॥
भेरीमृदंगपणवकाहलानकगोमुखैः १० तालघर्घरडुंदुभिश्चैभिश्चनवभिर्महान् ॥ सेनायाःसूचनार्थंहिकर्तव्यःप्रथमोध्वनिः ११ तथेतिरामवचनाद्दूतानाज्ञापयत्तदा ॥ नव
वाद्यध्वनिंतेऽपिचक्रुर्मंजुलसुस्वरम् १२ ततोरामोद्विजैर्युक्तोवसिष्ठेनपुरोधसा ॥ घृतेनप्रचुरश्राद्धंगणेशादीन्प्रपूज्यच १३ चकारप्रोक्तविधिनावसिष्ठंप्राहवैततः ॥ अग्निहो
त्राणिमेऽग्रेत्वंस्थापितानितुपुष्पके १४ नेतुमर्हसिमेमातृर्बंधुभिःपुरवासिनः ॥ विमानेकरिणीवद्धपुष्पमालातिशोभिता १५ सीतांगस्पर्शनीमार्गेमांस्पर्शंतुगजास्थितम्॥
ततःपप्रच्छवैदेहींकेनयानेनमैथिलि १६ गमिष्यसिवदत्वंमांतदेवाज्ञापयाम्यहम् ॥ तद्रामवचनंश्रुत्वासीताध्यात्वाक्षणंहृदि १७ साप्राहसुदितारामंकरिण्यागमनंमम ॥
रोचतेयदितेचित्तेतर्हिस्तुरघुनायक १८ ततस्यावचनंश्रुत्वायानमाज्ञाप्यलक्ष्मणम् ॥ सीतायैदिव्यवस्त्राणिददौमातृस्तथैवच १९ तथादत्वाबंधुपत्नीर्दत्वाचापिगुरोः
स्त्रियम् ॥ ततोदत्वावसिष्ठंचविप्रान्दत्वाततःपरम् २० दत्वावस्त्राणिबंधुभ्योस्वयंजग्राहराघवः ॥ बध्वाशस्त्राण्यनेकानित्वरयित्वाविदेहजाम् २१ नत्वामातृर्गुरूंश्चापि
मंत्रिभिःपरिवारितः ॥ आरुह्यशिबिकांरामःसभांप्रतिसमाययौ २२ ततःसिंहासनेस्थित्वालक्ष्मणंप्राहराघवः ॥ द्वितीयःसूचनार्थंहिनववाद्यध्वनिःपुनः २३ आज्ञाप
नीयःसौमित्रेतच्छ्रुत्वाराघवेरितम् ॥ आज्ञाप्रमाणमित्युक्त्वाज्ञापयद्ध्वनिमुत्तमम् २४ कर्तुंदूतास्तेऽपिचक्रुर्ध्वनिंमेघोपमंततः ॥ ततःप्राहरघुश्रेष्ठःपुनःसौमित्रिमादरात्
२५ सुमंत्रःस्थाप्यतांपुर्यांरक्षणार्थंममाज्ञया ॥ गच्छत्वग्रेतुभरतोपश्चादायातुशत्रुहा २६ मत्पृष्ठेत्वंसमागच्छततःसीताऽनुगच्छतु ॥ तस्याःपृष्ठेचत्वत्पत्नीसुर्मिलासा
ऽनुगच्छतु २७ तत्पृष्ठेमांडवीरम्यादयिताभरतस्यसा ॥ अनुगच्छतुतत्पृष्ठेश्रुतकीर्त्यऽनुगच्छतु २८ शत्रुघ्नस्यप्रियाभार्याविमानेःपुरयोषितः ॥ मातृभिस्ताःसमायां

१ विमानस्थोऽरणीबद्धइतिपाठः । २ नाथइतिपाठः ।

आ. रा. तुपश्यंत्यःकौतुकंमुदा २९ सीताद्याःकरिणीष्वद्यस्थापयित्वाममांतिकम् ॥ आगंतव्यंत्वयाशीघ्रंततोऽहंगजमाश्रये ३० तथेतिरामवचनात्तथाताःकरिणीषुसः ॥ आ या. कां.
रोहयित्वाश्रीरामंसमागच्छत्त्वरान्वितः ३१ समागतंलक्ष्मणंतंदृष्ट्वारामोमहामनाः ॥ सुमन्त्रायददौवस्त्रंतदधीनांपुरींव्यधात् ३२ ततोमुहूर्तंसमयेधृत्वालक्ष्मणसत्करम् ॥
॥ ४ ॥ सिंहासनात्समुत्तीर्यमहानागांतिकंययौ ३३ गजंप्रदक्षिणंकृत्वासोपानेनसराघवः ॥ गजदन्तोद्भवेनारुरोहनागंसुखंशनैः ३४ तदादुंदुभिनिर्घोषान्नववाद्यस्वरान्वरान् ॥ २
वादयामासुर्गंभीरान्राजदूताःसहस्रशः ३५ बभूवुर्यंत्रशब्दाश्चननृतुर्वारयोषितः ॥ वादयंतिस्मवाद्यानिगजवाजिरथोपरि ३६ जयशब्दान्वेदघोषान्द्विजाश्चक्रुर्महा
स्वनैः ॥ केकिपिच्छोद्भवंचित्रंरत्नदंडविराजितम् ३७ चामरंवीजयामासविजयःपार्श्वसंस्थितः ॥ अन्यस्तुवालव्यजनंवीजयामासपृष्ठतः ३८ कळशैःशतसाहस्रैर्मुक्ताहारै
स्सुशोभितम् ॥ रत्नदण्डंसुविस्तीर्णंछत्रमन्योदधारतत् ३९ तत्पृष्ठेगजमारुह्यलक्ष्मणःशीघ्रमाययौ ॥ सीताद्यास्ताःसमाजग्मुःसौमित्रिगजपृष्ठतः ४० पश्यंत्यःकौतु
कान्येवजालरंध्रैःसमंततः ॥ पुष्पकंचापिगगनमार्गेणैवशनैःशनैः ४१ जगामसंस्थितास्तत्रपुरनार्योरघूत्तमम् ॥ पश्यंत्योऽथकौतुकानिववर्षुःपुष्पवृष्टिभिः ४२ ततस्ते
तुरगारूढागजारूढारथेस्थिताः ॥ नेमिरेखोपमाःसर्वेःस्थितास्तेरामपार्श्वयोः ४३ चक्रुःप्रणामान्श्रीरामंसंस्थिताहारबंधवत् ॥ रामोऽपिकंजहस्ताभ्यांप्रणामानभ्यनं
दयत् ४४ एवंगच्छतिराजेंद्रेरामचंद्रेशनैःपथि ॥ गजोपरिसवीणास्तेनटागानंप्रचक्रिरे ४५ एवंपश्यन्श्रीरामोऽपिपुष्पारामादिकौतुकम् ॥ दृष्टान्चित्राणिवेश्यानांनृ
त्यानिविविधानिच ४६ सुस्वराण्यथवाद्यानिशृण्वन्मार्गेशनैःशनैः ॥ वेष्टितश्चतुरंगिण्यासेनयासमंततः ४७ प्रापसेनानिवासायकल्पितांभुवमुत्तमाम् ॥ अयोध्यामिव
तांदृष्ट्वाऽवतरद्राघवोगजात् ४८ अभिनंद्यप्रणामांश्चपुनर्वीरकृतान्मुहुः ॥ लक्ष्मणस्यकरंधृत्वास्वकरेणरमापतिः ४९ वस्त्रगेहंसंप्रविश्यतस्थौसिंहासनेपुनः ॥ सीताद्यास्ताः
स्त्रियःसर्वाविविशुर्वस्त्रसद्मानि ५० ततःश्रीरामचंद्रोऽपिलक्ष्मणंवाक्यमब्रवीत् ॥ सीमायांक्रोशमात्रेऽद्यशतदूतान्पृथक्पृथक् ५१ एकैकस्यांदिशित्वंमेवचनात्स्थापय
स्वभोः ॥ योजनोपरिसौमित्रेत्वष्टदिक्षुसमंततः ५२ नियोजयस्वशतशोवाजिवाहान्ममाज्ञया ॥ तथेत्युक्त्वालक्ष्मणोऽपितथासर्वंचकारसः ५३ ततोविप्रैःसुहृद्भिश्चवि
विधान्नैर्मनोरमैः ॥ घृतेनश्राद्धशेषेणभोजनंराघवोव्यधात् ५४ तांबूलैर्दक्षिणांदत्वानानाविप्रेभ्यआदरात् ॥ मुखशुद्धिंस्वयंकृत्वातस्थौसिंहासनेपुनः ५५ श्रुत्वाशास्त्र
पुराणानिवेदान्तांश्चापिसादरम् ॥ सायंसंध्यादिकंकृत्वाहुत्वाहोमंयथाविधि ५६ सिंहासनेसमासीनोवेश्यानांनृत्यमुत्तमम् ॥ पश्यन्शृण्वन्गायनंचनीत्वायामद्वयांनि
शाम् ५७ ततःसुष्वापपर्यंकेसीतयासहराघवः ॥ द्वितीयेदिवसेतत्रस्थित्वारामस्तुकौतुकैः ५८ नीत्वासमग्रंसुदिनंतृतीयेदिवसेपुनः ॥ पूर्ववद्वाद्यघोषाद्यैःशनैःस्थानां
तरंययौ ५९ क्वचिद्दिनमतिक्रम्यक्वचिद्द्वेत्रीणिराघवः ॥ स्थित्वापश्यन्कौतुकानिरञ्जयन्जनकात्मजाम् ६० शनैःशनैर्ययौमार्गेमासेनैकेनराघवः ॥ प्रापजीर्णमु ॥ ४ ॥
द्गलेनत्यक्तमाश्रममुत्तमम् ६१ राममागतमाज्ञायमुद्गलोनूतनाश्रमात् ॥ भागीरथ्यादक्षिणतःप्रापरामांतिकंतदा ६२ तंदृष्ट्वाराघवश्चापिनत्वासम्पूज्यसादरम् ॥

१ पश्यन्त्यश्चमुदात्रेतिपाठः । २ वेद्रार्थानितिपाठः । ३ शनैरितिपाठः ।

वासोगेहेसमासीनंपप्रच्छविनयान्मुनिम् ६३ त्वयाऽयमाश्रमस्त्यक्तःकिमर्थंमुनिसत्तम ॥ तत्त्वंवदमहाभागयथावच्चसविस्तरम् ६४ तद्रामवचनंश्रुत्वामुद्गलोवाक्यमब्रवी
त् ॥ अद्यधन्योऽस्म्यहंरामनिवृत्तंवनवासतः ६५ यत्त्वांपुश्यामिनेत्राभ्यांचिरकालेनराघव ॥ भरतप्राणरक्षार्थंयदानीताममाश्रमात् ६६ दिव्यौषध्यस्तदाजातंपूर्वं
तेदर्शनंमम ॥ मयाऽयमाश्रमस्त्यक्तःकिमर्थंतद्ब्रवीमिते ६७ सान्निध्यंनाऽत्रगंगायाःसरय्वाअपिनात्रवै ॥ इतिमत्वामयात्यक्तश्चाश्रमोऽयंमहत्तमः ६८ अत्रासिद्धिंगताः
पूर्वंशतशोऽथसहस्रशः ॥ मुनीश्वरामयाऽप्यत्रतपस्तप्तंकियद्दिनम् ६९ इतिरामसमाख्यातमाश्रमस्यचमोचने ॥ कारणंचत्वयापृष्टंकिमग्रेश्रोतुमिच्छसि ७० त
न्मुनेर्वचनंश्रुत्वापुनस्तंप्राहराघवः ॥ किंकृत्वातेऽत्रवसतिर्भविष्यतिमुनेवद ७१ तद्रामवचनंश्रुत्वाराघवंप्राहमुद्गलः ॥ यद्यत्रशरयूनद्याःसंगमोहिभविष्यति ७२ जा
न्हव्यातर्ह्यहंचाऽत्रवत्स्येरामयथासुखम् ॥ ततस्यवचनंश्रुत्वाराघवःप्राहतंपुनः ७३ किमर्थंशरयूःश्रेष्ठाकुतःप्राप्ताधरातलम् ॥ तत्त्वंवदमहाभागसविस्तारंममाग्रतः
७४ तद्रामवचनंश्रुत्वामुद्गलोवाक्यमब्रवीत् ॥ तवैवचरितंराममन्मुखाच्छ्रोतुमिच्छसि ७५ तर्हितेसंप्रवक्ष्यामितच्छृणुष्वरघूत्तम ॥ शंखासुरोमहान्दैत्योवेदान्पूर्वं
जहारह ७६ क्षिप्त्वातांश्चसमुद्रेहिस्वयमासीन्महोदधौ ॥ तदर्थंचत्वयामात्स्यंवपुर्धृत्वामहत्तरम् ७७ हतःशंखासुरोवेदास्त्वयादत्तास्तुवेधसे ॥ ततोहर्षेणमहता
पूर्वंरूपंत्वयाधृतम् ७८ तदाहर्षेणनेत्रात्तेपतिताश्चाश्रुबिंदवः ॥ हिमालयेततोजातानदीपुण्याशुभोदका ७९ साक्षान्नारायणस्यैवआनन्दाश्रुसमुद्भवा ॥ शनैर्बिंदुसरः
प्रापतस्माच्चमानसंययौ ८० एतस्मिन्नन्तरेरामपूर्वजस्तेमहत्तमः ॥ वैवस्वतोमनुर्यष्टुमुद्युक्तोगुरुमब्रवीत् ८१ अनादिसिद्धाऽयोध्येयंविशेषेणापिवैमया ॥ रचि
तानिजवासार्थमत्रयज्ञंकरोम्यहम् ८२ यदितेरोचतेचितेतच्छ्रुत्वागुरुरब्रवीत् ॥ अत्रतीर्थवरंनास्तिनास्तिश्रेष्ठामहानदी ८३ यद्यत्रैवास्तितेचित्तंयष्टुंनृपतिसत्तम ॥
आनयस्वनदींरम्यांमानसात्पातकापहाम् ८४ तद्गुरोर्वचनाद्राजामनुर्वैवस्वतोमहान् ॥ टणत्कृत्यमहच्चापंसन्दधेशरमुत्तमम् ८५ सशरोमानसंभित्वातस्मान्निष्कास्य
तांनदीम् ॥ अयोध्यामानयामासपंथानंदर्शयन्निव ८६ शरमार्गानुसारेणायोध्यायांप्रापवैनदी ॥ महोदधौपूर्वदेशेमिलितारघुनंदन ८७ आनीतासाशरेणैवशरयू
श्चेतिकथ्यते ॥ सरोवरात्समुद्भूतासरयूश्चेतिकेचन ८८ ततोभगीरथेनेयंकपिलक्रोधवन्हिना ॥ विनिर्दग्धान्पूर्वजान्वैसागरान्प्रेषितुंदिवम् ८९ भागीरथीसमा
नीतात्वत्पादाब्जसमुद्भवा ॥ तपसाशंकरंतोष्यशरय्वामिलिताऽथसा ९० वरदानात्कलौशंभोर्गंगाख्यातिंगमिष्यति ॥ अग्रेसागरपर्यंतमेनांगंगांवदंतिहि ९१ तवपादसमु
द्भूतायाविश्वंपातिजान्हवी ॥ इयंतुनेत्रसंभूताकिमद्याऽग्रेवदाम्यहम् ९२ कोटिवर्षसहस्रैश्चकोटिवर्षशतैरपि ॥ महिमाशरयूनद्याःकोऽपिवक्तुंनवैक्षमः ९३ इतिरामस
माख्यातंयथापृष्टंत्वयामम ॥ मुनेस्तद्वचनंश्रुत्वालक्ष्मणंप्राहराघवः ९४ शरयूमानयस्वाऽत्रशरंमुक्त्वाममाज्ञया ॥ तथेतिरामवचनाद्धृत्वाचापंसलक्ष्मणः ९५ शरंमु
क्त्वातटंभित्वाशरयूमानयत्क्षणात् ॥ शरयूःसाद्विधाभूत्वामुद्गलाश्रममाययौ ९६ जान्हव्यामिलिताऽसापितांद्दष्ट्वाराघवोऽब्रवीत् ॥ अत्रास्थित्वालक्ष्मणेनदारितेयंमहा
नदी ९७ अतोदद्रीतिनाम्नाऽत्रनगरीख्यातिमेष्यति ॥ दद्रीयंजगतीमध्येवदर्योश्चयवाधिका ९८ भविष्यतिनसंदेहस्तवन्नासाद्विशेषतः ॥ ततःसीतांसमाहूयराघवो

वाक्यमब्रवीत् ९९ मुद्गलस्याश्रमेऽत्रसानीताशरयूर्नदी ॥ पश्यसौमित्रिणामुक्ताशरंमन्नामचिन्हितम् १०० नारीभिर्मातृभिःसीतेपुष्पकेणाऽतिभास्वता ॥ वृद्धा पा. का.
आ. रा. साशरयूर्यत्रसंगतास्तिमहानदी १ जान्हव्यासंगमंत्वंहिगच्छस्वगुरुणाद्विजैः ॥ पूजयित्वासविस्तारंयथोक्तंवचनंपुरा २ आगच्छस्वततःशीघ्रमत्रत्वंममसन्निधौ ॥ वि २
॥ ९ ॥ शेषान्मुद्गलस्याऽपिसन्निधावद्यवैपुनः ३ नवीनशरयूनद्याभागीरथ्यास्तुसंगमे ॥ पूजनंत्वंमयासाकंकर्तुमर्हसिमैथिलि ४ तथेतिरामवचनमंगीकृत्यविदेहजा ॥ पूजासं
भारमादातुंविवेशवसनगृहम् ५ ॥ इतिश्रीमदानन्दरामायणेयात्राकाण्डेशरयूद्विधाकरणंनामचतुर्थःसर्गः ॥ ४ ॥ ॥ श्रीरामदासउवाच ॥ ततोगृहीत्वासंभारान्पूजार्थं
जानकीजवात् ॥ कौसल्यादिवधूभिस्तुपुष्पकंचारुरोहसा १ क्षणेनदृष्टाशरयूर्यत्रसागंगयाशुभा ॥ संगताऽस्तिमहाश्रेष्ठातत्रप्रापविदेहजा २ पतिंविनाऽग्निनाना
रीसीमामुल्लंघ्यनव्रजेत् ॥ सदोऽषोत्रनविज्ञेयःसीतायोगंविहायसा ३ उत्तीर्यसाविमानाग्र्यान्नमस्कृत्वाऽथसंगमम् ॥ पुरोधसाचोदितासानारिकेलंसवायनम् ४ भा
गीरथ्यैसमर्प्याऽथस्नात्वाचैवयथाविधि ॥ संगमंपूजयामासचोपस्कारैर्यथाविधि ५ सुरामांसोपहारैश्चपक्वान्नैर्बलिभिस्तथा ॥ पट्टकूलादिभिर्वस्त्रैर्मुक्ताहारैःसचंदनैः
६ दिव्यैराभरणैश्चित्रैर्वायनाद्यैःसविस्तरम् ॥ ततःसुवासिनीःपूज्यपूजयित्वात्वरुंधतीम् ७ वसिष्ठंब्राह्मणांश्चापिभोजयामासविस्तरैः ॥ पट्टकूलादिभिर्वस्त्रैर्दिव्यैराभरणा
दिभिः ८ सुवासिनीर्ब्राह्मणांश्चतोषयामासमैथिली ॥ स्वयंकृत्वोपहारंचराघवार्थमुपोषिता ९ ययौयानेनशीघ्रंसाराघवस्यान्तिकंमुदा ॥ ततःश्रीरामचन्द्रोऽपिसीतयागु
रुणाद्विजैः १० गंगयोःसंगमेचक्रेपूजनंसयथाविधि ॥ यथाकृतंचवैदेह्यातस्माच्चापिशताधिकम् ११ ततःसहस्रशोविप्रान्भोजयामाससादरम् ॥ दत्वादानान्यने
कानिगोहस्तिरथवाजिनाम् १२ ततोऽपुक्कास्वयंरामःसीतयाबन्धुभिर्जनैः ॥ सिंहासनेसमासीनोसौमित्रिमिदमब्रवीत् १३ ज्ञातव्योममवासोऽत्ररात्रीर्नवरघूत्त
म ॥ समाचारान्कुरुष्वत्वंशासनंयन्मयोच्यते १४ ब्रह्मचारीगृहस्थोवावानप्रस्थाश्रमीयतिः ॥ यःकश्चिद्वासमायातिपथिकःसममाज्ञया १५ मयासंपूजितोनैवगन्तुं
देयःसमंततः ॥ मयाऽदृष्टोगतःकश्चित्तदावःशासनंमम १६ तद्रामवचनंश्रुत्वातथाचक्रेसलक्ष्मणः ॥ च्यवनोमुनिवर्यस्तुज्ञात्वारामंसमागतम् १७ दर्शनार्थंययौ
शीघ्रंरामेणापिसुपूजितः ॥ स्थित्वासनेवरेगेहेराघवंवाक्यमब्रवीत् १८ रामराजीवपत्राक्षगंगायादक्षिणेतटे ॥ आश्रमःकीकटेदेशेममाऽस्तिपरमःशुभः १९
कंदमूलफलार्थंहिविघ्नंकुर्वंतिमागधाः ॥ ममाश्रमेराजदूतास्तेभ्योरक्षाविधीयताम् २० च्यवनस्यवचःश्रुत्वाटणत्कृत्यमहद्धनुः ॥ बाणंमुक्त्वाश्रमात्तस्यपरितःप्र
रिखोपमाम् २१ चकाररेखांबाणेनदुर्लंघ्यांतुचहस्तसमाम् ॥ रामबाणकृतारेखायत्रतत्रपुरीशुभा २२ रामरेखेतिनाम्नासीत्तथाचैवमेतानदी ॥ च्यवनश्चततोहृ ॥ ९ ॥
ष्टोराघवंवाक्यमब्रवीत् २३ निंद्यःसकीकटोदेशोवर्ततेरघुनंदन ॥ तववाक्याद्भविष्यंतितत्रपुण्यस्थलानिहि २४ तर्हित्वयाऽद्यवक्तव्यंवचनंमेसुखास्पदम् ॥ त
न्मुनेर्वचनंश्रुत्वावाक्यंरामस्तमब्रवीत् २५ कीकटेपुगयापुण्यानदीपुण्यापुनःपुना ॥ आश्रमस्तेमहापुण्यःपुण्यंराजवनंवरम् २६ भविष्यतिनसन्देहोममवाक्यान्मुनी

१ बहुभिस्तथेतिपाठः । २ महानदीतिपाठः ।

श्वर ॥ च्यवनस्तेनसंतुष्टोरामंपृष्ट्वाश्रमंययौ २७ एतस्मिन्नन्तरेतस्यसत्रेरामेणनिर्मिते ॥ प्रत्यहंकोटिशोविप्राभुञ्जन्तियतिभिःसह २८ कुंभोदरोमुनिःप्रागात्सीमाचारां
तिकंतदा ॥ गंगायात्राप्रसंगेनगयांगन्तुंसमुद्यतः २९ समागतःप्रयागाच्चदूतान्दृष्ट्वाऽब्रवीद्वचः ॥ हेदूताउत्तरंदेयंयूयंकस्याज्ञयास्थिताः ३० आकाशचुंबिनश्चित्राइमे
ऽग्रेकस्यवैध्वजाः ॥ हनुमत्कोविदारांडजेशवर्णांकिताःशुभाः ३१ श्वेतनीलहरित्पीतवर्णाःपरमशोभनाः ॥ दृश्यंतेऽग्रेपताकाश्चश्रूयतेजयनिःस्वनः ३२ ततस्यवचनं
श्रुत्वादूताःप्रोचुस्त्वरान्विताः ॥ रामोराजीवपत्राक्षोऽयोध्यायाःपालकःप्रभुः ३३ सोऽग्रेयात्रार्थमायातोवयंतस्याज्ञयास्थिताः ॥ सत्रमन्नस्यरामेणनिर्मितंचात्रवर्तते ३४
क्षुधार्तस्त्वंसुखंगच्छभुक्त्वापीत्वासुखंव्रज ॥ तत्तेषांवचनंश्रुत्वापरिवृत्यमुनिःपुनः ३५ आगतोयेनमार्गेणतेनमार्गेणसंययौ ॥ गच्छन्तंतंमुनिंदृष्ट्वारामदूतास्त्वरान्विताः ३६
रुध्वामार्गंमुनेस्तस्यवचनंप्रोचुरादरात् ॥ किमर्थंत्वंपरावृत्त्यमुनेगच्छसिवैपुनः ३७ आगतोऽसियथायेनतेनैवत्वंवदस्वनः ॥ इतितेषांवचःश्रुत्वानिर्बधान्मुनिरप्यसौ ३८
तूष्णींस्थित्वाक्षणंध्यात्वानिश्चयंकृतवान्हृदि ॥ इदानींराघवोऽयोध्यांयात्रांकृत्वागमिष्यति ३९ नानादेशेषुसर्वत्रनृणांतद्दर्शनंकथम् ॥ भविष्यतितथाऽन्यत्ररामती
र्थानिभूतले ४० भविष्यंतिकथंनृणांमहत्पापहराणिच ॥ कथंरामेश्वराभूम्यांभविष्यंतिगतिप्रदाः ४१ अतःकिञ्चित्करोम्यद्ययेनरामस्तुभूतले ॥ यात्रोद्देशेनसर्वत्र
सीतयासहयास्यति ४२ अनेनलोकशिक्षाऽपिभविष्यतिनसंशयः ॥ इतिनिश्चित्यसमुनिःप्राहदूतान्स्मयन्निव ४३ दूताःशृणुतमेवाक्यंहतोयेनदशाननः ॥ ब्रह्मपुत्रो
बन्धुपुत्रैर्नकृतंतीर्थसेवनम् ४४ तथायज्ञाःकृतानैवतस्यान्नंनाहमाश्रियाम् ॥ दीयतांममर्गोहिभवद्भिर्वचनंमम ४५ कथनीयंराघवाययात्रायज्ञान्करिष्यति ॥ इतित
स्यवचःश्रुत्वाविस्मयाविष्टमानसाः ४६ दत्वामार्गंशापभीत्यादूतारामांतिकंययुः ॥ रामंनत्वाशनैस्तस्यकर्णेवृत्तंन्यवेदयन् ४७ राघवोऽपिमुनेस्तस्यज्ञात्वाभिप्रायमु
त्तमम् ॥ सर्ववृत्तंसभामध्येचकारसस्मितःस्फुटम् ४८ मंत्रिभिर्बंधुभिश्चैववसिष्ठेनपुरोधसा ॥ मन्त्रयित्वामुनेर्वाक्यंसत्यंमेनेरमापतिः ४९ ततोनिश्चितवान्रामःसभा
मध्येपुरोधसा ॥ आदौकार्यातीर्थयात्रायज्ञाःकार्यास्ततःपरम् ५० ततोरामाज्ञयादूतागत्वाऽयोध्यांपुरींप्रति ॥ तद्वृत्तंचसविस्तारंसुमंत्रायन्यवेदयन् ५१ सुमंत्रोऽ
पिचतद्वृत्तंश्रुत्वावस्त्रधनानिच ॥ उष्ट्राश्वरथनागाद्यैःप्रेषयामाससादरम् ५२ पुष्पकंचतदाप्राहरामःशक्तिस्तवाऽस्तिहि ॥ यद्यप्यद्यगिरामेत्वंशीघ्रमेवयथाबलम् ५३
उष्ट्राश्वरथनागाद्यैर्निवासंचतवोदरे ॥ करिष्यंतिसविस्तारंतथाविस्तीर्णतांभज ५४ सर्वेषांभारवाहार्थंशक्तिरस्तुयथासुखम् ॥ कस्मिन्कालेसूक्ष्मरूपंमहद्रूपंकदापिच
५५ यथाकाममयाशक्तिस्तवदत्तानसंशयः ॥ तच्छ्रुत्वारामवचनंपुष्पकंदशयोजनम् ५६ समंततस्तथोच्चंहिव्यवर्धताद्वियोजनम् ॥ शताट्टालैश्चसोपानैर्हेमरत्नोद्भवै
श्चितम् ५७ कोटिसूर्यप्रतीकाशंनानाधातुविचित्रितम् ॥ कलशैःशतसाहस्रैर्हेमरत्नविघट्टितैः ५८ जालंध्रैर्गवाक्षैश्चमुक्ताहारैर्विभूषितम् ॥ कपाटैर्दर्पणोद्भूतैर्जे
ल्यंत्रशतैर्वृतम् ५९ पुष्पाणांवाटिकाभिश्चनानापक्षिनिनादितम् ॥ सर्पमस्तकजायत्रशतशोऽथसहस्रशः ६० निशायांमणयश्चित्राःप्रभांविस्तारयंतिहि ॥ गोपुरा
णिचभासन्तेशतशोऽथसहस्रशः ६१ तत्रप्राथमिकायांतुपंक्तौश्रीराघवाज्ञया ॥ उष्ट्राश्वरथनागादीन्दूताश्चारोहयंस्तदा ६२ द्वितीयायांकाष्ठचयान्तृणोलूखलमूसलान् ॥

तृतीयायांधान्यराशीन्पाकामत्राणिवैततः ६३ पंचम्यांतुशतघ्नीश्चततःशस्त्राण्यनेकशः ॥ ततउर्ध्वंराजवाहानश्वोष्ट्ररथवारणान् ६४ अष्टमायांराजकोशान्वस्त्रधान्य
विनिर्मितान् ॥ हट्टशालास्ततःश्रेष्ठादासीदासांस्ततःपरम् ६५ नटादीनांततःशालावारस्त्रीणांततःपरम् ॥ ततोवीरानंग्निगांश्चतेभ्यःश्रेष्ठांस्ततःपरम् ६६ गच्छंतितु
रंगैर्यैतान्पंचदश्यर्पिताततिः ॥ रथयोग्यांस्ततोप्यूर्ध्वंगजांश्चैवततःपरम् ६७ आरोहयंस्ततोदूतान्राज्यभोग्याधिकारिणः ॥ सुहृत्पुत्रजनस्त्रीभिर्नृपान्मांडलिकांस्त
तः ६८ ततोप्यूर्ध्वंराघवस्यसुहृदश्चपुरोकसः ॥ ततोभोजनशालाश्चविंशच्चैवमनोरमाः ६९ पाकशालास्ततःपश्चस्त्रीणांभोक्तुंततोदश ॥ ततऊर्ध्वंहिबन्धूनांमातॄणांच
चगृहाणिच ७० ततऊर्ध्वंराघवस्यसभासिंहासनान्विता ॥ ततोप्यूर्ध्वंचसीतायागेहंनानासखीवृतम् ७१ ततोप्यूर्ध्वंराघवस्यक्रीडास्थानंतुसीतया ॥ ततोऽप्यूर्ध्वंत
तोषष्ठितमायांसुहृदांस्त्रियः ७२ ततःस्त्रीणांसभार्थंहिसप्तशालाःशुभावहाः ॥ चित्रशालाद्वादशाऽथवयसांपंचवैततः ७३ पुष्पारामादिकानांहिपञ्चशालास्ततःशुभाः ॥
ततोप्यूर्ध्वंतुशालायांघटीयंत्रादिकौतुकम् ७४ व्याघ्रादीनांततःशालात्वेकारम्याऽतिविस्तृता ॥ ततोप्यूर्ध्वमग्निहोत्रशालाश्रीराघवस्यच ७५ ततःशिवार्चनस्यैका
शालाज्ञेयाशुभावहा ॥ विप्राणांचततःशालाशालाविद्यार्थिनांततः ७६ यतीनांचततःशालावाद्यशालाततःपरम् ॥ जलशालाततःश्रेष्ठाजलयंत्रान्वितातततः ७७ ततो
प्यूर्ध्वमार्द्रवस्त्रशोषणार्थमनुत्तमाः ॥ शतशालास्त्विमाःपूर्णाश्चक्रुस्तेरामसेवकाः ७८ रामोपिदृष्ट्वाताःसर्वांआरुरोहस्वयंतदा ॥ ततोनदत्सुवाद्येषुस्तुवत्सुमागधादिषु
७९ नर्तत्सुवारनारीषुपताकासुचलत्सुच ॥ प्रकाशयन्दशदिशोविमानंराघवाज्ञया ८० अगमत्पूर्वदिग्भागात्प्रतीचींतपनोपमम् ॥ विहायसावायुवेगंकिंकिणीजाल
मालितम् ८१ ययौप्रयागाभिमुखंश्रीरामध्वजचिन्हितम् ॥ विष्णुदासउवाच ॥ कथंरामस्यचत्वारोध्वजाःप्रोक्ताःपुरात्वया ८२ तत्सर्वंविस्तरेणाऽद्यश्रोतुमिच्छा
मित्वन्मुखात् ॥ ॥ रामदासउवाच ॥ ॥ शैशवेरघुनाथस्तुस्वपितृस्यंदनस्थितः ८३ अतःसोप्यस्यरामस्यकोविदारध्वजःस्मृतः ॥ बाणध्वजांकितरथमारुह्यताटि
कांवने ८४ जघानैकेनबाणेनतस्माद्बाणध्वजःस्मृतः ॥ छिन्नंवज्रध्वजंदृष्ट्वारावणेनसराघवः ८५ ध्वजेऽकरोद्वायुपुत्रंतस्मात्प्रोक्तःकपिध्वजः ॥ रणेविमूर्छितंदृष्ट्वारा
मोमातलिनंतदा ८६ स्थितःस्वीयरथेदिव्येतस्माच्चगरुडध्वजः ॥ शुक्लायांहिपताकायांकोविदारोऽस्तिवैशुभः ८७ बाणःशुभोऽस्तिनीलायांहरितायांतुमारुतिः ॥ पीता
यांगरुडोज्ञेयःश्रीरामस्यंदनोपरि ८८ चतुर्षुस्यंदनेष्वेवंचत्वारःकीर्तिताध्वजाः ॥ कोविदारध्वजोरामःश्रीरामोमार्गणध्वजः ८९ कपिध्वजोराघवेंद्रोभूपेशोगरुडध्व
जः ॥ एवंनामान्यनंतानिप्रोच्यंतेराघवस्यहि ९० तस्माद्रामध्वजाःप्रोक्ताश्चत्वारश्चमयातव ॥ वज्रध्वजांकितरथेस्थित्वारामेणसंगरः ९१ कृतस्तस्माद्राघवेंद्रंतं
वदंत्यशनिध्वजम् ॥ अतोरामध्वजस्यैकमेवचिन्हंनविद्यते ९२ तस्माच्छिष्यमयाप्रोक्ताश्चत्वारोराघवप्रियाः ॥ कोविदारांकितरथेसुमंत्रःसारथिःस्मृतः ९३ बा
णध्वजांकितरथेसूतश्चित्ररथःस्मृतः ॥ वायुपुत्रांकितरथेसारथिर्विजयःस्मृतः ९४ रामस्यदारुकःसूतःस्यंदनेगरुडांकिते ॥ एवंशिष्यत्वयापृष्टंश्रीरामध्वजकारणम् ९५

१ राजभाग्याधिकारिणइतिपाठः । २ भूतेशोगरुडध्वजइतिपाठः ।

त्वयापूर्वंमयातच्चतवाग्रेऽद्यनिवेदितम् ९६ ॥ ॥ इति श्रीमदानन्दरामायणे यात्राकाण्डे कुम्भोदरोपाख्यानं नाम पञ्चमः सर्गः ॥ ५ ॥ ॥ ॥
श्रीरामदासउवाच ॥ ॥ ततोरामोविमानेनगत्वाकिंचित्तुपश्चिमाम् ॥ दिशंययौप्रयागंचत्रिवेणीयत्रवर्तते १ क्रोशमात्रेविमानंतन्मुक्त्वारामःससीतया ॥ पद्भ्यांशनैः
शनैरेवत्रिवेणीसंगमंययौ २ नारिकेलंवायनेनसमर्प्यरघुनंदनः ॥ चतुरंगुलमानंहिकेशबन्धंसभूषणम् ३ ददौसंछिद्यसतीतायाःस्वयंक्षौरमथाऽकरोत् ॥ लक्ष्मणाद्यैर्बन्धु
भिश्चवपनंरघुनंदनः ४ मातृभिःकारयामासकृत्वाचैकमुपोषणम् ॥ द्वितीयेदिवसेप्राप्तेकृत्वाश्राद्धंसतर्पणम् ५ मासमात्रंमाघमासेवासंकृत्वासविस्तरम् ॥ अष्टतीर्थीत
तोगत्वादत्वादानान्यनेकशः ६ दृष्ट्वाऽक्षयवटंरम्यंनिद्रास्थानंनिजंलये ॥ किंचिद्दिहस्यश्रीरामःसीतयाभ्रातृभिःसह ७ पूजांकृत्वात्रिवेण्याश्चवस्त्रैर्दिव्यैःसुभूषणैः ॥ गं
गाजलैःकाचकुम्भाञ्शतशोऽथसहस्रशः ८ पूरयित्वाविमानाग्र्येस्थाप्यतीर्थपुरोहितान् ॥ पूजयित्वासविस्तारंनत्वाचैवपुनःपुनः ९ तान्प्रष्ट्वापुष्पकेस्थित्वाययावाका
शवर्त्मना ॥ विन्ध्याचलंसमाश्रित्ययत्रदुर्गातुवर्तते १० तत्रस्नात्वातीर्थविधिंपूर्ववच्चविधायसः ॥ तांविंध्यवासिनींपूज्यवस्त्रैराभरणादिभिः ११ कृत्वादानान्यनेकानि
तोष्यतीर्थपुरोहितान् ॥ ययौकाशींपुष्पकस्थःश्रीरामःसीतयासुखम् १२ एतस्मिन्नन्तरेकाश्यांकाशिस्थाःपुष्पकंतुतत् ॥ कोटिसूर्यप्रतीकाशंदृष्ट्वापश्चिमतोदिशम् १३
यत्प्राचींकाश्यभिमुखमागच्छन्तंमहोज्ज्वलम् ॥ चक्रुस्तर्कान्वितर्कांश्चशतशोऽट्टालसंस्थिताः १४ केचिदूचुश्चदावाग्निस्त्वयंपर्वतमस्तके ॥ सूर्येणविस्मृतःपंथाभ्रमणा
द्भ्रांतिमापसः १५ इतिकेचिज्जनाःप्रोचुःकेचिदूचुस्त्वयंमुनिः ॥ नारदस्तुसमायातिकेचित्तत्रबभाषिरे १६ पतत्यसौरविःस्वर्गाच्चकेचिद्द्रोणाचलान्वितः ॥ वायु
पुत्रोयमितितेप्रोचुःकाशीनिवासिनः १७ केचिदूचुःशशीस्वर्गान्मृगेणविनिपातितः ॥ केचिदूचुश्चविश्वेशंकेचिदूचुःसुदर्शनम् १८ केचिदूचुःसुवर्णाद्रिंकेचित्प्रोचु
ररुन्धतीम् ॥ केचित्पतत्रिराजानंकेचिच्चप्रलयानलम् १९ केचित्प्रोचुर्महाघोरंवन्ध्यस्त्रंकेनमोचितम् ॥ केचित्प्रोचुःसहस्रास्यस्त्वयंमणिविराजितः २० एवंवदंतस्ते
यानंददृशुःपुष्पकंमहत् ॥ महाकोलाहलंचक्रुःप्रोचुस्त्वत्रसमागतः २१ रामोऽयोध्यापतिःश्रीमान्यात्रांकर्तुंसनागरः ॥ विश्वनाथोऽपितच्छ्रुत्वापार्वत्यावृषभस्थितः २२
प्रत्युज्जगामश्रीरामंकाशिस्थैःपरिवेष्टितः ॥ उपायनंराघवस्यगृहीत्वाबहुविस्तरम् २३ एतस्मिन्नंतरेरामस्तंदेहलिविनायकम् ॥ पूज्यविश्वेश्वरंदृष्ट्वाननामशिरसात
दा २४ आलिंगितःशिवेनाऽथगृहीत्वोपायनंशिवात् ॥ स्वयंवस्त्रैराभरणैःपूजयामासशंकरम् २५ विवेशकाशिनाथस्यधृत्वाहस्तेनसत्करम् ॥ तावुभौवाहनेमुक्त्वाज
ग्मतुर्मणिकर्णिकाम् २६ ततःसीतायुतोरामश्चक्रपुष्करणीजले ॥ समर्प्यश्रीफलंस्नात्वासचैलंक्षौरपूर्वकम् २७ नित्ययात्रांविधायाऽथकृत्वाचैकमुपोषणम् ॥ तीर्थश्राद्धादि
१६ संपाद्यपंचतीर्थींविधायच २८ अंतर्गृहींमहायात्रांमानसद्वयमेवच ॥ द्विचत्वारिंशल्लिंगानिह्यष्टलिंगानिवैततः २९ षट्पंचाशच्चगणपांस्तथाष्टभैरवान्पुनः ॥ योगिनीश्च
चतुःषष्ठीस्तथादुर्गाश्चैवनव ३० तथाऽष्टदिक्पतींश्चापितथाचैवनवग्रहान् ॥ क्षेत्रप्रदक्षिणांपंचक्रोशीयात्रांरघूत्तमः ३१ चतुर्दशीमायात्रास्तुकृत्वाचैवसविस्तरम् ॥ रामे

१ शेषः । २ विवेशकाशींशम्भोश्चेतिपाठः ।

श्वरंमहालिंगंवरुणायास्तटेशुभे ३२ काश्यावायव्यदिग्भागेसीमायांस्थाप्यसूत्तमम् ॥ रामतीर्थंस्वीयनाम्नाभागीरथ्यांचकारसः ३३ एतस्मिन्नन्तरेतत्रवायुपुत्रःसमा
गतः ॥ वृत्तंश्रुत्वाराघवस्ययात्राःकर्तुंगतस्त्विति ३४ सीतारामौनमस्कृत्यस्नात्वाभागीरथीजले ॥ स्वनाम्नाशंकरंतीर्थमकरोज्जान्हवीतटे ३५ घट्टंबबंधगंगायास्तटे
रम्यंदृषण्मयम् ॥ काश्यामद्यापितन्नाम्नाघट्टोऽस्तिपरमःशुभः ३६ तथाचकाररामोऽपिघट्टबंधनमुत्तमम् ॥ दृश्यतेऽत्यहंयत्रकाश्यांरामःससीतया ३७ चकारपंचगं
गायांकार्तिकस्नानमुत्तमम् ॥ काशीवासंवर्षमेकंचकारधर्मतत्परः ३८ तीर्थवासार्थिनःसर्वान्संतर्प्यचपृथक्पृथक् ॥ रत्नैर्हिरण्यैर्वासोभिरश्वाभरणधेनुभिः ३९ विचि
त्रैश्चतथाऽमत्रैःस्वर्णरौप्यादिनिर्मितैः ॥ अमृतस्वादुपक्वान्नैःपायसैश्चसशर्करैः ४० समोरसैरन्नदानैर्धान्यदानैरनेकधा ॥ गन्धचन्दनकर्पूरैस्ताम्बूलैश्चारुचामरैः ४१ सतू
लैर्मृदुपर्यंकैर्दीपिकादर्पणासनैः ॥ शिबिकादासदासीभिर्वाहनैःपशुभिर्गृहैः ४२ चित्रध्वजपताकाभिरुच्छ्रोचैश्चंद्रचारुभिः ॥ नानाव्रतैर्महच्छ्रेष्ठैःसध्वजारोपणादिभिः ४३
वर्षाशनप्रदानैश्चगृहोपस्करसंयुतैः ॥ उपानत्पादुकाभिश्चयतेश्चापितपस्विनः ४४ योग्यैःपट्टदुकूलैश्चपट्टदुलैश्चित्रकम्बलैः ॥ दण्डैःकमण्डलुयुतैरजिनैर्मृगसम्भवैः ४५
कौपीनैरुत्तमंचैश्चपरिचारककाञ्चनैः ॥ मठैर्विद्यार्थिनामन्नैरतिथ्यर्थमहाधनैः ४६ बहुवौषधदानैश्चभिषजांजीवनादिभिः ॥ महापुस्तकसंभारैर्लेखकानांचजीवनैः ४७ रसा
यनैरमूल्यैश्चसत्रदानैरनेकशः ॥ ग्रीष्मेप्रपार्थद्रविणैर्हेमन्तेऽग्निष्टिकेन्धनैः ४८ छत्राच्छादनकाद्यर्थैर्वर्षाकालोचितैर्बहु ॥ रात्रौपाठप्रदीपैश्चपादाभ्यंजनकादिभिः ४९ पुराण
पाठकांश्चापिप्रतिदेवालयंधनैः ॥ देवालयेनृत्यगीतकरणार्थैरनेकशः ५० देवालयेसुधाकार्यैर्जीर्णोद्धारैरनेकशः ॥ चित्रलेखनमूल्यैश्चरंगमालादिमण्डनैः ५१ आरार्तिके
र्गुग्गुलैश्चदशांगादिसुधूपकैः ॥ कर्पूरवर्तिकाद्यैश्चदेवार्चार्थैरनेकशः ५२ पंचामृतानांस्नपनैःसुगन्धस्नपनैरपि ॥ देवार्थमुखवासैश्चदेवोद्यानैरनेकशः ५३ महापूजार्थमा
ल्यादिगुम्फनार्थैस्त्रिकालतः ॥ शंखभेरीमृदंगादिवाद्यनादैःशिवालये ५४ घण्टाशंखकुम्भादिस्नानोपस्करभाजनैः ॥ श्वेतैर्मार्जनवस्त्रैश्चसुगन्धैर्यक्षकर्दमैः ५५ जपहोमैः
स्तोत्रपाठैःशिवनामोच्चभाषणैः ॥ रासक्रीडादिसंयुक्तैश्चलनैःसप्रदक्षिणैः ५६ एवमादिभिरुद्दण्डैःक्रियाकाण्डैरनेकशः ॥ वर्षमेकमुषित्वात्रकृत्वातीर्थान्यनेकशः ५७
दीनानाथांश्चसन्तर्प्यनत्वाविश्वेश्वरंविभुम् ॥ ब्रह्मचर्यादिनियमैर्ऋतुकालागमेनच ५८ सत्यसम्भाषणेनापितीर्थमेवंप्रसाध्यच ॥ पुनःपुनर्विश्वनाथंकालराजंगणाधि
पम् ५९ अन्नपूर्णांदण्डपाणिंढुण्ढिंस्तुत्वाप्रणम्यच ॥ अनुज्ञातःशिवेनाऽथविमानेनरघूत्तमः ६० ययावाकाशमार्गेणगंगायादक्षिणेतटे ॥ कर्मनाशांनदींदृष्ट्वाच्यवनस्या
श्रमंययौ ६१ रामचंद्रःपुष्पकस्थःस्नात्वानत्वामुनीश्वरम् ॥ रामतीर्थंचरामेशंचकारतत्रराघवः ६२ निजबाणकृतांरेखांदर्शयामासतान्जनान् ॥ काश्यांअप्यधिका
न्यत्रकृत्वादानान्यनेकशः ६३ ययौयानेनदिव्येनस्वर्णभद्रस्यसंगमम् ॥ यानियानिहितीर्थानिराघवश्चगमिष्यति ६४ उत्तरोत्तरतस्तेषुदानाधिक्यंकरिष्यति ॥ यत्र
यत्ररघुश्रेष्ठोगमिष्यतिससीतया ६५ तत्रतीर्थान्यनेकानिभविष्यन्तिमहान्तिच ॥ शेषोऽपितेषांसंख्यांहिवक्तुंनात्रक्षमोभवेत् ६६ तेषुतीर्थानिश्रेष्ठानिषट्ज्ञेयानिमनी

१ दृश्यमत्यहंयात्राःइतिपाठः । २ भाजनैः । ३ शोणभद्रस्येतिपाठः ।

पिभिः ॥ बन्धूनचैवचत्वारिसीतायाःपंचमंस्मृतम् ६७ षष्ठमंजानिपुत्रस्यसर्वत्रैवैविनिश्चयः ॥ रामःस्नात्वास्वर्णभद्रगंगयोःसंगमेमुदा ६८ त्रिरात्रंसमतिक्रम्यगण्डकी
संगमंययो ॥ कस्मिंस्तीर्थेत्रिरात्रंचपंचरात्रमथक्वचित् ६९ सप्तरात्रंक्वचिच्चाऽपिपक्षमेकमथक्वचित् ॥ अष्टादशैकविंशद्वात्रिमासंचक्वचित्प्रभुः ७० चकारवासंतीर्थेषुधर्मान्
कुर्वन्यथासुखम् ॥ गंडकीसंगमेस्नात्वानेपालेजगदीश्वरम् ७१ दृष्ट्वाहरिहरक्षेत्रंययौरघुकुलोद्वहः ॥ एवंकुर्वन्सतीर्थानिसर्वाणिरघुनंदनः ७२ पुनःपुनासंगमंचययौजान्हविद
क्षिणे ॥ वैकुंठनगरंगत्वाजरासंघपुरंययौ ७३ वैकुंठायाजलेस्नात्वाततोरामोययौगयाम् ॥ फल्गुनद्यास्तटेपूर्वंसुक्त्वातद्यानमुत्तमम् ७४ नत्वाविष्णुपदंदिव्यंपुनर्यानातिकंय
यो ॥ तांनिशांसमतिक्रम्यप्रभातेरघुनंदनः ७५ स्नातुंफल्गुनदीतोयेययौतीर्थद्विजैःसह ॥ एतस्मिन्नन्तरेसीतासखीभिःपरिवेष्टिता ७६ ययौस्नातुंफल्गुनद्यांस्नात्वापूज्य
सुवासिनीः ॥ सैकतेसाक्षणंतस्थौपूजनार्थमहेश्वरीम् ७७ वालुकापंचपिंडैश्चदुर्गांकर्तुंसमुद्यता ॥ गृहीत्वावामहस्तेनसार्द्रांसासिकतांतदा ७८ सव्येनकृत्वापिंडंतुयावत्सा
पाणिनाभुवि ॥ स्थापयामासतावत्तुददर्शजगतीतलात् ७९ विनिर्गतंदशरथश्वशुरस्यकरंशुभम् ॥ दक्षिणंनिजहस्ताच्चगृहीत्वापिण्डमुत्तमम् ८० गच्छन्तंभूतलंरम्यंतंदृष्ट्वा
कौतुकंपुनः ॥ द्वितीयंस्थापयामासभुविपिंडंतुसैकतम् ८१ सोऽपिनीतःपूर्ववच्चह्येवमष्टोत्तरंशतम् ॥ तदोपिंडानकौतुकेनततःश्रान्ताविदेहजा ८२ मनसापूज्यदुर्गांसाययौ
यानंत्वरान्विता ॥ तद्वृत्तंनसखीभिस्तुज्ञातंरामेणवाऽपिन ८३ तयाऽपिकथितंनैवकिंरामोमांवदिष्यति ॥ इतिभीत्याततोरामःपंचतीर्थंविगाह्यच ८४ प्रेतपर्वतमासाद्यपि
ण्डदानमथाकरोत् ॥ कनिष्ठिकायानिष्कास्यनिजनामांकितांशुभाम् ८५ कांचनींमुद्रिकांरम्यांदक्षिणाभिमुखस्तदा ॥ अपहतेतिमंत्रेणचकारभुविराघवः ८६ रेखात्रयंतद
त्रापिदृश्यतेतत्रवैस्फुटम् ॥ आस्तीर्यसकुशांस्तत्रपिण्डान्सकुमयान्शुभान् ८७ तिलाज्यमधुसंयुक्तान्दातुंरामःसमुद्यतः ॥ सव्येननाणिर्धृत्वापिण्डंगृहीत्वारघुनन्दनः ८८
यावत्पश्यतिभूम्यांतुनददर्शपितुःकरम् ॥ तदाश्चर्येणविप्रास्तेराममूचुस्त्वरान्विताः ८९ निष्कामंत्यत्रसर्वेषांपितृणांदक्षिणाःकराः ॥ नदृश्यतेतवपितुःकारणंनाऽत्रवि
ग्रहे ९० रामोऽपिविस्मयाविष्टश्चकितःप्राहलक्ष्मणम् ॥ जानीषेकारणंकिंचिदत्रत्वंबुद्धिमानसि ९१ सप्राहराघवाऽस्माभिर्यदागोदावरीगतम् ॥ इंगुदीफलपिण्याकपिं
डदानेतदाकरः ९२ अस्माभिःस्वपितुर्दृष्टःसोऽत्रनैवप्रदृश्यते ॥ ममापिजातमाश्चर्यंसीतांत्वंप्रष्टुमर्हसि ९३ तच्छ्रुत्वाजानकीशीघ्रंमाहकिंचिद्भयातुरा ॥ मयाऽपराधि
तंकिंचित्तत्क्षमस्वरघूत्तम ९४ ततस्यावचनंश्रुत्वाराघवःप्राहतांपुनः ॥ वदतथ्यंनभेतव्यंकारणंकिममातिकम् ९५ यथावृत्तंतयासर्वंराघवायनिवेदितम् ॥ तच्छ्रुत्वा
राघवःप्राहकःसाक्षीतवकर्मणि ९६ साप्राहचूतवृक्षोऽस्तिपृष्टःसनेत्युवाचह ॥ तदाशप्तःसीतयासफलहीनःसकीटकः ९७ भवमेवचनाच्चूतयतोमिथ्यात्वयेरितम् ॥ पुनः
साराघवंप्राहफल्गुःसाक्ष्यंप्रदास्यति ९८ सापिरामेणपृष्टाऽथनेत्युवाचभयातुरा ॥ साऽपिशप्तारामपत्न्याऽधोमुखाभववाक्यतः ९९ वदयस्मान्नृपश्चोक्तंत्वयासत्येऽपि
कर्मणि ॥ ततःसीतापुनःप्राहसाक्ष्यंमेऽत्रनिवासिनः १०० दास्यंतीमेद्विजाःसर्वेतदामन्निकटस्थिताः ॥ तेऽपिपृष्टाराघवेणनेत्यूचुर्भयविह्वलाः १ दवश्चसाक्ष्यंतार्हिरामः

१ नेपालेशजमीश्वरमितिपाठः । २ ज्ञात्वेतिपाठः ।

शापंनस्तुप्रदास्यति ॥ निवारिताकथंनेयंतदासीतेतिचिन्त्यते २ तांस्तदाजानकीशापंददौतीर्थनिवासिनः ॥ युष्माकंनाऽत्रसंतृप्तिःकदाद्रव्यैर्भविष्यति ३ द्रव्यार्थंस
कलान्देशान्भ्रमध्वंदीनरूपिणः ॥ ततःसाजानकीप्राहओतुःसाक्ष्यंप्रदास्यति ४ सोऽपिपृष्टोनेत्युवाचरामंसीताशशापतम् ॥ पुच्छाग्रंस्वपुरःकृत्वातदामन्निकटोऽपि
सन् ५ मूषेरितंयतस्तस्मात्पुच्छेह्यस्पृश्यतांभज ॥ ततःसाजानकीप्राहगौर्मेसाक्ष्यंप्रदास्यति ६ साऽपिपृष्टानेत्युवाचरामंसीताशशापताम् ॥ अपवित्राभवास्येत्वंमम
वाक्येनधेनुके १०७ ततःसीताऽश्वत्थवृक्षंसाक्ष्यर्थंप्राहराघवम् ॥ सपृष्टोनेत्युवाचाऽथतंसीताऽथाशपत्क्रुधा ८ भवाचलदलस्त्वंहिमाद्रिराऽश्वत्थपादप ॥ पुनःसीतापतिं
प्राहममसाक्षीप्रभाकरः ९ सपृष्टःप्राहतथ्यंहितुष्टिर्जातापितुस्तव ॥ एतस्मिन्नंतरेतत्रविमानेनार्कवर्चसा ११० राजादशरथोराममागत्यालिंग्यवैदृढम् ॥ प्राहत्वयाता
रितोऽहंनरकादतिदुस्तरात् ॥ मैथिल्यापिण्डदानेनजातामेतृप्तिरुत्तमा ११ तथाऽपिलोकशिक्षार्थंगयाश्राद्धंत्वमाचर ॥ पितरंप्राहरामोऽपिकिमर्थंहित्वयाऽत्रवै १२ त्व
रयासिकतापिण्डःसंगृहीतोवदस्वमाम् ॥ समप्राहाऽत्रगयायांतुबहुविघ्नानिराघव १३ भवंतिश्राद्धसमयेकृतातस्मात्त्वरामया ॥ इतिरामंसमाभाष्यगृहीत्वाराघवादपि १४
किंचित्कव्यंविमानेनययौदशरथस्तदा ॥ ततोरामःप्रेतगिरौपिण्डदानंविधायच १५ गत्वाप्रेतशिलायांचदत्त्वाकाकबलिंततः ॥ धर्मारण्यंततोगत्वाकृत्वैकोनपदेषुहि
१६ सक्तुनाचतिलाज्यैश्चपायसैश्चसशर्करैः ॥ पृथग्वैपिण्डदानानिवटश्राद्धंविधायच १७ अष्टतीर्थीततःकृत्वाततःसंध्याःस्थलत्रये ॥ कृत्वायथाविधानेनदत्त्वादानान्य
नेकशः १८ गदाधरंततःपूज्यमहाविभवपूर्वकम् ॥ षेचयामासतोयैश्चचूतवृक्षंसकीटकम् १९ एकोमुनिःकुंभकुशाग्रहस्तःतस्यमूलेसलिलंदधार ॥ आम्रश्चसिक्तःपितर
श्चतृप्ताएकाक्रियाव्यर्थकरीप्रसिद्धा १२० कृत्वाविष्णुपदेपूजांविमानारोपणादिभिः ॥ मासत्रयमतिक्रम्यगयायांरघुनंदनः २१ विमानेनययौप्राचींदिशंसंतोषयन्जना
न् ॥ फल्गुनद्यास्तटेपूर्वेविमानंयत्रसंस्थितम् २२ तत्ररामगयानाम्नीभूमिर्विप्रैरुदीर्यते ॥ रामेश्वरोरामतीर्थंवर्ततेतत्रपावनम् २३ रामोऽपिफल्गुनद्याश्चगंगायाःसंगमं
ययौ ॥ गयाबहिःफल्गुरेवज्ञेयासातुमहानदी २४ ततोययौमुद्गलस्यनूतनाश्रममुत्तमम् ॥ यस्मिन्नुदग्वहागंगाजान्हवीपापनाशिनी २५ ततोऽग्रेजानकीज्ञात्वाभू
म्यांदिव्यंप्रदास्यति ॥ तस्यादिव्यस्थलेरामस्तीर्थंमादौचकारसः २६ बंधूनांचपृथक्तत्रसंतितीर्थानिसर्वतः ॥ सीतयानकृतंतत्रस्वनाम्नातीर्थमुत्तमम् २७ ज्ञा
त्वाभविष्यत्यग्रेमत्तीर्थंचेतिसविस्तरम् ॥ यदाभूम्यांप्रदास्यामिदिव्यंतीर्थंतदाऽस्तुमे २८ रामस्ततोविमानेनगतश्चोत्तरवाहिनीम् ॥ नाम्नापुरीतथागंगायत्रास्ति
परमार्थदा २९ पर्वतोयत्रगंगायामस्तिबिल्वेश्वरोऽपिच ॥ ततःश्रीवैजनाथेशंनत्वारावणनिर्मितम् ३० ततःशनैर्विमानेनपश्यन्नानास्थलानिसः ॥ ययौभागीर
थीमध्याद्यत्रभिन्नासितापुनः ३१ प्रयागाद्योजनशतमानेदेशेरघूद्वहः ॥ ततोगंगाऽब्धिसंयोगसहस्रेपुष्पकेणसः ३२ गत्वास्नात्वाततोयत्रकालिंदीसंगताऽर्णवे ॥ तत्रगत्वा
रघुश्रेष्ठस्ततःपश्यन्स्थलानिसः ३३ नानापुण्यानितीर्थानिदृष्ट्वाश्रीपुरुषोत्तमम् ॥ पूर्वसागरतीरस्थंदत्वादानान्यनेकशः ३४ ततःशनैःपुष्पकेणदृष्ट्वानानाविधान्सुरान् ॥
दृष्ट्वानानानदीःसर्वानानादेशान्विलंघ्यच ३५ गोदातीरेस्वनाम्नातुकृत्वागिरिमनुत्तमम् ॥ सप्तगोदावरीभेदसंगमेषुमहोदधौ ३६ स्नात्वादक्षिणमार्गेणततोरामोययौपुनः

पूर्वदेशेनृपतिभिर्मानितःपूजितोपिच ३७ गृहीत्वास्वकरंतेभ्यस्तैःसहैवशनैःशनैः ॥ विमानेनसुखेनैवतीर्थान्यन्यानिसेवितुम् ३८ श्रीरामोयाम्यदिग्जानिदक्षिणा
भिमुखोययौ ॥ एवंप्रोक्तापूर्वदेशयात्रारामेणयाकृता १३९ ॥ इतिश्रीमदानंदरामायणे यात्राकांडेपूर्वदेशयात्रावर्णनंनामषष्ठःसर्गः ॥ ६ ॥ ॥ श्रीरामदास
उवाच ॥ ॥ ततोरामःसमुल्लंघ्यमत्स्यतीर्थंमनोरमम् ॥ तीर्त्वामहानदींकृष्णांपश्यन्पुण्यस्थलानिसः १ ततोययौनारसिंहंरामःपानकनामकम् ॥ कृष्णाऽब्धिसंग
मेस्नात्वादत्वादानानिविस्तरैः २ पश्यन्नानास्थलान्येवययौश्रीशैलपर्वतम् ॥ स्नात्वासनीलगंगायांदृष्ट्वाश्रीमल्लिकार्जुनम् ३ तत्रैवकृष्णासाज्ञेयानीलगंगेतिनामतः ॥
श्रीशैलशिखरंदृष्ट्वापुनर्जन्मनिवारकम् ४ शिखरेश्वरस्याशिखराद्ब्रह्मकुंडेविगाह्यच ॥ भीमकुंडेततःस्नात्वातथानिवृत्तिसंगमे ५ तुंगभद्रासंगमेऽपिमहानदीसरोवरे ॥
विगाह्यभवनाशिन्यांततोदृष्ट्वाह्यहोबलम् ६ नारसिंहंततोनत्वाकृत्वास्तंभप्रदक्षिणाः ॥ गत्वापुष्पगिरौतत्रपिनाकीमवगाह्यच ७ पश्यन्पुण्यस्थलानीशान्दृष्ट्वापंपास
रोवरम् ॥ किष्किंधायांततोगत्वासुग्रीवाद्यैःसुपूजितः ८ सुग्रीवाद्यैर्वानरैश्चविमानेनविहायसा ॥ प्रवर्षणगिरौस्वीयगुहांरम्यांप्रदर्शयन् ९ वैदेहींकौतुकाद्रामःकिंचि
त्कृत्वास्मिताननम् ॥ द्वितीयेभीमकुंडेऽथस्नात्वागत्वाषडाननम् १० स्नात्वाऽगस्तिकुंडमध्येपश्यंस्तीर्थान्यनेकशः ॥ कनकगिरिस्थंशंभुंनत्वासंपूज्यराघवः ११
वीरभद्रंततोदृष्ट्वानत्वादिवेंकटंभुवि ॥ गोविंदराजंतंनत्वावृत्तिपत्तनसंस्थितम् १२ स्नात्वाकपिलधारायांतीर्थंश्राद्धंविधायच ॥ ततोशेषाचलंगत्वास्नात्वापुष्करिणीज
ले १३ व्यंकटेशंपूजयित्वापंचतीर्थीविगाह्यसः ॥ सुवर्णमुखरीतीरसंस्थंश्रीकालहस्तिनम् १४ पूजयित्वाययौकांचींरामःशिवहरिप्रियाम् ॥ एकांबरेश्वरंपूज्यसर्वती
र्थेविगाह्यच १५ कामाक्षीमंबिकांनत्वास्नात्वावेगावतीजले ॥ नत्वावरदराजंचपक्षितीर्थंततोययौ १६ पूषाविधातृनामानौपक्षिणौपूज्यसीतया ॥ पुष्पकेणततः
शीघ्रंक्षीरनद्यांविगाह्यच १७ नत्वात्रिविक्रमंतत्रततोगादरुणाचलम् ॥ मुक्तिर्यत्स्मरणादेवनत्वातमरुणाचलम् १८ मणिमुक्तानदीतीरेवृद्धाचलमगात्ततः ॥ वृद्धा
चलेशंसंपूज्यवटपालंततोययौ १९ वटपालेश्वरंपूज्यततःश्रीमुष्टिमभ्यगात् ॥ तत्रयज्ञवराहंचसंपूज्यजगदीश्वरम् २० चिदंबरथमागच्छद्दर्शनादेवमुक्तिदम् ॥ लि
खितायत्रशेषेणशिलायांतांडवाकृतिः २१ कावेरींचततस्तीर्त्वासिंहक्षेत्रंततोययौ ॥ नत्वाब्रह्मपुरेशंचवैजनाथंप्रणम्यसः २२ श्वेतारण्यंततोगत्वाशंखमुख्यांविगाह्य
च ॥ छायावनंततोदृष्ट्वाययौगौरीमयूरकम् २३ वेदारण्यंततोगत्वानत्वामध्यार्जुनंशिवम् ॥ स्नात्वाऽथवृद्धकावेरींकुंभकोणंविलोक्यच २४ श्रीनिवासंततोदृष्ट्वादृष्ट्वा
वृन्दावनंशुभम् ॥ सारनाथंततोदृष्ट्वाश्रीवत्संचददर्शसः २५ प्रयागमाधवंनत्वागत्वाऽब्धिशिरसःस्थलम् ॥ भीतावाकाशनीलाभंगत्वाऽथकमलालयम् २६ त्यागेश्वरंसम
भ्यर्च्यगयातीर्थेविगाह्यच ॥ दक्षिणद्वारकायांचश्रीगोविंदंप्रणम्यसः २७ जेपालाख्यपुरंगत्वागत्वाचाभयदेश्वरम् ॥ विघ्नेश्वरंनमस्कृत्यपुरासंस्थापितंस्वयम् २८ स्ना
त्वावैनवपाषाणेययौदेव्याश्वपत्तनम् ॥ स्नात्वावेतालतीर्थेवैतीर्त्वाघंसागरस्यच २९ सस्नात्वाभैरवेतीर्थेप्रापैकांतस्थितंनिजम् ॥ अरुह्यविमानाग्र्यात्पद्मासवैर्जे

१ नत्वाद्रिंन्पंकटमितिपाठः । २ श्रीवांछमितिपाठः ।

नैःसह ३० गत्वालक्ष्मणकुंडेऽथस्वकुंडेऽपिविगाह्यच ॥ अग्नितीर्थेततःस्नात्वाधनुष्कोट्यांविगाह्यच ३१ स्नात्वाजटायुतीर्थेहिमत्वातंगंधमादनम् ॥ आदौनत्वावि
श्वनाथंपुरानीतंहनूमता ३२ रामेश्वरंततोनत्वाकृत्वागंगाभिषेचनम् ॥ काचकुंभादिकंत्यक्त्वाधनुष्कोट्यांरघूत्तमः ३३ कोटितीर्थेधनुष्कोट्यांचकारकूपमुत्तमम् ॥ क्षेत्र
पापप्रशांत्यर्थंदृष्ट्वाश्रीसेतुमाधवम् ३४ नानादानादिकंकृत्वामासमेकंविलंघ्यच ॥ वाहनारूढदेवानांमहोत्साहान्विधायच ३५ क्षेत्रपापप्रशांत्यर्थंकोटितीर्थेविगाह्य
च ॥ नत्वाद्वारस्थगणपंतीर्त्वौघंजलधेःपुनः ३६ विहायसाविमानेनसदर्भशयनंययौ ॥ स्नात्वानिक्षेपिकातोयैस्ताम्रपर्ण्यब्धिसंगमे ३७ गत्वास्नात्वारामचंद्रोददौदाना
न्यनेकशः ॥ ततोब्धेस्तीरसंस्थंतंस्कन्दंसंपूज्यराघवः ३८ ताम्रपर्णीतटेनैवपश्यन्पुण्यस्थलानिसः ॥ नत्वावेंकटनाथांस्तान्नत्वातोताद्रिमाययौ ३९ कन्याकुमारि
कांदृष्ट्वासिन्धुतीरानिवासिनीम् ॥ प्रतीक्षंतींस्वीयमार्गंबिभ्रतींमालिकांकरे ४० तामाहरघुवीरश्चवरंवरयसुव्रते ॥ साप्राहराघवंनत्वाचिरमस्मिव्रतास्थिता ४१ अहंमुनि
सुतापित्रासुपेंद्रायाविनिश्चिता ॥ विवाहार्थसमानीतःसुसेंद्रोयोजनेस्थितः ४२ तवयात्रोद्यमंश्रुत्वामयाचित्तेविनिश्चितम् ॥ आगमिष्यतिरामोऽत्रवरयिष्याम्यहंतदा
४३ पित्रामन्निश्चयंज्ञात्वासुसेंद्रोविनिवर्तितः ॥ सोऽपिमत्खेदचित्तस्तुयोजनेऽद्यापिवर्तते ४४ विवाहोपकरणादिमन्मात्रायत्कृतंपुरा ॥ पित्रातत्सागरेक्षिप्तंक्रोधाविष्टेन
राघव ४५ अद्याऽपिदृश्यतेपश्यतरंगैर्निर्गतंबहिः ॥ अद्यत्वयातारिताऽहंमांदासींकर्तुमर्हसि ४६ ज्ञात्वातस्याह्यभिप्रायंतामाहरघुनंदनः ॥ एकपत्नीव्रतंमेऽस्मिन्ज
न्मन्यस्तिकुमारिके ४७ अग्रेकृष्णावतारेत्वंभजमांनाऽत्रसंशयः ॥ तद्रामवचनादेवयमैश्चनियमैरपि ४८ यावद्रामःस्थितोभूम्यांतावद्धृत्वाकलेवरम् ॥ तपोबलेन
देहांतेजांबवतोजनिष्यति ४९ जांबवतीतिनाम्नासाकृष्णपत्नीभविष्यति ॥ रामोययौसुसेंद्रंचपयोष्णींसंविगाह्यसः ५० आद्यानंतंततोगत्वाताम्रपर्णीतटेस्थितम् ॥
विनिद्रितंशेषपृष्ठेलक्ष्मीगरुडसेवितम् ५१ ज्ञातव्याताम्रपर्णीसात्वन्यापश्चिमवाहिनी ॥ अनन्तशयनंगत्वापद्मतीर्थेविगाह्यच ५२ शंखतीर्थेमत्स्यनद्यांविगाह्य
सीतयाप्रभुः ॥ ततोगत्वाविमानेनधर्माधर्मसरोवरे ५३ स्नात्वाजनार्दनंगत्वापश्चिमेह्यब्धिरोधसि ॥ दर्शेऽथपौर्णिमायांचगंगाधाराब्धिसंगमे ५४ स्नात्वाजनार्द
नंपूज्यनारीराज्यंविलोक्यच ॥ अग्रेश्रीरामचंद्रःसनययौलोकशिक्षया ५५ परिवृत्यततोरामोघृतमालांविगाह्यच ॥ कृतमालांततःस्नात्वासिन्धुनद्यांविगा
ह्यच ५६ गत्वागजेंद्रमोक्षंचताम्रपर्णीतटस्थितम् ॥ ताम्रपर्ण्युद्गमेस्नात्वागत्वामेराळतीर्थकम् ५७ गत्वाचंद्रकुमाराख्यंगिरिंश्रीरघुनंदनः ॥ ततोययौविमानेन
दृष्ट्वादक्षिणकाशिकाम् ५८ नत्वाकाशिविश्वनाथंचंपकारण्यमाययौ ॥ चित्रगंगाजलेस्नात्वानत्वाहरिहरौशुभौ ५९ ततोरामोविमानेनमधुपुर्यांविवेशसः ॥ वेगाव
त्यांजलेस्नात्वानत्वातंसौन्दरेश्वरम् ६० मीनाक्षींमंबिकांनत्वाव्यंकटंद्राविडेगिरौ ॥ कावेरीमध्यनिलयंश्रीरंगशयनंययौ ६१ मातृभूतेश्वरंनत्वानत्वातंजंबुकेश्वरम् ॥
रंगनाथंनमस्कृत्यद्याविनाशींततोययौ ६२ श्रीरंगपत्तनंगत्वास्नात्वाहिमवतीजले ॥ शालिग्रामंनमस्कृत्यरामनाथपुरंययौ ६३ स्नात्वाकुमारधारायांसुब्रह्मण्यंप्रपूज्यच ॥

१ आपानंनामितिपाठः । २ नत्वाऽलंगिरिवेंकटम् इतिपाठः ।

उडुप्याख्यंततःकृष्णंनत्वाशृंगाश्रमंययौ ६४ तुंगानदीतटेशृंगगिरौनत्वातुशारदाम् ॥ कुम्भकाशींततोगत्वागत्वांकोटीश्वरंशिवम् ६५ नत्वामूकांबिकांदेवींनत्वांमुर्डेश्व रंहरम् ॥ गुणवंतेश्वरंनत्वानत्वाधारेश्वरंततः ६६ गौरेश्वरंनमस्कृत्यनत्वासजेश्वरंशिवम् ॥ गोकर्णंचततोगत्वातंप्रणम्यमहाबलम् ६७ हरिहरेश्वरंगत्वापश्यंस्तीर्थान्य नेकशः ॥ जामदग्न्यंमहेंद्राद्रौनत्वाभिमेश्वरंययौ ६८ धौमंमहाबलंनत्वाययौकोलापुरंततः ॥ करवीरपुरंगत्वाकृष्णवेण्योस्तुसंगमे ६९ स्नात्वारामोविमानेनगदा लक्ष्मीश्वरंययौ ॥ स्नात्वाघटप्रभायांतुपश्यन्पुण्यस्थलानिहि ७० महादेवंनमस्कृत्यनत्वामल्हारिमीश्वरम् ॥ करानदीतटस्थंतंवक्रतुंडंविलोक्यच ७१ नीरानदी जलेस्नात्वानारसिंहंप्रपूज्यच ॥ पांडुरंगंनमस्कृत्यचंद्रभागांविगाह्यच ७२ ययौभीमासंगमंतुचंदट्टांचततोययौ ॥ ततोप्रेमपुरंगत्वानत्वामार्तंडमीश्वरम् ७३ नल दुर्गांविलोक्याऽथनानापश्यंस्थलानिहि ॥ तुलजापुरसंस्थांतांदेवींनत्वाययौततः ७४ माणिक्यामंबिकांदृष्ट्वापश्यंस्तीर्थानिराघवः ॥ योगीश्वरींवरामंबांदृष्ट्वाह्यंबा पुरस्थिताम् ७५ वैजनाथंनमस्कृत्यवंजरासंगमंययौ ॥ नागेशंचविलोक्याऽथविमानेनसराघवः ७६ स्नात्वापूर्णासंगमेतुगोदायाउत्तरेतटे ॥ स्वनाम्नाऽथपुरींकृ त्वामुद्गलाश्रममाययौ ७७ बाणतीर्थेततःस्नात्वासिंधुफेनासुसंगमे ॥ गोदानामावब्जकेऽथस्नात्वानत्वात्रिविक्रमम् ७८ कृत्वापरांस्वनाम्नातुपुरींगोदावरीतटे ॥ अंबि कांतुनमस्कृत्यचंडिकांपरिपूज्यच ७९ आत्मतीर्थेततःस्नात्वानत्वाविज्ञानमीश्वरम् ॥ महालक्ष्मींविलोक्याऽथवडवासंगमंययौ ८० प्रतिष्ठानंविलोक्याऽथस्ना त्वाह्यद्वैलसंगमे ॥ शिवनंदासंगमेऽथनृसिंहंपरिपूज्यसः ८१ स्वीयनाम्नाख्यांततीर्थंप्रवरासंगमंययौ ॥ सिद्धेश्वरंनमस्कृत्यनिवासाख्यंपुरंययौ ८२ नूपुराख्यंपुरंगं त्वापश्यन्नानास्थलानिसः ॥ ययौगोदातटेनैवपुण्यस्तंभंरघूद्वहः ८३ गत्वाकद्रूसंगमेतुविनतासंगमंययौ ॥ जनस्थानंततोगत्वाययौत्र्यंबकमीश्वरम् ८४ दाक्षिणात्यैर्नृ पतिभिर्मानितःपूजितोऽपिच ॥ गृहीत्वाकरभारंस्वंतेभ्यस्तैःसहितोययौ ८५ एवंदक्षिणयात्रेयंयाकृताराघवेणवै ॥ सामयाविस्तरेणैवकथितात्र्यंबकावधि ८६ ॥ इति श्रीमदानन्दरामायणे यात्राकाण्डे दक्षिणतीर्थयात्रावर्णनं नाम सप्तमः सर्गः ॥ ७ ॥ ॥ विष्णुदासउवाच ॥ गुरोजातोऽस्तिसंदेहोममचित्तेवदाम्यहम् ॥ सत्वया छिद्यतांस्वामिन्साधवोहिकृपालवः १ यानारूढानकर्तव्यायात्राचेतिश्रुतंमया ॥ कथंयानेनरामेणकृतायात्रात्वयेरिता २ इतिजातोऽस्तिसंदेहोममतंत्वंनिवारय ॥ इतिशिष्यवचःश्रुत्वागुरुःप्राहाऽथतंपुनः ३ ॥ रामदासउवाच ॥ पदायात्रानकर्तव्याछत्रचामरधारिणा ॥ राज्ञाद्वीपाधिपत्येनकार्यामांडलिकेनतु ४ पृथिवीशस्यदे वस्यलग्नोऽशुक्तवरस्यच ॥ तथामठाधिपस्यापिगमनंनपदास्मृतम् ५ तस्मान्नात्रत्वयाकार्यःसंदेहोराघवंप्रति ॥ आज्ञयारामचंद्रस्यकृपयाऽपिचतैर्जनैः ६ अधिष्ठितंपु ष्पकंतुकोवेदेश्वरचेष्टितम् ॥ इदानींरामचंद्रस्यशृणुतांप्राक्तनींकथाम् ७ त्र्यंबकाद्रामचंद्रस्तुपुरायंत्रतुनिद्रितम् ॥ सीतयापर्वतेतत्रगत्वास्थित्वादिनत्रयम् ८ सप्तशृंग गिरौगत्वागत्वाऽगस्तेस्तुचाश्रमम् ॥ सुतीक्ष्णस्याश्रमंगत्वाययौचेलपुरंततः ९ घृष्णेश्वरंनमस्कृत्यशिवतीर्थेविगाह्यच ॥ दृक्षारम्यंदेवगिरिंविरजाक्षेत्रमाययौ १०

१ मुर्डेश्वरमितिपाठः । २ त्वंलजापुरसंस्थामितिपाठः । ३ हर्दहेतिपाठः । ४ पातुंविनिर्गतःइतिपाठः । ५ वृत्तयेशमितिपाठः ।

आ. रा. मातापुरस्थांदेवींतांनत्वापश्यन्स्थलानिसः ॥ देववाटेनारसिंहंनत्वारामश्चसीतया ११ चकारविधिवत्स्नानंपयोष्ण्यांबंधुभिर्जनैः ॥ स्नात्वाताप्युद्गमरामःस्वनाम्नापर्व
तोत्तमम् १२ गत्वास्नात्वाऽथरेवायामोंकारंपरिपूज्यच ॥ पश्चिमाभिमुखःपश्यन्नानापुण्यस्थलानिहि १३ ताप्त्याश्चसंगमेस्नात्वानर्मदायाश्चसंगमे ॥ महीनदीजलेस्ना या. का.
त्वाप्रभासंचततोययौ १४ पंचसरस्वतीनांचसंगमेषुविगाह्यच ॥ सौराष्ट्रस्थसोमनाथंदृष्ट्वासाभ्रमतींनदीम् १५ पश्यन्नानास्थलान्येवशंखोद्धारंययौततः ॥ गोमत्यां
॥ १० ॥ विधिवत्स्नात्वाद्वारावत्यांविवेशसः १६ अनादिसिद्धांसप्तसुपुरीषुप्रथितांशुभाम् ॥ दृष्ट्वाकृत्वातीर्थविधिंदत्वादानान्यनेकशः १७ पश्यंस्तीर्थानिसर्वाणिपुण्यानिरघुनंद २
नः ॥ पाश्चिमात्यैर्नृपतिभिर्मानितःपूजितोऽपिच १८ गृहीत्वाकरभारांस्वंतेभ्यस्तैःसहितोययौ ॥ सरस्वत्यास्तटेनैवपश्यन्पुण्यस्थलानिसः १९ पुष्पकस्थःशनैःसी
तांदर्शयन्कौतुकानिहि ॥ ययौपुष्करतीर्थंवैनृपैःसर्वत्रसंस्तुतः २० विमानेप्रत्यहंरामःकोटिशोब्राह्मणान्सदा ॥ भोजयामासदिव्यान्नैःपायसैःशर्करादिभिः २१ विमाने
येस्थिताःपूर्वमयोध्यापुरवासिनः ॥ तथायेपूर्वदेशीयादक्षिणात्यानृपाश्चये २२ पाश्चिमात्यानृपाएवतेषल्वैर्वाहनैःसह ॥ रामेणातिथिवत्सर्वेवस्त्रान्नाभरणादिभिः २३
पूजितामानिताआसन्सादरंतेयथासुखम् ॥ नकश्चिद्भिन्नपाकंहिचकारपुष्पकेनरः २४ चिंताकाष्ठतृणादीनांजलस्याऽपिनकस्यचित् ॥ एकाचिंतातुतत्राऽस्तिक्षुद्रो
घोमेकथंभवेत् २५ वांछन्तिसर्वेतत्रैकंभिषक्चूर्णंप्रदास्यति ॥ निद्रायास्तत्रदारिद्र्यंवाद्यघोषैर्निरंतरम् २६ त्रासस्तत्रमहानासीद्विमानेवारयोषिताम् ॥ गीतैर्नेत्रकटाक्षैश्च
क्रीडाभिर्वचनादिभिः २७ मणिदीपैर्दिनंरात्रिंनजानातिस्मतत्रवै ॥ गच्छद्दिनेकदायानंयातिरात्रावपिक्वचित् २८ एतस्मिन्नन्तरेशिष्यपुष्करस्थैर्जनैस्तदा ॥ महानादःश्रु
तोरम्योमंजुलःश्रुतितोषकृत् २९ वारस्त्रीनूपुरोद्भूतक्वणत्कंकणजोऽपिच ॥ करताडनगीतादिमृदंगपणवोद्भवः ३० नववाद्यसमुद्भूतोघटीयंत्रसमुद्भवः ॥ यानघंटाकिंकिणी
नांपताकारवसंभवः ३१ वारांगनाकटितटकिंकिणीसंभवोऽपिच ॥ वारणाश्वायुधोष्ट्रादिमयूरकपिसंभवः ३२ वीरेभ्योवेदघोषेभ्यःशिष्येभ्यश्चसमुत्थितः ॥ नटनाटकवंदिभ्यो
मागधेभ्यःसमुत्थितः ३३ गोदोहसंभवश्चापिह्यजामहिषिदोहजः ॥ दधिमंथनसंभूतःशिशूनांरोदनोद्भवः ३४ शिशुमंचकसंबद्धशृंखलाभ्यःसमुत्थितः ॥ नानातूर्योद्भव
श्चाऽपिपिष्टचक्रसमुद्भवः ३५ घृतपाचितपक्वान्नप्रकारकरणोद्भवः ॥ नारदादिमुनिश्रेष्ठधृतवीणादिसंभवः ३६ पुराणकथनोद्भूतोहरिकीर्तनसंभवः ॥ रामनामसहस्रादि
स्तोत्रपाठसमुद्भवः ३७ नारीपूरणपेषणकार्यकंकणसंभवः ॥ पादप्रक्षालनाद्यादिनानाकार्यसमुद्भवः ३८ एवंनानाविधंश्रुत्वापुष्करस्थाजनाध्वनिम् ॥ निशांतिपाश्चिमा
माशांकिमेतदितिविव्हलाः ३९ केचिदूचुर्नदिघंटास्वरोऽयंश्रूयतेमहान् ॥ केचिदूचुर्विमानेनगच्छतींद्रोदिवंप्रति ४० केचिदूचुःसमायांतिरंभाद्यप्सरसश्चखे ॥ केचि
न्मेघध्वनिंप्रोचुःकेचिदैरावतंत्विति ४१ केचित्प्रोचुःसमायातिसागरःकिलयंविना ॥ केचित्प्रोचुस्त्विदंज्ञेयंवायुपुत्रस्यशब्दितम् ४२ केचित्पतत्रिराजस्यशब्दितंप्रोचुरु
त्तमम् ॥ केचित्प्रोचुश्चगंधर्वाविमानस्थाअटंतिखे ४३ केचित्प्रोचुर्नागकन्याःकुर्वंतीदंसुगायनम् ॥ कुर्वंतश्चेतितर्कांश्चददृशुःपुष्पकंमहत् ४४ राममागतमाज्ञायतोष ॥ १० ॥
पूर्णावभूविरे ॥ उपायनानिसंगृह्यप्रेमनिर्भरमानसाः ४५ प्रत्युज्जग्मुस्तदारामंदृष्ट्वानत्वारघूत्तमम् ॥ मेनिरेजन्मसाफल्यंराघवेणातिमानिताः ४६ राघवोऽपिविमाना

ग्यादवरुद्याद्विजोत्तमान् ॥ प्रणिपत्यसमाभाष्यप्रतिपूज्यसविस्तरम् ४७ तैस्तीर्थवासिभिर्युक्तोययौपुष्करमुत्तमम् ॥ स्नात्वासचैलंविधिनातीर्थश्राद्धंविधायच ४८ द
त्वादानान्यनेकानिकाश्याःकोट्यधिकानितु ॥ द्रव्यालंकारवस्त्रान्नैस्तोषयामासभूसुरान् ४९ ततस्तैरभ्यनुज्ञातोविमानेनययौपुनः ॥ एवंपश्चिमयात्रातेवर्णितारा[घ]वस्य
हि ५० ॥ इतिश्रीमदानंदरामायणे यात्रा० पश्चिमयात्रावर्णनंनामाष्टमःसर्गः ॥८॥ श्रीरामदासउवाच ॥ उत्तराभिमुखोरामस्ततोपश्यन्स्थलानिसः ॥ ययौपर्वततीर्थंचततो
ज्वालामुखींययौ १ पश्यन्स्थलानिसंप्रापतस्मांश्रीमनकर्णिकाम् ॥ करतोयानदीतोयेस्नात्वाऽग्रेनययौविभुः २ तरणेदोषमाकर्ण्यपर्यवर्ततराघवः ॥ कर्मनाशानदीस्पर्शा
त्करतोयाविलंघनात् ३ गंडकीबाहुतरणाद्धर्मःस्खलतिकीर्तनात् ॥ गत्वादेवप्रयागंचालकनंदातटेनवै ४ नरनारायणौगत्वादर्शनान्मुक्तिदौनृणाम् ॥ बदरिकाश्रमेरामः
केदारेशंविलोक्यसः ५ हिमाद्रौदेवगंधर्वसेवितेधातुमंडले ॥ महापथंततोगत्वाययौतन्मानसंसरः ६ यस्माद्विनिर्गतागंगाशरयूःपापनाशिनी ॥ कंजानियत्रहैमानिय
त्रहंसाःसहस्रशः ७ रक्तनेत्रांघ्रिवदनामुक्ताभक्षणतत्पराः ॥ यत्प्रदेशेचित्रभूम्यांदेवगंधर्वकिन्नराः ८ अप्सरोभिस्तथास्त्रीभिःक्रीडांकुर्वंत्यहर्निशम् ॥ तत्रस्नात्वामानसेऽ
थगत्वाबिन्दुसरोवरम् ९ स्नात्वादानादिकंकृत्वाहिमालयागिरिस्थिताम् ॥ दृष्ट्वाब्रह्मसभांदिव्यांमेरुस्थसदृशींपराम् १० राघवःसीतयासर्वैरवरुह्यसपुष्पकात् ॥ प्रणमंतं
सुरेंद्राद्यैरालिंग्यचतुराननम् ११ ब्रह्मणासहितान्देवान्पूजयामासविस्तरैः ॥ विधिस्तंपूजयामासकामधेनुंन्यवेदयत् १२ विमानाग्रेकामधेनुंसंस्थाप्यरघुनंदनः ॥ सुरै
र्ब्रह्मादिभिःसाकंकैलासमगमत्तदा १३ राममागतमाज्ञायकैलासेगिरिजापतिः ॥ प्रत्युज्जगामपार्वत्यारामचंद्रंवृषस्थितः १४ शंभुमागतमाज्ञायराघवःपुष्पकाज्जवात् ॥
अवरुह्यनमस्कृत्यशिवेनालिंगितःस्थितः १५ उमाऽपिसीतामालिंग्यदिव्यालंकारचंदनैः ॥ पूजयामासवस्त्राद्यैःसूर्यकोटिसमप्रभैः ॥ ताटंकेनूपुरेदिव्येकेयूरेचूडकद्व
यम् १६ किंकिणीरवसंयुक्तरशनांचंद्रभास्करौ ॥ सीमंतभूषणोहारान्मणिमुक्ताविचित्रितान् १७ ददौजनकनंदिन्यैपार्वतीतोषपूरिता ॥ ततोशंभुस्तदाप्राहराघवंपू
ज्यवैभवैः १८ रामत्वन्नाभिकमलेब्रह्मायंचतुराननः ॥ ततोजातोविधेश्चाहंरोदनाद्रुद्रसंज्ञकः १९ पौत्रस्तवरघुश्रेष्ठतवाज्ञापरिपालकः ॥ संहारःक्रियतेरामआज्ञयातवसा
दरात् २० यदामयातुप्रलयेतदापापंकृतेगतम् ॥ यद्दशास्यवधाद्भीतस्तीर्थयात्रांकरोषिहि २१ क्रीडेयंतवराजेंद्रसुखंक्रीडस्वसीतया ॥ क्रियतेलोकशिक्षार्थंजानामितव
चेष्टितम् २२ एवंनानाविधैस्तस्यचारित्र्यैरीडयराघवम् ॥ ददौसिंहासनंछत्रंचामरेमंचकोत्तमम् २३ पानपात्रंभोजनस्यपात्रंहैमंमनोरमम् ॥ कंकणेकुण्डले
१७ बाहुभूषणेमुकुटोत्तमम् २४ रामंप्रस्थापयामासवध्वाचिन्तामणिंहृदि ॥ हृदिचिन्तामणिंदृष्ट्वाराघवस्यविदेहजा २५ माह्वातिलज्जितारामंगौर्मेचिंतामणिस्तव ॥
तथेतिराघवोप्युक्त्वाविमानेनजनैःसह २६ ययौनत्वाशंकरंहिकृत्वायज्ञार्थसूचनाम् ॥ आकारयित्वाऽथविधिंमासैकेनाध्वरायाहि २७ भागीरथ्यास्तटेनैवहरिद्वा
रंययौजवात् ॥ कुरुक्षेत्रंविगाह्याऽथहींद्रप्रस्थंततोययौ २८ दृष्ट्वामधुवनंरम्यंययौवृंदावनंततः ॥ गोकुलंवीक्ष्यरामस्तुगोवर्धनमगाच्छनैः २९ गत्वाऽथावंतिकां

१ धर्मःस्वमुखकीर्तनादितिपाठः । २ संसारइतिपाठः ।

पुण्यांक्षिप्रातीरविराजिताम् ॥ महाकालंनमस्कृत्यपश्यंस्तीर्थान्यनेकशः ३० इक्ष्वागजाव्हयंक्षेत्रंसागरंकूपमीक्ष्यच ॥ ययौसनैमिषारण्येगोमत्यांसविगाह्यच ३१ सूतं
पौराणिकंदृष्ट्वाशौनकादीन्प्रपूज्यच ॥ स्नात्वातद्ब्रह्मवैवर्तसरस्यऽथरघूत्तमः ३२ तमसांतांविगाह्याऽथददर्शनगरींनिजाम् ॥ राममागतमाज्ञायसुमंत्रोवेगवत्तरः ३३ अ
योध्यांभूषयामासप्रोच्चैर्नानाविधैर्ध्वजैः ॥ तोरणैश्चपताकाभिःपुष्पहारैर्मनोरमैः ३४ शोधयित्वाराजमार्गान्सेचयित्वातुचंदनैः ॥ विकीर्णकुसुमैर्दिव्यैर्बलिदीपैर्विराजि
तान् ३५ वारणेंद्रंपुरस्कृत्यसेनयापरिवेष्टितः ॥ प्रत्युज्जगामराजेंद्रंपुष्पकस्थंत्वरान्वितः ३६ दंडवत्प्रणिपत्याऽथदत्त्वाचोपायनानितम् ॥ आलिंगितोराघवेणमेनेचकृत
कृत्यताम् ३७ ततोवाद्यनिनादैश्चनर्तनैर्वारयोषिताम् ॥ वेदघोषैर्द्विजानांचरामतीर्थंययौशनैः ३८ स्नात्वातत्सरयूतोयेयत्रतीर्थंसुपुण्यदम् ॥ स्वयमेवकृतंपूर्वंनित्यक
र्मार्थमादरात् ३९ वसिष्ठोक्तविधानेनकृत्वाचैकसुपोषणम् ॥ दधिश्राद्धंविधायाऽथदत्त्वादानान्यनेकशः ४० तृतीयेदिवसेरामोविमानेनविहायसा ॥ पुर्य्याविलंघ्यप्रा
कारान्हेमरत्नविनिर्मितान् ४१ अयोध्यांशोभितांरम्यांगोपुराट्टालमंडिताम् ॥ वीथीहट्टसमायुक्तांचतुष्पथविराजिताम् ४२ पश्यन्स्वीयंराजसमाद्वारंप्रापरघूत्तमः ॥
यानंभूमंडलंप्राप्यसुखमासीस्स्थिरंतदा ४३ ततःसुमंत्रपत्नीभिर्दध्योदनविनिर्मिताः ॥ वलयःकांस्यपात्रस्थाजलतैलघटास्तथा ४४ सीताराघवयोर्देहादुत्तीर्यशतशस्त
दा ॥ नीत्वात्यक्ताविदूरेतुस्नात्वारामगृहंययुः ४५ ततोरामोविमानाग्र्यादवरुह्यसबंधुभिः ॥ नागरैस्तैर्नृपतिभिःसभायांसंविवेशह ४६ तस्थौसिंहासनेरामश्चितामणि
विराजितः ॥ तस्थुर्नृपाःसभायांश्रीराघवेणातिमानिताः ४७ सीताऽपिनिजगेहंसाविचित्ररत्ननिर्मितम् ॥ कामधेनुंपुरस्कृत्यप्रविवेशाऽतिहर्षिता ४८ ततोरामःका
मधेनुसंभूतैर्घृतपाचितैः ॥ परमान्नैःषड्रसैश्चभोजयामासभूसुरान् ४९ आचांडालांस्तर्पयित्वास्वयंकृत्वाऽशनंतदा ॥ निद्रार्थंनृपतीन्यानेस्थलमाज्ञापयत्तदा ५० पं
चरात्रंनृपान्प्रीत्यास्थापयित्वास्वसन्निधौ ॥ वस्त्रालंकारतुरगैस्तोषयित्वासविस्तरम् ५१ तान्प्रोवाचरमानाथःप्रबद्धकरसंपुटान् ॥ ममयज्ञाश्वतुरगंदृष्ट्वातत्पृष्ठगैःपुनः ॥
५२ आगंतव्यंजानपदैःस्वसैन्यैर्नागरैःसह ॥ इत्याज्ञांरघुवीरस्यह्यंगीकृत्यनृपोत्तमाः ५३ ययुःस्वंस्वंपुरंदेशंस्वबलैःपरिवेष्टिताः ॥ सुग्रीवाद्यान्वानरांश्चपरिवारसमन्वि
तान् ॥ आज्ञापयित्वासद्मानिस्थापयामासस्वांतिके ५४ वाजिमेधानंतरंहिप्रेषयिष्याम्यहंत्विति ॥ ततोदुंदुभिनिर्घोषंस्वपुर्यांघोषयत्तदा ५५ अद्यारभ्यजनैस्सर्वैरयो
ध्यानगरींस्थितैः ॥ यैःकैश्चिदत्रपथिकैर्भिन्नपाकैर्नभुज्यताम् ५६ यावत्करोम्यहंभूम्यांराज्यंसीतासमन्वितः ॥ निजगार्हस्थ्यमालंब्ययेवर्ततिनरोत्तमाः ५७ तेकुर्वंतुसु
खेपाकंस्वस्वगेहेषुभक्तितः ॥ निर्बंधोममनज्ञेयोवर्तितव्यंयथासुखम् ५८ इत्याज्ञाप्यजनान्रामःसुखंतस्थौससीतया ॥ अयोध्यायांतुसर्वत्रवेदघोषोगृहेगृहे ५९ मंगला
निसमुत्साहानर्तनंवारयोषिताम् ॥ बभूवुश्चपुराणानिकीर्तनानिहरेःकथाः ६० एवमासीत्तुसंतुष्टासाकेतनगरीशुभा ॥ एवंप्रोक्तंमयाशिष्ययात्राकाण्डमनुत्तमम् ६१
येशृण्वंतिनराभक्त्यातेषांयात्राफलंभवेत् ॥ यात्राधनार्जनोद्योगेयात्राकांडमिदंवरम् ६२ पठित्वायेतुगच्छंतिसुखेनायांतितेगृहम् ॥ ब्रह्महत्यादिपापानिकृतानिमान

१ वैवर्तेरम्येचैवेतिपाठः । २ जगन्नाथइतिपाठः ।

वेःसकृत ६३ यात्राकांडमिदंजप्त्वाशुद्धिस्तेभ्योभविष्यति ॥ सर्वतीर्थावगाहैश्वयत्फलंपरिकीर्तितम् ६४ यात्राकाण्डमिदंश्रुत्वातत्फलंप्रतिपद्यते ॥ धनार्थीधनमाप्नोतिकामीकामानवाप्नुयात् ६५ पापीपूतोभवेत्सद्योयात्राकाण्डश्रवादिना ॥ यःकश्चित्प्रातरुत्थायकृतशौचविधिर्नरः ६६ तीर्थानांचवरंकाण्डमिदंपुण्यंपठिष्यति ॥ तस्यरामश्चसंतुष्टःपूरयिष्यतिवांछितम् ६७ सर्वतीर्थावगाहस्यफलंतस्यभवेद्ध्रुवम् ॥ यानिकानिचपापानिजन्मांतरकृतानिच ६८ तानिसर्वाणिनश्यंति यात्राकाण्डश्रवादिना ६९ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये यात्राकाण्डे रामोत्तरयात्राचनगरप्रवेशोनाम नवमः सर्गः ॥ ९ ॥ ॥ यात्राकाण्डेचसर्गावैनवप्रोक्तामनीषिभिः ॥ पंचत्रिंशोत्तराःसप्तशतश्लोकाःप्रावहाः ॥ रामःप्रसन्नोस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

55

॥ इति श्रीमदानन्दरामायणे यात्राकाण्डं समाप्तम् ॥

॥ अथ श्रीमदानंदरामायणे यागकांडं प्रारभ्यते ॥

श्रीगणेशायनमः ॥ ॥ श्रीसीतारामचंद्राभ्यांनमः ॥ श्रीरामदासउवाच ॥ अथरामःसभामध्येएकदागुरुमब्रवीत ॥ कुंभोदरमुनेर्वाक्यात्तर्थियात्रामयाकृता १ इदा
नींतस्यवाक्येनवाजिमेधंकरोम्यहम् ॥ यज्ञोपकरणानित्वंलक्ष्मणायवदस्वहि २ सुमुहूर्तेशुभेलग्नेश्यामकर्णाग्निपुच्छकः ॥ तुरंगोदिव्यवस्त्राद्यैर्भूषयित्वाविमुच्यताम्
३ पृथ्वीप्रदक्षिणार्थंहितत्पृष्ठेऽयुतसंख्यया ॥ सेनयासहशत्रुघ्नःसुमंत्रेणसहाऽचिरात ४ तद्रामवचनंश्रुत्वावसिष्ठोमुनिसत्तमः ॥ ज्योतिर्वित्सहितोदद्यात्सुमुहूर्तंशुभोद
यम् ५ आज्ञापयत्ससौमित्रिंसभायांरामसन्निधौ ॥ सौमित्रेऽद्यदिनाज्ज्ञेयोमुहूर्तःसप्तमेऽहनि ६ दीक्षार्थंरामचंद्रस्यवाजिमेधाख्यकर्मणि ॥ रामतीर्थेयज्ञभूमिःशो
धनीयाहलादिभिः ७ सुवर्णनिर्मितैर्दिव्यैर्ब्राह्मणैःपहसत्वरम् ॥ दशक्रोशमिताऽयोध्याबहिःसर्वत्रलक्ष्मण ८ समाकर्करहीनातुलिप्ताचंदनजातिभिः ॥ मंडपश्चविधा
तव्यःसर्वत्राखंडितःशुभः ९ जंब्वाम्रादिनगानांचशाखाभिःकुसुमैरपि ॥ पल्लवैश्चविचित्रैश्चकदलीस्तंभमंडितः १० समन्ततस्तोरणानिबंधनीयानिमंडपे ॥ बंधनी
याःपुष्पहाराःफलाद्याविविधाःशुभाः ११ वेद्यःसहस्रशःकार्याःसुवयाचेष्टिकादिभिः ॥ करणीयंमहत्कुंडंमत्सान्निध्येनमृण्मयम् १२ कुंडोपरिमहत्कार्यंगोमुखंचमनो
रमम् ॥ खदिरस्यविचित्रंहिवसोर्धारार्थमुत्तमम् १३ सितरक्तासितैश्चैवनीलपीतादिभिःशुभैः ॥ नानादृषदचूर्णैश्चशुपधातुविनिर्मितैः १४ नानावर्णैर्विलेख्यानिस्व
स्तिकानिसमन्ततः ॥ कमलानिविचित्राणितथाह्यष्टदलानिच १५ शंखचक्रगदापद्मवल्लयश्चसहस्रशः ॥ कुसुमानिविकीर्याणियज्ञभूम्यांसमन्ततः १६ चतुर्विंश
च्छुभाःकार्यायज्ञस्तम्भामहोच्छ्रिताः ॥ विनिर्मिताःसुवर्णेनमुक्ताहारविगुंफिताः १७ चित्रितंसर्वतोभद्रंकुंडमध्येऽश्वैदैवतम् ॥ लेखनीयंतथाकुंडंनानावर्णैर्विचित्रितम्
१८ कार्यकार्याणिपात्राणियज्ञार्थंममपश्यतः ॥ हैमाःकिलोपकरणावरुणस्ययथाऽध्वरे १९ आसनानिऋषीणांचनिद्रार्थंचसहस्रशः ॥ वासोगेहानिकार्याणितृणैःप
र्णैश्चखर्परैः २० पाकशालाविधातव्याःकार्याशालाऽशनस्यच ॥ ऋषिशालाविधातव्याःस्त्रीशालाश्चशुभावहाः २१ यज्ञोपकरणानांचशालापरमसुंदरा ॥ सभाःका
र्यानृपाणांचवरवस्त्रैर्विचित्रिताः २२ आसनार्थंमहार्हाणिवस्त्राणिचसमंततः ॥ आस्तीर्याणितथाराजपृष्ठभागाश्रयाणिच २३ पक्षिपिच्छैःसुकार्पासभेदैःसम्पूरितानि
हि ॥ कशिपूपबर्हणानिविचित्राणिमहान्तिच २४ स्थापनीयानिसद्सिमहार्हाणितुलक्ष्मण ॥ स्थापनीयानिपानार्थपात्राणिविविधानिच २५ नानारसैःपूरितानि
तथापक्वफलादिभिः ॥ नानासुगंधद्रव्यैश्चरागैर्नानाविधैरपि २६ मद्यैर्विचित्रैर्मधुरैस्तथामादकवस्तुभिः ॥ नानासुगंधतैलैश्चकाचकुंभाःसहस्रशः २७ स्थापनीया
श्चन्दनैश्चसुगंधैरक्षतादिभिः ॥ नानोपस्करयुक्तानांतांबूलानांसहस्रशः २८ स्थापनीयानिपात्राणिचामराणिसहस्रशः ॥ व्यंजनानिविचित्राणितथाऽदर्शाविचित्रिताः
१८ २९ स्थापनीयाश्चक्रीडार्थंक्रीडोपकरणानिच ॥ स्थापनीयानिसदसिनृपाणांचित्रितानिच ३० मृत्पात्रसम्भवाःकार्याःशतशःपुष्पवाटिकाः ॥ जलयंत्राणिकार्याणिसर्व
त्रविविधानिच ३१ नानाचित्रविचित्राणांनयसांपंजराःशुभाः ॥ हेमरत्नमौक्तिकैश्चप्रवालैर्वसनैर्वरैः ३२ कमनीयाश्चभूषाभिस्तोयान्नाद्यैःप्रपूरिताः ॥ बंधनीयामंडपेषु

१ कुंभोद्भवेतिपाठः । २ पात्तुइतिपाठः । ३ सुधाम्रावेष्टकादीभिरितिपाठः । ४ श्वदैवतमितिपाठः ।

नर्तितव्योऽप्सरोगणः २३ धूपयंतुसुधूपाश्चसुगायंतुहिगायकाः ॥ वादनीयानिवाद्यानिबहूनिविविधानिच २४ पूजोपकरणाद्यैश्चपात्राणिपूरितानिहि ॥ पृथक्
पृथक्सभास्वेवस्थापनीयानिलक्ष्मण २५ तथाऋषिसभायांतुदर्भाश्चसमिधस्तथा ॥ दण्डाःकमण्डलुयुताःस्थापनीयाःसहस्रशः २६ बहिर्वासांश्चकौपीनान्वल्क
लान्यजिनानिच ॥ पूजाद्रव्याणिहव्यानिजलकुम्भाःसहस्रशः २७ शौचार्थंमृत्तिकाःशुद्धादंतकाष्ठानिपादुकाः ॥ गैरिकांमुखशुद्ध्यर्थंनानावस्तूनिकल्पय २८ तथा
नारीसभायांतुपूजापात्राण्यनेकशः ॥ सौभाग्यद्रव्यपूर्णानिसुगंधैःपूरितान्यपि २९ वायनानिविचित्राणिस्थापनीयानिलक्ष्मण ॥ कवर्यःकज्जलानांचपात्राणिकुंकुमा
निच ४० करंडस्थानिरम्याणिभूषणान्युज्ज्वलानिच ॥ हरिद्रादीनिवस्तूनिकंचुक्योवसनानिच ४१ स्थापनीयानिव्यजनचामरादीनिसादरम् ॥ सुहृदांलिखनीयानिप
त्राणिचसमंततः ४२ राममुद्रांकितान्यद्यतथादूतामहाजवाः ॥ जनकायप्रेषणीयाःकैकेय्यनृपसन्निधौ ४३ कौसल्यायाःसुमित्रायाःपितरौप्रतिलक्ष्मण ॥ श्यामांघ्रिःश्या
मकर्णश्चश्यामपुच्छःसितःशुभः ४४ महार्हाभरणैर्वस्त्रैर्दिव्यवीरासनेनच ॥ शोभनीयश्चामराद्यैर्मुक्ताहारैर्मनोरमैः ४५ हैमीभिःशृंखलाभिश्चवेणीबंधविभूषणैः ॥
तस्यभालेहेमपत्रेलेखनीयंस्फुटाक्षरैः ४६ कोसलेन्द्रस्यरामस्ययज्ञांगतुरगोह्ययम् ॥ ज्ञेयःसर्वैर्नृपैर्मुक्तःकर्तुंभूम्याःप्रदक्षिणाम् ४७ यस्यास्तिसारंतेनाश्वोबं
धनीयोऽयमुत्तमः ॥ नोचेत्तकोशांश्चनैजान्हिपुरस्कृत्यबलैःसह ४८ स्वकुटुंबैर्नागरैश्चतथाजानपदैःसह ॥ आगंतव्यंनृपतिभिर्यज्ञांगाश्वानुवर्तिभिः ४९ यज्ञभू
मिरयोध्यायांयुद्धैर्जित्वामहोद्धतान् ॥ एवंपत्रंबंधयित्वामुक्तामणिविचित्रितैः ५० अवतंसैःशोभयित्वासिद्धःकार्यश्चमंडपे ॥ सिद्धःकार्यःसशत्रुघ्नःसैन्येनपरिवेष्टितः
५१ रथारूढोऽश्वरक्षार्थंसुमंत्रेणसमन्वितः ॥ नानापुण्यनदीनांचजलकुंभान्सहस्रशः ५२ नानादेशान्मृदश्चापिशत्रुघ्नेनानयस्वहि ॥ शोभनीयापुरीरम्यापता
काध्वजतोरणैः ५३ देवालयेसुधादेयातथाप्रासादमस्तके ॥ देवालयाभ्यंतरेऽप्यचित्रशालामनोरमाः ५४ लेखनीयाविधातव्यारत्नदीपाःसदैवहि ॥ पूजोपकर
णादीनिप्रतिदेवालयेष्वपि ५५ स्थापयस्वसमस्तानिवाद्यान्याज्ञापयस्वभोः ॥ राजमार्गाःशोधनीयाःसेचनीयाश्चचंदनैः ५६ सौधराजिषुसर्वत्रचित्राणिविविधानिच ॥
लेखनीयानिरम्याणिमुक्ताहाराःसमंततः ५७ प्रवालमणिवैडूर्यकाश्मीरस्फटिकादिभिः ॥ नानाविधाश्चकुसुमैर्हाराःपक्वफलादिभिः ५८ बंधनीयाश्चसर्वत्रजालरं
ध्रैर्विशेषतः ॥ एवंयद्यन्मयाप्रोक्तंतत्कुरुष्वाविचारतः ५९ तद्गुरोर्वचनंश्रुत्वातथेत्युक्त्वासलक्ष्मणः ॥ कारयामासतत्सर्वंगुरोर्वाक्याच्छताधिकम् ६० ॥ ॥ इति
श्रीशतकोटिरामायणांतर्गतश्रीमदानंदरामायणे वाल्मीकीये यागकांडे यागोपकरणनिवेदनंनामप्रथमःसर्गः ॥ १ ॥ ॥ श्रीरामदासउवाच ॥ ॥ अथरामः ॥ १ ॥
ससीतस्तुमुहूर्तेसप्तमेऽहनि ॥ नवनीतोद्वर्तनाद्यैःस्नात्वाकृत्वांजनादिकम् १ तूर्यनादैर्द्विजानांचवेदघोषैर्विशेषतः ॥ पौरस्त्रीणांगायनैश्चपौराणांचजयस्वनैः २
आगत्यमंडपेरम्येतस्थौचित्रासनोपरि ॥ ददौकौशेयवस्त्राणिगुरुंरामस्त्वरुन्धतीम् ३ पौरांश्चपौरपत्नीश्चमातृश्चाऽथसुवासिनीः ॥ श्वश्रूश्चापिद्विजान्सर्वान्जन

१ गैरिकाम्यासशुद्धचर्थमितिपाठः ।

केसुहृदस्तथा ४ बंधूंश्चबंधुपत्नीश्चवयस्यांश्चततःपरम् ॥ मंत्रिणश्चाऽथवीरांश्चदासदासीजनांस्तथा ५ नटनाटकवंद्यादीन्वारस्त्रीश्चततःपरम् ॥ आचांडा
लादिकान्दत्वाततःसीतांददौवरम् ६ हेमतन्तुसमुद्भूतंमुक्तामाणिक्यगुंफितम् ॥ रत्नकाश्मीरनीलाद्यैर्मध्येमध्येविचित्रितम् ७ मुक्ताप्रवालघोषाद्यैर्मणिभिःस
वेतोवृतम् ॥ आदर्शविम्बसदृशंविद्युत्तेजोपमंमहत् ८ ततःस्वयंरामचंद्रःपीतकौशेयमुत्तमम् ॥ हेमतंत्वंकितंनानावल्लीपुष्पविचित्रितम् ९ दधारान्यदुत्तरीयंवासोलंका
रमंडितः ॥ व्यंजिताशेषगात्रश्रीर्मणिद्वयविराजितः १० केयूरकुण्डलैर्मुक्ताहारैश्चकटकैर्युतः ॥ ततोवसिष्ठवर्यस्तंमुक्तानांस्वस्तिकोपरि ११ निवेश्यराघवंसीतामाहू
यवङ्कोर्निजेः ॥ निवेश्यरामवामांगेमुनिभिःपरिवेष्टितः १२ रामेणकारयामासविघ्नेशादिप्रपूजनम् ॥ पुण्याहादित्रयंचाऽपिददौदीक्षांततस्तयोः १३ ध्वजारोपविधाने
नस्थापयित्वाध्वजोत्तमान् ॥ रामेणवरयामासगुरुःषोडशऋत्विजः १४ वसिष्ठस्तत्रसंजातोऽध्वर्युःसकलकर्मवित् ॥ ब्रह्माऽभूच्चस्वयंब्रह्माहोतागाधिसुतोह्यभूत् १५ उ
द्गाताऽभूच्छतानंदोगुरुर्योजनकस्यच ॥ यमोबभूवशमिताकश्यपाद्यामुनीश्वराः १६ वृणितावाजिमेधेहिराघवेणमहात्मना ॥ ऋत्विजःषोडशशुभास्तथाऽन्येसर्वकर्म
सु १७ पृथक्पृथक्संवृणीताःशतशस्तेमुनीश्वराः ॥ कुंडेऽग्निस्थापनंकृत्वापात्राण्यासाद्यविस्तरात् १८ श्यामकर्णंपूजयित्वामोचयामासभूतले ॥ सव्यांप्रदक्षिणांक
र्तुंतस्यसंरक्षणायहि १९ रथारूढंसुमंत्रेणसैन्येनायुतसंख्यया ॥ शत्रुघ्नंप्रेषयित्वाऽथतूष्णींतस्थौद्विजैर्गुरुः २० यज्ञवाटेमुनिगणाऽऽपूरितेसरयूतटे [1]॥ रामोपिसी
तयातूष्णींतस्थौशृण्वन्कथाःशुभाः २१ कृष्णाजिनधरोदांतोकुशपाणिःकृतोचितः ॥ कोटिसूर्यप्रतीकाशस्तस्थौसगुरुसन्निधौ २२ तद्दीक्षायांप्रवृत्तायांभ्रातरःपुष्कर
स्रजः ॥ स्नाताःसुवाससःसर्वेरेजिरेसुष्ठ्वलंकृताः २३ तन्महिष्यश्चमुदितानिष्ककंठ्यःसुवाससः ॥ दीक्षाशालामुपाजग्मुश्चालिप्तावस्तुपाणयः २४ तदानिनेदुर्वाद्यानिन
नृतुर्वारयोषितः ॥ एतस्मिन्नन्तरेतत्रसमायातामुनीश्वराः २५ दिनेदिनेऽश्वमेधस्यवार्तांश्रुत्वासहस्रशः ॥ कश्यपोत्रिर्भरद्वाजोविश्वामित्रोऽथगौतमः २६ मार्कंडेयोमृ
कण्डश्चच्यवनोमुद्गलोऽसितः ॥ जामदग्न्योदेवलश्चव्यासोनारायणःक्रतुः २७ विभांडकोनारदश्चतुम्बुरुर्गालवोमुनिः ॥ शिवदासोभानुदासोहरिदासोमहातपाः २८
शिववर्मारुद्रवर्माशिवशर्मामुनीश्वरः ॥ एकशृंगश्चतुःशृंगःसप्तशृङ्गस्त्रिशृङ्गकः २९ तिलमांडोभृगुश्चैवभार्गवोवाक्पतिस्तथा ॥ धौम्यःकण्वश्चैकपादस्त्रिपादश्चोर्ध्वबाहुकः
३० ऊर्ध्वपादश्चोर्ध्वनेत्रश्चोर्ध्वास्यस्त्रिशिरास्तथा ॥ वृद्धगौतमनामाऽथपर्णादश्चंद्रसंज्ञकः ३१ ऋष्यशृंगोमतंगोथजाबालिःकुंभसंभवः ॥ दधीचिःशौनकःसूतःसुतीक्ष्णो
लोमशस्तथा ३२ वाल्मीकिश्चाऽपिदुर्वासामुनिर्वेदनिधिर्महान् ॥ एतेचान्येचमुनयःस्त्रीशिष्यतनयादिभिः ३३ केचित्पर्णाशनाःकेचिद्वायुभक्षास्तथाऽपरे ॥ कुशाग्र
जलपानाश्चकेचित्त्यक्ताशनास्तथा ३४ भिक्षाशनास्तथाकेचित्परदत्ताशनाःपरे ॥ अयाञ्चाव्रतिनःकेचित्त्यक्तसंभाषणाःपरे ३५ केचिद्वल्कलसंवीताःकेचित्काषाय
वस्त्रिणः ॥ मृगचर्मधराःकेचित्केचिदाकाशवस्त्रिणः ३६ वृक्षपल्लववस्त्राश्चकेचित्पंचाग्निसाधकाः ॥ धूम्रपानव्रताःकेचित्केचित्त्यक्तेषणाःपरे ३७ एवंनानावनाराम

१ मश्रिताशेषगात्रश्रीरितिपाठः । २ व्रताराम इतिपाठः ।

गिरिदुर्गाश्रमादिषु ॥ वासिनस्तेसमायाताःसदाराश्चसबालकाः ३८ सशिष्यारामचंद्रस्यद्रष्टुंयज्ञोत्सवंवरम् ॥ दशादिग्भ्योमुनिश्रेष्ठाःकोटिशश्चदिनेदिने ३९ तान्सर्वा
न्रामचंद्रोपिप्रत्युत्थानासनादिभिः ॥ मधुपर्कादिपूजाभिस्तोषयामाससादरम् ४० यज्ञवाटेमहारम्येकामधेनुंरघूत्तमः ॥ पूजयामासविधिवद्वस्त्रैराभरणैरपि ४१ सुव
र्णशृंगभूषाभिःकिंकिणीनूपुरादिभिः ॥ एवंतांशोभयित्वाऽथप्रार्थयामासराघवः ४२ धेनोसागरसंभूतेत्वमन्नानिद्विजादिकान् ॥ दातुमर्हस्यध्वरेमेप्रसीदजगदंबिके ४३
एवंसंप्रार्थ्यतांकामधेनुंरामःप्रणम्यच ॥ बबन्धपाकशालायांपट्टकूलासनोपरि ४४ अथसासुरभिस्तुष्टाषड्रसान्नानिसादरात् ॥ ददौजनकनन्दिन्यैसदैवाऽध्वरकर्मणि ४५
नाग्निकार्यंचतत्रासीत्पाकशालासुवैकदा ॥ इच्छाशनैःसदातुष्टावभूवुर्मुनिसत्तमाः ४६ यान्यान्कामान्रामचंद्रश्चिंतयामासचेतसि ॥ तांस्तानुभौमणीशीघ्रंकल्पयामा
सतुर्मखे ४७ तथासीताऽपियान्कामांश्चिंतयामासचेतसि ॥ कामधेनुर्ददौतांस्ताञ्छीघ्रंत्रैलोक्यदुर्लभान् ४८ सर्वत्रयज्ञवाटेहिद्विजाद्यैश्चसमंततः ॥ पंक्तिषुभूमिजा
दीनांपरिवेषणकर्मणि ४९ स्त्रीणांकंकणनादश्चशुश्रुवेनूपुरध्वनिः ॥ अथरामश्चसौमित्रिंसमाहूयेदमब्रवीत् ५० सीमाचारान्समाहूयममवाक्याच्चसादरम् ॥ आज्ञापयस्व
शीघ्रंत्वंशासनंयन्मयोच्यते ५१ ब्रह्मचारीगृहस्थोवावानप्रस्थाश्रमीयतिः ॥ यःकश्चिद्वासमायातिपथिकःसममाज्ञया ५२ निवारणीयोयुष्माभिर्नकदाप्यऽध्वरेमम ॥
ममाज्ञांनप्रतीक्षध्वंकोपःकार्योनकस्यचित् ५३ इतिरामवचःश्रुत्वातथेत्युक्त्वासलक्ष्मणः ॥ सीमाचारान्समाहूयराघवोक्तंन्यवेदयत् ५४ ततोरामःपुनःप्राहसमाहूयाऽथ
लक्ष्मणम् ॥ ब्रह्मचारीगृहस्थोवावानप्रस्थाश्रमीयतिः ५५ मुनीनांदयिताबालाःशिष्याःसम्बन्धिनस्तथा ॥ पौराजानपदस्थास्तुतेषांसम्बन्धिनःस्त्रियः ५६ दासीदा
सजनाःसर्वेयद्यद्वांछंतिलक्ष्मण ॥ मामपृष्ट्वातुतत्तेषांदातव्यंह्यविचारितम् ५७ अन्त्यजावापिसर्वान्हितोषयध्वंनिरंतरम् ॥ नकेषामभिलाषाश्चविफलाहिविधीयताम् ५८
अयोध्यांकामधेनुंचजानकींकौस्तुभंमणिम् ॥ चिंतामणिंपुष्पकंचराज्यंकोशादिकंचमे ५९ एतेष्वपिचयोयद्वैयाचयिष्यतितत्त्वया ॥ नदत्तंचेतिवैश्रुत्वाममाऽतोषोभ
वेत्त्वयि ६० अतोज्ञात्वाभयंमत्तोददस्वह्यविचारतः ॥ यान्वाभंगःकृतश्चेद्विमच्छिरोहाभविष्यसि ६१ सदास्मरगिरंमेत्वमिमांलक्ष्मणसादरम् ॥ इतिरामकृतांशिक्षांमं
गीकृत्यसलक्ष्मणः ६२ तथाचकारतत्सर्वंयथारामेणशिक्षितम् ६३ ॥ इतिश्रीशतकोटिरामचरितान्तर्गतश्रीमदानन्दरामायणेवाल्मीकीयेयागकाण्डेलक्ष्मणाज्ञाकरणंना
म द्वितीयःसर्गः ॥२॥ श्रीरामदासउवाच ॥ अथमुक्तस्तदावाजीराघवेणमहात्मना ॥ यज्ञांगःशामकर्णःसपूर्वदेशंययौजवात् १ शत्रुघ्नेनचसैन्येनप्राप्तोभागीरथीतटम् ॥
एतस्मिन्नन्तरेरामःस्वप्रतापंप्रदर्शयन् २ चकारकौतुकंतत्रशत्रुघ्नस्यपुरोऽभवत् ॥ ब्रह्मावर्तंमहादेशंत्यक्त्वागंगातटंप्रति ३ यावत्प्राप्तःश्यामकर्णस्तावदासीद्धनैर्विना ॥
गंगायांचमहापूरोयत्रनौकाऽपिकुंठिता ४ शत्रुघ्नेनाऽपितंदृष्ट्वाकुंठितांगतिमीक्ष्यच ॥ कालातिक्रमभीत्यासनिजाचित्तेन्यचिंतयत् ५ आदावेवाऽत्रमेविघ्नमुत्पन्नंगमनेमह
त् ॥ ग्रासेप्राथमिकेयद्वन्मक्षिकापतनंतथा ६ तर्हीऽदानींरामचंद्रप्रतापेनास्तुमेगतिः ॥ निश्चित्येत्थंसशत्रुघ्नोरथस्थोजान्हवीतटे ७ स्थित्वाप्रोवाचगंगांतांप्रतिपूज्यस

१ चिंतामणिकौस्तुभौ । २ चदाद्भुतमितिपाठः ।

विस्तराम् ॥ शृण्वत्सुसर्वलोकेषुमुनिदेवगणेषुच ८ देविगंगेमहापुण्येयदिसत्यंरघूत्तमे ॥ दीयतांतर्हिपंथामेशीघ्रंसैन्ययुतस्यच ९ इतिशत्रुघ्नवचनंश्रुत्वासाजाह्नवीतथा॥
स्ववेगंखंडयामासस्वोदरंतंप्रदर्शयत् १० पद्भिर्वाजीतदाशीघ्रंपरंतीरंययौक्षणात् ॥ तथासैन्येनशत्रुघ्नःससुमंत्रःसमाययौ ११ मागधाख्यंमहादेशंसएवकीकटःस्मृतः ॥
पूर्ववच्चमहापूरोजाह्नव्यांसंबभूवह १२ प्रतापंरामचंद्रस्यसर्वेदृष्ट्वामहाद्भुतम् ॥ चक्रुस्तेजयशब्दांश्चसीतारामाख्ययामुहुः १३ श्यामकर्णस्ततःशीघ्रंययौपूर्वदिशंप्रति ॥
मागधेशोनृपश्चाथश्रुत्वातुरगमागतम् १४ प्रत्युज्जगामसैन्येनपुरस्कृत्वाऽथवारणम् ॥ निनायाश्वंपठित्वातद्भालपत्रंपुरंनिजम् १५ पूज्यादरात्ससैन्यंतंशत्रुघ्नंविभवैर्नि
जैः ॥ समस्तंनिजकोशादिसंमर्प्यमगधाधिपः १६ पौरान्जानपदान्स्वस्त्रीःसुहृत्तनयमंत्रिणः ॥ पौरपत्नीर्जानपदपत्नीर्विप्रान्पुरोधसम् १७ प्रेषयामाससाकेते
वाहनैरध्वरंप्रति ॥ स्वयंसैन्येनतुरगचरणाननुलक्ष्यच १८ शत्रुघ्नवागनुवर्तीबद्धहस्तपुटोययौ ॥ एवंसर्वेऽपिराजानोज्ञातव्याःसर्वदिक्स्थिताः १९ नकेनाऽपि
श्यामकर्णोबद्धोनृपतिनाभुवि ॥ इंद्राद्यैर्निर्जरैर्नोपिनासुराद्यैःकदाचन २० ततोवाजीपूर्वदेशानंगवंगकलिंगकान् ॥ तथानानाविधान्देशान्विलंघ्यजलधेस्तटम् २१
दृष्ट्वानृपकुलैर्युक्तोदक्षिणाभिमुखोययौ ॥ गोदावरींनदींतीर्त्वादेशमांध्रंचद्राविडम् २२ अतिक्रम्यारवाराख्यदेशंसमतिक्रम्यच ॥ कांचीप्रदेशान्सकलान्पश्यन्नानाविधा
60 ञ्छुभान् २३ कावेरींसमतिक्रम्यचोलदेशंविलंघ्यच ॥ सेतुबंधंततोदृष्ट्वापश्चिमाभिमुखोययौ २४ ताम्रपर्णीविलंघ्याथसमतिक्रम्यकेरलान् ॥ द्विषट्प्रकारान्देशां
श्चगोकर्णंचततोययौ २५ कृष्णातीरप्रदेशांश्चसमतिक्रम्यघोटकः ॥ कर्णाटकंमहादेशंसमतिक्रम्यसत्वरम् २६ कौंकणंसमतिक्रम्यतत्तद्देशनृपैःसह ॥ भीमाप्रदेशान्
सकलान्श्यामकर्णःशुभावहः २७ पश्यन्ययौमहाराष्ट्रान्गौतमींतांविलंघ्यच ॥ विदर्भंसमतिक्रम्यययावाभीरमंडलम् २८ मालवंसमतिक्रम्यतीर्त्वापुण्यांमहा
नदीम् ॥ तीर्त्वासाभ्रमतींपुण्यांसमतिक्रम्यगुर्जरम् २९ प्रभासंचततोगत्वाययावानर्तमुत्तमम् ॥ सौवीरान्समतिक्रम्यययौवाजीसमाधुरान् ॥ सौराष्ट्रान्समति
क्रम्यमरुदेशंययौहयः ३० धन्वदेशमतिक्रम्यययौसारस्वतानथ ॥ मत्स्यान्देशानतिक्रम्यययौवाजीसमाठरान् ३१ शूरसेनानतिक्रम्यपांचालांस्तुरगोययौ ॥ कुरु
क्षेत्रंततोगत्वाऽतिक्रम्यकुरुजांगलान् ३२ देशंकैकेयमुल्लंघ्यययौकाश्मीरमुत्तमम् ॥ भिल्लदेशंगौडदेशंशकदेशंययौहयः ३३ यवनांस्ताम्रदेशांश्चसमतिक्रम्यवेगतः ॥
पश्यन्नानाविधान्देशान्करतोयातटेमवै ३४ ययौवाजीवायुगत्याशीघ्रंज्वालामुखींप्रति ॥ दोषभीत्याकरतोयांतीर्त्वानैवाऽग्रतोगतः ३५ कर्मनाशानदीस्पर्शात्
करतोयाविलंघनात् ॥ गंडकीबाहुतरणाद्धर्मःस्खलतिकीर्तनात् ३६ हरिद्वारंययौवाजीततोगंगातटेनहि ॥ हिमाद्रेःसन्निधान्देशान्समतिक्रम्यवेगतः ३७ बद्रि
काश्रममालोक्यकलापग्रामवासिभिः ॥ संमानितस्तदावाजीगत्वातन्मामसंसरः ३८ दृष्ट्वाहरिहरक्षेत्रंमिथिलांप्रापसेनया ॥ नानादेशानतिक्रम्यब्रह्मावर्तंययौहयः
३९ दृष्ट्वाकाशींत्रिवेणींचह्यंतर्वेदींययौजवात् ॥ शृंगवेरपुरंगत्वातमसांतांविलंघ्यच ४० गत्वासनैमिषारण्यंसमुल्लंघ्याऽथगोमतीम् ॥ ब्रह्मावर्तसरोगत्वापश्यन्देशान्मनो

१ शत्रुघ्नापदवोनृपःइतिपाठः । २ वायुसःइतिपाठः ।

रमान् ४१ कोशलाख्यंमहादेशंदृष्ट्वावाजीमनोरमम् ॥ ततःसाकेतविषयेषण्मासैःप्रापचाध्वरम् ४२ नानादेशनृपैःसार्धंशत्रुघ्नेनाऽभिरक्षितः ॥ आगतंश्यामकर्णंतंज्ञा
त्वासीतापतिस्तदा ४३ आज्ञापयच्चसौमित्रिंसोऽपिप्रत्युज्जगामतम् ॥ वारणेंद्रंपुरस्कृत्यभेरीदुंदुभिनिःस्वनैः ४४ वारस्त्रीणांनृत्यगीतैर्वेदघोषैर्द्विजेरितैः ॥ संपूज्या
श्वश्यामकर्णंनृपतींश्चसविस्तरम् ४५ आनयामाससौमित्रिःशनैरध्वरमंडपम् ॥ महोत्सवोमहानासीत्तदातुरगदर्शने ४६ दशयोजनपर्यंतंसर्वत्रजगतीतलम् ॥ व्याप्तंसमं
ततोऽयोध्याबहिर्नृपगणैस्तदा ४७ तत्रसर्वत्रराजानःपूर्वसंप्रेषिताञ्जनान् ॥ पौरान्जानपदान्स्त्रीश्चपश्यंतोभ्रमरोपमाः ४८ सैन्येनबभ्रमुःसर्वेस्वीयदर्शनलालसाः ॥
नप्रापुर्दर्शनंतेषांजनौघेऽध्वरमंडपे ४९ केचित्तेदर्शनंस्वानांप्रापुस्तत्रपरेऽहनि ॥ केचित्तृतीयदिवसेपंचमेसप्तमेऽथवा ५० केचिद्दुंदुभिघोषेणप्रापुःस्वानांप्रदर्शनम् ॥
केचित्पक्षानंतरंहिमासेनानंतरंजनाः ५१ केषांवियोगएवासीच्चिरकालंतदाऽध्वरे ॥ तज्ज्ञात्वारामचंद्रोऽपिलक्ष्मणंप्राहसादरम् ५२ परस्परंवियोगोऽत्रसंमर्देनतुलक्ष्मण ॥
जायतेतत्रयुक्तिंत्वंमत्तःश्रुत्वाकुरुष्वताम् ५३ तमसायास्तटेशालांकृत्वाऽन्यमहतींशुभाम् ॥ घोषणीयश्चसर्वत्रमहादुंदुभिनिःस्वनः ५४ येषांवियोगस्तैर्गत्वातमसातटशोभि
ताम् ॥ शालांप्रवेशयध्वंहिस्वानांयोगोऽस्तुतत्रहि ५५ चतुष्पदादिवस्तूनिज्ञात्वाऽन्यस्यलघून्यपि ॥ तत्रैवस्थापनीयानिस्वंस्वंप्राप्स्यंतुतेजनाः ५६ इतिरामवचः
श्रुत्वातथेत्युक्त्वासलक्ष्मणः ॥ तथाचकारतत्सर्वंयेनयोगःपरस्परम् ५७ सर्वेतत्रजनाःप्रापुःस्वानांस्त्रीबालमंत्रिणाम् ॥ चतुष्पदादिवस्तूनांतत्रलाभोबभूवह ५८ य
त्किंचिद्विस्मृतंतेनतद्दृष्ट्वाऽन्येनवैतदा ॥ शालायांस्थापितंदृष्ट्वास्वीयंजग्राहतत्रसः ५९ एवंश्रीरामयज्ञेहिसंमर्दःसंबभूवह ॥ नतत्रशुश्रुवेशब्दःकर्णेऽप्युक्तोजनैःस्तदा ६०
ततस्तेपार्थिवाःसर्वेतस्थुर्वसनसद्मसु ६१ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये यागकांडे अश्वागमनंनामतृतीयःसर्गः ॥ ३ ॥ ॥
॥ श्रीरामदासउवाच ॥ ॥ अथतेऋत्विजःसर्वेमंगलैर्विविधैःशुभैः ॥ सम्यक्प्रवर्तयामासुर्वाजिमेधंयथाविधि १ तत्रर्त्विजोवाजिमेधेरत्नकौशेयवाससः ॥ ससदस्या
विरेजुस्तेयथावृत्रहणोऽध्वरे २ एतस्मिन्नंतरेतत्रसुरेशसहितैःसुरैः ॥ स्वामिनाविघ्नराजेनपार्वत्यावृषभस्थितः ३ महेश्वरोयज्ञवाटंरामाहूतोययौगणैः ॥ शिवमागतमा
ज्ञायप्रत्युद्गम्याऽथलक्ष्मणः ४ वारणेंद्रंपुरस्कृत्यपताकाध्वजतोरणैः ॥ नानावाद्यसुघोषैश्चवारस्त्रीणांप्रनर्तनैः ५ संपूज्यशंकरंभक्त्याचानयामासमंडपम् ॥ पंचसप्तप
दान्यग्रेगत्वारामोऽपिशंकरम् ६ नमस्कृत्यसमालिंग्यविश्वेशंगिरिजायुतम् ॥ हैमासनेसन्निवेश्यहेमपात्रेस्वहस्ततः ७ पादप्रक्षालनंशंभोश्चकारसीतयाप्रभुः ॥ हेमनि
र्मितझर्झर्यामणिरत्नादिचित्रया ८ जलधारांयथायोग्यांमोचयामासजानकी ॥ ततस्तेराघवंसीतांदृष्ट्वादेवगणास्तदा ९ अनिमेषाःकंजनेत्रकटाक्षाःसन्निरीक्ष्यहि ॥ तयो
श्चित्रोपमाआसन्नविदुःकेवयंत्विति १० तुष्टुवुस्तत्रकेचित्तेसुराःश्रीराघवंमुदा ॥ जानकींतुष्टुवुःकेचित्प्रबद्धकरसम्पुटाः ११ एवंनिर्जरसंघानांसंतोषस्तत्रवैह्यभूत ॥ अ
नुपम्यंतयोर्दृष्ट्वारूपंकोटिरविप्रभम् १२ अथरामःसीतयाहिशंकरंगिरिजामपि ॥ स्वयंसंपूज्यसकलान्देवान्सौमित्रिणाऽर्षीन् १३ पूजयित्वाऽब्रवीद्वाक्यंशंक

१ क्रमादितिपाठः।

रंलोकशंकरम् ॥ अद्यधन्योऽस्म्यहंदेवदर्शनात्तवसीतया १४ अद्यमेसूर्यवंशेऽस्मिन्जन्मसाफल्यतांगतम् ॥ इतिरामस्यवचनंश्रुत्वासशशिभूषणः १५ विहस्यराघवंप्रा
हवेधिमायांहरेतव ॥ त्वन्नाभिकमलेब्रह्माजातस्तस्मान्मुनीश्वराः १६ मरीच्याद्याःसम्बभूवुःपौत्राःसप्तमहौजसः ॥ मरीचेःकश्यपःपुत्रःसृष्ट्युत्पत्तिविधायकः १७ कश्य
पात्सविताजज्ञेपौत्रपौत्रस्तवप्रभो ॥ रवेर्जातःसूर्यवंशस्तद्वंशेतवजन्मवै १८ त्वद्वंशसंभवःसूर्यःकिंमांमोहयसिप्रभो ॥ देवानांकार्यसिद्ध्यर्थमवतीर्णोऽसिमायया १९ कुरु
क्रीडांयथेच्छंत्वंयात्रायज्ञादिकौतुकैः ॥ शिक्षांकरोषिलोकानविद्म्यहंचेष्टितंतव २० इतिश्रुत्वाशंभुवाक्यंसीतारामौविहस्यच ॥ यज्ञकुंडसमीपेतुतस्थतुर्गुरुसंनि
धौ २१ एतस्मिन्नंतरेतत्रसमाजग्मुःसहस्रशः ॥ गंधर्वाःकिन्नराःसिद्धास्तथाचाप्सरसांगणाः २२ लोकपालाश्चदिक्पालारसातलनिवासिनः ॥ नवग्रहाःऋतवःषष्टिसं
वत्सरास्तथा २३ ऋक्षाणितिथयोयोगाःकरणानिचराशयः ॥ पर्वतास्तरवःसर्वेसागराश्चनदाअपि २४ सरोवराणिनद्यश्चवाप्यःकूपास्तथापरे ॥ धृत्वाजंगमरूपाणि
ययुस्तेयज्ञमंडपम् २५ समागतश्चसंपातिर्गुहकोमकरध्वजः ॥ समाययौसलंकायाराक्षसैश्चविभीषणः २६ मानिताराघवेणाऽपिसर्वेतस्थुःप्रपूजिताः ॥ स्वान्तिकेस्था
पिताःपूर्वंतत्रैवासन्प्लवंगमाः २७ एतस्मिन्नंतरेतत्रसमायातोमुनीश्वरः ॥ कुंभोदरोमहातेजाःसीमाचारैर्विलोकितः २८ तंदृष्ट्वाभयभीतास्तेसर्वेप्रोचुःपरस्परम् ॥ हा
कष्टंपुनरायातःसोऽयंकुंभोदरोमुनि २९ यात्राश्रमोराघवाययनिमित्तोबभूवह ॥ यद्वाक्यादश्वमेधोऽपिसर्वेषांसंबभूवह ३० महानश्रमोऽश्वपृष्ठेतुभ्रमतांजगतीतले ॥ अ
धुनाऽपिसमायातःकिमग्रेवैपुनस्त्वयम् ३१ करिष्यतिनतद्विद्मोराघवस्याऽपिनिंदकः ॥ एवंनानाविधावाचःसीमाचारमणेरिताः ३२ शृण्वन्कुंभोदरस्तूष्णींययौयज्ञभु
वंप्रति ॥ तदागमनपूर्वंससीमाचारैर्निवेदितः ३३ धावद्भिर्वेपमानैश्चस्खलद्भिस्त्वरान्वितैः ॥ रामराममहाबाहोहेलक्ष्मणशृणुप्रभो ३४ यात्रायज्ञश्चयद्वाक्यात्समायातःस
वैपुनः ॥ कुंभोदरोमुनिश्रेष्ठोरामत्वय्यऽपिनिष्ठुरः ३५ तद्दूतवचनंश्रुत्वासर्वेतद्दर्शनोत्सुकाः ॥ त्यक्त्वास्वीयानिकर्माणिचोत्तस्थुस्तद्दिदृक्षया ३६ ऋत्विजोराघवःसीता
नभयंमेनिरेमुनेः ॥ कुंभोदरोयज्ञवाटंययौसर्वैर्विलोकितः ३७ अतिखर्वःस्थूलशिराःश्यामकर्णःसपादुकः ॥ स्थूलोदरोपिंगनेत्रःसकौपीनोजटाधरः ३८ चीरवासाःखर्व
पादःखर्वहस्तोमहामुनिः ॥ युवाकिंचित्श्मश्रुयुक्तोधृतदंडकमंडलुः ३९ तंदृष्ट्वासकलालोकाभयंप्रापुःस्वचेतसि ॥ पूर्वकर्मचसंस्मृत्यसंश्रुत्यचपरस्परम् ४० एतस्मि
न्नन्तरेरामःशीघ्रंप्रत्युज्जगामतम् ॥ साष्टांगंप्रणिपत्याऽथकरेधृत्वाद्युमंडपम् ४१ आनयामासश्रीरामोददौहैमासनंवरम् ॥ कुंभोदरोमुनिःशीघ्रंभूमौदंडकमंडलू ४२ स्था
पयामासचीराणिननामरघुनायकम् ॥ रामःशीघ्रंकराभ्यांतंप्रत्युत्थाप्यमुनीश्वरम् ४३ गाढमालिंग्यबाहुभ्यांततोमुनिमभाषत ॥ नाऽहंयोग्योवंदनार्थंत्वयारावणघात
१९ कः ४४ इतिरामवचोरूपैर्बाणैःसंताडितोहृदि ॥ कुंभोदरस्तदोवाचयज्ञवाटेरघूत्तमम् ४५ रामराममहाबाहोनकोपःक्रियतांमयि ॥ अपराध्यस्म्यहंतेहिक्षमस्वरघु
नायक ४६ नमयास्वार्थसिद्ध्यर्थंदोषारोपःकृतस्त्वयि ॥ कृतःपरोपकारार्थंतथाकीर्त्यैतवापिच ४७ शिक्षार्थंसकलाँल्लोकान्तज्ज्ञातंचत्वयापिहि ॥ यथैतेमुनयः

१ नोभवःइतिपाठः।

सर्वेतवसत्रेन्ननिर्मिते ४८ शतशोभोजनंचकुस्तथाभुक्तंमयाऽपिच ॥ तदाकुतोमहत्कीर्तिस्तवमेरघुनंदन ४९ इतिनिश्चित्यहृदयेमयापूर्वंहितायहि ॥ लोकानांचक्ट
तोयत्नस्त्वयिदोषानुकीर्तनैः ५० नोचेद्यात्रासमुद्योगःकथंरामभवेत्तव ॥ यत्रयत्रचदेशेपुतीर्थेषूपवनेषुच ५१ आश्रमारामग्रामेषुनदीवनगिरीषुच ॥ येयेजनाश्चसर्व
त्रनानाकर्मसुतत्पराः ५२ तवदर्शनलाभस्तुतेषांजातःसुखप्रदः ॥ तत्राऽहंकारणंमन्येचात्मानंरघुनंदन ५३ ममाऽयमुपकारस्तुजनैःसर्वत्रकीर्त्यते ॥ कुंभोदरप्रसा
देननःसीतारामदर्शनम् ५४ जातंविषयलुब्धानामितिमेकृतकृत्यता ॥ जातासमंततःकीर्तिस्त्वयिदोषानुकीर्तनात् ५५ तवापिकीर्तिःसर्वत्रजाताऽत्ररघुनंदन ॥ रामे
श्वराश्चसर्वत्ररामतीर्थान्यनेकशः[१] ५६ यावद्भूम्यांप्रगीयेततावत्कीर्तिस्तवाऽपिच ॥ अन्यच्चलोकशिक्षापिजातामद्वाक्यकारणात् ५७ कुंभोदरेणमुनिनाराघवस्यम
हात्मनः ॥ दोषारोपःकृतःपूर्वंकथंनोनभविष्यति ५८ स्वदोषपरिहारार्थंराघवेणमहात्मना ॥ तीर्थयात्राकृतापूर्वमस्माकंकाकथापुनः ५९ इतिस्मृत्वाभयंचित्ते
सर्वत्रजगतीतले ॥ करिष्यंतिजनायात्रांस्वदोषक्षालनायहि ६० त्वयिब्रह्मणिपूर्णेचदोषारोपःकथंभवेत् ॥ पद्मपत्रेजलस्पर्शोनघटेतयथातथा ६१ यस्यभ्रूभंगमात्रे
णब्रह्मांडप्रलयोभवेत् ॥ ब्रह्मांडांतर्गतान्जीवान्हरसित्वंयदामुहुः ६२ तदादोषानुरोपस्तेकिंघटेतजनार्दन ॥ सर्वेषांचक्षयोमृत्युर्विंदघातितवाज्ञया ६३ तत्रसंख्याऽत्र
काकार्यात्वयादोषःकृतस्त्विति ॥ यथाचित्राणिकुड्येहिलिखितानिसहस्रशः ६४ संमार्जितानितेनैवतत्रदोषोभवेत्कथम् ॥ तथात्वमपिश्रीरामात्रिधाभूत्वात्रिभिर्गु
णैः ६५ सृष्टिंकरोषिरजसासत्त्वरूपेणपालनम् ॥ तमोरूपेणसंहारंविधिविष्णुशिवात्मकः ६६ अस्माभिस्तवतोषार्थंतीर्थयात्राविधीयते ॥ तवतीर्थस्तुकिंरामतीर्थभूत
गुणस्यच ६७ सर्वतीर्थेषुमुख्यायाकीर्त्यतेस्वर्धुनीभुवि ॥ तवदक्षिणपादस्यांगुष्ठाग्रात्जनितातुसा ६८ तवांघ्रिरजसःस्पर्शात्पवित्राकीर्तिताभुवि ॥ तवपादरजोमिश्राद्द
श्यतेऽद्याऽपिसासिता ६९ रजांस्यद्यापिदृश्यंतेतवभागीरथीजले ॥ इतिनानाविधैर्वाक्यैस्तोषयामासराघवम् ७० अष्टोत्तरशतंश्रीमद्रामरामस्तवेनच ॥ स्तुत्वारामं
राघवेणपूजितःस्थितवान्मुनिः ७१ रामोऽपिगुरुसान्निध्येतस्थौसीतासमन्वितः ॥ निजासनेषुसर्वत्रतस्थुस्तेसकलाजनाः ७२ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्री
मदानंदरामायणे वाल्मीकीये यागकांडेकुंभोदरदर्शनंनामचतुर्थःसर्गः ॥ ४ ॥ ॥ श्रीविष्णुदासउवाच ॥ गुरोतेप्रष्टुमिच्छामितत्त्वंवदसविस्तरम् ॥ कुंभोदरेणमुनिना
यत्स्तोत्रंसमुदीरितम् १ अष्टोत्तरशतंनाम्नांराघवस्यशुभप्रदम् ॥ श्रवणेतस्यमेप्रीतिर्जाताऽस्तिकथयस्वतत् २ ॥ श्रीरामदासउवाच ॥ शृणुशिष्यमहाबुद्धेसम्यक्पृष्टंत्वयाम
म ॥ अष्टोत्तरशतंनाम्नांराघवस्यवदाम्यहम् ३ सर्वेश्वरःसर्वमयःसर्वभूतोपकारकः ॥ सर्वेषामुपकारार्थंयःसाकारोनिराकृतिः ४ संभवत्येवलोकेस्मिन्संसारभयनाशनः ॥
यदायदाहिलोकानांभयमुत्पद्यतेतदा ५ अवतीर्याकरोच्छ्रीमान्दुष्टदैत्यविमर्दनम् ॥ मत्स्यकूर्मवराहादिरूपेणपरमार्थदृक् ६ तत्कालेषुचसर्वेषुसर्वेषामुपकारकृत् ॥ सा
धूनांसमचित्तानांभक्तानांभक्तवत्सलः ७ उपकर्तुंनिराकारःसदाकारेणजायते ॥ अजोऽयंजायतेऽनंतोविश्वतोभूतभावनः ८ तदातदावतरतिभक्तानामनुकंपया ॥ क्षी

१ गुणैःस्वयमितिपाठः ।

राघवौदेवदेवेशोलक्ष्मीनारायणोविभुः ९ अशेषैःशंखचक्राभ्यां देवैर्ब्रह्मादिभिःसह ॥ शेषोऽभूल्लक्ष्मणोलक्ष्मीर्जानकीशंखचक्रके १० जातौभरतशत्रुघ्नौदेवाःसर्वेऽपिवानराः॥
आसन्पुरैवसर्वेऽपिदेवानांभयशांतये ११ तत्रनारायणोदेवःश्रीरामइतिविश्रुतः ॥ सर्वलोकोपकारायभूमौस्वयमवातरत् १२ ध्यानमात्रेणदेवेशोमहापातकनाशकृत् ॥
कीर्तनश्रवणाभ्यांचहत्याकोटिनिवारणः १३ कलौसंकीर्तनेनैवसर्वपापंव्यपोहति ॥ रामरामेतिरामेतियेवदंत्यतिपापिनः १४ पापकोटिसहस्रेभ्यस्तानुद्धरतिनान्यथा ॥
अष्टोत्तरशतंनाम्नांतस्यस्तोत्रंवदाम्यहम् १५ अस्यश्रीरामचंद्रनामाष्टोत्तरशतमंत्रस्य ब्रह्माऋषिः ॥ अनुष्टुप्छंदः ॥ जानकीवल्लभःश्रीरामचंद्रोदेवता ॥ ॐबीजम् ॥
नमःशक्तिः ॥ श्रीरामचंद्रइतिकीलकम् ॥ श्रीरामचंद्रप्रीत्यर्थेजपेविनियोगः ॥ ॐनमोभगवतेराजाधिराजायपरमात्मनेहृदयायनमः ॥ ॐनमोभगवतेविद्याधिराजाय
हयग्रीवायशिरसेस्वाहा ॥ ॐनमोभगवतेजानकीवल्लभायनमःशिखायैवषट् ॥ ॐनमोभगवतेरघुनंदनायामिततेजसेकवचायहुम् ॥ ॐनमोभगवतेक्षीराब्धिमध्यस्थाय
नारायणायनेत्रत्रयायवौषट् ॥ ॐनमोभगवतेसत्प्रकाशायरामायअस्त्रायफट् ॥ इतिषडंगन्यासः ॥ एवंअंगुलिन्यासःकार्यः ॥ अथध्यानम् ॥ मंदाराकृतिपुण्यधामवि
लसद्वक्षःस्थलंकोमलंशांतंकांतमहेंद्रनीलरुचिराभासंसहस्राननम् ॥ वंदेऽहंरघुनंदनंसुरपतिंकोदंडदीक्षागुरुंरामंसर्वजगत्सुसेवितपदंसीतामनोवल्लभम् १६ सहस्रशीर्ष्णेवै
तुभ्यंसहस्राक्षायतेनमः ॥ नमःसहस्रहस्तायसहस्रचरणायच १७ नमोजीमूतवर्णायनमस्तेविश्वतोमुख ॥ अच्युतायनमस्तुभ्यंनमस्तेशेषशायिने १८ नमोहिरण्यग
र्भायपंचभूतात्मनेनमः ॥ नमोमूलप्रकृतयेदेवानांहितकारिणे १९ नमस्तेसर्वलोकेशसर्वदुःखनिषूदन ॥ शंखचक्रगदापद्मजटामुकुटधारिणे २० नमोगर्भायतत्वायज्यो
तिषांज्योतिषेनमः ॥ ॐनमोवासुदेवायनमोदशरथात्मज २१ नमोनमस्तेराजेंद्रसर्वसंपत्प्रदायच ॥ नमःकारुण्यरूपायकैकेयीप्रियकारिणे २२ नमोदांतायशांतायवि
62 श्वामित्रप्रियायते ॥ यज्ञेशायनमस्तुभ्यंनमस्तेक्रतुपालक २३ नमोनमःकेशवायनमोनाथायशार्ङ्गिणे ॥ नमस्तेरामचंद्रायनमोनारायणायच २४ नमस्तेरामचंद्राय
माधवायनमोनमः ॥ गोविंदायनमस्तुभ्यंनमस्तेपरमात्मने २५ नमोविष्णुस्वरूपायरघुनाथायतेनमः ॥ नमस्तेऽनाथनाथायनमस्तेमधुसूदन २६ त्रिविक्रमनमस्तेऽ
स्तुसीतायाःपतयेनमः ॥ वामनायनमस्तुभ्यंनमस्तेराघवायच २७ नमोनमःश्रीधरायजानकीवल्लभायच ॥ नमस्तेऽस्तुहृषीकेशकंदर्पायनमोनमः २८ नमस्तेपद्मनाभा
यकौसल्याहर्षकारिणे ॥ नमोराजीवनयननमस्तेलक्ष्मणाग्रज २९ नमोनमस्तेकाकुत्स्थनमोदामोदरायच ॥ विभीषणपरित्रातर्नमःसंकर्षणायच ३० वासुदेवनमस्तेस्तुनम
स्तेशंकरप्रिय ॥ प्रद्युम्नायनमस्तुभ्यमनिरुद्धायतेनमः ३१ सदसद्भक्तिरूपायनमस्तेपुरुषोत्तम ॥ अधोक्षजनमस्तेऽस्तुसप्ततालहरायच ३२ खरदूषणसंहर्त्रेश्रीनृसिंहायतेनमः ॥
अच्युतायनमस्तुभ्यंनमस्तेसेतुबंधक ३३ जनार्दननमस्तेस्तुनमोहनुमदाश्रय ॥ उपेंद्रचंद्रवंद्यायमारीचमथनायच ३४ नमोवालिप्रहरणनमःसुग्रीवराज्यद ॥ जामदग्न्य
महादर्पहरायहरयेनमः ३५ नमोनमस्तेकृष्णायनमस्तेभरताग्रज ॥ नमस्तेपितृभक्तायनमःशत्रुघ्नपूर्वज ३६ अयोध्याधिपतेतुभ्यंनमःशत्रुघ्नसेवित ॥ नमोनित्यायसत्यायबुध्या
दिज्ञानरूपिणे ३७ अद्वैतब्रह्मरूपायज्ञानगम्यायतेनमः ॥ नमःपूर्णायरम्यायमाधवायचिदात्मने ३८ अयोध्येशायश्रेष्ठायचिन्मात्रायपरात्मने ॥ नमोऽहल्योद्धारणाय

नमस्तेचापभंगिने ३९ सीतारामायसेव्यायस्तुत्यायपरमेष्ठिने ॥ नमस्तेबाणहस्तायनमःकोदण्डधारिणे ४० नमःकबंधहंत्रेचवालिहंत्रेनमोस्तुते ॥ नमस्तेऽस्तुदश
 ग्रीवप्राणसंहारकारिणे ४१ ॥ १०८ अष्टोत्तरशतंनाम्नांरामचंद्रस्यपावनम् ॥ एतत्प्रोक्तंमयाश्रेष्ठंसर्वपातकनाशनम् ४२ प्रचरिष्यतितल्लोकेप्राग्दृष्टवशाद्द्विज ॥ त
स्यकीर्तनमात्रेणजनायास्यंतिसद्गतिम् ४३ तावद्विजृंभतेपापंब्रह्महत्यापुरःसरम् ॥ यावन्नामाष्टकशतंपुरुषोनहिकीर्तयेत् ४४ तावत्कलेर्महोत्साहोनिःशंकंसंप्रवर्तते ॥ 
यावच्छ्रीरामचंद्रस्यशतनाम्नांनकीर्तनम् ४५ तावद्यमभटाःक्रूराःसंचरिष्यंतिनिर्भयाः ॥ यावच्छ्रीरामचंद्रस्यशतनाम्नांनकीर्तनम् ४६ तावत्स्वरूपंरामस्यदुर्बोधंप्रा
णिनांस्फुटम् ॥ यावन्ननिष्ठयारामनाममाहात्म्यमुत्तमम् ४७ कीर्तितंपठितंचित्तेधृतंसंस्मारितंमुदा ॥ अन्यतःशृणुयान्मर्त्यःसोऽपिमुच्येतपातकात् ४८ ब्रह्महत्यादिपा
पानांनिष्कृतिंयदिवांछति ॥ रामस्तोत्रंमासमेकंपठित्वामुच्यतेनरः ४९ दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवम् ॥ पापंसकृत्कीर्तनेनरामस्तोत्रंविनाशयेत् ५० श्रुति
स्मृतिपुराणेतिहासागमशतानिच ॥ अर्हंतिनाऽल्पांश्रीरामनामकीर्तिकलामपि ५१ अष्टोत्तरशतंनाम्नांसीतारामस्यपावनम् ॥ अस्यसंकीर्तनादेवसर्वान्कामाँल्लभे
न्नरः ५२ पुत्रार्थीलभतेपुत्रान्धनार्थीधनमाप्नुयात् ॥ स्त्रियंलभतिपत्न्यर्थीस्तोत्रपाठश्रवादिना ५३ कुंभोदरेणमुनिनायेनस्तोत्रेणराघवः ॥ स्तुतःपूर्वयज्ञवाटेतदेतत्त्वां
मयोदितम् ५४ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये यागकाण्डे श्रीरामनामाष्टोत्तरशतस्तोत्रं नाम पंचमःसर्गः ॥ ५ ॥ ॥
॥ श्रीरामदासउवाच ॥ ॥ अथकुंभोदरेदिव्येआसनोपरिसंस्थिते ॥ यज्ञस्तंभेश्यामकर्णंबबंधुस्तेहिऋत्विजः १ तस्यांगानिसमस्तानिपृथक्मंत्रैर्यथाविधि ॥ संमं
त्र्याऽपिशमित्रातंनिहन्युर्द्विजपुंगव २ तन्मांसखंडैराज्याक्तैर्होमंचक्रुःसविस्तरम् ॥ तथानानाविधैर्द्रव्यैःसक्तुपायसगोघृतैः ३ मध्वाक्ततिलदूर्वाद्यैःसमिधाभिश्चसाद
रम् ॥ गोघृतेनवसोर्धारांवन्हौस्थूलामखंडिताम् ४ गोमुखेनोर्ध्वबद्धेनदद्युर्मंत्रैःसविस्तरम् ॥ चिरकालंहोमकुंडेयावद्यज्ञसमापनम् ५ तदाधूमचयैर्व्याप्तमाकाशंचसमं
ततः॥ नाऽद्यापिदृश्यतेशुभ्रंनीलवर्णंप्रदृश्यते ६ चैत्रमासेमहापुण्येवसंततौसुखावहे ॥ एवंप्रवर्तयामासुर्वाजिमेधंमुनीश्वराः ७ ईजतुर्यज्ञविधिनाह्यग्निहोत्रादिलक्षणैः॥
प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ८ प्रत्यहंप्रातरुत्थायरामचंद्रःससीतया ॥ नत्वाशंभुंविधिंदेवान्मुनींश्चाऽपिपृथक्पृथक् ९ कौसल्यादीश्चमातृश्चकामधेनुंहृदिस्थि
तम् ॥ चिंतामणिंकौस्तुभंचकंठेबद्धंरविप्रभम् १० पुष्पकंयज्ञवाटस्थदेवतायज्ञपूरुषम् ॥ ततोगत्वारामतीर्थेस्नात्वारामोयथाविधि ११ कृत्वानित्यविधिंसर्वंपूजयामा
सशंकरम् ॥ उपहारान्समर्प्याऽथकामधेनुसमुद्भवान् १२ समानीतान्रत्नपात्रैःसीतयारघुनंदनः ॥ ततःसंपूज्यतांधेनुंविधिंपूज्यसविस्तरम् १३ ऋत्विग्जनंतुसंपू
ज्यतस्थौसगुरुसन्निधौ ॥ प्रभातेऋत्विजःसर्वेतथादेवामुनीश्वराः १४ स्नात्वानित्यंविधिंकृत्वातस्थुर्यज्ञस्यमंडपे ॥ रामाज्ञयाऽथसौमित्रिस्तेषांपूजांचकारसः १५ 
दिव्यैर्नानोपहाराद्यैःकामधेनुसमुद्भवैः ॥ ततश्चकारसौमित्रिर्नृपादीनांप्रपूजनम् १६ वस्त्राभरणैर्दिव्यैःपक्वान्नैर्विविधैरपि ॥ तथासीताज्ञयाक्षोणीमूर्मिलालक्ष्मणप्रिया
१७ मांडवीश्रुतकीर्तिश्चसर्वाश्चक्रुःप्रपूजनम् ॥ अथतेऋत्विजश्चक्रुःस्वाहाकारैर्यथाविधि १८ होमंनानाविधैर्द्रव्यैःसुगंधैर्यज्ञमंडपे ॥ पुरोडाशान्वरान्दिव्यानश्नरा

मोपिसीतया १९ वाजिमेधेराघवस्यसाक्षाद्देवाःस्वयंमुदा ॥ हवींषिभक्षयामासुस्त्यक्तमात्राणिपावके २० अस्तुश्रौषडितिप्रोचुर्वाद्यघोषःसमेघवत् ॥ श्रूयतेयज्ञशा
लासुसर्वत्रर्त्विजकीर्तितः २१ मध्येकुंडंमहारम्यंव्याप्तंसृत्विग्जनैःशुभम् ॥ ततोमुनीश्वराःसर्वेततोदेवाःसमंततः २२ ततःसर्वाःस्त्रियःश्रेष्ठास्ततोविद्याधराःस्थिताः ॥ त
तोयक्षाश्चगंधर्वाःकिन्नराःप्लवगोत्तमाः २३ ततस्तेक्षत्रियाःसर्वेततस्तेषांतुसेवकाः ॥ ततःस्थितावारनार्यस्ततोमागधबंदिनः २४ ददृशुःसंस्थितायज्ञमंडपेयज्ञकौतु
कम् ॥ मध्यान्हावधिहुत्वातेऋत्विजश्चसविस्तरम् २५ ततोमाध्यान्हिकंकर्तुंययुस्तांसरयूनदीम् ॥ कृत्वामाध्यान्हिकंकर्मगत्वातुयज्ञमंडपे २६ हेमासनेतुसर्वत्रनोमिरे
खोपमेस्थिताः ॥ देवाश्चाऽपीश्वराद्यास्तेतस्थुर्दिव्यासनोपरि २७ लक्ष्मणस्तानप्रपूज्याऽथभरतेनसशत्रुहा ॥ संस्थाप्यहेमपात्राणिसर्वेषांपुरतस्तदा २८ जानकीत्व
रयामासपरिवेषणकर्मणि ॥ अथसीतोर्मिलारम्यातथासामांडवीशुभा २९ श्रुतकीर्तिर्मंत्रिपत्न्यःसुहृत्पन्यःसहस्रशः ॥ परिवेषणकर्माणिचक्रुस्तायज्ञमंडपे ३० नानावि
धैर्वरान्नैश्चकामधेनुसमुद्भवैः ॥ मुनीश्वरादिकाःसर्वेतोषमापुस्तदाऽध्वरे ३१ सीतादीनांहिनारीणांतदायज्ञस्यमंडपे ॥ नूपुराणांकिंकिणीनांशुश्रुवेसर्वतोध्वनिः ३२ यथे
च्छंभुंजतांसर्वेयाच्यतांयद्धृदिस्थितम् ॥ माशंकाभोजनेकार्यात्यक्तव्यंयन्नरोचते ३३ आयाचितानिदेयानिपक्वान्नानियथारुचि ॥ अखंडिताऽज्यधाराऽत्रकार्याराघवशा
सनात् ३४ गृह्यतांकिंचिद्बुस्तेनेतिनेतिद्विजाःपुनः ॥ इतिभोजनकालेवैशुश्रुवेसर्वतोध्वनिः ३५ किंचिदपेक्षितंस्वाभिन्निंतिरामेणप्रार्थिताः ॥ चक्रुस्तेभोजनंसर्वेवी
जिताव्यजनादिभिः ३६ जलैरुष्णोदकैश्चक्रुःकरशुद्धिंमुनीश्वराः ॥ ततोगृहीततांबूलामुनयस्तेतुनिर्जराः ३७ गृहीत्वाहेममुद्रांहिराघवेणपृथक्पृथक् ॥ समर्पितांदक्षि
63 णार्थंजग्मुर्वासस्थलानिहि ३८ ततःपूर्वोपचाराद्यैःकथितैरेवपार्थिवाः ॥ चक्रुस्तेभोजनंसर्वेचक्रुर्वैश्यास्ततःपरम् ३९ स्त्रीणांभोजनशालासुपूर्वंभुक्त्वाऽमरस्त्रियः ॥ संहि
तामुनिपत्नीभिस्ततस्ताःक्षत्रियास्त्रियः ४० चक्रुर्वैभोजनंसर्वाःसीतयाप्रार्थितामुहुः ॥ ततोवैश्यस्त्रियश्चक्रुःपौरनार्यस्ततःपरम् ४१ ततःशूद्रस्त्रियश्चाऽपिमुदाचक्रु
श्चभोजनम् ॥ शालासुपुरुषाणांचततोवानरराक्षसाः ४२ ऋक्षाःपौराजानपदाश्चक्रुर्भोजनमुत्तमम् ॥ ततःशूद्रादयःसर्वेततःपार्थिवसेवकाः ४३ नकश्चित्क्षुधि
तस्तत्रनासीत्कस्यानिषेधनम् ॥ ततोरामःसुहृन्मित्रैर्बंधुभिःसचिवादिभिः ४४ चकारभोजनंस्वस्थःसीतयाप्रार्थितोमुहुः ॥ यावंतोभूमिकणिकायावंतस्तोयबिंदवः
४५ यावंत्युडूनिगगनेतावंतोराघवाध्वरे ॥ प्रत्यहंभोजनंचक्रुर्विप्राद्यास्तत्स्त्रियोऽपिच ४६ श्वश्रूभिर्मंत्रिपत्नीभिस्तथादेवरपत्निभिः ॥ चकारभोजनंसीतादिव्या
न्नैःस्वस्थमानसा ४७ ततश्चतुर्थप्रहरेसभांकृत्वातुमंडपे ॥ कथाभिःकीर्तनैर्गीतैःशास्त्रवादैःसुपुण्यदैः ४८ वारस्त्रीणांनृत्यगीतैर्निन्येरामोदिनक्षयम् ॥ ततःसंध्या
दिकंकृत्वापुनर्हुत्वायथाविधि ४९ पूर्वोक्तैस्तुकथाद्यैश्चनिशायाःप्रहरद्वयम् ॥ समतिक्रम्यनिद्रार्थंसर्वानाज्ञापयत्तदा ५० गत्वास्वस्वस्वस्थलंसर्वेनिद्रांचक्रुर्यथासुखम् ॥
पट्टकूलासनेभूम्यांसीतयासजितेंद्रियः ५१ चकारनिद्रांश्रीरामोहृदिचिंत्येष्टदेवताः ॥ आज्ञाभंगोनरेंद्राणांविप्राणांमानखंडनम् ५२ पृथक्शय्याचनारीणामशस्त्रवधउ

१ सर्वांइतिपाठः ।

च्यते ॥ अतःससीतयायुक्तश्चकारशयनंप्रभुः ९३ एवमासीत्प्रत्यहंवैदिनचर्याऽध्वरेप्रभोः ९४ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वाल्मी
कीयेयागकांडेयज्ञारंभरामदिनचर्यावर्णनंनामषष्ठःसर्गः ॥ ६ ॥ ॥ श्रीरामदासउवाच ॥ सौत्येऽह्न्यवनीपालोयाजकान्सदसस्पतीन् ॥ अपूजयन्महाभागान्य
थावस्तुसमाहितः १ अथचैत्रेसितेपक्षेराजानःप्रतिपत्तिथौ ॥ ध्वजानारोपयामासुर्विधिनाऽध्वरमंडपे २ ॥ विष्णुदासउवाच ॥ आरोपिताध्वजाःप्रोक्ताःपार्थिवैर्यज्ञमंड
पे ॥ गुरोतेषांविधानंमांसम्यग्वकुंत्वमर्हसि ३ ॥ श्रीरामदासउवाच ॥ सम्यक्प्रश्नःकृतःशिष्यत्वयालोकोपकारकः ॥ सावधानमनाभूत्वाशृणुष्वत्वंमयोच्यते ४ सां
वत्सरंव्रतंचेदंनृपैर्दृष्टासमागतम् ॥ आरोपिताध्वजाःसर्वैर्यज्ञवाटेतदामुदा ५ नोचेद्विष्णुगृहेष्वेवारोपणीयाध्वजान्त्रिभिः ॥ प्रत्यब्दंमधुशुक्लायांपुण्यायांप्रतिपत्तिथौ ६
अथवारोपणीयास्तेश्रीरामनवमीदिने ॥ मधुशुक्लदशम्यांवादशम्यामाश्विनेसिते ७ अथवोर्जप्रतिपदिशुक्लपक्षेपिभोद्विज ॥ एतेकालामयाप्रोक्तावतस्यास्यतवाग्रतः
८ अधुनासंप्रवक्ष्यामिध्वजारोपणसंज्ञितम् ॥ व्रतंपापहरंपुण्यंरामसंतोषकारकम् ९ यःकुर्याद्विष्णुभवनेध्वजारोपणमुत्तमम् ॥ संपूज्यतेविरिंचाद्यैःकिमन्यैर्बहुभाषितैः
१० हेममारसहस्रंतुयोदद्याच्चकुटुंबिने ॥ तत्फलंसमवाप्नोतिध्वजारोपणकर्मणः ११ ध्वजारोपणतुल्यंस्यान्नगंगास्नानमुत्तमम् ॥ अथवातुलसीसेवाशिवलिंगप्रपूजनम्
१२ अहोपूर्वमहोपूर्वमहोपूर्वमहत्तरम् ॥ सर्वपापहरंकर्मध्वजारोपणसंज्ञितम् १३ यानिसर्वाणिवक्ष्यामिशृणुत्वंगदतोमम १४ अथचैत्रेसितेपक्षेव्रतंहिप्रतिपत्तिथौ ॥ मधुशु
क्लदशम्यांवानवम्यांराघवस्यवा १५ कार्यंवाऽश्विनमासस्यदशम्यांशुक्लपक्षके ॥ ऊर्जेशुक्लप्रतिपदिदशम्यांवाविधीयताम् १६ अवश्यंचैत्रमासेहिकार्यंचैतद्व्रतोत्तमम् ॥
अतिक्रांतेचैत्रमासेकार्यंचेतरपर्वसु १७ चैत्रशुक्लप्रतिपदिप्रभातेप्रयतोनरः ॥ स्नानंकुर्यात्प्रयत्नेनदंतधावनपूर्वकम् १८ ततःकृत्वानित्यकर्मपश्चाद्विष्णुंसमर्चयेत् ॥
चतुर्भिर्ब्राह्मणैःसार्द्धंकृत्वाचस्वस्तिवाचनम् १९ नांदीश्राद्धंप्रकुर्वीतध्वजारोपणकर्मणि ॥ ध्वजस्तंभौचगायत्र्याप्रोक्षयेद्वस्त्रसंयुतौ २० पताकयोर्लेखनीयौवैनतेयांज
निसुतौ ॥ सूर्यंचंद्रंमारुतिंचवैनतेयंप्रपूजयेत् २१ धातारंचविधातारंपूजयेत्कुंभकद्वये ॥ हरिद्राऽक्षतदूर्वाद्यैःशुक्लपुष्पैर्विशेषतः २२ ततोगोचर्ममात्रंतुस्थंडिलंचोप
लिप्यतु ॥ आधायाग्निंस्वगृह्योक्त्याघृतभागादिकंक्रमात् २३ जुहुयात्पायसेनैवघृतेनाष्टोत्तरंशतम् ॥ प्रथमंपौरुषंसूक्तंविष्णोर्नुकेनमंत्रतः २४ ततश्चवैनतेयायस्वाहेत्य
ष्टाहुतीस्तथा ॥ तथैवमारुतेरष्टाहुतीःस्वाहेतिहोमयेत् २५ सोमोधेनुंसमुच्चार्यंजुहुयात्प्रयतस्तदा ॥ सौरान्मंत्रान्जपेत्तत्रशांतिसूक्तानिभक्तितः २६ रात्रौजागरणं
कुर्यादुपकंठंहरेःशुचिः ॥ एवंनवदिनंकार्यंपूजनंपरमोत्सवैः २७ नवरात्रंजागरणंकुर्यान्नित्यंसुकीर्तनैः ॥ ततोदशम्यामुषसिसमुत्थायव्रतीशुचिः २८ प्रातःस्नात्वानि
त्यकर्मसमाप्याऽथततःपरम् ॥ गंधपुष्पादिभिर्देवानर्चयेत्पूर्ववत्क्रमात् २९ ततोमंगलवाद्यैश्चशुक्लपीठैश्चशोभनैः ॥ नृत्यैश्चस्तोत्रपठनैर्नयेद्विष्ण्वालयंध्वजम् ३० देव
स्यद्वारदेशेवाशिखरेवामुदान्वितः ॥ सुस्थिरंस्थापयेच्छिष्यध्वजस्तंभंसुशोभितम् ३१ गंधपुष्पाक्षतैर्दीपैर्दिव्यधूपैर्मनोरमैः ॥ भक्ष्यभोज्यादिसंयुक्तैर्नैवेद्यैश्चहरिंयजेत्

१ वितानान्यज्ञमंडपेइतिपाठः । २ त्वछमानंस्यादितिपाठः । ३ विष्णोर्नुकमिरावतिइतिपाठः । ४ नयेद्देवालयमितिपाठः ।

३२ आप्रतिपदमारभ्यदशम्यवधिसद्मनि ॥ ध्वजयोःपूजनंकृत्वैकादश्यांहरिसद्मनि ३३ आरोपणीयौशिखरेपुरतोवायथासुखम् ॥ अथवारोपणीयौहिदशम्यांतौ
ध्वजोत्तमौ ३४ नवम्यांवाद्वितीयायांचतुर्थ्यामष्टमीदिने ॥ षष्ठ्यांवारोपणीयौतौपूर्वंपूज्ययथाविधि ३५ व्रतस्यप्रतिपद्येवप्रारंभोनेतरेदिने ॥ पूर्वोक्तेषुहरेःकार्यौ
नमासेष्वितरेषुच ३६ माघासितचतुर्दश्यामेवंशंभोर्गृहेध्वजौ ॥ नंदीभृंग्यंकितौकृत्वारोपणीयौयथाविधि ३७ आश्विनस्यसिताष्टम्यांमश्चोर्वागिरिजागृहे ॥ नभस्य
स्यचतुर्थ्यांहिप्रोक्तौगणपसद्गृहे ३८ मार्गशीर्षेशुक्लषष्ठ्यामेवंमार्तंडसद्गृहे ॥ एवंहिसर्वदेवानामुत्साहदिवसेष्वपि ३९ मधूर्जाश्विनमासेषुविनाविष्णोर्ध्वजेतरे ॥ एवंदेवा
लयेस्थाप्यशोभनौतौध्वजोत्तमौ ४० संपूज्यविष्णुंविधिवद्वित्तशाठ्यंविनाततः ॥ प्रदक्षिणमनुव्रज्यस्तोत्रमेतदुदीरयेत् ४१ नमस्तेपुंडरीकाक्षनमस्तेविश्वभावन ॥
नमस्तेऽस्तुहृषीकेशमहापुरुषपूर्वज ४२ येनेदमखिलंजातंयस्मिन्सर्वंप्रतिष्ठितम् ॥ लयमेष्यतियत्रैतत्तंप्रपन्नोस्मिमाधवम् ४३ नजानंतिपरंदेवंसर्वेब्रह्मादयःसु
राः ॥ योगिनोयंप्रशंसंतितंवंदेज्ञानरूपिणम् ४४ अंतरिक्षंतुयन्नाभिर्द्यौर्मूर्धायस्यचैवहि ॥ पादाद्भूश्चैवपृथ्वीतंवंदेविश्वरूपिणम् ४५ यस्यश्रोत्रेदिशःसर्वायच्च
क्षुर्दिनकृच्छशी ॥ ऋक्सामयजुषीयेनतंवंदेब्रह्मरूपिणम् ४६ यन्मुखाद्ब्राह्मणाजातायद्बाहोरभवन्नृपाः ॥ वैश्यायस्योरुतोजाताःपद्भ्यांशूद्रस्त्वजायत ४७ मनस
श्चंद्रमाजातोदिनेशश्चक्षुषस्तथा ॥ प्राणेभ्यःपवनोजातोमुखादग्निरजायत ४८ पापसंदाहमात्रेणवंदेतिपुरुषंतुयम् ॥ स्वभावविमलंशुद्धंनिर्विकारंनिरंजनम् ४९
क्षीराब्धिशायिनंदेवमनंतमपराजितम् ॥ सद्भक्तवत्सलंविष्णुंभक्तिगम्यंनमाम्यहम् ५० पृथिव्यादीनिभूतानितन्मात्राणींद्रियाणिच ॥ सुसूक्ष्माणिचयेनासंस्तंवंदे
सर्वतोमुखम् ५१ यद्ब्रह्मपरमंधामसर्वलोकोत्तमोत्तमम् ॥ निर्गुणंपरमंसूक्ष्मंप्रणतोऽस्मिपुनःपुनः ५२ निर्विकारमजंशुद्धंसर्वतोबन्हिमीश्वरम् ॥ यमामनंतियोगी
द्राःसर्वकारणकारणम् ५३ एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रींल्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ५४ निर्गुणःपरमानंदःसमेविष्णुःप्रसीदतु ॥
हृदयस्थोऽपिदूरस्थोमाययामोहितात्मनाम् ५५ ज्ञानिनांसर्वगश्चस्तुसमेविष्णुःप्रसीदतु ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ५६ हूयतेचपुनर्द्वाभ्यांसमेवि
ष्णुःप्रसीदतु ॥ ज्ञानिनांकर्मणांचैवतथाभक्तिमतांनृणाम् ५७ गतिदाताविश्वभुग्यःसमेविष्णुःप्रसीदतु ॥ जगद्धितार्थंयोदेहमदधल्लीलयाहरिः ५८ यमर्चयंतिविबुधाःस
मेविष्णुःप्रसीदतु ॥ यमामनंतिवैसंतःसर्वदाऽऽनंदविग्रहम् ५९ निर्गुणंचगुणाधारंसमेविष्णुःप्रसीदतु ॥ परेशःपरमानंदःपरात्परतरःप्रभुः ६० चिद्रूपश्चपरिज्ञेयःसमेवि
ष्णुःप्रसीदतु ॥ यइदंकीर्तयेन्नित्यंस्तोत्राणामुत्तमोत्तमम् ६१ सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ॥ यइदंकीर्तयेद्विष्णुंब्राह्मणांश्चप्रपूजयेत् ६२ आचार्यंपूजयेत्पश्चाद्दक्षि
णाच्छादनादिभिः ॥ ब्राह्मणान्भोजयेत्पश्चाद्भक्तितःसत्यभाषणः ६३ पुत्रमित्रकलत्राद्यैर्बंधुभिःसहवाग्यतः ॥ कुर्वीतपारणांशिष्यनारायणपरायणः ६४ यस्त्वेतत्कर्म
कुर्वीतध्वजारोपणमुत्तमम् ॥ तस्यपुण्यफलंवक्ष्येशृणुष्वसुसमाहितः ६५ वस्त्रंध्वजस्यसंबद्धंयावच्चलतिवायुना ॥ तावत्स्वपापजालानिनश्यंत्यत्रनसंशयः ६६ महापात

१ मारंभश्वरमेदिनेइतिपाठः । २ ध्यायंतियोगिनोयंवैइतिपाठः । ३ आभीहत्वाजमेद्विष्णुमितिपाठः ।

कयुक्तोवायुक्तश्चेत्सर्वपातकैः ॥ ध्वजंविष्णुगृहेकृत्वासर्वपापैःप्रमुच्यते६७ यावद्दिनानिवसतिध्वजोहरिगृहोपारि ॥ तावद्युगसहस्राणिहरेःसामीप्यमाप्नुयात् ६८ आरोपि
तंध्वजंदृष्ट्वायेऽभिवंदंतिधार्मिकाः ॥ तेऽपिसद्योविमुच्यंतेह्युपपातककोटिभिः ६९ आरोपितंध्वजंविष्णुगृहेधुन्वन्स्वकंपटम् ॥ कर्द्धंःसर्वाणिपापानिधुनोतिनिमिषार्धतः
७० एवंशिष्यमयाप्रोक्तंयथापृष्टंत्वयामम ॥ ध्वजारोपणमाहात्म्यंसविधानंमनोरमम् ७१ समागतांप्रतिपदंज्ञात्वाचैत्रसितांनृपैः ॥ आरोपिताध्वजाःसर्वैर्द्वितीयायांपृथक्
पृथक् ७२ ज्ञात्वारामंमहाविष्णुंतस्यैवाध्वरमंडपे ॥ कृत्वाचैकदिनंस्वस्ववासगेहेपुपूजनम् ७३ ध्वजस्यपूजनंगेहेनवरात्रंसमाचरेत् ॥ यथाशक्त्यनुसारंवाचैकरात्रमथा
पिवा ७४ यज्ञोत्सवदर्शनार्थंकृतमेकदिनंनृपैः ॥ चकारराघवश्चापिपूर्वमेवध्वजोत्सवम् ७५ माघमासेकृष्णपक्षेचतुर्दश्यांशिवाग्रतः ॥ तदाध्वजैर्महोचैस्तैःशुशुभेगगनां
गणम् ७६ इदंचरित्रंपरमंमनोहरंश्रीमद्ध्वजारोपविधानसंज्ञितम् ॥ पठंतिशृण्वंतिनराःसुपुण्यदंमवेत्तुतेषांनियतंविचिंतितम् ७७ ॥ इतिश्रीशत॰श्रीम॰याग॰ध्वजारो
पणवर्तनंनामसप्तमःसर्गः ॥ ७ ॥ श्रीरामदासउवाच ॥ अथचैत्रेसितेपक्षेनवम्यांरामजन्मनि ॥ तदाऽवभृथस्नानार्थंवाजिमेधफलाप्तये १ चकाररघुनंदनोराज्ञेराघवायगुरुः
स्वयम् ॥ त्वरयामासतंरामंरवितापभयान्मुनिः २ वसिष्ठवचनंश्रुत्वारामोलक्ष्मणमब्रवीत् ॥ अद्यावभृथस्नानार्थमुत्सवैर्गमनंमम ३ रामतीर्थेत्वयाज्ञात्वाकरणीयंमयोच्य
ते ॥ आज्ञापनीयाराजानोनिजसैन्यैर्गजादिभिः ४ सज्जीभूताःसावरोधास्तिष्ठध्वमितिमंडपे ॥ सिद्धंकार्यंनिजंसैन्यंशिविकारथवारणम् ५ अश्वपत्तिसमायुक्तंतुरगोष्ट्रग
जैर्युतम् ॥ नववाद्यध्वनिःकार्यस्तूर्यादीनांस्वनोऽपिच ६ पताकाश्चध्वजाश्चाऽपितोरणादिसमंततः ॥ मुक्ताप्रवालपुष्पादिहाराश्चाऽध्वरमंडपात् ७ बंधनीयारामतीर्थं
पर्यंतंसेकतेपिच ॥ कदलीनांमहास्तंभाश्चेक्षुदंडाःसमंततः ८ पुष्पाणांवाटिकाश्चापिष्टत्पात्रादिपुनिर्मिताः ॥ स्थापनीयाश्चसर्वत्रनृत्यंतुवारयोषितः ९ सेचनीयोरा
मतीर्थमार्गश्चंदनवारिभिः ॥ पुष्पैराच्छादनीयोहिपट्टकूलादिभिस्तथा १० अन्यच्चापियथायोग्यंयत्प्रोक्तंचमयातव ॥ तत्कुरुष्वाऽविलंबेनमामपृष्ट्वाविचारितम् ॥
११ तथेत्युक्त्वालक्ष्मणोऽपितथासर्वंचकारसः ॥ अथतेऋत्विजश्चक्रुर्गमनेष्टिंसविस्तराम् १२ वाजिवाहेरथेवह्निपात्राणिस्थाप्यराघवम् ॥ सीतांचारोह्यसगुरुश्चा
रुरोहर्त्विजैःसह १३ मुनयोवेदघोषांश्चसर्वेचक्रुःसमंततः ॥ ससम्राड्रथमारूढःपद्मश्चंरुक्ममालिनम् १४ ययौशनैःशनैर्मार्गेमुदावंदिजनैःस्तुतः ॥ अग्रेगजाःपताका
भिर्जग्मुरश्वास्ततःपरम् १५ ततस्तेतूर्यघोषाणांकर्तारस्तुरगस्थिताः ॥ ततस्तेराजदूताश्चचित्रोष्णीषाःसुदंडिनः १६ ततोवंदिनटाद्याश्चवारस्त्रीणांततोगणाः ॥
ततोदेवाःसगंधर्वास्ततोरामःससीतया १७ ऋत्विक्जनैर्ययौवह्निसंयुतःस्यंदनास्थितः ॥ ततोमुनीश्वराःसर्वेऋषिपत्न्यस्ततोययुः १८ ततःक्षत्रियपत्न्याद्याःस्त्रियः
सर्वाःशनैर्ययुः ॥ ततस्तेक्षत्रियाःसर्वेनानावाहनसंस्थिताः १९ ततस्तेषांहिसैन्यानिततोऽन्येराजसेवकाः ॥ नववाद्यध्वनीनांचवारणाद्यास्ततःपरम् २० ततश्चो
ष्ट्रास्तुबाणानांशकटाःशस्त्रपूरिताः ॥ लोहकारास्तक्षकाश्चचर्मकाद्यास्ततःपरम् २१ भूमिमानप्रकर्तारोरज्जुकुद्दालहस्तकाः ॥ ययुर्यथाक्रमंसर्वेतदेवंपरमोत्सवे २२

१ यथाशास्त्रानुसारंवेतिपाठः । २ श्रीमद्ध्वजारोपणसंज्ञकंशुभमितिपाठः ।

तदानिनेदुर्वाद्यानिननृतुर्वारयोषितः ॥ मुनिपार्थिवपत्न्यस्तंववृषुःपुष्पवृष्टिभिः २३ मार्गेवंदिजनाद्याश्चतुष्टुवूरघुनंदनम् ॥ षड्जादिस्वरानगंधर्वाःप्रजगुःपथितेमुदा ॥
२४ चक्रुस्तेवेदघोषांश्चमुनयःस्वरपूर्वकान् ॥ एवंरामःशनैर्मार्गेकौतुकानिसमंततः २५ पश्यन्जनकनंदिन्याययौचामरवीजितः ॥ तत्ररामस्यमार्गेहिसीतायामुखपं
कजम् २६ द्रष्टुंकोलाहलंचक्रुःसंमर्दात्सकलाजनाः ॥ तदातांस्ताडयामासुःशतशोवेत्रपाणयः २७ विशेषेणतदासीत्समहान्कोलाहलोद्विज ॥ तत्सर्वंराघवोदृष्ट्वाशुत्वाच
प्राहलक्ष्मणम् २८ एतेसर्वेपुष्पकस्थाजनाःसीतांचमांसुखम् ॥ पश्यंतुकलहोमाऽस्तुतथास्त्वितिसलक्ष्मणः २९ सर्वानारोहयामासपुष्पकेतान्जनान्मुदा ॥ ततस्ते
पुष्पकारूढाजनारामंमनोरमम् ३० जानकीसहितंयांतंददृशुःपथिवैशनैः ॥ केचिदूचुर्वयंधन्याःपरिपूर्णमनोरथाः ३१ अद्यरामंससीतंचपश्यामोऽत्रमहोत्सवे ॥
केचिदूचुश्चतौधन्यौपितरौनःसुजन्मदौ ३२ ययोःपुण्यचयैरद्यनःसीतारामदर्शनम् ॥ एवंगच्छतिश्रीरामेस्त्रियःसर्वाःपरस्परम् ३३ संमंत्र्यपुष्पकेस्थातुंप्रार्थयंतिस्म
जानकीम् ॥ तदासाजानकीप्राहलक्ष्मणंपुरतःस्थितम् ३४ स्त्रियःसर्वास्त्वयाशीघ्रंनारीशालासुपुष्पके ॥ आरोहणीयामेवाक्यात्प्रार्थयंत्यत्रमांमुहुः ३५ लक्ष्मणोऽपि
तथेत्युक्त्वाताःस्त्रीःसर्वाश्चपुष्पके ॥ त्वरयारोहयामासस्त्रीशालासुयथासुखम् ३६ ततस्ताःपुष्पकारूढास्तृणजालपटांतरैः ॥ ददृशुःसीतयारामंववृषुःपुष्पवृष्टिभिः ३७
मृदंगशंखपणवधुंधुर्यानकगोमुखाः ॥ वादित्राणिविचित्राणिनेदुश्चाऽवभृथोत्सवे ३८ नर्तक्योननृतुर्हृष्टागायकाःपृथक्शोजगुः ॥ वीणावेणुतलोन्नादस्तेषांसदिवमस्पृशत
३९ चित्रध्वजपताकाग्रैरिंद्रस्यंदनावंभिः ॥ स्वलंकृतैर्भटैर्भूपानिर्ययूरुक्ममालिनः ४० यदुसृंजयकांबोजकुरुकेकयकोशलाः ॥ कंपयंतोभुवंसैन्यैर्यजमानपुरःसराः ॥
४१ सदस्यर्त्विग्द्विजश्रेष्ठाब्रह्मघोषेणभूयसा ॥ देवर्षिपितृगंधर्वास्तुष्टुवुःपुष्पवृष्टिभिः ४२ स्वलंकृतानरानार्योगंधस्रग्भूषणांबरैः ॥ विलिंपंत्योऽभिषिंचंत्योविजह्रुर्विविधै
रसैः ४३ तैलगोरसगंधोदहरिद्रासांद्रकुंकुमैः ॥ पुंभिर्लिप्ताःप्रलिंपंत्योविजह्रुर्वारयोषितः ४४ एवंनानासमुत्साहैःश्रीरामश्चससीतया ॥ पश्यन्नानाकौतुकानिस्यंदनेन
शनैःशनैः ४५ अगमच्छरयूतीरेरामतीर्थंशुभावहम् ॥ अवरुह्यरथाद्रामःसीतयासरयूजले ४६ सचकारजलेक्रीडांत्विग्भिःपरिवारितः ॥ पत्नीसंयाजावभृथ्यैश्चरि
त्वातेतमृत्विजः ४७ सर्वेरामहृदेविप्रायजमानपुरःसराः ॥ आचांतंस्नापयांचक्रुःसरय्वांसहसीतया ४८ शत्रुघ्नेनपुराऽऽनीतैर्नानातीर्थजलैस्तदा ॥ रामाभिषेकंतेचक्रुर्मु
दामंत्रैर्मुनीश्वराः ४९ देवदुंदुभयोनेदुर्नरदुंदुभिभिःसमम् ॥ मुमुचुःपुष्पवर्षाणिदेवर्षिपितृमानवाः ५० सस्नुस्तत्रततःसर्वेवर्णाश्रमयुतानराः ॥ महापातकिनश्चापि
स्नात्वामुक्तास्वपातकात् ५१ अथरामोऽहतेक्षौमेपरिधायस्वलंकृतः ॥ शुशुभेनितरांदिव्यकंकणाभ्यांसुमंडितः ५२ केयूराभ्यांकुंडलाभ्यांमुक्ताहारैर्विचित्रितैः ॥
नानाप्रसूनहारैश्चरत्नानांनूपुरादिभिः ५३ हृदिचिंतामणियुतःकंठेकौस्तुभमंडितः ॥ चिंतामणिकौस्तुभयोःप्रभयादीपितोदरः ५४ कोटिसूर्यप्रतीकाशःसिकतायांव
रासने ॥ तस्थौजनकनंदिन्याऋत्विग्भिःपरिवेष्टितः ५५ अथर्त्विग्भ्योऽददात्कालेयथाम्नायंसदक्षिणाः ॥ स्वलंकृतेभ्योऽलंकृत्यगोभूतुरगवारणान् ५६ कामधेनुमलं
कृत्यगुरुंदातुंसमुद्यतः ॥ तज्ज्ञात्वाचिंतयामासवसिष्ठःसस्वचेतसि ५७ अस्तिमेनंदिनीनाम्नीकामधेनुसुतासुता ॥ नास्याःप्रयोजनंमेऽद्यव्यर्थंत्वापूर्वंकरोम्यहम् ५८

अस्यैवाऽस्तुकामधेनुरस्यैयोग्योरघूत्तमः ॥ तांवर्जयित्वारामस्यकीर्त्यर्थेंजगतीतले ५९ याचाम्यहंशुभांसीतांसालंकारांसदक्षिणाम् ॥ औदार्यंराघवस्याऽद्यदर्शयि
ष्याम्यहंजनान् ६० इतिनिश्चित्यसगुरुस्तदाप्राहरघूत्तमम् ॥ करोषिकिंधेनुदानंतेनतृप्तिर्नमेभवेत् ६१ यदिदास्यसिदेयामेसीताऽलंकारमंडिता ॥ तयातृप्तिर्भवेन्मे
ऽद्यनान्यैर्नारीशतैरपि ६२ तन्मुनेर्वचनंश्रुत्वावसिष्ठस्यजनास्तदा ॥ हाहाकारंमहच्चक्रुर्विषण्णाभयविह्वलाः ६३ केचिदूचुर्वसिष्ठोऽयंकिंभ्रांतोजरठोऽद्यहि ॥ के
चिदूचुर्विनोदोयंकृतोस्तिमुनिनाऽत्रहि ६४ केचिदूचूराघवस्यधैर्यंपश्यत्ययंमुनिः ॥ केचिदूचूराघवोऽद्यकिंकरिष्यतिपश्यताम् ६५ एतस्मिन्नंतरेसमःश्रुत्वातच्च
गुरोर्वचः ॥ प्रहस्यसंज्ञयासीतामाहूयगुरुसन्निधौ ६६ सीतायाःस्वकरेणैवधृत्वावामकरंमुदा ॥ सभायांराघवःप्राहवसिष्ठंतोषयन्मुदा ६७ स्त्रीदानमंत्रोवक्तव्यःसीता
दानंकरोमिते ॥ तथेतिमुनिर्दृढंदेधुवासिष्ठश्चयथाविधि ६८ अंगीचकारस्त्रीदानंराघवेणसमर्पितम् ॥ चकितंचतदाऽभूद्धैसर्वंस्थावरजंगमम् ६९ देहमानंनकस्यासीत्त
दासीदतिचित्रवत् ॥ तदासीतांमुनिःप्राहमत्पृष्ठेतिष्ठबालिके ७० ममार्पिताऽसिरामेणत्वांमन्येऽहंसुतोपमाम् ॥ तन्मुनेर्वचनंश्रुत्वासीतासाखिन्नमानसा ७१ वामन्यस्ते
क्षणासाध्वीमुनेःपृष्ठेह्युपाविशत् ॥ बभूवाश्रुपूर्णनेत्रासारोमांचितविग्रहा ७२ ततोरामःपुनःप्राहवासिष्ठंविनयान्वितः ॥ गृहाणसुरभिंचापिसीतायैह्यर्पितांपुरा ७३ म
यातोषेणकैलासेमन्मणेस्तोषदायिनी ॥ मयाऽपिदातुमानीतातच्छ्रुत्वागुरुरब्रवीत् ७४ रामराममहाबाहोतवौदार्यंचदर्शितुम् ॥ याचितातवपत्नीयंमयातेऽस्तुपुनः
शुभा ७५ अस्याःकुरुतुलामद्यसुवर्णेनरघूत्तम ॥ अष्टवारंप्रतुलितंसीतयारुक्ममुत्तमम् ७६ मांदत्त्वेयंत्वयाग्राह्यापुनःसदसिमद्गिरा ॥ अन्यत्किंचिच्छृणुष्वत्वंवचनंय
न्मयोच्यते ७७ धेनुंचिंतामणिंसीतांकौस्तुभंपुष्पकंपुरीम् ॥ स्त्रीयंराज्यमयोध्यायांत्वंचेत्कस्यप्रदास्यसि ७८ अग्रेकदातदाऽऽज्ञामेत्वयाल्लुप्ताभविष्यति ॥ ममाज्ञाभं
गदोषेणबहुक्लेशीभविष्यसि ७९ मदुक्तैःसत्तमीराजन्नविनायद्यत्त्वमिच्छसि ॥ तत्तद्दस्वविप्रेभ्योत्वंसुखंह्यविचारतः ८० तद्गुरोर्वचनंश्रुत्वातथेत्युक्त्वारघूत्तमः ॥ सीतां
तुलायामारोप्यसुवर्णेनाष्टसंख्यया ८१ तुलितांप्रतिजग्राहगुरोःसाध्वींस्मिताननाम् ॥ दिव्यालंकारहीनांतांकंचुकीवस्त्रसंयुताम् ८२ तदानिनेदुर्वाद्यानिववृषुःपुष्पवृष्टि
भिः ॥ सुरस्त्रियोविमानस्थाःसीतारामौमुदान्विताः ८३ पूर्वाधिकानलंकारान्स्वदेहेजानकीदधौ ॥ जनाःसर्वेसुसंतुष्टास्तदाऽऽसन्मुदिताननाः ८४ अथसीतापतिंनत्वा
तत्पार्श्वेसंस्थिताऽभवत् ॥ स्मिताननाऽनंदमग्नालज्जितारामलोचना ८५ ततोरामोप्यनेकानिकृत्वादानानिविस्तरात् ॥ ऋत्विक्सदस्यमुख्यादीनानर्च्याभरणांबरैः ८६
स्वीयज्ञातीन्नृपान्मित्रसुहृदोऽन्यांश्चसर्वशः ॥ अभीक्ष्णंपूजयामासवस्त्रालंकारभूषणैः ८७ सर्वेजनासुललितोन्मणिकुंडलस्रगुष्णीषकंचुकदुकूलमहार्घहाराः ॥ नार्य
श्चकुंडलयुगालकवृंदजुष्टवक्त्रश्रियःकनकमेखलयाविरेजुः ८८ ॥ इतिश्रीमदानंदरामायणेयागकांडेअवभृथोत्सववर्णनंनामाष्टमःसर्गः ॥ ८ ॥ ॥ श्रीरामदासउवाच ॥
श्रीरामेऽवभृथस्नातेशंभुर्ब्रह्मादिभिःसुरैः ॥ रामंवेदस्तवैःस्तुत्वाप्रत्युवाचपुरःस्थितः १ अद्यधन्यावयंसर्वेयत्त्वांस्नातंसुमंगलम् ॥ पश्यामोवाऽद्यवभृथेसीतयाबंधुभिःसह २

१ द्रुरदघोइतिपाठः ।

अस्माकंहर्षकालोऽयंदेवदेवकृपानिधे ॥ तस्माद्यंसदापुण्यःश्रेष्ठकालोभविष्यति ३ त्वंचाप्यंगीकुरुष्वाऽद्यदेह्यस्मैसुबहून्वरान् ॥ अन्यत्रश्चात्रप्रत्यब्दंयेनतेदर्शनंभवेत्
४ तथाकुरुष्वश्रेष्ठतीर्थायाऽस्मैवरान्वद ॥ अन्यानिचत्वयापूर्वंयानिभूम्यांकृतानिहि ५ यात्राकालेषुतीर्थानिलिंगान्यऽपिनिजाख्यया ॥ तेषामपिवरानद्यवदत्वंममवा
क्यतः ६ पुरीषुश्रेष्ठाऽयोध्येयंत्वयावाच्याचराघव ॥ नदीषुसरयूःश्रेष्ठावरैःकार्याऽद्यमद्गिरा ७ तच्छंभुवचनंश्रुत्वाप्रहस्यरघुनंदनः ॥ हर्षकालेऽब्रवीद्वाक्यंयत्त्रैलोक्यो
पकारकम् ८ यत्प्रार्थितंत्वयाशंभोतदेवहृदिमेस्थितम् ॥ शृणुष्ववचनंमेऽद्ययद्धर्षात्प्रोच्यतेशुभम् ९ सर्वेषामेवमासानांश्रेष्ठश्चायंमधुर्भवेत् ॥ वैशाखात्कार्तिकःश्रेष्ठः
कार्तिकान्माघएवच १० माघमासाद्वरश्चायंचैत्रमासोभविष्यति ॥ चैत्रमासेऽभवज्जन्ममयस्मात्तथापुनः ११ वाजिमेधावभृथेषुस्नानेनापिविशेषतः ॥ सर्वेषामधि
कश्चाऽस्तुमधुस्तेवाक्यगौरवात् १२ चैत्रमासेकृतंदत्तंहुतंस्नातंविचिंतितम् ॥ सर्वकोटिगुणंप्रोक्तमयोध्यायांविशेषतः १३ सर्वासुप्रथमाचेयंपुरीषुनगरीमम ॥ अयो
ध्यामुक्तिदात्रीतुभविष्यतिगिरामम १४ अन्यत्रयत्कृतंपुण्यंषष्टिसंवत्सरैःशुभम् ॥ तदत्रदिवसेकेनभविष्यतिनृणांसदा १५ पुरीणांमधुरेविज्ञेयाराजधानीशुभप्रदा ॥ त्वया
स्यैयाचितोयस्माद्वरार्थंमहमादरात् १६ तववाक्याद्गौरवेणतवकाश्याःशताधिका ॥ भविष्यातिपुरीचेयमयोध्याममवल्लभा १७ नदीषुसरयूश्चेयंश्रेष्ठाऽस्तुवचनान्मम ॥
सरयूसदृशीनान्यानदीभूताभविष्यति १८ अस्यामपिमयाचेदंरामतीर्थविनिर्मितम् ॥ निजतेजःप्रतापेनतीर्थेषुमुकुटोपमम् १९ भविष्यतिनसंदेहःसर्वपातकनाशनम् ॥
तथायानिपृथिव्यांहिमयातीर्थानिवैपुरा २० लिंगान्यपिस्वीयनाम्नाकृतानितानिशंकर ॥ स्नानेनदर्शनाच्चापिभुक्तिमुक्तिदान्यत्रसंतुवै २१ रामतीर्थेचैत्रमासेप्रत्यब्दंभुविमा
नवैः ॥ स्नातव्यंविधिनासम्यङ्नियमैर्ममवाक्यतः २२ यच्छ्रेयश्चाश्वमेधेनयद्गोमेधेनवैफलम् ॥ यत्फलंसोमयागेनतच्चैत्रेऽत्रावगाहनात् २३ सूर्यग्रहेकुरुक्षेत्रेयच्छ्रेयः
66 स्नानदानतः ॥ तच्छ्रेयःस्यान्मधौस्नानादयोध्यायांसुरेश्वर २४ अयोध्यायांरामतीर्थेसरयूजलसंस्थिते ॥ चैत्रस्नानंप्रकुर्वाणास्तेनरामोक्षभागिनः २५ यथामाघेप्रया
गेहिस्नातव्यंसुखमिच्छता ॥ कार्तिकेऽपियथाकाश्यांपंचगंगाजलेस्मृतः २६ द्वारकायांयथाप्रोक्तोवैशाखेचक्रतीर्थके ॥ अयोध्यायांरामतीर्थेतथाचैत्रेऽवगाहनम् २७
करणीयंनरैर्भक्त्यावचनान्ममसर्वदा ॥ सर्वेष्वपिचमासेषुप्रथमःसकलैर्जनैः २८ एतावत्कालपर्यंतंमार्गशीर्षःप्रगीयते ॥ अद्यारभ्यमधुश्चाऽयंप्रथमःख्यातिमेष्यति २९
यथादेवेषुप्रथमस्त्वंमहेशस्तथामधु ॥ मासेषुप्रथमश्चाऽस्तुतथाऽयोध्यापुरीष्वपि ३० चैत्रेमासेतुसंप्राप्तेसर्वेदेवाःसवासवाः ॥ बहिर्जलंसमाश्रित्यातिष्ठध्वंहिममाज्ञया ३१
प्रत्यब्दंचैत्रमासेऽत्रयथेदानींसमागताः ॥ आगंतव्यंतथासर्वैस्त्रैलोक्यांतरवासिभिः ३२ जरठैरातुरैःस्त्रीभिर्येषांयत्संनिधौमम ॥ रामतीर्थंप्रगंतव्यंसर्वत्रभुविशंकर ३३
१० चैत्रमासेऽवगाहार्थंवचनान्ममसर्वदा ॥ इतिरामवचःश्रुत्वागिरिजाप्राहजानकीम् ३४ सीतेवरास्त्वयादेयाइदानींवचनान्मम ॥ नारीणांचहितार्थांहेसर्वलोकोपकार
काः ३५ तदद्रिजावचःश्रुत्वाजानकीप्राहसादरम् ॥ पृथिव्यांममतीर्थानियानिसंतिसहस्रशः ३६ अत्रापिचमहच्छ्रेष्ठंयत्रस्नातंमयाऽधुना ॥ तेषुचैत्रतृतीयायायावद्वै
शाखसंभवा ३७ सितातृतीयाऽक्षय्याख्यातावत्स्त्रीभिस्तुसादरम् ॥ स्नातव्यंसीतलागौरीसंज्ञकंस्नानमुत्तमम् ३८ सौभाग्यदंमासमेकंपुत्रपौत्रप्रवर्धनम् ॥ सर्वत्रराम

तीर्थस्यवामेतीर्थंममाऽस्तिाहि ३९ इतिदत्त्वावरान्सीताऽऽसीत्तूष्णींरामसन्निधौ ॥ ततोरामंगुरुःप्राहगंतव्यंयज्ञमंडपम् ४० तद्गुरोर्वचनंश्रुत्वातथेत्युक्त्वारघूद्वहः ॥
आरुरोहरथंशीघ्रंसीतयार्त्विग्जनैःसह ४१ ततोनेदुर्दुंदुभयोभेरीणांनिःस्वनास्ततः ॥ मृदंगपणवादीनांमहाघोषाःसमंततः ४२ वेदघोषाश्चसर्वत्रजयशब्दाद्विजेरिताः ॥
बभूवुर्मंत्रशब्दाश्चनन्नृतुश्चाप्सरोगणाः ४३ नानोत्सवैःपूर्वैवचकौतुकानिसमंततः ॥ पश्यन्ययौरामचंद्रःशनैरध्वरमंडपम् ४४ अवरुह्यरथाच्छीघ्रंनत्वाऽग्निंप्रक्षिपत्पु
नः ॥ यज्ञकुंडेरामचंद्रःसीतयार्त्विग्जनैःसह ४५ पूर्णाहुतिंततोदत्त्वावस्त्रैराभरणैःफलैः ॥ कृत्वाऽग्नेःपूजनंचाऽपियज्ञपात्राणिराघवः ४६ ततोविसर्जयामासयज्ञांतेद
क्षिणांबहु ॥ दातुंतान्नृत्विजःसर्वान्सौमित्रिंराघवोऽब्रवीत् ४७ कोशागारंलक्ष्मणाऽद्यसर्वेमेऋत्विजस्त्वया ॥ नीत्वाहूतान्निराकृत्यतूष्णींस्थेयंततःपरम् ४८ यथेच्छ
याऽमितंयेनगृहीतमुत्तमंवसु ॥ तस्याश्रमेप्रापणीयंवाहनाद्यैश्चतत्त्वया ४९ ततोमुनिजनान्सर्वान्देयंविपुलहस्ततः ॥ तद्रामवचनंश्रुत्वालक्ष्मणोऽपितथाऽकरोत् ५०
ततोविसर्जयामासभोजयित्वारघूत्तमः ॥ ऋत्विग्जनान्संवृणीतान्वाजिमेधाख्यकर्मणि ५१ ततोरामोऽमरान्सर्वान्शिवाद्यान्विभवैर्निजैः ॥ पूजयामासविधिवद्वस्त्रालं
कारवाहनैः ५२ ददौकेशान्सतुरगान्केषांसाशिबिकाददौ ॥ केषांरथान्गजान्केषांददौशस्त्राण्यपीश्वरः ५३ एवंपृथ्वीपतींश्चापिसावरोधान्ससेवकान् ॥ वस्त्रैराभरणे
र्यानैःपूजयामासभोजनैः ५४ ततोरामःस्वशरीरेदिव्यवस्त्राणिसंदधौ ॥ तदातंपूजयामासुर्बलिभिर्विबुधान्नृपाः ५५ सरित्समुद्रागिरयोनागागावःखगामृगाः ॥ द्यौः
क्षितिःसर्वभूतानिसमाजह्रुरुपायनम् ५६ सीतयासमहाराजःसुवासाःसाध्वलंकृतः ॥ बंधुभिःसेव्यमानःसविरेजेऽग्निरिवापरः ५७ तस्मैजहारधनदोहैमंवीरवरासनम् ॥
वरुणःसलिलस्रावीह्यातपत्रंशशिप्रभम् ५८ वायुश्चवालव्यजनेधर्मःकीर्तिमयींस्रजम् ॥ इंद्रःकिरीटमुत्कृष्टंदंडंसंयमनंयमः ५९ ब्रह्माब्रह्ममयंवर्मभारतीहारमुत्तमम् ॥
दशचंद्रमसिंरुद्रःशतचंद्रमथांबिका ६० सोमोऽमृतमयानश्वांस्त्वष्टारूपाश्रयंरथम् ॥ अग्निराजगवंचापंसूर्योरश्मिमयानिषून् ६१ भूःपादुकेयोगमय्यौद्यौःपुष्पाव
लिमन्वहम् ॥ नाट्यंसुगीतंवादित्रमंतर्धानंचखेचराः ६२ ऋषयश्चाशिषःसत्याःसमुद्रःशंखमात्मजम् ॥ सिंधवःपर्वतानद्योरथवीथीर्महात्मनः ६३ ततोनृपाददुःसर्वे
स्यंदनांस्तुरगान्गजान् ॥ शिबिकागोवृषान्खड्गान्दासीर्दासोष्ट्रखेचरान् ६४ सीतायैनृपपत्न्यश्चदेवपत्न्यःसहस्रशः ॥ वस्त्रालंकारयानानिमांगल्यान्यथकंचुकीः ६५
क्रीडोपकरणादीनिददुस्ताःपक्षिपंजरान् ॥ ततस्तैःपूजितःसर्वैःसीतयारघुनायकः ६६ आरुरोहरथंदिव्यंवन्दिनावंदिभिःस्तुतः ॥ स्वस्त्रीभिर्नृपपत्नीभिर्विमानेनमुनी
श्वराः ६७ विहायसाययुःसर्वेऽयोध्यायांनृपतेर्गृहम् ॥ ततोरामोरथेनैवपूर्वोक्तैरुत्सवैःशनैः ६८ विवेशनगरींरामःस्तुतःसूतैश्चमागधैः ॥ छत्रंदधारसौमित्रिर्मुक्ताजालवि
राजितम् ६९ भरतस्तालव्यजनंशत्रुघ्नश्चामरद्वयम् ॥ तांबूलपात्रंसुग्रीवस्तोयपात्रंतुवायुजः ७० नलःष्ठीवनपात्रंचवालिजोमुकुरंवरम् ॥ वासःकोशंराक्षसेंद्रोधूपपात्रं
हिर्जांबवान् ७१ नानाफलानांपात्राणिपूजापात्राण्यनेकशः ॥ सुगंधद्रव्यपात्राणिदधुस्तेमंत्रिसत्तमाः ७२ एवंसुगंधवस्तूनिप्रक्षिपन्वारयोषिताम् ॥ वृंदेषुसीतयारा

१ केषांसइतिपाठः ।

मोविरेजेस्यंदनेस्थितः ७३ सुगंधरागपूर्णैश्चजलयंत्रैःकरेधृतैः॥ वारांगनानांवस्त्राणिनृपादीनांचराघवः ७४ चित्रितान्यकरोद्रागैःकिंशुकानिवमाधवे ॥ स्नेहैःसुगंधैरागा
चैराद्रैंवस्त्रेपुराघवः ७५ क्षिप्त्वापरिमलादीनिचित्रितान्यकरोत्पुनः ॥ नर्तत्सुवारयोषित्सुवाद्येषुविनदत्सुच ७६ स्तुवत्सुवंदिवृंदेषुपुष्पवृष्टिविराजितः ॥ ययौराजगृहद्वा
रंरामोराजपथाशनैः ७७ मार्गेकुंभप्रदीपैश्चदध्योदनविनिर्मितैः॥ बलिदीपैःपूर्णकुंभैराजमार्गेपुरस्त्रियः ७८ चक्रुर्नीराजनंरामंस्त्वत्यर्थंसीतयायुतम् ॥ अवरुह्यरथाद्रामो
सीतयाग्निनिजेगृहे ७९ स्थाप्यस्वीयसभामेत्याऽकरोहस्वीयमासनम् ॥ ततस्तेपार्थिवाःसर्वेप्रणेमूरघुनंदनम् ८० राज्ञांमुकुटरत्नौघप्रभाभिःपदपंकजे ॥ विरेजतूराघवस्य
तदासिंहासनोपरि ८१ मुकुटस्थावतंसानांपरागैःपूजितेनृपैः ॥ प्रापतुर्नितरांशोभांरक्तोत्पलनिभेपरे ८२ सीमंतस्थचंद्रसूर्यैरत्नमाणिक्यदीप्तिभिः ॥ सुरपार्थिवपत्नीनां
सीतायाःपादपंकजे ८३ विरेजतुःपरागैश्चकेशबंधप्रसूनजैः ॥ सुरपार्थिवपत्नीभिःपूजितेकनकोज्ज्वले ८४ ततःसभायांश्रीरामंस्तुत्वादेवैर्महेश्वरः ॥ श्रीरामस्तवराजेनश्रीरा
मेणाऽपिपूजितः ८५ प्राप्याज्ञांरामचंद्रस्यसावरोधैःसुरादिभिः ॥ प्रस्थानंस्वस्थलंगंतुंचकारवृषमस्थितः ८६ नृपस्त्रियोऽपिसीतायाःप्राप्याज्ञांपूजितास्तया ॥ याना
न्यारुरुहुःसर्वास्त्वयोध्यायाविनिर्ययुः ८७ अथतेपार्थिवाद्याश्चप्राप्याज्ञांराघवस्यच ॥ सावरोधाःससैन्याश्चस्वीयराज्यानिवैययुः ८८ ययौशिवोऽपिकैलासंसत्यलोकंविधि
र्ययौ ॥ इंद्राद्यानिर्जराःसर्वेस्वर्गलोकंययुर्मुदा ८९ अथऽर्त्विजोमहाशीलाःसदस्याब्रह्मवादिनः ॥ सर्वेमुनीश्वराद्याश्चस्वधामानिययुस्तदा ९० ततोरामःपूर्ववच्चशशास
जगतीतलम् ॥ रेमेजनकनंदिन्याचिरकालंयथासुखम् ९१ वर्षांतरेणकालेनवाजिमेधाःपृथक्पृथक् ॥ उत्तरोत्तरतःश्रेष्ठाविंशद्वर्षैःकृतादश ९२ इत्थंश्रीरामचंद्रेणदश
मेतुरगाध्वरे ॥ प्रतिपाल्यगुरोर्वाक्यंसर्वस्वमपिभूसुरान् ९३ दत्तंकिलमहाराज्ञातथाचदिक्चतुष्टयम् ॥ ऋत्विग्भ्योदक्षिणार्थंहिदत्तंचेतिमयाश्रुतम् ९४ ऋत्विग्भि
स्तत्पुनर्दत्तंराघवायैवसादरम् ॥ कृपालुभिःपालनार्थमितिशिष्याऽनुश्रूयते ९५ एवंशिष्यत्वयापृष्टंरामचंद्रस्यमंगलम् ॥ चरितंतन्मयाकिंचित्तवोक्तंयज्ञसंभवम् ९६ इदंयः
प्रातरुत्थाययागकाण्डंमनोरमम् ॥ पठिष्यतिनरःपुण्यंसर्वान्कामानवाप्नुयात् ९७ पुत्रार्थीप्राप्नुयात्पुत्रंधनार्थीधनमाप्नुयात् ॥ यागकाण्डमिदंश्रुत्वावाजिमेधफलंल
भेत् ९८ होमकालेश्राद्धकालेचातुर्मास्यादिकेष्वपि ॥ जपध्यानार्चनारंभेपूर्वंनित्यंपठेदिदम् ९९ रम्यंपवित्रंरघुनायकस्यश्रीमच्चरित्रंतुरगाध्वरोद्भवम् ॥ पठंतिशृण्वं
तिजनाःसुपुण्यदंलभंतिनैजंखलुवांछितंहृदि १०० ॥ ॥ इति श्रीमच्छतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये यागकाण्डे यज्ञसमाप्तिर्नाम नवमः
सर्गः ॥ ९ ॥ ॥ यागकाण्डोद्भवाःसर्गानवैवपरिकीर्तिताः ॥ सपादषट्शतश्लोकारामदासेनवर्णिताः ॥ १ ॥ ॥ इति यागकाण्डः समाप्तः ॥ श्रीरामोजयति ॥

श्रीगणेशायनमः ॥ श्रीसीतारामचन्द्राभ्यांनमः ॥ गुरोतेप्रष्टुमिच्छामितद्वदस्वसविस्तरम् ॥ स्तुतोरामःशिवेनाऽत्रयेनरामस्तवेनहि १ तंरामस्तवराजंमेविस्तरेणप्र
काशय ॥ श्रीशिवउवाच ॥इतिशिष्यवचःश्रुत्वारामदासोऽब्रवीद्वचः २ ॥ श्रीरामदासउवाच ॥ सम्यक्पृष्टंत्वयावत्ससावधानमनाःशृणु ॥ प्रोच्यतेरामचंद्रस्यस्तवराजो
मयाऽधुना ३ यत्परंयद्गुणाधारंयज्ज्योतिरमलंशिवम् ॥ तदेवपरमंतत्त्वंकैवल्यपददायकम् ४ श्रीरामेतिपरंजाप्यंतारकंब्रह्मसंज्ञितम् ॥ ब्रह्महत्यादिपापघ्नमिति वेदविदो
विदुः ५ श्रीरामरामरामेतियेवदंत्यपिसर्वदा ॥ तेषांभुक्तिश्चमुक्तिश्चभविष्यतिनसंशयः ६ स्तवराजःपुराप्रोक्तःशिवेनपरमात्मना ॥ तमहंसंप्रवक्ष्यामिहरिध्यानपुरःस
रम् ७ तापत्रयाग्निशमनंसर्वाघौघनिकृन्तनम् ॥ दारिद्र्यदुःखशमनंसर्वसंपत्प्रदायकम् ८ विज्ञानफलदंपुण्यंमोक्षैकफलदायकम् ॥ नमस्कृत्वाप्रवक्ष्यामिरामंकृष्णमना
मयम् ९ अयोध्यानगरेरम्येरत्नमंडपमध्यगे ॥ ध्यायेत्कल्पतरोर्मूलेरत्नसिंहासनेशुभे १० तन्मध्येऽष्टदलंपद्मंनानारत्नोपशोभितम् ॥ स्मरेन्मध्येदाशरथिंसहस्रादित्य
तेजसम् ११ पितुरासनमासीनमिंद्रनीलसमप्रभम् ॥ कोमलांगंविशालाक्षंविद्युद्वर्णांबरावृतम् १२ भानुकोटिप्रतीकाशंकिरीटेनविराजितम् ॥ रत्नग्रैवेयकेयूररवरकुंडलमं
डितम् १३ रत्नकंकणमंजीरकटिसूत्रैरलंकृतम् ॥ श्रीवत्सकौस्तुभोरस्कंमुक्ताहारोपशोभितम् १४ चिंतामणिसमायुक्तंरत्नमालाविराजितम् ॥ दिव्यरत्नसमायुक्तंमुद्रि
काभिरलंकृतम् १५ कर्पूरागरुकस्तूरीदिव्यगंधानुलेपनम् ॥ तुलसीकुंदमंदारपुष्पमाल्यैरलंकृतम् १६ राघवंद्विभुजंवीरंराममीषत्स्मिताननम् ॥ योगशास्त्रेष्वभिरतंयोगे
शंयोगदायकम् १७ सदासौमित्रिभरतशत्रुघ्नैरुपसेवितम् ॥ विद्याधरसुराधीशसिद्धगंधर्वकिन्नरैः १८ योगींद्रैर्नारदाद्यैश्चस्तूयमानमहर्निशम् ॥ विश्वामित्रवसिष्ठाद्यैर्ऋ
षिभिःपरिसेवितम् १९ सनकादिमुनिश्रेष्ठैर्योगिवृंदैःसमावृतम् ॥ रामंरघुवरंवीरंधनुर्वेदविशारदम् २० मंगलायतनंदेवंरामंराजीवलोचनम् ॥ सर्वशास्त्रार्थतत्त्वज्ञमानं
दमतिसुंदरम् २१ कौसल्यातनयंरामंधनुर्बाणधरंहरिम् ॥ एवंसंचिंतयेद्विष्णुंयज्ज्योतिर्ज्योतिषांपरम् २२ प्रहृष्टमानसोभूत्वासभार्यांवृषभध्वजः ॥ सर्वलोकहितार्थाय
तुष्टावरघुनंदनम् २३ कृतांजलिपुटोभूत्वाचिन्तयन्नद्भुतंहरिम् ॥ श्रीशिवउवाच ॥ यदेकंयत्परंनित्यंयदनंतंचिदात्मकम् २४ यदेकंव्यापकंलोकेतद्रूपंचिन्तयाम्यहम् ॥
सर्वत्रैलोक्यसौख्यार्थरामभक्त्यतिवृद्धये २५ विज्ञानहेतुंविमलायताक्षंप्रज्ञानसंदिव्यसुखैकरूपम् ॥ श्रीरामचन्द्रंहरिमादिदेवंविश्वेश्वरंराममहंभजामि २६ कविंपुराणं
पुरुषंपरेशंसनातनंयोगिनमीशितारम् ॥ अणोरणीयांसमनंतवीर्यंप्राणेश्वरंराममहंभजामि २७ नारायणंजगन्नाथमभिरामंजगत्पतिम् ॥ कविंपुराणंवागीशंरामंदशरथा
त्मजम् २८ रामराजंरघुवरंकौसल्यानंदवर्धनम् ॥ भर्गवरेण्यंविश्वेशंरघुनाथंजगद्गुरुम् २९ सत्यंसत्यप्रियंश्रेष्ठंजानकीवल्लभंप्रभुम् ॥ सौमित्रिपूर्वजंशांतंकामदंकमलेक्ष
णम् ३० आदित्यंरविमीशानंघृणिंसूर्यमनामयम् ॥ आनंदरूपिणंसौम्यंराघवंकरुणाकरम् ३१ जामदग्न्यंतपोमूर्तिरामंपरशुधारिणम् ॥ वाक्पतिंवरदंवाच्यंश्रीपतिंप
२१ क्षिवाहनम् ३२ श्रीशार्ङ्गधारिणंरामंचिन्मयानंदविग्रहम् ॥ हलधारिणमीशानंबलरामंकृपानिधिम् ३३ श्रीवल्लभंकलानाथंजगन्मोहनमच्युतम् ॥ मत्स्यकूर्मवराहादि

१ राजराजमितिपाठः ।

रूपधारिणमव्ययम् ३४ वासुदेवंजगद्योनिमनादिनिधनंहरिम् ॥ गोविंदंगोपतिंविष्णुंगोपीजनमनोहरम् ३५ गोपालंगोपरीवारंगोपकन्यासमावृतम् ॥ विद्युत्पुंजप्रती
काशंरामंकृष्णंजगन्मयम् ३६ गोगोपिकासमाकीर्णंवेणुवादनतत्परम् ॥ कामरूपंकलावंतंकामिनांकामदंप्रभुम् ३७ मन्मथंमथुरानाथंमाधवंमकरध्वजम् ॥ श्रीधरंश्री
करंश्रीशंश्रीनिवासंपरात्परम् ३८ भूतेशंभूपतिंभद्रंभूतिदंभूरिभूषणम् ॥ सर्वदुःखहरंवीरंदुष्टदानवमर्दनम् ३९ श्रीनृसिंहंमहाविष्णुंमहांतंदीप्ततेजसम् ॥ चिदानंदमयंनि
त्यंप्रणवंज्योतिरूपकम् ४० आदित्यमंडलगतंनिश्चितार्थस्वरूपिणम् ॥ भक्तिप्रियंपद्मनेत्रंभक्तानामीप्सितप्रदम् ४१ कौसल्येयंकलामूर्तिंकाकुत्स्थंकमलाप्रियम् ॥
सिंहासनेसमासीनंनित्यव्रतमकल्मषम् ४२ विश्वामित्रप्रियंदांतंस्वदारनियतव्रतम् ॥ यज्ञेशंयज्ञपुरुषंयज्ञपालनतत्परम् ४३ सत्यसंधंजितक्रोधंशरणागतवत्सलम् ॥
सर्वक्लेशापहरणंविभीषणवरप्रदम् ४४ दशग्रीवहरंरुद्रंकेशवंकेशिमर्दनम् ॥ वालिप्रमथनंवीरंसुग्रीवेप्सितराज्यदम् ४५ नरवानरदेवैश्चसेवितंहनुमत्प्रियम् ॥ शुद्धंसूक्ष्मं
परंशांतंतारकब्रह्मरूपिणम् ४६ सर्वभूतात्मभूतस्थंसर्वाधारंसनातनम् ॥ सर्वकारणकर्तारंनिदानंप्रकृतेःपरम् ४७ निरामयंनिराभासंनिरवद्यंनिरंजनम् ॥ नित्यानंदं
निराकारमद्वैतंतमसःपरम् ४८ परात्परतरंनित्यंसत्यानंदचिदात्मकम् ॥ मनसाशिरसानित्यंप्रणमामिरघूत्तमम् ४९ भवोद्भवंवेदविदांवरिष्ठमादित्यचंद्रानिलसुप्रभा
वम् ॥ सर्वात्मकंसर्वगतस्वरूपंनमामिरामंतमसःपरस्तात् ५० निरञ्जनंनिष्प्रतिमंनिरीहंनिराश्रयंकारणमादिदेवम् ॥ नित्यंध्रुवंनिर्विषयस्वरूपंनिरंतरंरामनमहंभजा
मि ५१ भवाब्धिपोतंभरताग्रजंतंभक्तिप्रियंभानुकुलप्रदीपम् ॥ भूताधिनाथंभुवनाधिपत्यंभजामिरामंभवरोगवैद्यम् ५२ सर्वाधिपत्यंरणरंगधीरंसत्यंचिदानंदसुखस्वरू
पम् ॥ सत्यंशिवंसज्जनहृन्निवासंध्येयंपरानंदमहंभजामि ५३ कार्यक्रियाकारणमप्रमेयंकविंपुराणंकमलायताक्षम् ॥ कुमारवेषंकरुणामयंतंकल्पद्रुमंराममहंभजामि ५४
त्रैलोक्यनाथंसरसीरुहाक्षंदयानिधिंद्वंद्वविनाशहेतुम् ॥ महाबलंवेदनिधिंसुरेशंसनातनंराममहंभजामि ५५ वेदांतवेद्यंकविमीशितारमनादिमध्यांतमचिंत्यमाद्यम् ॥
अगोचरंनिर्मलमेकरूपंपरात्परंराममहंभजामि ५६ अशेषवेदात्मकमादिदेवमजंहरिंराममनंतमूर्तिम् ॥ अपारसंवित्सुखमेकरूपंनमामिरामंतमसःपरस्तात् ५७ तत्त्वस्व
रूपंपुरुषंपुराणंस्वतेजसापूरितविश्वमेकम् ॥ राजाधिराजंरविमंडलस्थंविश्वेश्वरंराममहंभजामि ५८ योगींद्रसंघैरपिसेव्यमानंनारायणंनिर्मलमादिदेवम् ॥ नतोऽस्मि
नित्यंजगदेकनाथंहरिंचिदानंदमयंमुकुंदम् ५९ अशेषविद्याधिपतिंनमामिरामंपुराणंतमसःपरस्तात् ॥ विभूतिदंविश्वसृजंविराजंराजेंद्रमीशंरघुवंशनाथम् ६०
अचिंत्यमव्यक्तमनंतरूपंज्योतिर्मयंराममहंभजामि ॥ अशेषसंसारविकारहीनमानंदसंपूर्णसुखाभिरामम् ६१ नारायणंविष्णुमहंभजामिसमस्तसाक्षिंतमसःपर
स्तात् ॥ मुनींद्रगुह्यंपरिपूर्णमेकंकलानिधिंकल्मषनाशहेतुम् ॥ परात्परंयत्परमंपवित्रंनमामिराममहतोमहांतम् ६२ ब्रह्माविष्णुश्चरुद्रश्चदेवेंद्रोदेवतास्तथा ॥
आदित्यादिग्रहाश्चैवत्वमेवरघुनंदन ६३ तापसाऋषयःसिद्धाःसाध्याश्चमुनयस्तथा ॥ विप्रावेदाश्चयज्ञाश्चपुराणंधर्मसंहिताः ६४ वर्णाश्रमास्तथाधर्मावर्णध

१ वालिप्रमथनमितिपाठः । २ मेकमेवेतिपाठः ।

र्मास्तथैवच ॥ नागायक्षाश्चगंधर्वादिक्पालादिग्गजादिशः ६५ वसवोऽष्टौत्रयःकालारुद्राएकादशस्मृताः ॥ तारकाद्वादशादित्यास्त्वमेवरघुनायक ६६ समद्वी
पाःसमुद्राश्चनदानद्यस्तथाद्रुमाः ॥ स्थावराजंगमाश्चैवत्वमेवरघुनंदन ६७ देवतिर्यङ्मनुष्याणांदानवानांदिवौकसाम् ॥ मातापितातथाभ्रातात्वमेवरघुनंदन ६८
सर्वेशस्त्वंपरंब्रह्मत्वद्रूपंविश्वमेवच ॥ त्वमक्षरंपरंज्योतिस्त्वमेवरघुपुंगव ६९ शांतंसर्वगतंसूक्ष्मंपरंब्रह्मसनातनम् ॥ राजीवलोचनंरामंप्रणमामिजगत्पतिम् ७० ततःप्र
सन्नःश्रीरामःप्रोवाचवृषभध्वजम् ॥ श्रीरामउवाच ॥ तुष्टोऽहंगिरिजाकांतवृणीष्ववरमुत्तमम् ७१ ॥ श्रीशिवउवाच ॥ यदितुष्टोऽसिदेवेशश्रीरामकरुणानिधे ॥ तवाद्य
दर्शनेनैवकृतार्थोऽहंनसंशयः ७२ धन्योऽहंकृतकृत्योऽहंपुण्योहंपुरुषोत्तम ॥ अद्यमेसफलंकर्मह्यद्यमेसफलंतपः ७३ अद्यमेसफलंज्ञानमद्यमेसफलंश्रुतम् ॥ अद्यमेसफलं
सर्वंत्वत्पदांभोजदर्शनात् ७४ अद्वैतंविमलंज्ञानंत्वन्नामस्मरणंतथा ॥ त्वत्पदांभोरुहद्वंद्वेसद्भक्तिंदेहिराघव ७५ ततःपरंसुसंप्रीतोरामःप्राहसदाशिवम् ॥ गिरिजेशमहाभा
गपुनरिष्टंददाम्यहम् ७६ ॥ श्रीशिवउवाच ॥ वरंनयाचेरघुनाथयुष्मत्पदाब्जभक्तिःसततंममाऽस्तु ॥ इदंप्रियंनाथवरंप्रयच्छपुनःपुनस्त्वामिदमेवयाचे ७७ ॥ राम
दासउवाच ॥ इत्येवमीडितोरामःप्रादात्तस्मैवरांतरम् ॥ तेनोक्तंस्तवराजायददौनानावरान्बहून् ७८ एवंशिवेनयःप्रोक्तःस्तवराजःशुभावहः ॥ सएवाऽद्यत्वयापृष्टस्तवा
ग्रेकथितोमया ७९ अयंश्रीरघुनाथस्यस्तवराजोह्यनुत्तमः ॥ सर्वसौभाग्यसंपत्तिदायकोमुक्तिदःस्मृतः ८० कथितोगिरिजेशेनवेदानांसारसंग्रहः ॥ गुह्याद्गुह्यतरोनित्य
स्तवस्नेहात्प्रकीर्तितः ८१ यःपठेच्छृणुयाद्वापित्रिसंध्यंश्रद्धयान्वितः ॥ ब्रह्महत्यादिपापानितत्समानिबहूनिच ८२ हेमस्तेयसुरापानगुरुतल्पायुतानिच ॥ गोवधाद्यु
पपापानिचिंतनात्संभवानिच ८३ सर्वैःप्रमुच्यतेपापैःकल्पायुतशतोद्भवैः ॥ मानसंवाचिकंपापंकर्मणासमुपार्जितम् ८४ श्रीरामस्मरणेनैवव्यपोहतिनसंशयः ॥ इदंस
त्यमिदंसत्यंसत्यंनैवान्यदुच्यते ८५ रामःसत्यंपरंब्रह्मरामात्किंचिन्नविद्यते ॥ तस्माद्रामस्वरूपंहिरामःसर्वमिदंजगत् ८६ श्रीरामचंद्ररघुपुंगवराजवर्यराजेंद्ररामरघुनाय
कराघवेश ॥ राजाधिराजरघुनायकरामचंद्रदासोऽहमद्यभवतःशरणागतोऽस्मि ८७ उत्फुल्लामलकोमलोत्पलदलश्यामायरामायचाकामायप्रशमायनिर्मलगुणग्रामायरा
मात्मने ॥ ध्यानारूढमुनींद्रमानससरोहंसायसंसारविध्वंसायस्फुरदोजसेरघुकुलोत्तंसायपुंसेनमः ८८ एवंशिष्यमयाप्रोक्तोयथापृष्टस्त्वयामम ॥ स्तवराजोराघवस्यश्रव
णात्पापनाशनः ८९ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे विलासकाण्डे वाल्मीकीये शंकरकृतरघुवीरस्तवराजोनाम प्रथमःसर्गः ॥ १ ॥
॥ विष्णुदासउवाच ॥ गुरोतेप्रष्टुमिच्छामितत्त्वंमांवक्तुमर्हसि ॥ अयोध्यायांराघवेणसीतयाऽतिसुरूपया १ कथंभुक्तावराभोगाःकिंकिमाचरितंशुभम् ॥ चरित्रंतस्यसकलं
वदमंगलदायकम् २ ॥ रामदासउवाच ॥ सम्यक्पृष्टंत्वयावत्ससावधानमनाःशृणु ॥ रणदीक्षांवाजिमेधदीक्षांचरघुनंदनः ३ निर्वाप्यसीतयारेमेऽयोध्यायांबंधुभिःसु
खम् ॥ जानकींरंजयामासनानाभोगैर्मनोहरैः ४ तत्किंचिच्छृणुमांगल्यंविलासचरितंशुभम् ॥ सीतयाकोसलेंद्रस्यश्रवणान्मंगलप्रदम् ५ कःकृत्स्नंचरितंवक्तुंतयोः

१ सीतायाःइतिपाठः ।

क्रीडान्वितंक्षमः ॥ अतःसंक्षेपतःकिंचिद्वक्ष्यामितवसन्निधौ ६ अथसीतायुतोरामःपार्वत्याशंकरोयथा ॥ क्रीडांचकारकैलासेऽयोध्यायांसतथाऽकरोत् ७ हेमरत्नमये
दिव्यगेहेवैकुंठसन्निभे ॥ निद्रास्थानंराघवस्यमनोज्ञंशशिसन्निभम् ८ भित्तौरत्नोपलायत्रहेम्नःपंकोऽस्तियत्रहि ॥ यत्रस्तंभाःस्फाटिकाश्चयत्रमारकतोद्भवाः ९ प्रतो
ल्यःशतशोरम्याःशे१षंनीलादिभिःश्रितम् ॥ मुकुरैरुज्ज्वलायत्रभित्तयश्चित्रचित्रिताः १० यत्रहेममयीभूमिर्यत्रमुक्तामयंशुभम् ॥ वितानंपुष्पहारैश्चमुक्तागुच्छैर्विराजि
तम् ११ हेमतंतुमयान्यत्रभित्तिवस्त्राण्यनेकशः ॥ यत्रायुतमनुष्येश्चसंमर्दोनैवजायते १२ एवंतद्विस्तृतंरम्यंरत्नदीपैर्विराजितम् ॥ हेमकुंभाविराजंतेप्रासादाग्रेपुचित्रि
ताः १३ यत्रचित्राण्यनेकानिमोहयंतिदृगीदृशाम् ॥ यत्रहेममयारम्याःपर्यंकाश्चित्रचित्रिताः १४ हेमकौशेयसंभूततंतुपट्टैर्विगुंफिताः ॥ महार्हवसनैःपुष्पजालैराच्छा
दिताःशुभाः १५ चतुष्कोणेलंबमानमुक्ताघोषैर्विराजिताः ॥ येषुदिव्याःकशिपवस्तथोपबर्हणानिच १६ केकिपक्षमयान्येषुचामराणिमहांतिच ॥ गोपुच्छतालखर्जूरी
संभवादीनिसंतिहि १७ चतुष्कोणेपुसर्वेषांमंचकानांमहोज्ज्वलाः ॥ रत्नदीपाःप्रकाशंतेसदैवाग्निशिखोपमाः १८ उशीरव्यजनादीनिचामरादीनिसंतिहि ॥ यत्रतांबूलपात्रा
णिहेमरत्नोद्भवानिच १९ तथानिष्ठीवनार्थंहिपात्राणिराजतानिच ॥ यत्ररंभोपमादास्यःशतशोरत्नभूषिताः २० चामरैर्वीजयंत्यश्चसीतारामावहर्निशम् ॥ यत्रहेममयाश्चि
त्राबद्धास्तेपंजराःशुभाः २१ येयागेन्नृपपत्नीभिःश्रीसीतायाःसमर्पिताः ॥ येषुवैकेकिनोहंसाःसारसाःसारिकाःशुकाः २२ लावकाःकोकिलाद्याश्चनानायेऽन्येपतत्रिणः ॥
नानाशब्दान्प्रकुर्वंतःशतशस्तेपुसंस्थिताः २३ तेषांशब्दस्यशिष्यत्वांकिंप्राकट्यंवदाम्यहम् ॥ येरामस्मरणेनैवजीवन्मुक्तानसंशयः २४ ॥ पक्षिणऊचुः ॥ जयतुराघवो
जानकीयुतोजयत्वखिलराजराजेश्वरः ॥ दशरथात्मजोलक्ष्मणाग्रजोजयतुमापतिस्ताटिकांतकः २५ जयतुकौशिकस्याध्वरंगतोजयतुरक्षसांमारकोमहान् ॥ जयतुगौत
माहल्ययास्तुतोजयतुजानकीतातमानितः २६ जयतुनःपतिश्चापखंडनोजनकजाकरान्मुक्तमालया ॥ नृपसभांगणेकौशिकानुगःपरमशोभितश्चाऽतिहर्षितः २७
जयतुभूमिजांघ्योस्तदामुदानिजकरोत्पलेस्थाप्यराघवः ॥ कं२मलहस्तकेनाकरोन्नतिंसरघुनंदनःपातुनःसुखम् २८ जयतुभूमिजालिंगितोमहान्जनमनोहरश्चाऽतिशो
भनः ॥ पै३रशुरामदंष्टत्यवैधनुर्निजपितुस्तदादर्शयन्बलम् २९ जयतुसीतयाभोगकृच्चिरंजयतुकैकयीप्रेरितोवनम् ॥ जयतुपर्वतेवासकृच्चिरंजयतुयोऽत्रिणापूजितोवने ३०
जयतुयोविराधस्यघातकृज्जयतुदूषणादिप्रमर्दनः ॥ जयतुयोमृगंमोचयद्भवाज्जयतुयःकबंधंक्षणाज्जहौ ३१ जयतुवालिहासेतुकारकोजयतुरावणादिप्रमर्दकः ॥ जयतु
स्वंपदंप्रापसीतयाजयतुमंगलस्नानकृन्मुदा ३२ जयतुवाक्यतोभूसुरस्ययस्सकलभूतलंपर्यटन्चिरम् ॥ जयतुयागकृल्लोकशिक्षयाजयतुजानकींरंजयन्स्थितः ३३
॥ श्रीरामदासउवाच ॥ रघुवरस्ययत्पक्षिभिःकृतंनवकमुत्तमंयःपठिष्यति ॥ तपननिर्गमेभक्तितत्परोनिजमनोऽर्थितंसंगमिष्यति ३४ एतादृशेरम्यगेहेमयाशिष्य
प्रवर्णिते ॥ सीतयासमुखंरेमेचैकपत्नीव्रतस्थितः ३५ अथसाजानकीदेवीरंजयामासराघवम् ॥ स्थितंमंचकवर्येतंनिजक्रीडादिकौतुकैः ३६ मंचकस्थश्चश्रीराम

१ श्वेदनीलादिभिःश्रितांइतिपाठः । २ राघवश्चेतिपाठः । ३ कमलंयस्तकेनेतिपाठः । ४ भृगुभवार्पितमितिपाठः ।

स्त्वेकदासुखनिर्भरः ॥ सीतासौंदर्यमालोक्यवर्णयामासतांमुदा ३७ हेसीतेकंजनयनेब्रह्मणात्वंकथंचिता ॥ जानाम्यहंवितर्केणतेनत्वंनिर्मिताऽसिन ३८ त्वद्रूपसह
शींनान्यांपश्याम्मिजगतीतले ॥ प्रतिपच्चंद्रकळयास्पर्धयंतिनखानिते ३९ नखमध्यारक्तवर्णांशुभादाडिमबीजवत् ॥ अंगुष्ठौवर्तुलौरम्यौशिश्वंगुष्ठोपमौतव ४० मृदुले
तेपादतलेकंजपत्रांतरोपमे ॥ समेरेखाध्वजयुतेस्वस्तिकादिसुचिन्हिते ४१ सीतेतेंद्य्रूर्ध्वभागौतौनिर्लोमौमांसलौशुभौ ॥ अशिरौमृदुलौपीतौत्त्पत्नीवंदनोचितौ ४२
पादमूलेदधिजेनस्पर्द्धेतेरक्तत्र्वुले ॥ पादपृष्ठेसमेपीतेकोमलेलोमवर्जिते ४३ तवगुल्फौरक्तवर्णौवर्तुलौमांसलौशुभौ ॥ जंघेगोपुच्छसदृशेवर्तुलेमांसलेशुभे ४४ निर्लोमेमृदु
लेपीतेह्यशिरेसरलेवरे ॥ वर्तुलौतेमहाजानूमांसलौबीजपूरवत् ४५ रंभास्तंभोपमेचोरूमांसलौत्वतिकोमलौ ॥ पीतौघनौवर्तुलौतौविलोमौमेसुखोचितौ ४६ जघनं
मांसलंरम्यंवर्तुलंगजकुंभवत् ॥ पीतंविलोमंसुस्निग्धंममचित्तैकमोहनम् ४७ नाहंतेवर्णनेशक्तोरतिस्थानस्यभामिनि ॥ गंभीरावर्तुलानाभिस्तवरम्याप्रदृश्यते ४८ वलि
त्रयंतुजठरेदृश्यतेतत्रिवेणिवत् ॥ मृगराजस्यकटिनातुल्यस्तेकटिरुत्तमः ४९ रम्यंतवोदरंसूक्ष्मंमृदुलंमांसलंशुभम् ॥ विलोमंपीतवर्णंचपुत्रोत्पत्तिविसूचकम् ५० वंशस्य
शकलेनैवस्पर्द्धतेतवमांसलः ॥ पृष्ठस्तंभःकोमलश्चनिम्नोलोमविवर्जितः ५१ पार्श्वेऽतिमृदुलेपीतेमांसलेलोमवर्जिते ॥ कुक्षीपीतेलोमहीनेमांसलेकिंचिदुन्नते ५२ हृदयं
कोमलंरम्यंमांसलंपीतमुन्नतम् ॥ विस्तीर्णंलोमहीनंचसुस्निग्धंसौख्यदंमम ५३ हेमकुंभसमानौद्वौकुचौपीनौघनौशुभौ ॥ गजशुंडादंडतुल्यौपीनौतेकोमलौभुजौ ५४
कशारम्याःकोमलाश्चतेतुल्योजनकात्मजे ॥ रक्तेपाणितलेशंखध्वजमत्स्यादिचिन्हिते ५५ मांसलेकोमलेप्रोच्चैःसुरेखामंडितेवरे ॥ करपृष्ठेलोमहीनेमांसलेकोमलेशुभे ५६
पीनौस्कंधौवर्तुलौतेजत्रुस्तेमांसपूरितः ॥ कंबुकंठोऽतिपीनश्चसवलित्रयउत्तमः ५८ मध्येनिम्नंसुपीनंतेचुबुकंवर्तुलंमृदु ॥ प्रवालबिंबसदृशश्चारक्तःकोमलोघनः ५८ सी
तेतेऽधोऽधरोभातिमधुरोऽमृतसन्निभः ॥ कुंदपुष्पकलिकयास्पर्द्धतेदशनास्तव ५९ सांद्राःकैत्रिमवर्णैश्चकृष्णवर्णामनोहराः ॥ हेमपुष्पैर्हेमतंतुबंधैश्चित्रविचित्रिताः ६०
ऊर्ध्वाधरःकोमलस्तेरक्तवर्णोविभात्ययम् ॥ ऋजुघ्राणसुन्नसंतेदिव्यंभातिमनोहरम् ६१ तवनेत्रेकंजपत्रतुल्येदीर्घेमनोहरे ॥ हरिणीनेत्रसदृशेकामबाणाविवप्रिये ६२ तव
कर्णौघनौपीनौबहुभारसहौवरौ ॥ तवसीतेऽतिसुस्निग्धेप्रोच्चेगंडस्थलेशुभे ६३ कशेभ्रुवौचापतुल्येकृष्णवर्णेसुकोमले ॥ ललाटंतवविस्तीर्णंमांसलंहिसमंमृदु ६४ गंगाकू
लोपमःसीतेसीमंतस्तवसुंदरः ॥ हेमतंतुसमानास्तेकेशाःस्निग्धाःसुकोमलाः ६५ मस्तकस्तवसूक्ष्मश्चवर्तुलोमांसलःशुभः ॥ वेणीबंधोवरःसीतेजघनेपतितस्तव ६६
चंपपुष्पोपमोवर्णःसौकुमार्यमपिप्रिये ॥ सीतेतवाननस्पर्द्धीशशांकःक्षयमापसः ६७ त्वन्नेत्रविजितासीतेमृगीधावतिकानने ॥ सीतेत्वद्भ्रुकुटिस्पर्द्धिचापंभग्नंमयापुरा ६८
२२ तवनेत्रकटाक्षेणमुनीनांमदनोद्भवः ॥ नेत्रयोस्तवचांचल्यंमकरान्लज्जयत्यहो ६९ तवघ्राणंशुकोदृष्ट्वाऽऽत्मानंधिक्धिककरोतिहि ॥ दृष्टोष्ठयोःशोणिमांतेसौकुमार्यमपिप्रि
ये ७० सहकारतरोश्चापिरक्तःकोमलपल्लवः ॥ लज्जयाहरितोभातित्यक्त्वास्वीयांसुरक्तताम् ७१ सौकुमार्यंतथात्यक्त्वालज्जयातेघनोऽपिसः ॥ एवंकिंकिंमयाकांतेसौं

१ अतिकोमलाविस्यर्थः । २ सपीतमितिपाठः । ३ 'दातवण' इतिमहाराष्ट्रभाषायाम् ।

 दर्यंतवजानाके ७२ वर्णनीयंमहदिव्यंयत्रब्रह्माऽपिकुंठितः ॥ इत्युक्काराघवःसीतांप्रीत्यातांपरिषस्वजे ७३ तच्छ्रुत्वावर्णनंस्वीयंलज्जयाऽवःकृतानना ॥ किंचि 
त्स्मिताननंकृत्वातस्थावंकेपतेश्वसा ७४ ॥ इतिश्रीशतकोटिरामायणांतर्गतश्रीमदानंदरामायणे विलासकांडे वाल्मीकीये सीतावर्णनंनामद्वितीयःसर्गः ॥ २ ॥ ॥
॥ ३ ॥ ॥ श्रीरामदासउवाच ॥ अथसाजानकीरामंविनयाल्लज्जिताब्रवीत् ॥ रामराजीवपत्राक्षकिंचित्प्रष्टुंममप्रभो १ वांछाऽस्तिचेत्करोष्याज्ञांतर्हिप्रच्छाम्यहंतव ॥
तत्सीतावचनंश्रुत्वाराघवःप्राहजानकीम् २ पृच्छस्वसीतेयत्तेस्तिप्रष्टव्यंमांसुखेनतत् ॥ माशंकांभजरंभोरुगुह्यंऽचापिवदामिते ३ तद्रामवचनंश्रुत्वानत्वातंप्राहजा
नकी ॥ रामराममहाबाहोकिंचिदुपदिशस्वमाम् ४ येनमांतवसंज्ञानंभविष्यतिमहोज्ज्वलम् ॥ तत्सीतावचनंश्रुत्वारामचंद्रोऽब्रवीद्वचः ५ सम्यक्पृष्टंत्वयासीतेशृ
णुष्वैकाग्रमानसा ॥ ममज्ञानायतेवच्मिपरंकौतूहलंशुभम् ६ ॥ श्रीरामचन्द्रउवाच ॥ सच्चिदानंदरूपाख्यसागरस्यतदिच्छया ॥ तरंगरूपयाऽऽत्मांशबिंदुःशु
द्धोविनिर्गतः ७ आत्मनामामातृभूतबुद्धेर्जठरसंभवः ॥ शुद्धसत्वांतःकरणंपिताचात्मनईरितः ८ तस्यात्मनश्चचत्वारोभेदास्तेवंधवःस्मृताः ॥ तूर्यावस्थस्तत्र
वरस्ततोजाग्रदवस्थकः ९ स्वप्नावस्थस्तृतीयश्चावरःसुषुप्त्यवस्थकः ॥ हृदयाकाशस्तत्स्थानंमनोवेगोवहिर्गमः १० मनोदुर्वृत्तिघातश्चमनोवेगस्यखंडनम् ॥ मा
यायोगस्ततस्तस्यपूर्वसंस्कारनिग्रहः ११ ततःकुबुद्धिहेतोर्हिभवारण्येऽटनंचिरम् ॥ दंभस्यनिग्रहस्तत्रपंचभूतात्मकास्थिरा १२ आत्मनःपर्णकुटिकाविश्रांति
स्थानमीरिता ॥ कामक्रोधलोभजयस्तत्राशाछत्रनंस्मृतम् १३ मोहस्यनिग्रहस्तत्रशुद्धमायाश्रयस्ततः ॥ रजोरूपातुयामायाजठराग्नौतदास्मृता १४ तामस्या
श्चैवमायायावियोगश्चतदास्मृतः ॥ सुखालाभोमहान्क्लेशःशोकभंगस्ततःपरम् १५ विवेकस्याश्रयस्तत्रभक्त्युद्रेकसमागमः ॥ अविवेकवधश्चापिद्युत्साहेनसमागमः १६
अज्ञानतरणोपायस्त्रिगुणाश्रयसद्मनि ॥ लिंगाख्यनिग्रहस्तत्रमदस्यसंप्रकीर्तितः १७ निग्रहोमत्सरस्यापिततोऽहंकारनिग्रहः ॥ वियोगोलिंगदेहस्यमायानाभेक्यतात
तः १८ हृदयाकाशगमनमानंदैकसुखंततः ॥ मायात्यागस्ततश्चैवसात्विक्याग्रहणंस्मृतम् १९ सात्विक्यामाययासार्धंहृदयाकाशमुत्तमम् ॥ महाकाशेप्रणयनंसच्चिदा
नन्दसंज्ञके २० प्रवेशनंसागरेहिमुक्तिर्ज्ञेयात्मनःशुभा ॥ सायुज्याख्यापरिज्ञेयामुक्तिर्मुक्तिचतुष्टये २१ एवंमयेयंतेप्रत्यासीतेसंज्ञानपेटिका ॥ गूढार्थैर्वेदसारार्थैर्ज्ञानमतिना
शकैः २२ मज्ज्ञानदैःपंचदशश्लोकरत्नैःप्रपूरिता ॥ समर्पिताग्रहाणत्वमस्यांबुद्ध्याऽवलोकय २३ भविष्यतिममज्ञानमस्याःसम्यग्विचारतः ॥ तद्रामवचनंश्रुत्वा
सीतासंज्ञानपेटिकाम् २४ निजहृन्मंदिरेस्थाप्यबुद्धिदृष्ट्यामुहुर्मुहुः ॥ सम्यगुद्घाट्यतूष्णींसामुहूर्तमवलोकयत् २५ तदाज्ञात्वाऽथसकलांनिजक्रीडांविदेहजा ॥ विह
स्यरघुवीरस्यसाननामांघ्रिपंकजे २६ आनंदनिर्भराजातासानंदाऽश्रुसमन्विता ॥ आनंदोत्फुल्लरोमांचातूष्णीमासीत्तदाक्षणम् २७ आनंदनिर्भरांसीतांदृष्ट्वातांराघवो 
ब्रवीत् ॥ पेटिकायांत्वयासीतेकिंदृष्टंतोषकारकम् २८ कंचिद्रतंतवाऽज्ञानंकच्चिल्लब्धंमयात्वया ॥ संज्ञानंवदमांसीतेयथाज्ञातंत्वयाहृदि २९ ज्ञातंत्वयावानज्ञातंवेत्तुमिच्छा

१ मातृतश्चेतिपाठः । २ किंचिदितिपाठः ।

मित्वन्मुखात् ॥ यदिकिंचित्त्वयानास्यांज्ञातंतद्बोधयाम्यहम् ३० इतिरामवचःश्रुत्वानिमग्नाऽऽनंदसागरे ॥ मंचकस्थारामचन्द्रंजानकीवाक्यमब्रवीत् ३१
॥ श्रीसीतोवाच ॥ ॥ रामरावणदर्पघ्नत्वद्दत्ताज्ञानपेटिका ॥ मयाऽवलोकितातुभ्यालब्धंज्ञानंतवप्रभो ३२ निर्गुणोनिर्विकारस्त्वंक्रीडेयंसकलात्वया ॥ मत्संगाद्दर्शिता
भूम्यांकृत्वालोकहितायहि ३३ पेटिकायांयथाज्ञातंमयातत्प्रवदामिते ॥ त्वयापंचदशश्लोकैर्यद्गुक्तंगुह्यमुत्तमम् ३४ प्रकटंतत्करोम्यद्यतवाग्रेरघुनंदन ॥ सर्वेषांमंदबुद्धी
नांहितायज्ञानसिद्धये ३५ जनानांसंबोधयितुंचरित्रंभवताऽऽश्रयत् ॥ कृतंतस्यविचारेणह्यात्मज्ञानंलभेन्नरः ३६ सच्चिदानंदरूपोयोविष्णुर्ज्ञेयःससागरः ॥ भूभारहरणा
दीच्छाविष्णोर्याजायतेशुभा ३७ सवेज्ञेयस्तरंगोऽत्रतयात्मांशलवःशुभः ॥ बहिःकृतःसागरात्सआत्माख्यःकथ्यतेभुवि ३८ तस्यबुद्धिस्तुजननीकौसल्यासाऽत्रकथ्य
ते ॥ शुद्धसत्वांतःकरणंपितातस्यात्मनःस्मृतः ३९ राजादशरथोज्ञेयःश्रीमान्सत्यपराक्रमः ॥ तस्यात्मनश्चचत्वारोभेदास्तेवैध्रुवःस्मृताः ४० रामसौमित्रिभरतशत्रुघ्ना
एवचाऽत्रहि ॥ तुर्यावस्थस्तेषुवरःसत्वंदशरथात्मजः ४१ ततोजाग्रदवस्थश्चलक्ष्मणःसोऽत्रकथ्यते ॥ स्वप्नावस्थस्तृतीयश्चभरतोऽपिनिगद्यते ४२ अवरःसुषुप्त्यवस्थ
स्तुज्ञेयःशत्रुघ्नएवसः ॥ हृदयाकाशंतत्स्थानमयोध्याऽत्रस्मृतातुसा ४३ मनोवेगोबहिर्यात्राविश्वामित्राध्वरेगमः ॥ मनोदुर्वृत्तिघातश्चताटिकायावधोऽत्रसः ४४ मनो
वेगस्ययोभंगःसधनुर्भंगउच्यते ॥ मायायोगस्ततस्तस्यमत्पाणिग्रहणंस्मृतम् ४५ पूर्वसंस्कारनिग्रहोजामदग्न्येर्विनिग्रहः ॥ ततोकुबुद्धिहेतोर्हिकैकेय्यावरदानतः ४६
भवारण्येऽटनंप्रोक्तमटनंदंडकेऽत्रते ॥ दंभस्यनिग्रहस्तत्रविराधस्याऽत्रनिग्रहः ४७ आत्मनःपर्णकुटिकापंचभूतात्मकश्चलः ॥ देहोऽयंपंचवटिकाविश्रांत्यर्थंतवात्रसा ॥
४८ कामस्यनिग्रहःप्रोक्तःखरस्याऽत्रविनिग्रहः ॥ क्रोधस्यनिग्रहश्चापिदूषणस्यात्रनिग्रहः ४९ लोभस्यमर्दनंतत्रत्रिशिरानिग्रहोऽत्रहि ॥ तत्राशाछेदनंप्रोक्तंबाणेनाऽत्र
विरूपणम् ५० तस्याःशूर्पणखायाश्चमोहस्यनिग्रहःस्मृतः ॥ मृगमारीचघातोऽत्रशुद्धमायाश्रयस्ततः ५१ ममाश्रयस्तेवामांगेसात्विक्यादंडकेवने ॥ रजोरूपातुया
मायाजठराग्नौस्मृताशुभा ५२ ममरजःस्वरूपायाःप्रवेशश्चानलेऽत्रसः ॥ तामस्याश्चैवमायायावियोगश्चतदास्मृतः ५३ ममतमःस्वरूपायाहरणंरावणेनाहि ॥ सुखा
लाभोमहान्क्लेशस्त्वत्तोमद्विरहस्तव ५४ शोकभंगस्ततःप्रोक्तःकबंधस्यवधोऽत्रसः ॥ विवेकस्याश्रयस्तत्रसुग्रीवस्याश्रयोऽत्रसः ५५ भक्त्युद्रेकप्रलाभश्चतवलाभोहनू
मतः ॥ अविवेकवधःप्रोक्तश्चात्रवालिवधस्त्वया ५६ उत्साहेनततःसंगःसाविभीषणमैत्रिकी ॥ अज्ञानतरणोपायःसेतुबंधोमहोदधौ ५७ त्रिगुणाश्रयगेहेवैलिंगदेहाह्व
येशुभे ॥ त्रिकूटाचलसंस्थायांलंकायांरघुनंदन ५८ मदस्यनिग्रहस्तत्रकुंभकर्णवधस्त्वया ॥ निग्रहोमत्सरस्याऽपिमेघनादवधोऽत्रसः ५९ तत्राहंकारघातश्चरावणस्य
वधस्त्वया ॥ मायानामैक्यताचाऽपित्रिविधायाममैक्यता ६० वियोगोलिंगदेहस्यलंकात्यागस्त्वयाऽत्रसः ॥ हृदयाकाशगमनमयोध्यागमनंपुनः ६१ आनंदैकसुखं
तत्रराज्यभोगस्त्वयाऽत्रहि ॥ मायात्यागस्ततश्चैववाल्मीकेराश्रमेमम ६२ त्यागोऽप्येमाविश्रीरामत्वयासोऽत्रप्रकाशितः ॥ सात्विक्याग्रहणंयच्चपुनर्मेग्रहणंस्मृतम् ६३
सात्विक्यामाययासार्द्धंतवोद्योगोमयासह ॥ ततश्चहृदयाकाशंमहाकाशेविलापयेत् ६४ अयोध्यानगरीमग्रेवैकुंठंप्रतिनेष्यसि ॥ प्रवेशनंसागरेहिसाचिदानंदसंज्ञके ६५

नररूपंपरित्यज्यविष्णुरूपप्रदर्शनम् ॥ नृणांत्वयासैवमुक्तिःसायुज्यात्मनईरिता ६६ एवंयद्यत्त्वयारामकृतंकर्मशुभाशुभम् ॥ तत्सर्वंजनबोधायसर्वेषांचहितायहि ६७
कर्तव्यमप्यकर्तव्यंकर्मातीतस्यकिंतव ॥ निर्गुणस्यात्मरूपस्यसच्चिदानंदरूपिणः ६८ इत्थंत्वयोपदिष्टामेशुभासंज्ञानपेटिका ॥ अहंतस्याविचारेणजीवन्मुक्तानसंशयः
६९ देहेरामायणंसर्वंयत्त्वयाममदर्शितम् ॥ पंचदशश्लोकरत्नैःकंठेतद्धारवत्कृतम् ७० श्लोकरत्नमयंयोवैकंठेहारंबिभर्तिहि ॥ जीवन्मुक्तःक्षणादेवभविष्यतिनरोत्तमः ॥
७१ देहरामायणंनामरामयत्कथितंत्वया ॥ नेदृशंकथितंकेननकोप्यग्रेवदिष्यति ७२ ममप्रीत्योपदिष्टंहित्वयैतद्रघुनंदन ॥ इत्थंकोऽपिनजानातिब्रह्मादीनामगोचरम् ॥
७३ गुह्यंरम्यंसुदुर्बोधंस्वल्पंज्ञानप्रकाशितम् ॥ देहरामायणंचैतच्छ्रवणात्पातकापहम् ७४ इतिसीतावचःश्रुत्वाप्रहस्यराघवोऽब्रवीत् ॥ विदेहतनयेसाध्विधन्याऽसिग
जगामिनि ७५ सम्यग्विचारितावुद्ध्यात्वयासंज्ञानपेटिका ॥ किंचिन्न्यूनंत्वयानैवदृष्टमस्यांयथास्थितम् ७६ वुद्ध्याज्ञानंममज्ञानंमोहजालनिकृंतनम् ॥ देहरामायणं
नामकथनीयंनकस्यचित् ७७ एतद्गुह्यतमंप्रोक्तंतवप्रीत्याविदेहजे ॥ दांभिकायनदातव्यंनास्तिकायशठायच ७८ अभक्तायद्विजद्वेष्ट्रेपरदाररतायच ॥ मलिनायाऽति
क्रूरायनिंदकायजडायच ७९ कलौचैतत्तुवैगुह्यंभविष्यतिनसंशयः ॥ सहस्रेपुनरःकश्चिज्ज्ञास्यत्येतन्नसंशयः ८० सर्ववेदांतसारंहिमयातेसमुदीरितम् ॥ देहरामायणंचै
तदुक्तिमुक्तिप्रदंवरम् ८१ इत्युक्त्काराघवःसीतांपर्यंकेरत्नमंडिते ॥ सुष्वापसीतयारात्रौदासीभिर्वीजितःसुखम् ८२ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरा
मायणे वाल्मीकीये विलासकांडे देहरामायणंनामतृतीयःसर्गः ॥ ३ ॥ ॥ श्रीरामदासउवाच ॥ चतुर्नाडचवशिष्टायांनिशायांरघुनायकम् ॥ उद्बोधनार्थंसं
प्राप्तारतिशालाबहिस्स्थिताः १ बंदिनोमागधाःसूतानर्तक्यश्चनटादयः ॥ वादयामासुर्वाद्यानिनृतुश्चाप्सरोगणाः २ जगुर्मंगलगीतानिस्तोत्राणिविविधानिच ॥ प्राभा
तिकींस्तुतिंप्रोचुःकलकंठैर्मनोरमैः ३ विघ्नेश्वरःसकलविघ्नविनाशदक्षोदक्षात्मजाभगवतीचसरस्वतीच ॥ दक्षाष्टभैरवगणानवदिव्यदुर्गादेव्यःसुरास्तुनृपतेतवसुप्रभातम्
४ भानुःशशीकुजबुधौगुरुशुक्रमंदाराहुःसकेतुरदितिर्दितिरादितेयाः ॥ शक्रादयःकमलभूःपुरुषोत्तमेंद्रोरुद्रःकरोतुसततंतवसुप्रभातम् ५ पृथ्वीजलंज्वलनमारुतपुष्करा
णिसप्ताद्रयोऽपिभुवनानिचतुर्दशैव ॥ शैलावनानिसरितःपरितःपवित्रागंगादयोविदधतांतवसुप्रभातम् ६ दिक्चक्रमेतदखिलंदिगिभादिगीशानागाःसुपर्णभुजगानगवी
रुधश्च ॥ पुण्यानिदेवसदनानिबिलानिदिव्यान्यव्याहतंविदधतांतवसुप्रभातम् ७ वेदाःषडंगसहिताःस्मृतयःपुराणंकाव्यंसदागमपथोमुनयोऽपिदिव्याः ॥ व्यासादयःपर
मकारुणिकाऋषीणांगोत्राणिवैविदधतांतवसुप्रभातम् ८ इतिबंदिजनैःसूतैःस्तोत्रैर्गीतादिभिःस्तुतः ॥ नानापक्षिसमूहैश्चपूर्वोक्तैःपंजरस्थितैः ९ स्तुतोवादित्रनिनदै
र्नववाद्यस्वनैरपि ॥ सुप्रबुद्धोबभूवाथरामचंद्रःससीतया १० आदौप्रबुद्धासासीतापश्चाद्बुद्धोरघूत्तमः ॥ रामःसुरान्मुनींस्तातंमातरंसरयूंगुरुम् ११ चिंतामणिंकाम
धेनुंचिंतयामासचेतसि ॥ ततःसीताऽपिसादुर्गांगंगांवाणींरघूत्तमम् १२ चिंतयामासकौसल्यांगुरुपत्नींस्वमातरम् ॥ ततोनत्वारामचंद्रंविनयावनतास्थिता १३ आ

१ देवात्सुरास्त्वितिपाठः । २ सुपर्णनिचयाइतिपाठः ।

वश्यकंतुसंपाद्यकृत्वाशौचविधिंक्रमात ॥ दंतशुद्धिंचकाराऽथरामचंद्रःसविस्तराम् १४ ततःस्नात्वारम्यतीर्थेकृत्वानित्यविधिंशुभम् ॥ हुत्वाऽग्निहोत्रविधिनाकृत्वादेवा
र्चनंगृहे १५ ददौदानान्यनेकानिब्राह्मणेभ्योयथाक्रमम् ॥ एतस्मिन्नंतरेसीतास्नात्वादेवींप्रपूज्यच १६ देवानग्नीन्द्विजान्नत्वाश्वश्रूर्नत्वाययथाक्रमम् ॥ ततोनत्वारामचं
द्रंतत्पार्श्वेयत्नतःस्थिता १७ अथरामोवसिष्ठस्यमुखात्पौराणिकींकथाम् ॥ सीतयामातृभिर्युक्तोबंधुभिश्चसुहृज्जनैः १८ सम्यक्श्रुत्वैकचित्तेनपूजयामासतंगुरुम् ॥ ततो
नत्वागुरुंरामोगुरुपत्नींचमातरम् १९ सर्वामातृश्चविप्रांश्चपंडितान्वेदिकान्मुनीन् ॥ योगनिष्ठांस्तपोनिष्ठान्विप्रान्ज्योतिर्विदस्तथा २० मीमांसकांस्तार्किकांश्चमंत्र
शास्त्रविशारदान् ॥ धर्मशास्त्रविदश्चैववंद्यानन्यान्वयोधिकान् २१ पूजयामासश्रीरामःसीतयाप्रणनामतान् ॥ अथसीताहेमपात्रेपूजोपकरणानिसा २२ गृहीत्वास्वस
खीभिश्चनत्वासुरभिमर्चयत् ॥ नानोपचारैःसम्पूज्यपक्वान्नैर्वन्हिनिर्मितैः २३ विचित्रैःपायसाद्यैश्चसातांधेनुमतोषयत् ॥ ततःप्रदक्षिणांकृत्वाप्रार्थयामासजानकी २४ का
मधेनोनमस्तुभ्यंपक्वान्नादीनिवेगतः ॥ दिव्यान्नानिभूसुरेभ्योरामादिभ्यस्त्वमर्पय २५ इतिसाप्रार्थनांकृत्वाकामधेनोस्तुजानकी ॥ तदधोरुक्मपात्राणिस्थापयामास
कोटिशः २६ दिव्यान्नैःपरिपूर्णानिचकारसुरभिस्त्वपि ॥ ततःशीघ्रंहेमपात्रैर्गृह्यान्नानिपृथग्जवात् ॥ परिवेषणार्थसन्तुष्टाययौनूपुरगर्जिता २७ एतस्मिन्नन्तरेरामश्चो
पहारार्थमादरात् ॥ विप्रानिष्टान्मन्त्रिणश्चसमाहूयसहस्रशः २८ उपाविशद्भोजनस्यशालायांतैःसमन्वितः ॥ रुक्मपीठेपुसर्वेतेनेमिरेखोपमाःस्थिताः २९ पीतकौशे
यवस्त्राद्यैर्भूषितारुक्ममण्डनैः ॥ पूजिताराघवेणाऽपिगन्धमाल्यादिभिर्मुदा ३० स्त्रीभीरुक्मत्रिपदासुरुक्मपात्राणिचपृथक् ॥ रंगावलीविचित्रायांभूम्यांन्यस्तानितत्पुरः
३१ हेमोद्भवानिपानीयपात्राण्यपिपृथक्पृथक् ॥ सोपपात्राणिचित्राणिरत्नदीपयुतानिच ३२ स्थापयामासुःश्रीरामबन्धुपत्न्यस्त्वरान्विताः ॥ एतस्मिन्नन्तरेसर्वैःश्रु
तोमंजुलनिःस्वनः ३३ नूपुराणांकिंकिणीनांकंकाणानांमनोरमः ॥ रत्नमौक्तिकमालानांघर्षणादुत्थितोमहान् ३४ तंमंजुलस्वनंश्रुत्वाकस्याऽयंश्रूयतेस्वनः ॥ इतिसं
दिग्धचित्तास्तेव्यग्रनेत्रैरितस्ततः ३५ अपश्यन्ब्राह्मणाद्याश्चतावत्सीतांव्यलोकयन् ॥ तडित्पुंजोपमांदिव्यांशतकोटिरविप्रभाम् ३६ यस्यांगुलिषुसर्वत्रपादयोर्विविधा
निच ॥ मच्छकच्छपनक्रादिचिन्हितान्युज्ज्वलानिच ३७ ददृशूरत्नचित्राणिहैमान्याभरणानिते ॥ ततऊर्ध्वंकिंकिणीनांपादयोर्नूपुराणिच ३८ शृंखलाविविधारम्या
स्तथागुर्जरदेशजाः ॥ नानानूपुरभेदाश्चकंकणान्युज्ज्वलानिच ३९ रत्नकंकणगर्भाणिदिव्यरुक्मोद्भवानिच ॥ ददृशुस्तेहिसीतायामाणिक्यचित्रितानिच ४० तस्याः
कट्यांददृशुस्तेपीतकौशेयमुज्ज्वलम् ॥ मुक्ताजालरुक्मतंतुपुष्पराजिविराजितम् ४१ नवीनंगतिचांचल्यात्कृतमंजुलनिःस्वनम् ॥ आदर्शबिंबसंयुक्तंसुगन्धामोदमो
दितम् ४२ वस्त्रोपरिददृशुस्तेरशनांरुक्मतन्तुजाम् ॥ रत्नकङ्कणगर्भाभिःकिंकिणीभिर्विराजिताम् ४३ केकिसिंहवृषव्याघ्रखगचित्रविचित्रिताम् ॥ पीतरक्तहरिन्नील
कृष्णमाणिक्यमण्डिताम् ४४ ततऊर्ध्वंददृशुस्तेपदकान्युज्ज्वलानिहि ॥ रंभाफलोपमान्येवहैमान्याभरणानिच ४५ सकांचनशृंखलानिकाचद्रवयुतानिच ॥ नानार
त्नविचित्राणिमुकुरैर्मंडितान्यपि ४६ नानामाणिक्ययुक्तानिदीप्तिमन्त्युज्ज्वलानिहि ॥ ततोददृशुस्तेदिव्यान्रुक्महारान्विचित्रितान् ४७ नवरत्नयुतान्हारान्मुक्ताहा

रांश्चशृंखलाः ॥ मूर्तिमालारुक्मजाश्चयवमालाविचित्रिताः ४८ पुष्पमालाःकांचनजाःसारिकारत्नमण्डिताः ॥ रुक्मगुंजान्वितामालाहेमधात्रिफलान्विताः ४९ प्र
वालमणिमुक्तासम्मिश्रिताश्चित्रचित्रिताः ॥ चंपसूक्ष्मकलिकयासदृशाहेममालिकाः ५० कण्ठेमंगलसूत्रंचपेटिकारत्नभूषिताः ॥ कांचनानांसुसूक्ष्माणांमणीनांविविधा
निच ५१ गुच्छैःकण्ठभूषणानिमुक्तागुच्छयुतान्यपि ॥ ददृशुस्तेहिसीतायाःकण्ठेहेमान्यनेकशः ५२ रशनासदृशान्येवग्रीवायांभूषणान्यपि ॥ प्रवालमणिमाणिक्यर
चितान्युज्ज्वलानिच ५३ मुक्तागुच्छान्काचगुच्छान्रत्नगुच्छान्विचित्रितान् ॥ प्रवालमणिगुच्छांश्चरत्नपुष्पविगुंफितान् ५४ ततोददृशुस्तेसर्वेमैथिलीकुचकंचुकीम्
हेमतन्तुमयींचित्रांमुक्तामाणिक्यगुंफिताम् ५५ आदर्शबिंबसंयुक्तांपुष्पराजिविराजिताम् ॥ मयूरशुकहंसैश्चलवंगैस्तन्तुनिर्मितैः ५६ चित्रितांश्रमघर्मेणार्द्रांसंलग्नांदृढं
तनौ ॥ ततोददृशुर्भुजयोःकेयूरेरत्नमण्डिते ५७ वक्रकंकणसादृश्येहेममाणिक्यनिर्मिते ॥ रत्नचित्रविचित्राश्चभुजयोःपेटिकाःशुभाः ५८ हेमतन्तुमयैर्लंबमानगुच्छैःसुम
ण्डिताः ॥ प्रवालमणिमुक्तानांनानागुच्छैर्युताअपि ५९ तदधःकरयोःसर्वेददृशुर्भूषणानिते ॥ रत्नमाणिक्यमुक्ताभिश्चित्रितौहेमसम्भवौ ६० करचूडौदीप्तिमंतौहेमपुष्पा
दिचित्रितौ ॥ काचकंकणमध्यस्थौचंद्रसूर्योपमौत्विषा ६१ तदूर्ध्वाधःकंकणानिहेमजानिघनानिच ॥ रत्नमाणिक्यमुक्ताभिश्चित्रितान्युज्ज्वलानिच ६२ प्रवालमणिमु
क्तानांकरहारादिचित्रितान् ॥ करयोःसारिकेदिव्येहूर्ध्वाधोरत्नमण्डिते ६३ तदूर्ध्वंकंकणान्येवपुष्पवल्ल्यंकितानिहि ॥ दंतराज्युपमादीनिरत्नहेमोद्भवानिच ६४ अंगु
लीषुददृशुस्तेमुद्रिकारुक्मनिर्मिताः ॥ रत्नमाणिक्यमुक्ताभिर्नीलमारकतैरपि ६५ प्रवालचंद्रकांतैश्चसूर्यकांतैर्विचित्रिताः ॥ नानापुष्पोपमादिव्याप्रतिपर्वसमाश्रिताः
६६ ततोददृशुःसीतायारम्यंघ्राणेऽतिसोज्ज्वलम् ॥ दिव्यंमयूरंचित्रंचवररुक्मविनिर्मितम् ६७ मणिमाणिक्यमुक्ताभिर्वररत्नैःसुमण्डितम् ॥ लंबितैर्मौक्तिकादीनांव
रगुच्छैःसुवेष्टितम् ६८ ततोददृशुःसीतायाःकर्णयोर्भूषणानिते ॥ मकरध्वजसादृश्येताटंकेरत्नचित्रिते ६९ मणिमाणिक्यमुक्ताभिर्गुंफितेसोज्ज्वलेवरे ॥ रत्नपुष्पादि
भिश्चित्रैश्चित्रितेरविभास्वरे ७० ततोभ्रमरिकेदिव्येरुक्मरत्नविचित्रिते ॥ मुक्ताभिर्गुंफितेरम्येहेमपुष्पाणिवैतथा ७१ कर्णयोःशृंखलाश्चित्रादददृशूरुक्मनिर्मिताः ॥ मु
क्तागुच्छैर्गुंफिताश्चरत्नमाणिक्यमण्डिताः ७२ आकर्णाभ्यांचसीमंतपर्यंतंभालपार्श्वयोः ॥ हारवद्रुक्मजालानिमाणिक्यसहितानिहि ७३ मुक्तागुच्छैर्गुंफितानि वैडूर्य
चित्रितान्यपि ॥ ततस्तदूर्ध्वंसीतायाददृशुःशिरसिद्विजाः ७४ सीमंतस्योत्तरेयाम्येकेशेषुशशिभास्करौ ॥ रुक्मजौरत्नवैडूर्यमणिमुक्ताविचित्रितौ ७५ नीलकाश्मीर
कांतैश्चविद्रुमैरतिशोभितौ ॥ चंद्रसूर्याविवस्वीयभासादीपयतोदिशः ७६ निटिलेतिलकंरत्नमणिमुक्ताविराजितम् ॥ हेमंदिव्यमुज्ज्वलंचकोटिसूर्यसमप्रभम् ७७
ततोददृशुःसीमंतेमुक्ताहारंमहोज्ज्वलम् ॥ नानारत्नविचित्रंचह्यावेणितिलकावधि ७८ चूडामणिंददृशुस्तेजनकेनसमर्पितम् ॥ नानारत्नविचित्रंचमुक्तागुच्छविराजि
तम् ७९ ततोददृशुःशिरसिमुक्ताजालानिभूसुराः ॥ हेमतन्तुगुंफितानिरत्नपुष्पयुतान्यपि ८० मणिवैडूर्यकाश्मीरविद्रुमैश्चित्रितानिहि ॥ तदूर्ध्वंपुष्पजालानिसुगंधी
निव्यलोकयन् ८१ ततोवेण्यांभूषणानिददृशुस्तेवराणिहि ॥ नानापक्ष्युपमान्येवमाणिक्यचित्रितानिहि ८२ पल्लवांतरवर्तीण्यतिदीप्युज्ज्वलानिच ॥ हेमतन्तुमयान्

गुच्छान्मुक्ताहारविमिश्रितान् ८३ लम्बमानान्ददृशुस्ते मणिमाणिक्यसंयुतान् ॥ वेण्यग्रेसंस्थितान्रम्यान्पुष्पापीडसमन्वितान् ८४ एवंसीतांददृशुस्तेश्रमन्यस्त
विभूषणाम् ॥ सर्वालङ्कारसहितांतांद्रष्टुंकोऽपिनक्षमः ८५ दिव्यालंकाररत्नानांप्रभयाहतलोचनाः ॥ वामहस्तेनपात्रंचदर्वींदक्षिणसत्करे ८६ दधानांपद्मचरणांर
क्तोत्पलकरांवराम् ॥ पद्मास्यांपद्मपत्राक्षींपद्मगर्भस्वरूपिणीम् ८७ दिव्यकर्पूरगंधैश्चचन्दनैरपिचर्चिताम् ॥ स्फुरन्मंजीरचरणांदिव्यकंकणमण्डिताम् ८८ स्व
पदालक्तवर्णेनगतिंदर्शयतींनिजाम् ॥ रत्नांगदधरांसीतांददृशुस्तेद्विजादयः ८९ गजेंद्रगमनांरम्यांदिव्यपुष्पैःसुशोभिताम् ॥ दिव्यमंदारकुसुममालाभिश्चसुशोभि
ताम् ९० कस्तूरीकृततिलकांकुंकुमेनसुशोभिताम् ॥ हरिद्रयाकज्जलाद्यैर्मंडितांचस्मिताननाम् ९१ इतिदृष्ट्वाजानकींतेऽभूवन्चित्रोपमास्तदा ॥ आत्मानंनविदुःसर्वे
सीतासौंदर्यविस्मिताः ९२ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणेवाल्मीकीयेविलासकांडेसीताऽलंकारवर्णनंनामचतुर्थःसर्गः ॥ ४ ॥ श्रीरामदासउवाच ॥
अथसीताक्षणेनैवचकारपरिवेषणम् ॥ हेमपात्रेषुसर्वेषांपक्वान्नैर्विविधैर्मुदा १ कामधेनूद्भवैश्चैवमण्डकान्पूर्णपूरितान् ॥ वटकान्फेनिकाश्चाऽपिपायसान्युज्ज्वलानिच २
पर्पटकान्लड्डुकांश्चकूष्मांडवडकांस्तथा ॥ सुमृष्टतंडुलकृतान्दधिक्षीरंघृतंमधु ३ पृथक्कांचनद्रोणेषुजानकीपर्यवेषयत् ॥ शर्कराःश्वेतवर्णाश्चतथैवखंडशर्कराः ४ मरिचाद्युप
चारैश्चसंस्कृतंतक्रमुत्तमम् ॥ घृतपाचितशाकाश्चह्युपशाकारुचिप्रदाः ५ तिलसम्मिश्रवटकानार्द्रकंबीजपूरकम् ॥ आम्रादीनांरसांश्चाऽपिरंभादीनिफलान्यपि ६ एवमादी
न्यनेकानिचोष्णानिविविधानिच ॥ तथालेह्यानिपेयानिजानकीपर्यवेषयत् ७ ततोरामःसुहृन्मित्रैःकथांकुर्वन्सुखेनसः ॥ अकरोदुपहारंचकरशुद्धिंविधायसः ८ सर्वेषांनिज
हस्तेनददौतांबूलमुत्तमम् ॥ स्वयंभुक्त्वाऽथतांबूलंवासांसिपरिधायसः ९ बध्वाशस्त्राणिसर्वाणिदृष्ट्वादर्शेनिजंमुखम् ॥ आरुह्यशिबिकांदिव्यांमुक्तागुच्छविराजिताम् १०
हेमैरत्नादिभिश्चित्रांययौनिजगृहाद्बहिः ॥ बन्धुभिःसचिवैरिष्टैर्दूतैःसर्वत्रवेष्टितः ११ स्तुतोवन्दिजनैःसर्वैर्ययौसजननीगृहम् ॥ तत्रनत्वाऽथकौसल्यांतथामातृर्य
थाक्रमम् १२ आशीर्भिरीडितस्ताभिर्ययौरामःसभांवराम् ॥ तत्रसिंहासनेस्थित्वामंत्रिभिर्लक्ष्मणादिभिः १३ राजकार्याणिसर्वाणिचकारनीतिमत्तरः ॥ शशास
राज्यंधर्मेणवृद्धिमांश्चारलोचनः १४ अथसीतोपहारंस्वसखीभिश्चोर्मिलादिभिः ॥ देवराणांकामिनीभिःस्वसृभिश्चाऽकरोत्सुखम् १५ करशुद्धिंविधायाऽथभुक्त्वा
तांबूलमुत्तमम् ॥ परिधायहरिद्रस्त्रंतथारक्तांतुकञ्चुकीम् १६ हेमतन्तुसुपुष्पाढ्यांमुक्ताजालविगुंफिताम् ॥ गेहांतर्वर्त्युपवनशालायांसंस्थिताऽभवत् १७ स
खीभिर्वेष्टितारम्याधृताऽर्घोकोपवर्हणा ॥ ततोदिव्यानलंकारान्निजदेहेदधारसा १८ येमयाकथितानिवपूर्वंन्यस्तान्क्रमेणतान् ॥ कस्तेषांवर्णनेशक्तोभवेदत्रनरो
त्तमः १९ चतुरास्यःकुंठितोऽभूत्पञ्चास्यश्चषडाननः ॥ उच्चैःश्रवाश्चसततास्यःसहस्रास्योऽपिवर्णने २० श्रुत्वासीतासुपवनेगतांतेजलपूरकाः ॥ जलयंत्राणिसर्वा
णिचक्रुर्मुक्तानिवेगतः २१ रत्नमञ्चकसंस्थासासीताचामरवीजिता ॥ जलयन्त्रकौतुकानिददर्शनगवीरुधः २२ एतस्मिन्नन्तरेरामोराजकार्याणिकृत्स्नशः ॥ कृत्वा
ययौसभायाःसनिजगेहंतुबन्धुभिः २३ तदादुन्दुभिनिर्घोषानवाद्यस्वनाअपि ॥ शंखानांगोमुखानांचभेरीणांतुमुलस्वनाः २४ बभूवुर्यत्रशब्दाश्चतूर्यादीनांस्वनाः

शुभाः ॥ ननृतुर्वारनार्यश्च तुष्टुवुर्मागधादयः २५ तंस्वनंजानकीचाऽपिश्रुत्वाचोपवनेस्थिता ॥ सम्भ्रमेणसमुत्तीर्यमञ्चकाऽधोवरानना २६ वामहस्तेझर्झरींतांहुपपा
त्रंतुदक्षिणे ॥ धृत्वाकरेसावैदेहीरामंप्रत्युज्जगामवै २७ एतस्मिन्नन्तरेरामस्त्यक्तातांशिबिकांबहिः ॥ विसर्ज्यसकलाँल्लोकान्विवेशबन्धुभिर्गृहे २८ एतस्मिन्नन्तरेदा
स्यःशतशोरुक्मभूषिताः ॥ राघवाऽग्रेदुद्रुवुस्ताःस्वस्वकर्मसुतत्पराः २९ काचित्तंव्यजनेनैववीजयामासवेगतः ॥ ददौचरामरेकाचित्काचिदासनमुत्तमम् ३० काचि
त्तांबूलपात्रंसाकाचिन्निष्ठीवनस्यच ॥ पात्रंदधारकाचित्तुजलकुम्भंमनोरमम् ३१ काचिद्दधारवस्त्राणांकोशंकाचित्तुकार्मुकम् ॥ काचिद्दधारतूणीरंकाचित्खड्गंदधारसा
३२ एवमादीन्यनेकानितदोपकरणानिताः ॥ जगृहूरामचन्द्रंतंवेष्टयामासुरादरात् ३३ ततोरामःशनैःपश्चात्ययौजनकनन्दिनीम् ॥ स्वीयंमार्गप्रतीक्षंतींलज्जयाऽवन
ताननाम् ३४ गृहांगणारामगध्येसंस्थितांसस्मिताननाम् ॥ दृष्ट्वात्मानंविलज्जन्तींसुनासांचारुलोचनाम् ३५ कटाक्षैश्चारुपश्यन्तींसखीभिःपरिवेष्टिताम् ॥ तांदृष्ट्वा
राघवश्चापिकिंचित्कृत्वास्मिताननम् ३६ चकाराचमनंसम्यक्सीतार्पितजलेनसः ॥ ततःस्थित्वाऽऽसनेपीत्वाजलमग्रेययौपुनः ३७ जलयन्त्रसमीपस्थांशालांसी
तासमन्वितः ॥ तस्यांसिंहासनेस्थित्वालक्ष्मणंप्राहराघवः ३८ गच्छभोजनशालांत्वंसर्वानाहूयवेगतः ॥ ब्राह्मणादीन्नूर्मिलादिनारीणांत्वरयस्वहि ३९ सर्वंकृत्वायथायोग्यं
ततोमांकुरुसूचनाम् ॥ तथेतिरामवचनाद्भरतेनसशत्रुहा ४० लक्ष्मणस्त्वरितोगत्वासर्वानाहूयवेगतः ॥ वसिष्ठादिमुनीन्मित्रमन्त्रिणःसुहृदस्तथा ४१ त्वरयामासोर्मिलां
चमांडवींभरतप्रियाम् ॥ श्रुतिकीर्तिंचसौमित्रिःश्रीरामवचनात्तदा ४२ एतस्मिन्नन्तरेरामःकेशरादिविनिर्मितैः ॥ चित्ररागैःपूरितानिजलयन्त्राण्यनेकशः ४३ कार
यित्वातेषुसीतांबाहुपाशैर्दृढंमुदा ॥ धृत्वाक्षिपत्पृथग्दास्यादिषुपश्यत्सुवैसुखम् ४४ ततःस्वयंपपातोच्चैर्जलयंत्रेषुवैपृथक् ॥ जलक्रीडांसमैथिल्याचकाररघुनंदनः ४५
भुजाभ्यांससमालिंग्यतांमुहुःप्रक्षिपन्मुदा ॥ रंजयामासवैदेहींसुरागांजलिसेचनैः ४६ ततःसुगंधतैलानितथापरिमलानिहि ॥ नानासुगंधद्रव्याणिमांगल्यानिबहूनिच
४७ दासीभिःशीघ्रमानीयताबुभौहिपरस्परम् ॥ ववर्षतुःसुमाद्यैश्चक्रीडाद्रव्यैर्मनोरमैः ४८ कराभ्यांजलयंत्राणिमिथस्तौसंमुमुचतुः ॥ रामाक्षिसंज्ञयादास्यःसीतास
ख्योऽपिसूचिताः ४९ वस्त्रभित्तिबहिर्दूरंगत्वातस्थुर्विलज्जिताः ॥ काश्चिद्द्वारेषुतस्थुस्तास्तूष्णींप्रमुदिताननाः ५० अदृष्ट्वाऽन्यंततःसीतारामौरहसिसादरम् ॥ जल
यन्त्रेषुतौक्रीडांचक्रतुःसुचिरंमुदा ५१ मुष्टिभ्यांजानकीरामंताडयामासकौतुकात् ॥ सोऽपितांताडयामाससुष्टयापुष्पसमानया ५२ चुचुम्बतस्याबिंबोष्ठंचूर्णयामासत
त्कुचौ ॥ मुक्त्वातत्कञ्चुकीबंधमालिंग्यहृदयेनताम् ५३ मुमोचकच्छंश्रीरामःसीतायाःस्वकरेणसः ॥ उड्डीयवस्त्रंहस्तेनतद्रम्भोरूददर्शसः ५४ ततःकरेणतन्नीवींरा
मश्चाकर्षयन्मुदा ॥ सीताप्याकर्षयद्वेगाद्रामनीवींस्मिताननी ५५ एवंपरस्परंक्रीडांचक्रतुर्दंपतीमुदा ॥ कःसमर्थस्तयोःक्रीडांसविस्तारांनिवेदितुम् ५६ एतस्मिन्नन्तरे ॥ ६ ॥
रामंभोजनार्थंतुसूचनाम् ॥ कर्तुंययौससौमित्रिःसमाहूयसुहृज्जनान् ५७ निषेधितःसदासीभिर्वनद्वाराद्बहिःस्थितः ॥ ताऊचुःसमयोनाऽयंरामंगन्तुंनचक्षणम् ५८

१ सकलान्पौरानितिपाठः । २ शनैःशनैःसमायान्तीमितिपाठः ।

स्थिरोभवाऽत्रसौमित्रेरामोरहसिसीतया ॥ करोतिजलयंत्रेषुजलक्रीडांयथासुखम् ५९ पुनस्ताःप्राहसौमित्रिर्युष्माभिर्वचनंमम ॥ निवेदनीयंरामायसूचनार्थंहिलक्ष्मणः
६० समागतस्त्वामस्तीतिततोयास्याम्यहंगृहम् ॥ ततस्तासुतदात्वेकादासीगत्वारघूत्तमम् ६१ वस्त्रभित्तेर्बहिःस्थित्वाभयभीताऽतिलज्जिता ॥ कथयामाससौमित्रे
र्द्वारिह्यागमनंशनैः ६२ तद्दासीवचनंश्रुत्वाजलयंत्रात्तुजानकीम् ॥ बहिःकृत्वानिर्गतश्चरामस्तुष्टमनाःस्वयम् ६३ जलैरुष्णैःप्रभुःस्नात्वादेहमुद्वर्तनादिभिः ॥ सुगंधद्र
व्यरागादीन्कृत्वादूरंप्रियान्वितः ६४ पीतकौशेयवासांसिपरिधायाऽथदम्पती ॥ ददतुश्चार्द्रवस्त्राणिहेमतन्त्वंकितानिच ६५ दासीभ्यश्चाऽथदासेभ्योरागाद्यैश्चित्रिता
निहि ॥ तौजग्मतुःपुष्पचितमार्गेणाप्यशनगृहम् ६६ तत्रपूर्वोक्तोपचाराधिकैर्नानोपचारकैः ॥ ऊर्मिलादिभिरन्नंयत्कामधेनुसमुद्भवम् ६७ दर्वीभिःस्वर्णजाभिश्चपा
त्रेषुपरिवेषितम् ॥ मुनीश्वरैश्चगुरुणासुहृन्मित्रसमन्वितः ६८ मन्त्रिभिर्बंधुभिश्चाऽपिरामोऽश्नंस्तोषमापसः ॥ तत्पात्रंवीजयामासजानकीचामरेणसा ६९ सवि
नोदैश्चाटुवाक्यैरञ्जयामासराघवम् ॥ एवंकृत्वाभोजनंतुकृत्वातांबूलचर्वणम् ७० सीतासमर्पितंरामस्तस्थौशृण्वन्कथाःसुखम् ॥ मन्त्रिभिर्बंधुभिर्मित्रैर्गेहांतःसदसिप्रभुः
७१ सीताऽपिभोजनंकृत्वादिव्यालंकारमण्डिता ॥ निद्राशालांसमासीनासखीभिःपरिवेष्टिता ७२ चकारसारिभिःक्रीडांदासीभिर्वीजितामुदा ॥ कुर्वन्तीरघुनाथस्यप्रती
क्षांद्वारलोचना ७३ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेवाल्मीकीयेविलासकांडेजलक्रीडावर्णनंनामपंचमःसर्गः ॥ ५ ॥ ॥ श्रीरामदासउवाच ॥
अथरामोबंधुभिश्चनिद्राशालांययौमुदा ॥ स्तुतोबंदिजनाद्यैश्चविवेशैकांतमन्दिरम् १ विसर्ज्यलक्ष्मणादींश्चदासीभिःपरिवारितः ॥ ददर्शजानकींनिद्राशालायांरघुनंदनः२
साऽपिज्ञात्वाऽऽगतंरामंसारिक्रीडांविहायच ॥ प्रत्युज्जगामरामायसखीभिर्नूपुरस्वना ३ नत्वारामंकरेधृत्वामंचकेसंनिवेशयत् ॥ दत्त्वापातुंजलंतस्मैददौतांबूलमुत्त
76 मम् ४ ततश्चकारश्रीरामोनिद्रांसीतासमन्वितः ॥ दासीभिर्वीजितश्चाऽपिपर्यंकेरत्नभूषिते ५ मुहूर्तमात्रादुत्थायधृताधोंकोपबर्हणा ॥ तस्थौसीतामंचकाग्रस्ततोरामो
ऽप्यबुध्यत ६ दृष्ट्वासमुत्थितंरामंदत्त्वापातुंजलंपुनः ॥ ददौसीताऽथतांबूलंराघवायाऽतिहर्षिता ७ रामदास्यस्तथारामंवीजयामासुरादरात् ॥ केकिपक्षसमुद्भूतैश्चामरै
रुक्मभूषितैः ८ सीतादास्यस्तथासीतांवीजयामासुरादरात् ॥ धेनुपुच्छोद्भवैर्दिव्यैश्चामरैर्हेममंडितैः ९ ततःसीताकरंधृत्वाद्राक्षावल्याःसुमण्डपम् ॥ ययौरामोऽङ्गणो
द्भूतंतस्थौतदधआसने १० उपबर्हणसंपृष्ठःसीतावामस्थितोमुदा ॥ हस्त्यश्वोष्ट्रमंत्रिराजदूतैःकृत्रिमनिर्मितैः ११ हेमरत्नहस्तिदन्तसंभूतैरतिचित्रितैः ॥ क्रीडांबुद्धेर्ब
लैनैवचकारसीतयासुखम् १२ ततःपक्षिकुलैःसर्वैःपंजरस्थैःससीतया ॥ क्रीडांचकारश्रीरामोदासीभिर्वीजितोमुहुः १३ एतस्मिन्नन्तरेतत्रसीतयाऽऽकारिताःपुरा ॥ स
माययुर्वारनार्योननृतुःशतशस्तदा १४ चक्रुर्गीतंसुस्वरंताःषड्जस्वरसमन्वितम् ॥ ततस्ताभ्योह्यलंकारान्दत्त्वावस्त्राणिजानकी १५ विसर्जयामाससर्वास्ततोराघवम
ब्रवीत् ॥ स्थित्वाप्रासादवर्येऽद्यकौतुकंहट्टजंत्वया १६ द्रष्टुमिच्छाम्यहंरामशीघ्रमुत्तिष्ठराघव ॥ तत्सीतावचनाद्रामःप्रासादंप्रतिसीतया १७ गत्वादिव्यासनेस्थित्वा
गवाक्षैरुक्मभूषितैः ॥ रत्नोद्भवकपाटैश्चमुक्ताजालविराजितैः १८ राजवीथ्यांहट्टजातंददर्शजनकौतुकम् ॥ सीतायैदर्शयामासकौतुकानिसराघवः १९ स्वीयदक्षिणह

स्तस्यतर्जन्यामुदिताननः ॥ एतस्मिन्नन्तरेहष्टेद्विजपत्नीतुसीतया २० दृष्टाऽलंकारवस्त्राद्यैर्हीनाकटिधृतार्भका ॥ गच्छंतीराजमार्गेणकृशाभिक्षार्थमुद्यता २१ तां
तादृशींनिरीक्ष्याऽथदास्याहूयविदेहजा ॥ पप्रच्छभूषणाद्यैस्त्वंकिमर्थंरहिताह्यसि २२ साप्राहतीर्थयात्रार्थंत्यक्त्वामांतातलालितां ॥ तातगेहेगतोभर्तातातोऽपिजरठो
मृतः २३ गुरुगेहेऽवंतिकायांवर्ततेभ्रातरौमम ॥ नपोषकंकोऽपिगेहेऽधुनासीतेऽस्तिवैमम २४ तस्मान्नसंत्यलंकारवासांसिजनकात्मजे ॥ इतितस्यावचःश्रुत्वारामास्यंस
न्निरीक्ष्यसा २५ निजालंकारवासांसिददौतस्यैविदेहजा ॥ ब्राह्मणींसापुनःप्राहगच्छत्वंलक्ष्मणंप्रति २६ हेममुद्रालक्ष्मितास्त्वंगृहाणममाज्ञया ॥ तथेतिजानकींपृष्ट्वा
साययौलक्ष्मणंतदा २७ पूर्वाधिकानलंकारान्स्वदेहेजानकीपुनः ॥ दधारदिव्यवासांसिहेमतंतूद्भवानिसा २८ लक्ष्मणंब्राह्मणीगत्वासीतावाक्यंन्यवेदयत ॥ ददौतस्यै
लक्ष्मणोऽपिहेमुद्रास्तथैवसः २९ सीतावाक्याल्लक्ष्मितास्तूष्णामेनेनतद्वचः ॥ कःसमर्थोरामराज्येस्तूषावक्तुंभवेदिति ३० अथसीताऽपिसौमित्रिस्वांदासींप्रेष्यवैतदा ॥
अयोध्यायांतथाराष्ट्रेघोषयामासदुन्दुभिम् ३१ सतद्वीपेषुसर्वत्रपृथग्वर्षेषुसादरम् ॥ काचिन्नारीपुमान्वापिविनासद्वस्त्रभूषणैः ३२ दृष्टश्चारैर्मयाज्ञातोयद्देशेयत्पुरेक
दा ॥ तद्राज्ञश्चाऽस्तुमेदंडोरामस्याऽपिविशेषतः ३३ इतिमच्छिक्षितंज्ञात्वास्वकोशैःस्वीयराष्ट्रके ॥ वस्त्रालंकारभूषाभिर्भूषणीयाद्विजादयः ३४ सतद्वीपन्नृपतयश्चै
त्यंसीतासुशिक्षितम् ॥ गजदुन्दुभिघोषेणश्रुत्वाचक्रुस्तथैवच ३५ तदारभ्यजगत्यांनकश्चिद्विगतभूषणः ॥ नारीवापुरुषोवासीत्कुत्राप्यवनिजाभयात् ३६ एवंनानाकौ
तुकानिभूम्यांसीताऽकरोन्मुदा ॥ अथरामःसमागत्यापुनर्यामेचतुर्थके ३७ चकारराजकार्याणिधर्मेणैवस्वबंधुभिः ॥ नटनाटकवेश्यानांकौतुकानिमहांतिच ३८ ददर्श
ससभामध्येस्तुतोमागधबंदिभिः ॥ ततःसर्वान्विसृज्याऽथययौसीतागृहंप्रभुः ३९ सायंसंध्यादिकंकृत्वाहुत्वाहोमंयथाविधि ॥ गंधादिभिःशिवंपुज्यब्राह्मणांश्चाऽपिराघ
वः ४० नानोपहारनैवेद्यंदत्त्वातेभ्यःस्वयंप्रभुः ॥ कृत्वोपहारंश्रीरामःश्रुत्वापौराणिकींकथाम् ४१ कीर्तनैर्हरिदासानांवेश्यानांनर्तनैरपि ॥ पौरोदिताभिर्वार्त्ताभिर्गायका
नांचगायनैः ४२ सार्धयामोनिशांनीत्वाययौनिद्रास्थलंशनैः ॥ ततोरत्नप्रकाशैःसजगामजानकींप्रति ४३ साऽपिप्रत्युज्जगामाऽथरत्नदीपैःसखीयुता ॥ ततःससीत
यारामःपर्यंकेरत्नचित्रिते ४४ चकारसीतयाक्रीडांरंजयामासजानकीं ॥ ततस्तौदंपतीनिद्रांचक्रतुर्वीजितौमुहुः ४५ दासीभिर्व्यजनैश्चित्रैश्चामरैर्हेमभूषितैः ॥ एवंरामे
णसासीतासुखमापपतिव्रता ४६ सीतयाराघवश्चाऽपिसुखमापविशेषतः ॥ एवंनानाकौतुकानिप्रत्यहंरघुनंदनः ४७ चकारसीतयासार्धंपरिपूर्णमनोरथः ॥ कदाचंद्रस्य
ज्योत्स्नायामंगणेसप्रभुः ४८ चकारसीतयानिद्रांकदाप्रासादमस्तके ॥[1] प्रासादाभ्यन्तरेवाऽपिगवाक्षपवनैःशुभैः ४९ सुखमापकदारामःकदारहसियंदिरे ॥ कन
कशृंखलानद्धसवितानसुमंचके ५० कदाद्राक्षामंडपाऽधोजलयंत्रसमीपतः ॥ काचभूम्यांकदमभूम्यांमणिभूम्यांकदाऽपिवा ५१ स्फटिकादिसुभूम्यांहिकदासुष्वाप
राघवः ॥ कदासपुष्पकेवाऽपिरंगशालांतरेकदा ५२ कदासचित्रशालायांकदोशीरमयेगृहे ॥ कदापुष्पमयेगेहेकदारंभावनेवरे ५३ कदापुष्पवाटिकायांकदावृक्षोर्ध्वसद्म

१ संत्यलंकारामममदेहेविदेहजेइतिपाठः ।

नि ॥ शृंखलावृक्षसंबद्धदोलकेरत्नचित्रिते ९४ कदाकाष्ठमयेदिव्येमंचकेरत्नभूषिते ॥ कदाचकारतुलसीवाटिकायांरघूत्तमः ९५ निद्रांजनकनंदिन्यासमायामथवा
कदा ॥ कदाद्वारोर्ध्वप्रासादेकदेकस्तंभसद्मनि ९६ कदास्वगृहदेहल्यांकदावृंदावनेऽपिच ॥ एवंससीतयारेमेऽयोध्यायांरघुनंदनः ९७ ॥ ॥ इतिश्रीशतकोटिरामच
रितांतर्गत श्रीमदान०वा०विलासकांडे सीतारामयोर्दिनचर्यावर्णनंनामषष्ठःसर्गः ॥ ६ ॥ श्रीरामदासउवाच ॥ एकदाराघवेंद्रर्द्रष्टुंतथास्नातुंमघावपि ॥ शिष्यैःसमाययौ
व्यासोमुनिभिःपरिवेष्टितः १ समागतंमुनिंश्रुत्वातंप्रत्युद्गम्यराघवः ॥ ननामशिरसाभक्त्यानिनायनिजमंदिरम् २ दत्वावरासनंतस्मैद्विजेभ्यश्चाऽपिवैपृथक् ॥ दत्वासना
निदिव्यानिचकारपूजनंपृथक् ३ कामधेनूद्भवैरत्नैर्मणिभ्यांसंभवैरपि ॥ व्यासंतंभोजयामाससमुनिभिर्जानकीपतिः ४ तांबूलंदक्षिणांदत्वाप्रबद्धकरसंपुटः ॥ पप्रच्छकुशलंत
स्मैव्यासायरघुनन्दनः ५ सीतातंवीजयामासव्यासंसत्यवतीसुतम् ॥ एतस्मिन्नन्तरेव्यासोरामायकुशलंनिजम् ६ निवेद्यपृष्ट्वातत्क्षेमंतमाहकौतुकात्पुनः ॥ रामरामभद्रा
बाहोयथाराज्यंत्वयाभुवि ७ भुज्यतेनतथाऽन्येनकेनाऽपिपृथिवीभृता ॥ पुराभुक्तंनकोप्यग्रेभोक्ष्यतिपृथिवीपतिः ८ अन्यत्तेऽत्रमहद्धैर्यमेकपत्नीव्रतंप्रति ॥ दृष्ट्वातिविस्मय
श्चित्तेजायतेमेरघूत्तम ९ कःसहेताऽत्रतारुण्यकामदावानलंनृपः ॥ पदस्थेयौवनेचाऽपित्वमेवास्मिन्व्रतेक्षमः १० इतिव्यासवचःश्रुत्वारामोव्यासंवचोऽब्रवीत् ॥ मयात्रयःकृ
ताःसंतिनियमामुनिसत्तम ११ मुखाद्विनिर्गतंवाक्यमेकमेवविनिश्चितम् ॥ नक्रियतेमृषातद्वनोच्यतेद्व्यपरंपुनः १२ अन्यत्सीतांविनाऽन्यास्त्रीकौसल्यासदृशीमिभ[1]॥ नक्रियते
परापत्नीमनसाऽपिनचिंतये १३ तथायंघातुमिच्छामियाणेनैकेनकोपतः॥ निहन्यतेतदेकेननान्यंबाणंसृजाम्यहम् १४इत्थंत्रयःकृतापूर्वंनियमास्त्वत्रभोमुने ॥सत्याएवमवं
त्वग्रेऽखंडितास्तववाक्यतः १५ तथैवास्त्वितिसोऽप्याहव्यासःश्रीराघवंतदा ॥ पुनराहमुनिःश्रीमान्व्यासःश्रीराघवंप्रति १६ एकपत्नीव्रतस्याऽस्यफलेनाऽपरजन्मनि ॥
त्वंकृष्णरूपेणबह्वीर्नारीर्भोक्ष्यसिराघव १७ तन्मुनेर्वचनंश्रुत्वाविहस्यराघवोऽब्रवीत् ॥ बह्वीश्चकामिनीर्भोक्तुंकृष्णरूपधरोप्यहम् १८ द्वारकायांयदाऽस्मिद्वापरेमुनिस
त्तम ॥ येनव्रतेनदानेननियमेनाऽथवामुने १९ बह्वनारीर्निश्चयेनप्राप्स्यामीतिवदस्वमाम् ॥ इतिरामवचःश्रुत्वाव्यासोराघवमब्रवीत् २० सम्यक्पृष्टंत्वयारामदानंतेप्रवदाम्य
हम् ॥ एकपत्नीव्रतादेवयद्यपित्वंचस्त्रीर्बहूः २१ लभिष्यसितथाप्यद्यदानंतववदाम्यहम् ॥ सीताभारसुवर्णेनमूर्तिमेकांरघूत्तम २२ एवंषोडशमूर्तीश्चकारयत्वंपृथक्पृथ
क् ॥ देहित्वंसरयूनद्यास्तीरेविप्रेभ्यआदरात् २३ वस्त्रालंकारभूषाद्यैर्दक्षिणाभिश्चताःशुभाः ॥ अनेनबहुनारीस्त्वंलभिष्यस्यन्यजन्मनि २४ तथेतिराघवश्चाऽपिमू
र्तीःकृत्वामनोरमाः ॥ ददौताःसरयूनद्यांब्राह्मणेभ्यस्तुषोडश २५ ततस्तेब्राह्मणास्तुष्टारामायाशीर्ददुर्मुदा ॥ दत्तमेकगुणंराजन्सहस्रगुणितंपुरा २६ अस्माकंवचना
दानंफलंतवभविष्यति ॥ षोडशस्त्रीसहस्राणित्वंलभिष्यसिनिश्चयात् २७ तथास्त्वित्याहरामोऽपिततोविप्रान्व्यसर्जयत् ॥ प्रणम्यपूजितंव्यासंददावाज्ञांरघूद्वहः २८
अथैकदारामचंद्रःसीतयासरयूतटे ॥ मधुमासेवनागेहेस्थितःक्रीडांचकारसः २९ एतस्मिन्नंतरेऽयोध्यांनानादेशनिवासिनः ॥ रामतीर्थेमधौस्नातुंसमाजग्मुःसहस्र

१ मृषमिंतिपाठः । २ मयाऽत्रयेइतिपाठः । ३.नक्रियेद्वरांपत्नीमितिपाठः ।

शः ३० सुरायक्षाःकिन्नराश्चगंधर्वाःपन्नगानगाः ॥ वल्ल्यश्चसरितःसर्वास्तीर्थानिमुनयोनृपाः ३१ अप्सरसःपन्नगाश्चखगाःक्षेत्राणिवानराः ॥ अथैकदादेवपत्न्योज्ञात्वाऽ
स्पृश्यांविदेहजाम् ३२ परस्परंताःसंमंत्र्यनिशीथेराघवंप्रति ॥ समाजग्मुर्दिव्यवस्त्ररत्नाभरणभूषिताः ३३ रामसौंदर्यसंभ्रांताःकामबाणप्रपीडिताः ॥ तादृष्ट्वारामदूता
स्तेपप्रच्छूरक्षणस्थिताः ३४ यूयंकिमर्थंसंप्राप्तानिशीथेऽत्रभयावहे ॥ कथयध्वंहिनःसर्वंमाशंकांकुरुताऽत्रहि ३५ ताऊचूराघवंद्रष्टुंसमायातावयंस्त्रियः ॥ अधुनाचे
द्राघवस्यदर्शनंनभविष्यति ३६ जातोवधस्तदाऽस्माकंजीवितस्यनदीजले ॥ इतितासांवचःश्रुत्वादूतास्तेराघवंजवात् ३७ दास्यानिवेदयामासुःश्रीवृत्तंतत्सविस्त
रम् ॥ श्रुत्वादासीमुखाद्रामःसैकतेमंचकेस्थितः ३८ समाहूयस्त्रियःसर्वाददर्शरघुनायकः ॥ ताश्चाऽपिदृष्ट्वाश्रीराममेनिरेकृतकृत्यताम् ३९ ततस्ताराघवंनत्वालज्जया
ऽधोमुखाःस्त्रियः ॥ पीडिताःकामबाणैश्चतस्थुःश्रीरामसन्निधौ ४० ताःपप्रच्छराघवोऽप्यागमनस्याऽथकारणम् ॥ ताराघवंतदाप्रोचुःसर्ववेत्सित्वमीश्वर ४१ ज्ञात्वा
तासांरामचंद्रोहृद्गतंप्राहताःपुनः ॥ एकपत्नीव्रतंमेऽस्तिचेतज्जन्मनिभोःस्त्रियः ४२ नज्ञेयंमेमृषावाक्यंगम्यतांस्वस्थलंजवात् ॥ माभूदधर्मोमद्राज्येराज्ञांवैनिरयप्रदः ४३
इतिराघववाग्बाणैर्भिन्नमर्मस्थलाःस्त्रियः ॥ ययुर्मूर्छांक्षणादेवसिकतायांसहस्रशः ४४ तामूर्छाविव्हलादृष्ट्वारामोविव्हलमानसः ॥ नारीःसंतोषयन्प्राहहेनार्यःश्रूयतांमम ४५
वाक्यंखेदापहंवोऽद्यद्वापरेकृष्णरूपधृक् ॥ अहंव्रजेभविष्यामिनन्दगोपेशपालिते ४६ तदादेवास्तुगोपालाभाविमद्वरदानतः ॥ भविष्यन्तिसुरेशश्चनन्दस्तत्रभविष्यति ४७
भविष्यथतदायूयंगोपिकाःसकलाव्रजे ॥ युष्माकंपूरयिष्यामियथेच्छंवाञ्छितंतदा ४८ रासक्रीडांहियुष्माभिःकरिष्यामिनसंशयः ॥ वृंदावनेतुकालिंद्याःसैकतेनिशिवैचि
रम् ४९ भवध्वंस्वस्थचित्ताश्चगच्छध्वंस्वस्थलंमुदा ॥ इतिरामवचोरूपसुधयाजीविताःस्त्रियः ५० किंचित्तुष्टहृदोरामंनत्वाजग्मुर्निजंस्थलम् ॥ एतस्मिन्नन्तरेतत्रमधुरा
नाथंमादरात् ५१ मायापुर्याःसमायातारम्यागुणवतीशुभा ॥ विष्णुदासउवाच ॥ कासाप्रोक्तागुणवतीकिंशीलाकस्यकन्यका ५२ तद्वदस्वसविस्तारंकस्याऽऽसी
त्प्रमदापुरा ॥ इतिशिष्यवचःश्रुत्वारामदासोऽब्रवीत्पुनः ५३ ॥ इतिश्रीशतकोटिराम०आनन्दरामायणेवाल्मीकीयेविलासकांडेदेवपत्नीवरदानंनामसप्तमःसर्गः ॥ ७॥
श्रीरामदासउवाच ॥ आसीत्कृतयुगस्यांतेमायापुर्यांद्विजोत्तमः ॥ आत्रेयोदेवशर्मेतिवेदवेदांगपारगः १ आतिथेयोऽग्निशुश्रूषीसौरव्रतपरायणः ॥ सूर्यमाराधयन्नित्यंसा
क्षात्सूर्यइवाऽपरः २ तस्यातिवयसश्चासीन्नाम्नागुणवतीशुभा ॥ अपुत्रःसस्वशिष्यायचन्द्रनाम्नेददौसुताम् ३ तमेवपुत्रवन्मेनेसचतंपितृवद्वशी ॥ तौकदाचिद्वनं
यातौकुशेध्महरणायवै ४ हिमाद्रिपादेवेगेनचेरतुस्तावितस्ततः ॥ तावत्तौराक्षसंघोरमपश्येतांपुरःस्थितम् ५ भयविव्हलसर्वांगावसमर्थौपलायितुम् ॥ निहतौरक्षसा
तेनकृतांतसमरूपिणा ६ तौतत्क्षेत्रप्रभावेणधर्मशीलतयापुनः ॥ वैकुंठभुवनंयातौनीतौविष्णुगणैस्तदा ७ यावज्जीवंतुयत्ताभ्यांसूर्यपूजादिकंकृतम् ॥ कर्म
णातेनसन्तुष्टोविष्णुस्ताभ्यांबभूवह ८ शैवाःसौराश्चगाणेशावैष्णवाःशक्तिपूजकाः ॥ तमेवप्राप्नुवन्तीहवर्षापःसागरंयथा ९ एकःसपंचधाजातःक्रिययानामभिःकिल ॥

१ जाताबधिरितिपाठः ।

देवदत्तोयथाकाश्चित्पुत्राद्याह्वाननामभिः १० ततश्चतौतद्वनाधिवासिनौविमानयातौरविवर्चसावुभौ ॥ तत्तुल्यरूपौहरिसन्निधानगौदिव्यांगनाचन्दनभोगभोगिनौ ॥
११ ततोगुणवतीश्रुत्वारक्षसानिहतावुभौ ॥ पितृभर्तृजदुःखार्ताविललापभृशातुरा १२ साग्रहोपस्करान्सर्वान्विक्रीयशुभकर्मकृत ॥ तयोश्चक्रेयथाशक्तिपरलोकक्रियां
तदा १३ तस्मिन्नेवपुरेवासंचक्रेप्रसृतजीविनी ॥ विष्णुभक्तिपराशांतासत्यशौचाजितेंद्रिया १४ व्रताष्टकंतयासम्यग्आजन्ममरणात्कृतम् ॥ एकादशीव्रतंसम्यक्सेवनं
कार्तिकस्यच १५ माघेचैत्रेमाधवेऽपिस्नानानिप्रतिवत्सरम् ॥ संमार्जनंविष्णुगेहेस्वस्तिकादिनिवेशनम् १६ नित्यंविष्णोःपूजनंचभक्त्यातत्परमानसा ॥ इत्थंव्रताष्ट
कंसम्यक्साचकारातिभक्तितः १७ एकदासागुणवतीपौराणिकमुखेनहि ॥ श्रुत्वामहत्फलंशिष्यसाकेतेसरयूजले १८ चैत्रस्नानस्यकैवल्यदायकंजनसंयुता ॥ ययौश्री
रामनगरींरामतीर्थेऽवसच्छुभा १९ सैकदाराघवंद्रष्टुंसरयूसैकतस्थितम् ॥ वासोगेहेरहःपत्न्याययौबंधुसमन्वितम् २० पूजापात्राणिहस्ताभ्यांबिभ्रतीद्वारसंस्थिता ॥
प्रतीहारेणरामायवेदितासाविवेशह २१ वासोगेहंददर्शाऽथसीतयारघुनायकम् ॥ रत्नमंचकसंलग्नंघृताघौंकोपबर्हणम् २२ क्रीडन्तंसारिभिःपाशैःसीतयालक्ष्मणेनच ॥
कैकेयीतनयाभ्यांचसखीभिःपरिवारितम् २४ मयूरपिच्छसंभूतचामरैःपरिवीजितम् ॥ रत्नचित्ररुक्ममयेनूपुरेपदयोर्वरे २४ बिभ्रन्तंरशनांकट्यांरत्नरुक्मविभूषि
ताम् ॥ रत्नरुक्ममयेदिव्यकंकणेकरयोर्वरे २५ बिभ्रन्तंभुजयोर्दिव्यकेयूरेरत्नभूषिते ॥ कंठदेशेकौस्तुभंचहृदिचिंतामणिंशुभम् २६ बिभ्रन्तंविविधान्हारान्रत्न
माणिक्यनिर्मितान् ॥ तथाजालरुक्मजाश्चमुक्ताहारान्विचित्रितान् २७ तुलसीकाष्ठहारांश्चपुष्पहाराननेकशः ॥ प्रवालमणिहारांश्चशृंखलाःकांचनोद्भवाः २८ पद
कानिविचित्राणिरत्नमाणिक्यवंत्यपि ॥ रंभाफलाब्जसदृशानलंकारान्विचित्रितान् २९ रत्नमाणिक्यसंयुक्तान्मुकुरैरतिमंडितान् ॥ नीलसारकृतैश्चित्राम्रामनामां
कितानपि ३० अंगुलीष्वपिबिभ्रन्तंहस्तयोर्मुद्रिकाःशुभाः ॥ रत्नमाणिक्यमुक्ताभिश्चित्रितारुक्मनिर्मिताः ३१ रामनामांकिताश्चापिपवित्राण्युज्ज्वलानिहि ॥ र
त्नमुक्ताहेममयेकर्णयोःकुंडलेवरे ३२ बिभ्रन्तंमहिसाद्यस्यानलंकाराननेकशः ॥ बिभ्रन्तंरविसादृश्यंमुकुटंरत्नचित्रितम् ३३ नानामणिसमायुक्तंकलशैरतिशोभितम् ॥
मुक्ताप्रवालवैडूर्ययुक्तंहेममयंवरम् ३४ एवंगुणवतीरामंकोटिसूर्यसमप्रभम् ॥ हेमवर्णमहारम्यंकंजपत्रायतेक्षणम् ३५ सोपाननंकंजहस्तंदृष्ट्वातंप्रणनामसा ॥ तांसमु
त्थापयद्रामस्तयासम्यक्प्रपूजितः ३६ तद्दत्तैरुपहाराद्यैःसुप्रीतस्तांतदाऽब्रवीत् ॥ वरंवरयमामद्ययत्तेमनसिवर्तते ३७ इतिरामवचःश्रुत्वासातुष्टारामममब्रवीत् ॥ रामरा
जीवपत्राक्षयथेमास्तेसहस्रशः ३८ दास्यःसंतितथामांत्वमंगीकर्तुमिहार्हसि ॥ इतितद्वचनंश्रुत्वाराघवःप्राहसस्मितः ३९ कथंत्वंब्राह्मणीचेत्थंवदस्यद्यशुभव्रते ॥
मत्सेवांकर्तुमिच्छास्तितवतर्हिवदाम्यहम् ४० शृणुष्वत्वंगुणवतिकृष्णरूपधरोह्यहम् ॥ द्वापरेद्वारिकायांहिभविष्याम्यन्यजन्मनि ४१ भजिष्यसितदामांत्वंस्त्रीरू
पेणनसंशयः ॥ सत्राजिद्देवशर्मातेभविष्यतिपितापुनः ४२ यश्चन्द्रनामासोऽक्रूरोभविष्यतिसखामम ॥ सत्यभामेतिनाम्नात्वंभविष्यसिप्रियामम ४३ तदाकुरुष्वदा
स्यंमेयत्तेमनसिवर्तते ॥ इतिरामवचःश्रुत्वातुष्टागुणवतीमुदः ४४ नत्वाश्रीराघवंसीतांययौस्वीयस्थलंप्रति ॥ चैत्रस्नानानन्तरंसाहरिद्वारंययौजनैः ४५ आयुश्शे

पंसमाप्याऽथगंगायांकुणपंनिजम् ॥ सज्वरंस्नानसमयेत्यक्त्वानाकंचिरंगता ४६ ततःकालांतरेणासीत्सत्राजित्तनयाभुवि ॥ बभूवपत्नीकृष्णस्यद्वापरेद्वारिकापुरि ४७
एकदापिंगलानाम्नीवेश्यारात्रौविनिद्रितम् ॥ सीतयादिव्यपर्यंकेययौसाराघवंरहः ४८ विहायनूपुरादीनिस्वनवंतिपदोःशनैः ॥ इतस्ततोनिरीक्षन्तीदिव्यवस्त्रादिभू
षिता ४९ सीतामयात्प्रकंपन्तीकामबाणप्रपीडितां ॥ मण्डितापुष्पमालाद्यैर्भूषणैरतिशोभिता ५० अज्ञाताद्वारपालैस्सानिद्रितैर्मंचकंययौ ॥ स्वकरेणपदस्पर्शंकृत्वा
रामंप्रबोधयत् ५१ तदाप्रबुद्धःश्रीरामस्तांददर्शपुरःस्थिताम् ॥ साधृत्वातत्पदेगाढंप्रार्थयामासराघवम् ५२ रामराजीवपत्राक्षमयातेऽद्यापराधितम् ॥ त्वंक्षमस्व
रूपांकृत्वामयिचानुग्रहंकुरु ५३ ततस्यावचनंश्रुत्वाज्ञात्वाकामप्रपीडिताम् ॥ तांसमाश्वासितुंप्राहराघवःकञ्जलोचनाम् ५४ एकपत्नीव्रतंमेऽस्मिन्भवेत्वंवेत्सिपिं
गले ॥ अतस्त्वत्कामपूर्त्यर्थंवदामितच्छृणुष्वहि ५५ यदाऽहंमथुराग्रामेव्रजाच्छ्रीकृष्णरूपधृक् ॥ यास्यामिमातुलंकंसंहत्वास्थास्यामितत्पुरीम् ५६ तदाभजिष्य
सित्वंमांकुब्जारूपेणपिंगले ॥ गच्छदासीस्वरूपेणातिष्ठत्वंकंसवेश्मनि ५७ आयुःक्षयेत्विमंदेहंविसृज्यबहुभुक्तकम् ॥ इत्युक्त्वापिंगलांरामोददावाज्ञांभयात्स्त्रियः ५८
शिक्षयामासद्वारस्थान्दासान्दासीर्विनिद्रिताः ॥ ततःसीतांप्रबोध्याथवेश्यावृत्तंन्यवेदयत् ५९ तच्छ्रुत्वाजानकीरुष्टात्यक्त्वापर्यंकमुत्तमम् ॥ राघवंप्राहसक्रोधाकथं
नाहंप्रबोधिता ६० तदैवाऽद्यमयाज्ञातंमेकपत्नीव्रतंमृषा ॥ भुक्त्वाऽऽदौपिंगलांतूष्णींत्वयाहंबोधितातत: ६१ तांविसृज्यचिरादद्यज्ञातंतेचरितंमया ॥ मृषा
त्वयाप्रतिज्ञातंपुराव्यासमुनेःपुरः ६२ एकपत्नीव्रतंमेऽस्तिकौसल्यासदृशीमम ॥ अन्यास्त्रीतिमृषावाक्यंकत्थसेत्वंपुनःपुनः ६३ क्वगतंतद्वचस्तेऽद्यक्वगतंतद्व्रतंत
व ॥ अद्यैवजीवितंस्वीयंत्यजामिसरयूजले ६४ वेश्यायाःपृष्ठसंलग्नांशय्यांनाहंस्पृशाम्यहम् ॥ वेश्यासक्तंस्वामिनंत्वांदृष्ट्वाद्वेषोभवेत्त्वयि ६५ मृतायांमयियद्वा
च्यंवेश्यासक्तस्यतेभवेत् ॥ वेश्यासक्तपार्थिवस्यचिरंराज्यंनतिष्ठति ६६ इत्युक्त्वाराघवंनत्वादेहत्यागार्थमुद्यता ॥ ययौवेगेनसरयूंवस्त्रगेहात्तडित्प्रभा ६७ गच्छं
तींराघवोदृष्ट्वामुक्तकच्छःप्रदुद्रवे ॥ संभ्रमाज्जानकींधृत्वाभुजाभ्यांसैकतेऽमले ६८ अब्रवीन्मधुरंवाक्यंमारुष्टत्वंविदेहजे ॥ शृणुष्ववचनंमेत्वंदिव्यंतेप्रवदाम्यहम् ६९
मयितेशपथैरद्यप्रत्ययोनभविष्यति ॥ दुर्घटंयद्ब्रवीषित्वंतद्दिव्यंप्रवदाम्यहम् ७० वदशीघ्रंजनकजेमाक्रोधंभजभामिनि ॥ इतिरामवचःश्रुत्वाजानकीप्राहराघवम् ७१
॥ जानक्युवाच ॥ रामब्रूयामहंकिंतेयेनदिव्यंददासिमे ॥ अनलस्त्वन्मुखोद्भूतोनयनेशशिभास्करौ ७२ वासस्तेजलधौरामपृथ्वीयंविधृतात्वया ॥ शेषस्तल्पस्त
वैवाऽयंलक्ष्मणास्तिष्ठतेबहिः ७३ शस्त्राणित्वन्नखजानिसर्वाण्यत्रनसंशयः ॥ यद्यत्पश्यामितत्सर्वंतवरूपंनसंशयः ७४ नदुर्घटंतेदिव्यार्थंकिंचित्पश्यामिराघव ॥
किंब्रूयामधुनातेऽत्रयेनमेप्रत्ययोभवेत् ७५ एकनेवाऽस्तिजानेहंतत्कुरुष्वरघूत्तम ॥ इदानींमिवस्वगुरुंसमाहूयरघूद्वह ७६ पदयोस्तस्यशपथंकृत्वातेप्रत्ययोमम ॥
भविष्यतिनसंदेहस्तंकुरुष्वरघूत्तम ७७ इतिसीतावचःश्रुत्वाप्रहस्यरघुनंदनः ॥ दास्यासौमित्रिमाहूयवसिष्ठंप्रेषयत्तदा ७८ लक्ष्मणःशिबिकारूढःपुरद्वारांतिकंययौ ॥

१ त्वन्मुखोद्भूतान्यास्त्रसर्वाण्यनेकशइतिपाठः ।

रामवाक्याद्द्वारपोऽपिद्वारमुद्घाटयत्तदा ७९ गत्वापुर्यांलक्ष्मणःसगुरोर्द्वारिस्थिरोऽभवत् ॥ वसिष्ठद्वारपोदास्यावसिष्ठायन्यवेदयत् ८० निशीथेलक्ष्मणंद्वारमागतंत्वि
तिसंभ्रमात् ॥ अरुंधत्यावसिष्ठोऽपितच्छ्रुत्वाविह्वलोऽभवत् ८१ निशीथेलक्ष्मणश्चात्रकिमर्थंमांसमागतः ॥ इतिविह्वलचित्तःससमाहूयाऽथलक्ष्मणम् ८२ पप्रच्छ
गमनस्याऽथकारणंमुनिसत्तमः ॥ तंनत्वालक्ष्मणःप्राहरामेणस्मारितोऽसिहि ८३ कारणंनात्रजानामिसमुत्तिष्ठाशुनैवहि ॥ शिबिकातिष्ठतेद्वाराद्बहिस्तेमुनिसत्तम ८४
इतिश्रुत्वारामवाक्यादरुंधत्याऽतिप्रार्थितः ॥ शिबिकायामरुंधत्यास्थित्वाशीघ्रंययौगुरुः ८५ तत्पृष्ठेशिबिकासंस्थःसौमित्रिस्त्वरितोययौ ॥ रत्नदीपप्रकाशैश्चवेष्टितो
वेत्रपाणिभिः ८६ समागतंगुरुंज्ञात्वाप्रत्युद्गम्यरघूत्तमः ॥ दत्वासनंवसिष्ठायसीतयाप्रणनामसः ८७ कृत्वापूजांसविस्तारंवस्त्रैराभरणादिभिः ॥ कथयामाससकलंपि
ंगलावृत्तमादरात् ८८ कथयामाससीतायाःक्रोधवाक्यान्यपिप्रभुः ॥ दिव्यंदातुंनकिंचिच्चदृष्टंह्यत्रसीतयामम ८९ विनिश्चितंतेपदयोर्दिव्यंतत्तेवदाम्यहम् ॥ मनसाऽपि
नभुक्तासामयावेश्याथवापरा ९० इदंचेद्वचनंसत्यंरघुशापितर्हित्वत्पदे ॥ इत्युक्त्वाराघवःशीघ्रंवसिष्ठपदयोःकरौ ९१ स्वीयौसंस्थाप्यशिरसाप्रणनामगुरुंपुनः ॥ तद्दृष्ट्वाल
ज्जितासीताज्ञात्वाशुद्धंरघूत्तमम् ९२ प्रणम्यमेऽपराधंतंक्षमस्वेतिप्रसादयत् ॥ ततःसीतागुरोःपत्न्यैददौचित्राणिभक्तितः ९३ भूषणानिवराण्येवदिव्यवस्त्राणिसादरम् ॥
रामेणपूजितश्चापिवसिष्ठःपूर्ववत्क्रिया ९४ सहितःशिबिकासंस्थस्तुष्टःस्वीयगृहंययौ ॥ ततःसीतांसमालिंग्यरामोनिद्रांचकारसः ९५ प्रभातेपिंगलांदास्यासमाहूयाऽथ
जानकी ॥ विक्षिप्तिंकृत्वासखीभिस्तांताडयामासबंधिताम् ९६ सीतोवाचतदावेश्यांयस्मान्मेचापराधितम् ॥ भविष्यासिनिकात्वंमथुरायांहिकुत्सिता ९७ वेश्यया
प्रार्थितामाहकृष्णस्त्वामुद्धरिष्यति ॥ श्रुत्वातांबंधितांवेश्यांमोचयामासराघवः ९८ एवंनानाकौतुकानिचकाररघुनंदनः ॥ सीतांसंरंजयामासस्वचरित्रैर्मनोरमैः ९९
इतिश्रीशत०श्रीम०वा०वि०सीताक्रोधवर्णनंनामाष्टमःसर्गः ॥८॥ श्रीरामदासउवाच ॥ एकदासीतयारामःकुरुक्षेत्रंस्वरंघुभिः ॥ ययौसूर्योपरागेवैस्नातुंपुष्पकसंस्थितः
१ तत्रदेवाःसगन्धर्वाःकिन्नराःपन्नगाययुः ॥ नानाऽऽश्रमेभ्योमुनयःपार्थिवाश्चसहस्रशः २ तत्रस्नात्वारवौग्रस्तेराघवःसीतयासह ॥ चकारनानादानानिहस्त्युष्ट्ररथवाजि
नाम् ३ ततस्तेपार्थिवाःसर्वेनानोपायनपाणयः ॥ ययुस्तेराघवंद्रष्टुंराजपत्न्यश्चजानकीम् ४ अथसीताराजपत्नीःसमालिंग्यवरासने ॥ सखीभिर्मुनिदारैश्चसुखंचोपावि
शत्तदा ५ एतस्मिन्नन्तरेतत्रसीतयापूजितास्थिता ॥ लोपामुद्राऽब्रवीद्वाक्यंजानकींरंजयन्मुदा ६ हेसीतेकंजनयनेधन्यासिगजगामिनि ॥ किंचिद्वर्णयरामस्यपौरुषंशु
तितोषदम् ७ ततस्यावचनंश्रुत्वावर्णयामासजानकी ॥ स्वपाणिग्रहणात्पत्युःकुरुक्षेत्रावधिंकथाम् ८ लोपामुद्रापितच्छ्रुत्वाविहस्यप्राहजानकीम् ॥ सर्वंयोग्यंकृतंसीते
२४ राघवेणमहात्मना ९ एकएवहृथाक्लेशःकृतस्तेनेतिवेद्म्यहम् ॥ महान्श्रमःसेतुबंधेकिमर्थंहिकृतःपुरा १० कथंनकथितंकुम्भजन्मनेराघवेणहि ॥ क्षणात्तंचुलुकेकृत्वापीत्वे
मंल्वणार्णवम् ११ शुष्कंकृत्वाकपीन्मार्गोभविष्यदतएवहि ॥ वृथातेश्रमितासर्वेवानराःसेतुबंधने १२ इतितस्यावचःश्रुत्वासगर्वंजानकीतदा ॥ लोपामुद्रांवि
हस्याहलोपामुद्रेपतिव्रते १३ सम्यक्कृतंराघवेणतत्सेतोर्बंधनंवरम् ॥ तत्कारणंवदाम्यद्यशृणुत्वंस्वस्थमानसा १४ शृण्वंत्विमाःसमायातामद्वाक्यंपार्थिवस्त्रियः ॥

बाणेनशोषणीयश्चेत्सागरोराघवेणहि १५ भविष्यन्तितदाहत्याबहवश्चेतिशंकितम् ॥ उल्लंघनीयोजलधिश्चेद्रामेणविहायसा १६ तदारामंमनुष्यंचकथंज्ञास्यतिरावणः ॥
हनुमत्पृष्ठमारुह्यगन्तव्यंचेत्परेतटे १७ लंकांप्रतितदारामपौरुषंकिंवदन्तिहि ॥ यदितीर्त्वाप्रगन्तव्यंबाहुभ्यांराघवेणहि १८ नोल्लंघनीयंविप्रस्यमूत्रंचेतिविशंकितम् ॥
चेन्मुनिःकुंभजन्माबैप्रार्थनीयःपतिस्तव १९ रामेणचुलुकंकर्तुंतदातल्लवणांबुधेः ॥ मंत्रितंराघवेणाऽपितदाहृदिसविस्तरम् २० पीतोऽयंजलधिःपूर्वंश्रुतंक्रोधादगस्ति
ना ॥ मूत्रद्वाराद्बहिस्त्यक्तोयस्मात्क्षारत्वमागतः २१ सर्वदामूत्रवत्क्षारःसकथंपातुमर्हति ॥ सऋषिर्ममवाक्येनचुलुकंतुकरिष्यति २२ भविष्यतिममाकीर्तिःसर्वत्रजगती
तले ॥ मूत्रपानंब्राह्मणेनस्वकार्यार्थंनिजोक्तिभिः २३ कारितंयेनरामेणसोऽयंचेतीविशंकितः ॥ नमुनिंप्रार्थयामासराघवोधर्मतत्परः २४ एवंसंमंत्र्यरामेणस्वकीर्त्यैसे
तुबंधनम् ॥ कृतंकेनाऽपिनकृतंनकोप्यग्रेकरिष्यति २५ येनरामेणजलधौशिलाःसंतारिताःपुरा ॥ सोऽयंदाशरथीरामश्चेतिख्यातिंगतोभुवि २६ इतिसीतावचोभिः
सालोपामुद्राजितातदा ॥ तूष्णीमासक्षणंनारीसभायांलज्जिताऽभवत् २७ ततोविहस्यवैदेहीलोपामुद्रांप्रपूजयत् ॥ मुनिपत्नीश्चसंपूज्यप्रार्थयामासतांमुहुः २८ मया
ऽपराधितंतेऽद्यतत्क्षमस्वपतिव्रते ॥ स्नेहात्प्रसंगतश्चोक्तंत्वदग्रेरामपौरुषम् २९ त्वद्भर्तुराशिषारामेपौरुषंचेतिवेद्म्यहम् ॥ इतिसंप्रार्थ्यताःसर्वामुनिपत्नीर्विसर्जयत् ३०
पूजितान्नृपपत्नीभिर्ययौसीतारघूत्तमम् ॥ ततोरामोऽपिपृथ्वीशैःपूजितोगजवाजिभिः ३१ ययौसनगरींहृष्टःसीतयागरुडेस्थितः ॥ येयेसमागतास्तत्रकुरुक्षेत्रेरविग्रहे
३२ तेसर्वेस्वस्वस्थलंजग्मूरामदर्शनहर्षिताः ॥ रामोऽपिनगरीमध्येपुरस्त्रीभिर्मुहुःपथि ३३ नीराजितःकुंभदीपैर्ययौनिजगृहंमुदा ॥ रेमेजनकनंदिन्याचिरकालंयथासु
खम् ३४ एवंरामेणसाकेतपुर्यामवनिकन्यया ॥ नानाक्रीडाकौतुकानिकृतान्यतिमहांत्यपि ३५ यथाकृताराघवेणसुखंक्रीडातुसीतया ॥ तथैवोर्मिलयारेमेलक्ष्म
णोऽपियथासुखम् ३६ मांडव्याभरतश्चाऽपिरेमेरामोयथास्त्रिया ॥ तथैवश्रुतकीर्त्याऽपिशत्रुघ्नःक्रीडनंव्यधात् ३७ एवंतेस्वीयपत्नीभिःपौराःक्रीडाःप्रचक्रिरे ॥ नाना
देशवासिनश्चनानाद्वीपनिवासिनः ३८ रेमिरेतेऽपिपत्नीभिःस्वीयाभिर्मुदिताःसुखम् ॥ सीतयाराघवोरेमेयथागौर्यासशंकरः ३९ रामेशासतिराज्येऽत्रनकोऽपिजगती
तले ॥ परदाररतोवेश्यागामीमादकवस्तुभुक् ४० नदरिद्रीनैवरोगीचिंताग्रस्तोनविह्वलः ॥ नपापात्माजडोनाऽऽसीन्नचोरोनाऽपिहिंसकः ४१ एवंशिष्यमयाप्रोक्तं
विलासचरितंवरम् ॥ सीतयारामचन्द्रस्यसाकेतेसौख्यदंनृणाम् ४२ विलासकांडमेतद्वैयःपठिष्यतिमानवः ॥ प्रातःकालेचमध्याह्नेनिशायांरामसन्निधौ ४३ सज्ञेयो
राघवःसाक्षाद्द्विमानवरूपधृक् ॥ विलासकांडपठनाद्धनार्थीधनमाप्नुयात् ४४ भोगानाप्नोतिभोगार्थीपुत्रार्थीपुत्रमाप्नुयात् ॥ विलासकांडमेतद्वैरामभक्त्यैकमानसः ॥
यःशृणोतिनरःकश्चित्ससुखंप्राप्नुयाद्भुवि ४५ विलासकांडश्रवणान्नरःपापात्प्रमुच्यते ॥ विलासकांडंपरमंरम्यंजनमनोहरम् ४६ आनंददायकंचित्रंश्रुतिसौख्यप्रदंमहत् ॥
येपठंत्यथशृण्वंतिसर्वान्कामान्लभंतिते ४७ धर्मार्थीप्राप्नुयाद्धर्मान्धनार्थीप्राप्नुयाच्छ्रियम् ॥ कामानाप्नोतिकामार्थीमोक्षार्थीमोक्षमाप्नुयात् ४८ निशायांमंचकेस्थि
त्वानिजपत्न्यापठेत्तुयः ॥ विलासकांडंषण्मासंतस्यपुत्रोभविष्यति ४९ अथवामंचकेन्यासंसंनिवेश्याऽथतत्पुरः ॥ द्वितीयेमंचकेस्थित्वास्वयंदयितयासह ५० यःशृ

णोतिनिशायांहिविलासाख्यंमनोरमम् ॥ एतत्कांडंपवित्रंचनवमासान्पुनःपुनः ९१ तस्यापुत्रस्यपुत्रःस्यान्नात्रकार्याविचारणा ॥ पुत्रार्थमेवश्रोतव्यंमध्वकेतु
पविश्यच ९२ श्रोतव्यंनान्यकामेषुमंचकस्थैर्नरैःक्वदा ॥ विलासकांडमेतद्धिस्त्रीकामाद्यःपठेन्नरः ९३ सभार्यांप्राप्नुयाद्रम्यांनवमासैर्नसंशयः ॥ कुमारीशृणुया
देतत्पत्यर्थंकांडमुत्तमम् ९४ पुनःपुनस्तुषण्मासंलभिष्यतिवरंपतिम् ॥ विलासकांडमेतद्वैयाःशृण्वन्तिवराःस्त्रियः ९५ सौभाग्यलक्ष्म्यानकदाताविहीनाभवन्तिहि ॥
भर्तुरायुष्यवृद्ध्यर्थंस्त्रीभिश्वस्नानपूर्वकम् ॥ श्रवणीयंविलासाख्यमेतत्कांडंमनोरमम् ९६ रम्यंविचित्रंमधुरंपवित्रंविलासकांडंहियथेक्षुदंडम् ॥ पाठादिनापापचय
प्रदण्डंधमककुण्डंभवरोगदण्डम् ९७ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये विलासकांडे कुरुक्षेत्रयात्रावर्णनंनाम नवमःसर्गः ॥ ९ ॥
॥ विलासकांडेसर्गा आनंदरामायणे नवैवचोद्दिष्टाः ॥ अष्टसप्तत्युत्तराःषट्शतश्लोकाः पापनुदःप्रोक्ताः ॥ १ ॥

श्लोक. प्रथम सर्गः ८५ द्वितीय सर्गः ७४ तृतीय सर्गः ८२ चतुर्थ सर्गः ८२ पंचम सर्गः ७३ षष्ठ सर्गः ५८

सप्तम सर्गः [illegible] अष्टम सर्गः ५५ नवमः सर्गः ५७ ॥ जोड़ ६७५ ॥

80

॥ इति श्रीमदानन्दरामायणे विलासकाण्डं समाप्तम् ॥

श्रीगणेशायनमः ॥ ॥ श्रीसीतारामचंद्राभ्यांनमः ॥ ॥ श्रीरामदासउवाच ॥ अथरामःसीतयाससाकेतेबंधुभिश्चिरम् ॥ क्रीडांचकारविविधांदुर्लभांत्रिदशैरपि १
एकदारघुवीरस्तुसोंतर्वत्नींविदेहजाम् ॥ ज्ञात्वाधात्रीमुखात्तुष्टोददौदानान्यनेकशः २ ब्राह्मणान्भोजयामासकोटिशःप्रत्यहंमुदा ॥ चकारनानालंकारान्नवीनान्रत्ननिर्मि
तान् ३ सीतायैदिव्यवासांसिहेमतन्तूद्भवानिच ॥ हरितान्यथपीतानिरक्तानिचित्रितान्यपि ४ कारयित्वाऽथकुशलैर्जनैःसूक्ष्माणिराघवः ॥ विस्तृतान्यतिदीर्घाणिपु
ष्पवत्सुलघून्यपि ५ महार्घाण्यतिरम्याणिददौपत्न्यैमुदान्वितः ॥ अथमासेद्वितीयेऽन्हिरामोद्विजवरैःसह ६ वसिष्ठेनपुंसवनसंस्कारंविधिपूर्वकम् ॥ सचकारोत्सवैर्दि
व्यैःसीतायाःपरमादरात् ७ सुमेधांजनकंचापिसमाहूयसविस्तरम् ॥ जनकःपरमस्तुष्टःसोंतर्वत्नींनिजांसुताम् ८ दृष्ट्वापुंसवनोत्साहेसीतारामौप्रपूजयत् ॥ नानालंका
रवासांसिहेमतन्तूद्भवानिच ९ हरितान्यथपीतानिसूक्ष्माण्यऽथलघूनिच ॥ विस्तीर्णान्यऽथदीर्घाणिसीतायैसददौमुदा १० हस्त्यश्वरथतुरगान्दासीर्दासान्मनोरमान् ॥
शिबिकाश्चाऽपिवासांसिददौरामायसादरम् ११ एवंसंपूज्यश्रीरामंसीतांचजनकःस्त्रिया ॥ सम्मानितोराघवेणययौस्वांमिथिलांपुरीम् १२ अथरामःसीतयासरेमेसन्तुष्ट
मानसः ॥ गर्भातिभाराक्रांतासासीतासंन्यस्तभूषणा १३ पांडुवर्णाननादीनाकृशाऽपिनितरांबभौ ॥ एकदाराघवंधात्र्याःसूचयामासजानकी १४ ममेच्छाऽऽराममध्ये
ऽथरंतुमस्तित्वयासह ॥ तथोपवनमध्येऽपिसाकेतनगराद्बहिः १५ तद्वाक्यमास्याद्प्रियावाक्यंश्रुत्वाचाहूयलक्ष्मणम् ॥ रामोऽब्रवीच्छुभांवाचंमधुरांस्मितपूर्विकाम् १६
हेसौमित्रेऽद्यसीतायाजाताऽऽरामस्पृहाऽस्तिहि ॥ मयारंतुंततस्त्वंहिसूचितोऽसिमयाऽधुना १७ तथेतिरामवाक्यंसोऽप्युररीकृत्यलक्ष्मणः ॥ गत्वासभायामाहूयत्वरया
माससेवकान् १८ चित्रोष्णीषान्वेत्रपाणीन्प्राहवाक्यंस्मिताननः ॥ कथनीयंहट्टमध्येह्यारामंयातिजानकी १९ राघवेणततोयूयंवणिजंस्त्वरयंत्विति ॥ ततःसौमित्रिव
चनाच्छ्रुत्वातेवेत्रपाणयः २० चित्रोष्णीषारुक्मदण्डाराजमार्गेचतुष्पथे ॥ हट्टेवीथ्यामूर्ध्वहस्तास्तदाप्रोचुर्महास्वरैः २१ पौराश्चवणिजःसर्वेतथाऽन्येव्यवसायिनः ॥
शृण्वंतुहृष्टहृदयाःसीतोद्यानंप्रगच्छति २२ राघवेणाऽभ्यनुज्ञातैर्भवद्भिर्गम्यतांपुरः ॥ एवंसर्वान्निवेद्याऽथजग्मुस्तेलक्ष्मणंचराः २३ दूतानाज्ञापयामासपुनःसौमित्रिरा
दरात् ॥ वासोगेहानिचित्राणिह्यारामेषुसमंततः २४ कल्पनीयानिवेगेनशोधनीयाभुवःशुभाः ॥ जलयंत्राणिसर्वाणिशोधनीयानिसादरम् २५ नानामांगल्यवस्तूनिसु
गंधीनिमहांतिच ॥ स्थापनीयानिवैतत्रवस्त्राण्यतिलघूनिच २६ एवमादीन्यनेकानिकल्पनीयानिसादरम् ॥ शृंगारणीयाःप्रासादाःसर्वेह्यारामसंभवाः २७ दिव्यवस्त्रै
स्तोरणाद्यैर्मुक्तागुच्छैर्विराजिताः ॥ तथेतिदूतास्तेसर्वेतथाचक्रुस्त्वरान्विताः २८ लक्ष्मणोराघवंगत्वानत्वातंप्राहसादरम् ॥ उद्योगसमयोऽद्यैववर्ततेरघुनन्दन २९
कुर्यांसिद्धंहिकिंयानंसीतायास्तववाविभो ॥ तत्सौमित्रेर्वचःश्रुत्वाजानकींराघवोऽब्रवीत् ३० सीतेयानंवदाऽद्यत्वंयत्तेमनसिरोचते ॥ तद्रामवचनंश्रुत्वाशिबिकांप्राहजान
की ३१ रामोऽपिरोचयामासशिबिकामेववैतदा ॥ तच्छ्रुत्वालक्ष्मणश्चाऽपिशिबिकेरत्नभूषिते ३२ हेमतन्तूद्भवैर्वस्त्रैःसर्वत्रवेष्टितेशुभे ॥ आनयामासदूतैःसन्मुक्ताजा
लविराजिते ३३ आरुरोहाथश्रीरामःशिबिकांपरयामुदा ॥ ततःसीतापांडुरांगीपरिमेयविभूषणा ३४ कृशांगयष्टिर्दासीभिर्दत्तहस्ताययौशनैः ॥ शिबिकामारुरोहाथ

पृथुलग्नोपबर्हणा ३५ दासीभिर्वीजिताचाऽपिधृताघोंकोपबर्हणा ॥ दधारशिबिकागुच्छंहेमतन्तुविनिर्मितम् ३६ विगुंफितंचमुक्ताभिःसीतास्वीयकरेणतम् ॥ मुक्ता
जालमवाक्षेश्वपश्यन्तीसामुहुर्मुहुः ३७ राजमार्गगतान्येवकौतुकानिसमन्ततः ॥ ददर्शनृत्यंवेश्यानांसखीभिःपरितोवृता ३८ ततस्तेबंधवःसर्वेबन्धुपत्न्यश्चमातरः ॥ शि
बिकासूपसंविष्टादिव्यासुचपृथक्पृथक् ३९ अग्रेतेभ्रातरस्सर्वेततस्सर्वाश्चमातरः ॥ सीताद्याबन्धुपत्न्यश्चसर्वेषांपुरतोगुरुः ४० एवंतेप्रययुस्सर्वेपश्यन्तोराघवंमुहुः ॥ नन्न
तुर्वारनार्यश्चनेदुर्वाद्यान्यनेकशः ४१ तुष्टुवुर्वंदिनस्सर्वेसीतांचरघुनायकम् ॥ एवंनानासमुत्साहैरारामंसययौमुदा ४२ राघवःसीतयायुक्तःसैन्यैःसर्वत्रवेष्टितः ॥ विवेश
वासोगेहंससीतोरघुनन्दनः ४३ वासोगेहेपुसर्वेतेतस्थुःपौराःसमन्ततः ॥ हट्टाःसमन्ततश्चासन्नृत्तुर्वारयोषितः ४४ वासोगेहस्यसीमायाभित्तयोवस्त्रनिर्मिताः ॥ पंचक्रो
शमितायामाश्वासन्विस्तारतोऽपिच ४५ पंचक्रोशमिताऽऽरामेयत्ररेमेविदेहजा ॥ ददर्शजानकीसम्यगारामंनृपसौख्यदम् ४६ रसाल्यंरसालैस्तैरशोकैःशोकवारणम् ॥
तालैस्तमालैर्हिन्तालैःशल्लैःसर्वत्रशालितम् ४७ खपुरैःखपुराकारंश्रीफलैःश्रीफलंकिल ॥ गुरुश्रियंत्वगुरुभिःकपिपिंगंकपित्थकैः ४८ वनश्रियःकुचाकारैर्लकुचेश्वमनो
रमम् ॥ सुवाफलसमारंभैरंभाभिःपरिभासितम् ४९ सुरंगैश्चापिनारिंगैरंगमंडपवच्छ्रियः ॥ वानीरैश्चाऽपिजंबीरैर्बीजपूरैःप्रपूरितम् ५० मंदांदोलितकर्पूरकदलीद
लसंज्ञया ॥ विश्रामायश्रमापन्नानाह्वयंतमिवाध्वगान् ५१ पुन्नागइवपुन्नागपल्लवैःकरपल्लवैः ॥ कलयंतमिवालोलैर्मल्लिकास्तवकस्तनम् ५२ विदीर्णदाडिमैःस्वांतंदर्श
यंतंनुरागवत् ॥ माधवीपत्ररूपेणश्लिष्यंतमिवकानने ५३ उदुंबरैरंबरगैरनंतफलशालिभिः ॥ ब्रह्मांडकोटिबिभ्रंतमनंतमिवसर्वतः ५४ पनसैर्वनसाभैःशुकनासैःपला
शकैः ॥ फलाशनाद्विरहिणांपत्रत्यक्तैरिवावृतम् ५५ कदंबवादिनोनीपान्दृष्ट्वाकंटकितैरिव ॥ समंततोभ्राजमानंकदंबककदंबकैः ५६ नमेरुभिश्चमेरोश्चशिखरैरिव
राजितम् ॥ राजादनेश्चमदनैःसदनैरिवकामिनाम् ५७ समंततःपडुवटैरुच्चैःपटकुटीकृतम् ॥ कुटजैस्तबकैर्मातमविष्ठितबकैरिव ५८ करमर्दैःकरीरैश्चकरंजैश्चकदं
बकैः ॥ सहस्रकरवद्वातमर्थिप्रत्युद्गतैःकरैः ५९ नीराजितमिवोदीपैराजचंपककोरकैः ॥ सपुष्पशाल्मलीभिश्चजितपद्माकरश्रियम् ६० क्वचिच्चलदलैरुच्चैःक्वचित्कां
चनकेतकैः ॥ कृतमालैर्नक्तमालैःशोभमानंक्वचित्क्वचित् ६१ कर्कंधुबंधुजीवैश्चपुत्रजीवैर्विराजितम् ॥ सतिंदुकेंगुदीभिश्चकरुणैःकरुणालयम् ६२ गलन्मधूककुसुमै
र्धरारूपधरंहरम् ॥ स्वहस्तमुक्तकुक्ताभिरर्चयंतमिवानिशम् ६३ सर्जार्जुनांजनैर्बीजैर्व्यंजनैर्वीज्यमानवत् ॥ नालिकेरैःसखर्जूरैर्धृतच्छत्रमिवांबरे ६४ अमंदैःपिचुमंदै
श्चमंदारैःकोविदारकैः ॥ पाटलातिंतिणीघोंटाशाखोटैश्करहाटकैः ६५ उद्दंडैश्चाऽपिशेहुंडैर्गुंडपुष्पैर्विराजितम् ॥ बकुलैस्तिलकैश्चैवतिलकांकितमस्तकम् ६६ अक्षैःप्ल
क्षैःसल्लकीभिर्देवदारुहरिद्रुमैः ॥ सदाफलसदापुष्पवृक्षवल्लिविराजितम् ६७ एलालवंगमरिचकुलंजनवनावृतम् ॥ जंब्वाम्रातकभल्लातशेलुश्रीपर्णिवर्णितम् ६८ शाकशं
खवनैरम्यंचंदनैरक्तचंदनैः ॥ हरीतकीकर्णिकारधात्रीवनविभूषितम् ६९ द्राक्षावल्लीनागवल्लीकर्णावल्लीशतावृतम् ॥ मल्लिकायूथिकाकुंदमदयंतिसुगंधितम् ७० तुलसी

१ विश्राममयंतमापन्नानितिपाठः । २ अपिशोभितैःइतिपाठः । ३ सेहुंडैरेरंडैर्गुंडपुष्पकैरितिपाठः । ४ वनवल्लीतिपाठः ।

वृक्षखंडैश्चशिग्वगस्तिद्रुमैर्युतम् ॥ भ्रमद्भ्रमरमालाभिर्मालतीभिरलंकृतम् ७१ अलिच्छलागतंकृष्णंगोपीरंतुमनेकशः ॥ सुगंधवातंसुखदंकामसञ्जनकंपरम् ७२ ना
नामृगगणाकीर्णनानापक्षिनिनादितम् ॥ नानासरित्सरःस्रोतैःपल्वलैःपरितोवृतम् ७३ उत्सृजंतमिवार्थंवैपतत्पुष्पैरितस्ततः ॥ केकिकेकारवैर्दूरात्कुर्वंतंस्वागतं
किल ७४ एतादृशंह्युपवनंजानकीतद्ददर्शसा ॥ तुष्टाऽभूद्दर्शनेनैवविचचारत्वितस्ततः ७५ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वाल्मीकीये जन्म
कांडे प्रथमःसर्गः ॥ १ ॥ ॥ श्रीरामदासउवाच ॥ ॥ अथसीताराघवेणरम्योपवनभूमिषु ॥ क्रीडाश्चकारविविधास्त्रिदशैरपिसंस्तुताः १ कदावनांतःप्रासादे
कदावस्त्रगृहेष्वपि ॥ कदाम्रवृक्षच्छायायांकदापुष्पवनेषुसा २ कदासाजलयंत्राणांसमीपस्थवरासने ॥ कदासरोवरतटेकदानद्यास्तटेऽपिच ३ नौकास्थाशरयूतोयेसा
रामेणाऽकरोत्कदा ॥ कदारात्रौजलक्रीडांसादिवाऽपिकदामुदा ४ कदातटाकेनौकास्थाकदारंभावनेषुसा ॥ कदावृक्षोर्ध्वगेहेषुकदाशिरगृहेष्वपि ५ कदासाशर
यूनद्यांनिर्मितेपुष्पगृहेषुसा ॥ कदाकृत्रिमगेहेषुपुष्पगेहेषुसाकदा ६ कदासाचित्रशालायांपुष्पकेवाकदामुदा ॥ कदासाकेतकीखंडेकदेकस्तंभसद्मनि ७ कदानौको
र्ध्वगेहस्थासरय्वाःसैकतेकदा ॥ एकस्तंभोर्ध्वगेहेऽपिसखीभिःपरिवेष्टिता ८ कदारामेणरहसिकदांदोलकसंस्थिता ॥ पर्यंकचक्रमध्यस्थाकदासादाडिमीवने ९
वृक्षसंबद्धपर्यंकसंस्थिताराघवेणहि ॥ चकारसाकदाक्रीडांपांडुरांगीपृथूदरी १० हरिद्वस्त्रयुतारक्तकंचुक्याजानकीबभौ ॥ गोपयित्वानिजंदेहंसीतावृक्षदलैर्घनैः ११ च
कारव्याकुलंरामंविनोदेनास्मितानना ॥ ज्ञात्वात्मानंराघवेणदृष्टांसम्यग्विविच्यच १२ दुद्रावसंभ्रमाद्रामंतत्कंठेदोलितेऽकरोत् ॥ एवंसीताराघवयोःक्रीडनंपरमाद्भु
तम् १३ विस्तारेणेहकोवक्तुंसमर्थःपृथिवीतले ॥ एकएवसमर्थोऽभूद्वाल्मीकिर्मुनिसत्तमः १४ शतकोटिमितंयेनचरितंवर्णितंतयोः ॥ सारंसारंमयायस्माद्वि
विच्यत्वांप्रवर्ण्यते १५ वारस्त्रीणांकदानृत्यंसीताऽग्रामेददर्शसा ॥ कदाशुश्राववाद्यानिमञ्जुलानिमहांतिच १६ कदाचित्रकथारम्याश्चेंद्रजालानिवाकदा ॥
कदावंशारोहणादिकौतुकानिददर्शसा १७ कदास्तंभोद्भवंदिव्यंददर्शकौतुकंमहत् ॥ कदाकलानांकौशल्यंसूत्रबंधैर्विनिर्मितम् १८ कदाकृत्रिमहस्त्यादिनानारूपाणिवैप
तैः ॥ सीताददर्शकुशलैर्धृतान्यात्मयुतान्यपि १९ एवंसीताऽऽराममध्येमासमेकंनिनायसा ॥ ययौरामेणनगरींनृत्यगीतादिभिःशनैः २० सौधस्थाभिःपुरस्त्रीभिर्वर्षिताकु
सुमादिभिः ॥ नीराजिताकुंभदीपैर्दीपैर्दध्योदनोद्भवैः २१ माषतैलपृथुपाद्यैर्नानाबलिभिरादरात् ॥ ययौनिजगृहंसीताराघवेणसमन्विता २२ एवंनानाकौतुकैश्चना
नादोहदपूरणैः ॥ रामस्तांरंजयामासपापिरामंस्वलीलया २३ षष्ठेमासेत्वथप्राप्तेसीतायाराघवोमुदा ॥ सीमन्तोन्नयनंविप्रैर्वसिष्ठेनचकारसः २४ सुमेधांजनकंचाऽपि
समाहूयादरेणहि ॥ ददौदानान्यनेकानिब्राह्मणेभ्योरघूत्तमः २५ जनकःपूजयामासरामंस्त्रीबन्धुसंयुतम् ॥ कौशल्यादींश्चसाकेतवासिनोवसनादिभिः २६ पौरांश्च
सुहृदःसर्वेभोजनार्थंविदेहजाम् ॥-स्वस्वगेहेपृथक्निन्युःश्रीरामादिभिरुत्सवैः २७ नानावाद्यनिनादैश्चवारस्त्रीनृत्यगायनैः ॥ स्त्रीमुक्तपुष्पवर्षाभिर्नानाकौतुकदर्शनैः २८

१ कृत्रिममत्स्यादीतिपाठः ।

नानादेशनिवासिन्यःकोटिशस्तान्नृपस्त्रियः ॥ समाजग्मुरयोध्यायांसातांद्रष्टुंमुदान्विताः २९ तासांसैन्यैश्चसर्वत्रवेष्टितानगरीविभौ ॥ ताःसर्वान्नृपपत्न्यश्चसीतायाःपर
मान्वरान् ३० दोहदान्पूरयामासुर्दिव्यान्नादिभिरादरात् ॥ ददुर्वस्त्राण्यलंकारान्दिव्यांश्चित्रविचित्रितान् ३१ स्वस्वदेशोद्भवैर्दिव्यैर्नानावस्तुभिरादरात् ॥ जान
कींपूजयामासुस्ताःसर्वाःपार्थिवस्त्रियः ३२ स्थित्वातामासमेकंतुजग्मुर्देशंनिजंनिजम् ॥ अथैकदातुश्रीरामःसुमेधांजनकंतथा ३३ सीतायाःपुरतःप्राहगुह्यंरहसिह
त्स्थितम् ॥ सीतामद्द्वासान्निध्येऽनगाच्चविरहेणताम् ३४ मयागत्यतन्मुखेंदुसुधयास्वास्थ्यमाप्यते ॥ आत्मानंविह्वलंदृष्ट्वासीतासान्निध्यमाश्रये ३५ अधुनाजा
नकींदृष्ट्वाकामोमेऽतीवबाधते ॥ पंचमासोर्ध्वतःसंगंगर्हयन्तिमुनीश्वराः ३६ प्रसूत्यग्रेपंचमासैःस्त्रीस्वास्थ्यंप्राप्यतेपुनः ॥ पंचमासैर्विनासंगाद्दंपत्योःक्षीणतेरिता
३७ अत्रकिंकरणीयंहिवदत्वंश्वशुराऽद्यमाम् ॥ चेत्प्रेषणीयासीतेयंमिथिलांप्रतिवैमया ३८ तर्हितत्राऽपिमेगन्तुंभविष्यतिसमुद्यमः ॥ किंचित्कालंतुसीतायावियो
गोयेनमेभवेत् ३९ उपायःसविधातव्यश्चिंतितोऽस्तिमयाऽपिच ॥ लोकापवादभीत्याऽहंरजकोक्तच्छलादपि ४० गंगायादक्षिणेतीरेवाल्मीकेराश्रमेशुभे ॥
त्यजामिजानकींशुद्धांकिंचित्कालांतरात्पुनः ४१ एनांसमानयिष्यामिप्रत्ययंमांप्रदास्यति ॥ ततोऽनयाचिरंकालंनानाभोगान्भजाम्यहम् ४२ जनकाऽद्यत्वया
तत्रनिजपत्न्यासुमेधया ॥ वाल्मीकेराश्रमेगत्वास्थेयंवर्षाणिपंचवै ४३ तथेत्यंगीचकाराऽथजनकोऽपिसुमेधया ॥ सीताप्यंगीचकाराऽथविहस्यतद्वचःपतेः ४४
अथरामोददावाज्ञांसस्त्रियंजनकंमुदा ॥ सगत्वामिथिलांराज्येस्वीयंसंस्थाप्यमंत्रिणम् ४५ ययौसुमेधयाशीघ्रंवाल्मीकेराश्रमंमुदा ॥ किंचिद्दासीदाससैन्यवाजि
वारणवेष्टितः ४६ नानोपचारान्सीतार्थंसंगृह्यशकटादिभिः ॥ चकारगेहंविपुलंवाल्मीकस्यसुखावहम् ४७ सर्वसंपत्तिसंयुक्तंबहुगोमहिषीयुतम् ॥ पूरितं
धान्यसंघैश्चवस्त्रैराभरणादिभिः ४८ कासारोपवनारामपुष्पवाटिशतावृतम् ॥ गवाक्षैश्चंद्रकांतानांकपाटैश्चसमन्वितम् ४९ कृष्णागुरुसकर्पूरोशीरमाल्यादि
मोदितम् ॥ कांचनशृंखलाबद्धरत्नपर्यंकमंडितम् ५० हंसपारावतपिककेकीशुकनिनादितम् ॥ मुक्तागुच्छवितानाद्यैःशोभितंचित्रचित्रितम् ५१ एवंमनो
हरंगेहंसीतार्थंजनकोऽकरोत् ॥ श्रीःसाक्षाद्यत्रभुक्ताऽयस्मिन्निवसितुंचिरम् ५२ किंदुर्लभंहितत्राऽस्तिवर्णनीयंमयाऽद्यकिम् ॥ यस्यानेत्रकटाक्षेणशक्रादीनांवि
भूतयः ५३ वाल्मीकयेसर्ववृत्तंजनकोऽप्यन्यवेदयत् ॥ मुनिश्चाप्यातिसंतुष्टोमेनेस्वतपसःफलम् ५४ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे
वाल्मीकीये जन्मकांडे द्वितीयःसर्गः ॥ २ ॥ ॥ श्रीरामदासउवाच ॥ अथरामंतुकौसल्याऽब्रवीद्रहसिसंस्थिता ॥ सीतांसीमोल्लंघनार्थंशीघ्रंप्रेषयराघव १ तन्मा
तुर्वचनंश्रुत्वातथेत्युक्त्वासविस्तरात् ॥ सलक्ष्मणोनिजामंत्रांप्राहयन्मंत्रितंपुरा २ वाल्मीकेराश्रमेसीतात्यागादिचसकारणम् ॥ अथमासेऽष्टमेप्राप्तेरामोराजीवलोचनः ॥ २ ॥
३ एकांतेजानकींप्राहवीजितोलक्ष्मणेनहि ॥ कल्पयित्वामिषंदेविरजकोक्तंत्वदाश्रयम् ४ त्यजामित्वांवनेलोकवादाद्भीतइवाऽपरः ॥ त्रिमासात्पंचमासाद्वासप्तमासात्सु
बुद्धिभिः ५ अंतर्वत्नीनगम्येतिशास्त्राज्ञांरजकच्छलात् ॥ त्वांत्यक्त्वापालयिष्यामिनिकटेवस्तुमक्षमः ६ त्वांदृष्ट्वाचंद्रवदनांकामोमेऽतीवबाधते ॥ त्वद्वियोगस्तुनिर्बंधा

द्विनामेऽत्रकथंभवेत् ७ तस्मात्कृतोऽयंनिर्बंधःसत्यंविद्धिमनोरमे ॥ पंचवर्षानंतरेणपुनरागत्यमेंतिकम् ८ लोकानांप्रत्ययार्थंत्वंशपथंहिकरिष्यसि ॥ भूमेर्विवरमार्गेणास्थि
त्वासिंहासनोपरि ९ यदागच्छसिपातालंजगत्यापूजितातदा ॥ भुवंस्तुत्वामीषयित्वात्वामंकेस्थापयाम्यहम् १० पुत्राभ्यांचमयासीतेततोभोगानवाप्स्यसि ॥ मत्त
स्त्वेकःकुशोज्येष्ठस्तवपुत्रोभविष्यति ११ मुनेस्तपःप्रभावेणभविष्यत्यपरोलवः ॥ वाल्मीकेराश्रमेचैवंकुमारौद्वौभविष्यतः १२ अग्रेगत्वाचत्वत्पित्रात्वद्योग्यंचगृहादि
कम् ॥ ससुमेधेनसकलंकृतमस्तिममाज्ञया १३ कुरुष्वाऽद्यमयायत्त्वासुच्यतेजनकात्मजे ॥ सात्विकीत्वंयथापूर्वंदंडकेगौतमीतटे १४ मद्वामांगेस्थितातद्वन्मेवामांगे
वसाऽधुना ॥ वाल्मीकेराश्रमेगंतुंगुणद्वयविमिश्रिता १५ भूत्वात्वमाश्रमेस्थित्वामद्वियोगंप्रदर्शय ॥ तत्राऽपित्वंकुशोत्पत्तौदास्यामिदर्शनंरहः १६ तथेतिरामवचना
ज्जानकीसास्मितानना ॥ रजस्तमोमयींस्वीयांछायांनिर्मायसादरम् १७ श्रीराघवस्यवामांगेसत्त्वरूपालयंययौ ॥ ततोरामःसभांगत्वारात्रौज्ञानैकविग्रहः १८ मंत्रि
भिर्मंत्रतत्त्वज्ञैर्वलमुख्यैर्वयोधिकैः ॥ समंततोवेष्टितःसंस्तस्थौसिंहासनोपरि १९ तत्रोपविष्टंराजानंसुहृदःपर्युपासिरे ॥ हास्यप्रायकथाभिश्चहासयंतःस्थिताःप्रभुम् २०
कथाप्रसंगात्पप्रच्छरामोविजयनामकम् ॥ पौराजानपदावामेकिंवदंतिशुभाशुभम् २१ सीतांतांमातरंवामेभ्रातॄन्वाकेकयीमथ ॥ नभेतव्यंत्वयाब्रूहिशापितोऽसि
ममोपरि २२ इत्युक्तःप्राहविजयोदेवसर्वेवदंतिते ॥ कृतंसुदुष्करंकर्मरामेणविदितात्मना २३ तथाप्येवंवदन्तित्वांजनास्तत्तेवदाम्यहम् ॥ किंतुहत्वादशग्रीवंसी
तामाहृत्यराघवः २४ अमर्षंपृष्ठतःकृत्वास्ववेश्मप्रत्यपादयत् ॥ कीदृशंहृदयंतस्यसीतासंभोगजंसुखम् २५ याहृताविजनेपूर्वंरावणेनवनेतदा ॥ अकस्माद
पिदुष्कर्मयोषित्स्वमर्षदंभवेत् २६ यादृग्भवतिवैराजातादृश्योनियताःप्रजाः ॥ इतिनानाविधावाचःप्रवदंतिपुरौकसः २७ अन्यत्किंचित्प्रवक्ष्यामिसांप्रतंरजको
दितम् ॥ दुर्मार्गगांस्वरजकींभार्यांक्रोधवशेनसः २८ रजकःप्राहभोरंडेसोऽहंरामोनमैथिलीम् ॥ रावणस्यगृहेस्पष्टंस्थितामंगीचकारयः २९ यथेच्छंगच्छ
रंडेत्वंनाऽहंरामवदाचरे ॥ गच्छताचमयामार्गेरजकेनसमीरितम् ३० इतिरामश्रुतंपूर्वंत्वयापृष्टंनिवेदितम् ॥ यत्पश्यसिहितंचाऽत्रतत्कुरुष्वरघूत्तम ३१ श्रु
त्वातद्वचनंरामःस्वजनान्पर्यपृच्छत ॥ तेऽपिनत्वाऽब्रुवन्राममेवमेतन्नसंशयः ३२ ततोविसृज्यसाचिवान्विजयंसुहृदस्तथा ॥ आहूयलक्ष्मणंरामोवचनंचेदमब्र
वीत् ३३ लोकापवादस्तुमहान्सीतामाश्रित्यमेभवेत् ॥ सीतांप्रातस्समानीयवाल्मीकेराश्रमांतिके ३४ त्यक्त्वाशीघ्रंरथेनत्वंपुनरायाहिलक्ष्मण ॥ वक्ष्यसेयदिवा
किंचिदत्रमांहतवानसि ३५ छित्वासीताभुजंलोकप्रत्ययार्थंसमानय ॥ इत्युक्त्वालक्ष्मणंरामोकैकेयींद्रष्टुमाययौ ३६ एतस्मिन्नन्तरेसीतांकैकेयीरहसिस्थिता ॥
पप्रच्छकौतुकात्सीतेभित्तौलेख्यदशाननम् ३७ मामत्रदर्शयस्वाऽद्यतांप्राहजानकीतदा ॥ मयावलोकितोनैवकदाऽपिसदशाननः ३८ यदाहर्तुंपंचवट्यांमांप्राप्तो
गौतमीतटे ॥ तदादृष्टस्तदंगुष्ठोमयादक्षिणपादजः ३९ तत्सीतावचनंश्रुत्वाकैकेयीप्राहतांपुनः ॥ यथादृष्टस्त्वयांगुष्ठस्तथाभित्तौलिखस्वहि ४० तथेतिजानकीले
ख्यतदंगुष्ठंभयानकम् ॥ कैकेय्यैदर्शयामासतामामंत्र्यगृहंययौ ४१ अंगुष्ठोपरिकैकेय्यायथायोग्योदशाननः ॥ लिखितःस्वेनहस्तेनरामंद्रष्टुंकुतूहलात् ४२ ताव

द्रामंसमायातंदृष्ट्वासासंभ्रमान्विता ॥ भित्त्यंतिकेराघवायददावासनमुत्तमम् ४३ रामोऽपिनत्वाकैकेयीमासनेसंस्थितोऽभवत् ॥ ददर्शभित्तौलिखितंचित्रितंतंदशान
नम् ४४ रामःपप्रच्छकेनाऽत्रलिखितोऽयंदशाननः ॥ कैकेयीकथयामाससीतयालिखितस्त्विति ४५ यत्रयत्रमनोलग्नंस्मर्यतेहृदितत्सदा ॥ स्त्रियाश्चरित्रंकोवेत्तिशिवा
द्यामोहिताःस्त्रिया ४६ कैकेयीवचनंचेत्थंश्रुत्वारामोमहामनाः ॥ सीताश्रयंसमावृत्तंकैकेयीमाहविस्तरात् ४७ लक्ष्मणेनत्यजाम्यंबश्वःसीतांजान्हवीतटे ॥ सीताभुजं
वनेछित्त्वासमानीयात्रमद्गिरा ४८ सौमित्रिस्त्वांतथापौरान्दर्शयिष्यतिनिश्चयात् ॥ सीतयालिखितोयस्मात्स्वभुजेनदशाननः ४९ स्त्रीहत्याभयमालक्ष्यतद्वधेलक्ष्म
णोमयम ॥ नचोदितश्चतांहिंस्राभक्षयिष्यंतिवेक्षणात् ५० इतिरामवचःश्रुत्वाकैकेयीमुदिताऽभवत् ॥ सीतायाविरहाद्रामोनेदंराज्यंप्रशास्यति ५१ सेवार्थरामचंद्रस्यल
क्ष्मणोऽपिनशास्यति ॥ तदाश्रीरामवाक्येनभरतोमेप्रशास्यति ५२ इतिसंचिंत्यहृदयेकैकेयीमुदिताऽभवत् ॥ रामोऽपिनत्वाकैकेयींसुमित्रांस्वांचमातरम् ५३ समा
वृत्तंचकैकेयींगेहेयज्जातमादरात् ॥ श्रावयामाससकलंवृत्तंसीताश्रयंप्रभुः ५४ नत्वासुमित्रांकौसल्यांरामःसीतागृहंययौ ॥ सीतयादत्तपाद्यार्घासनमंगीचकारसः ५५
समावृत्तंचकैकेय्यागेहेयद्दृष्टमादरात् ॥ श्रावयामासतत्कृत्स्नंवृत्तंतांजानकींमुदा ५६ तच्छ्रुत्वाजानकीप्राहकैकेय्यावचनान्मया ॥ अंगुष्ठएवलिखितस्तयोर्ध्वंलिखितो
ऽपिया ५७ अंगुष्ठस्याऽनुरूपेणदशास्योदुष्टबुद्धितः ॥ तत्सीतावचनंश्रुत्वाजानकीमाहराघवः ५८ कौटिल्यबुद्धिंकैकेय्याःसमग्रांवेद्म्यहंप्रिये ॥ इत्युक्त्वाराघवःसीता
मालिंग्याऽऽस्यंचुचुंबसः ५९ सीतयाहेमपर्यंकेभुक्त्वाभोगान्सुपुष्कलान् ॥ विनोदार्थंरघुपतिःप्राहरात्रौविदेहजाम् ६० स्त्रीणांसितेसगर्भाणांवांछितंवांछतेमनः ॥ का
तेवांछावदस्वत्वंतत्तेदास्यामिनिश्चितम् ६१ इतिरामवचःश्रुत्वाभाविकार्येणयंत्रिता ॥ साप्राहराघवंरामंगंगातीरस्थितांस्तरून् ६२ मुनीनामाश्रमांश्चाऽपिऋषिपत्नी
श्चतद्वनम् ॥ वांछतेमेमनोद्रष्टुंशीघ्रंप्रेषयतत्रमाम् ६३ इतिसीतावचःश्रुत्वातथास्त्वितिरघूत्तमः ॥ प्राहसीतेलक्ष्मणःश्वोनेष्यतित्वांममाज्ञया ६४ पुनःप्राहरघुश्रेष्ठः
सीतेतेक्रीडनादिभिः ॥ जपध्यानादिकंपूर्वंविस्मृतंयन्मयापुरा ६५ तत्करोम्यधुनासीतेगतायांत्वयिकाननम् ॥ इत्युक्त्वाजानकींरामःसुखंसुष्वापमंचके ६६ सीता
ऽपिचिंतयामासयत्रमातापितामम ॥ किंमान्यूनंहितत्राऽस्तिकिंचिद्वस्त्वादिकंसह ६७ नाऽहंनेष्यामिश्वस्तूष्णींसख्यादास्यासमन्विता ॥ लक्ष्मणेनरथेस्थित्वाग
च्छामिमुदितासुखम् ६८ इतिनिश्चित्यसारात्रौसुखंसुष्वापमंचके ॥ अथप्रभातेसोत्थायस्नातास्नातंरघूत्तमम् ६९ पक्वान्नादीनिसत्पात्रेपरिवेषयदुत्तमम् ॥ उपाहारे
कृतेभर्त्रास्वयंकृत्वोपहारकम् ७० पृष्ट्वोर्मिलादिकाःस्त्रीश्चततःश्वश्रूःप्रणम्यच ॥ गंगातीरस्थितान्वृक्षान्मुनीन्द्रष्टुंसमुद्यता ७१ ताःप्रपच्छसखीयुक्तादास्यासस्मारल
क्ष्मणम् ॥ ततोऽसौलक्ष्मणोभ्रात्राचोदितस्तांययौजवात् ७२ दास्यासख्यातुलस्याऽथसीतांकृत्वारथस्थिताम् ॥ ययौदक्षिणमार्गेणवायुवेगात्सजान्हवीम् ७३ इंद्राद्या
निर्जराश्चक्रुःसीतासन्मार्गसत्क्रियाम् ॥ उल्लंघ्यतमसांपुण्यांगोमतींजान्हवीमपि ७४ यमुनांतांमहापुण्यांतथामंदाकिनींनदीम् ॥ द्वितीयांतमसांपुण्यांसमुल्लंघ्याऽथल

१ गौतमोमितिपाठः ।

क्ष्मणः ७५ चित्रकूटोपत्यकायांवाल्मीकेराश्रमांतिके ॥ पिप्पलाधोमैथिलींतांसख्यादास्यावरासने ७६ निवेश्यनत्वासप्राहसाश्रुनेत्रःसगद्गदः ॥ लोकापवादभीत्यात्वां
त्यक्तवान्राघवोवने ७७ दोषोनकश्चिन्मेमातर्गच्छाश्रमपदंमुनेः ॥ इत्युक्त्वातांपरिक्रम्यसख्यादास्याऽपिवीजिताम् ७८ ययौरथेनसौमित्रिःपूर्वमार्गेणजान्हवीम् ॥
शिष्यैःश्रुत्वाऽथवाल्मीकिर्जनकेनसुमेधसा ७९ ययौस्त्रीभिर्द्विजैर्युक्तःपूजयामासजानकीम् ॥ शिबिकायांसंनिवेश्यवीजितांचामरादिभिः ८० नानावाद्यनिनादैश्चवे
श्यानांनर्तनैर्वरैः ॥ स्तवनैर्मागधादीनांनटादीनांसुगायनैः ८१ निनायजनकःसीतावाल्मीकेराश्रमेमुदा ॥ मुनिपत्न्योवन्यपुष्पैर्ववर्षुर्जानकींमुदा ८२ जानकीशिबि
काग्रेतेद्रुद्रुवुर्वेत्रपाणयः ॥ एवंविवेशसासीतावाल्मीकेराश्रमंशनैः ८३ चक्रुर्नीराजनंदीपैर्मुनिपत्न्यश्चजानकीम् ॥ जानकीहेमपर्यंकेस्तृतार्णोकोपबर्हणा ८४ सुखमा
पाश्रमेतस्यवाल्मीकेश्चतपस्विनः ॥ जानकींपूजयामासुर्मुनिपत्न्यःपृथक्पृथक् ८५ दिव्यान्नैर्वनसंभूतैर्वन्यपुष्पैर्निरन्तरम् ॥ ज्ञात्वापरात्मनोलक्ष्मींमुनिवाक्येनभ
क्तितः ८६ दोहदान्पूरयामासुःसीतायास्तामुनिस्त्रियः ॥ शिबिकासंस्थितासीताददर्शवनकौतुकम् ८७ यथापूर्वंतुसाकेतेसुखमापविदेहजा ॥ तथामुनेराश्रमेऽपिसु
खमापपतिव्रता ८८ ॥ इतिश्रीशतकोटिरामचरितान्तर्गतश्रीमदानन्दरामायणे वाल्मीकीये जन्मकांडे तृतीयःसर्गः ॥ ३ ॥ ॥ श्रीरामदासउवाच ॥ अथगं
गातटंगत्वालक्ष्मणश्चिंतयद्धृदि ॥ स्वेच्छयाकौतुकात्सीतांमयाशुद्धांसत्यक्तवान् १ स्वीयकामप्रशांत्यर्थंशास्त्राज्ञांप्रतिपालयन् ॥ एवंसतिपुनस्तेनकिंममाज्ञापितंरहः २
वनात्सीताभुजंछित्त्वानयस्वेत्यतिदुर्घटम् ॥ मयाऽपिशपथंश्रुत्वानपृष्टःसविचिंत्यच ३ अधुनाकिंकरोम्यत्रकथंरामंप्रगम्यते ॥ सीताभुजंविनादृष्ट्वारामोमांकिंवदिष्यति ४
छेत्तुंसीताभुजंशक्तोभविष्यामिकथंत्वहम् ॥ ययाऽहंपुत्रवन्नित्यंपालितोलालितस्त्विति ५ अधुनाऽग्निंविशाम्यत्ररामायास्यंनदर्शये ॥ एवंनिश्चित्यसौमित्रिश्चितांकर्तुं
मनोदधे ६ एतस्मिन्नन्तरेतत्रविश्वकर्माविधेर्गिरा ॥ कुठारहस्तोविपिनेबभ्रामतक्षरूपधृक् ७ तंदृष्ट्वालक्ष्मणःप्राहत्वंमेसाहाय्यमाचर ॥ कुठारेणतरूंश्छित्वाचितार्थे
देहिमांजवात् ८ यथेच्छंवसुदास्यामित्वामहंनिश्चयेनहि ॥ सोऽप्याहलक्ष्मणंवीरचिताहेतुंवदस्वमाम् ९ सौमित्रिःकथयामासपूर्ववृत्तंसविस्तरम् ॥ तच्छ्रुत्वासकलंतक्षाः
सौमित्रिंप्राहसस्मितः १० अल्पार्थेस्वीयकुणपंमाजुहावस्वबाहुज ॥ अहंसीताभुजंकृत्वाऽधुनादास्यामितेक्षणात् ११ इत्युक्त्वालक्ष्मणंकृत्वाजानकीभुजमुत्तमम् ॥ त्व
ङ्मांसास्थिस्नायुरक्तपूरितंकंचुकीयुतम् १२ सीतालंकारसहितंतस्याश्चिन्हविचिन्हितम् ॥ ददौलक्ष्मणहस्तेतंस्वयमंतर्दधेक्षणात् १३ सीताभुजंसमादायलक्ष्मणो
ऽपिपुरींययौ ॥ गतश्रियंनिरुत्साहांवात्यातिधूलिधूसराम् १४ ददर्शनगरींस्वीयांनारींहीनगृहोपमाम् ॥ विवेशाऽधोमुखःपुर्यांनत्वासदसिराघवम् १५ दर्शयामाससी
२६ तायाभुजंकंकणमण्डितम् ॥ तंनिरीक्ष्यभुजंरामोऽधोमुखःप्राहलक्ष्मणम् १६ कैकेयींसुहृदःपौरान्सर्वान्जानपदान्नृपान् ॥ सीताभुजोदर्शनीयस्त्वयाऽद्यममशासना
त् १७ तथेत्युक्त्वालक्ष्मणोऽपिसचकारयथोदितः ॥ भुजंसंरक्षयामासपेटिकायांनिधायसः १८ कैकेयीतंभुजंदृष्ट्वातुतोषनितरांहृदि ॥ रामोऽपिसीतारहितःपरात्मा
विज्ञानदृक्केवलआदिदेवः ॥ संत्यज्यभोगानखिलान्विरक्तोमुनिव्रतोऽभून्मुनिसेवितांघ्रिः १९ अथसीताऽपिवाल्मीकेर्मुनिपत्नीभिराश्रमे ॥ प्रत्यहंपूजितावन्यैःसुखंत

स्थौमुदान्विता २० एवंमासद्वयंतत्रनीत्वासीताऽऽश्रमेमुनेः ॥ सुदिनेसुधुवेरात्रौपुत्ररत्नंरविप्रभम् २१ एतस्मिन्नन्तरेरात्रौज्ञात्वातंसमयंप्रभुः ॥ राघवःकिंकिणीमा
लाघंटांमुक्त्वाऽघबन्धुना २२ पुष्पकस्यततस्तस्मिंस्थित्वाकाशपथाययौ ॥ वाल्मीकेराश्रमेवेगात्सबन्धुस्तंननामसः २३ ततोवाल्मीकिनाविप्रैर्मितै रेवरघूत्तमः ॥ जा
तकर्मादिसंस्कारांश्चकारविधिपूर्वकम् २४ सीतायाःपुरतःपुत्राननमालोकयन्मुदा ॥ ददौदानान्यनेकानिसवस्त्राभरणान्यपि २५ चकारविधिवच्छ्राद्धंपुत्रजन्ममहो
त्सवे ॥ देवदुन्दुभयोनेदुर्ववर्षुःपुष्पवृष्टिभिः २६ सुराःसीतांशिशुंरामंननृतुःखेसुरस्त्रियः ॥ नेदुर्जनकवाद्यानिननृतुर्वारयोषितः २७ तुष्टुवुर्मागधाद्याश्चसीतांरामंशि
शुंमुहुः ॥ ऋषिपत्न्यःशिशुंसीतांरामंदीपैःसुभूषिताः २८ पृथङ्नीराजनंकृत्वाजगुर्गीतंहिसुस्वरम् ॥ वस्त्राद्यैःपूजयामासताःसर्वारघुनंदनः २९ सीतारामौविदेहो
ऽपिपूजयामासविस्तरात् ॥ वाल्मीकिस्तुकुशैःशांतिंचकारविधिनाशिशोः ३० शांत्यर्थंप्रोक्षितोयस्मात्कुशैस्तस्मात्कुशाह्वयः ॥ वाल्मीकिनाराघवाग्रेनिश्चितंबालक
स्यहि ३१ एवंनानासमुत्साहैर्नीत्वातत्रनिशांसुखम् ॥ तत्रस्थान्सकलानाहममात्रागमनस्यहि ३२ यस्माद्वार्तांबहिर्गच्छेदाश्रमादस्यवैमुने: ॥ समेदंडचोमवेदेव:
शत्रुरूपोनसंशयः ३३ इत्युक्त्वासकलान्पृष्ट्वामुनीन्नत्वापुनःपुनः ॥ सीतामामंत्र्यश्रीरामोयानंभ्रात्राऽऽरुरोहसः ३४ विहायसाक्षणात्प्रापसाकेतंरघुनंदनः ॥ अवरु
ह्यविमानात्सपूर्ववन्निद्रितोगृहे ३५ अथरामोवाजिमेधशतंकर्तुमनोदधे ॥ कृत्वास्वर्णमयींसीतांवस्त्रालंकारभूषिताम् ३६ पापिनींमलिनांदुष्टांभर्तृनिंदापरायणाम् ॥
भर्तृविद्वेषिणींक्रूरांचौरकर्मणितत्पराम् ३७ भर्तारंघातुमिच्छन्तींसदाकलहकारिणीम् ॥ परभुक्तांपापरतांभर्तृवाक्यविलोपिनीम् ३८ स्वीयेच्छावर्तिनींनष्टांसूतां
नीतांगतांस्त्रियम् ॥ त्यक्त्वाकुशमयींविप्रैःकार्यापत्नीस्वकर्मसु ३९ हैमीकार्याबाहुजैश्चवैश्यैःकार्यातुराजती ॥ शूद्रैःकार्याताम्रमयीस्वस्वकर्मप्रसिद्धये ४० अथवास
र्ववर्णैश्चकार्यापत्नीतुकांचनी ॥ रामोऽपिकृत्वासौवर्णीमग्निहोत्रंचकारसः ४१ रावणेनयदानीतासीतासादंडकेतदा ॥ हेम्नोऽभावात्कुशमयीकृतारामेणजानकी ४२
अन्येकुशमयींपत्नींविधायगृहमेधिनः ॥ अग्निहोत्रमुपासन्तेनित्यत्यागोऽतिगर्हितः ४३ व्यभिचारवतीपापाभर्तृविद्वेषिणीतथा ॥ आधानेसापरित्याज्यानवात्या
ज्यामतांतरात् ४४ पक्षेपक्षेनवम्यांहिस्नानंह्यवभृथाभिधम् ॥ कर्तुंनिश्चितवान्रामस्तदाविप्रैःपुरोधसा ४५ भागीरथ्युत्तरेतीरेयज्ञभूमिंचकारसः ॥ आप्रयागान्मु
द्गलस्याश्रमोयावच्चदक्षिणे ४६ जान्हव्युत्तरतस्तावच्चकारस्वर्णलांगलैः ॥ यस्याश्रमस्यसान्निध्येभागीरथ्यस्त्युदग्वहा ४७ रुक्ममय्याऽथजानक्यायज्ञारंभंचकार
सः ॥ अज्ञानदम्भ्योद्रष्टुंवैचकारस्वर्णनिर्मिताम् ४८ वामांगस्थांशुभरूपांज्ञानदम्भ्यश्चसात्विकीम् ॥ विश्वस्तदैवश्रीरामोजानकींलोकमातरम् ४९ यज्ञान्तेस्वर्ण
जांसीतांददौस्वगुरवेप्रभुः ॥ एवंयज्ञशतेष्वत्रगुरवेशतमूर्तयः ५० याःसमर्पितारामेणतासांदानफलेनहि ॥ षोडशस्त्रीसहस्रेभ्यश्चोर्ध्वंस्त्रीणांशतंपुनः ५१ द्वारका
यांकृष्णरूपोविवाहेनोद्वहिष्यति ॥ प्रतियज्ञेश्यामकर्णमश्वंरामोमुमोचह ५२ चतुर्दिनैश्चतुर्दिक्षुपरिक्रम्यययौहयः ॥ एवंसर्वेषुयागेषुययौवाजीपृथग्जवात् ५३ पुष्पक
स्थःसशत्रुघ्नोहयरक्षांचकारवै ॥ एवंसदायज्ञवाटेविरेजेदीक्षयाविभुः ५४ एवंचनवतिर्यज्ञारामेणनवधैकृताः ॥ चरमस्यापिप्रारंभंरामोयज्ञस्यसोऽकरोत् ५५

मंगायादक्षिणेतीरेमुद्गलस्याश्रमोऽस्तिहि ॥ तत्रतस्यांऽतिकेगंगोदक्तीरेचउदग्वहे ५६ दिनानिदशवाल्मीकिर्निशायांसंध्ययोरपि ॥ श्रीरामरक्षयाचक्रेबालकाया
भिमंत्रणम् ५७ कुशंनामतदाचक्रेमुनिरेकादशेदिने ॥ चकारसर्वसंस्कारान्मुनिःश्रीराघवाज्ञया ५८ एवंसबालकस्तत्रववृधेमातृलालितः ॥ जनकश्चसुमेधाचना
नावस्त्रैःसुशोभनैः ५९ शोभयामासदौहित्रंनानाव्याघ्रनखादिभिः ॥ बालोऽपिरंजयामासस्वक्रीडाभिर्विदेहजाम् ६० एकदानिद्रितंप्रेंखेदृष्ट्वाबालंमुनेःपुरः ॥ अ
न्यकर्मणिव्यग्रांचसखींस्वीयांस्वमातरम् ६१ जनकंचापिसासीतादृष्ट्वासर्वान्बहिर्गतान् ॥ आश्विनेरविवारेचनद्यांस्नातुंसमुद्यता ६२ मुनिंतंबालरक्षायांकृत्वाऽथ
तमसांययौ ॥ दास्यामार्गेणगच्छंतीददर्शपथिवानरीम् ६३ कटिस्कंधमस्तकेषुबिभ्रतींपंचबालकान् ॥ तांदृष्ट्वास्वशिशुंस्मृत्वाचिंतयज्जानकीहृदि ६४ तिर्यग्यो
नौजन्मवत्यावानर्याबालकान्यहो ॥ स्नेहात्सहैवनीयंतेधिङ्मांमानवदेहजाम् ६५ एकंचापिनिजंबालंत्यक्त्वागेहेऽद्यगम्यते ॥ मयाविमूढयास्नातुंभुव्यत्रक्षणिकंसुखम्
६६ इतिधिक्कृत्यचात्मानंपरिवृत्याश्रमंययौ ॥ एतस्मिन्नन्तरेगेहेवाल्मीकिर्मुनिपुंगवः ६७ गतःसलघुशंकार्थंकार्यार्थंवटवोगताः ॥ गृहीत्वासाकुशंप्रेंखाद्ययौसीता
बहिःपुनः ६८ दास्यासहनदींगत्वोषसिस्नानंचकारवै ॥ अदृष्ट्वाऽथमुनिर्बालंदीर्घंनिःश्वस्यवैमुहुः ६९ सीताशापभयाच्चक्रेलवैर्बालंसपूर्ववत् ॥ तपोबलेनतंप्रोक्ष्यजीव
यामासवेगतः ७० ज्ञानदृष्ट्याऽतीवतयामुनिनानावलोकितम् ॥ ततःसीताऽपिसुस्नातादास्यागेहंशनैर्ययौ ७१ कटौगृहीत्वातंबालंरुक्मनूपुरनिःस्वना ॥ प्रेंखे
न्यंबालकंदृष्ट्वामुनिंपप्रच्छजानकी ७२ प्रेंखेकस्याःशिशुश्चायंसोऽपिदृष्ट्वातदाकुशम् ॥ कटिप्रदेशेजानक्याविस्मयंपरमंगतः ७३ नमस्कृत्यततःसीतांसर्ववृत्तंन्य
वेदयत् ॥ अंकेनिधायतंबालंसीतायाह्यब्रवीन्मुनिः ७४ प्रसादान्ममवैदेहिद्वितीयोऽयंसुतस्तव ॥ भवत्वयंलवोनाम्नालवैर्यस्माद्विनिर्मितः ७५ वाल्मीकेर्वचना
त्सापिशिशुंजग्राहजानकी ॥ मुनिस्तयोर्नामचक्रेकुशोज्येष्ठोऽनुजोलवः ७६ जातकर्मादिसंस्कारान्लवस्यापिचकारसः ॥ तदानिनेदुर्वाद्यानिभूम्यांखेऽपिदिवौक
साम् ७७ ववर्षुर्जानकींबालौवाल्मीकिंकुसुमैःसुराः ॥ चकारजनकश्चाऽपिसुमेधापरमोत्सवान् ७८ क्रमेणविद्यासंपन्नौसीतापुत्रौविरेजतुः ॥ धनुर्वेदंयामस्त्रविद्यां
शिक्षयामासतौमुनिः ७९ कृत्स्नंरामायणंस्वीयंकृतंतौशिक्षयन्मुदा ॥ यस्मिन्नानन्दरम्यंचचरित्रंराघवस्यहि ८० कुमारौस्वरसंपन्नौसुन्दरावश्विनाविव ॥ तन्त्रील
यसमायुक्तौगायंतौचेरतुर्वने ८१ तत्रतत्रमुनीनांतुसमाजेषुसुरूपिणौ ॥ गायन्तावपितौदृष्ट्वाविस्मितामुनयोऽब्रुवन् ८२ गन्धर्वेष्विहाकिन्नरेषुभुविवादेवेषुदेवालयेपा
तालेष्वथवाचतुर्मुखगृहेलोकेषुसर्वेषुच ॥ अस्माभिश्चिरजीविभिश्चिरतरंदृष्ट्वादिशःसर्वतोनाज्ञायीदृशगीतवाद्यगरिमानादर्शिनाश्राविच ८३ एवंस्तुवद्भिरखिलैर्मुनिभिः
प्रतिवासरम् ॥ आसातेसुखमेकांतेवाल्मीकेराश्रमेचिरम् ८४ रुक्मकंकणमञ्जीरनूपुरैस्तौविभूषितौ ॥ केयूररशनाहारकुंडलैरतिशोभितौ ८५ निजक्रीडाकौ
तुकैश्चबालवाक्यैर्मनोहरैः ॥ सीतांसुमेधांजनकंरंजयामासतुर्मुनिम् ८६ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वाल्मीकीये जन्मकांडे

१ तेनसुशिक्षितौइतिपाठः ।

कुशलवजन्मकथनंनामचतुर्थःसर्गः ॥ ४ ॥ विष्णुदासउवाच ॥ श्रीरामरक्षयाप्रोक्तंकुशायह्यभिमंत्रणम् ॥ कृतंतेनैवमुनिनागुरोतांमेप्रकाशय १ रामरक्षांवरांपुण्यांबा
लानांशांतिकारिणीम् ॥ श्रीशिवउवाच ॥ इतिशिष्यवचःश्रुत्वारामदासोऽब्रवीद्वचः २ ॥ श्रीरामदासउवाच ॥ सम्यक्पृष्टंत्वयाशिष्यरामरक्षाऽधुनोच्यते ॥ याप्रोक्ताशंभु
॥ ९ ॥ नापूर्वंस्कंदार्थंगिरिजांप्रति ३ ॥ श्रीशिवउवाच ॥ देव्यद्यस्कंदपुत्रायरामरक्षाभिमंत्रणम् ॥ कुरुतारकघातायसमर्थोऽयंभविष्यति ४ इत्युक्त्वाकथयामासरामरक्षांशिवः ९
स्त्रियै ॥ नमस्कृत्यरामचंद्रंशुचिर्भूत्वाजितेंद्रियः ५ ॥ अथध्यानं ॥ वामेकोदंडदंडंनिजकरकमलेदक्षिणेबाणमेकंपश्चाद्भागेचनित्यंदधतममितंसासितूणीरभारम् ॥
वामेऽवामेवसद्भ्यांसहमिलिततनुंजानकीलक्ष्मणाभ्यांश्यामंरामंभजेऽहंप्रणतजनमनःखेदविच्छेददक्षम् ६ अस्यश्रीरामरक्षास्तोत्रमंत्रस्य बुधकौशिकऋषिः श्रीरामचं
द्रोदेवता रामइतिबीजं अनुष्टुप्छंदः श्रीरामप्रीत्यर्थेजपेविनियोगः ॥ चरितंरघुनाथस्यशतकोटिप्रविस्तरम् ॥ एकैकमक्षरंपुंसांमहापातकनाशनम् ७ ध्यात्वानी
लोत्पलश्यामंरामंराजीवलोचनम् ॥ जानकीलक्ष्मणोपेतंजटामुकुटमंडितम् ८ सासितूणधनुर्बाणपाणिंनक्तंचरांतकम् ॥ स्वलीलयाजगत्त्रातुमाविर्भूतमजंविभुम् ९ रा
मरक्षांपठेत्प्राज्ञःपापघ्नींसर्वकामदाम् ॥ शिरोमेराघवःपातुभालंदशरथात्मजः १० कौसल्येयोदृशौपातुविश्वामित्रप्रियःश्रुती ॥ घ्राणंपातुमखत्राताश्रुखंसौमित्रिवत्सलः ११
जिव्हांविद्यानिधिःपातुकंठंभरतवंदितः ॥ स्कंधौदिव्यायुधःपातुभुजौभग्नेशकार्मुकः १२ करौसीतापतिःपातुहृदयंजामदग्न्यजित् ॥ पार्श्वेरघुवरःपातुकुक्षीइक्ष्वाकुनं
दनः १३ मध्यंपातुखरध्वंसीनाभिंजांबवदाश्रयः ॥ सुग्रीवेशःकटिंपातुसक्थिनीहनुमत्प्रभुः १४ ऊरूरघूत्तमःपातुगुह्यंरक्षःकुलांतकृत् ॥ जानुनीसेतुकृत्पातुजंघेदशमु
खांतकः १५ पादौविभीषणश्रीदःपातुरामोऽखिलंवपुः ॥ एतांरामबलोपेतांरक्षांयःसुकृतीपठेत् ॥ सचिरायुःसुखीपुत्रीविजयीविनयीभवेत् १६ पातालभूतलव्योमचा
रिणश्छद्मचारिणः ॥ नद्रष्टुमपिशक्तास्तेरक्षितंरामनामभिः १७ रामेतिरामभद्रेतिरामचंद्रेतिवास्मरन् ॥ नरोनलिप्यतेपापैर्भुक्तिंमुक्तिंचविंदति १८ जगज्जैत्रैकमंत्रेण
रामनाम्नाऽभिरक्षितम् ॥ यःकंठेधारयेत्तस्यकरस्थाःसर्वसिद्धयः १९ वज्रपंजरनामेदंयोरामकवचंपठेत् ॥ अव्याहताज्ञःसर्वत्रलभतेजयमंगलम् २० आदिष्टवान्यथास्वप्नेरा
मरक्षामिमांहरः ॥ तथालिखितवान्प्रातःप्रबुद्धोबुधकौशिकः २१ रामोदाशरथिःशूरोलक्ष्मणानुचरोबली ॥ काकुत्स्थःपुरुषःपूर्णःकौसल्यानंदवर्धनः २२ वेदांतवेद्योयज्ञेशः
पुराणपुरुषोत्तमः ॥ जानकीवल्लभःश्रीमानप्रमेयपराक्रमः २३ इत्येतानिजपेन्नित्यंमद्भक्तःश्रद्धयान्वितः ॥ अश्वमेधायुतंपुण्यंसंप्राप्नोतिनसंशयः २४ सन्नद्धःकवचीखड्गी
चापबाणधरोयुवा ॥ गच्छन्मनोरथोऽस्माकंरामःपातुसलक्ष्मणः २५ तरुणौरूपसंपन्नौसुकुमारौमहाबलौ ॥ पुंडरीकविशालाक्षौचीरकृष्णाजिनांबरौ २६ फलमूलाश
नौदांतौतापसौब्रह्मचारिणौ ॥ पुत्रौदशरथस्यैतौभ्रातरौरामलक्ष्मणौ २७ धन्विनौबद्धनिस्त्रिंशौकाकपक्षधरौश्रुतौ ॥ वीरौमांपथिरक्षेतांतावुभौरामलक्ष्मणौ २८ शरण्यौस ॥ ९ ॥
र्वसत्त्वानांश्रेष्ठौसर्वधनुष्मताम् ॥ रक्षःकुलनिहंतारौत्रायेतांनोरघूत्तमौ २९ आत्तसज्जधनुषाविषुस्पृशावक्षयाशुगनिषंगसंगिनौ ॥ रक्षणायममरामलक्ष्मणावग्रतःपथिसदैव
गच्छताम् ३० आरामःकल्पवृक्षाणांविरामःसकलापदाम् ॥ अभिरामस्त्रिलोकानांरामःश्रीमान्सनःप्रभुः ३१ रामायरामभद्रायरामचंद्रायवेधसे ॥ रघुनाथायनाथायसीता

याःपतयेनमः ३२ श्रीरामरामरघुनंदनरामरामश्रीरामरामभरताग्रजरामराम ॥ श्रीरामरामरणकर्कशरामरामश्रीरामरामशरणंभवरामराम ३३ लोकाभिरामंरणरंगधीरं राजीवनेत्रंरघुवंशनाथम् ॥ कारुण्यरूपंकरुणाकरंतंश्रीरामचंद्रंशरणंप्रपद्ये ३४ दक्षिणेलक्ष्मणोयस्यवामेचजनकात्मजा ॥ पुरतोमारुतिर्यस्यतंवंदेरघुनंदनम् ३५ गोष्पदीकृतवारीशंमशकीकृतराक्षसम् ॥ रामायणमहामालारत्नंवंदेऽनिलात्मजम् ३६ अघौघतिष्ठदूरेत्वंरोगास्तिष्ठंतुदूरतः ॥ वरीवर्तिसदाऽस्माकंहृदिरामोधनुर्धरः ३७ मनोजवंमारुततुल्यवेगंजितेंद्रियंबुद्धिमतांवरिष्ठम् ॥ वातात्मजंवानरयूथमुख्यंश्रीरामदूतंशरणंप्रपद्ये ३८ रामरामतवपादपंकजंचिंतयामिभवबन्धमुक्तये ॥ वंदितंसुरनरेंद्रमौलिभिर्ध्यायितंमनसियोगिभिःसदा ३९ रामंलक्ष्मणपूर्वजंरघुवरंसीतापतिंसुन्दरंकाकुत्स्थंकरुणार्णवंगुणनिधिंविप्रप्रियंधार्मिकम् ॥ राजेंद्रंसत्यसन्धं दशरथतनयंशामलंशांतमूर्तिंवन्देलोकाभिरामंरघुकुलतिलकंराघवंरावणारिम् ४० एतानिरामनामानिप्रातरुत्थाययःपठेत् ॥ अपुत्रोलभतेपुत्रंधनार्थीलभतेधनम् ४१ मातारामोमत्पितारामचन्द्रःस्वामीरामोमत्सखारामचंद्रः ॥ सर्वस्वंमेरामचन्द्रोदयालुर्नान्यंजानेनैवजानेनजाने ४२ श्रीरामनामामृतमंत्रबीजसंजीवनीचेन्मनसिप्रविष्टा ॥ हालाहलंवाप्रलयानलंवामृत्योर्मुखंवाविशतांकुतोभीः ४३ श्रीशब्दपूर्वंजयशब्दमध्यंजयद्वयेनापिपुनःप्रयुक्तम् ॥ त्रिःसप्तकृत्वोरघुनाथनामजपान्निहन्याद्द्विजकोटिहत्याः ४४ एवंगिरींद्रजेप्रोक्तारामरक्षामयातव ॥ मयोपदिष्टायोस्वास्यैर्विश्वामित्रायवैपुरा ४५ ॥ रामदासउवाच ॥ इतिशिवेनोपदिष्टांश्रुत्वादेवीगिरींद्रजा ॥ रामरक्षांपठित्वासास्कन्दंसममिमंत्रयत् ४६ तस्यास्तेजोबलेनैवजघानतारकासुरम् ॥ षडाननःक्षणादेवकृतकृत्योऽभवत्पुरा ४७ सैवेयंरामरक्षातिमयाख्याताऽतिपुण्यदा ॥ यस्याःश्रवणमात्रेणकस्यापिनभयंभवेत् ४८ वाल्मीकिनाऽनयापूर्वंकुशायह्यभिषेचनम् ॥ कृतंबालग्रहाणांचशांत्यर्थंसामयोदिता ४९ बालानांग्रहशांत्यर्थंजपनीयानिरन्तरम् ॥ रामरक्षामहाश्रेष्ठामहाघौघनिवारिणी ५० नास्याःपरतरंस्तोत्रंनास्याःपरतरोजपः ॥ नास्याःपरतरंकिंचित्सत्यंसत्यंवदाम्यहम् ५१ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकिये जन्मकांडे रामरक्षाकथनं नाम पंचमःसर्गः ॥ ५ ॥

॥ श्रीरामदासउवाच ॥

एकदाजानकीप्राहवाल्मीकिंमुनिपुंगवम् ॥ कथयस्वव्रतंयेनरामयोगोभवेन्मम १ तत्सीतावचनंश्रुत्वावाल्मीकिस्तांवचोऽब्रवीत् ॥ प्रतिपद्दिनमारभ्ययावत्सानवमीसिता २ तावन्नवदिनंसीतेव्रतंकुरुमयोच्यते ॥ प्रतिपदिरामचन्द्रपादुकेधातुनिर्मिते ३ कृत्वार्च्यंनवकमलैर्देहिमंत्रांजलिंशुभाम् ॥ ततःपुत्राननाम्यांत्वंजन्मकांडंशुभंशृणु ४ अष्टादशकमलैश्चद्वितीयायांशुभांजलिम् ॥ मंत्रैर्देहिपूजनांतेपतिपादुकयोर्मुदा ५ पतिंविनास्त्रियानान्यत्पूजनीयंहिदैवतम् ॥ जन्मकांडंद्विवारंतुशृणुभक्त्याशुचिव्रते ६ एवंवृद्धिर्नवाब्जैश्चकार्यासीतेदिनेदिने ॥ नवम्यामेकाशीत्यब्जैःपूज्यस्वभर्तृपादुके ७ नववारंजन्मकांडंपुत्रास्याम्यांसुखंशृणु ॥ ततोदशम्यांसुस्नातैकाशीतिद्विजदंपतीन् ८ संपूज्यवस्त्राभरणैर्भोजयस्वाऽत्रमैथिलि ॥ दत्त्वातेभ्योदक्षिणास्त्वंविसर्जयप्रणम्यतान् ९ अनेनव्रतराजेनजन्मकां

१ श्रीरामजयरामजयजयरामइतिरामदासानांमुख्योमंत्रः । २ यास्वप्नेइतिपाठः ।

ङश्रवादपि ॥ अचिरात्पतिनायोगंप्राप्स्यसित्वंविदेहजे १० संयोगकरणंनामव्रतंचेदंसुपुण्यदम् ॥ येकुर्वंत्यत्रमनुजाःस्वीयैर्योगंलभंतिते ११ तन्मुनेर्वचनंश्रुत्वाजानकी
प्राहतंपुनः ॥ बहून्यब्जानिसाकेतेपुष्पारामजलाशये १२ संतिकस्तत्रवैगन्तुंसमर्थस्त्विहवर्तते ॥ रामाज्ञयारामदूतैःक्रियतेरक्षणंसदा १३ तत्सीतावचनंश्रुत्वातत्पुरःसं
॥ ६ ॥ स्थितोलवः ॥ अब्रवीन्मातरंवाक्यंपंचवर्षवयःस्थितः १४ अंबारंभंव्रतस्याऽद्यत्वंकुरुष्वाचिरादिह ॥ अब्जान्यहंप्रदास्यामिसमानीयनिरंतरम् १५ तल्लवस्यवचःश्रुत्वा ६
विहस्यालिंग्यबालकम् ॥ चुचुंबतन्मुखंसीताल्वंवचनमब्रवीत् १६ पंकजानिकथंवत्सत्वंसमानीयदास्यसि ॥ असंख्यातैरामदूतैःक्रियतेरक्षणंसदा १७ तन्मातृवचनं
श्रुत्वालवःप्राहाथमातरम् ॥ अंबत्वत्स्तन्यपानेनवाल्मीकेःशस्त्रविद्यया १८ तथाशीर्भिर्मुनेश्चापिरामस्यापिभयंनमे ॥ पश्यात्वपौरुषंमेऽद्यमामनुज्ञातुमर्हसि १९ इत्यु
क्त्वामातरंनत्वावाल्मीकिंप्रणिपत्यच ॥ आशीर्भिरीडितस्ताभ्यांधृततूणीरकार्मुकः २० वस्त्रालंकारसंयुक्तस्त्वेकाकीरथमास्थितः ॥ ययौलवस्त्वयोध्यायांश्रीविहीनांजवे
नसः २१ क्रोशोपरिरथंस्थाप्यपद्भ्यामाराममाययौ ॥ तावन्मध्यान्हसमयेगताआरामरक्षकाः २२ भोजनार्थंस्वगेहानिलवोऽब्जानितदाऽहरत् ॥ पुनःस्वस्यंदनेस्थित्वाग
त्वाश्रमपदंमुनेः २३ नत्वामुनिंमातरंस्वांपंकजान्यर्पयन्मुदा ॥ मुदिताजानकीचापिव्रतारंभमथाऽकरोत् २४ एवंसप्तदिनान्यब्जान्यानयामासबालकः ॥ नविदूरामदू
तास्तेनीयंतेऽब्जानिचेतिहि २५ अथाष्टमीदिनेऽयोध्यांपूर्ववत्सलवोययौ ॥ आरामस्यबहिःस्थाप्यरथंपद्भ्यांययौलवः २६ गत्वाऽऽरामस्थकासारंगृहीत्वाऽब्जानिनिर्भ
यः ॥ शनैर्यावद्रथंप्रापतावदारामपायुः २७ तेतंदृष्ट्वालवंसाब्जंपप्रच्छुर्विस्मयान्विताः ॥ नत्वंदृष्टःकदाऽस्माभिःश्रीरामानुचरेषुहि २८ कदारभ्यरामसेवात्वयाचांगीकृता
वद ॥ यतस्त्वंनिर्भयोऽब्जानिगृहीत्वागच्छसिप्रभुम् २९ रामदूतवचःश्रुत्वाविहस्याहलवोऽपिसः ॥ वाल्मीक्यनुचरश्चाहंनरामदर्शनंमम ३० वाल्मीकेराज्ञयाऽब्जानि
नीयंतेप्रत्यहंत्वितः ॥ मयायुष्माभिरद्यैवदृष्टोऽहंनपुराकदा ३१ इतितद्वचनंश्रुत्वावाल्मीकीयंलवंतदा ॥ ज्ञात्वादूताःपारकीयंक्रोधाद्वचनमब्रुवन् ३२ रामस्त्वयानदृष्टो
ऽत्रननःपृष्टंत्वयापुनः ॥ नाज्ञापितोऽसिरामेणनीयंतेऽब्जानिप्रत्यहम् ३३ नज्ञातमेतदस्माभिस्त्विदानींतिष्ठमाव्रज ॥ अपराध्यसिरामस्यत्वांनेष्यामोवयंप्रभुम् ३४
इत्युक्त्वातस्यपंथानंरुरुधूरामसेवकाः ॥ चतुर्दशशस्त्रहस्ताःसशतारामतोयदा ३५ तान्दृष्ट्वास्यन्दनस्थःसलवोप्याहविहस्यच ॥ यूयंगच्छथश्रीरामंमद्वृत्तंब्रूतसादरात्
३६ यद्यस्तिपौरुषंरामेतर्हियास्यतिमांप्रति ॥ तत्तस्यवचनंश्रुत्वाक्रोधाद्दूतावचोऽब्रुवन् ३७ कथंवत्समर्तुकामस्त्वमित्थंवल्गसेसुधा ॥ त्वांबद्ध्वावयमेवाऽद्यविनेष्यामो
रघूत्तमम् ३८ इत्युक्त्वातेलवंधर्तुंययुस्तस्यरथांतिकम् ॥ तान्दृष्ट्वानिकटंप्राप्तान्रामदूतान्लवोऽपिसः ३९ टणत्कृत्यमहच्चापंशरान्संधायवेगतः ॥ अब्रवीत्तान्पुनर्वा
क्यंमागंतव्यंममांतिकम् ४० मार्गणैरघुनायुष्मान्त्यजामिराघवांतिके ॥ इत्युक्त्वातान्पुनर्दृष्ट्वाऽऽत्मानंधर्तुंसमुद्यतान् ४१ रामाग्रेप्राक्षिपद्बाणैर्लीलयाऽध्वरमंडपे ॥ च ॥ ६१
तुर्दशरामदूतालवमार्गणताडिताः ४२ निपेतुर्मूर्च्छिताःसर्वेरामाग्रेजान्हवीतटे ॥ शतशोरामदूतास्तेदृष्ट्वाचक्रुःपलायनम् ४३ लवोऽपिविजयीशीघ्रंपूर्ववत्स्वाश्रमं
ययौ ॥ समर्प्याऽब्जानिसीतायैसर्ववृत्तंन्यवेदयत् ४४ चतुर्दशरामदूताःस्वस्थचित्ताश्चिरेणते ॥ सर्ववृत्तंराघवायकथयामासुरादरात् ४५ तच्छ्रुत्वारामचंद्रोऽपिविस्म

याविष्टमानसः ॥ सहस्रदूतानारामरक्षणार्थंप्रचोदयत् ४६ लवोऽप्यथनवम्यांससाकेतंपूर्ववद्ययौ ॥ सहस्रंरामदूतास्तेलवंयोद्धुंसमुद्यताः ४७ लवस्तानाहयुष्माकंस्वा
मिनाराघवेणहि ॥ यदासीतावनेत्यक्ताजयश्रीश्चगतातदा ४८ युष्माकंराघवस्याऽपिगच्छध्वंराघवंपुनः ॥ युष्माभिर्मांमयायुद्धंकर्तव्यंमरणोन्मुखैः ४९ सीतात्यागे
तुयुष्माकंस्वामिनःपौरुषंनमाम् ॥ इतितेलववाग्बाणैर्भिन्नमर्मस्थलास्तदा ५० दूताःशस्त्राणिमुमुचुर्लवोपरिमहास्वनैः ॥ लवोपिचापमाकृष्यरामदूतान्स्वमार्गणैः ५१
प्राक्षिपत्पूर्ववद्रामंतच्छस्त्रौघंनिवार्यच ॥ आरामतोयदादूताश्चक्रुःसर्वेपलायनम् ५२ ययौलवस्सविजयीपूर्ववत्कमलान्वितः ॥ आश्रमंमातरंनत्वासर्ववृत्तंन्यवेदयत् ५३
पुत्रस्यपौरुषंश्रुत्वातुतोषजानकीतदा ॥ वृत्तंनिवेदयामासूरामदूतारघूत्तमम् ५४ मूर्छांलवशरैःप्राप्ताभिन्नदेहामखांगणे ॥ रामराममहाबाहोशृणुष्वापूर्वमादरात् ५५
पंचवर्षीयबालेनवयसद्यपराजिताः ॥ वाल्मीकेर्लब्धविद्यःसनजेयोलक्ष्मणादिभिः ५६ तद्वधेमंत्रयस्वाद्यत्वमुपायंरघूत्तम ॥ सीतात्यागादिवचनैर्नस्त्वत्वाऽपिचबालकः ५७
चकारनिंदांश्रीरामगतभीस्त्वेकएवयः ॥ ततेषांवचनैर्वृत्तंकृत्स्नमाकर्ण्यराघवः ५८ संमंत्र्यसचिवैर्दूतंवाल्मीकिंप्रेषयज्जवात् ॥ नत्वामुनिंरामदूतोराघवाक्यंन्यवेदयत् ॥
५९ यस्तेशिष्योमहावीरःसोपराध्यस्तिवैमम ॥ तंप्रेषयाऽश्ववातेनत्वमागच्छस्वमन्मखम् ६० विस्मृत्यापूर्वमेवत्वंनाहूतोसिक्षमस्वतत् ॥ तद्दूतवचनंश्रुत्वारामीयंमुनि
रब्रवीत् ६१ शिष्याभ्यामध्वरंचाहमेवयास्यामित्वंव्रज ॥ तथेतिरामदूतोपिमुनिंनत्वाययौमखम् ६२ जानन्नेवंभाविवृत्तमादौरामोमुनिंमखम् ॥ नाह्वयामासशिष्या
भ्यांलौकिकींरीतिमाश्रितः ६३ स्वीयव्रतसमाप्तिसाऽकरोत्सीतापिसादरम् ॥ ॥ विष्णुदासउवाच ॥ ॥ अशक्तैश्चकथंकार्यंव्रतमेतद्वदस्वमाम् ६४ ॥ ॥ राम
दासउवाच ॥ कांचनस्याथवारौप्यस्याथवाताम्रनिर्मिते ॥ कार्येद्वेपादुकेरम्येराघवस्ययथासुखम् ६५ अभावेकमलानांचपुष्पैरंजलिरीरिता ॥ एकाशीतिदंपतीनांनश
क्तिःपूजनेतदा ६६ पूजनीयानियुग्मानिनवशक्त्याथवासुखम् ॥ स्वशक्त्यापूजनंकार्यंवित्तशाठ्यंपरित्यजेत् ६७ अनेनद्रूरगस्याऽपिसंयोगश्चभवेज्जवात् ॥ भाविका
र्याणिवेगेणभविष्यंतिनसंशयः ६८ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये जन्मकांडे संयोगकरणव्रतकथनं नामषष्ठःसर्गः ॥ ६ ॥
॥ श्रीरामदासउवाच ॥ ॥ अथरामोऽपिधर्मात्माचरमेतुरगाध्वरे ॥ हयंमुमोचशत्रुघ्नस्तस्यपृष्ठेययौजवात् १ दक्षिणांपश्चिमामाशामुत्तरांतुरगोत्तमः ॥ अतिक्रम्यत
थाप्राचींयज्ञस्थानंन्यवर्तत २ नृपतिभ्यःसमस्तेभ्यःशत्रुघ्नोवसुकोटिशः ॥ गृहीत्वातैर्नृपैर्युक्तस्तुरगस्यानुगोययौ ३ सेनयाचतुरंगिण्यादशसाहस्रसंख्यया ॥ तस्मि
न्वितानेऋषयःसर्वेराजर्षयस्तथा ४ ब्राह्मणाःक्षत्रियावैश्याःसमाजग्मुःसहस्रशः ॥ चरमाध्वरमवंद्रष्टुंरामस्योत्सवमागताः ५ वाल्मीकिरपिसंगृह्यगायंतौभूमिजात्मजौ ॥
२७ जगामऋषिवाटस्यसमीपंसीतयासुखम् ६ मार्गेनृपसमूहेषुशिबिकास्थांहिजानकीम् ॥ नविदुःपार्थिवास्सर्वेजनास्तेपितथेतरे ७ सुमेधयाजनकोऽपिययौरामाध्वरंप्र
ति ॥ कोशद्वयांतरेपूर्वेयज्ञवाटान्मुनीश्वरः ८ कृत्वापर्णकुटींरम्यांताभ्यांतस्थौऽसीतया ॥ वाल्मीकिर्गोपयामासपर्णकुट्यांविदेहजाम् ९ नृपसेनानिवासेषुजनकश्चसुमे

१ गतमूर्छौलवशरैरितिपाठः । २ प्रेषयामासवेजवादितिपाठः ।

89

आ. रा. धया ॥ स्वसैन्येनययोतूष्णींरामेणासौनिरीक्षितः १० वाल्मीकिरपितौप्राइन्यस्तालंकारमण्डितौ ॥ जटाचीराजिनधरौसीतापुत्रौमहाधियौ ११ यत्रतत्रच ज. कां.
ग ।यंतौपुरेवीथिषुसर्वतः ॥ रामस्याग्रेप्रगायेतांशुश्रूषुर्यदिराघवः १२ आजन्मकांडात्कांडानिनगेयान्यत्रवालकौ ॥ यदाकरोम्यहंचाज्ञांगायेतांसकलंतदा १३ नग्रा
॥ ७ ॥ ह्यंतयुवाभ्यांसयदिकिंचित्प्रदास्यति ॥ इतितौचोदितौतत्रगायमानौविचेरतुः १४ यथोक्तंऋषिणापूर्वंतत्रतत्राभ्यगायताम् ॥ तांतुसुश्रावकाकुत्स्थःपूर्वचर्यांकृतित ९
तः १५ अपूर्वपद्यवृत्तादिगेयैश्वसमभिप्लुताम् ॥ बालाभ्यांराघवःश्रुत्वाकौतूहलमुपेयिवान् १६ अथकर्मांतरेरामःसमाहूयमुनीश्वरान् ॥ राज्ञश्चैवनरव्याघ्रःपण्डि
तांश्चैवनैगमान् १७ पौराणिकाञ्छब्दविदोगणकांश्चचिकित्सकान् ॥ नानाकौशल्यनिपुणांस्तथावृद्धान्द्विजादिकान् १८ यज्ञवाटेतुतान्पूज्यगायकौसंप्रवेशयत् ॥
तेसर्वेहृष्टमनसोराजानोब्राह्मणादयः १९ रामंतौदारकौदृष्ट्वाविस्मितानिर्निमेषकाः ॥ अवोचन्सर्वएवैतेपरस्परमथागताः २० इमौरामस्यसदृशौबिंबाद्बिंबमिवो
दितौ ॥ जटिलौयदिनस्यातांनचवल्कलधारिणौ २१ विशेषंनाधिगच्छामोराघवस्यानयोस्तदा ॥ एवंसंवदतांतेषांविस्मितानांपरस्परम् २२ तदाहरामदूतो
ऽपिलवबाणरुजंस्मरन् ॥ रामचंद्रंयज्ञवाटस्थितंवैसंभ्रमेणहि २३ लवमंगुलिनावीरंदर्शयंश्चमुहुर्मुहुः ॥ रामराममहाबाहोतमेनंपश्यवैलवम् २४ येनाऽस्माकंशरो
घैश्चप्रक्षिप्यतवसन्निधौ ॥ नीतानिकनकाब्जानिसुगंधीनिनिरंतरम् २५ सीतात्यागनिमित्तेनयेनतेनापिवैमुहुः ॥ कृतानिंदागर्वितेनत्वद्दण्डैकार्थिनाप्रभो २६ त
वदण्डभयादेवपूर्वंवेषोविलोपितः ॥ रथवस्त्राभरणानिशस्त्राण्यपिविहायच २७ धृतानिवल्कलादीनिदीनरूपोत्रदृश्यते ॥ त्वयाऽद्यदण्डनीयोऽयंवैधुसारातिगर्वितः
२८ इतिस्वदूतवाक्यानिशृण्वन्नपिरघूत्तमः ॥ प्रेम्णाऽवलोकयामाससुधाक्षिभ्यांशिशूमुहुः २९ बालावपिसभासंस्थान्नमस्कृत्ययथाक्रमम् ॥ राघवंस्वपितृव्यांश्च
वसिष्ठंप्रणिपत्यच ३० उपचक्रमतुर्मातुंवीणेरणयतःशुभे ॥ ततःप्रवृत्तंमधुरंगांधर्वंगीतमुत्तमम् ३१ श्रुत्वातन्मधुरंगीतंरामस्तोषमवापह ॥ ताभ्यांश्रुतंस्वचरि
तंविलासावध्यनुक्रमात् ३२ यद्यदाचरितंपूर्वंसीतयासहसौख्यदम् ॥ ततोऽपराण्हेश्रीरामःप्रसन्नवदनांबुजः ३३ उवाचतौसमग्रंवैश्वोगेयंममसन्निधौ ॥ तथेतिराम
वचनंतावंगीचक्रतुस्तदा ३४ ततोरामोलवंप्राहमेयद्यप्यपराधितम् ॥ त्वयापूर्वंतथापित्वांतुष्टोहंनात्रशिक्षये ३५ त्वद्गीतमच्चरित्रादिश्रवणादद्यमेमनः ॥ परांविश्रां
तिमापन्नंत्वत्कृतंक्षमितंमया ३६ अधुनामद्भयंत्यक्त्वात्वंसुखंविचरान्नहि ॥ तद्रामवचनंश्रुत्वालवोराघवमब्रवीत् ३७ मयाऽपराधितंराजंस्तवदर्शनकाम्यया ॥
मदपराधितंस्मृत्वाऽत्राहूतोऽहंयतस्त्वया ३८ अद्यतेदर्शनेनैवपौरुषंवृद्धिमागतम् ॥ कीर्तिर्मेमहतीजातातवाग्रेगायनादपि ३९ इत्युक्त्वासील्लवस्तूष्णींबंधुनागं
तुमुद्यतः ॥ समायास्तौगन्तुकामौस्थलंस्वीयंनिरीक्ष्यच ४० रामोऽयुतंवसुतयोर्भरतेनप्रदापयत् ॥ दीयमानंसुवर्णंतौनतज्जगृहतुस्तदा ४१ राजन्हेम्ना ॥ ७ ॥
किमेतेनह्यावांवैवन्यभोजिनौ ॥ कृपावलोकनेनैवपाहित्वमावयोःसदा ४२ इतिसंत्यज्यसंदत्तंजग्मतुर्मुनिसन्निधिम् ॥ आसीच्छ्रुत्वास्वचरितंरामोह्यतिविस्मि
तः ४३ कुशोऽपिसकलंवृत्तंवाल्मीकिंमातरंतथा ॥ निवेद्यजान्हवींस्नातुंकौतुकेनययौसुखम् ४४ लवोमुनीनांशिशुभिःशिशुक्रीडनमाचरत् ॥ एतस्मिन्नंतरेय

न्लवःक्रीडांचकारसः ४९ बालकैस्तत्रसंप्राप्तस्तुरगोध्वरकारिणः ॥ त्यक्त्वाक्रीडांलवोशीघ्रमश्वंधृत्वोटजांतिके ४६ वृक्षेबबंधाशिशुभिःपूर्ववत्क्रीडनंव्यधात् ॥ त
तःखेपुष्पकंप्राप्तंदृष्ट्वाबद्धंतुरंगमम् ४७ ज्ञात्वाबालकृतंसर्वंशत्रुघ्नाद्याविहस्यते ॥ दूतानाज्ञापयामासुर्मुच्यतांतुरगःसुखम् ४८ लवस्तानागतान्दृष्ट्वावायव्यास्त्रेण
वेष्टनम् ॥ संमन्त्र्यतान्मुमोचाऽथलीलयाशिशुसंयुतः ४९ झंझावातैस्तदायानंहस्त्यश्वरथपूरितम् ॥ शत्रुघ्नेनापितैर्दूतैःखेभूत्तद्भ्रमरोपमम् ५० तच्छ्रुत्वाराम
चंद्रोऽपिप्रेषयामाससादरम् ॥ सुग्रीवमंगदंनीलंमैंदंजांबवतंनलम् ५१ सुमंत्रंभरतंवायुपुत्रंताक्ष्यंविभीषणम् ॥ सुषेणंपार्थिवान्सर्वान्स्वस्वामितबलैर्युतान् ॥
५२ द्विविदंदधिवक्त्रंचवानरान्मकरध्वजम् ॥ तेलवंदुदुवुर्गर्वाद्युद्धंचक्रुस्त्वरान्विताः ५३ तानागतान्लवोदृष्ट्वाकस्यचित्पतितंभुवि ॥ दूतस्याश्वमोचनार्थ
मागतस्यशरासनम् ५४ तूणीरंचस्वयंधृत्वाययौयोद्धुंत्वरान्वितः ॥ टणत्कृत्यमहच्चापंचिंतयामासचेतसि ५५ पितृव्याद्याःस्थितायोद्धुंमयाद्यपुरतस्त्विह ॥
कथमेभिश्चयोद्धव्यंमयाचसमरांगणे ५६ कथंतीक्ष्णानद्यशरानेतेषुप्रक्षिपाम्यहम् ॥ स्वीयानांवधकर्तारंमांसीतासुनिराघवाः ५७ सहिष्यंतिकथंदृष्ट्वाकर्तव्यंकिं
मयाऽधुना ॥ युद्धात्पराङ्मुखोऽहंचेद्भूत्वागच्छामितंमुनिम् ५८ वाल्मीकिशिक्षितावि्द्यातर्हिसानिष्फलाभवेत् ॥ अतःकेषामपिवधंविनायुद्धंकरोम्यहम् ५९ इ
तिनिश्चित्यमनसिभेघशब्दवदाहतान् ॥ आगम्यतेकिमर्थंमांयुष्माभिर्द्रुतवेगतः ६० नसीतावत्सुलभोहंपीडनार्थमिहाद्यहि ॥ सीताक्लेशानलहरंमांमिघ वेत्थभोखलाः ६१
सीतोष्णोच्छ्वसितोग्राग्निज्वालाभिर्वोद्यपौरुषम् ॥ विदग्धंनस्फुटंलोकान्दर्शनीयंममापिच ६२ इतिस्ववाक्शरैर्भिन्नहृदयान्सलवःपुनः ॥ मोहयामाससकलान्मोहना
स्त्रंविसृज्यच ६३ ततोलवःसविजयीसुमंत्रंभरतंतथा ॥ कृत्वास्वकक्षयोःशीघ्रंकराभ्यांवायुनंदनम् ६४ सुग्रीवंचमुदाधृत्वासीतायैतान्प्रदर्शयत् ॥ दृष्ट्वासीतापितान्वीरान्
मोहनास्त्रेणमोहितान् ६५ पुत्रात्तान्मोचयामासरक्षयामासतान्रहः ॥ तान्नीतान्राघवःश्रुत्वालक्ष्मणंवाक्यमब्रवीत् ६६ ईदृशंपौरुषंवंघोरावणेनाऽपिनोकृतम् ॥ यथा
कृतंबालकेनकरणीयंकिमत्रवै ६७ तद्रामवचनंश्रुत्वालक्ष्मणःप्राहराघवम् ॥ माचिंतेयंत्वयाकार्याधृत्वाहंतंशिशुंक्षणात् ६८ त्वत्सान्निधावानयामिसिंहोमृगशिशुंयथा ॥
इत्युक्त्वाराघवंनत्वारथारूढोययौजवात् ६९ सेनयासचिवैर्युक्तोवाल्मीकेर्नसतिस्थलम् ॥ तमागतंविबुध्याथलवोपितत्पुरोययौ ७० तंदृष्ट्वाबालकंरम्यंकृपयालक्ष्मणोऽब्रवी
त् ॥ माशिशोत्वंकुरुष्वाऽद्यसाहसंमत्पुरस्त्विह ७१ नसमर्थोऽसिवैस्थातुंगच्छनोचेन्मरिष्यसि ॥ शेषंरामायणंश्रोतुंत्वत्तोऽहंत्वांनिहन्मिन ७२ त्वयाऽपराधितंबालरा
घवस्यमुहुर्मुहुः ॥ तत्सर्वमप्यहंवेद्मितथाऽपित्वांनिहन्मिन ७३ नीतान्वीरान्समर्प्याथवाजिनारघुनंदनम् ॥ एहित्वंशरणंबालयद्यस्तिजीवितस्पृहा ७४ तत्सौमित्रेर्वचः
श्रुत्वालवोऽभीतस्तमब्रवीत् ॥ वेद्मित्वांराघवंचापिसीतात्यागात्तपौरुषम् ७५ सतितायामेवयुवयोःपौरुषंनलवेमयि ॥ सीतादुःखापनोदार्थंमुनिनानिर्मितस्त्वहम्
७६ युवांजित्वाऽद्यसमरेसीतादुःखंप्रमार्जये ॥ सुघायुवाभ्यांसासीताछलितापिपतिव्रता ७७ तस्याविनिष्कृतिंचाहंकर्तुमत्रसमागतः ॥ सीतादुःखाग्निनायुष्मत्पौ

१ यूयंसीतावत्सुलभांमांपीडनार्थमिहागताःइतिपाठः । २ सीतात्यागादपौरुषमितिपाठः ।

रुषंदग्धमस्तितत ७८ नस्थातव्यंममाग्रेत्रगच्छध्वंविषवोपमैः ॥ इतितेलववाग्बाणैर्भिन्नमर्मस्थलाश्वते ७९ लक्ष्मणाद्यास्तदुस्तंशस्त्रैरस्त्रैर्लवंक्रुधा ॥ ततोलवश्चस्वै
र्बाणैःशस्त्रवृष्टिंनिवार्यच ८० श्रीरामसचिवादींश्चप्राक्षिपद्यज्ञमण्डपे ॥ तेसर्वेसचिवाद्याश्चलवमार्गणताडिताः ८१ भिन्नदेहालोहिताक्ताःप्रोचूरामंस्खलद्गिरा ॥ रा
मत्वंनोपश्यसिकिंतूष्णीमध्वरमण्डपे ८२ उपायंचिंतयस्वान्यंवधेतस्यलवस्यच ॥ शस्त्रैरस्त्रैर्धृतिंयुद्धेनगच्छतिलवःप्रभो ८३ सहाय्यंकुरुसौमित्रेर्यदिबन्धुंसजीवि
तम् ॥ त्वमिच्छसिलवशरप्रहाराद्रघुवत्सल ८४ इत्युक्त्वालववाक्यानिराघवंतेन्यवेदयन् ॥ तानिश्रुत्वाराघवोऽपितूष्णीमासीत्तदाक्षणम् ८५ लवोऽपिलक्ष्मणंबा
णैर्विव्याधदशभिर्दृढम् ॥ आपुंखमग्नास्तेबाणाःशरीरेलक्ष्मणस्यच ८६ ततःक्रोधपरीतात्मालक्ष्मणोवेगवत्तरः ॥ लवदेहेस्वशस्त्राणिभवन्तिविफलानिहि ८७ दृष्ट्वे
तिव्यग्रचित्तःसक्षणंसञ्चित्यवैहृदि ॥ ब्रह्मास्त्रेणलवंबध्वासाऽश्वंराज्ञेन्यवेदयत् ८८ ब्रह्मास्त्रंमानयंस्तूर्णींययौरामंलवोऽपिसः ॥ राघवस्तंसमानीतंदृष्ट्वालक्ष्मणमब्र
वीत् ८९ जानन्नपिसुतंस्वीयंकौतुकंदर्शयञ्जनान् ॥ महत्कार्यंकृतंबन्धोत्वमेनंविद्धिबाहुजम् ९० द्विजहत्याभयंत्यक्त्वाघातयस्वैनमद्यहि ॥ रामंप्रोवाचसौ
मित्रिर्नायंशस्त्रैर्मरिष्यति ९१ भरताद्यैर्मयाचाऽपिनायंकिंताडितोऽसिभिः ॥ अस्यदेहेक्षतंचैकमपिकिंदृश्यतेत्वया ९२ तच्छ्रुत्वाराघवःप्राहप्रष्टव्योबालकस्त्व
या ॥ केनोपायेनतेमृत्युर्भवेदितिममाग्रतः ९३ गोप्यायंतिनिजंमृत्युंनशूरावधशंकया ॥ नवदंत्यन्यतंकापिस्वबलेनैवजीविताः ९४ ततःपृष्टोलक्ष्मणेनलवः
प्राहाथलक्ष्मणम् ॥ जलस्यसेचनान्मृत्युंस्वीयांज्ञात्वासुनेर्गिरा ९५ कापटयुद्धयालोकान्हिदर्शयन्स्वपराक्रमम् ॥ जलस्यसेचनेनाद्यमृत्युर्मेनिश्चितोभवेत् ९६
ततस्यवचनंश्रुत्वाशिलायांतंनिवेश्यच ॥ सेचनंतोयकलशैःकारयामासलक्ष्मणः ॥ अयोध्यावासिभिर्नारीपुरुषैःपरमादरात् ९७ चतुर्मुखैश्चर्मघटैर्दृषानीतैश्च
कोटिशः ॥ तथाकार्पटिकैश्चापिरथोष्ट्रवारणादिभिः ९८ आनयित्वाजलंशीघ्रंसिषेचलवबालकम् ॥ यथायथाजलैस्तंहिसेचनंचक्रिरेजनाः ९९ तथातथाल्व
स्तत्रव्यवर्द्धतघनोयथा ॥ सप्ततालप्रमाणोऽभूद्दृष्ट्याभीमपराक्रमः १०० ततस्तंलक्ष्मणःप्राहत्वयालवमृषेरितम् ॥ नायंतववधोपायस्त्वदृध्यर्थंकृतःखलु १०१
लवोप्याहाऽथसौमित्रिंकौटिल्येनप्रतारयन् ॥ यथातैलक्षयेदीपोवृद्धिमंतेप्रगच्छति १०२ तथायुषःक्षयेमेऽपिवृद्धिंपश्यक्षणंत्विमाम् ॥ तद्वाक्यंमानयन्सत्यंसेच
यत्तंसलक्ष्मणः १०३ जलैर्नागैस्समानीतैःपूर्ववच्चपुनःपुनः ॥ काष्ठसोपानमार्गेणसेचनंचक्रिरेजनाः ४ ब्रह्मास्त्रेणविनिर्मुक्तःप्रचचालल्वस्तदा ॥ भुजावास्फाल्यामा
सतथोरूचालल्लीलया ५ तंदृष्ट्वादुद्रुवुःसर्वेत्यक्तातोयघटानपि ॥ शतघ्नूत्रंप्रमुंचंतोमुक्तकच्छालवेक्षणाः ६ एतस्मिन्नन्तरेक्रीडन्गंगायांतानजनान्कुशः ॥ पप्रच्छाऽद्यमु
हुर्नारंकिमर्थंनीयतेजवात् ७ जनाःप्रोचुर्लवंहंतुमस्माभिर्नीयतेजलम् ॥ विश्वस्तैर्लववाक्येनतच्छ्रुत्वासययौकुशः ८ संगृह्यस्वाश्रमाच्चापंतूणीरेवेगवत्तरः ॥ लवंमोच
यितुंचापंटणत्कृत्वाऽध्वरस्थले ९ कुशचापध्वनिंश्रुत्वातस्थौतूष्णींलवःक्षणम् ॥ ततोदृष्ट्वाकुशंप्राप्तंययौयोद्धुंसलक्ष्मणः ११० तंदृष्ट्वासकुशःप्राहक्वलितोजानकीलवौ ॥
त्वयारामेणलोकेश्वतयोःकर्तुंविनिष्कृतिम् ११ अहंप्राप्तोऽस्मिमांबालंल्ववत्त्वंनमानय ॥ युवयोःपौरुषंनार्यांशिशावस्तीतिवेद्म्यहम् १२ सीताक्लेशानलज्वालसंदग्धंयुवयो

९१

र्बलम् ॥ नममाग्रेस्फुटंकार्ययुवाभ्यामुपहासकृत १३ वाल्मीकिशिक्षितांविद्यांरामत्वामद्यदर्शये ॥ इत्युक्त्वातुमुलंयुद्धंपितृव्येणचकारसः १४ आसन्वृथाजानकीये
लक्ष्मणोत्सृष्टमार्गणाः ॥ रामायणात्कुशोज्ञात्वाशेषएवाऽत्रलक्ष्मणः १५ जातोऽस्तीतिविधेतस्यगारुडास्त्रंमुमोचसः ॥ क्षात्रधर्मंपुरस्कृत्यनतद्दिसाभयंदधे १६ जान
न्युद्धेपितुर्हत्याजाताचेन्नभयंत्विति ॥ तद्दृष्ट्वाखगराजास्त्रंसौमित्रेःकुंठितागतिः १७ भयभीतःपृथिव्यांहिपपातलक्ष्मणोरथात् ॥ तंदृष्ट्वारामचन्द्रश्चदीक्षायुक्तोऽपिवे
गतः १८ धृत्वाचापंचतूणीरंयज्ञकुण्डाग्रतःस्थितः ॥ चापेसंधायब्रह्मास्त्रंसौमित्रेर्जीविताशया १९ मुमोचबाणमाकाशेगारुडोपरिसादरम् ॥ तेनतच्छांतिमगमत्
ब्रह्मास्त्रेणतुगारुडम् १२० ततःकुशःसंदधेसस्पार्शास्त्रंराघवोपरि ॥ उवाचनाहंसीतावत्सुलभश्छलितुंत्वया २१ जनान्दर्शयितुंस्वीयंपौरुषंजानकीवने ॥ त्यक्तात्वया
वृथापूर्वंजानेहंतवचेष्टितम् २२ वाल्मीकिशिक्षितांविद्यांममाद्यत्वंविलोकय ॥ नोचेत्त्वंयाहिशरणंवाल्मीकिंजानकीमपि २३ तद्वाक्शरैर्भिन्नमर्मारामःसार्पंविलोकय
तत् ॥ औल्वस्त्रंससृजेघोरंतेनतच्छांतिमापवै २४ संदधेसारमेयास्त्रंकुशस्तंराघवंपुनः ॥ रामोऽपिमौशलास्त्रेणसारमेयंन्यवारयत् २५ वन्हचस्त्रंससृजेघोरंकुशोऽपि
राघवंजवात् ॥ न्यवारयच्चतद्रामोमेघास्त्रेणसलीलया २६ वायव्यंससृजेरामंजानकीजठरोद्भवः ॥ निवारयच्चतद्रामोपर्वतास्त्रेणलीलया २७ वज्रास्त्रंससृजेरामंसीतेयःसोति
सम्भ्रमात् ॥ याम्यास्त्रेणाऽथरामोऽपिवज्रास्त्रंतन्न्यवारयत् २८ ब्रह्मास्त्रंससृजेरामंसीतेयःपरमादरात् ॥ हाहाकारस्तदाचासीद्राघवस्याऽध्वरांगणे २९ न्यवारयत्तद्ब्रह्मास्त्रं
वैष्णवेनरघूत्तमः ॥ ततोरामंकुशस्तीक्ष्णान्नाराचांश्छतशःपुनः १३० मुमोचराघवश्चाऽपिमार्गणांश्छतशःकुशम् ॥ एवंतत्तुमुलंयुद्धंबभूवप्रहरंतयोः ३१ तदासीत्कौ
तुकंरामकुशयोर्युध्यतोर्महत् ॥ रामचापविनिर्मुक्तागतायेयेपतत्रिणः ३२ तेतेकुशस्योत्तमांगोपरिष्टाद्धरणीतले ॥ पतंतिस्मतथायेयेकुशचापविनिर्गताः ३३
शरास्तेरामचन्द्रस्यपतंतिस्मपदांतिके ॥ तद्दृष्ट्वाकौतुकंरामोविस्मयाविष्टमानसः ३४ आज्ञापयत्स्वसचिवंगच्छवाल्मीकिसन्निधिम् ॥ पृच्छस्वतंनमस्कृत्यकौते
शिष्याविमौवली ३५ ततोज्ञात्वाऽनयोर्घातंकरिष्यामिमितिक्षणात् ॥ तथेतिरामवचनात्समन्त्रीरथमास्थितः ३६ क्रोशद्वयांतरेणैवसव्यंकृत्वाकुशंलवम् ॥ दृष्ट्वा
नत्वाऽथवाल्मीकिंरामवाक्यंन्यवेदयत् ३७ मुनिःप्राहमन्त्रिणंत्वंवदरामायमेवचः ॥ समामध्येगायनस्यकालेस्वोविदितंतव ३८ भविष्यतिसमस्तंहित्वृत्तंबाल
कयोःशुभम् ॥ ततोमन्त्रिर्मुनेर्वाक्यंराघवायन्यवेदयत् ३९ कुशंलवंसमाहूयवाल्मीकिरपितौमुदा ॥ समालिंग्यकथाभिस्तांनिनायरजनींसुखम् १४० ॥ इ
तिश्रीशतकोटिरामचरितांतर्गत श्रीमदानन्दरामायणे वाल्मीकीये जन्मकाण्डे कुशलवयोः पराक्रमवर्णनंनाम सप्तमःसर्गः ॥ ७ ॥ ॥ श्रीरामदासउवाच ॥
अथप्रभातेरामेणसमाहूतावुभौशिशू ॥ नत्वामुनिंमातरञ्चसभायांजग्मतुर्मुदा १ वाल्मीकेराज्ञयाबालौजटाकृष्णाजिनांबरौ ॥ जन्मकांडंत्वेकमेवजगतुस्तौपि
तुःपुरः २ जनैःश्रुत्वास्वचरितंरामोभूदतिविस्मितः ३ आसन्जनाश्चापिसर्वेविस्मयाविष्टमानसाः ॥ ज्ञात्वासीताकुमारौतौसन्तोषंपरमंययुः ४ एतस्मिन्नन्तरे
सर्वेल्ववाप्यस्त्रपीडिताः ॥ शत्रुघ्नाद्याययुस्तत्रयानस्थाश्चास्त्रजीविताः ५ अंगदाद्याःपार्थिवाश्चमोहनास्त्रैकजीविताः ॥ ययुःसवानराःसर्वेलक्ष्मणोऽपिययावरुक् ६

 सर्वेनत्वारामचंद्रंतस्थुस्तस्यातिकेमुदा ॥ अथसंमंत्र्यरामोऽपितौविसृज्यादरेणहि ७ राक्षसेंद्रंलक्ष्मणंचशत्रुघ्नंमकरध्वजम् ॥ खगराजंसुषेणंचजांबवंतंवचोऽब्रवीत् ८ 
आनयध्वंमुनिवरंससीतंदेवसंमितम् ॥ अद्यास्तुपर्षदांमध्येप्रत्ययोवैसभांगणे ९ गंगायादक्षिणेतीरेसमाकार्योऽद्यताशुभा ॥ करोतुशपथंसीताममाग्रेजान्हवीतटे १०
 मुनीश्वराद्याःसर्वेतांजानन्तुगतकल्मषाम् ॥ तथाममापिवाल्मीकेःशुद्धिंजानंतुवेगतः ११ इतितद्वचनंश्रुत्वालक्ष्मणाद्यामुनिंगताः ॥ ऊचुर्यथोक्तंरामेणवाल्मीकिंलक्ष्म 
णादिकाः १२ रामस्यहृद्गतंसर्वंज्ञात्वावाल्मीकिरब्रवीत् ॥ समाचिंतान्सुमंत्राद्यान्लक्ष्मणायसमर्प्यच १३ युष्माभिःकथनीयंमद्वाक्यंश्रीराघवंप्रति ॥ श्वःकरिष्यति
वैसीताशपथंजनसंसदि १४ योषितांपरमोदेवःपतिरेकोनचापरः ॥ पतिंविनागतिःकाऽन्यानार्यांचास्तिजगत्त्रये १५ लक्ष्मणाद्यास्ततःसर्वेराममागत्यतेपुनः ॥ सुमं
त्रादींश्चतुर्वीरान्राघवायसमर्प्यच १६ वाल्मीकेर्वचनंहर्षाद्रूचुस्तंरघुनायकम् ॥ वाल्मीकिवचनंश्रुत्वातुतोषराघवोऽपिच १७ सुमंत्रंभरतंवायुपुत्रंवानरनायकम् ॥
समालिंग्यचतुर्भ्यःसपुनर्जातानमन्यत १८ सीतयापालितास्सर्वेवयंलवजितास्त्विति ॥ कथयामासुःश्रीरामंसुमंत्राद्यास्सविस्तरम् १९ द्वितीयेदिवसेकृत्वासभांश्रेष्ठां
मनोरमाम् ॥ सर्वांस्तस्यांसमाहूयरामोवाक्यमथाऽब्रवीत् २० मुनयःपार्थिवाःसर्वेशृणुतस्वस्थमानसाः ॥ सीतायाःशपथंलोकाविजानंत्वशुभंशुभम् २१ इत्युक्त्वारा
घवेणाऽथलोकाःसीतादिदृक्षवः ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवसहस्रशः २२ सवानराःसमाजग्मुस्तद्दिव्यंद्रष्टुमुद्यताः ॥ ततोमुनिवरस्तूर्णंससीतःसमुपागतः २३
अग्रतस्तंमुनिंकृत्वायांतींकिंचिदवाङ्मुखी ॥ कृतांजलिर्मुदासीताशनैर्यज्ञंविवेशतम् २४ दृष्ट्वालक्ष्मीमिवायांतींश्रीविष्णुमनुयायिनीम् ॥ वाल्मीकेःपृष्ठतःसीतांसाधु
वादोमहानभूत् २५ तदामध्येजनौघस्यप्रविश्यमुनिपुंगवः ॥ सीतासहायोवाल्मीकिस्तदाराघवमब्रवीत् २६ इयंदाशरथेसीतासुव्रताधर्मचारिणी ॥ त्वयापापात्पुरा
त्यक्ताममाश्रमसमीपतः २७ लोकापवादभीतेनयमुनादक्षिणेतटे ॥ प्रत्ययंदास्यतेसाऽद्यतदनुज्ञातुमर्हसि २८ इमौतुसीतातनयौकुशस्त्वत्तोलवोमया ॥ लवैर्विनिर्मि
तःसीताभयात्प्रव्यग्रचेतसा २९ सुताविमौतेदुर्धर्षौतथ्यमेतद्ब्रवीमिते ॥ प्रचेतसोऽहंदशमःपुत्रोरघुकुलोद्वह ३० अनृतंनस्मराम्युक्तंयथेमौतवपुत्रकौ ॥ बहून्वर्षगणा
न्सम्यक्तपश्चर्यामयाकृता ३१ नोपाश्नीयांफलंतस्यादुष्टेयंयदिमैथिली ॥ इत्युक्त्वाराघवस्यांकेदक्षिणेस्थाप्यतंकुशम् ३२ लवंविन्यस्यवामांकेतस्थौरामाग्रतोमुनिः॥
रामोपितौसमालिंग्यमूर्ध्न्यवघ्रायसादरम् ३३ लवस्यमस्तकेहस्तंसंस्थाप्यजगदीश्वरः ॥ अतिह्रस्वतरंबालंपूर्ववत्सोऽकरोत्तदा ३४ ततोरामोपितांसीतांदृष्ट्वाबाहुद्वया
न्वितम् ॥ अज्ञातइवसंप्राहलक्ष्मणंपुरतःस्थितम् ३५ त्वयाभुजःसमानीतःसीतायास्सांप्रदर्शितुम् ॥ पुरातमानयस्वाद्यचेदास्तिरक्षितस्त्वया ३६ तथेत्युक्त्वालक्ष्म
णोऽपिपेटिकानिहितंभुजम् ॥ सीतायाःपुरतोरामंदर्शयामाससादरम् ३७ सीताभुजोपमंदृष्ट्वाभुजंमांसादिभिर्युतम् ॥ पंचवर्षान्तरेकालेह्यासन्सर्वेऽतिविस्मिताः ३८ ए 
तस्मिन्नंतरेतत्रपश्यत्सुसकलेष्वपि ॥ भुजःप्रयुक्ततांप्राप्तोविश्वकर्मोद्भवःक्षणात् ३९ तद्दृष्ट्वाकौतुकंलोकाह्यभूवन्नतिविस्मिताः॥ रामोपिविस्मितःप्राहवाल्मीकिंप्रणिप

१ अंगदंचेतिपाठः ।

त्यच ४० एवमेवमहाप्राज्ञयदुक्तंमांत्वयाऽधुना ॥ प्रत्ययोजनितोमह्यंतववाक्यैरकिल्बिषैः ४१ लंकायामपिदृष्टोमे वैदेह्याःप्रत्ययोमहान् ॥देवानांपुरतस्तेनमन्दिरंसंप्रवे
शिता ४२ सेयंलोकभयाद्ब्रह्मन्नपापापिसतीपुरा ॥ सीतामयापरित्यक्तातद्भवान्क्षन्तुमर्हसि ४३ मत्तोजातौस्तिजानामिकुशोऽयंचलवस्त्वया ॥ लवैर्भ्रांत्याकृतोवोऽसिसी
ताशापभयान्मुने ४४ तथापिलोकान्सकलान्द्रष्टुंसीताऽत्रप्रत्ययम् ॥ करोतुशपथंचापिसभायांतवसन्निधौ ४५ शुद्धायांजगतीमध्येसीतामंगीकरोम्यहम् ॥ तदातच्छ
पथंद्रष्टुमासँल्लोकाःसमुत्सुकाः ४६ सभायांजानकीचाथतदाकौशेयवासिनी ॥ उदङ्मुखीह्यधोदृष्टिःप्रांजलिर्वाक्यमब्रवीत् ४७ रामादन्यमहंचेद्धिमनसाऽपिनाचिंतये ॥
तर्हिमेधरणीदेवीविवरंदातुमर्हति ४८ एवंशपंत्याःसीतायाःप्रादुरासीन्महाद्भुतम् ॥ भूतलाद्दिव्यमत्यर्थंसिंहासनमनुत्तमम् ४९ भुवोविवरमार्गेणसमानीतंमनोरमम् ॥
नागेंद्रैर्ध्रियमाणंतद्दिव्यदेहैरविभ्रमम् ५० भूदेवीजानकींदोर्भ्यांधृत्वादुहितरंनिजाम् ॥ स्वागतासीतितामुक्त्वाऽऽसनेसार्धंन्यवेशयत् ५१ वस्त्रालंकारस्रग्गंधसुगंधैःपूज्य
मैथिलीम् ॥ समालिंग्याथभूदेवीविजयामाससादरम् ५२ तदाशनैःशनैर्भूम्यांगुप्तंसिंहासनंत्वभूत् ॥ सिंहासनस्थांवैदेहींप्रविशंतींरसातलम् ५३ दृष्ट्वाऽऽकाशस्थि
तादेवस्त्रियःसर्वास्तुसम्भ्रमात् ॥ निरंतरामिवैदेहींववर्षुःपुष्पवृष्टिभिः ५४ साधुवादश्चसुमहान्बभूवसुरकीर्तितः ॥ अन्तरिक्षेचभूमौचसर्वंस्थावरजंगमम् ५५ त
दाभवत्सचकितसीताशपथदर्शनात् ॥ ऊचुस्तेबहुधावाचोवानराश्चनरादिकाः ५६ केचिच्चिंतापराःकेचिदासन्ध्यानपरायणाः ॥ केचिद्रामंनिरीक्षंतःकेचित्सीताम
चेतसः ५७ मुहूर्तमात्रंतत्सर्वंतूष्णींभूतमचेतनम् ॥ प्रविशन्तींभुवंसीतांदृष्ट्वासंमोहितंजगत् ५८ एतस्मिन्नन्तरेरामःप्रविशन्तींहिभूतले ॥ विदेहजांतदादृष्ट्
92 द्वावामहस्तेनसम्भ्रमात् ५९ तांदधारकरेणाद्दोधृत्वाहस्तेनवैभुवम् ॥ ततस्तांप्रार्थयामासभुवंसरघुनन्दनः ६० ॥ ॥ श्रीरामचन्द्रउवाच ॥ ॥ देवित्वं
सर्वलोकानांनिवासस्थानमुत्तमम् ॥ असिलोकैकमातात्वंमहानीरोर्ध्वतःसदा ६१ वर्तसेपुण्यरूपात्वंवसुदासकलान्जनान् ॥ स्वजाठरादोषधीस्त्वंकरोषिविश्व
वृत्तिदाः ६२ त्वंदुर्गात्वंस्वरालक्ष्मीर्ममविष्णोःप्रियाशुभा ॥ त्वमेवाद्याऽत्रमेशक्तिर्निर्मिताऽसिमयैवहि ६३ निजोदराद्ददासित्वंधातून्प्रीत्याजनान्सदा ॥ क्षमा
युक्तात्वमेवाऽसिसूक्तासूक्तादिकर्मसु ६४ जानकीतवकन्येयंश्वश्रूस्त्वंमेऽधुनात्विह ॥ कन्यादानंकुरुमुदात्वयापूर्वंकृतंनहि ६५ प्रसीददेविनोचेन्मेत्वयिक्रोधोभवि
ष्यति ॥ ॥ रामदासउवाच ॥ ॥ इतिसंप्रार्थिताचाऽपिराघवेणमहात्मना ६६ नारीकाठिन्यभावात्सानाशृणोद्राघवेरितम् ॥ शनैःशनैरधःसीतासहि
तासाजगामह ६७ तांगच्छन्तींपुनर्दृष्ट्वाभुवंरामोधृतामपि ॥ बभूवक्रोधताम्राक्षस्तदालक्ष्मणमब्रवीत् ६८ चापमानयसौमित्रेशिक्षयेऽहंभुवंत्विमाम् ॥ मत्क्षुरो
पमबाणेनवसुधेयंविदेहजाम् ६९ मामद्यदास्यतिक्षिप्रमस्याघातंनरोचये ॥ ततोऽसौलक्ष्मणानीतंकरेकोदण्डमुत्तमम् ७० धृत्वाज्यारोपणंकृत्वाशरसंधान
मातनोत् ॥ तदाववौमहान्वायुश्चुक्षुभेलवणार्णवः ७१ तारानिपेतुर्धरणीबभूवुःसरजोदिशः ॥ चकंपेधरणीसापित्राहीतिवदतीमुहुः ७२ कराभ्यांजानकींधृ

१ ऊर्ध्वतः महानीरा समुद्रादिमहाजलरूपावतीत्यर्थः ।

त्वारामस्यकिन्यवेशयत् ॥ स्वयंश्रीरामपदयोःशिरसानमनंव्यधात् ७३ तदांखेदेववाद्यानिनेदुःकुसुमवृष्टिभिः ॥ ववर्षुर्जानकींरामंदेवसंघामुदान्विताः ७४ ततो
रामोऽपितांदृष्ट्वापदयोर्नमंतींभुवम् ॥ स्वक्रोधंशांतमकरोत्कराभ्यांचापमार्गणौ ७५ विसृज्योत्थापयामासस्वकरेणाश्वनिंप्रभुः ॥ ततस्साराघवंनत्वाप्रसाद्यचपुनः
पुनः ७६ दत्त्वाविदेहकन्यायैतत्सिंहासनमुत्तमम् ॥ सीतांस्तुत्वाथतांपृष्ट्वातयासंपूजिताऽपिच ७७ आमंत्र्यराघवंपृथ्वीक्षणादंतर्हिताऽभवत् ॥ तदासीतांजनाः
सर्वेपुनर्जातांतुमेनिरे ७८ जयशब्दैःप्रणेमुस्तांचक्रुःपूजांपृथक्पृथक् ॥ ददौदानान्यनेकानितदारामोमुदान्वितः ७९ नववाद्यनिनादाश्चसंबभूवुःसमन्ततः ॥ न
नृतुर्वारनार्यश्चतुष्टुवुर्बंदिमागधाः ८० सीतायाःशपथोयत्रजाह्नव्यांदक्षिणेतटे ॥ सीताकुण्डमितिख्यातंतत्रतीर्थंबभूवतत् ८१ पातालस्थंजलंपुण्यंसन्ततमनलोप
मम् ॥ आसीदद्यापितत्तीर्थेसीतोष्णश्वासकारणात् ८२ तदत्रजानकीकुण्डंस्मरणादघनाशनम् ॥ पत्युरायुष्यवृध्यर्थंस्त्रीभिःसेव्यंसदाभुवि ८३ ततःसीतायुतोरामः
पुत्राभ्यांसहितोमुदा ॥ वस्त्रालंकारयुक्ताभ्यांस्नानंह्यवभृथाव्हयम् ८४ चकारकथितोत्साहैःपूर्ववच्चसविस्तरम् ॥ अथयज्ञशतंपूर्णमेवंकृत्वारघूत्तमः ८५ जातकर्मा
दिसंस्कारान्लवस्यविधिनाऽकरोत् ॥ चकारनानादानानिदेवान्संपूज्यभक्तितः ८६ ततोमुनीश्वरान्पूज्यपूजयामासपार्थिवान् ॥ जनकंचसुमेधांचपूजयामासरा
घवः ८७ विससर्जर्षीन्सर्वान्ऋत्विजोयेसमागताः ॥ द्विजाद्यास्तान्धनाद्यैश्चतोषयांमाससादरम् ८८ ततोविसृज्यविप्रांश्चपार्थिवैःसहराघवः ॥ कुमाराभ्यां
सीतयाचबन्धुभिश्चागमत्पुरीम् ८९ नीराजितःपुरस्त्रीभिर्वारणस्थोरघूत्तमः ॥ सीतयातनयाभ्यांचययौनिजगृहंप्रति ९० तदामहोत्सवश्चासीदयोध्यायांसम
न्ततः ॥ चिरकालेनवैदेह्यादर्शनंचजनैःकृतम् ९१ ततोनृपादिकान्पूज्यविससर्जरघूद्वहः ॥ जनकंचसुमेधांचददावाज्ञांनिजांपुरीम् ९२ ततःसीतायुतोरामःपुत्रा
भ्यांबन्धुभिःसह ॥ पूर्ववत्ससुखंरेमेचिरकालंरघूद्वहः ९३ रामेणसीतयासार्धंसहस्राणित्रयोदश ॥ वर्षाण्यत्रकृतंराज्यंकस्मिन्कल्पेद्विजोत्तम ९४ एकादशसह
स्राणिवत्सराणिमहांतिच ॥ तथैकादशवर्षाणिमासाएकादशैवतु ९५ दिनान्येकादशैवाऽत्ररामेणसीतयासह ॥ अयोध्यायांकृतंराज्यंकस्मिन्कल्पेद्विजोत्तम ९६
एकादशसहस्राणिचैकादशदिनानिच ॥ सप्तद्वीपवतीपालोरामोऽभूत्कल्पभेदतः ९७ दशवर्षसहस्राणिदशवर्षशतानिच ॥ रामेणसीतयाराज्यंकस्मिन्कल्पेकृ
तंद्विज ९८ ॥ ॥ इति श्रीशतकोटिरामचरितान्तर्गतश्रीमदानन्दरामायणे वाल्मीकीये जन्मकांडे जानकीग्रहणंनामाष्टमःसर्गः ॥ ८ ॥ ॥
॥ श्रीरामदासउवाच ॥ अथोर्मिलामांडवीचश्रुतकीर्तिःसहैवताः ॥ बभूवुरंतरात्किंचिदंतर्वत्न्योमहोदराः १ तासांचकारसीतासाकौतुकानिचसादरम् ॥ तासांपुंसवनादी
निविविधानिरघूत्तमः २ आहूयपत्न्याजनकंकारयामासबन्धुभिः ॥ दोहदान्पूरयामासुस्तासांपौरसुहृत्स्त्रियः ३ तासांसर्वान्समुत्साहानेवंकृत्वारघूत्तमः ॥ वस्त्रालंका
रभूषाभिस्तोषयामासताःसुखम् ४ अथोर्मिलासातनयंसुषुवेपरमोदयम् ॥ ततःसामांडवीपुत्रंसुषुवेपरमेदिने ५ ततःसाश्रुतकीर्तिश्चसुषुवेयमलौसुतौ ॥ कालांतरेणो ॥ १० ॥

१ पपाताम्बुजलमितिपाठः ।

मिलायाद्वितीयस्तनयोऽभवत् ६ तथाऽपरस्तुमांडव्याःपुत्रःकालांतरादभूत् ॥ जातकर्मादिसंस्कारांस्तेषांरामःपृथक्पृथक् ७ चकारगुरुणाविप्रैर्महोत्साहैर्यथाविधि ॥
लक्ष्मणस्यांगदोज्येष्ठश्चित्रकेतुःपरःस्मृतः ८ मांडव्याःपुष्करोज्येष्ठःकनिष्ठस्तक्षनामकः ॥ श्रुतकीर्त्याःसुबाहुश्चयूपकेतुःपरःस्मृतः ९ एवंकृतानिनामानिगुरुणाविधि
पूर्वकम् ॥ एतेंऽतरेणसंजाताःकालेकालेक्रमेणच १० तेऽत्रैकत्रमयाप्रोक्ताःसंक्षेपेणांगत्वत्पुरः ॥ सर्वेषांजन्मकालेषुसुराःसर्वेमुदान्विताः ११ वादयामासुर्वाद्यानिववर्षुः
पुष्पवृष्टिभिः ॥ मातृभिःपितृभिर्युक्तान्बालकान्सूर्यसन्निभान् १२ राजद्वारिमहानासीदुत्सवश्चनृपाज्ञया ॥ ननृतुर्नववाद्यानिननृतुश्चाप्सरोगणाः १३ वादयन्ति
स्मतूर्याणितुष्टुवुर्वंदिमागधाः॥ नगरींशोभयामासुःपताकाध्वजतोरणैः १४ सुहृदःपार्थिवास्सर्वेरामादीनांचपूजनम् ॥ वस्त्रैराभरणाद्यैश्चचक्रिरेतेपृथक्पृथक् १५ ददुर्दा
नानिविप्रेभ्योरामाद्यावंधवश्चते ॥ ब्राह्मणान्भोजयामासुःश्राद्धानिचकुरादरात् १६ एवमष्टकुमारास्तेरामादीनांमनोरमाः ॥ ववृधुश्चंद्रवदनामातृभिर्लालिताःसुखम् १७
शृंखलाबद्धरुक्मादिनिर्मितेषुवरेषुच ॥ प्रेंखेषुहिकुमारास्तेविरेजूरुक्मभूषिताः १८ भालेस्वर्णमयाश्वत्थपर्णान्यतिमहांतिच ॥ मुक्ताफलाग्रलंबीनिशोभयंतिस्मबाल
कान् १९ कंठेरत्नमणिव्रातमध्यद्वीपिनखांचिताः ॥ कर्णयोःस्वर्णसंपन्नरत्नार्जुनसुतालकाः २० सिंजानमणिमंजीरकटिसूत्रांगदैर्युताः ॥ स्मितवक्त्राल्पदशनाइंद्रनील
मणिप्रभाः २१ अंगणेरिंगमाणाश्चसंस्कारैःसंस्कृताःशुभाः ॥ तेपितृन्रंजयामासुर्मातृश्चाऽपिविशेषतः २२ नानाशिशुक्रीडनकैश्चेष्टितैर्मुखचुंबनैः ॥ बालकृत्रिमयुद्धैश्च
गमनैर्मधुरेरितैः २३ ततस्तेबालकाःसर्वेवस्त्रालंकारभूषिताः ॥ सभायांराघवंनत्वातस्थुःसिंहासनोपरि २४ एकदाराघवःप्राहवसिष्ठंसदसिस्थितम् ॥ अवलोक्यबाला
93 नांत्वंचिन्हानियथाक्रमम् २५ तच्छ्रुत्वारामवचनंवसिष्ठोमुसुरैःसह ॥ आदौकुशंसमाहूयदृष्ट्वारामंवचोऽब्रवीत् २६ ॥ वसिष्ठउवाच ॥ पंचसूक्ष्मःपंचदीर्घःसप्तरक्तः
षडुन्नतः॥ त्रिपृथुर्लघुगंभीरोद्वात्रिंशल्लक्षणस्त्वयम् २७ पंचदीर्घाणिशस्तानियथादीर्घायुषोऽस्यच ॥ भुजौनेत्रेहनुर्जानूनासाचतनयस्यते २८ ग्रीवाजंघामेहनेश्च
त्रिभिर्ह्रस्वोऽयमीडितः ॥ स्वरेणसत्वनाभिभ्यांत्रिगंभीरःशिशुःशुभः २९ त्वकेशांगुलिदशनाःपर्वाण्यंगुलिजान्यपि ॥ तथास्यपंचसूक्ष्माणिसूचयंतिवरांश्रियम् ३० पा
ण्यंघ्रितलनेत्रांतताल्लुजिव्हाधरोष्ठकम् ॥ सप्तारुणंचसनखमस्मिन्राज्यसुखप्रदम् ३१ वक्षःकुक्ष्यालिकस्कंधकरवक्त्रषडुन्नतम् ॥ तथात्रदृश्यतेबालेमहदैश्वर्यभोगभाक्
३२ ललाटकटिवक्षोभिस्त्रिविस्तीर्णोयथाह्यसौ ॥ सर्वतेजोमहैश्वर्यंतथाप्राप्स्यतिनान्यथा ३३ अछिन्नातर्जनींप्राप्यतथारेखास्यदृश्यते ॥ कनिष्ठामूलनिर्यातादीर्घायुष्यं
यथाभवेत् ३४ कमठीपृष्ठकठिनावकर्मकरणौकरौ ॥ राज्यहेतूशिशोरस्यपादौचाध्वनिकोमलौ ३५ पादौसमांसलौरक्तौसमौसूक्ष्मौसुशोभनौ ॥ समगुल्फौस्वदेहेनस्नि
ग्धावैश्वर्यसूचकौ ३६ स्वल्पाभिःकररेखाभिश्चारक्ताभिःसदासुखी ॥ लिंगेनलघुह्रस्वेनराजराजोभविष्यति ३७ उत्कटासनगुल्फस्फिङ्नाभिरस्यापिवर्तुला ॥ दक्षिणावर्त
मरुणंमहदैश्वर्यसूचकम् ३८ धारैकामूत्रकेयस्यदक्षिणावर्तनीयदि ॥ गंधश्चमीनमधुनोर्यदिवीर्यंतदानृपः ३९ विस्तीर्णौमांसलौस्निग्धौभुजावस्यसुखोचितौ ॥ वामावर्तौ

१ लिंगस्कंधइतिपाठः ।

सुप्रलंबौदोषौभूरक्षणोचितौ ४० श्रीवत्सवज्रचक्राब्जमत्स्यकोदंडदंडधृत ॥ तथाऽस्यकरगारेखायथास्यात्रिदिवस्पतिः ४१ द्वात्रिंशद्दशनश्चायंवरकंबुशिरोधरः ॥ क्रौंचदुं
दुभिहंसाभ्रस्वरःसर्वेश्वराधिकः ४२ मधुपिंगलनेत्रोऽसौनैनंश्रीस्त्यजतिकचित् ॥ पंचरेखाललाटस्तुतथासिंहोदरःशुभः ४३ ऊर्ध्वरेखांकितपदोनिःश्वसन्पद्मगन्ध
वान् ॥ अच्छिद्रपाणिःसुनसोमहालक्षणवानयम् ४४ ध्रुवंकुशेनिरीक्ष्याऽथसर्वान्दृष्ट्वाक्रमेणसः ॥ लवादीनांसुचिन्हानिपूर्ववत्प्राहराघवम् ४५ ततःप्रीतमनारामःपूज
यामासतंगुरुम् ॥ वस्त्रैराभरणैश्चैवययौहर्षात्ततोगृहम् ४६ एतस्मिन्नंतरेसीताभूमिदत्तवरासने ॥ संस्थिताचामरैर्दिव्यैर्दासीभिःपरिवीजिता ४७ सखीभिःसेवितारम्या
धृताधोंकोपबर्हणा ॥ मुकुरेस्वंनिरीक्षंतीमुखंचन्द्रनिभंवरम् ४८ रामस्यागमनंश्रुत्वासंचचालासनाज्जवात् ॥ ततोददर्शश्रीरामंबालकैःपरिवेष्टितम् ४९ स्वकट्यां
यूपकेतुंचदधानमवरंशिशुम् ॥ तथैवदक्षिणेहस्तेदधानंचांगदंशुभम् ५० कुशंलवंपुरस्कृत्यसमायांतंशनैःशनैः ॥ तत्पृष्ठेसाददर्शाऽथलक्ष्मणंबालकान्वितम् ५१ तक्षं
कट्यांपुष्करंचदधानंदक्षिणेकरे ॥ तत्पृष्ठेभरतंसीताददर्शमुदितानना ५२ चित्रकेतुंशिशुंकट्यांदधानंरुक्ममंडितम् ॥ तथैवदक्षिणेहस्तेसुबाहुंपंकजेक्षणम् ५३ तत्पृष्ठे
साददर्शाऽथशत्रुघ्नंजनकात्मजा ॥ रामशस्त्राणिबिभ्रंतंसमायांतंशनैःशनैः ५४ एवंसाराघवंदृष्ट्वासीतामत्युज्ज्वगामतम् ॥ सिंजन्मञ्जीररशनापीतकौशेयधारिणी ५५
कराभ्यांपुरतोयांतंलवंधृत्वाचुचुंबसा ॥ निधायतंलवंकट्यांधृत्वाहस्तेनतंकुशम् ५६ ययौशनैःसारामेणवदतीस्वस्थलंपुनः ॥ सखीभिर्वेष्टितासीतारंजयामासराघवम्
५७ अथरामोऽपिसीतायाःस्थित्वासिंहासनोपरि ॥ अंकयोःपुरतश्चाऽपिबालकान्संस्थितांश्चसः ५८ सीतायैदर्शयन्प्रीत्यालालयामाससादरम् ॥ सीतायैराघवः
प्राहसभायांगुरुणापुरा ५९ यान्युक्तानिसुचिन्हानिशिशूनांतानिविस्तरात् ॥ श्रुत्वारामसुखात्तानिसीतातोषंपरंययौ ६० राघवःप्राहवैदेहींभूर्मिलापरिवीजिताम् ॥
सीतेंगदंचित्रकेतुंलक्ष्मणांकेन्यवेशय ६१ तद्रामवचनंश्रुत्वासीताशीघ्रंशिशूययौ ॥ तावदुत्थायसौमित्रिर्लज्जयागंतुमुद्यतः ६२ तंगन्तुकामंरामोऽपिदृष्ट्वातांमांडवींतथा ॥
श्रुतकीर्तिंकंजनेत्रसंज्ञयाऽचोदयत्तदा ६३ ताभ्यांधृतोऽथसौमित्रिःस्मितास्याभ्यामुपाविशत् ॥ तावत्तदंकयोस्सीतातत्पुत्रौसन्न्यवेशयत ६४ तद्वच्चभरतस्यांकेन्यवे
श्यतक्षपुष्करौ ॥ शत्रुघ्नांकेसुबाहुंचयूपकेतुंन्यवेशयत् ६५ ततस्सीतापुनःप्राहस्मितास्यःसरघूद्वहः ॥ वीजयंतूर्मिलाद्याश्चस्वंस्वंस्वामिनमादरात् ६६ ततस्ताःदुद्रुवुः
सर्वाःसखीभिर्लज्जिताधृताः ॥ व्यजनैर्वीजयामासुःस्वंस्वंकांतंसुलज्जिताः ६७ एवंनानाकौतुकानिभोजनासनकर्मसु ॥ कारयामासवैदेह्याबंध्वादीनांरघूत्तमः
६८ अथरामोवसिष्ठंसएकदावाक्यमब्रवीत् ॥ कुशस्याऽथलवस्याऽपिव्रतबन्धोविधीयताम् ६९ तथेतिगुरुणाप्रोक्तस्ततोरामःशुभेदिने ॥ गणकान्ससमाहूय
मंत्रयामाससादरम् ७० कुशायपंचमंवर्षंकिंचिन्न्यूनंलवायच ॥ ज्ञात्वातेगणकाःसर्वेगुरुशुक्रादिकंबलम् ७१ दृष्ट्वापंचांगपट्टेषुराघवंवाक्यमब्रुवन् ॥ ब्राह्मणस्या
ष्टमेप्रोक्तोद्वादशेक्षत्रियस्यच ७२ वैश्यस्यषोडशेवर्षेव्रतबंधोमुनीश्वरैः ॥ जन्मात्षष्ठेतथागर्भात्सप्तमेऽब्देनृपस्यच ७३ व्रतबंधोविधातव्योयत्नतश्चबलार्थिनः ॥

१ भुजयोर्धृताइतिपाठः ।

ब्रह्मवर्चसकामस्यकार्यंविप्रस्यपंचमे ७४ राज्ञोबलार्थिनःषष्ठेवैश्यस्यार्थार्थिनोऽष्टमे ॥ विद्वद्भिश्चोपनयनमेवंशास्त्रेषुनिर्णयः ७५ अतोगर्भाच्चषष्ठेऽब्देपुत्रयोस्त्वंरघू
त्तम ॥ सुखंकुरूपनयनंमुहूर्तंशृणुसादरम् ७६ अद्यारभ्यपंचदशदिनेदत्तंकुशायाहि ॥ पक्षांतरेणतंश्रुत्वामुहूर्तंरघुनन्दनः ७७ गणकान्धनवस्त्राद्यैःपूज्यलक्ष्मणम
ब्रवीत् ॥ आकारणीयाराजानःसुहृदश्चमुनीश्वराः ७८ सांतःपुराःसपौराश्चस्वस्वजानपदैःसह ॥ शृंगारणीयाऽयोध्येयंपरिखाःसप्तसादरम् ७९ शोधनीयास्तथा
सौधसमूहेषुसुधाःशुभाः ॥ दत्वाचित्राणिलेख्यानिप्रासादेषुसमंततः ८० देवालयेषुसर्वेषुसुधादेयामनोरमा ॥ लेखनीयानिचित्राणिस्थाप्यंतांबलयःपृथक् ८१ बं
धनीयाःपताकाश्चरोपणीयाध्वजाअपि ॥ समंततस्तोरणानिबंधनीयानिलक्ष्मण ८२ वेद्यश्चकार्यारुक्ममय्योबन्धनीयाश्चमंडपाः ॥ शृङ्गारणीयाहस्त्यश्वशिबिकाश्च
सहस्रशः ८३ अन्यच्चापियथायोग्यंयद्यज्जानासिलक्ष्मण ॥ तत्तत्कुरुष्वयत्प्रोक्तंमयातवरघूत्तम ८४ तद्रामवचनंश्रुत्वातथेत्युक्त्वासलक्ष्मणः ॥ तथाचकारतत्सर्वंयथा
रामेणशिक्षितः ८५ ततोमुहूर्तेश्रीरामःस्नानमभ्यंगपूर्वकम् ॥ कृत्वाकुमारौवैदेह्यावंधुस्त्रीभिश्चबंधुभिः ८६ नानालंकारवस्त्राणिपरिधायाऽथतैःसह ॥ पुण्याहवाचनं
चक्रेगुरुंपूज्यऋषीश्वरान् ८७ नांदीश्राद्धादिकंकृत्वाप्रतिष्ठांदेवकस्यच ॥ चकारमंगलैस्तूर्यनादैःसीतासमन्वितः ८८ ततोययुःकोटिशस्तेपार्थिवाश्चमुनीश्वराः ॥
सप्तद्वीपांतरस्थाश्चसावरोधाःसवाहनाः ८९ तैःसायोध्यातदाव्याप्ताविरेजेनितरांतदा ॥ ततोमुहूर्तदिवसेवसिष्ठोब्राह्मणैर्युतः ९० रामस्याऽथकुशस्याऽथमध्येष्टत्वाव
९१ रंपटम् ॥ उवाचमंगलान्येवसुस्वरैर्मधुराक्षरैः ९१ ध्यात्वाश्रीगणनायकंविधिसुतांशंभुंविधिंमाधवंलक्ष्मींशैलसुतांविधेस्तुदयितामिंद्रंसुरांस्तान्ग्रहान् ॥ पुण्यान्स्थाव
रनिम्नगाश्चसुमुनीन्स्वीयांकुलस्यांबिकांतातंमातरमादरेणबटवेभूयात्सदामंगलम् ९२ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव ॥ विद्याबलंदैवबलंतदेवसीतापतेर्यं
त्स्मरणंविधेयम् ९३ इतिनानामंगलाद्यैस्तूर्यघोषैर्मनोहरैः ॥ ॐकारघोषैःसगुरुर्मुमोचांतःपटंतदा ९४ ततस्तंराघवस्यांकेनिवेश्यहवनादिकम् ॥ विधिंकृत्वाऽथकौ
पीनंदण्डंचाथकमण्डलुम् ९५ बध्वादौरुक्मजांमौंजींचबंधेणाजिनंतदा ॥ ततःकुशायसगुरुर्गायत्रींसमुपदिष्टवान् ९६ ब्रह्मचर्यव्रतादीनिसकुशायोपदिष्टवान् ॥ कृ
त्वोक्तविधिनाशौचंकुर्यादाचमनंतथा ९७ दन्तान्जिह्वांविशोध्याऽथकृत्वामलविशोधनम् ॥ स्नात्वाऽम्बुदैवतैर्मंत्रैःप्राणानायम्ययत्नतः ९८ उपस्थानंरवेःकृत्वासंध्य
योरुभयोरपि ॥ अग्निकार्यंततःकृत्वाब्राह्मणानभिवादयेत् ९९ ब्रुवन्नमुकगोत्रोऽहमभिवादयइत्यपि ॥ धारयन्मेखलांदण्डोपवीताजिनमेवच १०० अनिंद्येषुचरेद्भै
क्ष्यंब्राह्मणेष्वात्मवृत्तये ॥ वाग्यतोगुर्वनुज्ञातोभुंजीतान्नमकुत्सयन् १०१ एकान्नंचसमश्नीयाच्छ्राद्धेऽश्नीयात्तथाऽऽपदि ॥ द्वित्रारंनैवभुंजीतदिवाकाऽपिद्विजोत्तमः ॥
२८ १०२ सायंप्रातर्द्विजोऽश्नीयादग्निहोत्रविधानवित् ॥ मधुमांसंप्राणिहिंसांभास्करालोकनंजले १०३ स्त्रियंपर्युषितोच्छिष्टंपरिवादंविवर्जयेत् ॥ यथेष्टचेष्टोनभवेद्गुरोर्नय
नगोचरे १०४ ननामपरिगृह्णीयात्परोक्षेप्यविशेषणम् ॥ गुरुनिंदाभवेद्यत्रपरिवादस्तुयत्रच १०५ श्रुतीपिधायस्थातव्यंयातव्यंवाततोऽन्यतः ॥ नमात्रानापितुः
स्वस्त्रानस्वस्त्रैकांतशीलता ६ बलवंतींद्रियाण्यत्रमोहयंत्यपिकोविदान् ॥ एवमादीन्यनेकानिब्रह्मचारिव्रतानिहि ७ तस्मैगुरुश्चोपदिश्यददौदानान्यनेकशः ॥ भोजया

मासतंमात्रासहनानोत्सवैस्तदा ८ कारयित्वाऽथपालाशपूजनंविधिपूर्वकम् ॥ तेनापिकुशवालेनदेवकस्यविसर्जनम् ९ चकारराघवेणैवसीतयासगुरुस्तदा ॥ ततोरा
मोनृपतिभिर्जनकेनाऽपिपूजितः १० चकारघनवस्त्राद्यैस्तुष्टान्विप्रान्नृपादिकान् ॥ आचांडालांस्तदारामस्तोषयामाससादरम् ११ एवंनानासमुत्साहैर्मासमेकंनिना
 यसः ॥ रामोविसर्जयामासततस्तान्पार्थिवादिकान् १२ एवंकालांतराद्रामोव्रतबंधंलवस्यच ॥ चकारपूर्ववद्धर्षात्समाहूयनृपादिकान् १३ ततस्तौबालकौरम्यौवेदा 
ध्ययनमुत्तमम् ॥ चक्रतुर्गुरुसान्निध्येविधिवद्बुद्धिसत्तमौ १४ एवंतेषांतुबालानांसर्वेषांरघुनंदनः ॥ व्रतबंधविधानानियथाकालेमहोत्सवैः १५ चकारगुरुणाविप्रैस्समाहू
यनृपादिकान् ॥ विशेषैर्निजपुत्राभ्यांचकारसमहोत्सवैः १६ अकरोदधिकंकिंचिन्न्यूनमकरोद्विभुः ॥ ततस्तेबालकाःसर्वेब्रह्मचर्यव्रतेस्थिताः १७ चक्रुस्तेगुरुसान्नि
ध्येवेदाध्ययनमुत्तमम् ॥ अथरामोऽपिवैदेह्याबालकैःपरिवारितः १८ विरेजेस्कंदगणपादिभिर्देव्यायथाशिवः ॥ अथतेबालकास्सर्वेकृत्वाऽध्ययनमुत्तमम् १९ वेदादीनां
गुरुमुखाल्लब्ध्वाज्ञानंगुरोस्ततः ॥ जग्मुस्तीर्थानिवैकर्तुंसेनयागुरुमंत्रिभिः १२० पृथिव्यांभारतेखंडेयानितीर्थानितानिते ॥ कृत्वासमाययुःपंचमासैःस्वांनगरींशनैः २१
बालान्समागतान्श्रुत्वाशोभयित्वानिजांपुरीम् ॥ प्रत्युज्जगामसौमित्रिःपुरस्कृत्याऽथवारणम् २२ तेदृष्ट्वालक्ष्मणंनेमुस्तेतेनालिंगिताअपि ॥ नानोत्सवैर्ययुर्बालाअयो
ध्यायांस्वगृहंप्रति २३ मार्गेमार्गेपुरस्त्रीभिःसौधस्थाभिस्तुवर्षिताः ॥ दृष्टिभिःकुसुमादीनांदीपैर्नीराजिताअपि २४ ततस्तेबालकाःसर्वेसभायांरघुनंदनम् ॥ नेमुस्तेना
लिंगिताश्चययुःसीतागृहंततः २५ एतस्मिन्नंतरेसीतोर्मिलासामांडवीतथा ॥ श्रुतकीर्तिश्चवेगेनचक्रुर्नीराजनंपृथक् २६ दध्योदनभवैर्दीपैःपक्वान्नैस्तैलपाचितैः ॥ स
र्षपैर्लवणैर्माषैस्तोयकुंभैश्वसादरम् २७ ततस्तेबालकास्सर्वेनेमुस्सीतांपृथक्पृथक् ॥ ततोनेमुःस्वमातृश्चपूर्वंनत्वापितामहीः २८ ततस्तेबालकाःसर्वेददुर्दानान्यनेक
शः ॥ ब्राह्मणान्भोजयामासुःकोटिशस्तेपृथक्पृथक् २९ एवंनानोत्सवास्तत्रबभूवूरामसद्मनि ॥ अथतेबालकाःसर्वेस्यंदनादिषुसंस्थिताः १३० दिव्यवस्त्राणिचित्रा
णिपरिधायसमंततः ॥ अयोध्याराजमार्गेषुहट्टेषुचचतुष्पथे १३१ आरामोपवनारण्यवाटिकासुनदीतटे ॥ गमनागमनेचक्रुःसेनयामंत्रिबालकैः ३२ एवंसाकेतनगरे
बालकैःसीतयासुखम् ॥ रेमेसबंधुभिर्युक्तश्चिरंराजारघूद्वहः ३३ एवंशिष्यमयाप्रोक्तंजन्मकांडमिदंतव ॥ कुशादीनांचजन्मानिवर्णितान्यत्रविस्तरात् ३४ रम्यंपवि
त्रमानंददायकंचमनोहरम् ॥ पुत्रपौत्रप्रदंजन्मकांडमेतत्सुखावहम् ३५ जन्मकांडमिदंपुण्यंयेशृण्वंतिनरोत्तमाः ॥ तेषांपुत्रैश्चपौत्रैश्चवियोगोनभविष्यति ३६ जन्मकां
डमिदंयेवैभक्त्याशृण्वंतिमानवाः ॥ तेषांस्त्रीणांवियोगोहिनकदाप्यत्रजायते ३७ जन्मकांडमिदंपुण्यंयाःशृण्वंत्यत्रवैस्त्रियः ॥ स्वभर्तृभिर्वियोगंतानगच्छंतियथारमा ३८
ग्रामंदेशान्तरंतीर्थंयेगताश्चचिरंनराः ॥ तेषामागमनार्थंहिजन्मकांडंपठेदिदम् ३९ येषांभावीनिकार्याणिलब्धुंत्वरयतेमनः ॥ तैर्नरैःपठनीयंवैजन्मकांडंदिनेदिने १४० 
पूर्वेदिनेचैकवारंद्विवारंचापरेदिने ॥ एवंनवदिनंवृद्धिस्तथैकेनक्षयोऽपिहि ४१ कार्योनरैःस्वस्थचित्तैस्तेषांकार्यंभविष्यति ॥ वर्षमेकंपठेदेवमपुत्रोऽपिलभेत्सुतम् ॥

१ वर्षांतवद्रामइतिपाठः । २ लब्ध्वाज्ञांस्वगुरोरितिपाठः ।

४२ पुत्रार्थीप्राप्नुयात्पुत्रंधनार्थीधनमाप्नुयात् ॥ इष्टान्कामांश्चकामार्थीजन्मकांडश्रवाल्लभेत् ४३ आनन्दरामायणमध्यसंस्थंश्रीजन्मकांडंतनयप्रदंच ॥ पारायणंसंश्रवणं तथावाकरोतियोनरसलभेत्सुपुत्रम् १४४ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणेवाल्मीकीये जन्मकांडेकुशलवादीनांजन्मकथनव्रतबंधविस्तारोनाम नवमः सर्गः ॥ ९ ॥ जन्मकांडेसर्गाआनन्दरामायणेनवैवज्ञातव्याः ॥ चतुरुत्तराष्टशतश्लोकाविष्णुदासरामदासाभ्यामुद्दिष्टाः ॥ इतिजन्मकांडःपंचमःसंपूर्णः ॥ शुभंभवतु ॥ ॥ उपवनदर्शनम् ॥ १ ॥ ॥ उपवनक्रीडा ॥ २ ॥ ॥ सीतात्यागः ॥ ३ ॥ कुशलवोत्पत्तिः ॥ ४ ॥ रामरक्षा ॥ ५ ॥ कमलहरणम् ॥ ६ ॥ पुत्राभ्यांसंग्रामः ॥ ७ ॥ सीताग्रहणम् ॥ ८ ॥ बालानामुपनयनम् ॥ ९ ॥ ॥ श्रीरामार्पणमस्तु ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

॥ इति श्रीमदानन्दरामायणे जन्मकाण्डं समाप्तम् ॥

95

96

# ॥ अथ श्रीमदानंदरामायणे विवाहकांडं प्रारभ्यते ॥

श्रीगणेशायनमः ॥ ॥ श्रीरामदासउवाच ॥ अथरामःसभामध्येमंत्रिभिःपरिवेष्टितः ॥ तस्थौसिंहासनेरम्येवरछत्रोपशोभितः १ एतस्मिन्नन्तरेतत्रकश्चिद्दूतःसमा
ययौ ॥ नत्वासभायांश्रीरामंस्वामिवृत्तंन्यवेदयत् २ पूर्वदेशाधिपतिनाराज्ञाश्रीभूरिकीर्तिना ॥ प्रेषितोऽस्मिमहाराजद्रष्टुंत्वत्पादपंकजे ३ पत्रंपठित्वाश्रीरामकार्यंम
त्स्वामिनेकृपा ॥ इत्युक्त्वारामदूतस्यकरेपत्रंसमर्पयत् ४ रामदूतोऽपिसौमित्रेःपुरस्तात्पत्रमादरात् ॥ स्थापयामासवेगेननत्वातस्थौनिजस्थले ५ ततःसलक्ष्मणःपत्रं
वरवन्धनवेष्टितम् ॥ समुद्घाट्यराघवाग्रेपपाठमंजुलस्वनः ६ हेमकृत्रिमपुष्पाद्यैरंकितंकुंकुमान्वितम् ॥ दर्शनादेवमांगल्यसूचकंतोषकारकम् ७ उवाचपत्रलिखितैरक्ष
रैर्लक्ष्मणःशनैः ॥ स्थितःश्रीरामपुरतोवरसिंहासनांतिके ८ श्रीमान्श्रीराघवेंद्रोजयतुदशशिरश्छेदनार्थंजगत्यांकौसल्यायांनृपेशोदशरथतनयश्चेतिनाम्नाऽवतीर्णः ॥ त
स्याहंभूरिकीर्तिःपदजलरुहयोर्गंधमाघ्रातुकामःकृत्वास्वीयंशिरस्तुभ्रमरवदनिशंप्रार्थनांप्रार्थयामि ९ ममपौत्र्यावुभेरामचंपिकासुमतीतिच ॥ तयोःस्वयंवरार्थंह्यायाता
श्चबहवोनृपाः १० बंधुपुत्रैर्बंधुभिस्त्वंस्वसुताभ्यांचमंत्रिभिः ॥ सुहृज्जनैस्तथापौरैःसावरोधःस्वसेनया ११ आगच्छस्वममपुरंमयिकृत्वामहत्कृपाम् ॥ विफलांप्रार्थ
नांमेत्वंमाकुरुष्वत्विमांप्रभो १२ इतिपत्रार्थमाकर्ण्यस्वस्थचित्तोरघूत्तमः ॥ स्वयंवरंततोगन्तुंगुरुणानिश्चयंव्यधात् १३ ततोऽब्रवीत्ससौमित्रिमद्यसेनांप्रचोदय ॥ श्वो
ऽहंगच्छामिपुत्राभ्यांत्वयामंत्रिजनैःसह १४ भरतेनापियुष्माकंपुत्रैःशत्रुघ्नसंयुतः ॥ स्वयंवरंसावरोधःपौरैर्जानपदैःसह १५ विजयोनगरींराज्यंपालितुंस्थापितोमया ॥
अद्यैववस्त्रगेहानिबहिर्नेयानिलक्ष्मण १६ पंथानंशोधयंत्वद्यनानादूतास्त्वरान्विताः ॥ गच्छंतुसकलानार्यःपुष्पकेणविहायसा १७ तथेतिलक्ष्मणश्चोक्त्वाचकारसय
थोदितम् ॥ राघवेणसभामध्येप्रबद्धकरसंपुटः १८ ततोद्वितीयदिवसेप्रभातेरघुनन्दनः ॥ स्नात्वानित्यविधिंकृत्वानिनायाग्नीन्सपुष्पके १९ स्थापयामासकुण्डेषुमु
क्तासहसुहृज्जनैः ॥ ततःसीतांसमाहूयत्वरयामासराघवः २० ततःस्त्रियस्तदासर्वाःसीताद्यारुक्मभूषिताः ॥ यानमारुरुहुःशीघ्रंदिव्यवस्त्रादिमण्डिताः २१ ततो
रामोगजारूढोवरछत्रोपशोभितः ॥ ययावग्रेचामराद्यैर्वीजितश्चमुहुर्मुहुः २२ रामाग्रेवारणारूढोययौशीघ्रंगुरुस्तदा ॥ राघवस्यपृष्ठभागेकरिस्थोलक्ष्मणोययौ २३
ततःकुशाद्यास्तेह्यष्टौबालाजग्मुर्गजस्थिताः ॥ ततोभरतशत्रुघ्नौजग्मतुर्गजसंस्थितौ २४ ततःसर्वेमंत्रिणश्चपौराजानपदादयः ॥ नानावाहनसंस्थास्तेययुःसर्वेत्वरा
न्विताः २५ चतुर्दंतेशुक्लवर्णेवारणेरावतोद्भवे ॥ संस्थितोराघवोरेजेमुक्ताजालविराजिते २६ एवंरामःशनैर्मार्गेबंदिमागधसंस्तुतः ॥ शृण्वन्वाद्यनिनादांश्चययौपूर्व
दिशंशनैः २७ ववर्षुःसकलानार्यःपुष्पकस्थारघूत्तमम् ॥ पुष्पवृष्टिभिरानंदपूरिताराघवेक्षणाः २८ निनेदुर्नववाद्यानिननृतुर्वारयोषितः ॥ जगुर्गीतानिरम्याणिपु
२९ रतस्तेनटादयः २९ एवंरामःशनैर्गत्वासाकेताद्योजनोपरि ॥ सेनानिवेशसंस्थानंनिर्मितंनददर्शसः ३० अवरुह्यगजेंद्रात्सविवेशवसनगृहम् ॥ एवंरामःशनैर्मार्गेप
श्यन्देशान्मनोरमान् ३१ तीर्त्वाभागीरथींगंगांविलंघ्यकटकान्प्रभुः ॥ ययौविंशद्दिनैर्भूरिकीर्तेर्देशमनुत्तमम् ३२ भूरिकीर्तेस्ततोदूतोगत्वानिजाविभुंजवात् ॥ कथ

१ समायातिइतिपाठः । २ वारणेराघवोचितेइतिपाठः ।

यामासरामस्यशुदागमनमादरात् ३३ भूरिकीर्तिर्नृपःश्रुत्वाऽऽगमनंराघवस्यसः ॥ तुतोषनितरांश्रीमान्रामंप्रत्युद्ययौजवात् ३४ स्वपुरींशोभयामासपताकाध्वजतो
रणैः ॥ वारणेंद्रंपुरस्कृत्यसमायातैर्नृपैःसह ३५ येयेसमागतास्तत्रपार्थिवाश्चस्वयंवरे ॥ विषण्णास्त्वाबभूवुस्तेव्यग्रचित्तास्तथैवच ३६ स्वचित्तेमंत्रयामासुःकथमत्र
॥ १ ॥ स्वयंवरे ॥ त्यक्त्वाश्रीरामबालांश्चकन्येऽस्माकंवरिष्यतः ३७ इतिचिंताविष्टचित्ताःप्रत्युज्जग्मूरघूत्तमम् ॥ रामंद्रराद्ददृशुस्तेतत्सेनांचत्वरान्विताम् ३८ ततस्तेराघवं
नत्वोपायनानिन्यवेदयन् ॥ रामेणालिंगिताःसर्वेतत्पार्श्वेसंस्थितास्तदा ३९ ततस्सभूरिकीर्तिस्तुस्वपुत्राभ्यांसमन्वितः ॥ नत्वारामादिकान्पूज्यवस्त्राभरणवाहनैः ४०
निनायनगरींस्वीयांगोपुराट्टालमण्डिताम् ॥ नर्तत्सुवारनारीषुवाद्येषुनिनदत्सुच ४१ स्तुवत्सुबंदिवृन्देषुविवेशनगरींप्रभुः ॥ तदातत्पुरनार्यस्ताःश्रुत्वारामंसमाग
तम् ४२ विहायनिजकार्याणिदुद्रुवुर्गोपुरादिषु ॥ शीघ्रमारुरुहुःसर्वाददृशुस्तारघूत्तमम् ४३ काचित्स्वबालकंत्यक्त्वारुदन्तंनिजमंचके ॥ दुद्रावराघवंद्रष्टुंवरप्रासादम
स्तके ४३ तांबूलवीटिकांकाचित्कृत्वायावत्पतिंददौ ॥ तावच्छ्रुत्वासमायांतंरामंदुद्रावसाजवात् ४५ काचित्त्यक्त्वाभोजनंतुकाचित्पाकस्यसत्क्रियाम् ॥ काचित्साकबरी
हस्तामुक्तकेशाययौजवात् ४६ पतिनालिंगिताकाचिन्निष्कास्यस्वपतेःकरम् ॥ ययौवेगेनललनावरप्रासादमस्तकम् ४७ क्षालयंतीपतेःपादावेकंप्रक्षाल्यकामिनी ॥
यावज्जग्राहसाऽन्यंतुतावच्छ्रुत्वासमागतम् ४८ सीतयारामचंद्रंहिशीघ्रंदुद्रावकातदा ॥ काचिद्भर्त्राचुंबमानादूरंकृत्वापतेर्मुखम् ४९ दुद्रावराघवंद्रष्टुंप्रासादेस्वस्तपल्ल
वा ॥ काचिद्विनिद्रिताभर्त्रात्यक्त्वानिद्रांत्वरान्विता ५० विस्तीर्णकज्जलामन्दनेत्रानिद्राभरान्विता ॥ नेत्राभ्यांकुंचितान्केशान्वारयन्तीजवाद्ययौ ५१ त्यक्त्वा
ऽभ्यंगंहिकाचित्साकुर्वतीकरसन्नीविम् ॥ ययौवेगेनप्रासादंश्रुत्वाराघवमागतम् ५२ काचिद्भुजेकंचुकींसाकृत्वैकेत्वपरेभुजे ॥ कर्तुकामाययौशीघ्रंतथैवप्रमदोत्तमा ५३
काचिदेकेपदेकृत्वानूपुरादीनिभामिनी ॥ अपरेकर्तुकामासातथैवाट्टालमाययौ ५४ कथयंतीशुभांवार्तांस्वपत्युःपुरतःस्थिता ॥ श्रुत्वारामंसमायांतंदुद्रावगजगा
मिनी ५५ काचिन्निजपतिंपात्रेकुर्वतीपरिवेषणम् ॥ भूमौत्यक्त्वान्नपात्रंसाययौरामंनिरीक्षितुम् ५६ काचित्स्नात्वादिव्यवस्त्राकुर्वतीसाप्रदक्षिणाः ॥ तुलसींचमहा
देवंश्रुत्वारामंययौजवात् ५७ काचिद्रज्जुघटंकूपेकृत्वातोयार्थमुद्यता ॥ त्यक्त्वारज्जुघटंकूपेदुद्रावेंदुनिभानना ५८ काचित्स्वबालकंस्तन्यंगृहःपाययतीवधूः ॥ कुच
योर्बालकंहृत्वातथैवसाययौजवात् ५९ काचित्सापरिधायाथवस्त्रंकच्छंकरेणसा ॥ कर्तुकामाययौवेगात्तथैवाट्टालमस्तकम् ६० एवंकर्माण्यनेकानिकुर्वत्यस्ताःपुर
स्त्रियः ॥ विहायतानिसर्वाणिययौरामंनिरीक्षितुम् ६१ दृष्ट्वारामंगजस्थंतावववृषुःपुष्पवृष्टिभिः ॥ ऊचुःपरस्परंनार्यश्शतशोऽट्टालसंस्थिताः ६२ धन्यासारामजननी
कौसल्यायारघूत्तमम् ॥ सुषुवेराजराजानंपरिपूर्णमनोरथा ६३ काश्चिदूचुश्चसाधन्यासीताजनकनंदिनी ॥ यस्याविवाहररसमुररीकुरुतेत्रसः ६४ काश्चिदूचुस्तयात ॥ १ ॥
तंजानक्यादुष्करंतपः ॥ पूर्वजन्मनियत्पुण्याद्राजराजप्रियाऽभवत् ६५ काश्चिदूचुर्वयंमन्दभाग्यास्तुजगतीतले ॥ सीतादास्यानजाताःस्मरामसेवनतत्पराः ६६ इतिनाना

१ कुर्वतीकरसन्निधिमितिपाठः । २ मंगीकरोतिराघवःइतिपाठः ।

विधावाचस्तासांशृण्वन्नृपोत्तमः ॥ ययौसराजमार्गेणनृपकल्पितमंदिरम् ६७ तत्रावरुह्यनागेंद्राद्विवेशवरमंदिरम् ॥ तस्थौसुखेनजानक्याबंधुभिर्बालकैःप्रभुः ६८
॥ इतिश्रीशतकोटिरामचरितांतर्गत श्रीमदानन्दरामायणे वाल्मीकीये विवाहकांडेस्वयंवरार्थंभूरिकीर्तेः पुरंप्रति श्रीरामगमनंनाम प्रथमःसर्गः ॥ १ ॥ श्रीरामदा
सउवाच ॥ अथापरदिनेरामंभूरिकीर्तिस्समाययौ ॥ नत्वाप्राहरघुश्रेष्ठंसभामागन्तुमर्हसि १ तथेतिराघवश्चोक्त्वाबालकैरुक्मभूषितैः ॥ रुक्मतन्तूद्भवश्रेष्ठकंचुकोष्णी
षमण्डितैः २ ऊरूपिधायत्रिमुखैःकटिबंधोत्तरीयकैः ॥ भूषितैरष्टभिःशीघ्रंशिबिकास्थैःसमाययौ ३ सभायांयेनृपाःपूर्वमासनेषुचसंस्थिताः ॥ श्रुत्वारामंसमायांतंसं
भ्रमात्तत्पुरोययौ ४ चक्रुस्सर्वेराघवायप्रणामान्पार्थिवोत्तमाः ॥ तेषांनामानिरामायदीर्घशब्दैःपृथक्पृथक् ५ चित्रोष्णीषारामदूताःप्रोचुर्वैवेत्रपाणयः ॥ वस्त्रालंकार
भूषाभिर्भूषितामुदितानताः ६ राजराजनृपश्चायंकर्णाटविषयेस्थितः ॥ विजयस्तेप्रणामांश्चकरोतित्वंविलोकय ७ राघवेंद्रनृपश्चायंश्रीमानद्रविडदेशजः ॥ कंबुकण्ठोप्रणा
मांस्तेकरोतित्वंविलोकय ८ दीननाथनृपश्चायंविदर्भविषयेस्थितः ॥ अंगनाथःप्रणामांस्तेकरोतित्वंविलोकय ९ महाराजनृपश्चायंमागधेविषयेस्थितः ॥ परंतपःप्रणा
मांस्तेकरोतित्वंविलोकय १० सीताकांतनृपश्चायमवंतिस्थःप्रतापवान् ॥ उग्रबाहुःप्रणामांस्तेकरोतित्वंविलोकय ११ रघुवीरनृपश्चायंस्थितोहैहयपत्तने ॥ प्रतीपस्ते
प्रणामांश्चकरोतित्वंविलोकय १२ हेरामनृपतिश्चायंशूरसेनेस्थितोमहान् ॥ सुषेणस्तेप्रणामांश्चकरोतित्वंविलोकय १३ कोसलेंद्रनृपश्चायंहरिद्वारस्थितोमहान् ॥ नी
पान्वयेयज्ञकीर्तिःकरोतिनमनंतव १४ अयोध्येशनृपश्चायंकलिंगविषयेस्थितः ॥ हेमांगदस्तटेऽब्धेश्चकरोतिनमनंतव १५ रावणारिनृपश्चायंनागपत्तनसंस्थितः ॥ पां
ड्योऽयंमतिमान्शूरःकरोतिनमनंतव १६ एवंतेषांप्रणामांश्चमानयन्स्वेक्षणादिभिः ॥ विवेशबंधुभिर्बालैःसभायांमन्त्रिभिःप्रभुः १७ तत्रसिंहासनेदिव्येपाश्चिमायांततो
हरिः ॥ उपाविशत्सपूर्वास्यश्छत्रचामरमण्डितः १८ रामस्यसव्येसौमित्रिकैकेयतनयाःस्थिताः ॥ तस्थुस्तदारामवामेकुशाद्यामंत्रिबालकाः १९ शत्रुघ्नसव्येसंतस्थुः
सुमन्त्राद्याःसुमन्त्रिणः ॥ सभायामुत्तरेयाम्येपंक्तौसर्वेनृपादिकाः २० नेमिरेखोपमास्तस्थुःस्वसुहृत्पुत्रमन्त्रिभिः ॥ पश्चिमाभिमुखाःसर्वानन्तुर्वारयोषितः २१
अट्टालसंस्थाविप्राद्याददृशुःकौतुकंमहत् ॥ ततोनदत्सुवाद्येषुधूपेषुप्रज्वलत्सुच २२ नर्तत्सुवारनारीषुगायत्सुमागधादिषु ॥ स्तुवत्सुबंदिवृंदेषुसभायांनृपपौत्रिके २३
शिबिकास्थेदिव्यवस्त्रदिव्यालंकारमण्डिते ॥ नवरत्नमहामालाधृतरम्यकरोत्पले २४ तेसमाजग्मतूरम्येसभाग्रस्थेविरेजतुः ॥ तयोर्नेत्रकटाक्षैश्चभिन्नमर्मस्थलान्नृपाः
२५ बभूवुर्विकलाःसर्वेकामबाणैर्विशेषतः ॥ नतदालेभिरेशर्मशुष्ककंठोष्ठतालुकाः २६ सभांतांचंपिकानाम्नीवन्हिकोणाद्विवेशह ॥ ईशकोणाच्चसुमतिःसभांतांसंविवेशह
२७ अथोपमाताद्दासाधृतहस्ताग्रयष्टिका ॥ सभायांचंपिकानाम्न्यैदक्षिणस्थान्पृथक्पृथक् २८ क्रमेणवर्णयामासतदानृपतिसत्तमान् ॥ तथान्याचसभाग्राच्चधृतह
स्ताग्रयष्टिका २९ सुनन्दख्याऽतिजरठासुमत्यैनृपतीन्क्रमात् ॥ वर्णयामासोत्तरस्थानुपमातापृथक्पृथक् ३० अथसाचंपिकांप्राहनीत्वातांनृपतेःपुरः ॥ शिबिका

१ खड्गैःपिधानविमुखैःइतिपाठः।

स्थांचोपमातानन्दाचामरवीजिताम् ३१ राजकन्येचंपिकेऽत्रशृणुष्ववचनंमम ॥ एवंनृपंवर्णयामिपश्यत्वंमदनोपमम् ३२ पांड्योऽयंमतिमान्नाम्नानागपत्तनसंस्थितः ॥
शूरोरथीनृपश्रेष्ठःप्रजापालनतत्परः ३३ यदितेरोचतेचित्तेवरयैनमनुत्तमम् ॥ अस्यत्वंमहिषीभूत्वानागपत्तनसंस्थिता ३४ क्रीडस्वमुदिताऽनेनवरप्रासादराजिषु ॥
नन्दोक्तंचंपिकाश्रुत्वाव्यर्थवाक्यमनुत्तमम् ३५ नवबन्धमनस्तस्मिन्नृपतौमतिमत्तरी ॥ चोदयामासनन्दांतामग्रेगन्तुंनृपांतरम् ३६ तदाऽन्यंनृपतिंनन्दानीत्वातांशि
बिकास्थिताम् ॥ चंपिकांप्राहवेगेनपश्यैनंबालिकेनृपम् ३७ कलिंगविषयस्थोऽयंनाम्नाहेमांगदोऽमहान् ॥ कोटिशोवारणेंद्राणांयस्यगण्डस्थलादिषु ३८ मुक्ताजाला
तिगुच्छाश्वराजंतेकमलानने ॥ अस्यत्वंमहिषीभूत्वागवाक्षैःसागरस्यच ३९ पश्यन्तीकौतुकंबालेकरोषिक्रीडनादिकम् ॥ अस्यस्त्रीवृंदमध्येत्वंभवमुख्याऽद्यकन्यके ४०
इत्युक्ताऽपितयातन्वीनन्दयाचंपिकानृपे ॥ तस्मिन्नमनोनवबन्धाऽन्यंगन्तुंतामचोदयत् ४१ सपत्नीभयमालक्ष्यसपत्नीकस्त्यजिष्यति ॥ अमहानितिवाक्येननन्दया
सूचिताऽपिसा ४२ ततोऽन्यंनृपतिंगत्वानन्दाप्रोवाचचंपिकाम् ॥ पश्यैनंनृपतिंमुग्धेहरिद्वारनिवासिनम् ४३ नीपान्वयसमुद्भूतंदुग्धाब्धाविवनिशाकरम् ॥ यज्ञानांनृपते
रस्यकीर्त्याजगतिमण्डले ४४ यज्ञकीर्तिरितिख्यातःपृथ्वीशःप्रमदाप्रियः ॥ वरयैनंनृपंपुत्रिरुक्मभूषणभूषितम् ४५ अस्याऽद्यमहिषीभूत्वागंगावीचिपरंपराः ॥ नौ
कास्थापश्यसित्वंहिवरयैनंनृपोत्तमम् ४६ अस्यपत्नीवरिष्ठात्वंभवमाऽत्रैवजाऽबले ॥ इत्युक्ताऽपितयातस्मिन्नवबंधानिजंमनः ४७ त्वंवरिष्ठामाभवेतिनन्दयाप्रेवजेरिता ॥
चोदयामाससानन्दामग्रेगन्तुंनृपांतरम् ४८ नन्दाऽप्यन्यंनृपंनीत्वाचंपिकांप्राहवेगतः ॥ पश्यैनंनृपतिंमुग्धेशूरसेनाव्हयेवरे ४९ देशेकरोतिवैराज्यंसुषेणोऽयमनुत्तमः ॥
तुरगावायुवेगाश्वयस्यपत्न्योमृगीदृशः ५० यस्यांगणेवारनारीनृत्यघोषस्त्वहर्निशम् ॥ वरयैनंचंपिकेऽद्यतवाननवदाननम् ५१ अस्यत्वंमहिषीभूत्वाजन्मसाफल्यतां
कुरु ॥ वारस्त्रीलंपटंश्रुत्वातथावाक्यमनुत्तमम् ५२ नवबंधमनस्तस्मिन्नृपतौतांप्रचोदयत् ॥ अथसाचोदितानन्दातयाऽन्यंनृपतिंक्षणात् ५३ निनायशिबिकास्थांतांचं
पिकामाहसादरम् ॥ पश्यैनंनृपतिंबालेस्थितंहैहयपत्तने ५४ सहस्रार्जुनवंशस्यभूषणंकमलदृशम् ॥ प्रतीपइतिनाम्नाऽयंख्यातःशूरोमहारथी ५५ वरयैनंनृपंमान्यंय
च्छहेमस्वरूपिणी ॥ अस्यत्वंमहिषीभूत्वारेवायांपतिनासह ५६ करिष्यसिजलक्रीडांचंपिकेशृणुमद्वचः ॥ इत्युक्ताऽपितयातन्वीनवबंधमनोनृपे ५७ वरयैनंनृपंमेतिनं
दास्यादमहारथी ॥ नृपोऽयंचेतिवाक्येद्वेश्रुत्वाव्यर्थंविदुत्तमा ५८ एवंनानानृपाणांसावर्णनानिपृथक्पृथक् ॥ स्तुतिरूपनिषेधानिशुश्रूषंतीनृपात्मजा ५९ जगामशि
बिकासंस्थासनन्दाभरतानुजम् ॥ सुमन्त्रादीनतिक्रम्यश्रुत्वाश्रीराममन्त्रिणः ६० ततःप्रोवाचसानन्दापश्यैनंभरतानुजम् ॥ कोसलेंद्रस्यरामस्यबन्धुमेकोदरोपमम् ॥
६१ अयोध्यावासिनंरामराजवाक्यानुवर्तिनम् ॥ वरयैनंचंपिकेऽद्यश्रुतकीर्त्याःस्वसाभव ६२ इत्युक्ताऽपितयातन्वीशत्रुघ्नेनिजमानसम् ॥ नवबंधश्रुत्वासंज्ञामग्रेगन्तुंचका
रताम् ६३ ततस्साभरतंनीत्वानन्दातामाहमंजुलम् ॥ शत्रुघ्नस्याग्रजंचैनंकैकेय्याजठरोद्भवम् ६४ रामसेवारतंशांतंयुवानंदयिताप्रियम् ॥ वरयैनंबालिकेऽद्यमांडव्या

१ व्यर्थमितिपाठः । २ पश्यातिकौतुकमितिपाठः ।

सरयूजले ६५ करिष्यसिजलक्रीडांनौकास्थाभरतेनाहि ॥ ततस्तत्संज्ञयानन्दालक्ष्मणंचंपिकाजवात् ६६ नीत्वासौमित्रिकीर्तिंतांवर्णयामाससादरम् ॥ पश्यैनंलक्ष्मणं
बालेसुमित्राजठरोद्भवम् ६७ अयोध्यावासिनंरामसेवारक्तंमनोहरम् ॥ वरयैनंचंपिकेऽद्यमेघनादप्रमर्दनम् ॥ शेषांशसंभवंवीरंचोर्मिलायाःस्वसाभव . ६८ सर्वांनश्रुत्वा
रामसेवारक्तान्पत्नीयुतानपि ॥ छत्रचामरहीनांश्चरोचयामासतान्नसा ६९ ततस्तत्संज्ञयानन्दाश्रीरामाग्रेस्वयंवराम् ॥ नीत्वातामाहमधुरंस्तोतुंतंरघुनन्दनम् ७०
महत्तेचंपिकेदैवंयेनपश्यसिराघवम् ॥ धन्याऽहमपियारामंद्रष्टास्तोतुंपुरःस्थिता ७१ क्वाहंमन्दमतिर्नारीक्वरामोगुणसागरः ॥ नाहंतत्स्तवनेशक्तावाल्मीकिर्यत्रकुण्ठितः
७२ शतकोटिमितैःश्लोकैश्चरित्रंराघवस्यच ॥ मुनिनावर्णितंतच्चशतकोट्यंशवर्णितम् ७३ तस्याहंवर्णनंकिंचित्कंगोभियच्छृणुष्वतत् ॥ सूर्यवंशभूषणंश्रीदशरथनृपात्म
जम् ७४ कौसल्यातनयंरामंसाक्षान्नारायणंविभुम् ॥ ताटिकांतकरंवीरंगाधिजाध्वरपालकम् ७५ अहल्योद्धारिणंश्रेष्ठंशिवचापैकखण्डनम् ॥ जानकीवल्लभंरम्यंजामद
ग्न्यदवानलम् ॥ नृपवृंदैकजेतारंभरतप्राणदायिनम् ७६ ताताज्ञापालकंभ्रात्रासीतयाऽरण्यवासिनम् ॥ विराधमर्दनंश्यामंखरदूषणमर्दनम् ७७ त्रिशिरास्त्रममारीच
कबन्धवालिमर्दनम् ॥ समुद्रबन्धनंलंकाराक्षसांतकरंप्रभुम् ७८ रावणांतप्रकर्तारंसीतयाराज्यकारिणम् ॥ तीर्थयज्ञप्रकर्तारंसीताक्रीडनतत्परम् ७९ जानकीत्यागक
र्तारंसीताग्रहणतत्परम् ॥ कुशलवात्मजाभ्यांचवाज्यर्थयुद्धकारिणम् ८० एकपत्नीव्रतंशांतंसत्यभाषणतत्परम् ॥ एकबाणमसंख्यातनामानंमारुतिध्वजम् ८१ को
विदारध्वजंबाणध्वजंवज्रध्वजंशुभम् ॥ तार्क्ष्यध्वजंपुष्पकस्थंतार्क्ष्यवायुजवाहनम् ८२ नानाराजावतंसस्थमुक्तादीप्त्यंघ्रिशोभितम् ॥ वरसिंहासनासीनंछत्रचामरमण्डि
तम् ८३ वरयैनंचंपिकेऽद्यसीतयाभजराघवम् ॥ नववर्षेश्वरश्चायंसप्तद्वीपाधिपोऽपिच ८४ बाणःपत्नीवचोयस्यनान्यंमाखेदमाचर ॥ नवरत्नमालिकाऽस्यग्रीवायांकु
रुमाव्रज ८५ इत्युक्तानंदयाबालास्वल्पपुण्याविधेर्वशात् ॥ नवबन्धमनोरामेसीतांसंस्मृत्यचंपिका ८६ एकपत्नीव्रतंरामंसीतयाह्यभजेतिच ॥ खेदंमाचरतत्कण्ठे
मालांमाकुरुचोदिता ८७ ततस्तत्संज्ञयानन्दातांनिनायकुशंप्रति ॥ प्रोवाचमधुरंवाक्यंकुशवर्णनहर्षिता ८८ एनंपश्याल्पवयसंश्रीरामतनयंकुशम् ॥ जानकीजठरोद्भूतं
ज्येष्ठंभार्यार्थिनंशुभम् ८९ लवाग्रजंधनुर्वेदनिपुणंविनयान्वितम् ॥ पित्रासंग्रामकर्तारंवाल्मीकिमुनिशिक्षितम् ९० एनंवृणीष्वबालेत्वंसुरमानवसंस्तुतम् ॥ नवरत्नमयीं
मालामस्यकण्ठेसुखंकुरु ९१ इतिनन्दावचःश्रुत्वाचंपिकासास्मितानना ॥ मुमोचमालिकांकण्ठेस्वकराभ्यांकुशस्यहि ९२ तदानिनेदुर्वाद्यानितुष्टुवुर्बंदिमागधाः ॥ लज्ज
याऽधोमुखीरेजेसभायांकुशबालकः ९३ तदातुष्टोभूरिकीर्तिःकुशांकेचंपिकांशुभाम् ॥ स्थापयामासवेगेनपश्यत्सुनृपतिषुच ९४ ददर्शजालरंध्रैस्तंप्रासादस्थाविदेहजा ॥
मुमोदनितरांस्त्रीभिर्मुमोदराघवोऽपिसः ९५ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणेवाल्मीकीयेविवाहकांडेचंपिकास्वयंवरोनामद्वितीयःसर्गः ॥ २ ॥
१० ॥ श्रीरामदासउवाच ॥ अथाऽन्यासासभाग्राच्चसुमतिमुत्तरस्थितान् ॥ नृपानीशानदिग्भागात्सुनन्दाधृतयष्टिका १ क्रमेणवर्णयामासशिबिकास्थांसुलोचनाम् ॥
बालेशृणुष्वमेवाक्यंपश्यैनंत्वंनृपोत्तमम् २ अवंतिस्थंचोग्रबाहुनामानंचह्यनुत्तमम् ॥ नानेनसदृशःकश्चित्पृथिव्यांवर्ततेनृपः ३ वरयैनंनृपंमाऽग्रेगच्छत्वंगजगामिनी ॥

अस्यत्वंमहिषीभूत्वाक्षिप्रानद्याश्वसैकते ४ वस्त्रगेहस्थिताऽनेनसुखंक्रीडस्वभामिनि ॥ अनुत्तमंचेतिवाक्यंव्यर्थंसासुमतिःपुरा ५ श्रुत्वामैनंवरयेतिसुनन्दायांवचःपुनः ॥
श्रुत्वातांचोदयामाससातांनीत्वानृपांतरम् ६ सुनन्दासुमतिंप्राहपश्यैनंत्वंनृपंपरम् ॥ अंगनाथाव्हयंश्रेष्ठंविदर्भविषयास्थितम् ७ पूर्ववत्त्यजमाबालेवृणीष्वैनंनृपोत्तमम् ॥
स्त्रीकामंस्वल्पवयसंभुजकेयूरराजितम् ८ अस्यत्वंमहिषीभूत्वापयोष्णीजलवीचिषु ॥ सुखंकुरुजलक्रीडांनृपेणानेनभामिनि ९ एनंवृणीष्वमाचेतिह्युपमात्रासुचोदिता
अग्रेगन्तुंसुनन्दांसाचोदयामाससंज्ञया १० ततोऽन्यंनृपतिंनीत्वासुनन्दातांवचोऽब्रवीत् ॥ पश्यैनंनृपतिंबालेदेशेमागधसंज्ञके ११ राज्यंकरोत्ययंश्रीमान्नाम्नाख्यातःपरं
तपः ॥ वरयैनंनृपंमाग्रेगच्छाऽन्यंपार्थिवोत्तमम् १२ अस्यत्वंमहिषीभूत्वातत्तनीरप्रपूरिते ॥ ब्रह्मतीर्थेसदाक्रीडांहेमंतेभजभामिनि १३ मैनंनृपंवरयेतिशिक्षितासा
सुनन्दया ॥ चोदयामासतांवृद्धांसातांनिन्येनृपांतरम् १४ सुनन्दाबालिकामाहशृणुष्वमृगलोचने ॥ पश्यैनंनृपतिंरम्यंद्राविडेविषयेस्थितम् १५ कंबुकण्ठाव्हयं
श्रेष्ठंकांतिपुर्यांनिवासिनम् ॥ एवंनृपंवृणीष्वाद्यमात्यजान्यंनृपोत्तमम् १६ कांचिपुर्यामनेनत्वंसर्वतीर्थेमनोरमे ॥ क्रीडांभजस्वविस्तीर्णेहेमकंजविराजिते १७ विष्णुं
वरदराजाख्यंशिवमेकाम्बराव्हयम् ॥ पूजयस्वसदाऽनेनकंबुग्रीवनृपेणच १८ वृणीष्वैनंनृपंमाऽन्यसामान्यनृपवत्त्यज ॥ इतिवृद्धावचःश्रुत्वाऽग्रेतांगन्तुंप्रचोदयत् १९ सु
नन्दाऽन्यंनृपंनीत्वासुमतिंवाक्यमब्रवीत् ॥ पश्यैनंनृपतिंमुग्धेमत्तमातंगगामिनि २० कर्णाटविषयस्थंत्वंविजयंपार्थिवोत्तमम् ॥ कमलास्यंकंजहस्तंकमलांघ्रिणमुज्ज्व
लम् २१ स्मितास्यंकंजनयनंविजयाख्यपुरस्थितम् ॥ शृणुष्ववचनंमेऽद्यवृणीष्वैनंनृपोत्तमम् २२ अस्यत्वंमहिषीभूत्वावनेकृष्णानदीजले ॥ सुखंनृपेणक्रीडस्वम
द्वाक्यंशृणुमाव्रज २३ मद्वाक्यंशृणुमेत्युक्ताश्रुत्वावाक्यमनुत्तमम् ॥ व्रजेतिसूचितावालाचोदयामासतांपुनः २४ एवंनानानृपाणांचवर्णनानिपृथक्पृथक् ॥ स्तु
तिरूपनिषेधीनिश्रुत्वाव्यर्थानिबालिका २५ नवव्रंघमनश्चास्मिन्नृपतौतेषुसातदा ॥ ततस्तांशिबिकासंस्थांसुनन्दासाशनैःक्रमात् २६ अतिक्रम्यराममन्त्रिबालका
नपिपूर्ववत् ॥ यूपकेतुंशिशुंनीत्वाबालिकांवाक्यमब्रवीत् २७ शत्रुघ्नतनयंबालंयूपकेतुंमनोहरम् ॥ पितृव्यरामतनयद्वयवाक्यानुवर्तिनम् २८ एनंपश्यबा
लिकेत्वंसावधानमनाभव ॥ वरयैनंयूपकेतुंमाऽग्रेगच्छनृपात्मजे २९ मैनंवरयगच्छाऽग्रेवृद्धयासेतिचोदिता ॥ सुनन्दांचोदयामासाऽग्रेगन्तुंसुमतिःपुनः ३०
सुबाहुंपुष्करंतक्षमेवंसासुमतिःशनैः ॥ चित्रकेतुमंगदंचत्यक्त्वासातंलवंययौ ३१ लवार्पितेक्षणांबालांसुनन्दावाक्यमब्रवीत् ॥ पश्यैनंबालिकेबालंलवंश्रीराघवात्म
जम् ३२ स्त्रीकामंस्वल्पवयसंसीतालालितमुत्तमम् ॥ वाल्मीकिकृपयालब्धविद्यंरम्यंकुशानुजम् ३३ वृणीष्वैनंसुखेनैवकण्ठेऽस्यमालिकांकुरु ॥ कुशांकेच
पिकेयंतेस्वसायद्वत्स्थिताऽद्यहि ३४ तथात्वमपिभोमुग्धेलवांकेसंस्थिताभव ॥ इतितस्यावचःश्रुत्वासुनन्दायाःस्मितानना ३५ लवस्यकण्ठेहर्षेणलज्जयावन
तानना ॥ सुमतीनिजबाहुभ्यामर्पयामासमालिकाम् ३६ तदानिनेदुर्वाद्यानिजगुस्तेगायकास्तदा ॥ ननृतुर्वारनार्यश्चतुष्टुवुर्वंदिमागधाः ३७ सूरिकीर्तिर्नृ

१ विजयाख्यपुरःस्थितमितिपाठः ।

पस्तुष्टोलवंकिंसुमतितदा ॥ शीघ्रंन्यवेशयामासपरिपूर्णमनोरथः ३८ तोषमापरघुश्रेष्ठःसीताप्रासादसंस्थिता ॥ जालरंध्रैःसपत्नीकंलवंदृष्ट्वातुतोषसा ३९ ततः
सर्वान्नृपान्पूज्यभूरिकीर्तिर्नृपोत्तमः ॥ प्रार्थयामासविनयवचनैस्तत्पुरःस्थितः ४० विवाहकौतुकंदृष्ट्वाभवद्भिर्गम्यतामिति ॥ तथेतितेनृपाःप्रोचुर्ययुर्वासस्थलानि
हि ४१ रामाग्रेसंगरंकर्तुमसमर्थागतश्रियः ॥ म्लानाननागतोत्साहाःकामबाणप्रपीडिताः ४२ रामोपिबन्धुभिर्बालैर्ययौवासस्थलंमुदा ॥ अथाऽपरेदिनेरामंभूरिकीर्तिः
समाययौ ४३ पुरोधसोपविष्टस्सनत्वारामंवचोऽब्रवीत् ॥ द्रष्टव्योलग्नदिवसःसुमुहूर्तःसुखावहः ४४ मामंगीकुरुरामाऽद्यत्वत्पादाश्रयकामुकम् ॥ उभयोस्त्वंमण्डपयोः
कार्याण्याज्ञापयप्रभो ४५ तथेतिराघवश्चोक्त्वावसिष्ठंचोदयत्तदा ॥ सोऽपिरामाज्ञयाज्योतिश्शास्त्रज्ञैःपरिवेष्टितः ४६ मुहूर्तंकथयामासपंचमेऽहनिराघवम् ॥ ततस्तु
ष्टोभूरिकीर्तिर्गणेशंलग्नपत्रिकाम् ४७ सम्पूज्यगणकान्सर्वान्पण्डितान्वैदिकादिकान् ॥ बंधुपुत्रादिभिःसर्वैःश्रीरामंपूजयत्तदा ४८ नत्वारामंगृहंगत्वाचकारमण्डपादिकम् ॥
रामाज्ञयालक्ष्मणोऽपिचकारमण्डपादिकम् ४९ तदाबटपुरीरम्यापताकाध्वजतोरणैः ॥ पुरुषोत्तमराजधानीरेजेसागररोधसि ५० ततोमुहूर्तसमयेवंधूच्छिष्टांनिशां
कुशम् ॥ लवंचलिप्यतैलाक्तांसीताद्यामातरस्तदा ५१ करकुंभांश्चतुर्दिक्षुजलपूर्णान्सदीपकान् ॥ संस्थाप्यस्नापयामासुर्महावाद्यपुरस्सरम् ५२ तैलाभ्यंगंनिशायुक्तं
सीताद्याःस्वीयबालकैः ॥ सहैवचक्रुरानन्दपूरिताक्वमभूषिताः ५३ अभ्यंगपूर्वकंसस्नुस्तेरामाद्यास्तदामुदा ॥ ममाहूयततस्सीतामुक्तानांस्वस्तिकोपरि ५४ वसि
ष्ठोमुनिभिर्युक्तःशिशुभ्यांराघवेणहि ॥ गणपार्चांकारयित्वापुण्याहादित्रयंक्रमात् ५५ देशाचारान्कुलाचारानिष्टदेवींप्रपूज्यच ॥ कारयामासविधिवत्प्रतिष्ठादैवकस्यच
५६ तदाजनकनंदिन्यारजनीकुंकुमान्विते ॥ विरेजतुःस्त्रीकदम्बास्थितायाःपदपंकजे ५७ सीताद्यास्ताःस्त्रियःसर्वाहरित्पीतारुणैर्वरैः ॥ हेमतंत्वंकितैर्वस्त्रैर्विरेजुर्मंडपांग
णे ५८ ततस्समाययुस्सर्वेमुदातत्रमुनीश्वराः ॥ स्वयंवरोत्सवेपूर्वंनागतायेसहस्रशः ५९ श्रुत्वोत्साहंविवाहस्यकुशस्यचलवस्यते ॥ तान्सर्वान्रामचन्द्रोपिवस्त्राभरण
धेनुभिः ६० पूजयामासविधिवत्सीतयालक्ष्मणादिभिः ॥ भूरिकीर्तिर्नृपेर्युक्तोमहावाद्यपुरस्सरम् ६१ स्वयंकुशलवौगेहंनेतुकामःसमाययौ ॥ मण्डपेपूजयामासवी
रोराज्ञःसुतस्तदा ६२ कुशंतथालवंचापिकनीयानभूरिकीर्तिजः ॥ हेमतंतूद्भवैर्दिव्यवस्त्रैराभरणादिभिः ६३ तदाविरेजतुर्बालौतथातेऽप्यंगदादयः ॥ ततस्तौवारणेंद्र
स्थौदिव्यचामरवीजितौ ६४ पश्यंतौनर्तनान्यग्रेवारस्त्रीणांस्मिताननौ ॥ शृण्वंतौवाद्यघोषांश्चवर्णितौमागधादिभिः ६५ सीतादिभिर्वारणीषुसंस्थिताभिस्तथापथि ॥
प्रासादोपरिसंस्थाभिर्नारीभिःपुष्पवृष्टिभिः ६६ हरिद्रापीतधान्यैश्चमांगल्यैर्मौक्तिकैरपि ॥ लाजाभिर्हेमपुष्पैश्चवर्षितावीक्षितौमुहुः ६७ जग्मतुर्बालकावेवंपश्यन्तौ
कौतुकानिहि ॥ ददर्शतुर्वाटिकाश्चपुष्पवृष्टिविनिर्मिताः ६८ तथाकृत्रिमवृक्षांश्चपताकाश्चध्वजांस्तथा ॥ तथौषधिभवान्वृक्षान्वन्हिस्पर्शविदीपितान् ६९ शकटस्था
नोषधीभिःपूरितान्कृत्रिमानजनान् ॥ तथान्याग्रादिकान्हिंस्त्रानौषधीभिःप्रपूरितान् ७० तडित्समानान्गगनेप्राकारानौषधीभवान् ॥ केकिचक्रोपमादींश्चचंद्रज्योत्स्ना

१ 'उटीहळद' इतिमहाराष्ट्रभाषायाम् । २ वृक्षविनिर्मिताः इतिपाठः ।

स्तुकृत्रिमाः ७१ एवंददर्शतुर्नानाकौतुकानिनृपात्मजौ ॥ ततस्तौभूरिकीर्तेश्चगत्वामण्डपमुत्तमम् ७२ नानामहोत्सवैर्बालौचामरच्छत्रमण्डितौ ॥ अवरुह्यगजेंद्राभ्यां
तस्थतुर्मंडपांगणे ७३ मधुपर्कविधानानिविष्टरादीनिवैक्रमात् ॥ तयोर्गुरूचक्रतुस्तौब्राह्मणैःपरिवेष्टितौ ७४ ततोवध्वोःपूजनंचसीतयारघुनन्दनः ॥ चकारगुरुणायु
क्तस्तदासमण्डपांगणे ७५ ततोलग्नमुहूर्तेतंकुशंचंपिकयागुरुः ॥ तथालवंसुमत्यापिपृथग्वेदिकयोस्तदा ७६ कृत्वासुपंस्थितौचोभौदंपत्योरंतरेपटौ ॥ छत्रोभयोःपृथ
क्चित्रौनूतनौहेमतंतुजौ ७७ नानामंगलघोषांश्चमुनिभिश्चक्रतुर्मुदा ॥ आसन्सर्वजनास्तूष्णींशृण्वंतोमंगलस्वनान् ७८ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदान
न्दरामायणे वाल्मीकीये विवाहकांडेचंपिकासुमतिस्वयंवरवर्णनंनामतृतीयःसर्गः ॥ ३ ॥ श्रीरामदासउवाच ॥ श्रीसीतारघुनायकश्चगिरिजाशंभुर्गणेशस्तथानंदीष
ण्मुखलक्ष्मणौचभरतःकंजोद्भवःशत्रुहा ॥ सर्वेतेमुनयःसुराश्चदितिजास्तीर्थानिनद्योनदादिक्पालाःशशिभास्करौचहनुमान्कुर्वंतुवोमंगलम् १ तदेवलग्नंसुदिनंतदेवता
रावलंचन्द्रबलंतदेव ॥ विद्याबलंदैवबलंतदेवसीतापतेर्यत्स्मरणंविधेयम् २ एवंमंगलघोषैश्चनानावाद्यपुरःसरम् ॥ ततस्त्वंतःपटौमुक्त्वाऽपुण्याहमितिस्मरन् ३ त
योस्तेपाणिग्रहणविधानंविधिपूर्वकम् ॥ लाजाहोमादिकंसर्वचक्रुर्मंगलपूर्वकम् ४ तदामहावाद्यघोषानिनेदुर्मंडपांगणे ॥ ननृतुर्वारनार्यश्चतदामागधबंदिनः ५ जगुर्मंग
लगीतानितुष्टुवुस्तेमहास्वनैः ॥ तदादानान्यनेकानिचक्रतुस्तौनृपोत्तमौ ६ भूरिकीर्तिरामचंद्रौमहातोषप्रपूरितौ ॥ अथतौबालकौवध्वौनिजकट्योर्निवेश्यवै ७ सी
तोर्मिलादिभिःस्त्रीभिर्जग्मतुर्भोजनगृहम् ॥ तत्रगौरीहरौपूज्यचक्रतुश्चाग्निसिंचनम् ८ ततःकुशश्चंपिकयासुमत्यासलवोऽपिच ॥ चक्रतुर्भोजनंचोभौस्त्रीभिःसर्वत्रवेष्टितौ
९ मात्रासहोपनयनेविवाहेभार्ययासह ॥ अन्येनैवभोक्तव्यंभुक्तंचेत्पतितःस्मृतः १० रामोऽपिबन्धुभिःपौरैःसुहृद्भिःपार्थिवोत्तमैः ॥ चकारभोजनंभूरिकीर्तेःसद्म
निवैमुदा ११ एवंसीताऽपिनारीभिश्चकारभोजनंतदा ॥ भूरिकीर्तेःस्नुषाभिःसाप्रार्थितावंदितामुहुः १२ ततोनानासमुत्साहान्भूरिकीर्तिश्चकारसः ॥ अथतौबालकौ
रम्यौस्त्रीवाक्यैर्मातृसन्निधौ १३ स्वश्वश्रूसन्निधौचापिस्त्रीभिःसर्वत्रवेष्टितौ ॥ स्वस्वपत्न्याःपदयोःस्वशिरोभ्यांनमनंमुहुः १४ चक्रतुस्तोषसंपूर्णौतेतावपिस्मितानने ॥
वधूवराश्चतेसर्वेनिशापीताविरेजिरे १५ कुंकुमांकितपादौतेददतुर्वल्लभांकयोः ॥ एवंनानासमुत्साहैरतिकांतंदिनत्रयम् १६ चतुर्थेदिवसेरात्रौवंशपात्रविराजितैः ॥ दीपै
र्नीराजितौचोभौबालकौतौविरेजतुः १७ ततस्तौबालकौपत्न्यौस्वस्वपृष्ठेनिवेश्यच ॥ चक्रतुस्तांडवंनृत्यकुशलौमण्डपांगणे १८ मातृश्वश्रूरादिकासुपश्यत्सुचससाद
रम् ॥ पारिबर्हंभूरिकीर्तिःकुशायचलवायच १९ ददौतुष्टमनाःशीघ्रंरामसम्बंधहर्षितः ॥ नियुतान्वारणेंद्रांश्चशिबिकाश्चापितन्मिताः २० तुरंगान्पञ्चनियुतंनियुता
न्स्यन्दनान्ददौ ॥ द्वाभ्यांपृथक्पृथक्पौत्रीधवाभ्यांद्रव्यपूरितान् २१ नानालंकारवासांसिमादासीःसेवकांस्तथा ॥ ददौताभ्यांभूरिकीर्तिर्येषांसंख्यानविद्यते २२
एवंसम्मानितस्तेनश्रीरामोभूरिकीर्तिना ॥ सपत्नीकाभ्यांपुत्राभ्यांगजस्थाभ्यांसमन्वितः २३ सीतयाबंधुभिःपौरैःसुहृद्भिर्भ्रातृभिर्नृपैः ॥ पूर्ववदुत्सवाद्यैश्चसययौ

१ निशोषांतेइतिपाठः । २ मातृश्वश्र्वादिषुवादकेषुपश्यत्सुसादरमितिपाठः ।

स्वीयमण्डपम् २४ वटपुर्यांततोरामोमासमेकंनिनायसः ॥ चकारसीतयाक्रीडानौकासंस्थोमहोदधौ २५ ततःस्नुषाभ्यांश्रीरामोययौनिजपुरींसुखम् ॥ अयो
ध्यायांविजयोऽपिश्रुत्वारामंसमागतम् २६ यःपुर्यांरक्षणार्थंहिरामेणाज्ञापितःपुरा ॥ सपुरींशोभयामासपताकाध्वजतोरणैः २७ वारगेंद्रपुरस्कृत्यतूर्यनृत्यपुरस्सरम् ॥
विजयोरामसचिवोरामंप्रत्युद्ययौजवात् २८ अथोनदत्सुवाद्येषुरामोबालैःसुहृज्जनैः ॥ स्नुषाभ्यांसीतयाबंधुपत्नीभिर्भ्रातृभिःपुरीम् २९ विवेशसेनयायो रैःपश्यभृ
त्यादिकंपथि ॥ तदाविश्यानन्नृतुस्तास्तुष्टुवुर्वंदिमागधाः ३० स्वस्वपत्नीयुतौबालौवरवारणयोःस्थितौ ॥ तदाविरेजतुर्मार्गेस्त्रीभिःपुष्पैःसुवर्षितौ ३१ एवंरामो
गृहंगत्वाबालाभ्यांस्वीयसद्मनि ॥ कारयित्वास्माचौसददौदानान्यनेकशः ३२ तदालंकारवस्त्राद्यैःसंपूज्यरघुनंदनः ॥ सुहृदःसकलान्पौरानिग्रान्जानपदान्नृ
पान् ३३ आचांडालादिकान्सर्वान्संतुष्टानकरोन्मुदा ॥ ततःसभूरिकीर्तिस्तान्मंत्रिणःसैन्यसंयुतान् ३४ सम्पूज्यप्रेषयामासस्वदेशंरघुनंदनः ॥ ततःसर्वा
न्जानपदान्सुहृदश्चप्लवंगमान् ३५ विभीषणादिकांश्चाज्ञांगेतुंस्वस्वस्थलंददौ ॥ ततस्सर्वेराघवंतेवस्त्राभरणवाहनैः ३६ स्वस्वकोशैश्चसंपूज्यनत्वारामंययुर्मुदा ॥
स्वंस्वंदेशंनिजेस्सैन्यैःश्रीरामेणाऽतिमानिताः ३७ अथरामःस्नुषाभ्यांचपुत्राभ्यांबन्धुभिःस्त्रिया ॥ सुखंचकारराज्यंसधर्मेणाप्रतिमंचिरम् ३८ ततःश्रावणमास
स्यदर्शमारभ्यषोडश ॥ प्रख्यातान्यब्देयानियानिसमुत्साहदिनानिहि ३९ तेषुसर्वेषुतंरामंसावरोधंसबालकम् ॥ स्वपुरींभूरिकीर्तिःसनिनायपरमादरात् ४० पूजयामा
102 सविविधैर्वस्त्रालंकारवाहनैः ॥ कियद्दिनानिसंस्थाप्यददावाज्ञांपुनःपुनः ४१ संवत्सरसमुत्साहदिनानिषोडशाऽधुना ॥ विष्णुदासमयातेऽग्रेकथ्यंतेतानिवैशृणु ४२ श्रा
वणस्याद्यमासस्यकुहूःश्रेष्ठाप्रकीर्तिता ॥ भाद्रशुक्लचतुर्थीतुविजयादशमीतथा ४३ दीपावल्याश्चचत्वारिदिनान्यतिमहांतिच ॥ मार्गशीर्षेपंचमीचासिताषष्ठीतथा
पुनः ४४ संक्रांतिर्मकराख्यातुतथाचरथसप्तमी ॥ हुताशनीचैत्रशुक्लप्रतिपच्चापिपुण्यदा ४५ अक्षय्याख्यातृतीयाचतथाज्येष्ठपौर्णिमा ॥ पंचमीश्रावणेशुक्लाषोड
शैवस्मृतानिहि ४६ संवत्सरसमुत्साहदिनान्यतिमहांतिच ॥ एतेषुभूरिकीर्तिःसरामंनीत्वाप्रपूजयत् ४७ एवंकुशस्यचतथालवस्याऽपिसविस्तरात् ॥ विवाहौवर्णि
तौशिष्ययथापूर्वंश्रुतौमया ४८ यदाश्रीरामचन्द्रस्यवैकुंठारोहणंशुभम् ॥ भविष्यतितदाऽयोध्यापुर्यांवैसरयूजले ४९ कुशःस्त्रियाचंपिकयाजलक्रीडांकरिष्यति ॥
तस्यदक्षिणहस्तस्यकंकणंरुक्मनिर्मितम् ५० सरयूजलमध्येतुपतिष्यतिमहोज्ज्वलम् ॥ तत्रवैयेकुमुदस्यपन्नगस्यकुमुद्वती ५१ स्वसाद्दृष्ट्वाकंकणंतद्गृहीत्वासद्मयास्यति॥
कुशोऽपिकंकणार्थंहिबाणंसन्धारयिष्यति ५२ सरयूशोषणार्थंहिसंनद्धश्चभविष्यति ॥ ततःसाकुमुदंगत्वासरयूःप्रार्थयिष्यति ५३ सोऽपिदृष्ट्वाकुशंकुद्धंस्वसामादाय
सादरम् ॥ कुशमागत्यतंनत्वास्वसांतस्मैप्रदास्यति ५४ रत्नानिकंकणंदत्त्वातेनसख्यंकरिष्यति ॥ एवंकुमुद्वतीभार्याऽग्रेतस्याऽन्याभविष्यति ५५ तस्यांकुशात्सु
तनयोऽतिथिर्नाम्नाभविष्यति ॥ चंपिकायादुहितरःसंभविष्यन्तिनोसुताः ५६ आतिथेःसूर्यवंशोऽग्रेचिरंविस्तारमेष्यति ॥ एवंकुशस्यद्वेपत्न्यौवर्णितेशिष्यवैमया ५७

१ प्रार्थितासरयूजलमितिपाठः ।

अथस्वीयगृहेपत्न्याऽकरोत्क्रीडांकुशःसुखम् ॥ तथास्वीयगृहेपत्न्याऽकरोत्क्रीडांलवोऽपिच ९८ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे विवाहकांडे वाल्मीकीयेकुशलवयोर्विवाहवर्णनंनामचतुर्थःसर्गः ॥ ४ ॥ ॥ श्रीरामदासउवाच ॥ एकदारघुवीरःससीतयाबालबंधुभिः ॥ पौरैर्मंत्रिजनैरिष्टैःपुष्पकस्थोययौवनम् १ पश्यन्नानाकौतुकानिरंजयन्जानकींमुदा ॥ ययौसदंडकारण्यमगस्तेराश्रमांतिकम् २ राममागतमाकर्ण्यकुंभजन्मामुनीश्वरः ॥ प्रत्युद्गम्यरघुश्रेष्ठंनिनायस्वाश्रमंप्रति ३ ततःसमुनिवर्यस्तुस्नात्वारहसिसंस्थितः ॥ अन्नपूर्णांमहालक्ष्मींचिंतयामासचेतसि ४ तदातत्तपसातुष्टाऽऽविर्बभूवसुरेश्वरी ॥ ददौतस्मैपायसेनपूरितंपात्रमुत्तमम् ५ अन्नपूर्णामुनिंप्राहस्थाल्यास्तुविविधानिहि ॥ पक्वान्नानियथेष्टानिनिष्कास्यंतवभामिनी ६ सर्वेषामग्रतःशीघ्रंकरोतुपरिवेषणम् ॥ इत्युक्त्वासाऽन्नपूर्णातंमुनिमन्तर्दधेतदा ७ लोपामुद्रामुनेःपत्नीस्थाल्यानिष्कास्यवेगतः ॥ दिव्यान्नानिविचित्राणिसर्वेषांपुरतस्तदा ८ समर्चितानांविप्राणांचकारपरिवेषणम् ॥ अथतुष्टंरघुश्रेष्ठंकंकणेरत्ननिर्मिते ९ ददौमुदाकुंभजन्मासीतायैदिव्यकुंडले ॥ एवंसंपूजितस्तेनमुनिनारघुनंदनः १० सहितोऽगस्तिनास्थित्वापुष्पकेपूर्ववत्पुनः ॥ पश्यन्सदण्डकारण्येकौतुकानिसमंततः ११ विचचाररघुश्रेष्ठोदर्शयामासमैथिलीम् ॥ नानावृक्षान्पर्वतांश्चनदीःपक्षिकुलान्मृगान् १२ पंचाप्सरसरोनामददर्शाऽसौभ्रमन्सरः ॥ तत्तटेराघवोरात्रौनिवासमकरोन्मुदा १३ एतस्मिन्नंतरेरात्रौनृत्यमप्सरसांशुभम् ॥ शुश्रावमधुरंगीतंसीतयामंचकेप्रभुः १४ तेऽपिसर्वेशुश्रुवुस्तन्नृत्यंगीतंचसुस्वरम् ॥ अदृष्ट्वाप्सरसस्तत्रतदासरघुनंदनः १५ पप्रच्छकुंभजन्मानंगीतंनृत्यंकुतस्त्विदम् ॥ श्रूयतेमुनिशार्दूलवदस्वत्वंसविस्तरम् १६ इतिरामवचःश्रुत्वातमगस्तिर्वचोब्रवीत् ॥ रामराजीवपत्राक्षकिंत्वंवेत्सिनवेत्सिदम् १७ सर्वंनितान्मन्मुखेनवृत्तंश्रावयितुंमुदा ॥ चेन्मांपृच्छसितर्ह्यद्यतवाग्रेप्रवदाम्यहम् १८ पुरागन्धर्वराजस्यपुत्र्यःपंचमनोरमाः ॥ अरजस्कामुदाक्रीडांचक्रुरत्रसरोवरे १९ एतस्मिन्नंतरेरामनागकन्याःसरोवरात् ॥ क्रीडार्थंनिर्ययुःसप्तबहिःप्राप्तयौवनाः २० तासांपरस्परंमैत्रीबभूवरघुनंदन ॥ तत्रतानागकन्याश्चतथागन्धर्वकन्यकाः २१ यातायातंसदाचक्रुःक्रीडार्थंसरसस्तटे ॥ तपतामुनिनातत्रमुहुर्वाक्यैर्निवारिताः २२ मागच्छध्वंमन्निकटेचेतिताबालभावतः ॥ अमानयंत्यस्तद्वाक्यंसभाजग्मुर्निरंतरम् २३ इंद्रेणत्रोधिताश्चाऽपितत्तपोध्वंसनंप्रति ॥ मुनिश्चापितपोनाशंदृष्ट्वाशापादिनातदा २४ विनाशापेनतासांसदण्डंसम्मंत्र्यहृदि ॥ आत्मवाक्यगौरवेणजलदेवीःप्रचोदयत् २५ तद्वाक्याज्जलदेव्यस्तामध्यान्हेस्वीयमंदिरम् ॥ निन्युर्दृष्ट्वाबलाद्वैयत्रकेषांगतिर्नहि २६ गंधर्वाःपन्नगायत्रगंतुंशक्तानचाभवन् ॥ तपोंतेसमुनिःस्वर्गंगतस्ताह्यत्रसंस्थिताः २७ तास्सर्वाजलदेवीनांगेहेसंत्यघुनाप्रभो ॥ इदंवृत्तमाधुनिकंविद्धिरामस्मयप्रदम् २८ ताह्यत्रजलदेवीनांजलांतर्गतसद्मनि ॥ कुर्वंतिनृत्यगीतानितासांसंश्रूयतेध्वनिः २९ एवंरामयथापृष्टंत्वयासर्वंमयातथा ॥ वृत्तंतवाग्रेकथितंकुरुयेनहितंभवेत् ३० सर्वासांनागकन्यानांगांधर्वीणांतथाविभो ॥ मुनिनाचोदितश्चेत्यंतदासीतापतिर्मुदा ३१ लक्ष्मणंप्राहमेचापमानयाऽद्यक्षणादिह ॥ मुक्त्वावा

१ रामान्वितानांमुनीनामितिपाठः । २ मंत्रीइतिपाठः ।

॥ ५१ ॥

णंमोचयामिदग्ध्वादेवीर्जलस्थिताः ३२ कन्यकाःपन्नगानांचतथागंधर्वकन्यकाः ॥ इतितद्रामवाक्यंसश्रुत्वासौमित्रिरादरात् ३३ शीघ्रंचापंसतूणीरंददौश्रीराघवंप्रति ॥
ततःकोदण्डमुद्यम्यटणत्कृत्यरघूद्वहः ३४ शरंजग्राहतूणीरान्निजनामांकितंशितम् ॥ तदाचचालधरणीचुक्षुभुःसप्तसागराः ३५ ववौघोरतरोवायूरजोव्याप्तादिशोऽभ
वन् ॥ तारानिपेतुर्धरणींवुद्रुवुर्वनचारिणः ३६ पर्वताःकंपिताआसन्ववर्षुर्लोहितंघनाः ॥ तज्ज्ञात्वाजलदेव्यस्ताःश्रुत्वाचापध्वनिंमहत् ३७ भयभीताःसमाजग्मुस्ता
भिस्सर्वाभिरादरात् ॥ प्रणेमुस्तास्तदारामंबालिकास्तास्तुद्वादश ३८ राघवायार्पयामासुर्दिव्यभूषणभूषिताः ॥ राघवंजलदेव्यस्ताःप्रार्थयामासुरादरात् ३९ रामराम
महाबाहोऽस्माभिर्यदपराधितम् ॥ तत्क्षमस्वरघुश्रेष्ठमामुंचस्वपतत्रिणम् ४० नकश्चित्सूर्यवंशेऽभूत्स्त्रीषुशस्त्रप्रहारकः ॥ त्वयाऽपिरक्षितापूर्वंस्त्रीत्वाहूर्जान्हवीतटे ४१
यदाऽनयातुशपथःकृतोमैथिलकन्यया ॥ ताटिकादिराक्षसीषुयत्कृतंत्राणमोचनम् ४२ ब्रह्मघ्नीषुत्वयापूर्वंतत्सर्वेषांहितायच ॥ इतितासांवचःश्रुत्वाविहस्यरघुनन्दनः
४३ स्थापयामासतूणीरेपूर्ववत्तंस्वमार्गणम् ॥ ततस्ताभिःपूजितःसतदाहृष्टोरघूत्तमः ४४ जलदेवीर्ददावाज्ञांस्वस्थलंगम्यतामिति ॥ एतस्मिन्नन्तरेतत्रगंधर्वाश्चाथपन्न
गाः ४५ विदित्वासकलंरामकृतंरामांतिकंययुः ॥ नत्वारामंससीतंचतथातंकुंभसंभवम् ४६ उपायनान्यनेकानिसमर्प्यरघुनन्दनम् ॥ ऊचुस्तेमंजुलंवाक्यंप्रबद्धकरसंपु
टाः ४७ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकिये विवाहकांडे जलदेवीजीवदानंबालिकामोचनंनामपंचमःसर्गः ॥ ५ ॥ ॥ गंधर्वपन्न
गाऊचुः ॥ रामकंजाननस्वामिन्मोचितावालिकास्त्वया ॥ विवाहान्नरजस्कानांपुत्रेस्त्वंकर्तुमर्हसि १ अद्यधन्यावयंसर्वेनःकुलंपावनंकृतम् ॥ त्वयारामहावाहोतारि
ताःस्मोवयंप्रभो २ सप्तजन्मसुयत्पुण्यंकृतमस्तिरघूद्वह ॥ अस्माभिस्तेनसंबन्धस्त्वयाऽद्यभवत्प्रभो ३ ॥ श्रीरामदासउवाच ॥ इतितेषांवचःश्रुत्वासीतयासरघूद्वहः ॥
103 अंगीकृत्यवचस्तेषामगस्तिमवलोकयत् ४ तदाप्राहकुंभजन्माराघवंवचनंमुनिः ॥ रामाऽन्याऽष्टकेकुमुदस्यस्वसानाम्नाकुमुद्वती ५ त्वयिप्राप्तेदिवेवैकुंठंकुशपत्नीभविष्यति ॥
चंपिकायेनतनयोभविष्यतिरघूद्वह ६ कुशात्पुत्रःकुमुद्वत्यामतिथिस्तुभविष्यति ॥ राज्यकर्तावंशकर्तासएवाग्रेभविष्यति ७ अतस्त्वमघुनारामनागकन्याःकुशंविना ॥
सप्तस्वसप्तपुत्रेभ्यःप्रयच्छविधिनाद्विजैः ८ ॥ पंचगंधर्वकन्याश्चयूपकेतुंकुशंलवम् ॥ विनास्वपंचपुत्रेभ्यःप्रयच्छरघुनन्दन ९ राक्षसेनविवाहेनयूपकेतुःशिशुस्तव ॥ अ
ग्रेपत्नींमहानेष्यकरिष्यत्यपरांशुभाम् १० एवंरामसुताःसर्वेस्वस्वस्त्रीभ्यांयथासुखम् ॥ क्रीडयिष्यंतिपौत्रास्तानभविष्यंतिप्रपौत्रकाः ११ प्रपौत्रस्यप्रपौत्रंवंदृष्ट्वासीतासम
न्वितः ॥ सुखंगच्छसिवैकुण्ठंबन्धुभिर्नगरीस्थितैः १२ एवंश्रुत्वामुनेर्वाक्यमंगीकृत्यरघूद्वहः ॥ तासांनामानिपप्रच्छगंधर्वान्पन्नगानपि १३ तदाऽब्रवीत्सगंधर्वैःस्वपु
त्रीणांसविस्तरात् ॥ तासांनामानिरामाग्रेपंचानांसरसस्तटे १४ चन्द्रिकाचंद्रवदनाचंचलाचपलाचला ॥ एवंनामानिपंचानांक्रमेणरघुनन्दनः १५ श्रुत्वाऽवलोकयत्
१२ मासपन्नगास्तेऽपिचाब्रुवन् ॥ कंजाननाकंजनेत्राकंजांघ्रीचकलावती १६ कलिकाकमलाचैवमालतीसप्तकीर्तिताः ॥ एवंनामानिसर्वासांक्रमेणरघुनन्दनः १७ श्रु
त्वाताःपुष्पकेस्थाप्यतैर्निद्रामकरोन्निशि ॥ अथप्रभातेश्रीरामःस्नात्वाहुत्वायथाविधि १८ गंधर्वपन्नगांश्चापितदावचनमब्रवीत् ॥ एभिर्जनैर्मयानाकंविवाहार्थरसातलम्

१९ नैवयोग्यंसमागन्तुंमर्त्यलोकनिवासिना ॥ तस्माच्छृणुध्वंमद्वाक्यंसुहृदःसकलाःशुभम् २० यूयंगत्वानिजस्थानंस्वस्त्रीभिश्चसुहृज्जनैः ॥ आगंतव्यंविवाहार्थंमयो
ध्यामियथासुखम् २१ अधुनाऽहंतुगच्छामिपुरीमय्येक्षणेनहि ॥ विहायसाविमानेनपताकाध्वजमालिना २२ तथेतिरामवचनात्तेगताःस्वस्थलानिहि ॥ रामोपिमुनिना
ताभिर्बालिकाभिःसुतैःस्त्रिया २३ विहायसापुष्पकस्थोययौपश्यन्वनानिसः ॥ अयोध्यांप्रहरेणैवमुदाप्रापरघूद्वहः २४ नीराजितःपुरस्त्रीभिर्विवेशनिजमंदिरम् ॥ व
सिष्ठगेहेताःसर्वाःप्रेषयामासराघवः २५ अथरामःसभामध्येसौमित्रिमिदमब्रवीत् ॥ आकारणीयाराजानःसुहृदश्चमुनीश्वराः २६ सांतःपुराःसपौराश्चस्वस्वजानपदैः
सह ॥ शृंगारणीयाऽयोध्येयंपरिखाःससप्तादरम् २७ शोधनीयास्तथासौधसमूहेषुसुधाशुभा ॥ देयाचित्राणिलेख्यानिप्रासादेषुसमंततः २८ देवालयेषुसर्वेषुसुधादेयाम
नोरमा ॥ लेखनीयानिचित्राणिवलयःस्थाप्यतांपृथक् २९ बंधनीयाःपताकाश्चरोपणीयाध्वजाअपि ॥ समंततस्तोरणानिबंधनीयानिलक्ष्मण ३० वेद्यःकार्याःक्रम
मध्योबंधनीयाश्चमण्डपाः ॥ शृंगारणीयाहस्त्यश्वशिबिकाश्चसहस्रशः ३१ गंधर्वेभ्यःपन्नगेभ्योवस्तुंगेहानिवैपृथक् ॥ कुरुष्वनूतनान्यन्नवस्त्राद्यैःपूरितानिच ३२ अ
न्यच्चापियथायोग्यंयद्यज्जानासिलक्ष्मण ॥ तत्तत्कुरुष्वयत्नोक्तंमयातवरघूद्वह ३३ तद्रामवचनंश्रुत्वातथेत्युक्त्वासलक्ष्मणः ॥ तथाचकारतत्सर्वंयथारामेणशिक्षितः ३४
अथगंधर्वराजस्तुतथैवसन्नपन्नगाः ॥ सुहृद्भिःसावरोधास्तेययुःशीघ्रंमुदान्विताः ३५ सर्पामानवरूपेणहस्त्यश्वरथसंस्थिताः ॥ गंधर्वाश्चापिसैन्यैस्तेसाकेतोपवनंय
युः ३६ ततस्त्वागमनंतेषांश्रुत्वाप्रत्युद्ययौरघूद्वहः ॥ नानावाद्यनिनादैश्चनृत्यैरप्सरसांपुरीम् ३७ नीत्वासंस्थापयामासविस्तीर्णेषुगृहेषुसः ॥ अथतैरेकदारामःसभायां
संस्थितःसुखम् ३८ ज्योतिर्विदःसमाहूयवसिष्ठंतत्पुरोधसः ॥ पृथग्विवाहान्कर्तुंससुमुहूर्ताननतिमंगलान् ३९ सम्यग्विचारयामासवर्षमध्येसविस्तरम् ॥ ज्योतिर्विदस्त
दाप्रोचुर्मुहूर्तान्वर्तिसौख्यदान् ४० पक्षांतरेणवैशाखेद्वौमुहूर्तौशुभावहौ ॥ तथादशुर्मुहूर्तौद्वौज्येष्ठेपक्षांतरेणते ४१ द्वावेवमार्गशीर्षेऽपित्रीन्माघेफाल्गुनेऽपिच ॥ एवं
द्वादशनारीणांचकुर्लग्नविनिश्चयम् ४२ लवस्याऽथांगदस्यापिविवाहौतैर्विनिश्चितौ ॥ ज्योतिर्विद्भिर्वसिष्ठेनवैशाखेराघवाग्रतः ४३ चित्रकेतोःपुष्करस्यविवाहौतैर्विनि
श्चितौ ॥ ज्येष्ठेमासिक्रमेणैवंपक्षेपक्षेपृथक्पृथक् ४४ तक्षस्याऽथसुबाहोश्चविवाहौमार्गशीर्षके ॥ पक्षांतरेणरामाग्रेज्योतिर्विद्भिर्विनिश्चितौ ४५ यूपकेतोरंगदस्यचि
त्रकेतोर्विनिश्चिताः ॥ माघमासेविवाहाश्चज्योतिःशास्त्रविशारदैः ४६ पुष्करस्याऽथतक्षस्यसुबाहोःफाल्गुनेशुभे ॥ विवाहानिश्चिताःशिष्यरामाग्रेगणकैस्तदा ४७ ए
वंविनिश्चिताःसर्वेविवाहाद्वादशक्रमात् ॥ ज्योतिर्विद्भिर्निश्चितांश्चश्रुत्वातानर्चयद्विभुः ४८ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये
विवाहकांडेद्वादशविवाहविनिश्चयोनामषष्ठःसर्गः ॥ ६ ॥ ॥ श्रीरामदासउवाच ॥ अथतेगणकाःसर्वेवसिष्ठस्तत्पुरोधसः ॥ कुमारीणांविभागांश्चचक्रुःश्रीराघवाग्रत १ ॥ ६ ॥
कंजाननांलवायाथकंजाक्षीमंगदायच ॥ गणकानिश्चयंचक्रुःकंजाग्रींचित्रकेतवे २ कलावतींपुष्करायतथातक्षायकालिकाम् ॥ सुबाहवेचकमलांमालतींयूपकेतवे ३ गण

१ संस्थापयतिपुनर्वीनेपुइतिपाठः ।

केःसततापुवंनागकन्याविनिश्चिताः ॥ चद्रिकामंगदायाऽथचन्द्रास्यांचित्रकेतवे ४ चञ्चलाख्यांपुष्करायतक्षायचपलांतथा ॥ सुबाहवेतुह्यचलांप्रोचुस्तेगणकादयः ५
एवंगंधर्वकन्यास्तापंचविप्रैर्विनिश्चिताः ॥ एवंहिनिश्चयंकृत्वागणकादीन्रघूत्तमः ६ विसृज्यमैथिलींगत्वासर्ववृत्तंन्यवेदयत् ॥ ततोययुःकोटिशस्तेपार्थिवाश्चमुनीश्वराः
७ सप्तद्वीपांतरस्थाश्चसावरोधाःसबालकाः ॥ नानावाहनसंस्थाश्चपौरैर्जानपदैर्निजैः ८ तैःसाऽयोध्यापुरीव्याप्ताविरेजेनितरांतदा ॥ ययौविभीषणश्चाऽथसुग्रीवोऽ
पिप्लवंगमैः ९ ययौसम्पूरिकीर्तिश्चपुत्राभ्यांशीघ्रमादरात् ॥ ययौसजनकश्चापियुधाजित्सययौतदा १० कौसल्यायाःसुमित्रायाबांधवाद्याःसमाययुः ॥ अथरामस्तु
वैशाखशुक्लेद्विजवरैःसह ११ पुरोधसासुहृद्भिश्चस्नानमभ्यंगपूर्वकम् ॥ कृत्वालवायमांगल्यस्नानार्थंस्त्रीःप्रचोदयत् १२ ततोमुहूर्तसमयेवधूच्छिष्टांनिशांलवम् ॥
सम्यक्संलिप्यसुतैलार्द्रांसीताद्यामातरस्तदा १३ स्वयंसस्नुर्मुदासर्वास्तूर्यनादैःसबालकाः ॥ अथरामोदेवकस्यप्रतिष्ठांब्राह्मणैःसह १४ आदौकृत्वागणपतेःपूजांसम्य
ग्यथाविधि ॥ पुण्याहादित्रयंचापिकृत्वापूर्वंसविस्तरम् १५ चकारविधिवत्तुष्टःपूजयामासवैमुनीन् ॥ ततोमुहूर्तसमयेगत्वापन्नगमंदिरम् १६ लवस्यकंजनयना
विवाहंविनिवर्तयत् ॥ चतुर्थेदिवसेवंशपात्रस्थैरत्नदीपकैः १७ नीराजितस्तदारामोविरेजेमंडपेस्त्रिया ॥ ततोनिजगृहंगत्वापूर्वोक्तैरुत्सवादिभिः १८ लवेनकारया
यामासलक्ष्मीपूजनमुत्तमम् ॥ ततोदानान्यनेकानिददौसरघुनंदनः १९ ततस्तेपार्थिवाःसर्वेतथातेपन्नगाअपि ॥ सुहृदश्चाथगंधर्वाःपौराजनपदादयः २० पूज
यामासुःश्रीरामंवस्त्रैराभरणादिभिः ॥ तथातान्लक्ष्मणादींश्चकुशाद्यांश्चापिबालकान् २१ ततस्तान्नृपपत्न्यश्चसुहृत्पत्न्यःपृथक्पृथक् ॥ नागपत्न्यश्चगंधर्वपत्न्यश्चा
न्यास्तथास्त्रियः २२ सीताद्याःपूजयामासुर्वस्त्रैराभरणादिभिः ॥ सीतापिताःसुहृत्पत्नीस्तथापार्थिवकामिनीः २३ पूजयामासविधिवद्वस्त्रैराभरणादिभिः ॥ रामो
104 ऽपिसुहृदःपौरान्गन्धर्वान्पन्नगान्नृपान् २४ वस्त्रैराभरणैर्यानैःपूजयामाससादरम् ॥ एवंवैशाखमासेतुसितेपक्षेलवस्यच २५ कृत्वाविवाहंरामःसकृष्णपक्षेतुमाधवे ॥
चकारपूर्ववद्हर्षाद्विवाहंह्यंगदस्यच २६ चित्रकेतोःपुष्करस्यविवाहौरघुनन्दनः ॥ ज्येष्ठमासेशुक्लकृष्णपक्षयोरकरोन्मुदा २७ ततःसर्वान्नृपादींश्चददावाज्ञांसुपूजितान् ॥
ततःपुनस्तानाहूयपूर्ववन्मार्गशीर्षके २८ तक्षस्याथसुबाहोश्चविवाहावकरोत्प्रभुः ॥ ततःसर्वान्नृपान्रामोददावाज्ञांसुहृज्जनान् २९ ततःपुनस्तानाहूयमाघमासे
सुहृन्नृपान् ॥ यूपकेतोरंगदस्यचित्रकेतोर्महोत्सवैः ३० विवाहानकरोद्रामःपार्थिवान्नविसर्जयत् ॥ पुष्करस्याऽथतक्षस्यसुबाहोश्चमहोत्सवैः ३१ चकारफाल्गुनेमा
सिविवाहान्जानकीधवः ॥ एवंकृत्वाविवाहांश्चरामोद्वादशसादरम् ३२ नृपैःसंपूजितःसर्वान्पूज्याज्ञांनृपतीनददौ ॥ पूजयित्वामुनींश्चाऽपिविससर्जरघूद्वहः ३३ गंध
र्वपन्नगाःसर्वेसाकेतेऽत्रसंस्थिताः ॥ रामंमुक्त्वानतेनैजंस्थलंजग्मुर्मुदान्विताः ३४ मंत्रिणःप्रेषयामासुःस्वस्वराज्येषुतेपृथक् ॥ यदारामःसवैकुंठमग्रेगच्छतिकालतः
३५ तदासांतानिकांल्लोकांस्तेगच्छंतिनसंशयः ॥ अथरामःपन्नगानांगन्धर्वाणांचसद्मसु ३६ वार्षिकेषूत्सवेष्वत्रसावरोधःसुहृज्जनैः ॥ पौरैःस्त्रीयैर्भोजनादिगत्वा
ह्यंगीकरोत्सदा ३७ सदामहोत्सवाश्चासन्नयोध्यायांगृहेगृहे ॥ आनंदःसकलजनासीन्नासीत्कुत्राप्यमंगलम् ३८ अथतेषांराघवेणपुत्राणांचपृथक्पृथक् ॥ अष्टकृत्वातुगेहानि

पृथक्कृत्वाचशांतयः ३९ तेपुतेस्थापिताःसर्वेस्वस्वस्त्रीभ्यांपृथक्सुखम् ॥ तथातेलक्ष्मणाद्याश्चपृथग्गेहेषुबांधवाः ४० पूर्वमेवस्थापिताश्चस्वस्वपत्न्यामुदान्विताः ॥ सुमित्रायाःससौमित्रिःस्वीयगेहेऽवसत्सुखम् ४१ कैकेयीभरतस्याथगेहेमासमुवाससा ॥ तस्थौशत्रुघ्नगेहेऽपिमासमेकंयथासुखम् ४२ एवंसापुत्रयोर्गेहेऽकरोद्वासंमुदान्विता ॥ कौसल्यासागमगेहेतस्थौसीतातिसेविता ४३ तेसर्वेबांधवाःपुत्रानिजयानैश्चपेवकैः ॥ स्वदासीगोधनाद्यैश्चसुखमापुःपृथक्पृथक् ४४ अथतेलक्ष्मणाद्याश्चकुशाद्याबालकाअपि ॥ स्वस्वगेहेषुवैप्रातःस्नात्वाहोमान्शिवार्चनम् ४५ गोद्विजार्चादिसंपाद्यततस्तेराघवंययुः ॥ नत्वारामंजानकींतेतस्थुर्दिव्यासनोपरि ४६ तेषांसर्वाःस्त्रियश्चापिस्नात्वादुर्गांप्रपूज्यच ॥ गत्वासीतांप्रणेमुस्तास्तस्थुःसीताज्ञयाऽऽसने ४७ ततस्तेलक्ष्मणाद्याश्चकुशाद्याःस्वगुरोर्मुखात् ॥ कथांपौराणिकींश्रुत्वाजग्मुःस्वंस्वंगृहंप्रति ४८ ततःसर्वेरामगेहेसमाहूतामुदान्विताः ॥ उपहारान्पृथक्चक्रुर्भध्यान्हेभोजनान्यपि ४९ एवंतेषांस्त्रियश्चापिसमाहूतास्तुसीतया ॥ उपहारानभोजनानिचक्रुःसीतागृहेसदा ५० कदामुदास्वीयगेहेराघवेणाथसीतया ॥ उपहारान्भोजनानिचकुस्तेब्राह्मणादिभिः ५१ एवंतोर्बंधुभिर्बाले प्रापतुर्नितरांसुखम् ॥ सीतारामोकदानासीत्कलहःक्कापिकस्यहि ५२ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वाल्मीकीये विवाहकांडे द्वादशविवाहवर्णनंनामसप्तमःसर्गः ॥ ७ ॥ ॥ श्रीरामदासउवाच ॥ ॥ अथैकदादक्षिणेहिशिवकांत्यांमहापुरि ॥ कंबुकंठोनृपःश्रीमान्निजकन्यास्वयंवरम् १ कर्तुकामोनृपान्सर्वानाह्वयामाससादरम् ॥ तदातेपार्थिवाःसर्वेपत्राणिहिपृथक्पृथक् २ पूर्ववैरमनुस्मृत्यकुशस्याऽपिलवस्यच ॥ स्वयंवरेस्वीयमानभंगनोद्भूतहृत्स्थितम् ३ प्रेषयामासुर्नृपतिनयद्युश्चस्वयंवरम् ॥ तेषांपत्राणिसर्वाणिकंबुकंठोददर्शसः ४ सर्वेषुलिखितस्त्वेकएवार्थस्तंवदाम्यहम् ॥ यदिनायांतिरामस्यबालकास्तेस्वयंवरे ५ वयंसर्वेतर्हियामोजंबुद्वीपांतरस्थिताः ॥ इतितेषामभिप्रायंज्ञात्वासनृपतिस्तदा ६ नसमाहूयश्रीराममाह्वयामासपार्थिवान् ॥ स्वयंचापिस्मरन्वैरंतदेवरामपुत्रयोः ७ चांपिकासुमतिपाणिग्रहाणीयंपुरातनम् ॥ ततस्तेपार्थिवाःसर्वेश्रुत्वारामंहिनागतम् ८ सप्तद्वीपांतरस्थाश्चययुःकांतिपुरींप्रति ॥ अथतांकंबुकंठस्यकन्यांमदनसुंदरीम् ९ प्रासादसंस्थितांदृष्ट्वानारदःखात्समाययौ ॥ सखीभिःसामुनिंपूज्याविनयात्पुरतःस्थिता १० पप्रच्छनारदंभक्त्याविनयावनताशनैः ॥ कुतःसमागतंस्वामिन्गम्यतेकाधुनावद ११ भवतांदर्शनेनाद्यपावित्र्यंपरमंगता ॥ इतितस्यावचःश्रुत्वाकिंचित्स्मित्वामुनिस्तदा १२ तामाहबालेस्वर्लोकादागतोऽस्म्यधुनात्वहम् ॥ अयोध्यायांराघवस्यपुत्राणांतुपृथक्पृथक् १३ गेहेसंभोक्तुकामोऽद्यनिर्गतोऽस्मिविहायसा ॥ एतस्मिन्नंतरेकांतिपुर्याःसैन्यानिवैनाहिः १४ दृष्ट्वाकेर्थाहिसैन्यानिसंतीतिहृदिचिंतितम् ॥ ततःपांथमुखाच्छ्रुत्वातवचात्रस्वयंवरम् १५ तदाविनिश्चितंचित्तेमयारामःस्वयंवरे ॥ अत्रैवाऽस्तिह्यागतश्चेत्तंपश्यामिसबालकम् १६ नैवास्तिह्यागतश्चेद्वैतर्हियास्याम्यतःपरम् ॥ स्वयंवरोविनारामंनभविष्यतिसात्मजम् १७ पश्याम्यत्रैवतंरामंतथाऽग्रेगमनंमम ॥ निश्चित्येत्थं

१ महारिपुःइतिपाठः । २ स्वाश्रमायपावितिपाठः ।

समाग्रातस्ततोऽद्दक्षारघूत्तमम् १८ कथंरामोनागतोऽत्रचेतिपृष्टश्चनृपामया ॥ नृपाभिप्रायमाकर्ण्यतदाखिन्नंमनोमम १९ सप्तद्वीपपतिंरामंबंधुबालकसंयुतम् ॥
स्वयंवरमनाहूयत्वत्पित्रानिश्चितंनृपैः २० अधुनाहंप्रगच्छामिसाकेतस्थंरघूत्तमम् ॥ मन्दभाग्याऽसिबालेत्वंस्नुषाराघवसत्पतेः २१ यतोजाताऽसिनैवाऽत्रविचित्राक
र्मणोगतिः ॥ इत्युक्त्वाबालिकांपृष्ट्वानारदोगन्तुमुद्यतः २२ ततःसंप्रार्थयामासनारदंबालिकामुहुः ॥ खिन्नचित्ताऽश्रुपूर्णाक्षीम्लानास्यास्फुरिताधरा २३ रोमांचितत
नुर्मुग्धागतश्रीर्गद्गदस्वरा ॥ येनाहंमुनिवर्याऽत्रस्नुषाश्रीराघवस्यच २४ भविष्यामितथाकार्यंत्वयात्वांशरणंगता ॥ इत्युक्त्वामुनिवर्यस्यपादयोःस्थाप्यसाशिरः २५ चका
रकरुणांबालातदातांमुनिरब्रवीत् ॥ माचिंतांकुरुरंभोरुसमुत्तिष्ठस्वबालिके २६ भविष्यसित्वंरामस्यस्नुषायत्नंकरोम्यहम् ॥ इत्युक्त्वातांसमाश्वास्यखमार्गेणमुनिर्ययौ
२७ एतस्मिन्नंतरेऽयोध्यापुर्याःस्यन्दनसंस्थितः ॥ यूपकेतुर्वनंपश्यंस्तमसातीरमाययौ २८ किंचित्सैन्ययुतोबालस्तमसायांविगाह्यसः ॥ यावत्संध्यादिकंकर्तुमुपविष्टस्त
दामुनिम् २९ ददर्शनारदंनत्वापूजयामाससादरम् ॥ ततःपप्रच्छमुनयेयूपकेतुःपुरःस्थितः ३० कुतःसमागतंचेतितच्छ्रुत्वानारदोमुनिः ॥ सर्ववृत्तंसविस्तारंकथया
मासबालकम् ३१ तच्छ्रुत्वासकलंवृत्तंनत्वातंनारदंमुनिम् ॥ अब्रवीद्बालकोवाक्यंसक्रोधःसंभ्रमान्वितः ३२ मुनेनृपाणांसर्वेषांद्विषबुद्धिश्वराघवे ॥ याजातासाऽद्यसर्वेषां
ज्ञेयाऽनर्थकरीजवात् ३३ कंबुकण्ठादिभूपानांसारंपश्याम्यहंरणे ॥ मुनेत्वत्कृपयासर्वान्निजित्वातामानयाम्यहम् ३४ इत्युक्त्वासययौकांतिंपंचमेऽहनिसेनया ॥ नारदो
ऽपिययौरामंद्रष्टुंप्रीतमनास्तदा ३५ रामेणपूजितःप्रेम्णाभोजनार्थंनिमंत्रितः ॥ अथभोजनवेलायांयूपकेतुंरघूत्तमः ३६ अदृष्ट्वालक्ष्मणंप्राहयूपकेतुर्नदृश्यते ॥ बालेषु
105 तंभोजनार्थंलक्ष्मणाऽत्रसमाह्वय ३७ तदासमालतींगत्वापप्रच्छलक्ष्मणोजवात् ॥ साप्राहवनमध्येऽद्यकिंचित्सैन्ययुतोगतः ३८ तच्छ्रुत्वालक्ष्मणोवृत्तंकथयामासराघ
वम् ॥ अथरामोभोजनादिसंपाद्यमुनिनामुदा ३९ ययौसभायामासीनस्तंमुनिंवाक्यमब्रवीत् ॥ पंचसप्तदिनान्यत्रस्थेयंमद्वचनात्त्वया ४० तथेतिनारदःप्राहसभायांसं
स्थितःसुखम् ॥ अथरात्रौयूपकेतुमदृष्ट्वारघुनन्दनः ४१ उपहारंकर्तुकामःपुनर्लक्ष्मणमब्रवीत् ॥ आकारययूपकेतुंनाऽयंदृष्टोमयाशिशुः ४२ तथेतिरामवचनात्पु
नर्गत्वातुमालतीम् ॥ पप्रच्छयूपकेतुंससाप्राहनागतस्त्विति ४३ ततःसविव्हलोभूत्वारामंवृत्तंन्यवेदयत् ॥ रामोऽपिनागतंश्रुत्वाबंधुभ्यांविह्वलोभवत् ४४ ततःसाजा
नकीश्रुत्वाविव्हलाखिन्नमानसा ॥ द्रुद्रावराघवाध्येसासर्वेतूष्णींकथंस्थिताः ४५ इतितान्प्राहवैदेहीतदासर्वेऽतिविव्हलाः ॥ त्यक्त्वोपहारान्वेगेनतच्छोधार्थंसमुद्यताः ४६
तदातान्विव्हलान्दृष्ट्वानारदःप्राहराघवम् ॥ कांतिवृत्तंयूपकेतोःप्रयाणादिकमादरात् ४७ तत्सर्वंराघवःश्रुत्वाकिंचित्तुष्टमनास्तदा ॥ लक्ष्मणंप्राहवेगेनशत्रुघ्नोऽद्यैवगच्छ
तु ४८ सेनयाचतुरंगिण्याजवात्कांतिंकुशादिभिः ॥ तथेतिलक्ष्मणश्चोक्त्वाचोपहारान्विधायसः ४९ सेनयाबालकैर्वेगाच्छत्रुघ्नंप्रेषयन्निशि ॥ रामंनत्वाऽथशत्रुघ्नःशीघ्रं
स्यन्दनसंस्थितः ५० ययौकांतिसमीपंसषष्ठेऽहनिमुदान्वितः ॥ एतस्मिन्नंतरेकांतिपुर्यांवैतत्रस्वयंवरे ५१ सभायांराजशार्दूलाःसंस्थितास्तेमुदान्विताः ॥ अथसा

१ विह्वलःखिन्नमानसःइतिपाठः । २ प्रयाणादिकमितिपाठः ।

शिविकारूढाययौमदनसुन्दरी ५२ किंचिन्म्लानमुखीदुःखात्स्मरंतीनारदेरितम् ॥ दृष्ट्वोपमातातांसर्वान्दर्शयामासपार्थिवान् ५३ यूपकेतुस्तदावेगाद्गत्वातूर्णींसभां
गणम् ॥ मोहनास्त्रंविसृज्याथमोहयामासतांसभाम् ५४ मोहितैर्मोहनास्त्रेणन्यस्तांतद्वाहकैर्भुवि ॥ रथेनशिविकांगत्वाधृत्वामदनसुन्दरीम् ५५ निजाभिधानंसं
श्राव्यतांतुष्टामकरोत्तदा ॥ अथसावरयामासवीरंमदनसुन्दरी ५६ मुमोचमालांतत्कण्ठेनवरत्नमयींशुभाम् ॥ ततस्सयूपकेतुर्हिरथेमदनसुन्दरीम् ५७ निवेश्य
कांतिपुर्याःसबहिर्गत्वास्थिरोऽभवत् ॥ तामाहदयितांवीरस्त्विदानींत्वंभयंत्यज ५८ जित्वासर्वान्नृपानद्यत्वयागच्छाम्यहंपुरीम् ॥ ततस्यवचनंश्रुत्वासाप्राहवच
नंतदा ५९ बहवःसंतिराजानस्त्वमेकःस्वल्पसेनया ॥ असंख्यातानिसैन्यानितेषांपश्यसमन्ततः ६० कथंयुद्धंघटेदत्रमाकुरुष्वाऽद्यसंगरम् ॥ शीघ्रंमांनयसा
केतंततोरामेणसेनया ६१ युद्धंकुरुनृपैर्घोरंशृणुमद्वचनंप्रभो ॥ मासाहसंकुरुष्वाऽत्रप्रार्थयेत्वांमुहुर्मुहुः ६२ इतितस्यावचःश्रुत्वातामाश्वास्यपुनःपुनः ॥ उपसं
हारयामासमोहनास्त्रंसलीलया ६३ तदातेपार्थिवाःसर्वेश्रुत्वानीतांवधूंबलात् ॥ शत्रुघ्नतनयेनेतिस्त्रीवाक्यैःस्यन्दनेस्थिताः ६४ निर्ययुःकोटिशोयोद्धुंस्वस्वसेनावृ
ताजवात् ॥ चंपिकायाःसुमत्याश्चपूर्वंवैरेणदर्पिताः ६५ दुद्रुवुर्नेमिमार्गेणददृशुस्तंरथस्थितम् ॥ युक्तंमदनसुन्दर्याविभ्रंतंमालिकांहृदि ६६ ततस्तंमुमुचुःसर्वेना
नाशस्त्राणिसैनिकाः ॥ यूपकेतुस्तदावेगात्तृणवत्कृत्यमहद्धनुः ६७ वायव्यास्त्रेणतान्सर्वानुद्धूयदशदिक्षुसः ॥ प्राक्षिपत्पार्थिवान्सैन्यैर्नानावाहनसंस्थितान् ६८ तदास
कंबुकण्ठोऽपिपूर्ववैरमनुस्मरन् ॥ चंपिकायाःसुमत्याश्चस्वयंवरसमुद्भवम् ६९ विशेषान्निजकन्यायावैरतोहरणंबलात् ॥ महाक्रोधान्निर्ययौस्वसैन्येनपरिवेष्टितः ७०
कुर्वन्दुंदुभिघोषांश्चयुद्धार्थंयूपकेतुना ॥ यूपकेतुरपिश्रुत्वादुंदुभीनांमहत्स्वनम् ७१ कांतिपुर्युत्तरद्वारपुरतःसंस्थितोरथी ॥ टणत्कृत्यमहच्चापंसन्दधेशरमुत्तमम् ॥
७२ येयेवीराःपुरद्वारान्निर्गताश्चबहिःशरैः ॥ तान्जघानक्षणादेवप्रेतैर्द्वारंरुरोधसः ७३ तंदृष्ट्वायूपकेतोश्चकंबुकंठःपराक्रमम् ॥ ययौस्वयंस्यंदनेनप्रेतसंघंविदार्यच
७४ शेषसैन्येनसंयुक्तोयूपकेतुंकुजवात् ॥ तदाहयूपकेतुंसमयात्वंसंगरंकुरु ७५ किमेतान्मशकान्हत्वापौरुषंमन्यसेजड ॥ इत्युक्त्वासस्तभिर्बाणैर्यूपकेतुंजघानसः ॥
७६ तान्बाणानागतान्दृष्ट्वायूपकेतुर्निजैःशरैः ॥ तांछित्त्वानवबाणैस्तच्चापंसारथिनंध्वजम् ७७ कवचंमुकुटंछित्त्वाजघानतुरगानपि ॥ पश्चात्तदाकंबुकंठोगदामादाय
दुद्रुवे ७८ तावत्सहस्रधाबाणैर्यूपकेतुश्चकारताम् ॥ ततोबध्वादृढांमुष्टिंकंबुकंठस्त्वरान्वितः ७९ हृदयेयूपकेतोस्तांजघानाचलसन्निभाम् ॥ तदासयूपकेतुस्तंभ्वशुरंस्यं
दनोपरि ८० ध्वजेबबंधवेगेनखड्गंजग्राहसम्भ्रमात् ॥ कंबुकण्ठशिरश्छेदंकर्तुंतंसमुपस्थितम् ८१ दृष्ट्वाधृत्वाकरंतस्यसखड्गंसम्भ्रमान्विता ॥ तमाहनत्वासाऽश्ववक्षी
तदामदनसुंदरी ८२ विव्हलाविगतोत्साहावेपंतीह्यश्रुलोचना ॥ ममतातंकंबुकण्ठमेनंहंसिकथंप्रभो ८३ मक्षिकापतनंपूर्वंग्रासेयद्वत्तथात्वया ॥ सुखारम्भेपूर्वमेवदुःख
कर्मावलम्बितम् ८४ मद्वाक्यान्नैवहंतव्यस्तस्मात्त्वांप्रार्थयाम्यहम् ॥ एवंमदनसुंदर्यावचःश्रुत्वाविहस्यसः ८५ कराद्विसृज्यतंखड्गंस्वसूतंचोदयन्मुदा ॥ सेनयासययौ
यावत्पथाऽयोध्यांपुरींप्रति ८६ तावद्दुंदुभिनिर्घोषानश्रेशुश्चावसेनया ॥ पुनश्चापंटीकृत्ययूपकेतुरतदापथि ८७ कस्याग्रेवाहिनीचेतिचिंतयामासचेतसि ॥ ततःशरं

मुमोचैकंनिजनामांकितंबलात् ८८ योजनांतरसेनायांशरःशत्रुघ्नसन्निधौ ॥ पपाततत्पदाग्रेतंदृष्ट्वासचकितस्तदा ८९ शरपुच्छेयूपकेतोर्नामदृष्ट्वाऽथशत्रुहा ॥ निश्चि
तवान्यूपकेतुर्मार्गेऽग्रेवर्ततेध्रुवम् ९० ततश्चापेसशत्रुघ्नःस्वनामांकितमुत्तमम् ॥ शरंसंधायविमुखंयूपकेतुंमुमोचह ९१ सशरोयूपकेतोश्चमस्तकादूर्ध्वतंस्तदा ॥ अप
तत्पृष्ठभागेसतंददर्शपितुःशरम् ९२ तदाहृष्टोयूपकेतुःकुर्वन्दुंदुभिनिःस्वनान् ॥ गत्वावेगेनशत्रुघ्नंदृष्ट्वोत्तुत्यरथादधः ९३ ननामापितरंपत्न्याकंबुकंठंप्रदर्शयत् ॥ तदातं
सुहृदंज्ञात्वामोचयामासशत्रुहा ९४ कंबुकंठमुखाच्छ्रुत्वासर्ववृत्तंसविस्तरम् ॥ शत्रुघ्नःप्रार्थितस्तेनसुहृदातत्पुरींययौ ९५ कांतिपुर्यांबहिःस्थित्वाकंबुकंठमतेनसः ॥ आ
कारणार्थमयोध्यायांरामंदूतान्प्रचोदयत् ९६ तदातेकंबुकंठस्यशत्रुघ्नस्याऽपिवेगतः ॥ आकारणार्थंश्रीरामंययुर्दूतामुदान्विताः ॥ ९७ ॥ ॥ इतिश्रीशतकोटिरामचरिता
तर्गतश्रीमदानन्दरामायणे वाल्मीकीयेविवाहकांडेमदनसुन्दरीहरणंनामाऽष्टमःसर्गः ॥ ८ ॥ ॥ श्रीरामदासउवाच ॥ गत्वाऽयोध्यापुरींदूतारामंवृत्तंन्यवेदयन् ॥ रा
मोऽपिश्रुत्वातद्वृत्तंसीतायैसंन्यवेदयत् १ ततोमुहूर्तेश्रीरामःसावरोधानुजैःसह ॥ पौरैर्जानपदैःसर्वैःसुहृद्भिःसेनयासह २ नारदेनययौकांतिमाद्यांमुक्तिपुरींप्रति ॥ ततः
श्रुत्वाकंबुकंठःशीघ्रंराघवमागतम् ३ संप्रत्युद्गम्यविनयान्नत्वासंपूजयन्मुदा ॥ यूपकेतुंततःपूज्यवारणस्थंपुरींशनैः ४ वारस्त्रीनृत्यगीतैश्चतूर्यघोषैर्निनायसः ॥ ततःकां
तिपुरीस्थास्ताःस्त्रियःप्रासादसंस्थिताः ५ दृष्ट्वारामंयूपकेतुंववर्षुःपुष्पवृष्टिभिः ॥ ततोरामःशनैर्वस्तुंकल्पितंगृहमुत्तमम् ६ गत्वादृष्ट्वामुहूर्तंतुपूर्वोक्तकौतुकैःसुखम् ॥
यूपकेतोर्विवाहंसचकारपरमोत्सवैः ७ ततोविवाहंनिर्वर्त्यकंबुकंठेनपूजितः ॥ हस्त्यश्वरथपादातदासदासीजनादिभिः ८ ययौमदनसुंदर्यारामोऽयोध्यापुरींनिजाम् ॥
ततोविवेशनगरींनेदुर्वाद्यानितेतदा ९ ननृतुर्वारनार्यश्चतुष्टुवुर्मागधादयः ॥ प्रासादस्थाःस्त्रियोरामंववर्षुःपुष्पवृष्टिभिः १० मार्गेनीराजितःस्त्रीभिर्विवेशनिजमन्दिरम् ॥
कारयित्वारमापूजांददौदानान्यनेकशः ११ सुहृदःपूजयामासराघवोवसनादिभिः ॥ ततोविसर्जयामाससर्वान्स्वस्वस्थलंप्रति १२ अथसप्तकुमाराश्चलवाद्याःस्वस्ववे
श्मनि ॥ चक्रुःक्रीडांपृथक्स्त्रीभिःकुशश्चंपिकयाऽकरोत् १३ चंपिकायेदुहितरःकुशाज्जाताःशुभानव ॥ कुशाच्चकुमुद्वत्यांभविष्यंत्यष्टसूनवः १४ भविष्यतितथाक
न्यात्वेकाचंपकमालिनी ॥ ज्येष्ठःपुत्रोऽतिथिरितिनाम्नाराज्यंकरिष्यति १५ चतुर्दशसुपत्न्याद्याःस्त्रियःसर्वाःक्रमेणहि ॥ सुपुत्रस्तनयानष्टकन्यैकाऽपिपृथक्पृथक् १६
सद्वादशशतंपौत्रान्पौत्रीश्चैवमनोरमाः ॥ त्रयोविंशद्रामचंद्रोऽलालयामाससीतया १७ कुमुद्वतीभाविपुत्रसहिताःशिशवःशुभाः ॥ सविंशच्छतमासंस्तेतथापौत्र्यस्तादि
त्प्रमाः १८ चतुर्विंशन्मिताश्चासन्सर्वाश्चोद्वाहितानृपैः ॥ तथाश्रीरामपौत्रैश्चनृपकन्याह्यनेकशः १९ काश्चित्स्वयंवरेणैवकाश्चिद्राक्षसयोगतः ॥ काश्चिद्गांधर्वयोगेनका
१२ श्चिद्वैवाहकर्मणा २० परिणीताःपौरुषेणतासांसंख्यानविद्यते ॥ तासांहिसंततिंवक्तुंकःसमर्थोभवेदिह २१ एवंसयूपकेतोश्चविवाहश्चरमःशुभः ॥ संपादितोनारदश्री
मान्सभार्यांरघुनन्दनम् २२ रामनामसहस्रेणस्तुतोकेनाऽतिभक्तितः ॥ स्तुत्वाश्रीराघवंपृष्ट्वाययावाकाशवर्त्मना २३ ॥ श्रीरामदासउवाच ॥ एवंरामेणसाकेतपुर्यांभो
गाश्चिरंसुखम् ॥ भुक्तास्तेषांवर्णनेऽत्रकःसमर्थोभवेन्नरः २४ एकएवसमर्थोऽभूद्वाल्मीकिस्तपसांनिधिः ॥ शतकोटिमितंयेननानाक्रीडादिसंयुतम् २५ वर्णि

तंरामचरितंमहामंगलकारकम् ॥ यत्स्मृत्वापिमयार्किचित्त्वदग्रेपरिवर्णितम् २६ एवंरामस्त्वयोध्यायांपुत्रैःपौत्रैःसमन्वितः ॥ प्रपौत्रैःपौत्रपौत्रैश्चरंजयामासजानकीम् २७
एवंविवाहकांडंचशिष्यत्वांपरिवर्णितम् ॥ नवसर्गैःपवित्रंचश्रवणान्मंगलप्रदम् २८ विवाहकांडंपरमंयेशृण्वंत्यपिमानवाः ॥ तेस्त्रीभिःपुत्रपौत्रैश्चवियोगंनाप्नुवंतिहि २९
धर्मार्थीप्राप्नुयाद्धर्मंधनार्थीधनमाप्नुयात् ॥ कामानाप्नोतिकामार्थीमोक्षार्थीमोक्षमाप्नुयात् ३० स्त्रीकामुकैर्नरैरेतत्पठनीयंनिरंतरम् ॥ विवाहकांडंपरमंप्राप्नुवंत्यत्रतेवधूः ३१
पतिकामाकुमारीचेत्स्नात्वाश्रोष्यतिभक्तितः ॥ विवाहकांडमेतद्धैमनोज्ञंपतिमाप्नुयात् ३२ सभार्यश्चेत्पठेदेतच्छृणुयाद्वात्रभक्तितः ॥ इहस्त्रियासुखंभुक्त्वाऽप्सरोभिर्दिवि
मोदते ३३ एवंवाशृणुयादेतद्यानारीकांडमुत्तमम् ॥ विवाहाख्यंकदाभर्त्रावियोगंनाप्नुयात्तुसा ३४ सप्तदशदिनैरस्यकार्यंस्त्रीकामुकैर्मुहुः ॥ अनुष्ठानंवर्षमेकंमूर्खोऽपिस्त्रिय
माप्नुयात् ३५ प्रथमेदिवसेसर्गंपठेद्द्वौतोपरेऽहनि ॥ नवमेदिवसेसर्गान्क्रमेणसंपठेन्नव ३६ दशमेदिवसेऽष्टैवक्षयस्त्वेकेनवैक्रमात् ॥ एवंसप्तदशदिनैरनुष्ठानंस्मृतंबुधैः ३७
अथवासकलंकांडंप्रथमेदिवसेपठेत् ॥ परेऽहनिद्विवारंहिनवमेदिवसेक्रमात् ३८ नववारंपठेच्चेदंदशमेदिवसेततः ॥ अष्टवारंपठेत्कांडंक्षयस्त्वेवंक्रमात्स्मृतः ३९ एवंन
रोवर्षमेकमनुष्ठानात्स्त्रियंलभेत् ॥ स्मितवक्त्रांचारुनासांदिव्यरूपांमनोहराम् ४० विवाहकांडपरमंपवित्रमानन्ददंमंगलकारकंच ॥ स्त्रीदंमनोज्ञंश्रुतिसौख्यदंवैनरैःसदा
संश्रवणीयमेतत् ४१ आनन्दरामायणमध्यसंस्थंविवाहकांडपरमंहिषष्ठम् ॥ शृण्वंतिभक्त्याभुविमानवायेलभंतिकामानखिलान्मनोज्ञान् ॥ ४२ ॥ ॥ इति श्रीशत
कोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये विवाहकांडे रामवंशविस्तारकथनंनाम नवमःसर्गः ॥ ९ ॥ ॥ इतिविवाहकांडंसंपूर्णम् ॥ विवा
हकांडेसर्गाआनन्दरामायणेनवैवज्ञातव्याः ॥ पंचशताश्चश्लोकापंचाशीत्युपरिष्ठाः ॥ श्रीरामचंद्रार्पणमस्तु ॥ ॥ श्रीरस्तु ॥ ॥ ॥ ॥ ॥

१ यस्मात्सारमितिपाठः ।

॥ इति श्रीमदानन्दरामायणे विवाहकाण्डं समाप्तम् ॥

श्रीगणेशायनमः ॥ ॥ श्रीसीतारामाभ्यांनमः ॥ श्रीविष्णुदासउवाच ॥ रामदासगुरोप्रोक्तंत्वयापूर्वंममांतिके ॥ विवाहकांडचरमसर्गेऽत्रपातकापहे १ रामनामसहस्रे
णनारदेनमहात्मना ॥ सूतोक्तेनसमायांसरामचन्द्रःस्तुतस्त्विति २ तत्कीदृशंरामनामसहस्रंमांप्रकाशय ॥ कथंसूतेनकथितंमुनीनामग्रतःपुरा ३ ॥ श्रीरामदासउवाच ॥
सम्यक्पृष्टंत्वयाशिष्यसावधानमनाःशृणु ॥ रामनामसहस्रंचसूतोक्तंप्रवदामिते ४ यथात्वयाकृतःप्रश्नःशौनकेनतथाकृतः ॥ तच्छ्रुत्वातंसूतःप्राहशौनकंनैमिषेवने ५
॥ श्रीसूतउवाच ॥ एकदासुखमासीनौपार्वतीपरमेश्वरौ ॥ अन्योन्याश्लिष्टहृद्बाहूलोकरक्षणतत्परौ ६ इन्द्रादिलोकपालैश्चसेवितौचपरात्परौ ॥ पार्वतीपरिपप्रच्छ
तदाधर्माननुक्रमात ७ ॥ पार्वत्युवाच ॥ भगनाथजगतांनाथसर्वज्ञपरमेश्वर ॥ त्वत्प्रसादान्मयाज्ञातंधर्मंशास्त्रमनुत्तमम् ८ प्रायश्चित्तंतुपापानांश्रुतंसर्वमशेषतः ॥ ब्रह्म
हत्यादिपापानांनिष्कृतिंवक्तुमर्हसि ९ ॥ श्रीमहादेवउवाच ॥ शृणुदेविप्रवक्ष्यामिगुह्याद्गुह्यतरंमहत ॥ सनत्कुमारविघ्नेशसंवादंपापनाशनम् १० उपविष्टंगणाध्यक्षमे
कांतेशुभपिपस्यच ॥ सनत्कुमारःपप्रच्छसर्वधर्मविदांवरम् ११ सनत्कुमारउवाच ॥ भगवन्सर्वधर्मज्ञसर्वविघ्नविनाशन ॥ द्विजहत्याहरंधर्मंवक्तुमर्हसिमेप्रभो १२ विना
भक्तंधर्मस्यवक्तानास्तिजगत्त्रये ॥ विनायकउवाच ॥ साधुपृष्टंत्वयाब्रह्मन्सर्वलोकोपकारकम् १३ मयाचिरंकृतंकर्मस्मारितंभवताऽनघ ॥ पुराऽहंगजरूपेणजातः
पर्वतसन्निभः १४ ततोवृक्षान्समुत्पाट्यमुनिर्हिंसासमारभम् ॥ तदामयामुनिगणानिहताब्रह्मवीर्यबलात् १५ हाहाकारोमहानासीद्ब्राह्मणानांसमन्ततः ॥ तदाहत्यासह
स्रेणवेष्टितःपतितोस्म्यहम् १६ निःसंज्ञंमृततुल्यंमांपतितंवीक्ष्यमेपिता ॥ आराध्यजगतामीशंरामंसर्वहृदिस्थितम् १७ प्रत्यक्षमकरोद्देवंमद्देतोरघुनन्दनम् ॥ तदा
प्रोवाचभगवान्श्रीरामःपितरंमम १८ ॥ श्रीरामउवाच ॥ प्रसन्नोऽस्मिमहादेवकिंमांप्रार्थयसेप्रभो ॥ दास्यामियदभीष्टंतेत्रिपुलोकेषुदुर्लभम् १९ ॥ ॥ श्रीमहादेवउ
वाच ॥ द्विजहत्यासमाविष्टंममपुत्रमिमंप्रभो ॥ निष्पापंकुरुदेवेशयद्यस्तिमयितेदया २० ॥ श्रीविनायकउवाच ॥ तथेत्युक्त्वातदातेनकृपयाऽहंनिरीक्षितः ॥ त
त्क्षणाल्लब्धचैतन्योनिर्मलज्ञानसंहितः २१ बहुभिर्गद्यपद्यैश्चस्तुत्वातंप्रणतोऽभवम् ॥ श्रीरामचन्द्रउवाच ॥ द्विजहत्यासहस्रस्यप्रायश्चित्तंवदामिते २२ जपनामसह
स्रंमेहत्याकोटिविनाशनम् ॥ इतिगुह्यंददौरामस्तत्त्वंनामसहस्रकम् २३ तस्यतद्ग्रहणादेवनिष्पापोऽहंतदाऽभवम् ॥ तदारभ्यास्मिदेवानांपूज्योऽहंमुनिसत्तम २४
त्वमप्येतदधीयानोराघवस्यमहात्मनः ॥ नाम्नांसहस्रंलोकेषुप्रख्यापयमहामते २५ ॥ सनत्कुमारउवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मिकृतार्थोऽस्मिगणाधिप ॥ त्व
त्प्रसादान्मयाऽधीतंरामनामसहस्रकम् २६ ॥ श्रीमहादेवउवाच ॥ इतिविज्ञाप्यदेवेशंपरिक्रम्यप्रणम्यच ॥ तदादिसततंजप्त्वास्तोत्रमेतद्वरानने २७ अवापपरमां
सिद्धिंपुण्यपापविवर्जितः ॥ पार्वत्युवाच ॥ श्रोतुमिच्छामिदेवेशतदहंसर्वकामदम् २८ नाम्नांसहस्रंमांब्रूहियद्यस्तिमयितेदया ॥ महादेवउवाच ॥ अथवक्ष्यामिभोदेवि
रामनामसहस्रकम् ॥ शृणुष्वैकमनाःस्तोत्रंगुह्याद्गुह्यतरंमहत २९ ऋषिर्विनायकश्चास्यह्यनुष्टुप्छंदउच्यते ॥ परब्रह्मात्मकोरामोदेवताशुभदर्शने ३० अस्यश्रीरामसह

१ परस्पराविति पाठः । २ भगोदरसमन्निति पाठः । ३ समाविष्टमुमापुत्रमिति पाठः । ४ विघेमानसयुक्तकःइति पाठः ।

स्रनाममालामंत्रस्य विनायकऋषिः अनुष्टुप्छन्दः श्रीरामोदेवता महाविष्णुरितिबीजं गुणभृन्निर्गुणोमहानितिशक्तिः सच्चिदानन्दविग्रहइतिकीलकं श्रीरामप्रीत्यर्थेजपेवि
नियोगः ॥ श्रीरामचन्द्रायअंगुष्ठाभ्यांनमः ॥ सीतापतयेतर्जनीभ्यांनमः ॥ रघुनाथायमध्यमाभ्यांनमः ॥ भरताग्रजायअनामिकाभ्यांनमः ॥ दशरथात्मजायकनिष्ठिका
भ्यांनमः ॥ हनुमत्प्रभवेकरतलकरपृष्ठाभ्यांनमः ॥ श्रीरामचन्द्रायहृदयायनमः ॥ सीतापतयेशिरसेस्वाहा ॥ रघुनाथायशिखायैवषट् ॥ भरताग्रजायकवचायहुम् ॥
दशरथात्मजायनेत्रत्रयायवौषट् ॥ हनुमत्प्रभवेअस्त्रायफट् ॥ अथध्यानम् ॥ ध्यायेदाजानुबाहुंधृतशरधनुषंबद्धपद्मासनस्थंपीतंवासोवसानंनवकमलदलस्पर्धिनेत्रंप्रस
न्नम् ॥ वामांकारूढसीतामुखकमलमिलल्लोचनंनीरदाभंनानालंकारदीप्तंदधतमुरुजटामण्डनंरामचन्द्रम् ३१ वैदेहीसहितंसुरद्रुमतलेहैमेमहामण्डपेमध्येपुष्पमहासनेम
णिमयेवीरासनेसंस्थितम् ॥ अग्रेवाचयतिप्रभंजनसुतेतत्त्वंमुनिभ्यःपरंव्याख्यातंभरतादिभिःपरिवृतंरामंभजेच्छ्यामलम् ३२ सौवर्णमंडपेदिव्येपुष्पकेसुविराजिते ॥
मूलेकल्पतरोःस्वर्णपीठेसिंहाष्टसंयुते ३३ मृदुश्लक्ष्णांतरेतत्रजानक्यासहसंस्थितम् ॥ रामंनीलोत्पलश्यामंद्विभुजंपीतवाससम् ३४ स्मितवक्त्रंसुखासीनंपद्मपत्रनिभेक्ष
णम् ॥ किरीटहारकेयूरकुण्डलैःकटकादिभिः ३५ भ्राजमानंज्ञानमुद्राधरंवीरासनस्थितम् ॥ स्पृशन्तंस्तनयोरग्रेजानक्याःसव्यपाणिना ३६ वसिष्ठवामदेवाद्यैःसेवितं
लक्ष्मणादिभिः ॥ अयोध्यानगरेरम्येह्यभिषिक्तंरघूद्वहम् ३७ एवंध्यात्वाजपेन्नित्यंरामनामसहस्रकम् ॥ हत्याकोटियुतोवाऽपिमुच्यतेनाऽत्रसंशयः ३८ ॐ ॥ रामःश्रीमा
न्महाविष्णुर्जिष्णुर्देवहितावहः ॥ तत्त्वात्मातारकंब्रह्मशाश्वतःसर्वसिद्धिदः ३९ राजीवलोचनःश्रीमाँच्छ्रीरामोरघुपुङ्गवः ॥ रामभद्रःसदाचारोराजेंद्रोजानकीपतिः ४०
अग्रगण्योवरेण्यश्चवरदःपरमेश्वरः ॥ जनार्दनोजितामित्रःपरार्थैकप्रयोजनः ४१ विश्वामित्रप्रियोदाताशत्रुजिच्छत्रुतापनः ॥ सर्वज्ञःसर्ववेदादिःशरण्योवालिमर्दनः ४२
ज्ञानभव्योऽपरिच्छेद्योवाग्मीसत्यव्रतःशुचिः ॥ ज्ञानगम्योदृढप्रज्ञःखरध्वंसीप्रतापवान् ४३ द्युतिमानात्मवान्वीरोजितक्रोधोऽरिमर्दनः ॥ विश्वरूपोविशालाक्षःप्रभुः
परिवृढोदृढः ४४ ईशःखड्गधरःश्रीमान्कौसल्येयोऽनसूयकः ॥ विपुलांसोमहोरस्कःपरमेष्ठीपरायणः ४५ सत्यव्रतःसत्यसंधोगुरुःपरमधार्मिकः ॥ लोकज्ञोलोकवंद्यश्च
लोकात्मालोककृद्विभुः ४६ अनादिर्भगवान्सेव्योजितमायोरघूद्वहः ॥ रामोदयाकरोदक्षःसर्वज्ञःसर्वपावनः ४७ ब्रह्मण्योनीतिमान्गोप्तासर्वदेवमयोहरिः ॥ सुन्दरःपीत
वासाश्चसूत्रकारःपुरातनः ४८ सौम्योमहर्षिःकोदण्डीसर्वज्ञःसर्वकोविदः ॥ कविःसुग्रीववरदःसर्वपुण्याधिकप्रदः ४९ भव्योजितारिषड्वर्गोमहोदारोऽघनाशनः ॥ सुकी
र्तिरादिपुरुषःकांतःपुण्यकृतागमः ५० अकल्मषश्चतुर्बाहुःसर्वावासोदुरासदः १०० स्मितभाषीनिवृत्तात्मास्मृतिमान्वीर्यवान्प्रभुः ५१ धीरोदांतोघनश्यामःसर्वायुध
विशारदः ॥ अध्यात्मयोगनिलयःसुमनालक्ष्मणाग्रजः ५२ सर्वतीर्थमयःशूरःसर्वयज्ञफलप्रदः ॥ यज्ञस्वरूपीयज्ञेशोजरामरणवर्जितः ५३ वर्णाश्रमगुरुर्वर्णीशत्रुजित्पु
रुषोत्तमः ॥ शिवलिंगप्रतिष्ठातापरमात्मापरात्परः ५४ प्रमाणभूतोदुर्ज्ञेयःपूर्णःपरपुरंजयः ॥ अनन्तदृष्टिरानन्दोधनुर्वेदोधनुर्धरः ५५ गुणाकरोगुणश्रेष्ठस्सच्चिदानं

१ दांतःइतिपाठः । २ सदावासोदुरासदइतिपाठः ।

दविग्रहः ॥ अभिवाद्योमहाकायोविश्वकर्माविशारदः ९६ विनीतात्मावीतरागस्तपस्वीशोजनेश्वरः ॥ कल्याणःप्रह्वतिःकल्पःसर्वेशःसर्वकामदः ९७ अक्षयःपुरुषः
साक्षीकेशवःपुरुषोत्तमः ॥ लोकाध्यक्षोमहाकार्योविभीषणवरप्रदः ९८ आनंदविग्रहोज्योतिर्हनुमत्प्रभुरव्ययः ॥ भ्राजिष्णुःसहनोभोक्तासत्यवादीबहुश्रुतः ९९ सुख
दःकारणंकर्ताभवबन्धविमोचनः ॥ देवचूडामणिर्नेताब्रह्मण्योब्रह्मवर्धनः १० संसारतारकोरामःसर्वदुःखविमोक्षकृत् ॥ विद्वत्तमोविश्वकर्ताविश्वकृद्विश्वकर्मच ११
नित्योनियतकल्याणःसीताशोकविनाशकृत् ॥ काकुत्स्थःपुण्डरीकाक्षोविश्वामित्रभयापहः १२ मारीचमथनोरामोविराधवधपण्डितः ॥ दुःस्वप्ननाशनोरम्यःकिरीटी
त्रिदशाधिपः १३ महाधनुर्महाकायोभीमोभीमपराक्रमः ॥ तत्त्वस्वरूपीतत्त्वज्ञस्तत्त्ववादीसुविक्रमः १४ भूतात्माभूतकृत्स्वामीकालज्ञानीमहावपुः ॥ अनिर्वि
ण्णोगुणग्रामोनिष्कलंकःकलंकहा १५ स्वभावभद्रःशत्रुघ्नःकेशवःस्थाणुरीश्वरः ॥ भूतादिःशंभुरादित्यःस्थविष्ठःशाश्वतोध्रुवः १६ कवचीकुण्डलीचक्रीखड्गीभक्तज
नप्रियः ॥ अमृत्युर्जन्मरहितःसर्वजित्सर्वगोचरः १७ अनुत्तमोऽप्रमेयात्मासर्वात्मागुणसागरः २०० समःसमात्मासमगोजटामुकुटमण्डितः १८ अजेयःसर्वभूता
त्माविष्वक्सेनोमहातपाः ॥ लोकाध्यक्षोमहाबाहुरमृतोवेदवित्तमः १९ सहिष्णुःसद्गतिःशास्ताविश्वयोनिर्महद्द्युतिः ॥ अतीन्द्रऊर्जितःप्रांशुरुपेंद्रोवामनोबलिः
७० धनुर्वेदोविधाताचब्रह्माविष्णुश्चशंकरः ॥ हंसोमरीचिर्गोविंदोरत्नगर्भोमहद्युतिः ७१ व्यासोवाचस्पतिःसर्वदर्पितासुरमर्दनः ॥ जानकीवल्लभःश्रीमान्प्रकटःप्रीति
वर्धनः ७२ संभवोऽतींद्रियोवेद्योनिर्देशोजाम्बवत्प्रभुः ॥ मदनोमन्मथोव्यापीविश्वरूपोनिरंजनः ७३ नारायणोऽग्रणीःसाधुःजटायुप्रीतिवर्धनः ॥ नैकरूपोजग
न्नाथःसुरकार्यहितःप्रभुः ७४ जितक्रोधोजितारातिःप्लवगाधिपराज्यदः ॥ वसुदःसुभुजोनैकमायोभव्यःप्रमोदनः ७५ चण्डांशुःसिद्धिदःकल्पःशरणागतवत्सलः ॥
अगदोरोगहर्ताचमंत्रज्ञोमन्त्रभावनः ७६ सौमित्रिवत्सलोधुर्योव्यक्ताव्यक्तस्वरूपधृक् ॥ वसिष्ठोग्रामणीःश्रीमाननुकूलःप्रियंवदः ७७ अतुलःसात्त्विकोधीरःश
रासनविशारदः ॥ ज्येष्ठःसर्वगुणोपेतःशक्तिमांस्ताटिकांतकः ७८ वैकुंठःप्राणिनांप्राणःकमठःकमलाधिपः ॥ गोवर्धनधरोमत्स्यरूपःकारुण्यसागरः ७९ कुम्भ
कर्णप्रभेत्ताचगोपीगोपालसंवृतः ३०० मायावीव्यापकोव्यापीरेणुकेयबलापहः ८० पिनाकमथनोवंद्यःसमर्थोगरुडध्वजः ॥ लोकत्रयाश्रयोलोकचरितोभरताग्र
जः ८१ श्रीधरःसंगतिर्लोकसाक्षीनारायणोविभुः ॥ मनोरूपीमनोवेगीपूर्णःपुरुषपुंगवः ८२ यदुश्रेष्ठोयदुपतिर्भूतावासःसुविक्रमः ॥ तेजोधरोधराधार
श्चतुर्मूर्तिर्महानिधिः ८३ चाणूरमथनोवंद्यःशांतोभरतवंदितः ॥ शब्दातिगोगभीरात्माकोमलांगःप्रजागरः ८४ लोकोर्ध्वगःशेषशायीक्षीराब्धिनिलयोऽमलः ॥
११ आत्मज्योतिरदीनात्मासहस्रार्चिःसहस्रपात् ८५ अमृतांशुर्महीगर्तोनिवृत्तविषयस्पृहः ॥ त्रिकालज्ञोमुनिःसाक्षीविहायसगतिःकृती ८६ पर्जन्यःकुमुदोभूता
वासःकमललोचनः ॥ श्रीवत्सवक्षाःश्रीवासोवीरहालक्ष्मणाग्रजः ८७ लोकाभिरामोलोकारिमर्दनःसेवकप्रियः ॥ सनातनतमोमेघश्यामलोराक्षसांतकः ८८

१ प्रकृतिरितिपाठः । २ लोभभरितइतिपाठः ।

दिव्यायुधधरःश्रीमानप्रमेयोजितेंद्रियः ॥ भूदेववंद्योजनकप्रियकृत्प्रपितामहः ८९ उत्तमःसात्त्विकःसत्यःसत्यसन्धस्त्रिविक्रमः ॥ सुवृत्तःसुगमःसूक्ष्मःसुघोषःसुखदःसु
हृत् ९० दामोदरोऽच्युतःशार्ङ्गीवामनोमधुराधिपः ॥ देवकीनन्दनःशौरिःशूरःकैटभमर्दनः ९१ सप्ततालप्रभेत्ताचमित्रवंशप्रवर्धनः ॥ कालस्वरूपीकालात्माकालःक
ल्याणदःकलिः ४०० ९२ संवत्सरोऋतुःपक्षोह्ययनंदिवसोयुगः ॥ स्तव्योविविक्तोनिर्लेपःसर्वव्यापीनिराकुलः ९३ अनादिनिधनःसर्वलोकपूज्योनिरामयः ॥ रसोर
सज्ञःसारज्ञोलोकसारोरसात्मकः ९४ सर्वदुःखातिगोविद्याराशिःपरमगोचरः ॥ शेषोविशेषोविगतकल्मषोरघुपुंगवः ९५ वर्णश्रेष्ठोवर्णभाव्योवर्णोवर्णगुणोज्ज्वलः ॥
कर्मसाक्षीगुणश्रेष्ठोदेवःसुरवरप्रदः ९६ देवाधिदेवोदेवर्षिर्देवासुरनमस्कृतः ॥ सर्वदेवमयश्चक्रीशार्ङ्गपाणीरघूत्तमः ९७ मनोबुद्धिरहंकारःप्रकृतिःपुरुषोऽव्ययः ॥ न्या
योन्यायीनयीश्रीमान्नयोनगधरोध्रुवः ९८ लक्ष्मीविश्वंभरोभर्तादेवेंद्रोबलिमर्दनः ॥ बाणारिमर्दनोयज्वानुत्तमोमुनिसेवितः ९९ देवाग्रणीःशिवध्यानतत्परःपरमःपरः ॥
सामगेयःप्रियःशूरःपूर्णकीर्तिःसुलोचनः १०० अव्यक्तलक्षणोव्यक्तोदशास्यद्विपकेसरी ॥ कलानिधिःकलानाथःकमलानन्दवर्धनः १ पुण्यःपुण्याधिकःपूर्णःपूर्वःपूर
यितारविः ॥ जटिलःकल्मषध्वांतप्रभंजनविभावसुः २ जयीजितारिःसर्वादिःशमनोभवभंजनः ॥ अलंकरिष्णुरचलोरोचिष्णुर्विक्रमोत्तमः ३ आशुःशब्दपतिःशब्दागोचरोरं
जनोलघुः ॥ निःशब्दःपुरुषोमायीस्थूलःसूक्ष्मोविलक्षणः ४ आत्मयोनिरयोनिश्चसप्तजिव्हःसहस्रपात् ॥ सनातनतमःस्रग्वीपेशलोविजितांबरः ५ शक्तिमान्शंखभृन्नाथो
गदाधररथांगभृत् ॥ निरीहोनिर्विकल्पश्चचिद्रूपोवीतसाध्वसः ६ शताननःसहस्राक्षःशतमूर्तिर्घनप्रभः ॥ हृत्पुंडरीकशयनःकठिनोद्रवएवच ७ सूर्योग्रहपतिःश्रीमान्समर्थो
ऽनर्थनाशनः ॥ अधर्मशत्रूरक्षोघ्नःपुरुहूतःपुरुष्टुतः ८ ब्रह्मगर्भोबृहद्गर्भोधर्मधेनुर्धनागमः ॥ हिरण्यगर्भोज्योतिष्मान्सुललाटःसुविक्रमः ९ शिवपूजारतःश्रीमान्भवानीप्रि
यकृद्वशी ॥ नरोनारायणःश्यामःकपर्दीनीललोहितः ११० रुद्रःपशुपतिःस्थाणुर्विश्वामित्रोद्विजेश्वरः ॥ मातामहोमातरिश्वाविरिंचिर्विष्टरश्रवाः ११ अक्षोभ्यःसर्व
भूतानांचण्डःसत्यपराक्रमः ॥ वालखिल्योमहाकल्पःकल्पवृक्षःकलाधरः १२ निदाघस्तपनोमेघःशुक्रःपरबलापहृत् ॥ वसुश्रवाःकव्यवाहःप्रतप्तोविश्वभोजनः १३
रामोनीलोत्पलश्यामोज्ञानस्कन्दोमहाद्युतिः ॥ कबंधमथनोदिव्यःकंबुग्रीवःशिवप्रियः १४ सुखोनीलःसुनिष्पन्नःसुलभःशिशिरात्मकः ॥ असंसृष्टोतिथिःशूरःप्रमाथी
पापनाशकृत् १५ पवित्रपादःपापारिर्मणिपूरोनभोगतिः ॥ उत्तारणोदुष्कृतिहादुर्धर्षोदुस्सहोबलः ६०० १६ अमृतेशोऽमृतवपुर्धर्मीधर्मःकृपाकरः ॥ भगोविवस्वाना
दित्योयोगाचार्योदिवस्पतिः १७ उदारकीर्तिरुद्योगीवाङ्मयःसदसन्मयः ॥ नक्षत्रमालीनाकेशःस्वाधिष्ठानःषडाश्रयः १८ चतुर्वर्गफलंवर्णशक्तित्रयफलंनिधिः ॥ नि
धानगर्भोनिर्व्याजोनिरीशोव्यालमर्दनः १९ श्रीवल्लभःशिवारम्भःशांतोभद्रःसमंजसः ॥ भूशायीभूतकृद्भूतिर्भूषणोभूतवाहनः २० अकायोभक्तकायस्थःकालज्ञानीम
हापटुः ॥ परार्धवृत्तिरचलोविविक्तःश्रुतिसागरः २१ स्वभावभद्रोमध्यस्थःसंसारभयनाशनः ॥ वेद्योवैद्योवियद्गोप्तासर्वामरमुनीश्वरः २२ सुरेंद्रःकारणंकर्मकरःकर्मीह्य

१ षडाननःइतिपाठः ।

धोक्षजः ॥ वैर्योग्रधुर्योधात्रीशःसंकल्पःशर्वरीपतिः २३ परमार्थगुरुर्दृष्टिःसुचिराश्रितवत्सलः ॥ विष्णुर्जिष्णुर्विभुर्यज्ञोयज्ञेशोयंज्ञपालकः २४ प्रभुर्विष्णुर्ग्रसिष्णुश्चलोका
त्मालोकपावकः ॥ केशवःकेशिहाकाव्यःकविःकारणकारणम् २५ कालकर्ताकालशेषोवासुदेवःपुरुष्टुतः ॥ आदिकर्तावराहश्चवामनोमधुसूदनः २६ नारायणोनरोहं
सोविष्वक्सेनोजनार्दनः ॥ विश्वकर्तामहायज्ञोज्योतिष्मान्पुरुषोत्तमः ७०० २७ वैकुंठःपुंडरीकाक्षःकृष्णःसूर्यःसुरार्चितः ॥ नारसिंहोमहाभीमोवज्रदंष्ट्रोनखायुधः
२८ आदिदेवोजगत्कर्तायोगीशोगरुडध्वजः ॥ गोविंदोगोपतिर्गोप्ताभूपतिर्भुवनेश्वरः २९ पद्मनाभोहृषीकेशोधातादामोदरःप्रभुः ॥ त्रिविक्रमस्त्रिलोकेशोब्रह्मेशःप्री
तिवर्धनः ३० संन्यासीशास्त्रतत्त्वज्ञोमन्दरोगिरिशोनतः ॥ वामनोदुष्टदमनोगोविंदोगोपवल्लभः ३१ भक्तिप्रियोऽच्युतःसत्यःसत्यकीर्तिर्धृतिःस्मृतिः ॥ कारुण्यः
करुणोव्यासोपापहाशांतिवर्द्धनः ३२ बदरीनिलयःशांतस्तपस्वीवैद्युतःप्रभुः ॥ भूतावासोमहावासःश्रीनिवासःश्रियःपतिः ३३ तपोवासोमुदावासःसत्यवासःसनातनः ॥
पुरुषःपुष्करःपुण्यःपुष्कराक्षोमहेश्वरः ३४ पूर्णमूर्तिःपुराणज्ञःपुण्यदःप्रीतिवर्धनः ॥ पूर्णरूपःकालचक्रप्रवर्तनःसमाहितः ३५ नारायणःपरंज्योतिःपरमात्मासदाशिवः ॥
शंखीचक्रीगदीशार्ङ्गीलांगलीमुसलीहली ३६ किरीटीकुंडलीहारीमेखलीकवचीध्वजी ॥ योधाजेतामहावीर्यःशत्रुघ्नःशत्रुतापनः ३७ शास्ताशास्त्रकरःशास्त्रंशंकरःशंक
रस्तुतः ॥ सारथीसात्त्विकःस्वामीसामवेदप्रियःसमः ८०० ३८ पवनःसंहतःशक्तिःसम्पूर्णांगःसमृद्धिमान् ॥ स्वर्गदःकामदःश्रीदःकीर्तिदःकीर्तिदायकः ३९ मोक्ष
दःपुंडरीकाक्षःक्षीराब्धिकृतकेतनः ॥ सर्वात्मासर्वलोकेशःप्रेरकःपापनाशनः १४० वैकुंठःपुंडरीकाक्षःसर्वदेवनमस्कृतः ॥ सर्वव्यापीजगन्नाथःसर्वलोकमहेश्वरः ४१
सर्गस्थित्यंतकृद्देवःसर्वलोकसुखावहः ॥ अक्षयःशाश्वतोऽनंतःक्षयवृद्धिविवर्जितः ४२ निर्लेपोनिर्गुणःसूक्ष्मोनिर्विकारोनिरंजनः ॥ सर्वोपाधिविनिर्मुक्तःसत्तामात्रव्य
110 वस्थितः ४३ अविकारीविभुर्नित्यःपरमात्मासनातनः ॥ अचलोनिश्चलोव्यापीनित्यतृप्तोनिराश्रयः ४४ श्यामोयुवालोहिताक्षोदीप्त्याशोभितभाषणः ॥ आजा
नुबाहुःसुमुखःसिंहस्कंधोमहाभुजः ४५ सत्ववान्गुणसंपन्नोदीप्यमानःस्वतेजसा ॥ कालात्माभगवान्कालःकालचक्रप्रवर्तकः ४६ नारायणःपरंज्योतिःपरमात्मासना
तनः ॥ विश्वकृद्विश्वभोक्ताचविश्वगोप्ताचशाश्वतः ४७ विश्वेश्वरोविश्वमूर्तिर्विश्वात्माविश्वभावनः ॥ सर्वभूतसुहृच्छांतःसर्वभूतानुकंपनः ४८ सर्वेश्वरःसर्वशर्वःसर्वदा
श्रितवत्सलः ॥ सर्वगःसर्वभूतेशःसर्वभूताशयस्थितः ४९ अभ्यंतरस्थस्तमसश्छेत्तानारायणःपरः ॥ अनादिनिधनःस्रष्टाप्रजापतिपतिर्हरिः ५० नरसिंहोहृषीकेशः
सर्वात्मासर्वदृग्वशी ॥ जगतस्तस्थुषश्चैवप्रभुर्नेतासनातनः ९०० ५१ कर्ताधाताविधाताचसर्वेषांपतिरीश्वरः ॥ सहस्रमूर्धाविश्वात्माविष्णुर्विश्वदृगव्ययः ५२ पुराण
पुरुषःश्रेष्ठःसहस्राक्षःसहस्रपात् ॥ तत्त्वंनारायणोविष्णुर्वासुदेवःसनातनः ५३ परमात्मापरंब्रह्मसच्चिदानंदविग्रहः ॥ परंज्योतिःपरंधामपराकाशःपरात्परः ५४ अच्युतः
पुरुषःकृष्णःशाश्वतःशिवईश्वरः ॥ नित्यःसर्वगतःस्थाणूरुद्रःसाक्षीप्रजापतिः ५५ हिरण्यगर्भःसवितालोककृल्लोकभुग्विभुः ॥ ॐकारवाच्योभगवान्श्रीभूलीलापतिःप्रभुः

१ पद्मपावकइतिपाठः । २ भैरिकेतनइतिपाठः । ३ पुण्यवानितिपाठः । ४ प्रियस्तथेतिपाठः । ५ विश्वभुगितिपाठः ।

९६ सर्वलोकेश्वरःश्रीमान्सर्वज्ञःसर्वतोमुखः ॥ स्वामीसुशीलःसुलभःसर्वगःसर्वशक्तिमान् ९७ नित्यःसंपूर्णकामश्चनैसर्गिकसुहृत्सुखी ॥ कृपापीयूषजलधिःशरण्यःसर्वदेहिनाम् ९८ श्रीमान्नारायणःस्वामीजगतांप्रभुरीश्वरः ॥ मत्स्यःकूर्मोवराहश्चनारसिंहोऽथवामनः ९९ रामोरामश्चकृष्णश्चबौद्धःकल्कीपरात्परः ॥ अयोध्येशोनृपश्रेष्ठःकुशबालःपरंतपः ६० लवबालःकंजनेत्रःकंजांघ्रिःपंकजाननः ॥ सीताकांतःसौम्यरूपःशिशुजीवनतत्परः ६१ सेतुकृच्चित्रकूटस्थःशबरीसंस्तुतःप्रभुः ॥ योगिध्येयःशिवध्येयःशास्तारावणदर्पहा ६२ श्रीशःशरण्योभूतानांसंश्रिताभीष्टदायकः ॥ अनंतःश्रीपतीरामोगुणभृन्निर्गुणोमहान् १०० ६३ एवमादीनिनामानिह्यसंख्यान्यपराणिच ॥ एकैकंनामरामस्यसर्वपापप्रणाशनम् ६४ सहस्रनामफलदंसर्वैश्वर्यप्रदायकम् ॥ सर्वसिद्धिकरंपुण्यंभुक्तिमुक्तिफलप्रदम् ६५ मन्त्रात्मकमिदंसर्वंव्याख्यातंसर्वमंगलम् ॥ उक्तानितवपुत्रेणविप्रराजेनधीमता ६६ सनत्कुमारायपुरातान्युक्तानिमयातव ॥ यःपठेच्छृणुयाद्वापिसतुब्रह्मपदंलभेत् ६७ तावदेवबलंतेषांमहापातकदंतिनाम् ॥ यावन्नश्रूयतेरामनामपंचाननध्वनिः ६८ ब्रह्मघ्नश्चसुरापश्चस्तेयीचगुरुतल्पगः ॥ शरणागतघातीचमित्रविश्वासघातकः ६९ मातृहापितृहाचैवभ्रूणहावीरहातथा ॥ कोटिकोटिसहस्राणिह्युपपापानियान्यपि १७० संवत्सरंक्रमाज्जप्त्वाप्रत्यहंरामसन्निधौ ॥ निष्कण्टकंसुखंभुक्त्वाततोमोक्षमवाप्नुयात् ७१ ॥ सूतउवाच ॥ एवंशौनकपार्वत्यैरामनामसहस्रकम् ॥ यथाशिवेनकथितंमयातेऽद्यनिवेदितम् ७२ ॥ ॥ रामदासउवाच ॥ यथाशिष्यत्वयापृष्टंरामनामसहस्रकम् ॥ तत्सूतोक्तंसविस्तारंमयातेऽद्यनिवेदितम् ७३ अनेनरामंसदसिनारदःस्तुतवान्मुनिः ॥ रामनामसहस्रेणभुक्तिमुक्तिप्रदेनच ७४ श्रीरामनाम्नांपरमंसहस्रकंपापापहंसौख्यविवृद्धिकारकम् ॥ भवापहंभक्तजनैकपालकंस्त्रीपुत्रपौत्रप्रदमृद्धिदायकम् १७५ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये राज्यकांडे पूर्वार्धे रामनामसहस्रकथननाम प्रथमःसर्गः ॥ १ ॥ ॥ श्रीविष्णुदासउवाच ॥ गुरोत्वयारामनामसहस्रंराघवस्यच ॥ ध्यानंकल्पतरोर्मूलेकथितंस्वर्णपीठके १ संदेहस्तेनमेजातःकल्पवृक्षःकथंभुवि ॥ अयोध्यायांरामगेहेस्वर्गलोकात्समागतः २ अमुंमेसंशयंछिंधिकृपांकृत्वाममोपरि ॥ ॥ श्रीरामदासउवाच ॥ सम्यक्पृष्टंविष्णुदाससावधानमनाःशृणु ३ एकदाराघवंद्रष्टुंदुर्वासामुनिरभ्यगात् ॥ शिष्यैःषष्टिसहस्रैश्चवेष्टितोऽर्चितयत्पथि ४ विष्णुर्मनुजरूपेणरामोजातोऽत्रवेद्म्यहम् ॥ तथापिलोकान्रामस्यदर्शयिष्यामिपौरुषम् ५ एवंनिश्चित्यसाकेतेमुनिःशिष्यैर्विवेशह ॥ विलंघ्यसोष्टकक्षास्तैःसीतागेहंययौमुनिः ६ सीतागेहेमहद्द्वारसंस्थितमुनिसत्तमम् ॥ दुर्वाससंशिष्ययुक्तंदृष्ट्वावेत्रपाणयः ७ शीघ्रंनिवेदयामासुर्दास्यारामंरहःस्थितम् ॥ रामोऽपिश्रुत्वासंप्राप्तंमुनिंप्रत्युज्जगामसः ८ नत्वातानानयामाससब्रह्मासनमर्पयत् ॥ एतस्मिन्नंतरेरामंतिष्ठन्समुनिसत्तमः ९ अब्रवीन्मधुरंवाक्यंशिष्यैःसर्वत्रवेष्टितः ॥ अद्यवर्षसहस्राणामुपवाससमापनम् १० अतोभोजनमिच्छामिमणिघेन्वनलैर्विना ॥ सिद्धमन्नंमुहूर्तेनसशिष्यायसमर्पय ११ मह्यंमनोभिलषितंनानापक्वान्नसंयुतम् ॥ तथामांपूजनार्थंहिशंभोःपुष्पाणिमानवैः १२ अदृष्टान्यानयस्वाद्यगार्हस्थ्यंचेत्प्ररक्षसि

१ रामोरामौधरामश्चेतिपाठः । २ नत्वानिनायसीतायाःस्थानमथार्पयदितिपाठः ।

नोचेन्नाहंसमर्थोऽस्मीत्युक्त्वामांत्वंविसर्जय १३ तन्मुनेर्वचनंश्रुत्वाविहस्यरघुनन्दनः ॥ सर्वमंगीकृतंचेतिविनयेनाब्रवीन्मुनिम् १४ तद्रामवचनंश्रुत्वातुष्टस्तंमुनिरब्रवी
त् ॥ स्नात्वासरय्वांशीघ्रंत्वामागच्छामित्वरांकुरु १५ मदुक्तंसकलंकर्तुंसिद्धंवधूंश्चजानकीम् ॥ तथेत्युक्त्वामुनिंरामःस्नानार्थंचविसर्जयत् १६ तदातेलक्ष्मणाद्याश्चबंधवो
जानकीतथा ॥ कुशाद्याबालकाःसर्वेतेऽभूवन्भयविह्वला १७ ऊचुःपरस्परंसर्वेरामन्यस्तेक्षणाःशनैः ॥ क्रियाचिंतंहिमुनिनाकिंरामोऽद्यकरिष्यति १८ विनागोवन्हि
मणिभिःकथमन्नंप्रदास्यति ॥ ततोगतेमुनौरामःपत्रंसौमित्रिणातदा १९ विलेख्यबध्वाबाणेतन्मुमोचशरमुत्तमम् ॥ सशरोवायुवेगेनशीघ्रंगत्वाऽमरावतीम् २० सुधर्मा
यांसुरैर्युक्तस्येंद्रस्याग्रेपपातह ॥ तंशरंमघवादृष्ट्वाचकितोभयविह्वलः २१ कस्यायमितिचोक्त्वातद्रामनामव्यलोकयत् ॥ सुवर्णरचितंबाणपुच्छस्थंपापदाहकम् २२
ततोज्ञात्वाराघवस्यशरोयमितिदेवराट् ॥ तस्मिन्बन्धंविमुच्याऽसौपत्रंनत्वापपाठच २३ एतस्मिन्नंतरेबाणःपुनःश्रीराघवंययौ ॥ विवेशरामतूणीरेपूर्ववत्संस्थितो
ऽभवत् २४ मघवाऽपिसुधर्मायांश्रावयामासनिर्जरान् ॥ रामसुद्रांकितंपत्रंभयविस्मयसंयुतः २५ मघवंस्त्वंसुखंतिष्ठस्वर्गेऽहंत्वांसदास्मरे ॥ मन्नियोगंशृणुष्वाद्ययाचि
तोऽस्म्यधुनात्वहम् २६ विनागोवन्हिमणिभिश्चान्नैःशिष्यैर्युतेनच ॥ वरैःषष्टिसहस्रैश्चतथाऽन्यैर्मुनिसत्तमैः २७ सहस्राब्दक्षुधितेनक्रोधिनाऽतितपस्विना ॥ दुर्वास
सामुहूर्तातुमयाप्यंगीकृतंहितत् २८ याचितान्यपिपुष्पाणितेनादृष्टानिमानवैः ॥ मयांगीकृत्यसकलंस्नानार्थंतेविसर्जिताः २९ अतःशीघ्रंकल्पवृक्षपारिजातौसमुद्भवौ ॥
प्रेषयस्वक्षणान्मांत्वमविलंबेनसादरात् ३० मारावणशिरश्छेत्तुःप्रतीक्षांत्वमिषोःकुरु ॥ एवंसंश्राव्यतत्पत्रंसुरानिंद्रःसुरैःसह ३१ संमंत्र्याऽथकल्पवृक्षपारिजातौविग्रहासः॥
विमानेनसुरैर्युक्तःश्रीरामनगरींययौ ३२ इंद्रमागतमाज्ञायतंप्रत्युद्गम्यलक्ष्मणः ॥ अयोध्यायांनिनायेंद्रंसभास्थंरघुनन्दनम् ३३ कल्पवृक्षपारिजातौमघवारघुनन्द
नम् ॥ समर्प्यनत्वाश्रीरामंसउपाविशदासने ३४ एतस्मिन्नंतरेशिष्यंदुर्वासामुनिरब्रवीत् ॥ गत्वात्वंपश्यरामंतुकिंकरोत्यधुनागृहे ३५ अस्माकंकल्पितंकिंचिदन्नम
स्त्यथवानवा ॥ चिंतायुक्तोऽस्तिवातूष्णींसंस्थितोऽस्त्यत्रकिंकृतम् ३६ वहि संपादितंसर्वंमयायद्यद्याचितम् ॥ रहःस्थितःशनैर्दृष्ट्वाशीघ्रंत्वंयाहिमांपुनः ३७ तथे
त्युक्त्वामुनिंशिष्यःसययौरामसद्गृहम् ॥ तत्रदृष्ट्वाकल्पवृक्षपारिजातौसनिर्जरौ ३८ सनिर्जरेशंरामंचमुदितंसीतयाऽन्वितम् ॥ ततस्तूर्णंययौशिष्यःपरावृत्यमुनिंप्रति ॥
३९ कथयामाससकलंयथावृत्तंनिरीक्षितम् ॥ तच्छ्रुत्वाशिष्यवचनंदुर्वासाविस्मयान्वितः ४० ययौशिष्यैःपरिवृतःसविवेशतपद्गृहम् ॥ तंमुनिंराघवोदृष्ट्वाप्रत्युद्गम्यपुनः
सुरैः ४१ नमस्कृत्यमुदुर्वेगाददावासनमुत्तमम् ॥ ततोमुनेःपूजनंससशिष्यस्यरघूत्तमः ४२ चकारसीतयासार्द्धंलक्ष्मणादिभिरन्वितः ॥ पारिजातप्रसूनानिनेक्षितान्य
त्रमानवैः ४३ ददौशंभोःपूजनार्थंरामोदुर्वाससेतदा ॥ तानिदृष्ट्वामुनिस्तूष्णींतैश्चकारेश्वरार्चनम् ४४ ततःसर्वान्सुरान्पूज्यपरिवेषणकर्मणि ॥ चोदयामासश्रीरामोजा
नकींलक्ष्मणेनसः ४५ ततःसाजानकीवेगाद्दिव्यालंकारमण्डिता ॥ कल्पवृक्षपारिजातौसम्पूज्यनूपुरस्वना ४६ पात्राणिकल्पवृक्षाधःस्थापयामासकोटिशः ॥ सीतातं
प्रार्थयामासकल्पवृक्षंनगोत्तमम् ४७ क्षीरसागरसंभूतदेवानांचिंतितप्रद ॥ दुर्वाससेकल्पवृक्षसशिष्यायाऽद्यतोषय ४८ तत्सीतावचनंश्रुत्वाहेमपात्राणिकोटिशः ॥

चित्रान्नैःपूरयामासक्षणात्कल्पतरुस्तदा ४९ तैरन्नैर्हैमपात्रेषुजानकीपरिवेषणम् ॥ क्षणाच्चकारसंतुष्टाह्यामलैलाचंपिकादिभिः ५० ततस्तुष्टोमुनिर्देवैःशिष्यैरशनमा
दरात् ॥ चकाररघुवीरेणप्रार्थितःससुहुर्मुहुः ५१ ततःकृत्वाभोजनंहिकरशुद्धिंविधायसः ॥ तांबूलंदक्षिणांचापिजग्राहरघुनायकात् ५२ ततःसुराणांपुरतोवेदवाक्यैःस
विस्तरम् ॥ दुर्वासाराघवंस्तुत्वातमाहानंदनिर्भरः ५३ रामराजीवपत्राक्षत्वंसाक्षाज्जगदीश्वरः ॥ अत्ररावणघातार्थमवतीर्णोऽसिवेद्म्यहम् ५४ जनांस्त्वत्पौरुषंज्ञातुंम
यैतद्याचितंतव ॥ विनागोवन्हिमणिभिर्दिव्यान्नंरघुनंदन ५५ प्रसूनान्यप्यदृष्टानिमानवैर्जगतीतले ॥ किंरामदुर्घटंतत्रयस्यभ्रूभंगमात्रतः ५६ लयोब्रह्मादिकानांचजा
यतेसंभवोऽपिच ॥ मन्दरंमज्जमानंतुदृष्ट्वात्वंक्षीरसागरे ५७ कूर्मरूपेणजातोऽसिधर्तुंतंमन्दराचलम् ॥ निष्कासितानिरत्नानितदादेवैश्चतुर्दश ५८ तवसाहाय्यमात्रेण
सर्वंजानाम्यहंप्रभो ॥ लक्ष्मीःसोमःकामधेनुःकौस्तुभश्चसुधाविषम् ५९ ऐरावतश्चाप्सरसःकल्पवृक्षोभिषग्वरः ॥ उच्चैःश्रवापारिजातोसुराज्येष्ठेतिराघव ६० चतु
र्दशसुरत्नानिविभक्तानिपुरात्वया ॥ देवेभ्योयानितान्येतेभोक्ष्यंतिकृपयातव ६१ त्वदाज्ञापालिनःसर्वेशंकराद्याश्चनिर्जराः ॥ सर्वेषांजीवनोपायास्त्वयासर्वेपृथक्पृथक्
६२ कल्पितायेनरामेणतत्रकिंदुर्घटंतव ॥ ममाभिलषितंभोज्यंदातुंत्वत्कौतुकंमया ६३ अद्यावलोकितंरामजनानापिप्रदर्शितम् ॥ त्वंपातासर्वलोकानांजनकश्चा
पिघातकृत् ६४ अस्माकंगतिदातात्वंमेक्षमस्वाऽपराधितम् ॥ एवंनानाविधंस्तुत्वातंप्रणम्यपुनःपुनः ६५ राममामंत्र्यदुर्वासाययौशिष्यैःस्वमाश्रमम् ॥ अथता
न्निर्जरान्प्राहरामःकमललोचनः ६६ कल्पवृक्षपारिजातौगृहीत्वागम्यतांदिवम् ॥ तद्रामवचनंश्रुत्वावाक्पतिःप्राहराघवम् ६७ यावत्कालंतिष्ठसित्वंभूम्यांतावन्नगोत्त
मौ ॥ अयोध्यायांतिष्ठतस्तौकल्पवृक्षसुरद्रुमौ ६८ त्वयिवैकुंठमायातेदिवंतौयास्यतोध्रुवः ॥ तथेतितत्सुरगुरोःप्रतिनंद्यवचःप्रभुः ६९ पुष्पकेस्थापयामासक
ल्पवृक्षसुरद्रुमौ ॥ ततस्तेराघवंनत्वाययुरिंद्रादिकाःसुराः ७० स्वर्गलोकंसुसंतुष्टाराघवेणातिपूजिताः ॥ एवंप्राप्तौकल्पवृक्षपारिजातौभुवंदिवः ७१ तयोरेतत्कार
णंतेप्रोक्तंपृष्टंयथात्वया ॥ तदारभ्यसुरतरूपुष्पकस्थौविरेजतुः ७२ साकेतेसीतयारामस्ताभ्यांसुखमवापसः ॥ कल्पवृक्षतलेदिव्यपर्यंकेसीतयासह ७३ नानाभो
गान्राघवेंद्रःसबुभोजाऽचिरंसुखम् ॥ अतःपूर्वंमयारामध्यानंकल्पतरोःस्थले ७४ सहस्रनामसंकेतेप्रोक्तंशिष्यतवाग्रतः ॥ तदारभ्यपारिजातवृक्षांशाःशतशोभुवि
७५ पारिजातनगाजातावर्तन्तेऽद्यापितेत्रहि ॥ नानेनसदृशंपुण्यंवर्ततेरामतोषदम् ७६ कल्पवृक्षांशरूपाश्चज्ञातव्यास्तत्रमानवैः ॥ अश्वत्थाःसेवनाद्येश्चसर्ववांछि
तदायकाः ७७ पुण्याधिक्येनसेवंतेनोपेक्षंतियुगत्रये ॥ पापाधिक्येनाऽपिसेवांनरावांछंतिनोकलौ ७८ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वाल्मी
कीये राज्यकांडेपूर्वार्धे कल्पवृक्षपारिजातयोरुर्व्यांगमनकारणंनामद्वितीयःसर्गः ॥ २ ॥ ॥ विष्णुदासउवाच ॥ ॥ रामदासगुरोभूम्यांरामकृष्णौवरौश्रुतौ ॥
मयादशावतारेषुह्यवताराद्धभौपुरा १ तयोरपिचकःश्रेष्ठस्तत्त्वंवदममाग्रतः ॥ यंश्रुत्वासर्वदातस्यश्रोष्येऽहंचरितंशुभम् २ ॥ श्रीरामदासउवाच ॥ सम्यक्पृष्टंविष्णुदा

१ नकेनापिमदर्शितमितिपाठः । २ सहस्रनामकेऽध्यायेइतिपाठः ।

समावधानमनाःशृणु ॥ रामावतारःश्रेष्ठोऽत्रविज्ञेयःसर्वदानरैः ३ अस्मिन्नर्थेपूर्ववृत्तांकथांशृणुमनोहराम् ॥ द्विजाभ्यांवादरूपेणकीर्तितांपुण्यदायकाम् ४ अयोध्या
विषयेकश्चिद्द्विजोरामाह्वयस्त्वभूत ॥ द्वारकायांतथाविप्रःकृष्णाख्योऽभूत्परःसुधीः ५ चक्रतुःसेवनंचोभौसर्वदारामकृष्णयोः ॥ तावेकदामाघमासेप्रयागेमिलितौद्विजौ
६ उभौस्नात्वात्रिवेण्यांहिमाधवंपरिपूज्यच ॥ कथांपौराणिकमुखाच्छ्रोतुंतत्पुरतःस्थितौ ७ शुश्रुवतुःकथास्तत्रप्रसंगाद्राघवस्यच ॥ रामाख्योरामभक्तःसश्रुत्वाराघवस
त्कथाम् ८ तुष्टस्तंपूजयामासमुदापौराणिकंतदा ॥ कृष्णाख्यःक्रोधसंयुक्तस्तदावचनमब्रवीत ९ किंक्लेशिनोऽस्यरामस्यकथांश्रुत्वाऽतिहर्षितः ॥ पूजितोऽपित्वयाव्या
सस्त्वंमूढोऽसीतिवेद्म्यहम् १० नान्यच्चरित्रंकस्यापिपावनंश्रुतितोषदम् ॥ यथाकृष्णस्यमेरम्यंनानाक्रीडापुरःसरम् ११ तत्कृष्णवचनंश्रुत्वारामाख्यःप्राहसस्मितः ॥
॥ रामोपासकउवाच ॥ ॥ रामःक्लेशीकथंप्रोक्तस्त्वयाकृष्णःकथंसुखी १२ कथंकृष्णस्यतेरम्यंचरितंदुरितापहम् ॥ कथंरामस्यमेरम्यंचरितंनेरितंत्वया १३ वदा
ऽद्यविस्तरेणैवशृण्वंत्वेतेसभासदः ॥ ॥ कृष्णोपासकउवाच ॥ ॥ सम्यक्पृष्टंत्वयारामसावधानमनाःशृणु १४ वदामिराघवस्याऽथकृष्णस्यचरितंत्वहम् ॥ क्लेशदंतो
षदंनृणांशृण्वंत्वेतेसभासदः १५ तवरामस्यजन्मादौजातःशापःपितुःपुरा ॥ शापस्यादावपिपुरातद्धेतोरावणेनहि १६ लंकांतत्पितरौनीतौप्रारंभेदुःखमीदृशम् ॥ मम
कृष्णस्यजन्मादौतत्पित्रोःसौख्यदायकैः १७ विवाहमंगलैःकंसःपूजयामाससादरम् ॥ ॥ रामोपासकउवाच ॥ ॥ रेरेशृणुत्वंदुर्बुद्धेनसशापोवरोर्पितः १८ यत्प्र
सादादपुत्रस्यनृपस्यतनयस्त्वभूत ॥ तथाभद्राममीत्यातौनीतावपिविसर्जितौ १९ दशास्येनतत्पितरौजन्मादौपौरुषंत्विदम् ॥ तवकृष्णस्यजन्मादौपित्रोःकारागृह
स्थितिः २० राजभोगनिषेधार्थंशापोयदुकुलायच ॥ जन्मापिबंदिशालायांवियोगश्चतयोरपि २१ सहोदरवधश्चापितद्धेतोर्मातुलेनहि ॥ नेत्राहुजश्चवैश्यश्चयस्यता
तावुभौस्मृतौ २२ गोरक्षकस्यतनयःप्रवासःशैशवेऽपिच ॥ परेणपोषितश्चापिकनीयोबलभद्रतः ॥ एवंनानाविधंदुःखंतवकृष्णस्यनोसुखम् २३ ॥ कृष्णोपासकउवाच ॥
आत्मार्थंतवरामेणताटिकास्त्रीविदारिता ॥ नार्यांविमोचितोबाणःपित्रोःखेदोवियोगतः २४ ॥ रामोपासकउवाच ॥ द्विजघ्नीनिहताठुष्टाममरामेणताटिका ॥ मुनिय
ज्ञरक्षणार्थंमुदाराज्ञाऽर्पितौशिशू २५ तवकृष्णेनरक्षार्थमात्मनःपूतनाहता ॥ तथात्मार्थंप्राणिहिंसावहुतेनकृताव्रजे २६ गोपैश्चसंगतिस्तस्यतथैवगोपरक्षणम् ॥ गोव
त्सःसर्पघातश्चखगवाजिवधस्तथा २७ रासभवृषघातश्चचौर्यंबहुतंवनेऽटनम् ॥ कंबलावरणंशीतपर्जन्योष्णप्रपीडनम् २८ क्षुत्तृड्भ्यांपीडनंनित्यंगोपालोच्छिष्टसेवनम् ॥
आत्मार्थंयाचितंचान्नंद्विजस्त्रीभ्योवनेमुहुः २९ इंद्रध्वजपूजनादिवृद्धाचारप्रलोपनम् ॥ परस्त्रीगमनंज्येष्ठनारीभिःक्रीडनंचिरम् ३० नग्नस्त्रीदर्शनंवन्हिप्राशनंदामबं
१४ घनम् ॥ उन्मूलनंचनगयोर्दुष्टपर्युषितसेवनम् ३१ रोदनंनवनीतार्थंमुहुर्मात्राप्रताडनम् ॥ गोगोपिकासुचास्नेहःपूर्वस्थलविसर्जनम् ३२ कृतारजकहत्याचयुद्धंक्षत्रिय
वत्कृतम् ॥ गजहत्यामल्लहत्यायुद्धंमातुलमर्दनम् ३३ नैष्ठुर्यंमामकर्मेषुराज्याप्राप्तिस्तथैवच ॥ नृपाज्ञावर्तनंचाऽपिक्रीडादास्याकुरूपया ३४ युद्धात्पराजयश्चाऽपि

१ वचराजानेतिपाठः । २ कृतमितिपाठः । ३ इंद्रयज्ञेतिपाठः । ४ गोपिकादिषुचस्नेहइतिपाठः ।

रिपवेष्टद्विदर्शनम् ॥ गिरौदग्धःपरैर्ज्ञातःस्वीयस्थलविमोचनम् ३५ अब्धितीरानिवासश्वबलात्स्त्रीहरणंकृतम् ॥ भौमासुरपरद्रव्यहरणंपरसूनुतः ३६ स्वीयगोत्रवधा
र्थंहिपांडुजायोपदेशितम् ॥ जनैस्तेयावरोपश्चवृक्षार्थसंगरःसुरैः ३७ ॥ कृष्णोपासकउवाच ॥ किंत्वंजल्पसिशृण्वद्यतवरामस्यकामिनः ॥ कस्यसादुहिताह्यकृतः
॥ ५ ॥ सवर्णसंकरः ३८ शिवचापस्यभंगेनशिवस्याप्यपराधितम् ॥ जामदग्निमानभंगकरणंगुरुलस्यच ३९ आज्ञांविनालक्ष्मणेनतद्वल्यस्त्रोटिताःशुभाः ॥ सदाऽरण्यचरः ७
स्वार्थपशुहिंसापरायणः ४० वनाश्रमीवन्यजीवीमांसाहारीधनुर्धरः ॥ व्याधकर्मरतःशीतपर्जन्योष्णप्रपीडितः ४१ पादगामीचर्मवासाजटावल्कलवान्सखी ॥ श्मश्रु
धारीतरुच्छायाश्रयीपात्रविवर्जितः ४२ राक्षसेनहृतापत्नीतवरामस्यकानने ॥ पत्न्यर्थंहिकृतःशोकस्तथादास्याप्रपूजितः ४३ ॥ रामोपासकउवाच ॥ रामेणमो
चितापत्नीकृताछायामयीपुरा ॥ नसादासीत्तुशबरीमुनिसेवनतत्परा ४४ जीवन्मुक्तातत्कृपयामोक्षमापशुचिव्रता ॥ तवकृष्णस्यताःपत्नीर्भोक्ष्यंत्यद्यापिशत्रवः ४५
जित्वाऽर्जुनंबलादेवहृताःपूर्वसहस्रशः ॥ स्त्रीजितश्चस्त्रियादत्तःक्रयक्रीतश्चनारदात् ४६ सर्वासांकामपूर्त्यर्थंनिशिनिद्राविवर्जितः ॥ बंधुभ्यांगोपिकाभुक्तामातृतुल्या
वयोधिकाः ४७ ॥ कृष्णोपासकउवाच ॥ बंधुनातवरामश्चपशुभीत्याननिद्रितः ॥ बंधुपत्न्यर्पितातारासुग्रीवायथासुखम् ४८ वानरैश्चकृतामैत्रीस्पर्शितंदुन्दुभेः
शवम् ॥ निरर्थकंहतोवालीसाहाय्यंवानरैःकृतम् ४९ वानरोयस्यवैयानंवृथातालाविदारिताः ॥ सागरोरोधितोयेनलंकासाज्वालितावरा ५० ॥ रामोपासकउवाच ॥ द
रिद्रेणसुदाम्नातेकृष्णेनमैत्रिकीकृता ॥ नज्ञेयावानरास्तेपिसर्वेदेवांशरूपिणः ५१ कापट्येनहतोयेनजरासंधोनिरर्थकः ॥ साहाय्यंसर्वदायस्यकृतंगोपैर्व्रजेवने ५२ गोपा
लस्यकृतंयानंक्रीडनंसर्वदावने ॥ ज्वलितायेनसाकाशीसुहृद्रुक्मीविरूपितः ५३ शिवभक्तेनसमरःकृतोबाणेनसादरम् ॥ शिवेनापिकृतंयुद्धंचैद्येननिंदितोमुहुः ५४
परैःपौत्रोजितोयस्ययेनस्त्रीणांपरस्परम् ॥ कृताविषमताचात्रपारिजातार्पणादिभिः ५५ ॥ कृष्णोपासकउवाच ॥ तवापिरामपुत्रेणसुहृद्भद्रोरणेजितः ॥ शिवभक्तद
शास्येनरामेणसंगरःकृतः ५६ द्विजहत्याकृतायेनमुनिनानिंदितोऽपियः ॥ तथामित्रंजितोयस्यबंधुजेनविभीषणः ५७ परगेहस्थितापत्नीपुनर्येनाश्रितासुखम् ॥ नैवु
र्यंचकृतंपत्न्यांस्त्रीणांकामानपूरिताः ५८ यानारूढाकृताथात्रवेश्यास्पृष्टस्तथारहः ॥ पतिव्रतायांसीतायांदोषारोपःकृतोऽपिच ५९ पुत्रंहंतुंकृताचाज्ञाशूद्रसिंहवधो
कृतौ ॥ पत्नीसक्ताऽश्रितायेनयस्याज्ञापालितानृपैः ६० ॥ श्रीरामोपासकउवाच ॥ अंतेकृष्णस्यतेशापाद्वंशच्छेदोह्यभूद्द्विज ॥ अब्धिनालोपितायस्यनगरीद्वारिकाशु
भा ६१ स्वगोत्रस्यवधस्त्वंतेमद्यपानादियःकुले ॥ दर्शनंह्यर्जुनायांऽस्तेयेनमित्रायनार्पितम् ६२ स्वस्थानंगमनंयेनकृतमेकाकिनातथा ॥ सक्तोऽपिकृतस्त्वंतेव्याधेना ॥ ५ ॥
ल्पेनपत्रिणा ६३ ॥ कृष्णोपासकउवाच ॥ तवरामेणसमरःपुत्रेणाऽपिकृतोमहान् ॥ तथासीतामयात्यक्ताचेतिलोकंप्रतार्यच ६४ वाल्मीकेराश्रमंगत्वादृष्टोसीतासुतोर
हः ॥ पिण्याकेनतथैंगुद्याःपिंडदानादिकंकृतम् ६५ दंडकेतवरामेणस्वपित्रेभ्रमतार्पितम् ॥ तथैरावणभुक्तायाःस्पृष्टःसमंचकःस्थले ६६ तथाश्वत्थच्छेदनार्थंमहा

१ सुहृद्भद्रंधुर्यंजेतिद्विजितपाठः । २ यत्कृतमितिपाठः ।

न्यग्नःकृतोमुदः ॥ स्वमंत्रिणश्चशेषायुःपूर्त्यर्थसंगरोऽपिच ६७ कारितोयमराजेनपूर्वजेनत्वयादिभिः ॥ पुष्पास्वादनमात्रादिपत्न्याःशिक्षातथाकृता ६८ ममकृष्णेन
बालत्वेलीलयापूतनाहता ॥ हतास्तृणासुराद्याश्चधृतोऽङ्गुल्यागिरिस्तथा ६९ ॥ रामोपासकउवाच ॥ ममरामेणबालत्वेलीलयाताटिकाहता ॥ मारीचाद्याहताश्चापिप
वेतास्तारिताजले ७० ॥ कृष्णोपासकउवाच ॥ ममकृष्णस्वरूपेणगोपिकामोहिताव्रजे ॥ मोहिताराधिकाश्रेष्ठामदनस्याऽपिमोहिनी ७१ ॥ रामोपासकउवाच ॥
ममरामेणदेवानांमोहिताःस्वीयरूपतः ॥ देवपत्न्योरहोरात्रौमातृतुल्याविचिंतिताः ७२ कृताःकृतार्थाःस्ववराद्यतोजातास्तुगोपिकाः ॥ तांबूलोच्छिष्टस्वरसं
दासीरामस्यभक्तितः ७३ पीत्वातस्यैवरतोव्रजेसाराधिकाह्यभूत् ॥ अतोमेराघवोधन्योयस्यैकादयिताऽत्रहि ७४ ॥ ॥ कृष्णोपासकउवाच ॥ ॥ ममकृष्णेनपत्न्य
श्चसहस्राणिहिषोडश ॥ साष्टोत्तरशतान्यत्रोद्वाहिताश्चविधानतः ७५ ॥ रामोपासकउवाच ॥ ममरामस्वरूपेणसर्वास्तामोहिताःस्त्रियः ॥ मातृवन्मोहितास्तेन
वीरेणपुरुषार्थिना ७६ कृष्णेनरतिकामेनमोहितागोपिकास्त्रियः ॥ कृष्णोपासकउवाच ॥ गजेंद्रोममकृष्णेनलीलयानिहतोद्विज ७७ ॥ रामोपासकउवाच ॥ म
मरामेणनागेंद्ररिपुरुष्टापदोहतः ॥ कृष्णोपासकउवाच ॥ ममकृष्णप्रतापेनयमुनाखंडितात्वभूत् ७८ ॥ रामोपासकउवाच ॥ ममरामप्रतापेनखंडिताजान्हवीत्वभूत् ॥
॥ कृष्णोपासकउवाच ॥ ममकृष्णेनवैस्वर्गादानीत सुरपादपः ७९ ॥ रामोपासकउवाच ॥ ममरामेणवैस्वर्गादानीतौसुरपादपौ ॥ कृष्णोपासकउवाच ॥ ममकृष्णेन
स्वगुरोर्मातुश्चापिसुताम्मृताः ८० सुजीविताःसमानीताःसप्ताभ्यांनिवेदिताः ॥ रामोपासकउवाच ॥ ममरामेणसाकेतेसप्तमर्त्याःसुजीविताः ८१ ॥ कृष्णोपासक
उवाच ॥ ममकृष्णेनपौरुष्याद्विप्रस्यजीविताःसुताः ॥ रामोपासकउवाच ॥ ममरामेणसचिवःसुमंत्रोजीवितःपुनः ८२ ॥ कृष्णोपासकउवाच ॥ ममकृष्णेनद्रौपद्या
संचितंहिफलंवरो ॥ रामोपासकउवाच ॥ ममरामेणवैदेह्यासंचितंतुलसीदलम् ८३ ॥ कृष्णोपासकउवाच ॥ ममकृष्णप्रतापश्चजनान्संदर्शितःपुरा ॥ दुर्वाससाऽन्नया
च्चासागोपिकानांकृताव्रजे ८४ ॥ रामोपासकउवाच ॥ ममरामप्रतापश्चजनान्सन्दर्शितःपुरा ॥ दुर्वाससाऽन्नयाञ्चासाकृतारामस्यतत्पुरि ८५ कृष्णोपासकउवाच ॥
ममकृष्णेनरूपाणिबहून्यत्रकृतानिहि ॥ रामोपासकउवाच ॥ बहूनिराघवेणापिस्वरूपाणिकृतानिहि ८६ ॥ कृष्णोपासकउवाच ॥ ममकृष्णेनमित्रायदत्तंस्वर्णमयंपुरम्
॥ रामोपासकउवाच ॥ ममरामेणमित्रायदत्तास्वर्णमयीपुरी ८७ ॥ कृष्णोपासकउवाच ॥ सूर्यग्रहेकुरुक्षेत्रेस्नानंकृष्णेनमेकृतम् ॥ रामोपासकउवाच ॥ सूर्यग्रहेकुरुक्षेत्रे
रामेणाप्यवगाहितम् ८८मेरामस्यवचश्चैकंसत्यमेवचनान्यथा ॥ तेकृष्णस्यह्यनेकानिवचनान्यनृतानिहि ८९ रामस्यमेशरस्त्वेकःशत्रुनिर्दालनक्षमः ॥ विफलास्तवकृष्ण
स्यबहवोऽरिषुमार्गणाः ९० एकास्त्रीममरामस्यतेकृष्णस्यबहुस्त्रियः ॥ पत्न्याःशय्यांविनानान्याशय्यारामस्यवैमम ९१ स्त्रीणांशय्यांविनाबह्वीःशय्याःकृष्णस्यतेद्विज ॥
रामस्थितिर्मध्यदेशेसाकेतेसरयूतटे ९२ अब्धेस्तटेपश्चिमेतेस्थितिःकृष्णस्यवैतव ॥ बंधुत्रयंमेरामस्यकृष्णस्यैकोऽग्रजस्तव ९३ गौर्मणीपुष्पकंवृक्षोकटकेमुनिनार्पिते ॥

१ तद्वचदेवत्वत्कृष्णपत्न्योजातास्तत्रात्रद्विजतिपाठः ।

ऐरावतकुलोद्भूतश्चतुर्दन्तोगजोपिच ९४ एतानिममरामस्यनवरत्नानिसंतिहि ॥ मणिद्वयंपारिजातस्त्वितिरत्नत्रयंतव ९५ कृष्णस्यसंतिभोविप्रत्वंतंस्तौषिकथंद्ग
था ॥ सप्तद्वीपेश्वरोरामोममपृथ्वीशवंदितः ९६ ईशत्वंजगदीशत्वंसममेवद्वयंस्मृतम् ॥ अतोनममरामेणतुल्यंकृष्णंविचिंतय ९७ यस्यचापंहिकोदण्डंयस्याऽक्षय्याः
पतत्रिणः ॥ विप्रेष्टपूरणंयस्यव्रतंनित्यंद्विजोत्तम ९८ यस्यसिंहासनंछत्रंव्यजनंचामरद्वयम् ॥ यस्ययानंपुष्पकंतत्पुत्रौतौपितुःसमौ ९९ अद्यापिपाल्यतेयस्यदत्तं
दानंद्विजोत्तमान् ॥ रामनाथपुरस्यैवराज्यंरामस्यमेनृपैः १०० तवकृष्णेनकिंदत्तंवदयद्वर्ततेऽधुना ॥ करोत्यहर्निशंशंभुश्चापिमेरामार्चितनम् १०१ तारकंमेरामनाम
काश्यांशंभुर्जनान्सदा ॥ मृत्यून्मुखांस्तारणार्थंद्विजोपदिशतिस्वयम् १०२ अतएवजनाश्चापिसर्वत्रमरणोन्मुखान् ॥ स्वीयान्मुहुःशिक्षयंतिध्येयोरामोऽधुनात्विति ॥
३ तथाप्राणिविमोक्षार्थंसदातच्छववाहकैः ॥ रामरामेतिरामेतिनामभूम्यामुदीर्यते ४ यन्नाममहिमाचेदृक्कितंस्तौम्यधुनामुहुः ॥ वाल्मीकिनाप्यतएवपूर्वंतच्चरितंकृ
तम् ५ शतकोटिमितंश्रेष्ठंयस्मिन्रामायणेद्विज ॥ कृष्णादीनांचरित्राणिसंतिह्यंतर्गतानिहि ६ ॥ ॥ श्रीरामदासउवाच ॥ एवंतयोर्विवदतोर्द्विजयोश्चपरस्परम् ॥
बभूवाकाशजावाणीतांतौसर्वेचसुश्रुवुः ७ रामस्याऽग्रेस्तुतिःकेषामपिकर्तुंघटेतन ॥ इतितांखेचरींवाणींश्रुत्वासर्वेसभासदः ८ चक्रुर्जयस्वनान्हस्तैर्वादयंतिस्मतालि
काः ॥ तंरामोपासकंसर्वेववर्षुःपुष्पवृष्टिभिः ९ निर्जराअपितेसर्वेविमानस्थामुदान्विताः ॥ तंरामोपासकंप्रीत्याववर्षुःपुष्पवृष्टिभिः॥ तदाकृष्णोपासकस्सलज्जयानतम
स्तकः ॥ तंरामोपासकंनत्वाप्रार्थयामासवैमुहुः १० तदारामोपासकोऽपितंनत्वालिंग्यवैदृढम् ॥ उवाचमधुरंवाक्यंशृणुकृष्णद्विजोत्तम ११ ननन्दसूनोःपृथगस्तिरामो
नरामतोऽन्योवसुदेवसूनुः ॥ तथाप्ययोध्यापुरपालबालेसलक्ष्मणेधावतिमेमनीषा १२ अतःस्तुतोमयारामःकृष्णस्यनिंदनंकृतम् ॥ तवेर्ष्ययाद्विजश्रेष्ठवेत्सितौद्वौसमा
विति १३ रामएवात्रकृष्णस्सकृष्णएवात्रराघवः ॥ उभयोर्नांतरंविप्रकौतुकाच्चमयेरितम् १४ मानयत्यंतरंयोनातयोश्श्रीरामकृष्णयोः ॥ परस्परंसनिरयेपातिष्यतिनसं
शयः॥ त्वद्गर्वपरिहारार्थंखेचर्याराघवःस्तुतः १५ इत्युक्त्वासांत्वयित्वातंरामःकृष्णाव्हयंद्विजम् ॥ तूष्णींतस्थौसभामध्येसभासद्भिःसुपूजितः १६ ततस्तौमाधवासातिस्वं
स्वंदेशंप्रजग्मतुः ॥ तस्माच्छिष्यावतारेषुनरामस्सदृशःपरः १७ अतस्तंभजभावेनतस्यैवचरितंशृणु ॥ यदन्यद्वर्णयाम्यग्रेमहामंगलकारकम् ११८ ॥ इति श्रीशतको
टिरामचरितांतर्गतश्रीसदानन्दरामायणेवाल्मीकीयेराज्यकांडेपूर्वार्द्धेश्रीरामकृष्णोपासकयोर्विवादोनामतृतीयःसर्गः ॥ ३ ॥ रामदासउवाच ॥ एकदाराघवःशिष्यसमासं
स्थोजनैर्वृतः ॥ ददर्शद्राक्षावल्लीनांमंडपेकाकमुत्तमम् १उभयोर्नेत्रयोरेकनेत्रमूर्तिसमन्वितम् ॥ अतिदीनंकृशंव्यग्रदृष्टिंदीर्घस्वरंचलम् २मुहुर्मुहुश्चपश्यंतमात्मानंशब्दपूर्वकं॥
तंदृष्ट्वातत्कृपाविष्टःस्मृत्वाक्रोधंपुराकृतम् ३ उवाचकाकंश्रीरामःसुखमागच्छमेंऽतिकम्॥ तद्रामवचनंश्रुत्वाद्राक्षावल्याश्चमंडपात् ४ शीघ्रमुड्डीयकाकस्तुरामाग्रेसदसिस्थि ॥ ६ ॥
तः॥ रामंपश्यन्दीर्घस्वरंसचकारमुहुर्मुहुः ५ तदातंराघवःप्राहतत्कृपाविष्टमानसः॥ नेत्रंविनावरानन्यान्काकयाचस्वमांप्रति ६ तद्रामवचनंश्रुत्वाकाकःप्राहावनीपतिम् ॥

१ आकाशवाण्या ।

रूपावलोकनंराममय्यस्तुतवसर्वदा ७ किंवरैरितरैर्व्यर्थैरिहैवसुखदायकैः ॥ तत्काकवचनंश्रुत्वारामस्तंवाक्यमब्रवीत् ८ द्वीपांतरेपुयद्वृत्तंभविष्यंभूतमेवच ॥ वर्तमानंचसक
लंत्वत्नेत्रविषयेऽस्तुतत् ९ भाविकार्याणिसर्वाणिकाकत्वंवेत्सिमद्वरात् ॥ जनाःपश्यंतुतेगत्याशकुनांश्चनिरंतरम् १० स्थिरत्वेस्थिरकार्याणिगतेत्वय्यतिसत्वरम् ॥ भविष्यंति
हिकार्याणिनराणांशकुनेत्विति ११ पश्यंतुसकलाभूम्यांजनाःकार्यप्रसिद्धये ॥ ग्रामेगृहप्रवेशेतेवामभागेनचेद्गतिः १२ गमनेदक्षिणेभागेयदितेगमनंतदा ॥ लोकानामस्तु
शकुनंमहामंगलकारकम् १३ प्रेतदशाहपिंडायचयदिस्पर्शोभवेन्नते ॥ माऽस्तुतर्हिंगतिस्तेषांप्रेतानांममवाक्यतः १४ अंतकालेमानवस्यवांछितंनैवपूरितम् ॥ प्रेतदशा
हपिंडस्यास्पर्शाज्ज्ञानंतुतन्नराः १५ प्रेतस्यवंशजःकश्चिच्चयत्प्रेतस्यवांछितम् ॥ तत्तेस्पर्शाद्विदित्वातुसयदापूरयिष्यति १६ तदापिंडंस्पृशस्त्वत्वंनोचेन्मास्पृशसर्व
था ॥ अन्यमेकंवरंदास्येलिपिमात्रेतुपुस्तके १७ यत्रकिंचिल्लेखकैश्चविस्मृतंतत्रमद्वरात् ॥ कुर्वंतुपदचिन्हंतेसर्वत्रजगतीतले १८ त्वत्पदंपुस्तकेदृष्ट्वाजनाजानंतुविस्मृ
तम् ॥ लिखितंपार्श्वभागेषुलेखकैःपुस्तकस्ययत् १९ इतिदत्वावरान्रामस्तूष्णीमासीत्स्मिताननः ॥ काकोऽपितुष्टःश्रीरामंनत्वोड्डीयगतस्तदा २० एवंनानाचरि
त्राणिचकाररघुनंदनः ॥ एकदाराघवोरात्रौपारिजाततरोरधः २१ निद्रितोहेमपर्यंकेजानक्याऽस्पृश्ययाविना ॥ एतस्मिन्नंतरेतस्यांरात्रौतेरामरक्षकाः २२ द्वारपा
श्चाऽपिदास्यश्चदासाद्याःसकलास्तदा ॥ यद्युर्वकीर्त्तनंश्रोतुंकाऽपिरामस्यभक्तितः २३ दृष्ट्वातंसमयंवैभात्कामबाणप्रपीडिताः ॥ पौराणांशतनार्यस्तावस्त्रालंकारभूषि
ताः २४ तारुण्यमदसंभ्रांताहेमकुम्भपयोधराः ॥ चंद्राननाःशुकघ्राणाःकमलाद्ध्योष्ठगीदृशः २५ पीतकौशेयवसनारुक्मनूपुरनिःस्वनाः ॥ परस्परंताःसंमंत्र्यप्रथमेव
यासेस्थिताः ॥ ययुःसर्वाःपुष्पकेश्रीराघवंरहसिस्थितम् २६ काचित्तंवीजयामासश्रीरामंव्यजनेनहि ॥ काचिद्दधाररामार्थंस्वकरेपुष्पमालिकाम् २७ काचित्तांबूल
पात्रेचकाचित्कुंभेजलस्यसा ॥ पात्रंनिष्ठीवनस्याऽन्यासादधारविलासिनी २८ दधारचंदनंकाचित्काचिद्दिव्यान्नमुत्तमम् ॥ काचित्पक्वान्ननैवेद्यंकाचिद्रंभाफलादिकम् २९
एतस्मिन्नंतरेकाचित्पादसंवाहनंशनैः ॥ रामस्यकर्तुमुत्सुकातत्पदंपाणिनाऽस्पृशत् ३० तेनरामःप्रबुद्धोऽभूत्स्मृत्वाऽस्पृश्यांविदेहजाम् ॥ केनमेस्पर्शितःपादश्चकितश्चे
त्युपाविशत् ३१ तावद्ददर्शश्रीरामःशतस्त्रीश्चपुरस्थिताः ॥ पौराणांप्रमदाःसर्वारुक्मालंकारमंडिताः ३२ रामंसमुत्थितंदृष्ट्वाप्रणेमुस्तास्तदाभुवि ॥ स्वशिरांसिनिधा
याऽथतुउच्चैर्विविधोक्तिभिः ३३ ताःसर्वाराघवःप्राहकिमर्थमिहपुष्पके ॥ रात्रौसमागताःसर्वास्तथ्यंमांकथ्यतांस्त्रियः ३४ तद्रामवचनंश्रुत्वाविलज्जंत्यःपुरस्त्रियः ॥ अ
वाङ्मुखाःसंस्थितास्तास्तूष्णीमेवसमंततः ३५ तासुकाचित्तदारामंगतलज्जाऽब्रवीद्वचः ॥ सर्वंजानंतिप्रभवोयदर्थमागतावयम् ३६ उपेक्षणीयानोरामवयंसर्वाःस्त्रिय
स्त्वया ॥ इतितासामभिप्रायंज्ञात्वासरघुनन्दनः ३७ अब्रवीन्मधुरंवाक्यंशृणुध्वंप्रमदोत्तमाः ॥ एकपत्नीव्रतंमेऽस्तिमातृतुल्याःस्त्रियोमम ३८ इतराःसकलाःसीता
रहितांश्चेहजन्मनि ॥ गच्छध्वंनिजगेहानिमाऽधर्मंस्तुमयिद्रुपे ३९ राज्यंशासतिभोनार्यःक्षमितंवोऽपराधितम् ॥ इतितारामवाग्बाणैःकामबाणप्रपीडिताः ४०

१ दर्पणमितिपाठः।

ताडिताश्चविशेषेणनिपेतुर्मूच्छिताभुवि ॥ पतितास्तानिरीक्ष्याथसर्वारामोऽतिविह्वलः ४१ ताउवाचपुनःशीघ्रंसुस्तुवाक्यैःकृपान्वितः ॥ शृणुध्वंमेवचोनार्यःसकद्रत्या
मयासह ४२ युष्माकंनभवेत्तुष्टिर्व्रतभंगोऽपिमेभवेत् ॥ अतःशृणुतमेवाक्यंयागेपूर्वंमयार्पिता ४३ गुरवेदक्रमजाश्चैवसीतायाःशतमूर्तयः ॥ तासांफलेनयुष्माभिर्द्वापरे
क्रीडनंचिरम् ४४ करिष्यामिनसंदेहःकृष्णरूपेणवैसुखम् ॥ नानारूपाणांयुष्माभिर्भवध्वंबालिकास्तदा ४५ भौमासुरश्चयुष्माकंसंहरिष्यतिवैयदा ॥ तदासर्वांमोच
यामिहत्वातंजगतीसुतम् ४६ करिष्यामिविवाहांश्चयुष्माभिर्द्वारिकापुरि ॥ स्त्रीषोडशसहस्त्राणामूर्ध्वंतोऽन्याःशतंत्वहम् ४७इतिरामवचःश्रुत्वातुष्टास्ताःपुरयोषितः ॥
नत्वारामंययुःसर्वास्तूर्ष्णीस्वंस्वंगृहंप्रति ४८ ततस्त्रीस्ताविसर्ज्याँसौरामोदासीःसमाव्हयत् ॥ दृष्ट्वाकामपिनोदासींरामोदासांस्तदाव्हयत् ४९ तेष्वप्येकंनदृष्ट्वासद्वार
पालान्समाह्वयत् ॥ तानप्यदृष्ट्वारामस्तुरक्षकांश्चसमाह्वयत् ५० तेष्वप्येकंनदृष्ट्वासराघवश्चातिविस्मितः ॥ विमानाट्टाल्माराह्यसौमित्रिंसमाह्वयत् ५१ ऊर्मिलाराम
वाक्यंतच्छ्रुत्वातंचालयत्पतिम् ॥ ऊर्मिलाचालनाच्छीघ्रंप्रबुद्धोऽभूत्सलक्ष्मणः ५२ रामवाक्यंसोऽपिश्रुत्वारतिशालाबहिर्ययौ ॥ दत्त्वाप्रत्युत्तरंरामंययौ वेगेनलक्ष्मणः
५३ एतस्मिन्नंतरेरामोरोदनंनगराद्बहिः ॥ शुश्रावस्त्रीकृतंघोरंकिमिदंचेतिविस्मितः ५४ ततोदृष्ट्वाससौमित्रिंसर्ववृत्तंन्यवेदयत् ॥ लक्ष्मणोरामवाक्यंतच्छ्रुत्वादूतान्निजां
स्तदा ५५ प्रेष्यदूतान्कीर्तनस्थानाव्हयामासवेगतः ॥ रामदूतास्तदोचुस्तान्कथंश्रीरामकीर्तनम् ५६ असमाप्तिंविहायाऽद्यगंतव्यंस्वामिनंप्रति ॥ तेष्वेवकेचिद्दूचु
स्तेपालनीयातुसेवकैः ५७ प्रभोराज्ञाऽद्यचास्माभिर्नोचेन्नःपातकंस्पृशेत् ॥ केचिदूचुरिदंतस्यकीर्तनंमंगलप्रदम् ५८ स्वाम्याज्ञाभंगदोषघ्नंकथंत्यक्त्वाप्रगम्यताम् ॥
केचिदूचुःकीर्तनस्थानंश्रुत्वाऽस्मान्ससुखीभवेत् ५९ इतिसंदिग्धचित्तास्तेनतदाराघवंययुः ॥ ततोलक्ष्मणदूतास्तेरामंवृत्तंन्यवेदयन् ६० ततःकिंचित्कोपयुक्तःसौ
मित्रिंप्राहराघवः ॥ मत्कीर्तनसमासक्तान्नाहंदण्डयितुंक्षमः ६१ तथाप्येतन्नयोग्यंहिकिंचिच्छिक्षांकरोम्यहम् ॥ इत्युक्त्वातांतुरुदतींपुनःश्रुत्वाषहिःप्रभुः ६२ विमानं
प्राहगच्छाद्यबहिःपुर्याःस्त्रियंप्रति ॥ तथेतिरामवाक्येनययौतन्नगराद्बहिः ६३ यत्रसाऽतिविलापंस्त्रीकरोतिशरयूतटे ॥ तामंजननिभांनारींरुदतींराघवोब्रवीत् ॥
६४ ॥ ॥ रामउवाच ॥ ॥ किंतेदुःखंवदस्वाऽद्यकात्वंरोदिषिवैकथम् ॥ इतिरामवचःश्रुत्वासारामंवाक्यमब्रवीत् ६५ चिरकालंकरोम्यत्ररोदनंरघुनन्दन ॥
अद्यश्रुतंत्वयारामकिंचित्पुण्यचयान्मुनेः ६६ निर्मिताविधिनापूर्वंनिद्रानाम्नीत्वहंप्रभो ॥ दत्तंतेनममस्थानंकुंभकर्णेचिरंसुखम् ६७ यावत्कालंस्थितारामसत्वयानिह
तोरणे ॥ ततोनष्टनिवासाऽहंगताशीघ्रंविधिंप्रति ६८ तेनत्वांप्रेषितारामततःप्राप्तास्मिमांपुरीम् ॥ सीमाचारभयादस्यांनगर्यांनगतिर्मम ६९ अत्रैवसंस्थितारामशोचं
तीशरयूतटे ॥ मेस्थानंवदरामाऽद्ययत्रस्थास्याम्यहंसुखम् ७० ततस्यावचनंश्रुत्वाराघवोवाक्यमब्रवीत् ॥ स्मृत्वादूतकृतंपूर्वंतदाकोपेनचोदितः ७१ निद्रेशृणुवचो
मेऽद्यतेस्थानंकीर्तयाम्यहम् ॥ पापात्मानोनराभूम्यांयेशृण्वंतिहिकीर्तनम् ७२ पुराणश्रवणंवेदपठनंपूजनंजपम् ॥ तपोध्यानंचहोमादियद्यत्कुर्वंतिपापिनः ७३ तेषु

१ परयोषितइतिपाठः ।

त्वंतिष्ठमद्वाक्यादीनदैवनरेष्वपि ॥ जडेबालेऽथगुर्विण्यासुपवासोत्तराशिते ७४ तथाविद्यार्थीनिश्रांतिवर्तिजागरकामुके ॥ एतेषुतेस्थलंदत्तमेतान्मोहयमद्वरात ७५ त
द्रामवचनंश्रुत्वासातुष्टाप्रणनामतम् ॥ ययौरामःस्वनगरींसुखंनिद्रांचकारवै ७६ तदारभ्यपुरोक्तेषुवासंनिद्राऽकरोत्सुखम् ॥ पापात्मनामतोनिद्रावाधतेपुण्यकर्मसु
७७ तदारभ्यसेवकेषुनरेष्वप्यवनीतले ॥ निद्राग्रस्तेषुपुण्यात्मासहस्रेष्वपिकश्चन ७८ शुश्रावतत्कीर्तनादिचकारपूजनादिकम् ॥ ॥ रामदासउवाच ॥ ॥ अथा
न्यांसंप्रवक्ष्यामिकथांसीतायशस्करीम् ७९ कुंभकर्णस्यपुत्रस्यनिकुंभस्यचगुर्विणी ॥ प्रसूत्यर्थंपितुर्गेहंगताद्वीपांतरंप्रिया ८० रावणादिवधेजातेतस्यांजातस्तुपौंड्रकः ॥
मायापुर्यांशताशिराःशतद्वयकरःपुरा ८१ श्रोणानदीतटेचासीद्रावणःक्षीरसागरे ॥ सहायात्पौंड्रकस्तस्योद्वेजयित्वाविभीषणम् ८२ शताननेनवैसार्धंलंकाराज्यंचकार
सः ॥ ततोविभीषणोरामंगत्वासर्वंन्यवेदयत ८३ सीताविभीषणाभ्यांवैरामोलंकांययौद्रुतम् ॥ निहत्यरावणंसीतायुद्धेरामेजितेऽथतम् ८४ विभीषणायतांलंकांहत्वातं
पौंड्रकंददौ ॥ अथैकदासभासंस्थंराघवंसविभीषणः ८५ ययौविषण्णःसचिवैश्चतुर्भिःससुतःस्त्रिया ॥ नत्वारामंसाश्रुनेत्रश्चोच्छ्वसन्कंपिताधरः ८६ उवाचसकलंवृत्तंलं
कायाःप्रस्खलद्गिरा ॥ रामराजीवपत्राक्षत्राहिमांशरणागतम् ८७ मूलर्क्षेकुंभकर्णेनजातःपुत्रःपुरावने ॥ दूतैस्त्यक्तोवृक्षमूलेबालकस्तत्रवर्द्धितः ८८ मक्षिकाभिःस्रव
मनजलस्याबिंदुभिर्मुहुः ॥ सोऽधुनातरुणःश्रुत्वात्वत्कृतंस्वकुलक्षयम् ८९ तपसातोष्यब्रह्माणंतद्वरेणातिगर्वितः ॥ पातालस्थैराक्षसैश्चलंकायांसमुपागतः ९० मयातेन
तुषण्मासकृतंयुद्धंमहत्तमम् ॥ मांजित्वासपुरींयातस्तदाहंसचिवैःस्त्रिया ९१ सपुत्रोगुप्तमार्गेणभूमिजेनपलायितः ॥ शनैर्विवरमार्गेणलंकायायोजनोपरि ९२ रात्रौबहि
र्विनिर्गत्यविवरात्त्वांसमागतः ॥ मूलर्क्षेयस्ससमुत्पन्नस्तरुमूलेविवर्द्धितः ९३ मूलकासुरनाम्नाऽतःपरांख्यातिंगतोऽधुना ॥ संगरेतेनमासुक्तमादौत्वांतुविभीषणम् ९४
हत्वालंकापुरींप्राप्यततोगच्छामिराघवम् ॥ मत्पितानिहतोयेननिहतंसकलंकुलम् ९५ तंरामंसंगरेहत्वाऽनृण्यंगच्छाम्यहंपितुः ॥ आगमिष्यतिसोऽत्रापित्वांयोद्धुंरघुनं
दन ९६ इदानींयद्धितंचाद्यतत्कुरुष्वरघूत्तम ॥ तत्तस्यसकलंवृत्तंश्रुत्वारामोऽतिविस्मितः ९७ लक्ष्मणंप्राहवेगेनपार्थिवान्जगतीतले ॥ स्वस्वराज्यस्थितान्स
र्वान्दूतैराकारयाऽधुना ९८ तथेतिरामवचनाद्दूतानाज्ञापयत्तदा ॥ लक्ष्मणस्तेऽपिवेगेनगत्वाद्दूताःसमागताः ९९ प्रोचुःसभायांश्रीरामंनृपाणांवचनानिते ॥
केचिन्नृपाःपालयंतितवाज्ञांरघुनन्दन १०० केचिन्नपालयंत्याज्ञांतवतत्कारणंशृणु ॥ चंपिकायाःसुमत्याश्चस्वयंवरसमुद्भवम् १०१ दुःखंहृदयसंस्थंयत्तदद्यापिग
तंनहि ॥ यूपकेतुशराघातभिन्नमर्मस्थलाःपुनः १०२ स्मृत्वामदनसुंदर्यादुःखंकोत्युद्भवंनृपाः ॥ आज्ञांनपालयंत्यद्यतवराघवसत्प्रभो १०३ पालितायैस्तवाज्ञातेसुग्री
वाद्यान्नृपोत्तमाः ॥ स्वस्वकोटिबलैर्युक्ताःसमायाताःसहस्रशः १०४ तद्दूतवचनंश्रुत्वारामोराजीवलोचनः ॥ प्राहमद्बाणघातास्तेस्पृहयंतिनृपाधमाः १०५ आदौहत्वा
३५ कौंभकर्णितान्गच्छामिततस्त्वहम् ॥ इत्युक्त्वासुदिनेरामःसेनयाबंधुभिर्जवात ६ मूळकासुरघातार्थमादौपुर्याबहिर्ययौ ॥ किंचित्सैन्ययुतंपुर्यांयूपकेतुंन्यवेशयत १०७

१ नरे बप्यवनीपतोइतिपाठः ।

कुशाद्याःसप्तबालास्तेरामेणसहनिर्ययुः ॥ विमानेसकलांसेनांस्थापयामासराघवः ८ तावत्तेपार्थिवाःसर्वेनानावाहनसंस्थिताः ॥ वेष्टिताःस्वस्वसैन्यैश्चनत्वारामंपुरःस्थि
ताः ९ तान्रामःस्थापयामासविमानेसैन्यसंयुतान् ॥ अष्टादशपद्ममितैःकपिभिःकंपिराड्ययौ १० आरुरोहविमानाग्र्यंकपिभीराघवाज्ञया ॥ ततस्सीतांविनारामः
स्वयंस्थित्वातुपुष्पके ११ पश्यन्नानाविधान्देशान्ययौलंकांविहायसा ॥ यात्राकालेयथायानरचनासीत्तथापुनः १२ ततोरामंसमायातंश्रुत्वासमूल्कासुरः ॥ ययौलं
कांबहिर्योद्धुंराघवेणबलीयसा १३ दशकोटिमितांसेनांबिभ्रन्कंवरदर्पितः ॥ ततस्तेराक्षसाःपाद्मैर्निहन्युःप्लवगान्मुहुः १४ वानराराक्षसांश्चाऽपितेनिहन्युर्द्रुमनगैः ॥ ए
वंबभूवतद्युद्धंतुमुलंदिनसप्तकम् १५ तत्रयेयेहृतायुद्धेवानरास्तान्समारुतिः ॥ द्रोणाचलंसमानीयजीवयामासपूर्ववत् १६ततःसाराक्षसीसेनाचतुर्थांशावशेषिता ॥ तान्न
ष्टान्राक्षसेंद्रःसदृष्ट्वाक्रोधयुतस्तदा १७ मंत्रिणश्चोदयामासतथासेनापतीन्बलैः ॥ तानागतान्रणभुवंरामवीराःसहस्रशः १८ शतघ्नीभिर्हस्तयंत्रैर्भिदिपालभुशुंडिभिः ॥
परिघैःपाट्टिशैःशूलैःकुंतैःखङ्गैर्विमर्दयन् १९ तेऽपितालैस्तमालैश्चहिंतालैश्चद्रुमनगैः ॥ शालैःशिलाभिःश्रीरामवीरान्संमर्दयन्रणे २० पुनर्युद्धंमहच्चासीत्तुमुलंरोमहर्षणं॥
ततस्तान्मंत्रिणःसर्वांस्तथासेनापतीनपि २१ रामवीराःक्षणेनैवचक्रुःसंयमिनीगतान् ॥ तान्सर्वान्निहतान्श्रुत्वाक्रोधेनमूल्कासुरः २२ स्वयंदिव्यरथेस्थित्वाकिंचित्सैन्य
युतोययौ ॥ तमागतंनृपाद्दृष्ट्वाययुर्योद्धुंसहस्रशः २३ ववर्षुःशरजालैश्चचक्रुर्दुन्दुभिनिःस्वनान् ॥ तान्सर्वान्राक्षसेंद्रःसचकारभुविमूर्छितान् २४ तान्मूर्छितान्नृपान्दृष्ट्वा
योद्धुंतेनपुनर्ययुः ॥ सुमंत्राद्यामंत्रिणश्चराघवस्याज्ञयाबलैः २५ तान्सर्वान्मूर्छितान्बाणैश्चकारमूल्कासुरः ॥ मूर्छितान्मंत्रिणोदृष्ट्वाकुशाद्याबाल्काययुः २६ ततोब
भूवतुमुलंयुद्धंतल्लोमहर्षणम् ॥ ततकुशःस्वबाणौघैर्लंकायांमूल्कासुरम् २७ प्रक्षिपद्द्रुममध्येसपापातपुनरुत्थितः ॥ ततोऽभिचारिकंहोमंरथशस्त्रार्थमुत्तमम् २८ कर्तुं
विवेशसगुहांबध्वाद्वाराण्यनेकशः ॥ ततोविभीषणःप्राहहोमधूमंनिरीक्ष्यच २९ राघवंकल्पवृक्षाऽधःसंस्थितंबंधुवेष्टितम् ॥ होमंकरोत्ययंदुष्टःप्रेषयस्वकपीन्पुनः १३०
होमेसमाप्तेऽजेयःसभविष्यतिमहासुरः ॥ एतस्मिन्नंतरेब्रह्माययौरामंसुरैर्युतः ३१ नत्वातंराघवश्चाऽपिपूजयामाससादरम् ॥ तदाहराघवंब्रह्मावरस्त्वस्मैमयाऽर्पितः ३२
यदावीरान्नमेमृत्युर्भवत्वितिपुरामम ॥ अनेनयाचितंरामतर्पोतिंऽगीकृतंमया ३३ अतोऽस्यपुरुषान्मृत्युर्नभविष्यतिराघव ॥ स्त्रीहस्तान्मरणंचास्यविद्धित्वंरघुनन्द
न ३४ अन्यत्किंचित्प्रवक्ष्यामिकारणंमरणेऽस्यहि ॥ एकदाशोकयुक्तेनपुराऽनेनद्विजाग्रतः ३५ सीताचंडीनिमित्तेनजातोमेऽद्यकुलक्षयः ॥ इतियन्निष्ठुरंवाक्यमुक्तं
तन्मुनिभिःश्रुतम् ३६ तेष्वेकस्तंमुनिःक्रोधाद्ददौशापंहिराक्षसम् ॥ याचंडीतित्वयोक्तासाऽद्यैवत्वांमारयिष्यति ३७ तन्मुनेर्वचनंश्रुत्वातंजघानसराक्षसः ॥ तद्भीत्या
मुनयःसर्वेतूष्णींभूताःस्थिताःपुरा ३८ तस्मात्तन्मुनिवाक्येनममापिवरदानतः ॥ सीताहस्तान्मृतिश्चाऽस्यभविष्यतिनसंशयः ३९ अतःसीतांसमानीयतयैनंजहिरा
क्षसम् ॥ इत्युक्त्वाराममामंत्र्यययौवेधानिजंपदम् १४० रामोऽपिब्रह्मवचनंश्रुत्वाप्राहविभीषणम् ॥ मूल्कासुरहोमायनकार्यंविघ्नमद्यहि ४१ सीतायामत्रयातायांविघ्नं ॥ ८ ॥

१ सुग्रीवः । २ ब्रह्मदेववरदर्पितः । ३ यमलोकगतान् । ४ कबंधेश्वरविषाद्धः ।

कार्यंप्लवंगमैः ॥ इत्युक्त्वागरुडंप्राहरामःपुष्पकसंस्थितः ४२ अयोध्यांगच्छशीघ्रंत्वंवायुपुत्रेणमद्गिरा ॥ तामत्रानयवैदेहींस्वपृष्ठेतांनिवेश्यच ४३ समंततस्त्वांदुष्टेभ्यः
पथिरक्षतुमारुतिः ॥ तथेतिरामवचनमुररीकृत्यसादरम् ॥ तावुभौराघवंनत्वाऽयोध्यांशीघ्रंप्रजग्मतुः ४४ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे
वाल्मीकीये राज्यकांडे पूर्वार्द्धे शतनारीवरप्रदानंमूलकासुराख्यानंनामचतुर्थःसर्गः ॥ ४ ॥ ॥ श्रीरामदासउवाच ॥ अथभूमिसुताऽयोध्यापुर्यांसाह्यदिराघवम् ॥
स्मरंत्यासीत्तद्विरहाद्व्याकुलाऽन्नापशंक्षणम् १ प्रासादेसाकदातस्थौकदाप्रासादमूर्धनि ॥ कदाद्राक्षामंडपाधःकदासंन्यस्तभूषणा २ वारस्त्रीणांकदानृत्यंददर्शजनकात्म
जा ॥ कदाजयार्थरामस्यकार्तवीर्यंप्रपूजयत् ३ कदाऽकरोच्चतुलसीशिवाश्वत्थान्प्रदक्षिणाः ॥ मन्युसूक्तानिविप्रैश्चपाठयामासजानकी ४ गोमयेनांजनेयंसाकुड्यांकृत्वा
र्च्यंजानकी ॥ अकरोत्प्रत्यहंपुच्छवृद्धिंस्वांगुलिमात्रतः ५ शतरुद्रीयसूक्तस्यजयार्थराघवस्यसा ॥ पाठानकारयद्विप्रैस्तथादुर्गांप्रपूजयत् ६ गणेशंमारुतिंशंभुंसदैता
न्जलवर्तिनः ॥ चकारबध्वाद्वाराणिगवाक्षैःसेचयज्जलम् ७ कार्तवीर्यस्ययंत्राणिस्थापयामासजानकी ॥ मंचकेराघवेंद्रस्यपूजयामाससर्वदा ८ कदासखीमध्यगासा
त्यक्तालंकारमण्डना ॥ जलयंत्रांतिकेनिद्रांनापतद्विरहाग्निना ९ कदानिरीक्ष्यप्रासादेकाकमाहविदेहजा ॥ यदिशीघ्रंराघवस्यदर्शनंमेभविष्यति १० तर्हित्वंगच्छवेगेननो
चेदत्रस्थिरोभव ॥ तत्सीतावचनंश्रुत्वाकाकस्तूड्डीयवैगतः ११ तेनकिंचित्समाश्वस्तापवनंप्राहजानकी ॥ स्पृष्ट्वात्वंराघवांगानिमांस्पर्शंकर्तुमर्हसि १२ कदाचंद्रंनिशि
प्राहत्वंस्पृष्ट्वाशीतलैःकरैः ॥ श्रीराममांस्पृशस्वाऽद्यस्वकरैःसुखकारकैः १३ शुक्लपक्षेद्वितीयायांसीताऽलंकारमण्डिता ॥ स्नात्वाप्रासादशिखरात्सखीभिःपरिवेष्टिता १४
अपश्यच्छशिनंहर्षाद्दिनेरामोऽप्यपश्यति ॥ अंतरेणाऽद्यरामस्यसंयोगोमेभवेदिति १५ रामेगतेकदासीताहरिद्राकज्जलादिकैः ॥ नात्मानंभूषयामासह्यत्रिपत्न्यर्पितंविना
१६ चंदनपुष्पमालाश्चपुष्पशय्यांविदेहजा ॥ नांगीचकारश्रीरामविरहानलपीडिता १७ शकुनान्सादद्दर्शाथश्रीरामदर्शनेच्छया ॥ तुष्टाऽभूच्छकुनैःश्रुत्वाशीघ्रंरामसमा
गमः १८ भवेदितिसखीयुक्तादद्दौसर्वान्सुशर्कराः ॥ कदापरस्पृष्टंसीतानययौराघवंविना १९ नैकातस्थौक्वाऽपिसीतास्वाभ्यंगोद्वर्तनंजहौ ॥ नमिष्टान्नंनतांबूलंनगी
तंकेशबंधनम् २० अंगीचकारश्रीरामविरहानलदीपिता ॥ संभाषणंसानाऽन्येनपुरुषेणाऽकरोत्कदा २१ नाऽकरोत्सस्मितंवक्त्रंनोर्ध्वास्यान्यंददर्शसा ॥ अन्याक्षिगोच
रानाभून्नसंतुष्टाभवत्कदा २२ पर्यंकेशयनंसीतानाकरोद्राघवंविना ॥ मुकुरेनददर्शेत्थंसुखंविरहपांडुरम् २३ नदधौवसनंचित्रंनचित्रांकंचुकींदधौ ॥ नतस्थौद्वारदेशे
सादेहल्यंगणभूमिषु २४ नययौशरयूंस्नातुंययौनोपवनंवनम् ॥ आरामंनययौसीतानतथापुष्पवाटिकाम् २५ नचकारस्वतोदूरंमांगल्यानिविदेहजा ॥ वस्तूनि
द्विजपत्नीस्तैस्तोषयामासजानकी २६ नियमानकरोन्नानादेवीनांचपृथक्पृथक् ॥ नियमैश्चव्रतैस्तस्थौस्वयंनित्यंविदेहजा २७ वटकानांमहामालामर्पयामिहनूम
ते ॥ मोदकान्गणराजायदास्यामिपूरणान्वितान् २८ सिद्धान्नेनाऽपिनैवेद्यंतेदास्यामिगणाधिप ॥ दुर्गेत्वांबलिदानंचकरिष्यामिप्रसीदमे २९ चण्डिकेत्वांप्रदास्या

१ व्याकुलाशुक्लाक्षिणीइतिपाठः ।

 मिरक्तंजिह्वोद्भवंत्वहम् ॥ सुश्वन्नमाषसंयुक्तंबलिदीपसमन्वितम् ३० शीघ्रंरामोजयंप्राप्यशिशुभिर्यातुवैपुरीम् ॥ मंदवारेकरिष्यामिपंचचोपोषणान्यहम् ३१ नोपभो 
क्ष्यामिमधुरंनोपभोक्ष्याम्यहंघृतम् ॥ मासमेकंकरिष्यामिव्रतान्येवंसविस्तरात् ३२ कृष्णपक्षेतृतीयायांचतुर्थ्यांवामहेश्वरि ॥ किंचित्किंचिन्मासिमासितिलवृद्धिविधाय
 च ३३ गुडेनाहंतिलान्भोक्ष्येयावच्छ्रीरामदर्शनम् ॥ भविष्यतिकुशाद्यैश्चलक्ष्मणाद्यैश्चबंधुभिः ३४ सत्वरंनवरात्रंचसखीभिश्चकरोम्यहम् ॥ एकस्मिन्नेवदिवसेनव 
भिःप्रभुदर्शने ३५ रविवारेकरिष्यामिरवेऽहंपूजनंतव ॥ इत्थंदिनेदिनेसीतानियमानकरोत्तदा ३६ ब्राह्मणैरर्घ्यदानंचकारयामासजानकी ॥ नसासुष्वापरात्रौतुदिवावा
वरवर्णिनी ३७ एवंदिनेदिनेसीताश्रीरामविरहातुरा ॥ नशमापकापिदेशेश्रीरामार्पितमानसा ३८ एवंताऊर्मिलाद्याश्चचंपिकाद्याऽपिवैस्त्रियः ॥ स्वस्वस्वामिवियो
गाग्निज्वलिताव्याकुलाःक्षणम् ३९ नसुखंकापिवैप्रापुःस्वकांतार्पितमानसाः ॥ सर्वांस्तालुलुठुर्नार्योमणिभूमौस्त्रगोदृशः ४० काचिन्नर्तयतिक्रीडामयूरंनमुदातदा ॥
शुकंनपाठयत्यन्यापंजरस्थंकुतूहलात् ४१ लालयेन्नकुलंनान्यानालापयतिसारिकम् ॥ अपराऽतीवसंतप्तानैवखेलतिसारसैः ४२ मेजिरेनविलासंतारेमिरेनैवमंदि
रे ॥ सखीभिरूचिरेनाऽलंवीणावाद्यंनशुश्रुवुः ४३ कल्पद्रुमप्रसूतंयद्रसवत्तत्सुधोपमम् ॥ मंदारकुसुमामोदंनपपुर्मधुरंमधु ४४ योगिन्यइवताःसुग्घानासाग्रन्यस्त
लोचनाः ॥ अलक्ष्यध्यानसंधानाःस्वनाथार्पितमानसाः ४५ चंद्रकांतमणिच्छन्नेस्त्रवद्वारिकणद्रवे ॥ क्षणंवातायनेस्थित्वाजलयंत्रेक्षणंक्वचित् ४६ रचयंतिक्षणंशय्यां
दीर्घिकांभोजिनीदलैः ॥ वीज्यमानाःसखीभिस्ताःशीतलैःकदलीदलैः ४७ इत्थंयुगसमारात्रिंदिनंतामेनिरेसदा ॥ कथंचिद्दारणांकृत्वाविह्वलाःसज्वराःस्थिताः ४८
एतस्मिन्नंतरेसीतानियमैश्चव्रतादिभिः ॥ समानीतावांजनेयगरुडावीयतुःपुरीम् ४९ प्रस्फुरच्चभुजोवामःसीतायानयनंतथा ॥ सुचिन्हंमन्यमानासाकिंचित्तुष्टाऽभ
वत्तदा ५० अथतौकंपनोद्भूतगरुडौसदसिस्थितम् ॥ अयोध्यायांयूपकेतुंवृत्तंकथयतोजवात् ५१ तच्छ्रुत्वायूपकेतुःसवृत्तंसीतान्यवेदयत् ॥ सातुतुष्टमनाःसीतातस्मि
न्नेवदिनेशुभे ५२ रामवाक्यादारुरोहगरुडंवेगवत्तरम् ॥ अग्निहोत्रंपुरस्कृत्यऋत्विग्भिश्चपुरोधसा ५३ पतिंविनाऽग्निनानारीसीमासुलंघ्यनव्रजेत् ॥ सदोषोऽत्रन
विज्ञेयःसीतोद्योगेविहायसा ५४ भयेप्राप्तेप्रवासेऽपिस्त्रीणामुक्तोऽग्निभिःसह ॥ पतिनारहितानांचनदोषःकथ्यतेऽत्रहि ५५ भूमिगैर्ब्राह्मणाद्यैश्चनदेवचरितंचरेत् ॥
ततःसरक्षयामासगाकृतिस्तांसमंततः ५६ पश्यंतीविविधान्देशान्सीतालंकांययौमुदा ॥ ददर्शकल्पवृक्षाधःपुष्पकस्थंरघूत्तमम् ५७ ननामशिरसाभक्त्यासाऽवरुह्य
खगाधिपात् ॥ तांदृष्ट्वाराघवःप्राहसीतेतेऽद्यसुखंकथम् ५८ विवर्णमंगयष्टिस्तेकृशाऽद्यपरिलक्ष्यते ॥ तद्रामवचनंश्रुत्वाजानकीसस्मितानना ५९ विलज्जंतीवि
नोदेनराघवंप्राहसादरम् ॥ स्वामिंस्त्वद्विरहादेतत्सर्वंत्वंविद्धिराघव ६० ननिद्रामिनजागर्मिनाश्नामिनपिबाम्यहम् ॥ ध्यायाम्यहंकेवलंत्वांयोगिनीवविवियोगिनी ६१ निद्राद 
रिद्रनयनास्वप्नेऽपिनतवाननम् ॥ आनंदिसर्वथायन्मेमंदभाग्याविलोकये ६२ त्वदाननप्रतिनिधिर्विधुर्विधुरयामया ॥ उदितोऽपिनचालोकितापं वैत्यकुकामया ६३

१ प्रस्फुरद्भूर्भुजोवामइतिपाठः । २ भस्नापीतिपाठः ।

त्वदालापसमालापंकल्पयन्नकिल्काकली ॥ कोकिलोऽपिमयाकर्णिनाल्काकीर्णकर्णया ६४ त्वदंगसंगमधुरोधवधूपितयामया ॥ नानिलोऽपिमयालिंगिकचिंद्विश्रांतयाश्रूशम्
६५ नानायमाश्चनियमाजयार्थंतवराघव ॥ कुर्वंत्याममनैवाऽभूत्सुखंत्वद्विरहाग्निना ६६ ततोविहस्यश्रीरामस्तामालिंग्यपुनःपुनः ॥ कराभ्यांतत्स्तनौस्पृष्ट्वापपौविं
बावराम्रतम् ६७ अथापरदिनेरामश्चात्वास्नातांविदेहजाम् ॥ अस्त्रविद्यांशस्त्रविद्यामस्त्राह्वानविसर्जने ६८ शिक्षयामाससकलांधनुर्वेदांसविस्तराम् ॥ रामाज्ञयाल
क्ष्मणोऽपिरथंसिद्धंचकारसः ६९ दारुकःसारथिर्यस्मिन्शस्त्राण्यस्त्राण्यनेकशः ॥ गदापद्मंतुयत्राऽस्तियत्राऽस्तिगरुडोध्वजे ७० यस्मिन्शैब्यश्चसुग्रीवस्तथाचैवबला
हकः ॥ मेघपुष्पश्चचत्वारोवायुगास्तुरगोत्तमाः ७१ यत्रच्छत्रंवरंदिव्यंहेमदण्डंविराजते ॥ यस्मिन्शुक्लेचामरेद्वेयस्मिन्कीलादिरुक्मजम् ७२ तंरथंराघवोदृष्ट्वाजान
कींवाक्यमब्रवीत् ॥ सीतेस्थित्वास्यंदनेऽस्मिन्जहित्वंमूलकासुरम् ७३ तथेतिरामवाक्यात्स्वछायांसीताप्रचोदयत् ॥ तामसीसाऽपितंनत्वापरिक्रम्यपुनःपुनः ७४ आ
रुरोहरथंवेगात्घोराघर्घरनिःस्वना ॥ एतस्मिन्नंतरेरामप्रेरितावानरोत्तमाः ७५ लंकांगत्वापूर्ववच्चहवनात्तंप्रचालयन् ॥ ततस्तेवानरास्सर्वेययुःश्रीराघवंपुनः ७६ ययौ
स्थित्वारथेयोद्धुंक्रोधेनमूलकासुरः ॥ मार्गेभुविपपाताऽस्यमुकुटःस्खलितोभुवि ७७ अनिर्वर्त्यासुरोगर्वाद्ययौरणभुवंजवात् ॥ सीताच्छायाऽपिसैन्येनययौसालक्ष्मणादि
भिः ७८ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दनरामायणे वाल्मीकीये राज्यकांडे पूर्वार्धे सीताविरहोनाम पंचमःसर्गः ॥ ५ ॥ ॥ श्रीरामदास
उवाच ॥ अथछायाटणत्कृत्यशार्ङ्गंतत्रमहद्धनुः ॥ ययौरणभुवंवेगात्तांददर्शाऽसुरोऽपिसः १ करालदंष्ट्रानयनांविद्युत्पिंगशिरोरुहाम् ॥ तालजंघांशूर्पपादांदरिवक्रांघनप्र
भाम् २ लोमशांप्रलम्बजिव्हांविदीर्णास्यांमहच्छिराम् ॥ तांदृष्ट्वाकौंभकर्णिःसभीतःप्राहस्खलद्गिरा ३ कात्वंसमागतास्यत्रकिमर्थंयोद्धुमिच्छसि ॥ ममसर्वंवदस्वत्वंमद
ग्रेमास्थिराभव ४ यदिजीवितुमिच्छास्तिनमेस्त्रीष्वस्तिपौरुषम् ॥ अथसारामसीताभ्यांविमानान्मुहुरीक्षिता ५ तमुवाचतदाछायागिरानर्दयतीगिरीन् ॥ मूलकासुर
तांसीतांचंडांमांविद्धिचंडिकाम् ६ यन्निमित्तात्कुलंनष्टंतवलंकाप्रधर्षिता ॥ मत्पक्षपातिनंविप्रंपूर्वंत्वंहतवानसि ७ तस्यानृण्यंगमिष्यामित्वांहत्वाद्यरणाजिरे ॥ इत्यु
क्त्वाचापमानम्यपंचबाणैर्जघानतम् ८ ततःसोपिधनुर्धृत्वाछायांबाणान्मुमोचह ॥ तद्युद्धंपार्थिवाद्यास्तेजीवितायेहनूमता ९ ददृशुर्वानराःसर्वेपुष्पकाद्वाल्संस्थिताः ॥
सीतयारघुवीरस्तुकल्पवृक्षतलेस्थितः १० रुक्ममाणिक्यपर्यंकेदासीभिःपरिवीजितः ॥ उपबर्हणपृष्ठःसप्टताघौंकोपबर्हणः ११ युद्धंददर्शतच्छायामूलकासुरयोर्महत् ॥
मूलकासुरसंत्यक्तान्बाणांश्छायासमागतान् १२ छित्त्वास्वबाणजालैस्तान्पुनर्बाणान्मुमोचसा ॥ चतुर्भिस्तुरगान्हत्वामुकुटंकवचंधनुः १३ सात्रिभेदत्रिभिर्बाणैस्त
दापच्यांमहासुरः ॥ गत्वाऽन्यंरथमारुह्यछायांयोद्धुंपुनर्ययौ १४ ततश्छायांमुमोचाऽसौवन्ह्यस्त्रंमूलकासुरः ॥ छायामुमोचमेघास्त्रंतद्वन्ह्यस्त्रंन्यवर्तयत् १५ पर्वतास्त्रंकौं
भकर्णिस्ततश्छायांमुमोचसः ॥ न्यवारयत्तच्छायासापवनास्त्रेणपार्वतम् १६ पुनर्मुमोचवेगेनसर्पास्त्रंमूलकासुरः ॥ गारुडास्त्रेणतच्छायाचकारविफलंक्षणात् १७ एवं
तत्तुमुलंयुद्धंबभूवदिनसप्तकम् ॥ तदाछायामहारौद्राचंडिकास्त्रेणतंरिपुम् १८ हंतुकामामहास्त्रंतन्मुमोचमूलकासुरम् ॥ तदाचचालजगतीमर्यादामब्धयस्तदा १९

लंघयामासूरजसाव्याप्ताश्चासंस्तदादिशः ॥ चंडिकाखड्गंतुचिच्छेदमूलकासुरसच्छिरः २० पपातकायोलंकायांराजद्वारिमहाच्छिरः ॥ हाहाकारोमहानासीलंकायांरक्ष
सांतदा २१ निनेदुर्देववाद्यानिदेवाश्चाकाशसंस्थिताः ॥ ववर्षुःकुसुमैश्छायांरामंसीतांमुहुर्मुहुः २२ ततोनिर्वर्त्यसाछायायययौसीतांतिकंपुनः ॥ नत्वारामंचसीतांचसी
तादेहेलयंययौ २३ तदानिनेदुर्वाद्यानिननृतुश्चाप्सरोगणाः ॥ तुष्टुवुर्मागधाद्याश्चजगुर्गीतंनटादयः २४ ततःसुरगणैःसर्वैर्वेधाःश्रीराघवंययौ ॥ नत्वारामंचसीतांचतुष्टा
वजानकींमुदा २५ ॥ ॥ ब्रह्मोवाच ॥ जनकजात्मजेराघवप्रियेकनकभासुरेभक्तपालके ॥ दशरथात्मजप्राणवल्लभेतवपदांबुजालिःशिरोऽस्तुमे २६ मूलकासुरप्राणघा
तकेरामरक्षितेरामसेविते ॥ राममोहिनिस्यंदनास्थितेत्वत्पदांबुजालिःशिरोऽस्तुमे २७ राममंचकाधिष्ठितेरमेरामवीजितेरामलालिते ॥ रामसंस्तुतेरामरंजितेत्वत्पदांबु
जालिःशिरोऽस्तुमे २८ लोकपावनिश्रीरजेवरेभूमिकन्यकेलोकपालिके ॥ पद्मलोचनेलात्मजेपरेत्वत्पदांबुजालिःशिरोऽस्तुमे २९ कंजलोचनेनागगामिनिस्वीयसत्सुखे
रम्यरूपिणि ॥ रुक्मभूषितेमौक्तिकांकितेत्वपदांबुजालिःशिरोऽस्तुमे ३० जलरुहाननेचित्रवासिनित्वमसिसर्वदास्वीयसेवकान् ॥ मुनिरिपूनसदादुःखदायकेत्वत्पदांबु
जालिःशिरोऽस्तुमे ३१ त्वन्मुखेक्षणाद्रक्षसांपतिःप्रापसंक्षयंरामसन्प्रिये ॥ त्वद्दृगीक्षणाल्लज्जितामृगीत्वत्पदांबुजालिःशिरोऽस्तुमे ३२ कुशलवांबिकेजलरुहाननेजलरुहे
क्षणेपापदाहके ॥ मधुरसुस्वनेनूपुरस्वनेत्वत्पदांबुजालिःशिरोऽस्तुमे ३३ घ्राणमुत्तमंतेस्मिताननेतेऽधरःशुभोबिंबसन्निभः ॥ अद्यवैत्वयामूलकासुरोमारितोरणेतारि
तावयम् ३४ ॥ ॥ श्रीरामदासउवाच ॥ ब्रह्मणेरितंनवकमुत्तमंभास्करोदयेपठतियःपुमान् ॥ सर्ववांछितंलभतिसोऽत्रनाप्राप्नुयात्सुखंरामसन्निधिम् ३५ इतिस्तु
त्वामरैर्ब्रह्मावस्त्रालंकारमण्डनैः ॥ सीतांरामंचसंपूज्यराघवेणाऽपिपूजितः ३६ प्रययौरामममामंत्र्यसत्यलोकंमनोरमम् ॥ ततोविभीषणःप्राहलंकायांनत्वयापुरा ३७
समागतमिदानींत्वंमांकृतार्थंकुरुप्रभो ॥ तथेतिप्रतिनंद्याऽथतद्वाक्यंरघुनन्दनः ३८ विमानेनययौलंकांमध्येमित्रगृहंप्रति ॥ ततोविभीषणंराज्येलंकायांत्वभिषेचयत् ॥
३९ तदामहोत्सवश्चासील्लंकायांपरमाद्भुतः ॥ ततोविभीषणोरामंसीतांतांल्लक्ष्मणादिकान् ४० वस्त्रैराभरणैरत्नैःपूजयामाससादरम् ॥ अर्पयामाससर्वस्वंस्वीयंरामाय
राक्षसः ४१ तदाकपिलवाराहमूर्तिरावणपूजिताम् ॥ रामस्तांरोचयामाससोऽपिरामायतांददौ ४२ मनसाकपिलेनैवपुरामूर्तिर्विनिर्मिता ॥ चिरकालंतमाराध्यल
ब्धामघवतातुया ४३ तंजित्वारावणेनैवसमानीतानिजांपुरीम् ॥ यांसदापूजयामासलंकायांरावणश्चिरम् ४४ विभीषणेनसादत्ताराघवायहृषण्मयी ॥ तांमूर्तिस्थापयामा
सविमानेरघुनन्दनः ४५ ततःसीताऽथरामेणदेवरैर्बालकैर्मुदा ॥ अशोकवनिकांगत्वाशिंशिपावृक्षमुत्तमम् ४६ दर्शयामासरामाययत्रपूर्वंस्थितास्वयम् ॥ ततोवामकरे
णैवरामस्यदक्षिणिष्ठिकाम् ४७ धृत्वादक्षिणहस्तस्यसीताबभ्रामतद्वनम् ॥ स्नानासनादिकंपूर्वंयत्रयत्रकृतंवने ४८ रामंनीत्वातत्रतत्रदर्शयामासजानकी ॥ ततस्तांत्रि
जटांसीतावस्त्रैराभरणादिभिः ४९ कृत्वाऽतितुष्टांरामाग्रेसरमांवाक्यमब्रवीत् ॥ अनयारक्षितापूर्वंराक्षसीग्रहमीतितः ५० मत्तुल्यामाननीयेयंसर्वदासरमेत्वया ॥ इत्युक्त्वा

१ स्तवनमुत्तममितिपाठः ।

सरमाहस्तेत्रिजटाकरमर्पयत् ९१ ततोवासस्थलंसीतायय्यौरामेणसाशनैः ॥ एवंनिकुंभिलादीनिदृष्ट्वानानास्थलानिहि ९२ पुष्पकस्थोययौरामोविभीषणसमन्वितः ॥
विभीषणस्यसचिवंलंकायांसंन्यवेशयत् ९३ ततोरामोविमानेनययौशीघ्रंविहायसा ॥ विभीषणस्यरक्षार्थंतस्यैवानुमतेनच ९४ रामःकरेधनुर्धृत्वालंकायाःपरितस्तदा ॥
प्रदक्षिणोपमंवेगाद्भ्रामयामाससादरं ९५ ततोविभीषणंप्राहवचनंरघुनंदनः ॥ राक्षसेंद्रमयाचापरेखार्थंभ्रामितंतव ९६ मच्चापरेखाप्यन्येषांदुःखोत्तीर्याभविष्यति ॥ अ
मुंबाणंमयादत्तंत्वंगृहाणविभीषण ९७ ममनाम्नांकितंतीक्ष्णंतवप्राणस्यरक्षकम् ॥ चापरेखाबाणहस्तंनेयंत्वांधर्षयिष्यति ९८ मद्बाणहस्तंत्वांकश्चिन्नरिपुर्धर्षयिष्यति ॥
इत्युक्त्वातंददौबाणंविभीषणकरेप्रभुः ९९ प्रणनामसुदारामंबाणहस्तोविभीषणः ॥ ततोरामोविमानेनपश्यन्देशान्मनोरमान् ६० पूजितोदानमानैश्चनृपैःस्वनगरीं
ययौ ॥ तदानिनेदुर्वाद्यानिननृतुश्चाप्सरोगणाः ६१ प्रत्युज्जगामश्रीरामंयूपकेतुःसनागरः ॥ प्रासादशिखरारूढाःपौरनार्यःसहस्रशः ६२ सीतारामंनिरीक्ष्याऽथववर्षुः
पुष्पवृष्टिभिः ॥ ततोविवेशश्रीरामःसभायांपार्थिवैःसह ६३ विवेशस्वीयगेहंसाजानकीतुष्टमानसा ॥ गेहेकपिलवाराहमूर्तिरामोन्यवेशयत् ६४ एकदाराघवस्तुष्टःशत्रु
घ्रायाहितांददौ ॥ सीताऽपिसापुरायान्यान्यमांश्चनियमादिकान् ६५ संकल्पयामाससर्वांस्तांश्चकारयथाविधि ॥ उद्यापनान्यनेकानिसर्वेषांसाऽकरोन्मुदा ६६ एकदामु
नयःसर्वेयमुनातीरवासिनः ॥ आजग्मूराघवंद्रष्टुंभयाल्लवणरक्षसः ६७ कृत्वाग्रेतुमुनिश्रेष्ठंभार्गवंच्यवनंद्विजाः ॥ असंख्याताःसशिष्यास्तेरामादभयकांक्षिणः ६८ तान्पू
जयित्वापरयाभक्त्यारघुकुलोद्वहः ॥ उवाचमधुरंवाक्यंहर्षयन्मुनिमंडलम् ६९ करवाणिमुनिश्रेष्ठाःकिमागमनकारणम् ॥ धन्योऽस्मियदियूयंमांप्रीत्याद्रष्टुमिहागताः
७० सुदुष्करंवायत्कार्यंभवतांतत्करोम्यहम् ॥ आज्ञापयंतुमांभृत्यंब्राह्मणादैवतंहिमे ७१ तच्छ्रुत्वासहसाहृष्टश्च्यवनोवाक्यमब्रवीत् ॥ मधुनामामहादैत्यःपुराकृतेयु
गे ७२ आसीदतीवधर्मात्मादेवब्राह्मणपूजकः ॥ तस्यतुष्टोमहादेवोददौशूलमनुत्तमम् ७३ तंप्राहानेनयंहंसिसतुभस्मीभविष्यति ॥ रावणस्यानुजातस्यभार्याकुंभीनसी
स्मृता ७४ तस्यांतुलवणोनामराक्षसोभीमविक्रमः ॥ आसीद्दुरात्मादुर्धर्षोदेवब्राह्मणहिंसकः ७५ मधुःसतवहस्तेनमृतःपूर्वंयतस्तदा ॥ मधुसूदननामाऽभून्मधुघाता
द्रघूत्तम ७६ पीडितालवणेनाऽद्यवयंत्वांशरणंगताः ॥ तच्छ्रुत्वाराघवोप्याहमाभैर्वोमुनिपुंगवाः ७७ लवणंनाशयिष्यामिगच्छंतुविगतज्वराः ॥ इत्युक्त्वाप्राहरामोऽपि
शत्रुघ्नंसदसिस्थितम् ७८ अद्यत्वामभिषेक्ष्यामिमथुराराज्यकारणात् ॥ तद्रामवचनंश्रुत्वाशत्रुघ्नोवाक्यमब्रवीत् ७९ नांगीकरोम्यहंराज्यंत्वंमांनिजपदात्प्रभो ॥ नदूरं
कुरुराजेंद्रप्रार्थयामीतितेमुहुः ८० ततस्यवचनंश्रुत्वाशत्रुघ्नस्यरघूत्तमः ॥ तथैवभरतंप्राहनसोप्यंगीचकारतत् ८१ ततोरामःसुबाहुंचयूपकेतुंद्विजैर्नृपैः ॥ अभिषिच्या
२६ ऽब्रवीद्वाक्यंशत्रुघ्नंपुरतःस्थितम् ८२ दत्वातस्मैशरंदिव्यंनिजनामांकितंशुभम् ॥ अनेनैवहिबाणेनलवणंलोककंटकम् ८३ हनिष्यसिक्षणादेववृत्रंदेवपतिर्यथा ॥ सतुसं
पूज्यतंशूलंगेहेमच्छतिकाननम् ८४ भक्षणार्थंहिजंतूनांघातंकर्तुंसमुद्यतः ॥ सतुनायातिसदनंयावद्वनचरोभवेत् ८५ तावदेवपुरद्वारितिष्ठत्वंधृतकार्मुकः ॥ योत्स्यतेस

१ वरेणेतिपाठः । २ प्रणनामरामसुदारंरामबाणमितिपाठः । ३ द्राक्षिपात्यैश्चेतिपाठः ।

त्वयाक्रुद्धस्तदाबाणेनताडय ८६ अनेनैकेनबाणेनक्षणादेवमरिष्यति ॥ तंहत्वालवणंक्रूरंतद्वनेमधुसंज्ञिते ८७ निर्माय मथुरानाम्नींनगरींयमुनातटे ॥ तस्यांस्थाप्यसु
बाहुंवैपत्नीभ्यांबालकैःसह ८८ यूपकेतुंचविदिशानगरेशत्रुसूदन ॥ संस्थाप्यदयिताभ्यांचसैन्येनबालकैःसह ८९ ततोममांतिकंयाहिशीघ्रंशत्रुनिषूदन ॥ अश्वानांपं
चसाहस्रंरथानांचतदर्धकम् ९० गजानांषट्शतान्येवपत्तीनामयुतत्रयम् ॥ आगमिष्यंतित्वत्पश्चादग्रेसाधयराक्षसम् ९१ आगतेत्वयिपश्चाद्धिनृपान्जेतुंपुनस्त्वहम् ॥
गंतुमिच्छामितस्मात्त्वंशीघ्रमागच्छमांप्रति ९२ इत्युक्त्वामूर्ध्न्यवघ्रायशत्रुघ्नंरघुनन्दनः ॥ प्रेषयामासतैर्विप्रैराशीर्भिरभिनंदितः ९३ शत्रुघ्नोऽपिनमस्कृत्यराममधुवनंय
यौ ॥ निनायपूजनार्थंतांमूर्तिंसोप्यात्मनःप्रियाम् ९४ अग्रेसंप्रेष्यशत्रुघ्नंततश्रीरघुनन्दनः ॥ सुबाहुयूपकेतूतौस्वस्वस्त्रीभ्यांचबालकैः ९५ प्रेषयामाससैन्यैश्चदासी
दासैश्चगोधनैः ॥ शत्रुघ्नोपितथाचक्रेयथारामेणशिक्षितः ९६ हत्वातंलवणंवेगान्मथुरामकरोत्पुरीम् ॥ स्फीतान्जनपदांश्चक्रेमाथुरान्दानमानतः ९७ मथुरायांसुबाहुं
तंस्थाप्यस्त्रीभ्यांसुतादिभिः ॥ स्त्रीभ्यांपुत्रैर्यूपकेतुंविदिशानगरेतथा ९८ संस्थाप्यसैन्यैःशत्रुघ्नोमथुरायांकियद्दिनम् ॥ स्थित्वासुबाहवेमूर्तिंकदातुष्टोददौसुखम् ९९
अद्यापिमथुरायांसामूर्तिस्तत्रैववर्तते ॥ शत्रुघ्नोऽपिततःसैन्यैःशीघ्रंरामांतिकंययौ १०० सर्ववृत्तंराघवायकथयामाससादरम् ॥ अथैकदासभरतःकैकेयीनन्दनोमहान् १
युधाजितामातुलेनह्याहूतोगात्ससैनिकः ॥ रामाज्ञयागतस्तत्रहत्वागंधर्वनायकान् २ तिस्रःकोटीःपुरेद्वेतुनिवेश्यरघुनन्दनः ॥ पुष्करंपुष्करावत्यांपूर्वमेवाभिषेचितम् ३
अयोध्यायांराघवेणस्थापयामाससेनया ॥ स्त्रीभ्यांपुत्रैर्दासदासीजनाद्यैःपरिवेष्टितम् ४ ततोमुहूर्तेभरतस्तक्षंतक्षशिलाह्वये ॥ नगरेस्थापयामासराघवेणाभिषेचितम्
५ अयोध्यायांपूर्वमेवमहामंगलपूर्वकम् ॥ स्त्रीभ्यांपुत्रादिभिस्तक्षस्तस्यौतक्षशिलाह्वये ६ पुनरागत्यभरतोरामसेवापरोऽभवत् ॥ ततःप्रीतोरघुश्रेष्ठोलक्ष्मणंवाक्यमब्र
वीत् ७ उभौकुमारौसौमित्रेगृहीत्वापश्चिमांदिशम् ॥ गत्वामह्लान्विनिर्जित्यदुष्टान्सर्वापकारिणः ८ द्वावंगदचित्रकेतूमहासत्वपराक्रमौ ॥ मयाभिषेचितौवीरौस्त्रीभ्यांपु
त्रबलैर्युतौ ९ द्वयोर्द्वेनगरेकृत्वागजाश्वधनरत्नके ॥ स्थापयित्वातयोःपुत्रौशीघ्रमागच्छमांपुनः ११० रामाज्ञांसपुरस्कृत्यगजाश्वबलवाहनः ॥ गत्वाहत्वारिपून्सर्वान्नग
जाम्बेऽङ्गदनामकम् ११ धनरत्नोचित्रकेतुंस्थापयामासदेहजौ ॥ स्वस्वस्त्रीभ्यांबालकैश्चदासीदासैर्बलान्वितौ १२ सौमित्रिःपुनरागत्यरामसेवापरोऽभवत् ॥ अथरामःसमा
हूयगणकान्परिपूज्यच १३ अवनींजेतुमुद्युक्तोमुहूर्तंतानपृच्छत ॥ ततस्तैर्गणकैर्दत्तोमुहूर्तःपरमःशुभः १४ तंश्रुत्वातान्पुनःपूज्यसर्वान्रामोविसर्जयत् ॥ ततोरामोऽब्र
वीद्वाक्यंलक्ष्मणंपुरतःस्थितम् १५ अवनिस्थान्नृपान्जेतुंसोऽहंगच्छामिपार्थिवैः ॥ विमानेनैवगच्छामिसेनांचोदयसत्वरम् १६ नानाशस्त्राणियंत्राणिवाहनानिसमंततः॥
स्थापयस्वविमानेऽव्यग्रतश्चान्यःशतशोवराः १७ धनधान्यतृणादीनांसंग्रहंकुरुपुष्पके ॥ पुरींगोप्तुंसुमंत्रोऽस्तुसैन्येनपरिवेष्टितः १८ एवमाज्ञाप्यसौमित्रिंश्रीरामोजानकीगृ
हम् ॥ ययौचकारसौमित्रिर्यथारामेणशिक्षितः १९ इतिशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणेवाल्मीकीयेराज्यकांडेपूर्वार्द्धेराज्यविभागोनामषष्ठःसर्गः ॥ ६ ॥

१ निवेश्येतिपाठः ।

॥ श्रीरामदासउवाच ॥ अथरामोरहःसीतांस्वोद्योगंकथयच्छनैः ॥ अवनिस्थान्नृपान्जेतुंपुत्राभ्यांबन्धुभिर्नृपैः १ तद्रामवचनंश्रुत्वाजानकीप्राहलज्जिता ॥ नाहंत्वद्वि
रहंसोढुंसमर्थारघुनन्दन २ त्वयाऽहमवनींद्रष्टुंयास्यामिजगतांप्रभो ॥ तथेत्युक्त्वारघुश्रेष्ठोलालयामासजानकीम् ३ एतस्मिन्नन्तरेसर्वाऊर्मिलाद्याःस्त्रियश्चताः ॥ कुश
स्यचलवस्याऽपिपत्न्यःश्रुत्वाऽवनेर्जयम् ४ कर्तुंरामसमुद्योगंपुत्राभ्यांबन्धुभिर्नृपैः ॥ जानकींप्रार्थयामासुर्यास्यामोऽद्यत्वयासह ५ स्वस्वकांतवियोगंचसोढुंनैवक्षमाव
यम् ॥ तासांसीतावचःश्रुत्वाराघवंश्राव्यतद्वचः ६ रामाज्ञयातदासर्वास्तोषयन्तीवचोब्रवीत् ॥ आगंतव्यंमयासाकंयुष्माभिर्निश्चयेनहि ७ गच्छध्वंस्वीयगेहानिसर्वा
स्तुष्टागतज्वराः ॥ एवंसीतावचःश्रुत्वातदाताःकंजलोचनाः ८ सीतांनत्वाययुःसर्वाःसन्तुष्टामुदिताननाः ॥ स्वस्वगेहानिवेगेनरुक्मनूपुरनिःस्वनाः ९ अथरामस्तुतां
रात्रिंनिनायसीतयासुखम् ॥ ब्राह्मेमुहूर्तेश्रुत्वासबन्दिगीतंमनोरमम् १० रामःप्रबुद्धस्तुजवात्कृतशौचादिसत्क्रियः ॥ स्नात्वानित्यविधिंकृत्वाकृत्वाशंभोःप्रपूजनम् ११
कथांपौराणिकींश्रुत्वादत्वादानान्यनेकशः ॥ कृत्वोद्योगविधानंचसंपूज्यगणनायकम् १२ कृत्वाभ्युदयिकंश्राद्धंघृतश्राद्धंसविस्तरम् ॥ कामधेनुंकल्पवृक्षंपुष्पकंचसुरद्रुमम्
१३ मणिद्वयंपृथक्पूज्यसर्वैःकृत्वातुभोजनम् ॥ धृत्वावस्त्राणिशस्त्राणिबध्वामातॄःप्रणम्यच १४ ययौसशिबिकारूढःपुष्पकंबन्धुभिर्नृपैः ॥ पुत्राभ्यांसचिवैःसैन्यैःसेवकै
र्वाहनादिभिः १५ यानमारुरुहुःसर्वाःसीताद्यास्ताःस्त्रियःशुभाः १६ कौसल्याद्यामातरश्चतस्थुर्यानेयथासुखम् ॥ यात्राकाण्डेयथाशिष्यविमानरचनापुरा १७ तेव
र्णितामयावद्वदधुनाऽऽसीच्छुभापुनः ॥ तदानिनेदुर्वाद्यानितुष्टुवुर्मागधादयः १८ ननृतुर्वारनार्यश्चनटागानंप्रचक्रिरे ॥ अथरामोऽब्रवीद्यानंगच्छपूर्वदिशंप्रति १९ त
थेत्युक्त्वापुष्पकंतद्ययावाकाशवर्त्मना ॥ नत्वारामंसुमंत्रोऽपितस्थौपुर्यांयथासुखम् २० पूर्वदेशेनृपाःसर्वेश्रुत्वारामंसमागतम् ॥ प्रत्युज्जग्मूराघवेंद्रंप्रबद्धकरसंपुटाः २१
प्रणेमुस्तेरमानाथंनानोपायनपाणयः ॥ पूजयामासुःश्रीरामंनीत्वाराज्यंनिजंनिजम् २२ रामाज्ञयाससैन्याश्चतस्थुर्यानेनृपोत्तमाः ॥ स्वकोशादीनिरामायसमर्प्यस्थि
रमानसाः २३ मागधानसमतिक्रम्यविमानेनरघूत्तमः ॥ पश्यन्नानाविधान्देशान्भूरिकीर्तेःपुरंययौ २४ तेनातिपूजितोरामःशनैर्यानेनदक्षिणाम् ॥ ययावब्धितटेनैव
द्राविडंदेशमुत्तमम् २५ कृष्णातीरप्रदेशांस्तान्पश्यन्रामःशनैःशनैः ॥ कांतियययौविमानेनकंबुकंठोऽपिराघवम् २६ पूजयामासविधिवत्कोशाद्यैःसुहृदंनिजम् ॥
आरवारंमहादेशंतथातच्चोलमण्डनम् २७ समतिक्रम्यश्रीरामस्तत्रस्थैःपूजितोनृपैः ॥ ययौसकेरलान्देशानंप्रंकर्णाटकंययौ २८ पूजितोविजयेनापिविजयापुरवासिना॥
कोंकणस्थान्नृपानजित्वामहाराष्ट्रंययौप्रभुः २९ दुर्गदेवगिरिंनामचकारस्ववशंक्षणात् ॥ तथान्यान्यपिदुर्गाणिस्वाधीनान्यकरोद्विभुः ३० गत्वाविराटदेशंचदेशान्विंध्या
चलाश्रितान् ॥ पश्यन्ययौसरेवायास्तीरेणोंकारमीश्वरम् ३१ मालवस्थान्नृपानजित्वाययौरामःसउज्जनीम् ॥ उग्रबाहुंरणेजित्वागत्वाहैहयपत्तनम् ३२ जित्वाप्रतीपं
श्रीरामःसययौहस्तिनापुरम् ॥ एतस्मिन्नन्तरेसोमवंशजास्तेत्रयोनृपाः ३३ पुरूरवास्तथागच्छच्चाल्पसैन्येनवैपुरात् ॥ रामेणसंगरंकर्तुंनानावाहनसंस्थिताः ३४

१ निजंस्वपमितिपाठः ।

आ. रा. यधुर्ववर्षुःशस्त्राणिपुष्पकस्थंरघूत्तमम् ॥ युद्धंबभूवतैःसाकंत्रिदिनंरोमहर्षणम् ३५ तदासीद्रक्तपूर्णासाजान्हवीपापनाशिनी ॥ चतुर्थेदिवसेरामस्तान्जित्वातत्पुरं राज्यकां.
ययौ ३६ सुषेणंवानराणांचवैद्यंवानरसेनया ॥ गजाव्हयेपुरेस्थाप्यतांस्त्रीन्सोमान्वयोद्भवान् ३७ कारागृहस्थितान्कृत्वासुग्रीवाद्यैरघूत्तमः ॥ ययौसमथुरांद्रष्टुंसु
॥ १२ ॥ बाहुपरिपालिताम् ३८ दृष्ट्वासुबाहुंराज्यस्थंविदिशानगरंययौ ॥ यूपकेतुंतत्रदृष्ट्वाराज्यस्थंतेनवन्दितः ३९ कुरुक्षेत्रंपुष्करंचदृष्ट्वारामोविहायसा ॥ मरुदेशमतिक्र
म्यययौगुर्जरमुत्तमम् ४० प्रभासंचततोगत्वामल्लदेशंययौततः ॥ गजाश्वनगरेदृष्ट्वांगदंराज्यपदास्थितम् ४१ धनरत्नेचित्रकेतुंदृष्ट्वाराज्यपदास्थितम् ॥ आनर्तंस ७
ययौरामस्तत्रस्थैःपरिपूजितः ४२ प्रययौपुष्करंद्रष्टुंराज्यस्थंपुष्करावतीम् ॥ ततोरामोविमानेनययौतक्षशिलाव्हये ४३ तक्षंदृष्ट्वापदस्थंतंययौभरतमातुलम् ॥
युधाजितापूजितःसरामोराजीवलोचनः ४४ ययौविहायसाशीघ्रंशकदेशंमनोरमम् ॥ जित्वायवनदेशस्थान्नृपान्सर्वान्रघूत्तमः ४५ पश्यन्नानाविधान्देशांस्ताम्रदेशं
ययौततः ॥ ततोमायापुरींगत्वाकलापग्राममाययौ ४६ नरनारायणौदृष्ट्वाचोपास्यौरघुनन्दनः ॥ उपासकंनारदंचवर्षेभारतसंज्ञके ४७ तान्नत्वार्च्यरघुश्रेष्ठस्त
त्रस्थैःपरिपूजितः ॥ भारतेशंरणेहत्वातत्पदेस्थाप्यस्वानुगम् ४८ भारतंपृष्ठतःकृत्वापुण्यदेशंमनोरमम् ॥ योजनानांसहस्रैश्चनवभिःपरिविस्तृतम् ४९ अग्रे
ददर्शश्रीरामोहिमालयमहाचलम् ॥ योजनानांसहस्राभ्यांरम्यंविपुलमुत्तमम् ५० त्रिसप्ततिसहस्रैश्चदीर्घःप्रोक्तस्तुयोजनैः ॥ तत्रनानाकौतुकानिददर्शरघुनन्दनः ५१
दर्शयामासवैदेह्यैविमानस्थोमुदान्वितः ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये राज्यकाण्डेपूर्वार्धेभारतवर्षजयोनाम सप्तमःसर्गः ॥ ७ ॥
॥ श्रीरामदासउवाच ॥ ॥ अथहसकिंपुरुषंनामवर्षंनवसहस्रयोजनविस्तीर्णंस्वीयानादिसिद्धराममूर्तिदेवतोपास्यविराजमानपवनसुतोपासकसमाधिष्ठितमुपजगाम
१ तत्रहवावदर्शितनानाकौतुकस्तद्वर्षनृपसमूहपरिवेष्टितःपुष्पकसमधिष्ठितोनववाद्यस्वनपुरःसरःपुरतोऽनुससार २ अथहेमकूटंनामपर्वतमतिकमनीयंद्विसहस्रयोजन
विपुलमेकाशीतिसहस्रयोजनदीर्घंनानाधातुविराजितंसमुन्नतशिखरविराजमानंपुष्पकसमधिष्ठितोरघुनाथउपजगाम ३ अथतृतीयंवर्षंहरिवर्षनामनवसहस्रयोजनप
रिमितंनृसिंहोपास्यप्रल्हादोपासकविराजमानमतिकमनीयंदशरथतनयःसमनुययौ ४ तद्वर्षवासिनृपवरवृन्दतुमुलसंग्रामसंपादितजयश्रीरिपुकोशादिपूजितनृपदयिता
तिकनीराजितजनकजादर्शितनानाकौतुकध्वजपताकातोरणघंटाकिंकिणीविराजमानपुष्पकसमधिष्ठितःश्रीरघुनन्दनउपजगाम ५ अथनिषधंनामपर्वतंद्विसहस्रयो
जनविपुलंनवतिसहस्रयोजनदीर्घमतिकमनीयंसरघुनंदनोनयनगोचरंचकार ६ अथसुवर्णाद्रिसमंततश्चतुर्दिक्षुसमानमानमिलावृतंनामचतुर्थंवर्षंचतुस्त्रिंशत्सहस्रयो
जनपरिमितंसरघुनायकउपजगाम ७ तत्रहवावमेरोराश्रयभूतेमेरोर्दक्षिणदिक्स्थितेमेरुमंदरपर्वतेऽतिविराजमानेसमुन्नतजंबूवृक्षमतिविशालंजंबुद्वीपाख्यसूचकंसफलम् ॥ १२ ॥
पूर्वमतिकमनीयंसरामचंद्रोऽवनिदुहित्रेदर्शयामास ८ ततोमेरुपश्चिमतोमेरोराश्रयभूतेसुपार्श्वपर्वतेविराजमानकदंबवृक्षमतिसमुन्नतमतिविपुलमतिकमनीयपुष्परंजितं
सरघुनायकोनेत्रविषयीचकार ९ अथमेरोरुत्तरतस्तस्याश्रयभूतेकुमुदनामपर्वतेविराजमानमतिसमुन्नतंवटवृक्षमतिविशालमतिस्थूलंसकौसल्यानंदनोनृपसमूहविरा

जितोजनकजायैदर्शयामास १० अथमेरुपूर्वतस्तस्याश्रमभूतेमंदरपर्वतेविराजमानमतिविशालमतिसमुन्नतमतिस्थूलंसहकारवृक्षमतिकमनीयंसुपक्वमधुरघटतुल्यफल
भारविनम्रंपश्यन्सरघुवंशभूषणोजनकजाजानिः ११ तत्रेलावृतेविराजमानसंकर्षणोपास्यरुद्रोपासकेसरघुनायकोदयितासहायःशिरसाप्रणनाम १२ तद्वर्षवासिनृप
प्रबद्धकरकमलशिरोवंदितपदजलरुहद्वंद्वस्सरघुनायकःपूर्वदिशमनुजगाम १३ अथसगंधमादनपर्वतंद्विसहस्रयोजनविपुलंचतुस्त्रिंशत्सहस्रयोजनदीर्घंनयनगोचरंचका
र १४ अथभद्राश्वेनामपंचमंवर्षमेकत्रिंशत्सहस्रयोजनदीर्घंहयग्रीवोपास्यभद्राश्वोपासकसमधिष्ठितंसरघुनायकउपजगाम १५ तत्रकचित्संग्रामस्तद्वर्षविराजमा
नन्नृपसमूहेभ्यःकचिच्छरणागतप्रबद्धकरयुगलावनिपतिभ्यःस्वकरभारान्लभमानःसजनकजाजानिरुपययौपरिवर्त्यपश्चिमाभिमुखः १६ अथमेरोःपश्चिमदिकस्थि
तंमाल्यवंतंपर्वतंद्विसहस्रयोजनविस्तीर्णंचतुस्त्रिंशत्सहस्रयोजनदीर्घमतिकमनीयंसजनकजारंजनोनयनगोचरंचकार १७ तत्पाश्चिमतःकेतुमालंनामषष्ठंवर्षएकत्रिंश
त्सहस्रयोजनविस्तीर्णंचतुस्त्रिंशत्सहस्रयोजनदीर्घंकामदेवोपास्यलक्ष्म्युपासिकासमधिष्ठितमतिमनोहरंसरामचंद्रोऽनुजगाम १८ तद्वर्षनृपसमूहमुकुटावतंसपरागपूजि
तचरणारविंदयुगलःसरघुकुलदीपकःसीतयापुष्पकस्थोऽतिमुदमवाप १९ अथमेरोरुत्तरतःसनीलपर्वतंद्विसहस्रयोजनविस्तीर्णंनवतिसहस्रयोजनदीर्घंरघुकुलतिलकोनयन
विषयंचकार २० अथरम्यकंनामसप्तमंवर्षंनवसहस्रयोजनपरिमितंमत्स्योपास्यमनूपासकंविमानमधिष्ठितःसरघुनंदनउपजगाम २१ तत्रस्थैरवनिपालैःस्वको
शादिपूजितःसरघुनायकःसीतांरंजयन्पुरतोऽनुससार २२ तस्योत्तरतःश्वेतपर्वतंद्विसहस्रयोजनविस्तीर्णमेकाशीतिसहस्रयोजनदीर्घमतिकनीयंसस्वलोचनविषयंच
कार २३ अथहिरण्मयंनामाऽष्टमंवर्षंनवसहस्रयोजनपरिमितंकूर्मोपास्यार्यमोपासकसमधिष्ठितमतिकमनीयंससमनुययौ २४ तद्वर्षवासिनृपदयिताशिरोभूषण
मणितेजदीपितजानकीचरणारविंदयुगलमीक्षमाणःसरघुनंदनोमुदमवाप २५ तस्योत्तरतःशृंगवंतंपर्वतंद्विसहस्रयोजनविस्तीर्णंत्रिसप्ततियोजनदीर्घंसरघुनंदनोददर्श
२६ अथोत्तरकुरुवर्षंनवमंनवसहस्रयोजनपरिमितंवराहोपास्यभूम्युपासिकासमधिष्ठितमतिमनोहरंसरामचंद्रस्तमनुययौ २७ तद्वर्षचारिरणकंपितावयवनृपस
हावतंसमणिमुक्ताविराजितपदजलरुहद्वंद्वःसरघुनायकोमुदमवाप २८ अथरामोजंबूद्वीपपतिंदीर्घबाहुनामानमुत्तरकुरुवर्षस्थंरणेहत्वाऽयोध्यांगत्वालवंजंबुद्वीपपतिंक
रिष्यामीतिनिश्चित्यकियद्दिनंतदधिकारेविजयंनामस्वमंत्रिणंस्थापयामास २९ एतेषांजंबुद्वीपांतर्गतवर्षाणांतथासर्वद्वीपांतर्गतवर्षाणांयानियानिनामानितानिप्रि
यव्रतनृपपौत्रनामसूचितानिसंति तेषुयेयेनृपाजायंतेतेतद्वर्षनामसूचिताएवभवंत्यतःसर्वेषांपृथक्नामानिमयाऽत्रनोच्यंते ३० एवंजंबुद्वीपमायामविस्ताराभ्यांलक्ष
योजनपरिमितमतिकमनीयंसमवर्तुलंपुष्करपत्रोपमंनववर्षमंडितंसरघुनायकःस्ववशंचकार ३१ मेरुपर्वताग्रेऽष्टपुर्योऽष्टदिक्पालानांसंतितत्पालकाःसुराधीशवन्हि
यमनिर्ऋतिवरुणवायुकुबेरेशास्तेसर्वेममाज्ञांपरिपालयंत्वितिनिश्चित्यसरघुनायकस्तान्प्रतिजगाम ३२ तअष्टपुर्यःपृथक्पृथक्सार्धद्विसहस्रयोजनपरिमाणेनायाम
विस्तारतोज्ञातव्याः ३३ मेरुर्लक्षयोजनसमुन्नतोमूर्ध्निद्वात्रिंशत्सहस्रयोजनविततोमूलेषोडशसहस्रयोजनविततश्चाधःषोडशसहस्रयोजनमितोभूम्यांप्रविष्टश्चतुरशी

तिसहस्रयोजनमितोभूम्यावहिर्धेनूरपुष्पवदृश्यते ३४ तत्रमेरुपर्वताग्रेऽष्टदिकपालपुरीणांमध्येब्रह्मपुरीदशसहस्रयोजनायामविस्तारतोज्ञातव्या ३५ सर्वेवर्षम
र्यादीभूताष्टपर्वतादशसहस्रयोजनसमुन्नताज्ञातव्याः ३६ वर्षदीर्घतापर्वतसमानाज्ञातव्या ३७ जंबुद्वीपस्योपद्वीपानष्टौहेकेऽउपदिशंति ३८ सागरात्मजैर
श्वान्वेषणइमांमहींपरितोनिखनद्भिरुपकल्पितान् ३९ तद्यथा स्वर्णप्रस्थः चंद्रशुक्लः आवर्तनः रमणकः मंदरहारिणः पांचजन्यः सिंहलः लंकाइति ४० तेषुलंकां
विनासप्तसुयदायद्यत्समीपंतदातत्रतत्रगत्वातत्रस्थानुपद्वीपपालकान्श्रीरामचंद्रःस्ववशांश्चकार ४१ भारतेलावृतवर्षाभ्यांविनासप्तसुवर्षेष्वसंख्यातानद्योगिरयश्चसंतिते
षांविस्तारंकोवक्तुंक्षमः ४२ अथेलावृतसंस्थितामुख्यनद्यएवोच्यंते ४३ अरुणोदाजंबुनदीपयोदधिघृतमधुगुडान्नांवरशय्यासनाभरणसंज्ञानदास्तथापंचम
घुधारानद्यस्तथासीताऽलकनंदाचक्षुर्भद्रेतिमेरोरधश्चतुर्दिक्षुपतिताजान्हवीभेदाश्चत्वारएवमिलावृतनद्यः ४४ तासुसीतापूर्वसमुद्रं चक्षुःपश्चिमसमुद्रं भद्रोत्तरसमुद्रम
लकनंदादक्षिणस्यांदिशिभारतेवर्षेजलनिधिंप्रविशति ४५ भारतेप्यस्मिन्वर्षेसरिच्छैलाःसंतिबहवः ४६ तद्यथामलयोमंगलप्रस्थोमैनाकस्त्रिकूटःऋषभःकुटकः
सह्योदेवगिरिर्ऋष्यमूकःश्रीशैलोवेंकटोमहेंद्रोवारिधारोविंध्यःशक्तिमानृक्षगिरिःपारियात्रोद्रोणश्चित्रकूटोगोवर्द्धनोरैवतकःकुकुभोनीलोगोकामुखइंद्रकीलःकामगिरिश्चेत्य
न्येचशतसहस्रशःशैलास्तेषांनितंबप्रभवानदानद्यश्चसंत्यसंख्याताः ४७ चद्रवशाताम्रपर्णीअवटोदाकृतमालावैहायसीकावेरीवेणीपयस्विनीशर्करावर्तातुंगभद्राकृ
ष्णावेणीभीमरथीगोदावरीनिर्विंध्यापयोष्णीतापीमहीसुरसानर्मदाचर्मण्वती सिंधुश्चांध्रःशोणश्चनदौ महानदीवेदस्मृतीऋषिकुल्यात्रिसामाकौशिकीमंदाकिनीयमुनासर
स्वतीदृषद्वतीगोमतीशरयूरोघस्वतीसप्तवतीसुषोमाशतद्रुश्चंद्रभागामरुद्वन्वावितस्ताअसिक्नीविश्वेतिमहानद्यः ४८ एवंशिष्यरघुनायकोनायकःसोपद्वीपंजंबुद्वीपंस्व
वशंकृत्वालक्षयोजनविस्तीर्णलवणार्णवंजंबुद्वीपपरिखोपमंसमुल्लंघ्यपुष्पकस्थःप्लक्षंनामद्वितीयंद्वीपंददर्श ४९ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामा
यणे वाल्मीकीये राज्यकांडेपूर्वार्द्धेजंबुद्वीपजयोनामाष्टमःसर्गः ॥ ८ ॥ ॥ श्रीरामदासउवाच ॥ ॥ अथरामोययौश्रीमान्प्लक्षद्वीपंमनोरमम् ॥ द्विल
क्षयोजनमितंसप्तवर्षसमन्वितम् १ उपास्योयत्रवैसूर्योब्राह्मणाश्चह्युपासकाः ॥ द्वीपाख्याकृद्यत्रास्तिप्लक्षवृक्षोहिरण्मयः २ यथाऽऽरामाद्बहिर्ज्ञेयापरिखाश्चस
मंततः ॥ जंबुद्वीपाच्चक्षारोदाद्बहिर्द्वीपस्तथाव्ययम् ३ मेरोःपूर्वदिशायांवैतत्रवर्षंशिवाव्हयम् ॥ आदौययौरामचंद्रःक्षणादेवविहायसा ४ नदीयत्रारुणानाम्नीस
र्वपापप्रणाशिनी ॥ तस्यांस्नात्वारघुश्रेष्ठःशीघ्रंतद्वर्षपंययौ ५ तेनवर्षाधिपेनैवयुद्धमासीत्सुदारुणम् ॥ तंजित्वापंचमासैश्चतेनपार्थिवसत्तमैः ६ पूजितोरघु
नाथस्तुवज्रकूटाचलंययौ ॥ वज्रकूटंमहाश्रेष्ठंद्वयोःसागरयोःस्थितम् ७ परस्परंवर्षयोश्चसीमाभूतंददर्शसः ॥ तंगिरिंपृष्ठतःकृत्वावर्षंयवयसंययौ ८ नृम्णानदी
जलेस्नात्वाययौयवयसेश्वरम् ॥ तेनसंपूजितोरामस्ततस्तद्वर्षपार्थिवैः ९ सहितःपुष्पकेनैवसुपेंद्रसेनपर्वतम् ॥ दृष्ट्वाकृत्वापृष्ठतस्तंसुभद्रंवर्षमाययौ १० आंगीरसी

१ वैकुंठइतिपाठः ।

नदीतोयेस्नात्वासरघुनायकः ॥ वर्षाधिपेणकोशैःसंपूजितःपार्थिवैःसह ११ ज्योतिष्मंतंगिरिंगत्वातंकृत्वापृष्ठतःक्षणात् ॥ शांतिवर्षेऽथसावित्रीनदीतोयेविगाह्यच १२ त
द्वर्षेशंनृपंजित्वातथातद्वर्षसंस्थितान् ॥ नृपान्जित्वाक्षणादेवसुवर्णपर्वतंययौ १३ ततोगत्वाक्षेमवर्षेसुप्रभातानदीजले ॥ स्नात्वारामःक्षेमपेणस्वकोशैःपरिपूजितः १४
हिरण्यष्ठीवनामानंगिरिंरम्यंविलंघ्यच ॥ वर्षेऽमृतेतन्नृपेणपार्थिवैःपरिपूजितः १५ ऋतंभरानदीतोयेचकारस्नानमादरात् ॥ मेघमालंगिरिंत्यक्त्वापृष्ठतःपुष्पकेणहि १६
वर्षेऽभयेतन्नृपतिंक्षणाज्जित्वारणेप्रभुः ॥ सत्यंभरानदीतोयेस्नात्वासरघुसत्तमः १७ सुचंद्राख्यंनृपंप्लक्षद्वीपेशंतीक्ष्णसंगरैः ॥ कृत्वावैस्वपदाक्रांतंतेनतद्वीपपार्थिवैः १८
मणिकूटंगिरिवरंसमतिक्रम्यवेक्षणात् ॥ इक्षुरसोदनामानंद्विलक्षयोजनंवरम् १९ तीर्त्वातंसागरंभीमंप्लक्षस्यपरिखोपमम् ॥ स्वपथाशाल्मलीद्वीपंचतुर्लक्षमितंययौ
२० द्वीपाख्याकृच्चयत्रास्तिशाल्मलीद्वीपपादपः ॥ यत्रोपास्यश्चसोमोऽस्तितत्रस्थास्तदुपासकाः २१ विस्तारद्वीपमानानिदीर्घतायाःस्मृतानिच ॥ तत्रक्रमेणवर्षा
णिकथ्यंतेपूर्ववन्मया २२ मेरोःपूर्वदिगारभ्यसर्वत्रक्रमउच्यते ॥ सुरोचनंसौमनस्यंतथारमणकंशुभम् २३ देववर्षपारिभद्रमाप्यायनमनुत्तमम् ॥ अविज्ञातंसप्तमंचसप्त
वर्षाणिवैक्रमात् २४ अनुमतीसिनीवालीतथैवचसरस्वती ॥ कुहूश्चरजनीनंदाराकानद्यःप्रकीर्तिताः २५ शतशृंगोवामदेवोकुंदश्चकुमुदस्तथा ॥ पुष्पवर्षःपंचमश्चसहस्र
श्रुतिरुत्तमः २६ स्वरसःपर्वताःसप्तज्ञेयाःसीमासुवैक्रमात् ॥ एतेषुसप्तवर्षेषुवर्षपालान्विजित्यसः २७ जित्वाद्वीपेश्वरंरामःसुबाहुंसुदमाययौ ॥ सुरोदंचचतुर्लक्षमितंतीर्त्वा
पयोनिधिम् २८ कुशद्वीपमष्टलक्षमितंरामोययौक्षणात् ॥ तत्रोपास्योजातवेदाःसर्वेषांद्वीपवासिनाम् २९ द्वीपाख्याकृच्चयत्रास्तिकुशस्तंबःसुरैःकृतः ॥ तत्रक्रमेणव
र्षाणिकीर्त्यंतेसप्तवैमया ३० वसुंचवसुदानंचतथादृढरुचिंशुभम् ॥ नाभिगुप्तंतथासत्यव्रतंविविक्तमुत्तमम् ३१ वामदेवंसप्तमंचवर्षज्ञेयंक्रमेणहि ॥ रसकुल्यामधुकुल्या
मित्रविंदानदीशुभा ३२ श्रुतविंदादेवगर्भातथाचैवघृतच्युता ॥ मंत्रमालाक्रमेणैवनद्यःसप्तसुवैक्रमात् ३३ चतुःशृंगश्चकपिलश्चित्रकूटोमनोरमः ॥ देवानीकऊर्ध्वरोमा
द्रविणश्चकर्दरितः ३४ एतेसीमासुवर्षाणांगिरयःसप्तवैक्रमात् ॥ एतेषुसप्तवर्षेषुसंस्थितान्पार्थिवोत्तमान् ३५ राघवःसंगरेजित्वालब्ध्वाचानुत्तमंयशः ॥ कुशद्वीपपतिं
जित्वामहासेनंतुतोषसः ३६ अष्टलक्षमितंतीर्त्वाघृतोदंसागरोत्तमम् ॥ क्रौंचद्वीपंययौरामःपुष्पकेणाऽतिभास्वता ३७ कुशद्वीपाच्चसज्ञेयोद्विगुणोद्वीपउत्तमः ॥ द्वीपा
ख्याकृच्चयत्राऽस्तिक्रौंचनामागिरिर्महान् ३८ यत्रोपास्योम्मयोदेवोहरिस्तद्वीपवासिनाम् ॥ तत्रापिसप्तवर्षाणिकथ्यंतेऽत्रक्रमेणहि ३९ आमंमधुरुहंमेघपृष्ठंचैवमनो
हरम् ॥ सुधामानंचभ्राजिष्ठंलोहितार्णंवनस्पतिम् ४० एतानिसप्तवर्षाणिज्ञातव्यान्युत्तमानिहि ॥ वर्द्धमानोभोजनश्चतथोपवर्हणोमहान् ४१ नन्दश्चनन्दनश्रेष्ठःसर्वतोभ
१० द्रएवच ॥ शुक्लाःसप्ताऽचलाःप्रोक्ताःसीमासुपरमाःशुभाः ४२ अभयाचामृतौघाचतथाचैवार्यकाशुभा ॥ तथातीर्थवतीरम्याबृत्तिरूपवतीतथा ४३ पवित्रवतीपुण्यावैशुक्ले
तिसप्तकीर्तिताः ॥ सप्तवर्षेषुनद्यश्चस्नानात्पातकनाशनाः ४४ एतेषुसप्तवर्षेषुपार्थिवेभ्योनिजंप्रभुः ॥ करभारंपृथग्लब्ध्वातैःसर्वैःपरिपूजितः ४५ क्रौंचद्वीपपतिंयुद्धेजि

१ पात्रास्त्यपपोमयोदेवइतिपाठः । २ कोशाद्यैरितिपाठः ।

त्वातंकंजलोचनम् ॥ हस्त्युष्ट्ररथतुरगैःकोशाद्यैस्तेनपूजितः ४६ स्तुतोमागधवर्यैश्चनितरांमुदमापसः ॥ ततस्तीर्त्वातुक्षीरोदंक्रौंचद्वीपसमंमुदा ४७ शाकद्वीपंययौरा
मोद्वात्रिंशल्लक्षसंमितम् ॥ द्वीपाख्याकृच्चयत्रास्तिशाकवृक्षोतिरंजनः ४८ यत्रोपास्योवायुरूपीहरिस्तद्वीपवासिनाम् ॥ तत्राऽपिसप्तवर्षाणिकथ्यंतेपूर्ववन्मया ४९
पुरोजवंनामवर्षंतथातच्चमनोजवम् ॥ पवमानंमहच्छ्रेष्ठंधूम्रानीकंमनोरमम् ५० चित्ररूपंबहुरूपंविश्वाधारंतथास्मृतम् ॥ एवंसप्तसुवर्षाणिनद्यश्चापिब्रवीम्यहम् ५१
अनघाचतथाऽऽयुर्दाचोभयसृष्टिरेवच ॥ तथाऽपराजितापुण्याशुभापंचपदीस्मृता ५२ सहस्रश्रुतिरन्यासाप्रोक्तानिजधृतिस्तथा ॥ एवंसप्तसुवर्षेषुसप्तनद्यःशुभावहाः
५३ उरुशृंगोबलभद्रस्तथान्यःशतकेसरः ॥ सहस्रस्रोतोऽन्यःप्रोक्तोदेवपालोमहानसः ५४ ईशानःपर्वताःसप्तसीमास्वेतेप्रकीर्तिताः ॥ एवंसप्तसुवर्षेषुतत्रतत्रनृपोत्तमैः
५५ पूजितोरघुनाथःसशाकद्वीपपतिंरणे ॥ सुंदराख्यंनृपंयुद्धेसप्ताहोभिर्महाबलम् ५६ जित्वासंपूजितस्तेनवादयामासदुंदुभीन् ॥ तीर्त्वातंदधिमंडोदंद्वात्रिंशल्लक्षसंमि
तम् ५७ चतुःषष्टिलक्षमितंपुष्करद्वीपमाययौ ॥ मेखलावत्तस्यमध्येपर्वतंकंकणोपमम् ५८ मानसोत्तराचलाख्यंतंददर्शरघूद्वहः ॥ द्वेवर्षेतत्रवैप्रोक्तेपूर्वंरमणकंशुभम्
५९ अपरंतद्धातकीत्याख्यातंतेकंकणोपमम् ॥ तद्वर्षपौनृपौजित्वाजित्वाद्वीपेश्वरंनृपम् ६० उदरांगाव्हयंरामःपरांमुदमवापसः ॥ ददर्शपुष्करंतत्रद्वीपाख्याकारकं
वरम् ६१ कमलासनस्यययज्ञेयंब्रह्मणःपरमासनम् ॥ तत्रकर्ममयंलिंगंब्रह्मलिंगंजनोऽर्चयत् ६२ वर्षयोर्बहुलानद्यःपापनिकृंतनक्षमाः ॥ दशसहस्रमानेनप्रांशुर्ज्ञेयःसप
र्वतः ६३ तस्मिन्गिरौपूर्वभागेपुरीमघवतःशुभा ॥ देवधानीतिनाम्नासामनोज्ञाज्वलनप्रभा ६४ गिरौतास्मिन्दक्षिणस्यांदिशिसंयमिनीपुरी ॥ यमराजस्यसाज्ञेया
मनोज्ञाज्वलनप्रभा ६५ पश्चिमेवरुणस्याऽथपुरीनिम्लोचनीस्मृता ॥ उत्तरस्यांतुकौबेरीपुरीख्यातात्रिभावरी ६६ भिन्नाःपुर्यस्त्विमाज्ञेयामेरुस्थाभ्यःशुभावहाः ॥
यथानृपस्यस्थानानिह्यनेकानितथात्विमाः ६७ सर्वेसीमापर्वतास्तेविस्तीर्णाश्चपृथक्स्मृताः ॥ द्विसहस्रयोजनैश्चप्रोच्यतांतिवदाम्यहम् ६८ सर्वेषांदशसाहस्रैर्योजनैः
प्रोच्यतेरिता ॥ ततस्तीर्त्वातुशुद्धोदंपुष्करद्वीपसंमितम् ६९ सीतायाःकौतुकार्थंहिसजगामरघूत्तमः ॥ उद्धारार्थंस्वावलोकात्तत्रस्थानांनृणामपि ७० ततोऽग्रे
भूमिंसार्धसप्तलक्षोत्तरसार्द्धकोटिपरिमितांकचित्कचित्प्राणिसहितांरघुनन्दनोददर्श ७१ १९७९०००० ॥ तैःसर्वैर्भूमिनिवासिभिःसंपूजितोरघुनन्दनोमैथिलीरंजनार्थं
मग्रेजगाम ७२ सैकचत्वारिंशत्सहस्रसप्तलक्षोत्तरंसार्द्धकोटियोजनपरिमितंमेरुमानसोत्तराचलयोरंतरालेमानंज्ञातव्यम् ७३ १९७४१००० ॥ ततोऽग्रेआदर्शतलोप
मांकांचनींभूमिंदेवैरधिष्ठितांचैकोनचत्वारिंशल्लक्षोत्तरकोट्यष्टपरिमितांदृष्ट्वादेवैःसंपूजितःश्रीरामचंद्रोमुदमवाप ७४ ८३९००००० ॥ ततोऽग्रेलोकालोकपर्वतंसार्द्धद्वाद
शकोटिपरिमितंविस्तीर्णोच्चतयाभूमिप्राकारोपमंकेनाप्यविलंघ्यंसरघुनन्दनोददर्श ७५ १२५०००००० ॥ यस्मिन्नष्टदिक्षुद्विरदपतयः ऋषभःपुंडरीकःपुष्पकरचूडःकुमु
दोवामनःपुष्पदंतोऽपराजितःसुप्रतीकइत्यष्टदिग्गजाःसकललोकस्थितिहेतवः ७६ तस्मिन्नेवगिरिवरेभगवान्परममहापुरुषोमहाविभूतिपतिःसकललोकहितायआस्ते ॥

१ पंचनदीतिपाठ । २ महासनइतिपाठः ।

७७ ततःपरस्ताद्योगेश्वरगतिंविशुद्धामुदाहरन्ति ७८ एवंपंचाशत्कोटिगुणितोभूगोलकोज्ञेयः ७९ एवंपंचविंशतिकोटिमितांभूमिंलोकालोकमध्यवर्तिनींसरघुनन्दनःस्वव
शांकृत्वाऽऽकाशपथापरिवर्त्यसर्वान्द्वीपान्पूर्ववत्पश्यन्जंबुद्वीपेभारतवर्षमध्यगतांस्वांराजधानीमयोध्यांसप्तद्वीपनृपपरिवेष्टितोऽनुययौ ८० ततोरामोऽयोध्यानिकटंम
त्वादूतैःस्वागमनंसुमंत्रंसूचयामास ८१ समायातंरामचन्द्रंश्रुत्वासमंत्रिसत्तमः ॥ अयोध्यांभूषयामासपताकाध्वजतोरणैः ८२ वारणेंद्रंपुरस्कृत्यपौरैर्जानपदैःसह ॥
प्रत्युद्गम्यरामचन्द्रंनत्वाऽयोध्यांनिनायसः ८३ तदानिनेदुर्वाद्यानिननृतुश्चाप्सरोगणाः ॥ तुष्टुवुर्मागधाद्याश्चनटागानंप्रचक्रिरे ८४ रामागमनमाकर्ण्यपौरनार्यःसुभू
षिताः ॥ प्रासादशिखरारूढाववर्षुः पुष्पवृष्टिभिः ८५ राजद्वारंविमानेनशनैःसरघुनन्दनः ॥ गृण्हन्पौरोपायनानिस्त्रीभिर्नीराजितःपथि ८६ ययौयानादवरुह्यसभा
यांनिजआसने ॥ तस्थौसमन्ततःसर्वैर्नृपैश्चपरिवेष्टितः ८७ ततःस्थलानिसर्वेषांवस्तुमाज्ञाप्यलक्ष्मणम् ॥ दधिश्राद्धादिसंपाद्यकृतकार्यममन्यत ८८ आत्मानंसक
लान्पृथ्वीस्थितान्जित्वासमुद्धतान् ॥ ततस्तैस्सप्तद्वीपस्थैःपार्थिवैःपरिपूजितः ८९ रामःस्वभ्रातरंविप्रैर्भरतंभरताधिपम् ॥ चकारपार्थिवैर्युक्तोलक्ष्मणानुमतेनसः ९०
आदावेववसिष्ठेनह्युक्तंभरतनामतत् ॥ विचिंत्येदंमाविवृत्तंजातकर्मणिनिश्चितम् ९१ पूर्वमाज्ञापितंस्वीयसेवकंभारतस्यच ॥ रक्षणेतंरामचन्द्रःकार्यांतरमकल्पयत् ९२
जंबुद्वीपपतिंरामश्चकारस्वसुतंलवम् ॥ लवोपिविजयंस्वीयसचिवंचाऽकरोन्मुदा ९३ नवस्वपिचवर्षेषुयाताऽयातंपुनःपुनः ॥ चकारविजयेनैवपुनःकार्यार्थमादरात् ९४
शत्रुघ्नोयौवराज्येस्वेभरतेनाभिषेचितः ॥ यौवराज्यपदेस्वीयेकृत्वारामःकुशंसुतम् ९५ चकारलक्ष्मणंमुख्यंसचिवेषुसुमन्त्रिणम् ॥ सप्तद्वीपपतिःश्रीमान्स्वयमासीद्रघू
त्तमः ९६ स्वस्वकार्येषुसर्वेतेह्यासन्तत्परमानसाः ॥ ततःसर्वान्नृपान्पूज्यददावाज्ञांरघूद्वहः ९७ ततस्तेराघवंनत्वाययुःस्वंस्वंस्थलंमुदा ॥ ततोभारतवर्षस्यपरामर्शी
सदामुदा ९८ चकारभरतःश्रीमान्भारताधिपतिःप्रभुः ॥ जंबुद्वीपपरामर्शीसचकारलवस्तथा ९९ सप्तद्वीपपरामर्शीरामचन्द्रःकुशेनच ॥ लक्ष्मणेनसहैवापिस्वयमेवा
करोत्प्रभुः १०० ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये राज्यकांडे पूर्वार्द्धे कुशादिषट्द्वीपजयवर्णनंनामनवमःसर्गः ॥ ९ ॥
॥ श्रीरामदासउवाच ॥ एकदाराघवःसारमेयदीर्घरवंमुहुः ॥ राजद्वाराद्बहिःश्रुत्वासभास्थोदूतमब्रवीत् १ कथंदीर्घस्वरेणैवश्वाऽद्यक्रोशतिपश्यताम् ॥ तथेतिराम
दूतोपिगत्वाराजसभाद्बहिः २ न्यवारयत्सारमेयंराजद्वारात्स्वघर्षणैः ॥ रामंगत्वाब्रवीद्वाक्यंतूष्णींश्वाक्रोशतिप्रभो ३ मयानिवारितोदूरंगतःसरावणांतक ॥ ततो
द्वितीयदिवसेतच्छब्दान्राघवोऽशृणोत् ४ दूतेनपूर्ववच्चाऽपिसारमेयोनिवारितः ॥ ततस्तृतीयेदिवसेतद्रावानशृणोत्प्रभुः ५ तदातिचकितःप्राहलक्ष्मणंपुरतःस्थि
तम् ॥ श्वाऽयंदिनत्रयंबन्धोकथंक्रोशतिसंततम् ६ किंदुःखंसारमेयायप्रष्टव्यंमत्पुरस्त्वया ॥ तथेतिलक्ष्मणोदूतानब्रवीत्संभ्रमान्वितः ७ सभामाकारणीयःश्वायु
ष्माभिस्त्वद्यसादरम् ॥ तथेतिरामदूतास्तेसारमेयंवचोऽब्रुवन् ८ आकारितोऽसिरामेणत्वमेहिराघवांतिकम् ॥ त्वदेवंफलितंचाद्यपूर्वपुण्योदयेनहि ९ रामदूतवचः
श्रुत्वातुष्टःश्वातान्वचोऽब्रवीत् ॥ देवगृहेयज्ञवाटहोमशालासुवैतथा १० वृन्दावनेसभायांचमठेपार्थिवसद्महे ॥ गोष्ठेपुण्यस्थलेपुण्येतीर्थेदेवालयेऽपिच ११ पाकस्थाने

आ. रा. रतिस्थानेस्नानसंध्यास्थलादिषु ॥ गन्तुंनार्हावयंपापयोनिस्थावाच्यतांप्रभुः १२ ततस्तेविस्मयाविष्टास्तद्वाक्यंराममब्रुवन् ॥ सवःश्रुत्वाराघवोऽपिविहस्यसम्भ्रमेणच
१३ आनीयतांपादुकेमेत्विति दूतान्वचोऽब्रवीत् ॥ ततस्तैरर्पितेदिव्येपादुकेकृत्यपादयोः १४ रत्नदण्डंकरेघृत्वाशनैःसर्वैःसमन्वितः ॥ मुद्रिकारत्नहारेणमणिद्वयवि राज्यकां.
॥ १९ ॥ राजितः १५ मुकुटेनावतंसेनकेयूराभ्यांसमन्वितः ॥ नूपुराभ्यांकंकणाभ्यांकुंडलाभ्यांसुशोभितः १६ पदकैःशृंखलाभिश्चवरवस्त्रैर्विराजितः ॥ राजद्वाराद्बहिर्देशेसारमेयां
तिकंययौ १७ कृत्वादण्डंस्वकक्षेऽथकिंचिद्वक्रःस्थितःप्रभुः ॥ कृत्वावामजान्वधःस्वांजंघांरामःप्रदक्षिणाम् १८ अब्रवीत्सारमेयंतंकिंचित्कृत्वास्मिताननम् ॥ मदग्रेवद ७
किंदुःखंसारमेयतवास्तियत् १९ मद्राज्येसहसामाऽस्तुदुःखंकेषांकदापिच ॥ इतिरामगिरंश्रुत्वासारमेयःपुनःपुनः २० नमस्कृत्वाराघवेंद्रंछिन्नपादोऽब्रवीन्मुदा ॥
मदर्थंभ्रमितोऽस्यत्रचिरंजीवदयानिधे २१ निरपराधोयतिनाग्राव्णाऽत्राहंमताडितः ॥ भिन्नपादोऽस्मिराजेंद्रत्वामद्यशरणंगतः २१ तद्वाक्यंराघवःश्रुत्वाऽऽका
रयामासदण्डिनम् ॥ रामाज्ञयायतिश्चापिविव्हलोराघवंययौ २३ नत्वायतिंतंश्रीरामस्तदावचनमब्रवीत् ॥ स्वामिन्किमर्थंयुष्माभिश्छिन्नःपादोऽस्यवैशुनः
२४ तद्रामवचनंश्रुत्वायतिःप्राहरघूत्तमम् ॥ भिक्षार्थंभ्रमतोमार्गेभिक्षान्नंस्पर्शितंमम २५ शुनाऽनेनराघवेंद्रमध्यान्हेक्षुधितस्यच ॥ मयाऽतःक्रोधचित्तेनशुने
ऽस्मैह्यपराधिने २६ धर्षितुंचोपलःक्षिप्तस्तेनभिन्नंपदंशुनः ॥ तद्यतेर्वचनंश्रुत्वापुनस्तंप्राहराघवः २७ ज्ञानहीनःपशुश्चायंभक्ष्यंस्वीयंनिरीक्ष्यच ॥ स्पर्शितस्त्वां
तस्यदोषोनैवायंवेद्म्यहंयते २८ त्वमेवास्यस्यापराधीतद्दंडंसोढुमर्हसि ॥ इत्युक्त्वासारमेयंतंराघवोवाक्यमब्रवीत् २९ यतिश्चायंतेऽपराधीतवहस्तेऽर्पितोमया ॥
यंत्वमिच्छसि वैकर्तुंतस्मैदंडंसुखंकुरु ३० तद्रामवचनंश्रुत्वासारमेयोब्रवीत्प्रभुम् ॥ शिवालयाधिपत्येचस्थापनीयोयतिःप्रभो ३१ तथेतिरामचंद्रोऽपिशिविकायांन्य
वेश्यतम् ॥ स्रग्वस्त्रचंदनाद्यैश्चसंपूज्याऽथयतिंमुदा ३२ वाद्यघोषैर्नर्तनाद्यैरुत्सवैश्चशिवालयम् ॥ नीत्वाशिवालयस्याऽधिपत्येसंस्थापयत्प्रभुः ३३ तदाऽ
ज्ञानाद्यतिर्दैवंफलितंचेत्यमन्यत ॥ ततोरामोजनैर्युक्तःस्वांसभांसंवि वेशह ३४ तत्सर्वंकौतुकंदृष्ट्वापौराःप्रोचूरघूत्तमम् ॥ कथंशुनाऽद्ययतयेशिक्षेदृक्साधिताप्रभो ३५
अत्रार्थंभ्रमतस्तस्ययतेर्दत्तंपदंमहत् ॥ तेनातिसौख्यंसंजातंयतयेशिक्षितंनतत् ३६ तत्पौरवचनंश्रुत्वाराघवस्तान्वचोब्रवीत् ॥ प्रष्टव्यःश्वातुयुष्माभिर्वःसंदेहंहरिष्यति
३७ तथेतिसारमेयंतंप्रपच्छुर्नागराश्चतत् ॥ तान्प्रोवाचसारमेयःशृणुध्वंयन्मयोच्यते ३८ कृषिपंजातधान्यौघखलसन्मानकारिणः ॥ शिवालयमठारामदानग्रामाधि
कारिणः ३९ अनाथस्त्रीबालवित्तहारिणःक्रूरनिःस्वनाः ॥ गोविप्रशिववित्तस्यहारिणोऽन्यायकारिणः ४० नृपगेहेप्रविष्टानांयाचकानांनिवारिणः ॥ परद्रव्यापहर्तारः
प्रायश्चित्ताधिकारिणः ४१ विप्रभोजनद्रव्यस्यहोमद्रव्यस्यहारिणः ॥ बहुद्रव्यापहर्तारश्चैतेसर्वेऽन्यजन्मनि ४२ गच्छंतिवैशुनोयोनिंसत्यमेतद्वचोमम ॥ मयामठा ॥ १९ ॥
धिपत्याच्चलब्धायोनिःशुनःस्वयम् ४३ अतोमयाऽद्ययतयेशिक्षितुंपदमर्पितम् ॥ इतितद्वाक्यमाकर्ण्यनागराश्छिन्नसंशयाः ४४ तेययुःस्वीयगेहानिययौश्वाऽपि
निजस्थलम् ॥ देहांतेसयतिर्जातःशुनोयोनौस्वकिल्बिषात् ४५ आपस्तम्बाश्रमांमुक्तिंभुक्त्वाऽऽद्दौस्वीयकिल्बिषम् ॥ नज्ञेयोऽयंयतिःशिष्यसाकेतेत्रश्रुतास्त्विति

४६ स्थलांतरेमृतश्चायंगतःकार्यार्थमात्मनः ॥ अयोध्यायांमृतानांचपुनर्जन्मनविद्यते ४७ कयतिःसारमेयत्वंकसश्चाकगतिश्वसा ॥ गहनाकर्मणश्चात्रगतिर्ज्ञेया
महात्मभिः ४८ कयतिःसारमेयःकन्यायश्चेत्थंरमापतेः ॥ आसीत्सत्यःसदैवात्रनान्यायस्तन्मुखेक्षणात् ४९ अथैकदातुसाकेतवासिनोभूसुरस्यच ॥ पंचत्वंपंचवर्षी
यःपुत्रःप्राप्तःशिशुःप्रियः ५० तदाविप्रःसपत्नीकस्तत्प्रेतमरुणोदये ॥ राजद्वारंसमानीयरुरोदोच्चैःस्वरैर्मुहुः ५१ अब्रवीत्पुत्रशोकेनव्यथितःक्रोधसंयुतः ॥ सीतामा
लिंग्यराजेंद्रकथंत्वंनिद्रितोऽसिहि ५२ त्वद्राज्येऽद्यमृतःकस्यमृतोमेबालकःप्रियः ॥ त्वत्तोऽधर्मोऽथवाऽन्याच्चजातोऽधर्मोनवेद्म्यहम् ५३ नृपेपापिनिम्रियंते
नराह्यल्पायुषःश्रुतं ॥ यस्यराज्येजनैःसर्वैर्योऽधर्मःक्रियतेभुवि ५४ सोऽपिज्ञेयोनृपस्यैवयतस्तेषांनशिक्षितम् ॥ अतस्तेऽधर्मिणोराज्ञोराज्येमेऽयंशिशुर्मृतः ५५ उपायं
चिंतयस्वास्यजीवनेऽद्यजवान्नृप ॥ नोचेदार्वाचितिंचारुरोहावस्तनयेनहि ५६ स्मरवृत्तंश्रावणस्यहेतोर्यज्जनकायते ॥ जातंशापादिकंपूर्वंतद्वदत्रापितेभवेत् ॥
५७ ततोविप्रप्रियाप्राहसीतांप्रोच्चस्वरेणहि ॥ कथंत्वंपतिमालिंग्यनिद्रिताऽसिसुखंशुभे ५८ त्वमप्यसिपुत्रवतीमेदुःखंमाऽऽत्मनःकुरु ॥ उपायंकारयस्वाद्यभर्त्रा
स्यजीवनेशिशोः ५९ इतितद्दंपतीवाक्यंश्रुत्वासर्वेपुरोकसः ॥ आसन्प्रव्यग्रचित्तास्तेप्रेतमावार्यसंस्थिताः ६० सीतारामावपितयोर्वाक्यंश्रुत्वातिविह्वलौ ॥ विनिर्ग
तौरतिशालावहिस्तद्दुःखदुःखितौ ६१ निवार्यवंदिगीतानिराजद्वारंतयोःपुरः ॥ वेगेनजग्मतुःपादैःसीतारामौगतश्रियौ ६२ दृष्ट्वासीतांचरामंचतौशोकंचक्रतुर्मुहुः ॥
तावाश्वास्यरामचंद्रस्तदाहगद्गदाक्षरः ६३ माशोकंकुरुतश्चोभौमद्गिरंशृणुतस्त्विति ॥ कृत्वोपायंहियुवयोःपुत्रंसंजीवयाम्यहम् ६४ नजीवितश्चेद्युवयोःपुत्रस्तर्ह्यर्पये
कुशम् ॥ गिरंसत्यामिमांचोभौपश्यतस्त्विहमेऽद्यहि ६५ ततस्सीताविप्रपत्नीमाश्वास्याहगिरंशुभाम् ॥ रामेणतेप्रतिज्ञातंकुशदानेनभामिनि ६६ अहमप्यद्यतेवच्मि
तवदुःखस्यशांतये ॥ नजीवितश्चेद्रामेणमयाऽयंत्वच्छिशुःप्रियः ६७ तर्हित्वद्दुःखशांत्यर्थमर्पयेऽहंलवंप्रियम् ॥ ताभ्यांकुशलवाभ्यांत्वंपुत्रदुःखंत्याजिष्यसि ६८ भजिष्य
सित्वंमत्सौख्यमतःशोकंकुरुष्वमा ॥ ततःप्राहद्विजंरामस्त्वंपत्न्याऽत्रस्थिरोभव ६९ माकुरुष्वमुहुःखेदंत्वत्पुत्रंजीवयाम्यहम् ॥ इत्युक्त्वालक्ष्मणेनैवतैलद्रोण्यांशवंशिशोः
७० निधायक्रमिदुर्गंधदुस्फुरणप्रशांतये ॥ स्वयंस्नात्वानित्यविधिंचाकरोत्खिन्नमानसः ७१ ततःसभासंस्थितःसन्वसिष्ठंप्राहराघवः ॥ राज्यंशासतिधर्मेणतत्राऽ
यंवैशिशुःकथम् ७२ बाल्यत्वेपंचतांप्राप्तस्तत्रोपायंविचिंत्यताम् ॥ इतियावद्वदुक्तंरामःप्रोवाचतांवदंबरात् ७३ नारदःप्रययौवीणांरणयन्तत्सभांजवात् ॥ प्रत्युद्ग
म्याऽथतंरामःपरिपूज्ययथाविधि ७४ संप्राव्यसकलंवृत्तंपुनःपप्रच्छतंमुनिम् ॥ त्वयोपायोऽत्रवक्तव्यःशिशोश्चास्यप्रजीवने ७५ पुत्राभ्यांहिप्रतिज्ञातंद्विजा
यसीतयामया ॥ किमर्थंममराज्येऽभोमृतस्त्वीदृक्श्वेप्रचहम् ७६ तद्रामवचनंश्रुत्वाराघवंप्राहनारदः ॥ रामत्वद्विषयेऽधर्मंनकोप्याचरतेजनः ७७ भूम्यां
सर्वत्रद्रष्टव्यंत्वयागत्वाऽद्यमद्गिरा ॥ यद्यप्यहंविजानामिभूम्यांवृत्तंचजानतः ७८ तथापिजनशिक्षार्थंत्वामेवप्रेषयाम्यहम् ॥ त्वंदृष्ट्वाऽधर्मंनिरतंजनंशिक्षयसाद

१ मद्गीर्यंप्रितिपाठः । २ वदतांवरइतिपाठः ।

रम् ७९ अधर्मोच्छेदनेनायंजीवयिष्यतिवैशिशुः ॥ तथेतिराघवश्चोक्त्वाविसर्ज्यनारदंमुनिम् ८० सीतयानागरैःसर्वैर्भ्रातृभिर्गुरुणासह ॥ पुत्राभ्यांमंत्रिभिर्युक्तःपु
ष्पकंचारुरोहसः ८१ एतस्मिन्नंतरेऽभ्रेभून्महान्कोलाहलस्तदा ॥ तंश्रुत्वाचकितोरामःसददर्शसमंततः ८२ तावद्ददर्शपुरतःपौरैःसंवेष्टितांस्त्रियम् ॥ शवमप्यपरंशृंगवे
॥ १६ ॥ रतश्चसमागतम् ८३ रामंदृष्ट्वापुष्पकस्थंरुदतीब्राह्मणीपुरः ॥ दीर्घस्वरेणप्रोवाचहस्ताभ्यांहृदिताडयसा ८४ रामराममहाबाहोतेराज्येगतभर्तृका ॥ अहंजाताऽस्मि
त्वद्दोषान्मांदृष्ट्वात्वंनलज्जसे ८५ मद्भर्तारंजीवयैनंनोचेच्छापंददामिते ॥ इतितस्यावचःश्रुत्वाराघवःखिन्नमानसः ८६ अब्रवीन्मधुरंवाक्यंब्राह्मणींतोषयन्मुहुः ॥ क्रो
धंशमयरंभोरुतेभर्तारंप्रजीवये ८७ अस्यैवहेतोर्गच्छामित्वंमद्गेहेसुखंवस ॥ इत्युक्त्वाऽऽश्वास्यतांरामस्तच्छवंचापिपूर्ववत् ८८ तैलद्रोण्यांस्थापयित्वासुमंत्रंवाक्यमब्र
वीत् ॥ आगमिष्याम्यहंयावत्तावत्कस्यापिनोशवम् ८९ त्वयावन्हौज्वालनीयंरक्षणीयंप्रयत्नतः ॥ सर्वानपित्वयाभूम्यांश्राव्यंदुंदुभिनिःस्वनैः ९० नकस्यापिशवंद
ग्धंकाऽपिकार्यंजनैस्त्विति ॥ तथेतिराघवंचोक्त्वादूतैःसंश्राव्यतद्वचः ९१ सुमंत्रःसकलान्प्रभूस्थानसाकेतेन्यवसत्सुखम् ॥ रामोऽपिपुष्पकेनैवपश्चिमांचोत्तरांदिशम् ९२
पूर्वामपिशनैःपश्यन्दक्षिणाभिमुखोययौ ॥ एतस्मिन्नंतरेऽयोध्यापुर्यांपंचशवानिहि ९३ समानीतानितैलस्यद्रोण्यांतान्यपिपूर्ववत् ॥ सुमंत्रःस्थापयामासश्रीराम
स्याज्ञयादरात् ९४ तेषुपंचशवेष्वेवचैकंमधुपुरिस्थितम् ॥ क्षत्रियस्यचतज्ज्ञेयंसमानीतंसुहृज्जनैः ९५ प्रयागस्थंद्वितीयंचशवंवैश्यस्यतत्स्मृतम् ॥ पूर्वेवयसिपंचत्वात्स
मानीतंहितज्जनैः ९६ हस्तिनापुरसंस्थंतत्तृतीयंशवमीरितम् ॥ तैलकारस्यतज्ज्ञेयंसमानीतंहितज्जनैः ९७ शवंचतुर्थंतज्ज्ञेयंहरिद्वारस्थितंद्विज ॥ लोहकारस्नुषाया
श्चसमानीतंहितज्जनैः ९८ उज्जनीस्थंपंचमंचशवंज्ञेयंमहामते ॥ चर्मकारदुहितायाःसमानीतंहितज्जनैः ९९ एवंपंचशवान्यासन्पूर्वेद्विब्राह्मणस्यच ॥ सताःयोध्यापुरीम
ध्येशवान्येवस्थितानिहि १०० रामोपिदंडकंपश्यन्सबभ्रामसमंततः ॥ ययौविंध्याचलंवीमान्रेवावारिपरिप्लुतम् १ तत्रवृक्षेलंबमानंधूम्रंपातुमधोमुखम् ॥ शूद्रंनिरी
क्ष्यस्वर्गेच्छंतंहंतुंसमुपस्थितः २ तदातंराघवःप्राहभोशूद्रशृणुमद्वचः ॥ ब्राह्मणादित्रिभिर्वर्णैस्तपःकार्यंनचेतरैः ३ शूद्रैश्चद्विजशुश्रूषासदाकार्याऽतिभक्तितः ॥ द्विज
कृत्यंत्वयाचाऽत्रकृतंपापात्मनाजड ४ इदानींत्वांहनिष्यामिजीवयिष्यामियान्मृतान् ॥ तुष्टोऽहंत्वांत्वत्तपसावरंवरयवांछितम् ५ इतिरामवचःश्रुत्वाऽधोमुखोरामपाद
जः ॥ उवाचभयभीतःसन्नत्वारामंमुहुर्मुहुः ६ रामरावणदर्पघ्नयदितुष्टोऽसिमांप्रभो ॥ तर्हितेवरयाम्यद्ययेनशूद्रगतिर्भवेत् ७ ममापियेनकीर्तिःस्यात्तंवरंदातुमर्हसि ॥
इतिशूद्रवचःश्रुत्वारामस्तुष्टोऽब्रवीद्वचः ८ ममरामेतियन्नामतच्छूद्रैःसर्वदैवहि ॥ जपनीयंकीर्तनीयंचिंतनीयंमुहुर्मुहुः ९ भविष्यतिगतिस्तेषामनेनमत्परोभव ॥ त
वानेनोपकारेणकीर्तिःशूद्रेषुवैभवेत् ११० इतिरामवरंश्रुत्वापुनःशूद्रोऽब्रवीद्वचः ॥ शूद्राःकलौमंदधियोभविष्यंतिरघूत्तम ११ व्यग्रचित्ताभविष्यंतिकृषिकर्मादिभिःप्र ॥ १६ ॥
भो ॥ तदातेषांकुतोबुद्धिर्जपादिषुभविष्यति १२ अतस्तदनुरूपोऽद्यवरोदेयोविचार्यच ॥ ततस्यवचनंश्रुत्वारामस्तुष्टोऽब्रवीत्पुनः १३ परवंदनकालेषुरामरामेतिसर्व

१ मत्पदोभवेरितिपाठः ।

दा ॥ शूद्रावदंतुसर्वत्रतेनतेषांगतिर्भवेत् १४ तत्रापीयंमहाकीर्तिःस्मरिष्यंतिमदंघ्रिजाः ॥ त्वंमयानिहतस्त्वद्यवैकुंठंप्रतियास्यसि १५ पुनर्ययाचश्रीरामंवरमन्यंस्व
कारणात् ॥ अस्मिन्शैलेसदातिष्ठसीतालक्ष्मणसंयुतः १६ अंशतस्तेपूर्वमेवदर्शनंममयेनराः ॥ करिष्यंतिततःपश्चाद्येनरास्त्वदर्शनम् १७ कुर्वंतिसततंभक्त्यामो
क्षमेवव्रजंतिते ॥ मद्दर्शनंविनामर्त्यास्त्वांपश्यंत्यविचारतः १८ तेषामुद्धरणंरामकुरुमद्वचनंप्रभो ॥ तथेवाचतदारामःशक्तितस्यददौहरिः १९ इतिकृत्वासुसंतुष्टंहत्वा
शूद्रंरघूत्तमः ॥ जीवयामासविप्रादीन्सततसाकेतसंस्थितान् २० तदारभ्याऽत्रशूद्रैस्तुविष्णुदासाऽवनीतले ॥ परवंदनकालेषुरामरामेतिकीर्त्यते २१ तंहत्वारघुवीरःसप
रिवर्त्यमुदान्वितः ॥ सीतांनानाकौतुकानिदर्शयन्स्वपुरींययौ २२ एतस्मिन्नंतरेमार्गेगृध्रोलूकौनिरीक्षितौ ॥ विवदमानौरामेणचात्मानंद्रष्टुमागतौ २३ तावुवाचरघु
श्रेष्ठःकिमर्थंहियुवांशुभौ ॥ विवदमानौसंप्राप्तौमांहूतस्त्वद्यविस्तरात् २४ तद्रामवचनंश्रुत्वातदोलूकोऽब्रवीत्प्रभुम् ॥ मयापूर्वंकृतंरामनगोपरिगृहंवने २५ तत्कालेन
मयात्यक्तंतत्रगृध्रोऽस्तितसंस्थितः ॥ नानेनदीयतेसद्मंममगेहंरघूत्तम २६ तदुलूकवचःश्रुत्वागृध्रमाहरघूद्वहः ॥ किमर्थंदीयतेनास्यत्वयागृध्रगृहंवद २७ तदागृध्रोऽब्र
वीद्वाक्यंराघवंदीर्घनिःस्वनः ॥ मयापूर्वंकृतंरामनगोपरिगृहंवने २८ तत्कालेनमयात्यक्तंतत्रोलूकःकियाद्दिनम् ॥ स्थितस्तेनापितत्त्यक्तंतत्राहंसंस्थितःपुनः २९ वृ
थायंस्पर्धतेराममत्वागेहंममेतिच ॥ माऽधर्मंकुरुराजेंद्रत्वदृशेऽभूत्नपातकी ३० तावुवाचरघुश्रेष्ठोयुवाभ्यांहियदागृहम् ॥ कृतंतस्यात्रकःसाक्षीतदातौनेतिचो
चतुः ३१ विमानस्थास्तदासर्वेतत्रराघवश्चाहसस्मितः ॥ इदमप्यद्यसंप्राप्तंवुर्घटंमांपुरस्त्विह ३२ कथंन्यायोऽत्रवैकार्यःकस्मैगेहंप्रदीयताम् ॥ तद्रामवचनंश्रुत्वाऽऽस
न्सर्वेतेऽतिविस्मिताः ३३ तदोलूकंविभुःप्राहकृतंगेहंत्वयाकदा ॥ उलूकःप्राहभूश्चेयंयदाजातातदाकृतम् ३४ तदुलूकवचःश्रुत्वागृध्रंरामोवलोकयत् ॥ गृध्रःप्राहयदानेयं
महानीरेऽवनिस्तदा ३५ चूतवृक्षेकृतंविद्धिपुरागेहंमयाविभो ॥ तद्गृध्रवचनंश्रुत्वातदातंप्राहराघवः ३६ कथंविनाऽऽश्रयेणासीन्महानीरेनगस्तदा ॥ नोक्तोऽक्षयवटःसोऽ
पिचूतवृक्षस्त्वयास्मृतः ३७ तस्मात्पृथात्वयागृध्रस्पर्ध्यतेऽनेननिश्चितम् ॥ मयाऽद्यतववाक्येनशिक्षा्त्वांदुष्टपतत्रिणम् ३८ इत्युक्त्वाराघवोदूतैस्तंगृध्रंपर्वतोपरि ॥ त्रि
शूलाग्रेषुचारोप्यप्रेषयामासस्वंपदम् ३९ धन्यःसगृध्रोविज्ञेयोरामाग्रेयस्यवैमृतिः ॥ अभूत्तद्दर्शनमपियस्यदेहविसर्जने ४० दत्त्वागेहमुलूकाययर्यौरामोनिजांपुरीम् ॥
विवेशनगरींनृत्यवाद्यगीतपुरःसरम् ४१ शिशुंविप्रंक्षत्रियंचवैश्यंचापिचतुर्थकम् ॥ तैलकारंपंचमंचलोहकारस्नुषांतथा ४२ चर्मकारदुहितरंसप्तैतान्हिसुजीवि
तान् ॥ दृष्ट्वारामःसमायातानात्मानंद्रष्टुमादरात् ४३ तुतोषनितरांपत्न्यातैःसर्वैःसंस्तुतोमुहुः ॥ ततःसम्पूज्यतान्सर्वान्विससर्जरघूद्वहः ४४ तदामहोत्सवश्चासीदयो
ध्यायांसमन्ततः ॥ एवंनानाचरित्राणिचकाररघुनन्दनः ४५ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वाल्मीकीये राज्यकांडेपूर्वार्धे यतिशूद्रगृध्रशि
क्षोपकरणंनामदशमःसर्गः ॥ १० ॥ ॥ श्रीरामदासउवाच ॥ अथैकदारामचन्द्रोमृगयार्थंवनंययौ ॥ सीतयाबन्धुभिःसैन्यैर्हस्त्यश्वरथपत्तिभिः १ पश्यन्वनानिसर्वा

१ रथकोटिभिरितिपाठः ।

णिमृगयारसिकोभृशम् ॥ कौतूहलसमाविष्टओखेटव्यूहसंवृतः २ उपानद्गूढपादश्चनीलोष्णीषीहरिच्छदिः ॥ नीलगोधांगुलित्राणोधनुष्पाणिःशरीन्नृपः ३ अश्वारू
ढःखड्गचर्मधारीभूपैःपदातिभिः ॥ वेष्टितःकञ्चीरामोवि वेशगहनंवनम् ४ सीतयाजालरंध्रैश्चवारंवारंनिरीक्षितः ॥ सरामोबन्धुवर्गैश्चपुत्राभ्यांनृपसत्तमैः ५ क्रीडां
मुदाकरोत्तत्रकुंजेषुमृगयन्मृगान् ॥ हन्यतांहन्यतामेषोमृगोवेगात्पलायते ६ इतिजल्पन्स्वभृत्येषुस्वयमुत्पत्यहंतिच ॥ गांधारेषुचरम्येषुवनेषुविपुलेषुच ७ उल्लंघि
तमहास्रोतायुवापञ्चास्यविक्रमः ॥ इतस्ततःपुनर्यातिकचित्पश्यन्वनस्थलीम् ८ विटपोड्डीनसंत्रस्तलीनकेकिकुलाकुलाम् ॥ हरिणीगणसंत्रस्तांधावच्छावपदादिङ्मु
खाम् ९ कचित्फेरवफूत्कारझिल्लीरावविभीषिताम् ॥ खड्गयूथैःकचिल्लक्ष्मींदधानामिवदंतिनाम् १० कचित्कोटरसंविष्टशुकनादविनादिनीम् ॥ मृगारिपदमुद्राभिर्मु
द्रितांचकचित्कचित् ११ शार्दूलनखनिर्भिन्नरोहिद्रक्तारुणांकचित् ॥ पीवरस्तनभारार्तसुस्निग्धमहिषीगणैः १२ अवरोधाजिरक्षोणिंसूचयन्तीमिवकचित् ॥ क
चिद्वृक्षघनच्छायांवनपुष्पसुगंधिनीम् १३ कचिल्लताग्रहद्वारिभृंगमंडलतोरणाम् ॥ अर्धनिःसृतनिर्मोकनागभीममहाद्बिलाम् १४ वृत्तास्याजगरैर्व्याप्तांकचिन्निर्मुक्तस
र्पिणीम् ॥ कचिद्दावानलज्वालाशिखाव्याप्तमहीरुहाम् १५ ज्वलन्निकुंजनिर्गच्छन्वृकव्याघ्रत्रसद्भटाम् ॥ व्यमुचंस्तुशुनांयूथंशशकेषुकचित्कचित् १६ पल्वलेषुच
विश्रांतःपुनर्यातिवनांतरम् ॥ ततोमध्यान्हसमयेनिवासंसरसस्तटे १७ कारयामाससेनायाःसीतायाश्चरघूत्तमः ॥ स्वयंमुदाकरोत्क्रीडामाखेटव्यूहसंवृतः १८ दुद्रा
वमृगपृष्ठेषुमुक्ताबाणंजघानतान् ॥ एवंखेलतिराजेंद्रेव्यांघ्रवर्गेचवैद्विज १९ तत्रकोलाहलत्रस्तःपंचास्योनिर्गतोवनात् ॥ सकेसरीमहावेगस्तीक्ष्णदंष्ट्रोभयावहः २०
स्फुरद्वेगसमाक्रांतदुर्गमार्गमहीतलः ॥ कदाचिद्गगनारूढःकदाचिद्भूमिगश्चलः २१ नैरयाल्लक्ष्यतांयातिधन्विनांपृष्ठगामिनाम् ॥ कचिद्दृष्टिपथंयातिदर्शनागोचरःकचित्
२२ वक्रस्रोतोऽतिगंभीरंकंटकीद्रुमसंकुलम् ॥ वृकव्याघ्रसमाकीर्णपर्वतैश्चभयंकरम् २३ प्रविष्टोविषमारण्यंरामस्तस्यपदानुगः ॥ दूराद्दूरंततोगत्वादेशाद्देशंचनिर्जनम्
२४ एकाकीहयमारूढोविवेशगिरिगव्हरम् ॥ सर्वव्याधाश्चदूताश्चलक्ष्मणाद्याश्चबधवः २५ रामादर्शनसंभ्रांताबभ्रमुस्तइतस्ततः ॥ अथरामःकेसरिणंजघानसितप
त्रिणा २६ ततःसदिव्यरूपेणनत्वामाहरघूत्तमम् ॥ पुराविद्याधरश्चाहंमयाभुक्तापतिव्रता २७ मुनिपत्नीहठेनैवतयाशप्तस्त्वहंकुधा ॥ सिंहवन्निग्रहोयस्मात्त्वयामयि
कृतोऽद्यहि २८ अतस्त्वंमद्गिरासिंहोभवाद्यैवमहावने ॥ तदामयाप्रार्थितासापुनर्मामाहराघव २९ चिराद्रामशरस्पर्शाच्छापान्मुक्तिर्भवेत्तव ॥ अतोऽद्यत्वच्छरस्प
र्शाच्छापान्मुक्तश्चिरादहम् ३० इत्युक्त्वाराममामंत्र्यसस्वर्गंप्रययौमुदा ॥ ततःसरामचंद्रोऽपितुरगस्थोमुदान्वितः ३१ तत्रतस्थौक्षणंयावत्तावत्तद्गिरिगव्हरे ॥ गुहा
द्वारिशिलामेकांददर्शयोजनायताम् ३२ महतींतांशिलांदृष्ट्वारामोविस्मितमानसः ॥ धनुष्कोट्याक्षिपद्दूरंगुहायांसंवि वेशह ३३ कियद्दूरंततोगत्वाऽग्रेप्रकाशं
ददर्शसः ॥ तत्रद्रोण्यांपर्वतस्यतपस्यंत्यःस्त्रियःप्रभुः ३४ ददर्शरामश्चत्वारःकिंचिदंतरसंस्थिताः ॥ अस्थिचर्मावशिष्टेश्चदेहैर्दृग्गोचरीकृताः ३५ श्वासैःस

१ मृगयासंबंधिजनसंवृतइत्यर्थः । २ तारारावेतिपाठः । ३ व्याघ्रवर्गेपलायतिइतिपाठः । ४ नराणांलक्ष्यतामितिपाठः ।

जीविताश्चेतिज्ञातवांस्तारघूत्तमः ३६ निजरूपाणिचत्वारिकृत्वादौतत्पुरःस्थितः ॥ अब्रवीन्मधुरंवाक्यंभिन्नरूपेणताःपृथक् ३७ वरयध्वंवरान्नार्यःप्रसन्नोहंरघू
त्तमः ॥ ततस्तारामसंस्पर्शान्मांसरक्तादिधातुभिः ३८ पूरितानिशरीराणिददृशुर्नयनैर्निजैः ॥ श्रुत्वातद्रामवाक्यंतायदास्वपुरतोऽक्षिभिः ३९ नार्योविलो
कयामासुःसर्वाःश्रीरघुनायकान् ॥ कोटिसूर्यप्रतीकाशांश्चापबाणासिधारिणः ४० हयारूढान्नृवेषेणसर्वासांपुरतःस्थितान् ॥ चतुर्मूर्तींश्चैकरूपास्ताहृष्ट्वाकंजलो
चनाः ४१ आतिविस्मयमापन्नास्तदोचुस्तान्पृथक्पृथक् ॥ केयूयंवाजिसंस्थाहिकुतःसर्वेसमागताः ४२ यूयंदेवादानवावागम्यतेकाधुनापुरः ॥ अस्माकं
कथ्यतांसर्वंकिमर्थंभाषितावयम् ४३ अस्माकंदुःशरीराणिकमनीयानिवैकथम् ॥ जातान्यद्यमहादैत्योदुंदुभिःसोस्तिवामृतः ४४ इतितासांवचःश्रुत्वाराघवस्ताव
चोऽब्रवीत् ॥ अहंचतुर्भिर्देहैश्चरामस्त्वेकोनसंशयः ४५ सप्तद्वीपपतिःश्रीमान्सूर्यवंशसमुद्भवः ॥ मृगयार्थंसमायातःकेसरीनिहतोवने ४६ धनुष्कोट्याशिलांत्यक्त्वायुष्म
दंतिकमागतः ॥ स्वकरस्पर्शमात्रेणशरीराणिशुभानिहि ४७ मयाकृतानियुष्माकंवालिनादुंदुभिर्हतः ॥ समयानिहतोवालीरावणस्यांतकारिणा ४८ संभाषितावरान्
दातुंयूयंसर्वामयाऽद्यहि ॥ नाग्रेऽस्तिममकार्यंहिपरिवर्त्यपुरींव्रजे ४९ यत्पृष्टंतन्मयाचोक्तंकायूयंकथ्यतांमम ॥ किमर्थंदुंदुभिःपृष्टःकावांछाव्रियतांवरान् ५० तद्राम
वचनंश्रुत्वादुंदुभिर्निहतस्त्विति ॥ शिलांनिष्कासितांचापिसर्वास्तुष्टिंपरांययुः ५१ ऊचुःसर्वास्तदाराममानंदोत्फुल्ललोचनाः ॥ वयंब्राह्मणपुत्र्यश्चचत्वारस्त्वथषोड
श ५२ सहस्राणिनृपाणांचवैश्यानांकन्यकाःपुरा ॥ समानीताबलादेवतेनदुंदुभिनाप्रभो ५३ लक्षस्त्रीभिर्विवाहांश्चसर्वानेकदिनेत्वहम् ॥ करोमीतिमन्यमानःस्त्रीरत्ना
निजहारसः ५४ यानियानिजहारस्त्रीरत्नानिरघुनन्दन ॥ अस्यांद्रोण्यांस्थाप्यतानिदत्त्वाद्वारिशिलांवराम् ५५ अचलांत्वद्विनान्यैश्चस्त्रीःसमानेतुमादरात् ॥ पुनश्चिरं
गतोदैत्योवयमत्रैवसंस्थिताः ५६ वर्ततेऽग्रेनृपाणांचवैश्यानांबालिकाःप्रभो ॥ वायुपर्णाशनाःसर्वाःश्रीविष्ण्वर्पितमानसाः ५७ तत्तासांवचनंश्रुत्वाभिन्नरूपैःपुनःप्रभुः ॥
ताउवाचस्त्रियःसोहंविष्णुरेवनसंशयः ५८ तद्रामवचनंश्रुत्वापुनस्तारामम्ब्रुवन् ॥ दर्शयस्वनिजंविष्णुरूपंचेत्सत्यवागसि ५९ ततस्तादर्शयामासविष्णुरूपंनिजंप्र
भुः ॥ तानिचत्वारिरूपाणिसमासाद्यरघूत्तमः ६० ततस्ताःपुरतोविष्णुंदृष्ट्वानेमुःस्वमस्तकैः ॥ ततोविष्णुःसताःप्राहवःसंदेहोगतोनवा ६१ ताऊचुर्दर्शनात्तेऽद्यमवक्षे
शगताहिनः ॥ क्रियांस्तुतत्रसंदेहस्त्वज्ञानजनितःप्रभो ६२ ततःपुनःक्षणाद्रामोरूपंतादर्शयन्मुदा ॥ एकमेवहिसर्वासांमध्येजनकजापतिः ६३ ततोरामोऽब्रवीत्ताः
सवरंवरयतामिति ॥ ताऊचुःकामबाणेनपीडितारावघंमुदा ६४ भवभर्तात्वमेवाऽद्यगांधर्वविधिनावने ॥ अस्माभिस्त्वंकुरुष्वाऽत्रसुखंक्रीडांचिरंप्रभो ६५ ततोनयपुरींस्वी
यांनस्त्वंमाऽन्यद्विचिंतय ॥ तत्तासांवचनंश्रुत्वाराघवोवाक्यमब्रवीत् ६६ एकपत्नीव्रतंमेऽस्तिनवाक्यंममवैमृषा ॥ ततस्ताविह्वलाभूत्वानिपेतुर्जगतीतले ६७ पुनस्ताः
प्राहरामःसशृणुध्वंवचनंमम ॥ द्वापरेकृष्णरूपेणयूयंक्रीडांभजिष्यथ ६८ मित्रविंदानाग्नजितीभद्राऽन्यालक्ष्मणाह्वया ॥ एवंनामानियुष्माकंभविष्यंतितदामया ६९ भवि
ष्यंतिविवाहाश्चसर्वासांनात्रसंशयः ॥ तदानानाविधान्भोगान्भजध्वंवैमयासह ७० तद्रामवचनंश्रुत्वाकिंचितुष्टमनःस्त्रियः ॥ रामंमोचुःपुनर्वाक्यंत्वमग्रेगंतुमर्हसि ७१

ताभिःशनैस्ततोरामोययौतुरगसंस्थितः ॥ योजनोपरिताःसर्वाःसहस्रंषोडशशुभाः ७२ ददर्शगण्डकीतीरेवृक्षखण्डेरघूद्वहः ॥ निमीलितदृशःशुष्कास्तपसादग्धयौ
वनाः ७३ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये राज्यकांडे पूर्वार्धे द्विजकन्याचतुष्टयवरदानं नामैकादशःसर्ग ॥ ११ ॥ ॥
॥ श्रीरामदासउवाच ॥ अथरामःशनैःसर्वाःस्पृष्ट्वानिजकरेणताः ॥ कृत्वातारुण्यपूरौघपूरिताःप्राहसादरम् १ पूर्ववत्सकलंवृत्तंसर्वाःसंश्राव्यविस्तरात् ॥ वरंवरयतां
शीघ्रमित्युक्त्वाचरघूत्तमः २ इतंतंदुन्दुभिंश्रुत्वाहर्षोत्फुल्लाननाःस्त्रियः ॥ पूर्ववद्विष्णुरूपाणिसहस्राणिहिषोडश ३ सन्दर्शितानिरामेणतावंतिचस्थितानिच ॥ रामरू
पाणितादृष्ट्वाज्ञात्वाविष्णुंपरात्परम् ४ तंवरान्वरयामासुस्त्वन्नोभर्ताभवप्रभो ॥ ततोराममुखाच्छ्रुत्वाचैकपत्नीव्रतस्थितम् ५ परस्परंताःसंमंत्र्यप्रोचुःसर्वामृगीदृशः ॥
मयावृतस्त्वयाचार्यंत्वयावृतस्तथामया ६ एवंतासुचसर्वासुवदन्तीषुरघूत्तमः ॥ श्रुत्वातद्वचनंशिष्यतदाचित्तेविचारयत् ७ इमावदन्तिकिंसर्वामांश्रुत्वाऽपिव्रतस्थि
तम् ॥ बलात्कारेणमांभोक्तुंमन्त्रयन्तिपरस्परम् ८ ब्रह्मरुद्रमघवादयःसुरायेचसिद्धमुनयःपुरातनाः ॥ तेऽपियोगबलिनोविमोहितालीलयातदबलाभिरद्भुतम् ९
योषितांनयनतीक्ष्णसायकैर्भ्रूलतासुदृढचापनिर्गतैः ॥ धन्विनामकरकेतुनाहतःकस्यनोपततिकोमनोमृगः १० तावदेवदृढचित्तताघृणातावदेवगणनाकुलस्यच ॥ तावदे
वतपसःप्रगल्भतातावदेवनियमव्रतादयः ११ यावदेववनितोत्सवासवैर्माद्यतिद्रुतमदेनपूरुषः ॥ मोहयंतुमदयंतुरागिणंयोषितःस्वचरितैर्मनोहरैः १२ मोहयन्तिमद
यन्तिमामिमाधर्मरक्षणपरंहिकैर्गुणैः ॥ मांसरक्तमलमूत्रपूरितेयोषितांवपुषिनिर्गुणेऽशुचौ १३ कामिनस्तुपरिकल्प्यचारुतामारमंतिसुविमूढचेतसः ॥ दारुणोहिप
रिकीर्तितोंगनासन्निधिर्विमलबुद्धिवर्तिभिः १४ यावदेवनसमीपमागतास्तावदेवहिव्रजाम्यदृश्यताम् ॥ तर्हिमेव्रतमिदंसुनिर्मलंनान्यथाकथमहंकरोम्यहम् १५ अथवा
किंकरिष्यन्तिमामेकदायिताप्रियम् ॥ इतिनिश्चित्यश्रीरामस्तत्रतूष्णींस्थिरोऽभवत् १६ एतस्मिन्नन्तरेसर्वास्तास्तंप्रोचुर्नृपोत्तमम् ॥ वृतस्त्वंनूनमस्माभिर्नात्रकार्या
विचारणा १७ एकपत्नीव्रतंकिंतेपार्थिवस्यरघूत्तम ॥ अस्तिचेत्पूर्णतांप्राप्तंतत्फलंभोक्तुमर्हसि १८ इत्युक्त्वातास्तदासर्वागत्वातत्संनिधिंजवात् ॥ सव्यापसव्यबन्धेन
भुजपाशान्प्रचक्रिरे १९ तदृष्ट्वाराघवःप्राहशृणुध्वंवचनंमम ॥ युष्माभिरुच्यतेभद्रमनुकूलंप्रियंवचः २० व्रतिनस्तन्नयोग्यंमेमाखेदंगन्तुमर्हथ ॥ आकर्ण्यरामवाक्या
नितमूचुस्ताःसमन्ततः २१ सकामध्वनिनोत्कंठाःकोकिलाइवमाधवे ॥ षोडशसहस्रस्त्रियऊचुः ॥ धर्मादर्थोऽर्थतःकामःकामाद्धर्मफलोदयः २२ इत्येवंनिश्चयंशास्त्रे
वर्णयन्तिविपाश्चितः ॥ सकामोव्रतबाहुल्यात्पुरस्तेसमुपस्थितः २३ सेव्यतांविविधैर्भोगैःस्वर्गभूमिरियंततः ॥ श्रुत्वातद्वचनंतासांरामस्ताःप्राहसस्मितः २४ ॥ श्री
रामउवाच ॥ वरान्दास्यामियुष्माकंनान्यंश्रोष्यामिकिंचन ॥ इत्युक्ताःपुनरूचुस्ताःकिंत्वंवदसिराघव २५ ॥ ताऊचुः ॥ दिव्यौषधंब्रह्मधियोरसायनंसिद्धिर्निधिः
साधुकलावरांगना ॥ मन्त्रस्तथाह्यन्नजलेचधर्मतोनेमेनिषेध्याःसुधियासमागताः २६ कार्यंतुदैवाद्यदिसिद्धिमागतंतस्मिन्नुपेक्षांनचयांतिनीतिगाः ॥ यस्मादुपेक्षानपुनः

१ विविधैर्मार्गैरितिपाठः ।

फलप्रदातस्मात्तदीर्घीकरणंप्रशस्यते २७ सांद्रानुरागाःकुलजन्मनिर्मलाःस्नेहार्द्रचित्ताःसुगिरःस्वयंवराः ॥ कन्याःसुरूपाःपरिपूर्णयौवनाधन्यालभन्तेऽत्रनरास्तुने
तरे २८ कवयंसुरसौंदर्यैःकैकपत्नीव्रतंतव ॥ तस्मादस्मानिदानींत्वमानिराकर्तुमर्हसि २९ गांधर्वेणविवाहेननान्यथानोऽस्तुजीवितम् ॥ श्रुत्वावाक्यंतुतत्तासांराघवः
प्राहताःपुनः ३० ॥ ॥ श्रीरामउवाच ॥ ॥ भोस्रगाक्ष्यःकथंत्याज्योधर्मोधर्मविचक्षणैः ॥ धर्मश्चार्थश्चकामश्चमोक्षश्चैतच्चतुष्टयम् ३१ यथोक्तंसफलंज्ञेयंविप
रीतंतुनिष्फलम् ॥ तस्मान्मयोक्तंयत्पूर्वमेकपत्नीव्रतंनिजम् ३२ अस्मिन्जन्मनितन्नाहंत्यक्तुमिच्छामिभोस्त्रियः ॥ एवंश्रुत्वाऽऽशयंतस्यताःसमीक्ष्यपरस्परम् ३३
करात्करान्प्रमुंच्यास्यजग्राहांघ्रितदाबला ॥ अन्यान्यमंघ्रिरामस्यभुजौतुजगृहुश्चताः ३४ एवंताभिर्वेष्टमानमात्मानंवीक्ष्यराघवः ॥ अंतर्धानमगात्तत्रतासांमध्ये
क्षणात्प्रभुः ३५ किंकुर्वंतिति्वमाःसर्वाह्यंतर्धानंगतेमयि ॥ एवंतासांकौतुकंहिगुप्तरूपोददर्शसः ३६ अदृष्ट्वाराघवसर्वास्ताःक्षणात्प्रमदोत्तमाः ॥ दृष्ट्वातदद्भुतंकर्म
विस्मयाविष्टमानसाः ३७ वित्रस्तहृदयाःसर्वाःकुरंग्यइवकातराः ॥ संभ्रांतनयनादीनाइत्यूचुस्ताःपरस्परम् ३८ व्याप्तंचहृदयंतासांतदैवविरहाग्निना ॥ ज्वल
ज्ज्वालानलेनैवसुस्निग्धंसांद्रकाननम् ३९ ॥ स्त्रियऊचुः ॥ त्यजेंद्रजालिकांमायांकांतदर्शयसत्वरम् ॥ स्वात्मानंनर्मणायुक्तंप्राग्ग्रासेमक्षिकोपमम् ४० हाकष्टंदर्शितः
कस्माद्धात्राकिंरचितंत्विदम् ॥ ज्ञातंमहत्तमंतापंकर्तुंनस्त्वंसमागतः ४१ कच्चित्तेनिर्दयंचेतःकच्चिदस्मान्परीक्षसि ॥ कच्चित्कष्टोसिहेकांतकच्चिन्मुष्णासिनोमनः ४२
कच्चिन्नोप्रत्ययोऽस्मासुकच्चिदस्मासुनोरतिः ॥ कच्चिद्विनोदयसिनकच्चिन्मायाविशारदः ४३ कच्चिच्चित्तप्रवेष्टुंत्वंवेत्सिविज्ञानलाघवम् ॥ कच्चिद्विनापराधंहित्वमस्मासुप्रकु
प्यसि ४४ कच्चिद्दुःखंनजानासिपरेषांविप्रलंभजम् ॥ त्वद्दर्शनंविनानूनंहृदयेश्वरसांप्रतम् ४५ नजीवामोऽथजीवामःपुनस्त्वद्दर्शनाशया ॥ अस्मांस्तत्रनयत्वंहियत्रनाथ
गतोह्यसि ४६ सर्वथादर्शनंदेहिकारुण्यंभजसर्वथा ॥ पर्यंतंनहिपश्यंतिकस्याचित्सज्जनाजनाः ४७ इत्थंविलप्यताःसर्वाःप्रतीक्ष्यचबहुक्षणम् ॥ रामंद्रष्टुंवनेसर्वाबभ्रमुस्ता
स्त्वांशरणंगताः ५० भोभोतुलसिनोनाथस्त्वयारामोनिरीक्षितः ॥ वदशाखामृगत्वंनोवनेरामोनिरीक्षितः ५१ त्वंकोकिलसदाशब्दान्करोषिपरमान्शुभान् ॥ वदाऽद्यजा
नकीकांतस्त्वयाऽरण्येनिरीक्षितः ५२ भोकदंबवदस्त्वंतवपृच्छामहेवयम् ॥ दीनानाथोरमानाथःसीतानाथस्त्वयेक्षितः ५३ पिकत्वमुत्तरंदेहिसदाशब्दान्करोषिहि ॥
पतिर्नःश्रीपतिःसीतापतिर्दृष्टोऽथवानवा ५४ भोवारणमदोन्मत्तत्ववारणसमःप्रभुः ॥ सप्तद्वीपपतिःश्रीमान्रामोऽरण्येनिरीक्षितः ५५ शुकनःकथयाऽद्यत्वंप्रभुर्दृष्टोऽथवान
२८ वा ॥ वदपुण्येसरित्छ्रेष्ठेकिंतूष्णींसंस्थिताऽधुना ५६ नःप्रभुःसप्तद्वीपानांप्रभुरत्रनिरीक्षितः ॥ भोवायोकथयाऽद्यत्वंसीतारामोनिरीक्षितः ५७ ॥ रामदासउवाच ॥
एवंतारामविश्लेषसंभ्रांताःशुशुचुर्वने ॥ ततस्तागंडकीतीरंगत्वागीतंप्रचक्रिरे ५८ ॥ ॥ स्त्रियऊचुः ॥ किंप्रभोत्वयाजानकीयदातेनरक्षसाऽरण्यमध्यतः ॥ स्वस्थलंह

१ केदंसुंदरसौंदर्यमितिपाठः । २ प्रमुच्याशुसर्वास्तुजगृहुस्तदेतिपाठः ।

तागीतमितटात्तत्कतेत्वयानैवशोचितम् ५९ १ त्वद्वियोगतस्तप्तमानसाःसर्वतोवनेशोकमागताः ॥ एकदाप्रमोदेहिदर्शनंदेहिनोवरान्माऽस्तुवैरतिः ६० २ नोवां
छामोराघवत्वत्तोरतिमव्ययद्ददत्तंभ्रू सुरजाभ्योवरदानम् ॥ तद्वन्नस्त्वंपूरयकामान्वरदानैर्वांछामस्तेसेवनमभ्येजननेऽपि ६१ ३ अस्माभिर्यच्चंचलभावादपराद्धंतत्सर्वंत्वं
मास्मरपूर्वंकरुणातः ॥ नःप्राणास्तेदर्शनहेतोस्तनुमध्येतिष्ठंतित्वांपह्लवयाव्याक्रियतेऽद्य ६२ ४ भोभोराघवमारुष्टत्वंक्रोधंमाभजदासीष्वद्य ॥ पर्यंतंनहिपश्यंतीत्थंवां
छामोनहित्त्वत्तःकामम् ६३ ५ देहित्वंनिजदर्शनलाभंजन्माभ्येऽर्पयनोवरदानम् ॥ पाहित्वंशरणंह्युपयाताःसर्वास्तारयनःप्रणमामः ६४ ६ रामत्वंकिंनिर्दयहृदयस्त्व
सिनःकिंनायात्यद्यस्त्रीजनकरुणाहृदयेते ॥ इत्थंक्रोधंत्वत्पदयुगलेपतितासुकर्तुंविष्णोनार्हसिवरदोभवनोऽद्य ६५ ७ बालेदीनेस्त्रीजनविमलेतनयेस्वेनोकुर्वंतीत्थंबहुविम
लामतिमंतः ॥ क्रूरंकोपंत्वंत्यजवरदोभवनोऽद्यवारंवारंकरकमलैस्त्वांप्रणमामः ६६ ८ हेनाथराघवरमेश्वररावणारेसीतापतेरिपुनिषूदनकंजनेत्र ॥ त्वंदेहिरामनिजदर्शन
मद्यविष्णोदुःखार्णवात्परतटंनयकामिनीर्नः ६७ ९ त्वत्पादपद्मवरसेवनमर्थयामोजन्मांतरेकुरुदयांकरुणासमुद्र ॥ नोचेत्तवाऽद्यविरहान्निजजीवितानित्यक्ष्यामएवनिय
तंसहसांघनद्याम् ६८ १० ॥ रामदासउवाच ॥ नारीगीतंराघवश्चापिश्रुत्वाप्रत्यक्षोऽभूत्कामिनीनामथाऽग्रे ॥ दृष्ट्वारामंताःस्त्रियश्चाऽतितुष्टाःप्रोत्फुल्लास्यास्तंप्रणेमुः
शिरोभिः ६९ ११ नारीगीतंमानवश्चाऽपिश्रुत्वासर्वान्कामान्प्राप्नुयान्निश्चयेन ॥ तस्मादेतत्सर्वदाकीर्तनीयंश्लोकार्कीयंप्रापठंछंदचित्रम् ७० १२ अथरामोददौता
भ्योवरांस्तास्तोषयन्प्रभुः ॥ यूयंशृणुध्वंमोनार्यःपुराव्यासाग्रतोमया ७१ बहुस्त्रीहेतुनारुक्ममूर्तयःषोडशार्पिताः ॥ तासांदानेनसंतुष्टास्तेविप्रामांतदाऽब्रुवन् ७२
फलंसहस्रगुणितंतवास्तुरघुनन्दन ॥ अतस्तत्फलतश्चाहंद्वापरेकृष्णरूपधृक् ७३ करोमिपाणिग्रहणंयुष्माकंद्वारिकापुरि ॥ यूयंनानानृपाणांचभवध्वंबालिकास्तदा ॥
७४ भौमासुरस्तदायंवैदुंदुभिस्तुभविष्यति ॥ भौमासुरश्चयुष्माकंपूर्ववत्संहरिष्यति ७५ तदासर्वामोचयामिहत्वातंजगतीसुतम् ॥ ततोमयासुखेनैवक्रीडध्वंहियथारु
चि ७६ एवंतारामवाक्यंतच्छ्रुत्वाप्रमुदिताननाः ॥ आनन्दोत्फुल्लनयनाःसुखमापुर्वरांगनाः ७७ एतस्मिन्नंतरेरामंपश्यंतोलक्ष्मणादयः ॥ शनैस्तत्रापयुश्चाश्वपदां
कितपथाप्रभुम् ७८ षोडशस्त्रीसहस्राणांमध्येदृष्ट्वारघूत्तमम् ॥ परंविस्मयमापुस्तेप्रणेमुर्जगदीश्वरम् ७९ श्रुत्वारामसुखात्सर्वंयथावृत्तंसविस्तरम् ॥ सर्वेसन्तुष्टमनसस्त
स्थुःश्रीराघवाग्रतः ८० ततोरामाज्ञयादूताःशतशोऽथसहस्रशः ॥ वाहनान्यानयामासुःसेनावासस्थलान्मुदा ८१ तेषुताःस्त्रीःसुसंस्थाप्यवाहनेपुरघूत्तमः ॥ शनैःसे
नानिवासेसययौसीतांतिकंप्रभुः ८२ ततस्ताजानकीनेमुःसीतांवृत्तंरघूत्तमः ॥ यथावृत्तंयथासर्वंकथयामासकौतुकात् ८३ ततस्ताःपूजयामासवस्त्रैराभरणैरमा ॥ ततो
रामःसकासारंसेनावासस्थलांतिके ८४ ददर्शसुमहच्छ्रेष्ठंस्पर्द्धयंतमपांपतिम् ॥ घनपादपमध्यस्थंसुतीर्थंसलिलंशुभम् ८५ विशालंविकचांभोजमघुमत्तमधुव्रतम् ॥ पद्मिनी
पत्रसंयुक्तंछन्नंमरकतैरिव ८६ स्वच्छंदमुच्छलन्मत्स्यंस्वच्छंसाधुमनोयथा ॥ चलज्जलचरोद्भिन्नवीचिराजिविराजितम् ८७ अंतर्ग्राहगणक्रूरंखलानामिवमानसम् ॥

१ स्नानंयाइतिपाठः ।

क्वचिच्छैवालदुर्गम्यंकृपणस्येवमंदिरम् ८८ नानाविहंगसर्वोर्त्तिंशमयंतंदिवानिशम् ॥ उदारमिवसर्वस्वैरापन्नार्तिहरंमहत् ८९ तर्पयंतंहिमांभोभिः श्वापदान्स्वपितॄनि
व ॥ हरंतंसर्वसंतापंहिमांशुमिवचान्द्रिकम् ९० तंदृष्ट्वाऽभूत्सुसंतुष्टःसीतयारघुनन्दनः ॥ तत्रस्नात्वासुखंरामःकृतमाध्यान्हिकक्रियः ९१ भुक्त्वाबंधुजनैःसर्वैराखे
टगणसंवृतः ॥ उवाससरसस्तीरे रम्याःसंकथयन्कथाः ९२ ततःशरासनेबाणंकृत्वारात्रौस्थितस्तरौ ॥ व्याघाःसंधानमास्थायरुरुधुःककुभांपथः ९३ एवंस्थितेषुवी
रेषुवनेविस्तार्यवागुराः ॥ निशार्धेनिर्गतंयूथंशूकराणांसरस्तटे ९४ चरित्वासरसीकंदान्पपातव्याघसंकुले ॥ राज्ञाविद्धास्तदाक्रोडाव्याधैश्चबहवोहताः ९५ क्षणेनै
ववराहास्तेविद्धाःपेतुर्महीतले ॥ तान्हत्वातुमुलंनादंचक्रुर्व्याधाःसुदर्पिताः ९६ धावंतोऽपिमुदायुक्तामिलितायत्रभूपतिः ॥ तानादायभटैर्भूपःसेनावासंययौपुनः ९७
एवंसप्तदिनान्येवस्थित्वारामोवनेसुखम् ॥ भुक्त्वानानाविधान्भोगान्सीतयास्वपुरींययौ ९८ ततोविप्रान्नृपान्वैश्यान्समाहूयरघूत्तमः ॥ यायस्यदुहितानारीयायस्य
पुत्रपुत्रिका ९९ तस्मैतस्मैददौतांतामेवंसर्वाविसर्जयत् ॥ वस्त्रालंकारभूषाद्यैःशोभयित्वापृथक्पृथक् १०० तेविप्राद्याःपुनर्जातामेनिरेनिजबालिकाः ॥ ततःस्वंस्वंपु
रंनीत्वानृपावैश्याःप्रभोर्गिरा १०१ नृपपुत्रैर्वैश्यपुत्रैस्तासांचक्रुःसुमंगलम् ॥ रामप्रसादात्ताःप्रापुःपतिसंगसुखंस्त्रियः १०२ ताश्चाऽपिद्विजपुत्र्यस्तुपितॄणामेवसद्मसु ॥
निन्युःस्वीयायुषंतत्रव्रतचर्यादिभिःसुखम् १०३ विवाहकालातिक्रमणान्नताउद्वाहिताद्विजैः ॥ जन्मांतरेणताःसर्वाःकृष्णःपत्नीःकरिष्यति १०४ अथरामःसुबाहोश्चपु
त्रस्यमधुरांपुरीम् ॥ विवाहार्थंसीतयासपौरैर्जानपदैर्ययौ १०५ तत्रवैवाहिकंकर्मसंपाद्यरघुनन्दनः ॥ तस्थौतत्रकियत्कालंमथुरायांयथासुखम् १०६ एक
दाजानकीवाक्यात्कालिंद्याःसैकतेशुभे ॥ निशायांहिमपर्यंकेसुखंसुष्वापराघवः १७० एतस्मिन्नंतरेदासीर्दासान्दृष्ट्वाविनिद्रितान् ॥ स्त्रीरूपेणाऽथकालिंदीरामांघ्रिं
संस्पृशच्छनैः १०८ ततोरामःप्रबुद्धोऽभूद्ददर्शपुरतःस्थिताम् ॥ सूर्यस्यतनयांपुण्यांकालिंदींकंजलोचनाम् १०९ दिव्यालंकारवस्त्राढ्यांदिव्यनूपुरगर्जिताम् ॥
नीलोत्पलदलश्यामांहेमकुंभपयोधराम् ११० स्मिताननांसुरंभोरुंकिंकिणीजालमालिकाम् ॥ केयूरकुंडलाढ्यांतांप्रोत्तुंगजघनांवराम् ११ तांतादृशींप्रभुर्दृष्ट्वाक्षणं
तूष्णींव्यचिंतयत् ॥ धन्योविधातायेनेयंकालिंदीरचितापुरा १२ इत्याश्चर्यमनाभूत्वातत्सौंदर्यंव्यलोकयत् ॥ अथरामःसतांप्राहवदागमनकारणम् १३ साप्राहत्वंवि
लब्धंतीसर्वंत्वंवेत्सिराघव ॥ ततोरामोऽब्रवीद्वाक्यंचैकपत्नीव्रतंमम १४ इहजन्मनिकालिंदित्वंयाहिस्वस्थलंजवात् ॥ यावत्सीताप्रबुद्धानजातेयंतावद्व्रजहि १५ साराम
वाक्शरेणैवभिन्नमर्मस्थलाभुवि ॥ मूर्छामवापतत्रैवतांदृष्ट्वासोऽब्रवीत्पुनः १६ उत्तिष्ठोत्तिष्ठकालिंदिशृणुत्वंवचनंमम ॥ द्वापरेकृष्णरूपेणत्वांकरिष्याम्यहंस्त्रियम् १७
विवाहेनैवगच्छाऽद्यतदामोक्ष्यसिमत्सुखम् ॥ इतिश्रुत्वारामवाक्यंकिंचित्तुष्टमनानदी १८ नत्वारामंययौतूष्णींरामध्यानपराऽभवत् ॥ ततोरामोऽपिसैन्येनसीतयास्व
पुरींययौ १९ एवंसाकेतनगरेरामःस्त्रीबंधुदेहजैः ॥ चरितान्यकरोन्नानापापघ्नानिश्रवादिना २० ॥ ॥ इतिशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मी
कीये राज्यकांडे पूर्वार्द्धे षोडशसहस्राधिककालिंद्यादिपंचस्त्रीवरदानंनाम द्वादशः सर्गः ॥ ॥ इतिराज्यकांडे पूर्वार्द्धः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

श्रीगणेशायनमः ॥ ॥ श्रीरामदासउवाच ॥ ॥ अथैकदारमाजानिःसुहृद्भिःसदसिस्थितः ॥ वीजितश्चामरेणैवलक्ष्मणेनातिशोभितः १ एतस्मिन्नंतरेतत्रपौरःकश्चि
त्समास्थितः ॥ वारांगनानांनृत्यादिदृष्ट्वाहास्यंचकारसः २ तद्धास्यंराघवःश्रुत्वासस्मारपूर्वचेष्टितम् ॥ लंकायांयुद्धसमयेरावणस्यशिरांसिखात् ३ रामबाणान्मतिर्लं
ब्ध्वाऽस्माभिश्चेतिविहस्यच ॥ श्रीरामंवंदनंकर्तुंपतंतिस्मप्रभुंपुनः ४ तेषांविकालतांदृष्ट्वादंतादीनांरघूत्तमः ॥ मामत्तुंहिपुनर्यांतिशिरांस्येतानिखादिति ५ रामोभी
त्यापुनस्तानिखेशिरांस्यक्षिपच्छरैः १ एकोत्तरशतान्येववारंवारंत्वरान्वितः ६ तद्वृत्तंराघवःस्मृत्वाक्दशास्यस्यवैशिरः ॥ समागतंसभामध्येऽत्रेतिपार्श्वेंव्यलोकयत् ॥
७ मायाविनोराक्षसाश्चसंत्यत्रेतिविचिंत्यच ॥ एवंयदायदाहास्यंसशुश्रावरघूत्तमः ८ तदातदापूर्ववृत्तंस्मृत्वापार्श्वेव्यलोकयत् ॥ ततोरामःक्षणंचित्तेचिंतयामाससा
दरम् ९ यदायदाश्रूयतेऽत्रहास्यंकेनापियत्कृतम् ॥ तदातदादशास्यस्यशिरोहास्यंस्मराम्यहम् १० मायाविनोराक्षसास्तेमांविस्मार्यपुनश्चिरात् ॥ मामत्तुमत्रयास्यंति
त्वितिमत्वास्वचेतसि ११ अन्यच्चनिंदितंहास्यंनीतिशास्त्रेषुसर्वदा ॥ अतोहास्यंवर्जयामिसर्वेषांभूनिवासिनाम् १२ इतिनिश्चित्यहृदयेलक्ष्मणंवाक्यमब्रवीत् ॥ दुंदुभिं
घोषयस्वाद्यपुर्यांराष्ट्रेऽवनीतले १३ स्मिताननोनरःकश्चिन्नारीवाऽथसुहृच्चवा ॥ सीतावातनयोवंधुःसमेदंडघोभवेदिति १४ तथेतिरामवाक्यात्सघोषयामासदुंदुभिम् ॥
पौराजानपदाःसर्वेश्रुत्वाशिक्षाध्वनिंप्रभोः १५ रामदंडभयात्सर्वेनचकुस्तेस्मितााननम् ॥ वारांगनानृत्यगीतेनटगीतप्रवर्तने १६ स्त्रीभिःसुहृद्भिर्मित्रैश्चविनोदानुत्सवा
न्वरान् ॥ मांगल्यानिचकर्माणिहास्यकारीणिनाचरन् १७ वंशस्तंभकलाभिश्चकौतुकानिहियानिच ॥ तूर्यघोषादिमांगल्यकर्माणिविविधाःकथाः १८ सांवत्सरोत्सवान्
130 सर्वान्यात्रायज्ञोत्सवान्शुभान् ॥ कौतुकानुत्सवांश्चैवविवाहादिषुकर्मसु १९ वार्ताश्चित्रकथाश्चापिनचकुश्चकदाजनाः ॥ यथोनावश्यकात्कार्याद्दिनासदासिकःप्रभुम् ॥
२० पुराणानीतिहासांश्चनपठंतिस्मकेचन ॥ गर्भाधानेपुत्रजन्मनामकर्मादिषूत्सवान् २१ पौराजानपदाःसर्वेसप्तद्वीपनिवासिनः ॥ एतानिहास्यकारीणिनानाकर्माणि
भूतले २२ रहस्यपिनचकुस्तेरामदण्डभयात्कदा ॥ एवमासीद्वर्षमेकंतदाभूम्यांकदापिहि २३ स्मिताननंकस्यनासीन्नचकुर्मंडनादिकम् ॥ तदोत्साहदेवताश्चनाना
कर्मांगदेवताः २४ इंद्रायकथयामासुस्तद्वृत्तंजगतीभवम् ॥ इंद्रादीनांसुराणांचकर्मांगपूजनादिहि २५ नासीद्यदाजगत्यांहितदेंद्रःकथयद्विधिम् ॥ तदासुरान्विधिःप्रा
हनरामाग्रेवलंहिनः २६ नैवोपदेष्टुंयोग्यःसममापिजनकस्तुयः ॥ युक्त्याकार्यंसाधयामियेनवोऽद्यहितंभवेत् २७ इत्याश्वास्यसुरान्सर्वान्विधिर्भूमण्डलंययौ ॥ अयो
ध्यायाश्चसीमायांदृष्ट्वावेधाःसुपिप्पलम् २८ स्वयंविवेशतन्मध्येदृष्ट्वापांथान्जहाससः ॥ एतस्मिन्नंतरेकश्चित्काष्ठभारवहःपुमान् २९ श्रुत्वापिप्पलहास्यंतत्तेनदीर्घं
२९ जहाससः ॥ ततःसभारवाहश्चययौहट्टेप्रभोःपुरीम् ३० काष्ठभारविक्रयार्थंतत्रस्मृत्वास्मितंहृदि ॥ चलपत्रस्यसोऽप्युच्चैर्जहासहृदिशंकितः ३१ भारवाहस्य
हास्यंतद्राजदूतोऽथशुश्रुवे ॥ राजदूतोजहासोच्चैर्नंसमर्थोनिरोधितुम् ३२ राजदूतःसमागत्वाभारवाहस्ययत्स्मितम् ॥ हृदिस्मृत्वाजहासोच्चैस्तच्छ्रुत्वातेसभास
दः ३३ सभायांजहसुःसर्वेतच्छ्रुत्वाराघवोऽपिसः ॥ उच्चैर्जहाससदसिवरसिंहासनेस्थितः ३४ रामोविचारयामासकिमर्थंहसितंमया ॥ यन्निमित्तंसदादण्डंपौरान्

जानपदान्निजान् ३५ अहंकरोमिसोऽद्याऽहंसभायांहसितःकथम् ॥ दण्डयिष्यतिमांकोऽद्यकिंमांपौरावदंतिहि ३६ अस्माकमेवशिक्षाऽस्तिसर्वदाराघवस्यसा ॥
सकथंहसितश्चाऽद्यसर्वेषांपुरतःस्फुटम् ३७ शिक्षांकरिष्यतिविभोकोस्यात्वितिवदंतिते ॥ मानयिष्यंतिनातस्तेममाऽग्रेशिक्षितंभुवि ३८ ममैतन्नवतंयोग्यमितिरामस्त्व
मन्यत ॥ पुनर्जहासश्रीरामस्तान्निरोद्धुंनसक्षमः ३९ ततोरामोऽब्रवीत्पौरान्सभास्थान्सस्मिताननः ॥ किमर्थंहसितायूयंयेभ्योहास्यंममापिहि ४० समागतंसभामध्येपौ
राःप्रोचुर्नृपोत्तमम् ॥ दृष्ट्वात्वद्धृतहास्यंहितेनाऽस्माकंसमागतम् ४१ तत्पौरवचनंश्रुत्वादूतमाहरघूत्तमः ॥ त्वयाकिमर्थंहसितंसोऽब्रवीद्रघुनन्दनम् ४२ भारवाहस्यहा
स्यंतत्स्मृत्वाप्रहसितंमया ॥ तद्दूतवचनंश्रुत्वाभारवाहंतदाप्रभुः ४३ दूतैरानीयसदसितमाहरघुनन्दनः ॥ माभीतिंभजमत्तस्त्वंसत्यंब्रूहिममाग्रतः ४४ हट्टेकिमर्थंहसितं
त्वयाद्यकथस्वमाम् ॥ सभारवाहश्चकितःशुष्ककंठोष्ठतालुकः ४५ वेपमानस्खलद्वाचाराघवंवाक्यमब्रवीत् ॥ अयोध्यायाश्चसीमायामश्वत्थस्यमयाऽद्यहि ४६ दृष्ट्वाप्र
हसितंराजन्हट्टेहास्यंतथाकृतम् ॥ तदपूर्वांतद्गिरंसप्रभुःश्रुत्वासुविस्मितः ४७ दूतानुवाचश्रीरामस्त्वनेनसहवेगतः ॥ यूयंगत्वाऽद्यद्रष्टव्यंकिंसत्यंकथ्यतेनवा ४८ अने
नभारवाहेनतेतथेतित्वरान्विताः ॥ गत्वाऽश्वत्थसमीपंहिददृशुस्तेस्मितंमुहुः ४९ तदाश्चर्येणतेदूताःप्रहसंतोऽतिवेगतः ॥ अश्वत्थहसितंरामंगत्वासर्वेन्यवेदयन् ५० तद्दूत
वचनंश्रुत्वाराघवश्चातिविस्मितः ॥ राज्येममैतद्धुश्चिन्हंमेशिक्षांलोप्तुमुद्यतम् ५१ इतिनिश्चित्यमनसिदूतानाज्ञापयत्तदा ॥ छिद्यतांचलपत्रःसममाज्ञाभंगकारकः ५२
तद्रामवचनादेवशतशोऽथसहस्रशः ॥ कुठारपाणयःशीघ्रमश्वत्थंदुद्रुवुस्तदा ५३ हास्यमानंनगंदृष्ट्वातेसर्वेऽतिविविस्मिताः ॥ कुठारैस्तंतदाछेत्तुमुद्यताराघवाज्ञया
५४ तांश्छेत्तुकामान्सकलान्प्राप्तान्स्वनिकटंविधिः ॥ दूतान्सन्ताडयामासोपलैरश्वत्थनिर्गतैः ५५ उपलैश्छिन्नभिन्नांगास्तेदूतालोहितांकिताः ॥ कोलाहलंप्रकु
र्वंतोरामंवृत्तंन्यवेदयन् ५६ ततोऽतिविस्मितोरामःपुनर्दूतान्सहस्रशः ॥ प्रेषयामासतंछेत्तुंधनुर्बाणासिधारिणः ५७ तेऽपिगत्वानगंतेनताडिताउपलैर्दृढम् ॥ छिन्नां
गाराघवंवेगात्सर्वेवृत्तंन्यवेदयन् ५८ ततोरामोऽतिसंक्रुद्धःसुमंत्रंसेनयायुतम् ॥ प्रेषयामासनंवृक्षंछेत्तुंबुद्धिपुरःसरम् ५९ सुमंत्रोराघवंनत्वासेनयातंनगंययौ ॥ तावद
श्वत्थपाषाणैरग्रेगन्तुंनसक्षमः ६० ततोराघवभीत्यासशनैःसैन्येनतत्पुरः ॥ ययौतावन्नगोद्भूतैःपाषाणैस्ताडितोऽपतत् ६१ सुमंत्रंपतितंदृष्ट्वाहाहाकारोमहानभूत् ॥
अयोध्यायांचसर्वत्रतदद्भुतमिवाऽभवत् ६२ सुमंत्रंपतितंश्रुत्वापुत्राभ्यांरघुनन्दनः ॥ सैन्येनप्रेषयामासशत्रुघ्नंतंनगंपुनः ६३ ततस्तत्कौतुकंश्रुत्वापौरनार्यःसहस्रशः ॥
प्रासादशिखरारूढाऊर्ध्वास्यास्तंव्यलोकयन् ६४ तर्जन्यादर्शयामासुःसोऽश्वत्थश्चेतितामिथः ॥ वामहस्तंभ्रुवोःस्थाप्यरविदीप्तीर्न्यवारयन् ६५ कुंचितानलकान्नेत्र
पतितान्करपल्लवैः ॥ स्त्रियोनिवार्यप्रासादगोपुराट्टालसंस्थिताः ६६ निद्रासंभ्रांतनयनाश्चान्योन्यंदर्शयन्नगम् ॥ एवंतन्नगरंसर्वंचकितंचाभवत्तदा ६७ शत्रुघ्नोऽथपुरा
द्यावत्सैन्येननिर्गतोबहिः ॥ तावत्तद्रथवाहाश्चसंस्थिताएवतेपथि ६८ ताडिताअपिसूतेननोत्तस्थुस्तुरगोत्तमाः ॥ कुशस्याथलवस्यापिरथवाहास्तथैवच ६९ ता ॥ १ ॥
डितारुक्मदंडैश्चनोत्तस्थुःपथिसंस्थिताः ॥ आश्चर्येणाथतद्वृत्तंराघवायन्यवेदयन् ७० रामोपिश्रुत्वाचकितस्तदाचित्तेविचारयत् ॥ विचारःकरणीयोऽत्रह्यविचारोऽद्य

नोचितः ७१ अस्त्यत्रकारणंकिंचित्प्रष्टव्योऽद्यपुरोहितः ॥ जानन्नपिरमानाथःस्वयंसर्वंतथापिसः ७२ मानुषंभावमाश्रित्यपुरोहितमथाह्वयत् ॥ सोपिरामाज्ञयाशीघ्रंतांसभांप्रययौगुरुः ७३ प्रत्युद्गम्यगुरुंरामोददावासनमुत्तमम् ॥ ततःसम्पूज्यविधिवत्सर्ववृत्तंन्यवेदयत् ७४ तच्छ्रुत्वाराघवंप्राहवसिष्ठोमुनिसत्तमः ॥ वाल्मीकिस्त्वद्य प्रष्टव्योयेनतेचरितंकृतम् ७५ तद्गुरोर्वचनंश्रुत्वावाल्मीकिंससमाह्वयत् ॥ सोपिरामाज्ञयाशीघ्रंययौश्रीराघवंप्रति ७६ प्रत्युद्गम्यमुनिंरामोददावासनमुत्तमम् ॥ नत्वासंपूज्यविधिवत्सर्ववृत्तंन्यवेदयत् ७७ ततोविहस्यवाल्मीकिःप्रोवाचरघुनन्दनम् ॥ सर्वंवेत्सिभवान्रामकिमर्थंमांतुपृच्छसि ७८ त्वंचेत्पृच्छसिरामाऽत्रमानुषंभावमाश्रितः ॥ तर्हितेकथयाम्यद्यशृणुष्वरघुनन्दन ७९ त्वयाऽत्रवर्जितंहास्यंत्वक्ष्रीत्यासकलैर्जनैः ॥ हास्यकारीणिकर्माणिसंत्यक्तान्यवनीतले ८० विवाहादिसमुत्साहाःकथावार्तादिकौतुकम् ॥ मंगलोत्साहगीतानिनृत्यंयज्ञादिसत्क्रियाः ८१ यात्राःसंवत्सरोत्साहास्त्यक्ताएवावनीतले ॥ यद्यत्कर्मतोषकारिहास्यकारिचतन्नरैः ८२ एकसंवत्सरंनात्रक्रियतेरघुनन्दन ॥ उत्साहदेवताःसर्वास्तथाकर्मांगदेवताः ८३ इंद्रादिलोकपालाश्चद्विजास्वीयंप्रपूजनम् ॥ लुप्तंभूम्यांततोरामतद्वृत्तंकथयन्विधिम् ८४ ततोविधिश्चतच्छ्रुत्वाऽसमर्थस्त्वांनिवेदितुम् ॥ त्वयिकुंठितसामर्थ्यःसोऽश्वत्थेसंप्रवेशितः ८५ हितार्थंनिर्जराणांचसोऽद्यातिष्ठतिपिप्पले ॥ प्रक्षिपत्युपलान्रामछेत्तुकामान्समागतान् ८६ तन्मुनेर्वचनंश्रुत्वाराघवःक्रोधमाययौ ॥ अहमेवाऽद्यगच्छामिसारंपश्यामिब्रह्मणः ८७ कथंनामरघुश्रेष्ठःस्वशिक्षांपरिवर्तयेत् ॥ इत्युक्त्वाऽऽज्ञापयामासस्वीयांसेनांतदाप्रभुः ८८ ततस्तंबोधयामासवाल्मीकिर्मुनिसत्तमः ॥ क्रोधंत्यजरघुश्रेष्ठशृणुष्ववचनंमम ॥ सच्चिदानंदरूपस्त्वमानन्दचरितंतव ८९ मयाऽस्तिवर्णितंरामतत्वर्किंचित्पुत्रयोर्मुखात् ॥ त्वयापियज्ञसमयेश्रुतंगंगातटेपुरा ९० यस्यसंश्रवणादेवाऽऽनन्दरूपोभवेन्नरः ॥ हास्यंवर्जयसित्वंचेत्तर्हितेचरितंत्विदम् ९१ नजनाःकीर्तयिष्यंतिसुखरूपंस्मितंविना ॥ अन्यत्किंचित्प्रवक्ष्यामिप्रभोवृत्तंतवाग्रतः ९२ शतकोटिमितंतेऽत्रचरितंयन्मयाकृतम् ॥ पुरात्वयाविभक्तंयत्सर्वत्ररघुनंदन ९३ भागाद्भारतवर्षांतर्यत्ताद्रामायणात्प्रभो ॥ सारंसारंप्रगृह्याऽथयद्यद्रम्यंमनोरमम् ९४ कथानकंतेनतेनव्यासेनमुनिनाऽत्रहि ॥ अष्टादशपुराणानितथोपपुराणानिच ९५ कृतान्यन्येऽपिमुनयःषट्शास्त्रादीन्यनेनकशः ॥ अग्रेसर्वेकरिष्यंतिसारंरम्यंविगृह्यच ९६ ततोऽग्रेशोकरूपंचयत्त्वयादंडकेवने ॥ चतुर्दशवत्सरैश्चकैकेयीदुष्टभावतः ९७ कृतंचरित्रंसीतायाविरहादेचराघव ॥ तत्किंचिच्छेषभूतंहिचतुर्विंशत्सहस्रकम् ९८ तावन्मात्रंवदिष्यंतिमद्वाल्मिकेःकृतंत्विति ॥ तत्सर्वंसकलंज्ञात्वाभाविवृत्तंरघूत्तम ९९ शोकस्तदुपयोग्यश्चपूर्वमेवमयेरितः ॥ युद्धंप्रभातेश्रोतव्यंशोकश्चैवापराण्हके १०० रतिर्निशायांश्रोतव्याऽऽनन्दरामायणंसदा ॥ युद्धंज्ञेयंभारतंहिरतिर्भागवतंस्मृतम् १ शेषभूतंचतुर्विंशत्सहस्रंशोकउच्यते ॥ तवभाविवरेणैतदानन्दचरितंतव २ शतकोटिमितेपूर्वंयन्मयैवविनिर्मितम् ॥ नवकांडमितंरम्यंयद्वादशसहस्रकम् ३ नवोत्तरशतंसर्वंकाचित्स्थास्यतिभूतले ॥ तवभाविवराद्रामनकोप्येतांमनोरमाम् ४ अष्टोत्तरशतैःसर्गैर्निर्मितामिरुणान्विताम् ॥

१ रत्नोमेनीपवामितीतिपाठः ।

 तवकीर्तनमालांनोखंडयिष्यतिभूतले ५ नवकांडयुतंरम्यंदृष्ट्वात्वत्तुष्टिहेतवे ॥ एतद्विरक्षयिष्यंतियावचंद्रदिवाकरौ ६ यदाततत्खंडितंपूर्वंव्यासेनमुनिनातव ॥ शतको 
टिमितंरामचरितंयन्मयाकृतम् ७ तदाकिंचिद्धितंदृष्ट्वाऽहंतूष्णीमेवसंस्थितः ॥ भविष्यंतिकलौमंदमतयोल्पायुषोनराः ८ नसमर्थाममग्रंथंत्विमंश्रोतुंकदापिहि ॥ अं
॥ २ ॥ तोव्यासेनमुनिनामत्काव्यंयतपृथक्कृतम् १०९ तत्सम्यगित्यहंमत्वापरांतुष्टिंगतःप्रभो ॥ अतस्त्वांप्रार्थयाम्यद्यनवकांडमितंत्विदम् ११० आनंदरामचरितंनवि ७
रूपयराघव ॥ वर्जयिष्यसिचेद्धास्यंतदादुःखमयंप्रभो ११ भविष्यतिशेषवद्धिचैतच्चापिमनोहरम् ॥ अतस्तेकथयाम्यद्ययेनतेशिक्षितंभुवि १२ भविष्यतिदूषणैनेवये
नतुष्टास्तुदेवताः ॥ भविष्यंतिजनाश्चापिसत्यामत्कविताभवेत् १३ जनाहसंतुसर्वत्रदंतानांदर्शनंविना ॥ आस्यमाच्छाद्यवस्त्रेणकदाकौतुकदर्शनात् १४ हास्यंलक्ष्मी
सूचकंहिहसितंसौख्यदायकम् ॥ मांगल्यंहसितंचैतद्धास्याच्छ्रेष्ठंनकिंचन १५ नारीस्मिताननायस्मिन्गेहेतन्मंदिरंस्मृतम् ॥ लक्ष्म्यापिस्थीयतेतत्रनिश्चलंरघुनन्द
न १६ सएवपुरुषोधन्योयस्यस्याच्चस्मिताननम् ॥ सएवपुरुषोनिंद्योयस्यास्यंक्रोधसंयुतम् १७ प्रमदानिंदितासापियस्याःक्रोधयुतंमुखम् ॥ गर्हयंत्यतिहास्यंहिस
वेदातेमुनीश्वराः १८ अतस्त्वांप्रार्थयाम्येतन्मानयत्वंवचोमम ॥ नकरोतिविधिर्गर्वंत्वांतातंवेत्तिराघव १९ आनयिष्यामिशरणंतवाऽहंचतुराननम् ॥ एवंवाल्मीकिवच
नमंगीकृत्यरघूत्तमः २० एवमस्त्वितितंप्राहमुनिंतद्वाक्यगौरवात् ॥ तद्रामवचनंश्रुत्वावाल्मीकिस्तुष्टमानसः २१ शिष्यंसंप्रेष्यब्रह्माणमानयामासपिप्पलात् ॥ अश्वाः
सर्वेसमुत्तस्थुर्ययुस्तेनगरींप्रति २२ ययौसैन्येनशत्रुघ्नोरामपार्श्वेस्थितोऽभवत् ॥ रामपुत्रौसमायातौपितुरग्रेनिषेदतुः २३ रामाज्ञयाभारवाहस्ततोदूतौर्विसर्जितः ॥ कृ
तेंद्रेणसुधावृष्टिःसुमंत्राद्याःसुजीविताः २४सुमंत्राद्यारामदूतास्तत्क्षणोराघवंययुः ॥ नत्वारामंसुमंत्रःसरामपार्श्वेस्थिरोऽभवत् २५ ततःसुरैर्ययाविंद्रःश्रीरामंप्रणनामसः ॥
रामंनत्वाऽब्रवीद्ब्रह्मामयायदपराधितम् २६ तत्क्षमस्वरघुश्रेष्ठत्वत्पाल्याःसर्वदावयम् ॥ पुराऽस्माकंहितार्थंहित्वयारामावनीतले २७ अवताराश्चबहवोधृतानोरिपवोह
ताः ॥ शंखासुरोवेदहर्तामत्स्यरूपेणदारितः २८ तथास्माकंसुधांदातुंमज्जंतंमंदराचलम् ॥ दृष्ट्वासकूर्मरूपेणत्वयापृष्ठेधृतोगिरिः २९ मत्पृथ्वीतिस्पर्द्धमानंहिरण्याक्षं
निहत्यच ॥ त्वयावाराहरूपेणजलात्पृथ्वीसमुद्धृता १३० प्रह्लादवचनात्स्तंभादाविर्भूयत्वयापुरा ॥ नारसिंहस्वरूपेणहिरण्यकशिपुर्हतः ३१ तथाराज्यंहृतंदृष्ट्वापुरामघ
वतस्त्वया ॥ बलिर्वामनरूपेणपातालेविनिवेशितः ३२ नृपैरधर्मनिरतैर्दृष्ट्वाव्याप्तांभुवंपुरा ॥ त्वयैकविंशद्वारंहिजामदग्न्यस्वरूपिणा ३३ पितुर्वैरंपुरस्कृत्यनिःक्षत्रीपृ
थिवीकृता ॥ दशास्यकुंभकर्णौतौरामरूपेणराक्षसौ ३४ पत्नीवैरंपुरस्कृत्यत्वयायुद्धेहताविह ॥ उद्धारितौतौस्वगणौद्विवारंदेवशापतः ३५ एकवारंपुनस्त्वग्रेत्वंतावेवोद्ध
रिष्यसि ॥ तद्ब्रह्मवचनंश्रुत्वावसिष्ठोमुनिसत्तमः ३६ सर्वंजानन्नपिजनान्ज्ञातुंपप्रच्छतंविधिम् ३७॥इति०श्री०रा०श्री०रा०वा०रा०उ०हा०नाम त्रयोदशःसर्गः॥१३॥ ॥ २ ॥
॥ वसिष्ठउवाच ॥ कौगणौदेवशप्तौतौकथमुद्धारितौवद ॥ पुराद्विवारंरामेणाग्रेकथंचोद्धरिष्यति १ तद्वसिष्ठवचःश्रुत्वाविधिःप्राहविहस्यतम् ॥ सर्वंवेत्सिभवान्लोकान्

१ ययुःसर्वेपुरींममुमितिवापाठः ।

ज्ञापितुंमांहिप्टच्छसि २ तर्हिवदाम्यहंसर्वंगणयोःशापकारणम् ॥ एकदाऽयंमहाविष्णुर्वैकुंठेरमयारहः ३ संस्थितश्चतदाद्वारिविष्णुंद्रष्टुंसुरोत्तमौ ॥ तावश्विनीकुमारौहि
हिसमाजग्मतुरादरात् ४ समागतौदेववैद्यौतौदृष्ट्वाद्वाररक्षकौ ॥ जयविजयनामानौतयोरग्रेप्रजग्मतुः ५ ताभ्यांवैद्यौतदाप्रोक्तौविष्णुस्तिष्ठतिवैरहः ॥ नायंकालोदर्श
नस्यतच्छ्रुत्वाप्रोचतुःसुरौ ६ अधुनाद्रष्टुमिच्छावोविष्णुंकथयतांगणौ ॥ द्वार्यावयोरागमनंयुवांशृणुतचेरितम् ७ ततयोर्वचनंश्रुत्वातौपुनःप्रोचतुर्गणौ ॥ नगच्छावो
महाविष्णुमावांलक्ष्म्यारहःस्थितम् ८ एवंत्रिवारंताभ्यांतौप्रोक्तौनेत्यूचतुर्गणौ ॥ तदाऽश्विनीकुमारौतौप्रोचतुःक्रोधमूर्च्छितौ ९ आवयोर्वचनंनैवयुवाभ्यांहिश्रुतं
गणौ ॥ यतस्त्रिवारंतस्माद्धियुवांजन्मत्रयंभुवि १० लभथश्चनसंदेहस्तच्छ्रुत्वावचनंतयोः ॥ गणावपितयोःशापंददतुर्देववैद्ययोः ११ विनापराधितःशापोयस्माद्दत्तस्तु
चावयोः ॥ एकवारंयुवांचापिजन्मातश्चास्तुवैभुवि १२ एवंपरस्परशापंलब्ध्वाहाहेतिचुकुशुः ॥ तदाकोलाहलश्चासीदाह्वयामासतान्हरिः १३ ततस्तत्सकलंवृत्तं
प्रोचुस्तेजगदीश्वरम् ॥ चत्वारस्तेमहाविष्णुंप्रार्थयामासुरादरात् १४ येनशीघ्रंविमुक्तिःस्यात्तन्नोवदमहेश्वर ॥ ततःप्रोवाचतान्विष्णुर्मुक्तिःशीघ्रंशुभाऽत्रहि १५ मयि
भक्त्याविरोधिन्याजायतेनात्रसंशयः ॥ सप्तजन्मांतरैरेवमद्भक्त्याजायतेगतिः १६ युष्माकंरोचतेयासाभक्तिःकार्याऽवनीतले ॥ तद्विष्णोर्वचनंश्रुत्वातेप्रोचुर्जगदीश्व
रम् १७ नोऽस्तुभक्त्याविरोधिन्याशीघ्रंतेदर्शनंपुनः ॥ तथेत्युक्त्वारमानाथस्तान्सर्वान्सविसर्जयत् १८ तेजन्मानिततःप्रापुर्जगत्यांमुनिसत्तम ॥ जयोजातोहिरण्या
क्षोहिरण्यकशिपुस्तथा १९ जातोऽत्रविजयःपूर्वंतौहतौविष्णुनापुरा ॥ वाराहरूपिणाऽनेनहिरण्याक्षोविदारितः २० नारसिंहस्वरूपेणहिरण्यकशिपुर्हतः ॥ ततःपुन
र्जन्मतोहिद्वितीयंप्रापतुर्भुवि २१ जयोजातोरावणोऽत्रकुंभकर्णस्तथापरः ॥ जातोविजयनामाहिरामेणाऽनेनतौहतौ २२ तावश्विनीकुमारौहिएकएेरावणःस्मृतः ॥
मैरावणश्चत्वपरएवंतौजनितावधः २३ पातालेवरदानाच्चरामहस्तान्नमूर्तिंगतौ ॥ अग्रेजयःशिशुपालोभविष्यतिनसंशयः २४ विजयोदंतवक्रश्चभविष्यत्यवनीतले ॥
द्वापरेकृष्णरूपेणशिशुपालंहरिःस्वयम् २५ वधिष्यतिदंतवक्रंतथैवमुनिसत्तम ॥ एवंजन्मत्रयंशापात्प्राप्योक्त्वातौभमवद्गणौ २६ जयविजयनामानौपूर्ववत्स्थास्यतः
शुभौ ॥ द्वारदेशेऽस्यवैविष्णोर्वैकुंठेदुःखवर्जिते २७ तावश्विनौदेववैद्यौपूर्ववद्दिवितौस्थितौ ॥ एवंमुनेत्वयापृष्टंतन्मयापरिवर्णितम् २८ भगवद्गणयोःशापकारणंचपु
रातनम् ॥ एवंराघवचाग्रेत्वंद्वापारेपरमेशुभे २९ जरासंघादिवीरैश्चकंसाद्यैरपिभूतलम् ॥ खिन्नंदृष्ट्वाऽत्रावतीर्यकृष्णरूपेणलीलया ३० सर्वान्हत्वातोषयुक्तंकरिष्यसि
महीतलम् ॥ तान्बौद्धान्बुद्धरूपेणकलावग्रेविजेष्यसि ३१ वर्णसंकरमालक्ष्यकलेरंतेरघूत्तम ॥ कल्किरूपेणसकलान्संहरिष्यसिलीलया ३२ एवंदशावताराश्चतथान्ये
४० ऽपिसहस्रशः ॥ त्वयाहितार्थमस्माकंधृताश्चाग्रेधरिष्यसि ३३ ॥ श्रीरामदासउवाच ॥ एवंस्तुवन्तंब्रह्माणंसमालिंग्यरघूत्तमः ॥ संनिवेश्यासनेप्राहत्वदर्थंचमुनेर्गिरा ३४
हास्यमाज्ञापितंकिंचिज्जनाःकुर्वंतुतेसुखम् ॥ यथावाल्मीकिनाप्रोक्तंतथामाविस्तरोस्तुवै ३५ तद्रामवचनंश्रुत्वातदातुष्टाःसुरादयः ॥ अथपप्रच्छवाल्मीकिंसभार्या

१ सद्भक्त्येतिपाठः ।

रघुनन्दनः ३६ ममावतारतःपूर्वंत्वयामच्चरितंकृतम् ॥ कथंज्ञातंत्वयापूर्वंकेनत्वामुपदेशितम् ३७ पूर्वंजन्मनिकस्त्वंहिकिंपुण्यंहित्वयाकृतम् ॥ तत्सर्वंविस्तरेणैवकथ
यस्वाऽद्यमांप्रति ३८ तद्रामवचनंश्रुत्वावाल्मीकिर्मुनिपुंगवः ॥ समायांराघवंसर्वंवक्तुंसमुपचक्रमे ३९ ॥ वाल्मीकिरुवाच ॥ सम्यक्पृष्टंत्वयारामसावधानमनाःशृणु ॥
रामत्वन्नाममहिमावर्ण्यतेकेनवाकथम् ४० यत्प्रभावादहंरामब्रह्मर्षित्वमवाप्तवान् ॥ शृणुराघवमत्तस्त्वंकथांमेपूर्वजन्मनः ४१ पंपातीरेद्विजःकश्चिच्छंखोनाममहायशाः॥
गुरोःसिद्धिंगतश्चागान्नदींगोदावरींप्रति ४२ तीर्त्वाभीमरथींपुण्यांकांतारेकंटकाविले ॥ निर्जलेनिर्जनेघोरेवैशाखेतापकर्षितः ४५ वनंचोपविवेशाऽसौमध्यान्हसमयेद्वि
जः ॥ तदाकश्चिद्दुराचारीव्याधश्चापधरःशठः ४४ निर्घृणःसर्वभूतेषुकालांतकइवापरः ॥ तंकुण्डलधरंविप्रंदीक्षितंभास्करोपमम् ४३ खड्गेनभीषयित्वातुजग्राहकुंड
लादिकम् ॥ उपानहौतच्छत्रंचवस्त्राणिचकमण्डलुम् ॥ पश्चाद्वित्वाऽथतंविप्रंगच्छेत्याहसमूढधीः ४६ तथासगच्छन्पथिशर्कराविलेसूर्यांशुतप्तेजनवर्जितेस्वरे ॥ संत
प्तपादस्तृणगोपितेस्थलेकचिच्चवस्त्रोपरिसंस्थितोऽभवत् ४७ सवेदुतंतापतप्तोऽपितिष्ठन्हाहेतिवादीप्रजगामविप्रः ॥ दृष्ट्वामुनिंतंबहुखिन्नमानसंमध्यंगतेपूष्णियदा
ऽतितीव्रे ४८ व्याधस्यजातामतिरीदृशीवैतस्मैददामीतिचपादरक्षे ॥ स्वीयेनधर्मेणतुतस्करेणवनेगृहीतंसकलंचतन्मे ४९ चौर्येणचस्वधर्मेणयद्गृहीतंवनान्तरे ॥
तदीयमेवतत्सर्वंव्याधानांधर्मनिर्णयः ५० तस्मादुपानहौदास्येमुद्दुःखापनुत्तये ॥ तेनश्रेयोभवेद्यच्चतद्भवेन्ममपापिनः ५१ जीर्णौचोपानहावेतौदिव्यौस्तश्चपदोर्मम ॥
नचाभ्यामस्तिमेकार्यंतस्मात्तस्मैददाम्यहम् ५२ इतिनिश्चित्यमनसितूर्णंगत्वाददौचतौ ॥ शर्करातप्तपादायद्विजवर्यायसीदते ५३ उपानहौगृहीत्वाऽसौनिर्वृतिंचपरां
ययौ ॥ सुखीभवेतितंप्राहशंखस्तंपुनरब्रवीत् ५४ पूर्वपुण्येनतेजाताशुभाबुद्धिर्वनेचर ॥ ययाबुद्ध्याऽद्यवैशाखेत्वयादत्तावुपानहौ ५५ इतितद्वचनंश्रुत्वाशंखंव्याधोऽ
ब्रवीद्वचः ॥ किंमयाऽऽचरितंपूर्वंतत्सर्वंवक्तुमर्हसि ५६ ॥ शंखउवाच ॥ आतपोबाधतेघोरोनाऽत्रच्छायानवैजलम् ॥ तस्मात्स्थलांतरंगत्वायत्रच्छायाऽनुवर्तते ५७
तत्रगत्वाजलंपीत्वासुच्छायांचसमाश्रितः ॥ ततस्तेसुकृतंपूर्वंसविस्तारंवदाम्यहम् ५८ इत्युक्तोमुनिनातेनव्याधःप्राहकृतांजलिः ॥ इतोऽविदूरेसलिलंवर्त
तेचसरोवरे ५९ कपित्थास्तत्रवैसंतिफलभारेणपीडिताः ॥ गच्छावस्तत्रसंतुष्टिर्भवितानाऽत्रसंशयः ६० व्याधेनैवंसमादिष्टस्तेनसाकंययौमुनिः ॥ कियद्दूरं
ततोगत्वाददर्शाग्र्यंसरोवरम् ६१ स्नात्वामध्यान्हवेलायांतस्मिन्सरसिनिर्मले ॥ वाससीपरिधायाऽथकृत्वामाध्यान्हिकीःक्रियाः ६२ देवपूजांतथाकृत्वाफलमूलमतं
द्रितः ॥ व्याधोपनीतंसुस्वादुकपित्थंश्रमहारिच ६३ भुक्त्वासुखंजलंपीत्वासुच्छायांचसमाश्रितः ॥ सुखोपविष्टस्तंप्राहपूर्वपुण्यंवदामिते ६४ शाकले
नगरेपूर्वंद्विजस्त्वंवेदपारगः ॥ स्तंभोनाममहापापीतथाश्रीवत्सगोत्रजः ६५ तवेष्टागणिकाकाचित्तदासीत्संगदोषतः ॥ त्यक्तनित्यक्रियोनित्यंशूद्रवन्मूर्खमा
र्गगः ६६ शून्याचारस्यमूढस्यपरित्यक्तक्रियस्यच ॥ ब्राह्मणीतेतदाऽन्यासीद्भार्याकांतिमयीतथा ६७ सात्वांपर्यचरत्सुभ्रूःसवेश्यंब्राह्मणाधमम् ॥ उभयोः
क्षालयंतीचपादौत्वत्प्रियकाम्यया ६८ उभयोरप्यधःशेतेउभयोर्वचनेरता ॥ वेश्ययावार्यमाणाऽपिहितकार्येतयोःस्थिता ६९ एवंशुश्रूषयंत्याहिभर्तारंवेश्ययासह ॥

जगामसुमहान्कालोदुःखितायामहीतले ७० अपरस्मिन्दिनेभर्तामाहिष्यंमूलकान्वितम् ॥ अभक्षयत्क्षुद्रकर्माणिनिष्पावांस्तिलमिश्रितान् ७१ तमपथ्यमशित्वातुवमंश्चै
वविरेचयत् ॥ अपथ्याद्दारुणोरोगोव्यजायतभगंदरः ७२ सदह्यमानोरोगेणदिवारात्रंतुभूरिशः ॥ यावदास्तेगृहेवित्तंतावद्वेश्याचसंस्थिता ७३ गृहीत्वासकलंवित्तंपश्चा
त्रोवासमन्दिरे ॥ अन्यस्यपार्श्वमासाद्यतस्थौघोराऽतिनिर्घृणा ७४ ततःसदीनवदनोव्याधिबाधासुपीडितः ॥ उक्तवान्सुरुदन्भार्यांरुजाव्याकुलमानसः ७५ परिपा
लयमांदेविवेश्यासक्तंसुनिष्ठुरम् ॥ नमयोपकृतंकिंचित्तवसुंदरिपावनि ७६ योभार्यांप्रणतांपापोनानुमन्येतमूढधीः ॥ सषंढोभवतीत्यत्रदशजन्मानिसप्तच ७७ दिवास
त्रंमहाभागेनिंदितःसाधुभिर्जनैः ॥ पापयोनिमवाप्स्यामित्वांसाध्वीमवमन्यवै ७८ अहंक्रोधेनदग्धोस्मिसदानिष्ठुरभाषणः ॥ एवंब्रुवाणंभर्तारंकृतांजलिपुटाऽब्रवीत् ७९
नदैन्यंभवताकार्यंनव्रीडाकांतमांप्रति ॥ नचापित्वयिमेक्रोधोवर्ततेसुमनागपि ८० पुराकृतानिपापानिदुःखानिहिभवंतिहि ॥ तानियाक्षमतेसाध्विपुरुषोवासउत्तमः
८१ यन्मयापापयापापंकृतंवैपूर्वजन्मनि ॥ तद्भुंजन्त्यानमेदुःखंनविषादःकथंचन ८२ इत्येवमुक्त्वाभर्तारंसासुश्रूषन्वपालयत् ॥ आनीयजनकाद्वित्तंबन्धुभ्योवरवर्णिनी
८३ क्षीरोदवासिनंविष्णुंभर्तुर्देहेव्यचिंतयत् ॥ शोधयंतीदिवारात्रौपुरीषंमूत्रमेवच ८४ नखेनकर्षतीभर्तुःकृमीन्देहाच्छनैःशनैः ॥ नसास्वपितिरात्रौतुदिवावावरवर्णिनी
८५ भर्तुर्दुःखेनसंतप्तादुःखितेदमथाब्रवीत् ॥ देवाश्चपांतुभर्तारंपितरोयेचविश्रुताः ८६ कुर्वंतुरोगहीनंमेभर्तारंहृतकल्मषम् ॥ चंडिकायैप्रदास्यामिरक्तंमांससुखोद्भवम् ८७
सुस्थन्नंमहिषोपेतंभर्तुरारोग्यहेतवे ॥ मोदकानपिदास्यामिविघ्नेशायमहात्मने ८८ मन्दवारेकरिष्यामिसदैवाहमुपोषणम् ॥ नोपभोक्ष्यामिमधुरंनोपभोक्ष्यामिवैघृतम् ८९
तैलाभ्यंगविहीनाऽहंसदास्थास्यामिभूतले ॥ जीवत्वयंरोगहीनोभर्तामेशरदांशतम् ९० एवंसाव्याहरद्देवीवासरेवासरेगते ॥ तदाचागान्मुनिःकश्चिन्महात्मादेवलाव्ह
यः ९१ वैशाखमासघर्मार्तःसययौतस्यवैगृहे ॥ तदातेभार्ययाचोक्तंवैद्योऽयंगृहमागतः ९२ तेनतेरोगहानिःस्यात्तस्याऽऽतिथ्यंकरोम्यहम् ॥ यद्यज्ञापयसित्वंमां
नोचेन्नैवकरोम्यहम् ९३ ज्ञात्वात्वांधर्मविमुखंभिषग्व्याजेनवंचितम् ॥ तस्यातिथ्यंतुवैकर्तुंदत्ताज्ञाविपुरात्वया ९४ तस्यैपत्नीतदातुष्टापूजयामाससामुनिम् ॥ पा
दावनेजनंकृत्वातज्जलंमूर्ध्नितेऽवहत् ९५ पात्तुंतुभ्यंददौतीर्थंत्वासुकृत्वाभेषजंत्विति ॥ पानकंचददौतस्मैघर्मार्तायमहात्मने ९६ दिव्यान्नैर्भोजयामाससुगंधव्यजनेददौ ॥
त्वयाऽनुमोदितासायंघर्मतापंन्यवारयत् ९७ समातरुदितेसूर्येमुनिर्ग्रामांतरंययौ ॥ अथचाल्पेनकालेनसन्निपातोऽभवत्तव ९८ त्रिकटुमुखआघात्साभर्तांगुलिमखंडय
त ॥ कफेनदन्तपंक्तिभ्यांमीलिताभ्यांदृढंतदा ९९ तेवक्त्रेऽङ्गुलिखण्डंतत्स्थितमेवातिकोमलम् ॥ खण्डयित्वांऽगुलिंतस्यापंचत्वंत्वंगतःपुरा १०० शय्यायांसुमनोज्ञा
यांस्मरंस्तांपुंश्चलींहृदि ॥ मृतंविज्ञायभर्तारंभार्याक्रांतिमयीतव १ विक्रीत्वावलयैरत्नैस्त्वांगृहीत्वाचन्दनंबहु ॥ चक्रेचितिंतिनसाध्वीमध्येकृत्वापतिंतदा २ समालिंग्यभु
जाभ्यांतंपादौचाश्लिष्यपादयोः ॥ मुखेमुखंनिजंकृत्वाहृदयेहृदयंतथा ३ गुह्येकृत्वातुगुह्यंस्वमेवंसाराममानसा ॥ दाहयामासकल्याणीभर्तुर्देहंरुजान्वितम् ४ आत्म

१ काष्ठग्रच्छन्नेरितिपाठः । २ शुंठीमरिचपिप्पली ।

नासहतन्वंगीज्वलितेजातवेदसि ५ विमुच्यदेहंसहसाजगामपतिंनमस्कृत्यमुरारिलोकम् ॥ त्वमन्तकालेगणिकेच्छयाहिदेहंत्यक्त्वात्यक्तकर्मादुरात्मा ॥ व्याधजन्माप्रा
प्यतेघोरधर्मेहिंसासक्तःसर्वदोद्वेगकारी ६ दत्तात्वयापानकमर्पितुं वैमासेऽनुज्ञामाधवेसद्विजाय ॥ भिषग्व्याजात्तेनजातासुबुद्धिर्धर्मंकर्तुंपादरक्षेऽर्पितेमे ७ घृतंमूर्ध्नापा
दशौचावशेषंजलंमुनेःसर्वपापापहारि ॥ तेनैवतेसंगतिर्मेवनेऽस्मिन्नजाताश्चोतुंस्वीयपुण्यंमतिश्च ८ मुखेकृत्वांऽगुलिंयस्मान्मृतःपूर्वंभवांतरे ॥ तस्मादत्रवनेमांसाहार
स्तेऽभूद्वनेचर ९ वेश्यासाभिल्लिनीजाताभार्यायातववर्तते ॥ शय्यायांमरणात्तेऽत्रशयनंभुविसर्वदा ११० इतितेसर्वमाख्यातंपूर्वजन्मनियत्कृतम् ॥ तत्कर्मपुण्यंपापं
चदृष्टंदिव्येनचक्षुषा ११ अतःपरंभाविवृत्तंशृणुतेऽहंवदामि वै ॥ कृणुर्नाममुनेस्त्वग्रेकस्मिंश्चित्सरोवरे १२ करिष्यतितपस्तीव्रंचान्नव्यापारवर्जितः ॥ पश्चात्तपोविरा
मांतितन्नेत्राभ्यांबहिःस्रुतम् १३ वर्यिदष्ठोरगिकाचित्स्वयंस्खलितमंजसा ॥ ग्रहीष्यतिकृतोःकालेतस्यास्त्वंहिजनिष्यसि १४ किराताःपालयिष्यंतिकिरातस्त्वंभ
विष्यसि ॥ उपानहावर्पितेऽस्ययस्मात्तत्पुण्यतस्तदा १५ भविष्यतिसंगतिस्तेवनेसप्तमुनीश्वरैः ॥ तेषांप्रसादाद्वाल्मीकिर्मुनिस्त्वंहिभविष्यसि १६ यस्त्वंरामकथां
दिव्यांसुप्रबंधैःकरिष्यसि ॥ ॥ वाल्मीकिरुवाच ॥ ॥ इतिव्याधंसमादिश्यधर्मान्वैशाखजानपि १७ उपदिश्यसविस्तारंप्रतस्थेगौतमीतदा ॥ सशं
खःकुंडलाद्यैश्चतद्दत्तैस्तुष्टमानसः १८ व्याधोऽपिशंखवचनात्तस्मिन्नेववनेचिरम् ॥ वन्यैर्वैशाखमासीयान्धर्मान्प्रीत्याऽकरोच्छुभान् १९ व्याधजन्मात्ययेजातेकृ
णोःपुत्रस्त्वहंततः ॥ पन्नगीजठरोद्भूतस्त्वरण्येरघुनन्दन १२० अहंपुराकिरातेषुकिरातैःसहवर्द्धितः ॥ जन्ममात्रद्विजत्वंमेशूद्राचाररतःसदा १२१ शूद्रायां
बहवःपुत्राश्चोत्पन्नामेऽजितात्मनः ॥ ततश्चौरैश्चसंगम्यचोरोहमभवंपुनः २२ धनुर्बाणधरोनित्यंजीवानामंतकोपमः ॥ एकदामुनयःसप्तदृष्टामहतिकानने २३ सा
क्षान्मयाप्रकाशंतोज्वलनार्कसमप्रभाः ॥ तानन्वधावंलोभेनतेषांसर्वपरिच्छदान् २४ गृहीतुकामस्तत्राहंतिष्ठतांतिष्ठतामिति ॥ अब्रुवंमुनयोऽपृच्छन्‌किमायासिद्वि
जाधम २५ अहंतानब्रवंकिंचिदादातुंमुनिसत्तमाः ॥ पुत्रदारादयःसंतिबहवोमेबुभुक्षिताः २६ तेषांसंरक्षणार्थायचरामिगिरिकानने ॥ ततोमामूचुरव्यग्राःपृच्छगत्वा
कुटुम्बकम् २७ योयोमयाप्रतिदिनंक्रियतेपापसंचयः ॥ यूयंतद्भागिनःकिंवानेतिवेतिपृथक्पृथक् २८ वयंस्थास्यामहेयावदागमिष्यसिनिश्चयात् ॥ यत्पापंब्रह्महत्यायां
यत्पापंमद्यपानतः २९ तेनपापेनलिंपामोयदिगच्छामहेवयम् ॥ यत्पापंहेमचौर्येणगुरुदारागमाच्चयत् १३० तेनपापेनलिंपामोत्वामपृष्ट्वावनेचर ॥ चेद्व्रजामोवयंसर्वे
इतस्तेपृष्ठतोबहिः ३१ संसर्गजनितंपापंब्रह्मस्वहरणाच्चयत् ॥ तेनपापेनलिंपामोयदिगच्छामहेवयम् ३२ एवंतच्छपथैर्नानाविधैःप्रत्ययमागतः ॥ तथेत्युक्त्वाग्र
हंगत्वामुनिभिर्यदुदीरितम् ३३ अपृच्छंपुत्रदारादींस्तैरुक्तोऽहंरघूत्तम ॥ पापंतवैवतत्सर्वंवयंतुफलभागिनः ३४ तच्छ्रुत्वाजातनिर्वेदोविचार्यपुनरागतः ॥ मुनयोयत्र
तिष्ठंतिकरुणापूर्णमानसाः ३५ मुनीनांदर्शनादेवशुद्धांतःकरणोऽभवम् ॥ धनुरादिपरित्यज्यदंडवत्पतितोऽस्म्यहम् ३६ रक्षध्वंमांमुनिश्रेष्ठाःपतितंनरकार्णवे ॥ इ
त्यग्रेपतितंदृष्ट्वामामूचुर्मुनिसत्तमाः ३७ उत्तिष्ठोत्तिष्ठभद्रन्तेसफलःसत्समागमः ॥ उपदेक्ष्यामहेतुभ्यंकिंचित्तेनैवमोक्ष्यसे ३८ परस्परंसमालोच्यदुर्वृत्तोऽयंद्विजाध

मः ॥ उपेक्ष्यएवसद्वृत्तैस्तथाऽपिशरणंगतः ३९ रक्षणीयःप्रयत्नेनमोक्षमार्गोपदेशतः ॥ इत्युक्त्वारामतेनामव्यत्यस्ताक्षरपूर्वकम् ४० मुनयोमामुपदिशुर्मत्कृपापूर्णमानसाः ॥ एकाग्रमनसाऽत्रैवमरेतिजपसर्वदा ४१ आगच्छामःपुनर्यावत्तावदुक्तंसदाजप ॥ इत्युक्त्वाप्रययुःसर्वेमुनयोदिव्यदर्शनाः ४२ अहंयथोपदिष्टस्तैस्तथाऽकरवमंजसा ॥ जपन्नेकाग्रमनसाबाह्यंविस्मृतवानहम् ४३ साध्यर्थंतपसस्तत्रदंडोग्रेस्थापितोमया ॥ एवंबहुतिथेकालेगतेनिश्चलरूपिणः ४४ सर्वसङ्गविहीनस्यवल्मीकोऽभून्ममोपरि ॥ दण्डोग्रेसनगोरम्योबभूवमत्तपोबलात् ४५ ततोयुगसहस्रांतेऋषयःपुनरागमन् ॥ मामूचुर्निर्गमस्वेतितच्छ्रुत्वातूर्णमुत्थितः ४६ वल्मीकान्निर्गतश्चाहंनीहारादिवभास्करः ॥ मामप्याहुर्मुनिगणावाल्मीकिस्त्वंमुनीश्वरः ४७ वल्मीकात्संभवोयस्माद्द्वितीयंजन्मतेऽभवत् ॥ इत्युक्त्वातेययुर्दिव्यांगतिंरघुकुलोत्तम ४८ अहंतेरामनाम्नश्चप्रभावादीदृशोऽभवम् ॥ एकदाशम्भुवचसाऽर्यंविधिःश्रुतवांस्तव ४९ चरितंवेदवाक्यैश्चकैलासेपरमेशुभे ॥ अनेनविधिनातच्चकथितंनारदायहि १५० नारदःकथयामासवेदवाक्यैर्ममाऽत्रतव ॥ ततःक्रौंचंहतंदृष्ट्वाव्याधेनतमसातटे ५१ शोचन्तींसांत्वयन्क्रौंचींममास्यान्निर्गतस्तदा ॥ द्वात्रिंशदक्षरैःश्लोकःशोकःश्लोकत्वमागतः ५२ ततोपिविधिनाऽनेनचरितंतेप्रवर्णितम् ॥ मामागत्यतुसंक्षेपादर्पितामांवराअपि ५३ ततोऽस्यब्रह्मणोवाक्यात्कृतवांश्चरितंतव ॥ आनंददायकंरम्यंशतकोटिप्रविस्तरम् ५४ एवंत्वयायथापृष्टंतथासर्वंनिवेदितम् ॥ एवंवाल्मीकिवाक्यैश्चसर्वंजानन्नपिप्रभुः ५५ पृष्ट्वाश्रोतुंजनान्सर्वान्श्रावयामासराघवः ॥ एतस्मिन्नन्तरेरामंवाक्पतिःप्राहसादरम् ५६ रामकिंचरितंगेयंतवानन्दस्वरूपिणः ॥ यस्यनामाद्यवर्णश्चशब्दमात्रोऽत्रगीयते ५७ लौकिकावैदिकावापिअकाराद्यास्तुषोडश ॥ स्वरास्तथैववर्णाश्चचतुस्त्रिंशच्छुभावहाः ५८ ककाराद्याःक्षकारांतामन्त्ररूपाःशुभावहाः ॥ एवंवर्णाश्चपंचाशद्येकीर्त्यंतेनरैर्भुवि ५९ तेत्वन्नामाद्यवर्णाश्चसर्वेज्ञेयारघूत्तम ॥
134 तवनामाद्यवर्णश्चव्याप्तंसर्वंचराचरम् १६० चराचराणांसर्वेषांयानिनामानितानिते ॥ तेषुवर्णपरत्वेननामान्यद्यवदामिते ६१ संक्षेपाच्चैवपंचाशत्तानिशृण्वन्तुसज्जनाः ॥ ओमनंता १ नंदमयो २ चेष्टापूर्तफलप्रदः ३ ६२ ॥ ईश्वरश्च ४ तथोत्कृष्ट ५ श्चोर्ध्वरेता ६ ऋतंभरः ७ ॥ ऋष्टृकश्च ८ लृशश्चैव ९ लृपक १० श्चैकएवच ११ ६३ ॥ ऐश्वर्यद १२ श्चोजदश्च १३ तथैवौदार्यचंचुरः १४ ॥ अंतरात्मा १५ चार्द्धगर्भ १६ स्तथैव करुणाकरः १७ ६४ ॥ खड्गीच १८ गतिदश्चैव १९ घनश्यामस्तथैवच २० ॥ ङणन २१ श्चमिताशेषवुष्कृतश्चतथैवहि २२ ६५ ॥ छत्री २३ जगन्मय २४ श्चैव झषरूपी २५ ञटेश्वरः २६ ॥ टणत्कारिधनु २७ ष्ठानवन्धो २८ डमरुसत्करः २९ ६६ ढंपुढुनितपापश्च ३० णकर्णश्चतथैवहि ३१ तपोरूप ३२ स्थव ३३ श्चैवदक्षो ३४ धन्वीतथैवच ३५ ६७नष्टोद्धरणधीरश्च ६६ तथैव परमेश्वरः ३७ तथाफलप्रदश्चैव ३८ तथा बलिवरप्रदः ३९ ६८ भगवान् ४० मधुघातीच ४१ तथा यज्ञफलप्रदः ४२ ॥ रघुनाथश्च ४३ लक्ष्मीशो ४४ वरिष्ठश्चतथैवहि ४५ ६९ शरण्यः ४६ षड्गुणैश्वर्यसंपन्नश्चतथैवहि ४७ ॥ सर्वेश्वरो ४८ हयग्रीवः ४९ क्षमी ५० नामानितेत्विति १७० पंचाशद्वर्णचिन्हानिचैभिर्वर्णैर्जगत्त्रयम् ॥ व्याप्तंश्रीरामसर्वत्रघवर्णेनघटःस्मृतः ७१

१ अनंतश्चानन्दमयश्चेतिपाठः । २ ङणङणितपापश्चेतिपाठः । ३ फरशुरामश्चेतिपाठः ।

पवर्णेनपटोज्ञेयस्त्वेवंवर्णात्मकंजगत् ॥ एकैकस्यचवर्णस्यभेदैर्नामानितेपृथक् ७२ नाहंसमर्थोव्याख्यातुंपंचास्योऽपिनचक्षमः ॥ यत्रशेषःसहस्रास्योवर्णनेकुंठितस्त्व
भूत् ७३ एवंतेमहिमारामकोत्रवर्णयितुंक्षमः ॥ तथापिधन्योवाल्मीकिर्येनतेचरितंकृतम् ७४ शतकोटिमितंरामतवैवकृपयाप्रभो ॥ ॥ श्रीरामदासउवाच ॥ इत्यु
क्त्वासगुरुर्देवैराघवेणाऽपिपूजितः ७५ पृष्ट्वारामंययौस्वर्गंसत्यलोकंययौविधिः ॥ वाल्मीकिश्चाऽपिप्रययौचित्रकूटंनिजाश्रमम् ७६ तदारभ्यजनाःसर्वेचक्रुर्हास्यंमुदैव
ते ॥ मांगल्यकर्माण्युत्साहकर्माणिजगतीतले ७७ चक्रुःसर्वेपूर्ववचनातिहास्यंप्रचक्रिरे ॥ स्त्रीभिर्नराःसुसन्तुष्टाःक्रीडाहास्यादिचक्रिरे ७८ ॥ ॥ इति श्रीशतकोटिरा
मचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये राज्यकांडे उत्तरार्धे वाल्मीकिजन्मवर्णनं तत्तन्मंत्रवर्णनं नामचतुर्दशःसर्गः ॥ १४ ॥ ॥ श्रीरामदासउवाच ॥ राम
राज्येसदानन्दःसर्वानासीज्जनान्भुवे ॥ नासीत्कुत्राऽपिकलहश्चौर्यंनिंदाभयंतदा १ राज्यमासीदसापत्नंसमृद्धबलवाहनम् ॥ ऋषिभिर्हृष्टपुष्टैश्चरम्यंहाटकभूषणैः २
संजुष्टमिष्टापूर्तानांधर्माणांनित्यकर्तृभिः ॥ सदासंपन्नसस्यंचसुचिरंक्षेत्रसंकुलम् ३ सुदेशंसुप्रजंसुस्थंसुतृणंबहुगोधनम् ॥ देवतायतनानांचराजिभिःपरिराजितम् ४
सुयूपायत्रवैग्रामाःसुवित्तार्द्धिविराजिताः ॥ सुपुष्पकृत्रिमोद्यानाःसुसदाफलपादपाः ५ सुपद्मानीककासाराराजंतेयत्रभूमयः ॥ सदंभानिम्नगाराजिर्यत्रसन्तिनमानवाः ६
कुलान्येवकुलीनानिनचाऽन्यायधनानिच ॥ विभ्रमोयत्रनारीषुनविद्वत्सुचकर्हिचित् ७ नद्यःकुटिलगामिन्योनयत्रविषयेप्रजाः ॥ तमोयुक्ताःक्षपायत्रबहुलेपुनमानवाः
८ रजोयुजःस्त्रियोयत्रनधर्मबहुलानराः ॥ धनैरनंघोयत्रास्तिजनोनैवचभोजनम् ९ अनयस्यास्पदंयत्रनचवैराजपूरुषः ॥ दण्डःपरशुकुद्दालवालव्यजनराजिषु १०
आतपत्रेषुनान्यत्रक्वचित्क्रोधापराधजः ॥ अन्यत्राक्षिकवृंदेभ्यःक्वचिन्नपरिदेवनम् ११ आक्षिकाएवदृश्यंतेयत्रपाशैकपाणयः ॥ जाड्यवार्ताजलेष्वेवस्त्रीमध्याएवदुर्ब
लाः १२ कठोरहृदयायत्रसीमन्तिन्योनमानवाः ॥ औषधेष्वेवयत्रास्तिकुष्ठयोगोनमानवे १३ वेधोभ्यंतःसुरत्नेषुशूलंमूर्तिकरेषुवै ॥ कंपःसात्त्विकभावोत्थोनभयात्का
पिकस्यचित् १४ संज्वरःकामजोयत्रदारिद्र्यंकलुषस्यच ॥ दुर्लभत्वंपातकस्यसुकृतेनचवस्तुनः १५ इभाएवप्रमत्ताश्चयुद्धंवीच्योर्जलाशये ॥ दानहानिर्गजेष्वेवतुमेष्वेव
हिकंटकाः १६ जनेष्वेवविहारश्चैनकस्यचिदुरस्थली ॥ बाणेषुगुणविश्लेषोबन्धोक्तिःपुस्तकेदृढा १७ दण्डत्यागःसदैवास्तियत्रपाशुपतेजने ॥ दण्डवार्तासदायत्रकृतसं
न्यासकर्मणाम् १८ मार्गणाश्चापकेष्वेवभिक्षुकाब्रह्मचारिणः ॥ यत्रक्षपणकाएवदृश्यंतेमलधारिणः १९ प्रायोमधुव्रताएवयत्रचंचलवृत्तयः ॥ इत्यादिगुणवद्देशेरामोरा
ज्यंशशासस‌ः २० धर्मेणराजाधर्मज्ञःसीतारामःप्रतापवान् ॥ चकारराज्यंनिर्द्वंद्वमयोध्यायांसुनिश्चलम् २१ विधायराजधानींतांविस्तृतांपरिखान्विताम् ॥ एधांचक्रे
महाबुद्धिःप्रजाधर्मेणपालयन् २२ ततापसूर्यइवसदुर्हृदांहृदिनेत्रयोः ॥ सोमवत्सुहृदामासीन्मानसेपुस्वकेप्वपि २३ अखण्डमाखण्डलवत्कोदण्डंकलयन्रणे ॥ पलाय
मानैरालोकिशत्रुसैन्यबलाहकैः २४ सधर्मराजवद्राजाधर्माधर्मविवेचकः ॥ अदण्ड्येऽदण्डयन्नामोदण्डयांश्चपरिदण्डयन् २५ पाशीवपाशयांचक्रेवैरीचक्रंविदूरगः ॥ सो
ऽभूत्पुण्यजनाधीशोरिपुराक्षसवर्द्धनः २६ जगत्प्राणसमानश्चजगत्त्राणनतत्परः ॥ राजराजःसएवाभूत्सर्वेषांधनदःसताम् २७ सएवरुद्रमूर्तिश्चप्रोक्षिप्तरिपुभीषणे ॥

विश्वेदेवास्ततस्तंतुस्तुवंतिचभजंतिच २८ असाध्यःसहिसाध्यानांवसुभ्योवसुनाऽधिकः ॥ ग्रहाणांविग्रहधरोदस्रतोऽजस्ररूपधृक् २९ मरुद्गणानमणयंस्तुपितांस्तोष
यन्गुणैः ॥ सर्वविद्याधरोयस्तुसर्वविद्याधरेष्वपि ३० अगर्वानिवगंधर्वान्यश्चक्रेनिजगीतिभिः ॥ रक्षसुर्यक्षरक्षांसितदुर्गंस्वर्गसोदरम् ३१ नागानागांस्तिरश्चक्रुस्तस्यना
गेवलीयसः ॥ दनुजामनुजाकारंकृत्वातंतुसिषेविरे ३२ जातागुह्यचरायस्यगुह्यकाःपरितोनृषु ॥ संसेविष्यामहेराजन्सुरास्त्वांस्वस्ववैभवैः ३३ वयंयतस्त्वद्विषयेसुरा
वासोऽपिदुर्लभः ॥ इत्युक्त्वारामचन्द्रंतेमववाद्याःसिषेविरे ३४ अशिक्षयत्क्षितिपतेरिहयस्यतुरंगमान् ॥ आशुगश्चाशुगामित्वंपावमानेपथिस्थितः ३५ अगजान्यस्य
तुगजान्नगवर्ष्मंसुवर्ष्मणः ॥ अजस्रदानिनोदृष्ट्वाऽभवन्नन्येऽपिदानिनः ३६ सदोऽजिरेचवोद्धारोयोद्धारश्चरणाजिरे ॥ नयस्यशास्त्रैर्विजितानशस्त्रैःकेनचित्क्वचित् ३७
ननेत्रविषयेजाताविषयेयस्यभूभृतः ॥ सदानष्टपदाद्वेष्यास्तथानष्टापदाःप्रजाः ३८ कलावानेकएवाऽस्तित्रिदिवेऽपिदिवौकसाम् ॥ तस्यक्षोणीभृतःक्षोण्यांजनाःसर्वेक
लालयाः ३९ एकएवहिकामोऽस्तिस्वर्गेसोप्यंगवर्जितः ॥ सांगोपांगाश्चसर्वेषांसर्वेकामाहितद्भुवि ४० तस्योपवर्तनेऽप्येकोनश्रुतोगोत्रभित्क्वचित् ॥ स्वर्गेस्वर्गसदामी
शोगोत्रभित्परिकीर्तितः ४१ क्षयीचतस्यविषयेकोप्याकर्णिनकेनचित् ॥ त्रिविष्टपेक्षपानाथःपक्षेपक्षेक्षयिष्यते ४२ नाकेनवग्रहाःसंतिदेशास्तस्याऽनवग्रहाः ॥ हिरण्य
गर्भःस्वर्लोकेष्वेकएवप्रकाशते ४३ हिरण्यगर्भाःसर्वेषांतत्पौराणामिहालयाः ॥ सप्ताश्वएकःस्वर्लोकेनितरांभासतेंऽशुमान् ४४ सदंशुकाःप्रतिगृहंबह्वश्वास्तत्पुरौकसः ॥
सदप्सरायथास्वर्भूस्तत्पुर्यपिसदप्सराः ४५ एकैवपद्मावैकुंठेगीयतेविष्णुवल्लभा ॥ तत्पौराणांगृहेष्वासंश्छतपद्माःपृथक्पृथक् ४६ अनीतयश्चलब्धामानराजपुरुषाःक्व
चित् ॥ गृहेगृहेऽत्रधनदानाकएकोऽलकापतिः ४७ एवंरामोमहान्श्रेष्ठःशौटीर्यगुणशोभनः ॥ सौभाग्यशोभिरूपाढ्यःशौर्यौदार्यगुणान्वितः ४८ विजितानेकसमरःश्री
समर्पितमार्गणः ॥ सीतारंजितवामांगउग्रःपरपुरंजयः ४९ अनेकगुणसंपूर्णःपूर्णचंद्रनिभद्युतिः ॥ सततावभृथक्लिन्नमूर्धजःक्षितिपर्षभः ५० प्रजापालनसंपन्नःकोश
प्रीणितभूसुरः ॥ पार्वतीकांतचरणयुगलध्यानतत्परः ५१ विश्वेश्वरकथालापपरिक्षिप्तदिनक्षपः ॥ सीतासंक्षालितपदस्तत्क्रीडापरितोषितः ५२ शशासराज्यंधर्मेण
बन्धुपुत्रसमन्वितः ॥ रामेशासतिसाकेतपुर्यांराज्यंसुखेनवै ५३ हृष्टपुष्टाःप्रजाःसर्वाःफलवंतोऽभवन्नगाः ॥ आसन्सदासुकुसुमैर्विनम्राःसौख्यदानृणाम् ५४ एकपत्नी
व्रताःसर्वेपुमांसस्तस्यमण्डले ॥ नारीपुकाचिन्नैवासीदपतिव्रतधर्मिणी ५५ अनधीतोनाविप्रोऽभून्नशूरोनैवबाहुजः ॥ वैश्योऽनाभिज्ञोनैवासीदर्थोपार्जनकर्मसु ५६ अन
न्यवृत्तयःशूद्राद्विजशुश्रूषणंप्रति ॥ तस्यराष्ट्रेसमभवन्सीतारामस्यभूपतेः ५७ अविप्लुतब्रह्मचर्यास्तद्राष्ट्रेब्रह्मचारिणः ॥ नित्यंगुरुकुलाधीनावेदग्रहणतत्पराः ५८
४१ अन्येऽनुलोमजन्मानःप्रतिलोमभवाअपि ॥ स्वपारंपर्यतोद्रष्टुंमनागवर्त्मनतत्यजुः ५९ अनपत्योनतद्राष्ट्रेधनहीनस्तुकोपिन ॥ विरुद्धसेवीनोकश्चिदकालमृतिभाङ्न
च ६० नशठानैववाचाटावंचकानोनहिंसकाः ॥ नपाखंडानैवभंडानरंडानैवशौण्डिका ६१ श्रुतिघोषोहिसर्वत्रशास्त्रवादःपदेपदे ॥ सर्वत्रसुभगालापासुदामंगलगीतयः ६२

१ गृहेगृहेत्रधनदाइतिपाठः । २ औपपत्यविधर्मिणीतिपाठः ।

वीणावेणुप्रवादाश्चमृदंगमधुरस्वनाः ॥ सोमपानंविनान्यत्रपानगोष्ठीनकर्णगा ६३ मांसाशिनःपुरोडाशंनैवान्यत्रकथंचन ॥ नदुरोदरिणोयत्राधार्मिणोनचतस्कराः ६४
पुत्रस्यपित्रोःपदयोःपूजनंदेवपूजनम् ॥ उपवासोव्रतंतीर्थंदेवताराधनंपरम् ६५ नारीणांभर्तृपदयोःस्वर्चनंतद्वचःश्रुतिः ॥ समर्चयंतिसततंनिजमग्रजमादरात् ६६
समर्चयंतिमुदिताभृत्याःस्वामिपदांबुजम् ॥ हीनवर्णैरग्रवर्णोवर्ण्यतेगुणगौरवैः ६७ वरिवस्यंतिभूयोऽपित्रिकालंभूमिदेवताः ॥ सर्वत्रसर्वेविद्वांसःसमर्चंतिमनोरथैः ६८
विद्वद्भिश्चतपोनिष्ठास्तपोनिष्ठैर्जितेंद्रियाः ॥ जितेंद्रियैर्ज्ञाननिष्ठाज्ञानिभिःशिवलिंगिनः ६९ मंत्रपूतंमहार्हंचविधियुक्तंसुसंस्कृतम् ॥ वाडवानांमुखाग्नौचहूयतेऽहर्नि
शंहविः ७० वापीकूपतडागानामारामाणांपदेपदे ॥ शुचिभिर्द्रव्यसंभारैःकर्तारोयत्रभूरिशः ७१ तद्राष्ट्रेहृष्टपुष्टाश्चदृश्यंतेसर्वजातयः ॥ अनिंद्यसेवासंपन्नाविनाष्टग
णुसैनिकान् ७२ यस्यराज्येपताकासुचंचलाश्रीर्नराष्ट्रके ॥ ऐरावतोस्त्येकएवशुभ्रःस्वर्गेगजोमहान् ७३ चतुर्दंतोरामराज्येतद्वन्नागाःसहस्रशः ॥ इंदुसूर्यावुभावेवशो
भेतेगगनांगणे ७४ रामराज्येऽत्रनारीणांसीमंतस्थाअनेकशः ॥ वृषोस्त्येकःसकैलासेगीयतेपरमःसितः ७५ तद्वद्वृषारामराज्येकृषिकर्मणियोजिताः ॥ एणोस्त्येकश्चं
द्रलोकेकृष्णवर्णोमनोरमः ७६ तद्वदत्रशिशूनांहिक्रीडार्थंसंत्यनेकशः ॥ अप्सरस्सुवरास्वर्गेगीयतेसातिलोत्तमा ७७ गेहेगेहेसंतिनार्यःसर्वास्त्वत्रतिलोत्तमाः ॥ रुक्मभूषण
भूषाढ्यागतिनूपुरनिःस्वनाः ७८ सहस्राक्षोस्त्येकएवमहान्स्वर्गेप्रगीयते ॥ रामराज्येचामराणिसहस्राक्षीण्यनेकशः ७९ सुधापानंत्वेकमेवस्वर्गेऽस्तिपरमंवरम् ॥ त
द्वन्नानारसानांचपानमत्रगृहेगृहे ८० सुधापानेनसंहृष्टायथास्वर्गेसुरोत्तमाः ॥ दयिताधरपानेनतथाऽत्रसुखिनोजनाः ८१ सागरेष्वेवसादृष्टामर्यादासर्वदानरैः ॥ राम
राज्येऽत्रबालेषुमर्यादासर्वदेक्ष्यते ८२ विचरंतिगजारूढाःश्रूयंतेपार्थिवाःपुरा ॥ पौराजानपदाःसर्वेविचरंत्यत्रतेगजैः ८३ पूर्वंश्रुतंशिशूनांहिचुंबनंदिवसेमुहुः ॥ रामरा
ज्येऽनिशंनारीचुंबनानिमुहुर्मुदा ८४ क्रीडापरिमलद्रव्यैःफाल्गुनेसाश्रुतापुरा ॥ क्रीडापरिमलद्रव्यैःपौराश्चकुःसदात्रते ८५ एवंतद्रामराज्यंहिमहामंगलसंयुतम् ॥ आसी
दनुपमेयंचश्रवणान्मंगलप्रदम् ८६ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मी॰ राज्यकांडे उत्तरार्धे रामराज्यवर्णनं नाम पंचदशः सर्गः ॥ १५ ॥
॥ श्रीरामदासउवाच ॥ एकदाराघवःश्रीमान्समाहूयकुशंलवम् ॥ लक्ष्मणंभरतंचापिशत्रुघ्नंरहसिस्थितः १ राजनीतिंविस्तरेणाशिक्षयामाससादरम् ॥ शृणुवत्सकुशा
द्यत्वंयूयंसर्वेलवादिकाः २ शृणुताऽत्रस्वस्थचित्ताराजनीतिंवदाम्यहम् ॥ कुशत्वंपृथिवीपालोभविष्यसिगतेमयि ३ वैकुंठंशृणुतस्मात्त्वंसावधानमनाभव ॥ अनृतनै
ववक्तव्यंनृपेणाचिरजीविना ४ नातिकामीनवैक्रोधीराजाससुखमर्हति ॥ परदाररतिस्त्याज्यासर्वथापार्थिवेनहि ५ सत्यंशौचंदयाक्षांतिरार्जवंमधुरंवचः ॥ द्विजगोय
तिसद्भक्तिःसमेतेशुभदागुणाः ६ निद्रालस्यंमद्यपानंद्यूतंवारांगनारतिः ॥ अतिक्रीडाऽतिमृगयासप्तदोषान्नृपस्त्यजेत् ७ पुत्रवत्पालनीयाश्चप्रजानृपतिनाभुवि ॥ षष्ठांशः
करमारश्चराज्ञाग्राह्यःसदैवहि ८ ज्ञेयंचारैःसदावृत्तंपृथिव्याःपार्थिवेनवै ॥ परराष्ट्रेसदादूतानानावेषविरूपिताः ९ पंचपंचाऽथवाद्वौद्वौप्रेषणीयानृपेणहि ॥ नविश्वसे ॥ ६ ॥

१ शुश्रूषंति । २ ब्राह्मणानामित्यर्थः । ३ रामराज्येदिनेनारीतिपाठः ।

त्पारकीयजनेदूतेनृपोत्तमः १० दण्डोभेदस्तथासामदानंकालोचितंचरेत् ॥ स्वकार्यंसाधयेद्युक्त्याकालेप्राप्तेनृपोत्तमः ११ मनसाचिंतितंकार्यंकथनीयंनकस्यचित् ॥
कृत्वाकार्यंदर्शनीयंजनान्मन्त्रिजनानपि १२ मासेमासेस्वकोशस्यपरामर्शोनृपोत्तमैः ॥ ग्रहणीयःसर्वदैवविश्वसेत्सेवकेषुन १३ वर्षेवर्षेनगर्याश्चप्राकारस्यनृपोत्तमैः ॥ परि
खानांपरामर्शःकार्योमन्त्रिजनैःसह १४ चतुर्मासेषुशस्त्राणांमार्गाणांपार्थिवोत्तमैः ॥ परामर्शःसदाकोष्ठागारादीनांप्रकारयेत् १५ पक्षेपक्षेवारणानांतुरंगाणांतथाऽष्टभिः ॥
दिवसैर्मासमात्रेणवस्त्राणांपार्थिवोत्तमैः १६ परामर्शःसदाकार्यःपेकादीनांत्रिभिर्दिनैः ॥ सीमाचारजनानांचषण्मासैश्चनृपोत्तमैः १७ परामर्शःसदाकार्यस्तथाजानपद
स्यच ॥ मासेमासेस्वसैन्यस्यवापीनामयनेनहि १८ कार्यःपुष्पवाटिकानांमासेमासेनृपोत्तमैः ॥ परामर्शःस्वयंगत्वाऽथवामन्त्रिजनोत्तमैः १९ वर्षेवर्षेसमुद्योगःषण्मासै
रथवात्रिभिः ॥ मासैर्नृपेणस्वेराष्ट्रेकार्यःसैन्येनयत्नतः २० देवानांब्राह्मणानांचगुरूणांयतिनांतथा ॥ असंतोषोनैवकार्यःपार्थिवेनकदाऽपिहि २१ द्रव्यादायःसदा
पश्येत्स्वव्ययन्तुनिरीक्षयेत् ॥ आदायस्यचतुर्थांशैर्व्ययःकार्योनृपोत्तमैः २२ तृतीयांशेनवाकार्यस्त्वर्धांशेनकदापिन ॥ इष्टाःकार्यामन्त्रिणश्चनाऽतिकोपंसमाचरेत् २३
नाऽतिमान्यामन्त्रिणश्चवर्धनीयाकदापिन ॥ नविरोध्याःकदाराज्ञादुर्गपालास्तथैवते २४ आकराणांपट्टणानांदुर्गाणांगिरिवासिनाम् ॥ अरण्यवासिनांसिंधौतुपद्वी
पनिवासिनाम् २५ सिंधुतीरस्थितानांचनानादेशनिवासिनाम् ॥ वर्षांतरस्थितानांचद्वीपांतरनिवासिनाम् २६ द्वीपेद्वीपेपृथग्वर्षवासिनांपार्थिवोत्तमैः ॥ परामर्शः
सदाकार्यश्चारैःपक्षांतरेणहि २७ परराष्ट्राद्गुप्तरूपैःकाषायांबरधारिभिः ॥ अवधूतादिवेषैश्चतथाकार्पटिकोपमैः २८ वणिग्रूपधरैर्दूतैर्दृष्टंतंवेद्यंनृपोत्तमैः ॥ तत्रतत्राधिपाः
सर्वेऽब्देऽब्देकार्यास्तुनूतनाः २९ एकएवचिरंराज्ञानस्थाप्यःपालकःक्वचित् ॥ परसैन्यानिवेद्यानिद्रष्टव्यंस्वबलंसदा ३० परराष्ट्रागतोदूतःस्वीयराष्ट्रेविलोकयेत् ॥
दृष्टश्चेन्नैवदण्ड्यःसपरदूतंनाशिक्षयेत् ३१ परदूतोमोचनीयःसन्मानेननृपोत्तमैः ॥ स्वसीमारक्षिणोदूताश्शिक्षणीयामुहुर्मुहुः ३२ परदूतःकथंमुक्तःस्वीयराष्ट्रेपुरेऽथवा ॥
अद्यारभ्यसूक्ष्मदृष्ट्याद्रष्टव्यंचेतिपार्थिवैः ३३ अग्रेसरंपार्श्वगौचपश्चाद्ग्रामस्यरक्षकम् ॥ सेनापतिंमन्त्रिणंचस्वीयंप्रतिनिधिंतथा ३४ सूतंचामरहस्तंचदूतंनिकटवर्ति
नम् ॥ दानमानैस्तोषयेच्चसदाराज्ञासुबुद्धिना ३५ देशंकालंबलंकोशंनिजोत्साहंनृपोत्तमैः ॥ आदौबुध्यानिरीक्ष्याऽथरिपोश्चाऽपिपरीक्षयेत् ३६ निजमित्रानृपाःसर्वे
तथास्वसुहृदोनृपाः ॥ सुहृदांसुहृदश्चापिमित्रामित्रान्परीक्षयेत् ३७ निजमित्रबलंदृष्ट्वामित्रमित्रबलंतथा ॥ बलंस्वसुहृदांचापिस्वसुहृत्सुहृदांबलम् ३८ आदौनृपैः
परीक्ष्याथरिपोश्चैवंनिरीक्षयेत् ॥ केस्वीयाःपार्थिवाराष्ट्रेपारकीयानृपाश्चके ३९ सुहृदःस्वनृपाणांचबलंतेषांनिरीक्षयेत् ॥ द्रष्टव्यारिपवःस्वीयारिपूणांरिपवस्तथा ४०
दृष्ट्वारिपूणांरिपुभिःकार्याराज्ञाहिमैत्रिकी ॥ परस्यशत्रुःपाल्योनपाल्यश्चेत्तंपरीक्षयेत् ४१ पाल्यंशत्रुबलंदृष्ट्वाशत्रुमित्रबलंतथा ॥ पाल्यंशत्रुसुहृत्सैन्यंदृष्ट्वापाल्यंसुर
क्षयेत् ४२ परराष्ट्रेचारनेत्रैर्वोदुर्गाणिपर्वताः ॥ अरण्यानिदुष्टमार्गाश्चोरमार्गाजलाशयाः ४३ ज्ञातव्याःस्वपुरेपूर्वंमुद्योगश्चततश्चरेत् ॥ परराष्ट्रेतिबुध्याहिगन्तव्यं

१ सर्वांपामितिपाठः ॥ २ मंत्रिभिरितिपाठः । ३ सिंधावुपेतिपाठः ।

पार्थिवैःसुखम् ४४ यत्राग्रेगमनंस्वीयंकेषांवाच्यंनतत्कदा ॥ पूर्वेगन्तुंनिजेच्छाचेन्निक्षिपेदुत्तरेध्वजम् ४५ उत्तराभिमुखःकार्यःसेनावासोनृपेणहि ॥ अग्रेसरंचोत्त
रंहिनृपेणाज्ञाप्यसादरम् ४६ क्रोशार्द्धांतेगतंदृष्ट्वागच्छेत्पूर्वेस्वयंनृपः ॥ एवंध्वजःकदायाम्येपश्चिमेवापरादिशि ४७ परराष्ट्रेरोपणीयश्चारैर्दृत्तंतुवेदयेत् ॥ स्वराष्ट्रेगम
नंयस्यांदिशितस्यांनृपोत्तमैः ४८ रोपणीयोध्वजःप्रोच्चैःसेनावासस्तथाचरेत् ॥ यन्त्राणामायुधानांचवाहनानांबलस्यच ४९ राज्ञावृद्धिःसदाकार्याकार्योवान्यादि
संग्रहः ॥ राष्ट्रेदुर्गेपुरेस्वीयेपत्तनेनिर्जलेवने ५० जलाशयाःशुभाःकार्याःकृत्वाकोशव्ययंबहु ॥ प्राकारार्थेऽथदुर्गार्थेजलार्थेयोव्ययःकृतः ५१ नज्ञेयःसव्ययोराज्ञा
ज्ञेयंरक्षणमात्मनः ॥ धर्मार्थेयोव्ययोजातःसोऽप्यज्ञेयस्तुसंग्रहः ५२ आपदर्थेधनंरक्षेद्दारान्रक्षेद्धनैरपि ॥ आत्मानंसततंरक्षेद्दारैरपिधनैरपि ५३ पादमुद्रामितंद्र
व्यंराज्ञादायोनिरीक्षयेत् ॥ नावलोक्यंयथाकालंव्ययेतत्कोटिसंमितम् ५४ नसेनारहितंराज्ञागंतव्यंस्वपुराद्बहिः ॥ नैकाकीविचरेद्ग्रामेनैकाकीकापिसंविशेत् ५५
नैकाकीकापिवैस्थेयंनपद्भ्यांविचरेद्बहिः ॥ नगच्छेत्परगेहेपुवारंवारंनृपोत्तमः ५६ नविश्वसेद्द्वारपालंजलदंरजकंतथा ॥ धौतवस्त्राणिबुध्याहिनृपःसम्यक्परीक्षयेत्
५७ तांबूलविटिकाग्राह्यांतराद्दृष्टापरार्पिता ॥ परदत्तंजलंग्राह्यंराज्ञाऽक्षिभ्यांविलोक्यच ५८ फलानिपरदत्तानिपरीक्षेत्पार्थिवोत्तमः ॥ दूरस्थितैर्नृपैर्भाव्यंन
तेषांनिकटंचरेत् ५९ सभांराज्ञाप्रगंतव्यांद्विवारंत्वेकदाऽथवा ॥ अर्धयामंसभामध्येस्थेयंराज्ञानवैचिरम् ६० स्वद्वेष्टानगराद्राष्ट्राद्बहिःकार्योनृपोत्तमैः ॥ पादौप्रसा
र्यसदसिनस्थेयंपार्थिवेनहि ६१ नबाहुबन्धनंजान्वोःकृत्वास्थेयंनृपोत्तमैः ॥ नातिस्मितंकदाकार्यंसभायांपार्थिवोत्तमैः ६२ सभायांसमलैर्वस्त्रैर्नगन्तव्यंकदानृपैः ॥
गणिकागणकावैद्यागायकाबन्दिनोनटाः ६२ पण्डिताधर्मशास्त्रज्ञास्तार्किकावैदिकाद्विजाः ॥ सदापाल्यानृपेणैतेदानमानैरहर्निशम् ६४ नविश्वसेन्नापितायतो
षयेत्तंधनादिभिः ॥ प्रजानांगौरवंकार्यंदण्डयेन्नृथाप्रजाः ६५ क्लेशयुक्ताःप्रजाःसर्वानैवकार्याःकदाचन ॥ राज्यद्वारस्थितैर्दूतैस्सर्वैतेपार्थिवोत्तमाः ६६ मुक्त
कंचुकबन्धाश्चविमुक्तकटिबन्धनाः ॥ सम्यग्दृष्ट्वान्यस्तशस्त्राःप्रेषणीयानृपोत्तमम् ६७ राजाज्ञयानृपंनत्वाऽऽसनेचोपविशेत्क्रमात् ॥ नृपैर्मांडलिकैःसर्वैःस्थातव्यं
पुरतोऽथवा ६८ संमील्यहस्तौपादौचराजन्यस्तविलोचनैः ॥ नहसेद्राजपुरतोनजृंभेन्नक्षुवेन्मुहुः ६९ तथानष्ठीवनंकार्यंसर्वैर्मांडलिकैर्नृपैः ॥ आगमेगमनेसर्वैर्वं
दनीयोनृपोमुहुः ७० नात्युच्चैस्संवदेद्राजसान्निध्येपार्थिवेतरैः ॥ कंचुकेनविनाराज्ञासभायांनोपसंविशेत् ७१ मृगयायांवारणेंद्रोनैवहन्योनृपोत्तमैः ॥ नांतर्वत्नी
मृगीराज्ञाहन्तव्याविपिनेकदा ७१ ननिद्रितश्चहन्तव्यःपिबन्नीरंवनेचरः ॥ तथास्वशरणंप्राप्तोविश्वस्तोवाकदाचन ७३ क्रीडासक्तोवनेप्राणीनैवहन्योनृपोत्त
मैः ॥ सीमाचारानष्टदिक्षुसंस्थाप्यमृगयांचरेत् ७४ रात्रौमित्रेणसहितस्तूष्णीमेवनृपोत्तमः ॥ आत्मानंकंबलेनैवसमाच्छाद्यबहिश्चरेत् ७५ पुरद्वारस्थितानां
चह्यर्गलादिनिरीक्षयेत् ॥ जनानांभाषितंसर्वंश्रोतव्यंहिशुभाशुभम् ७६ एवंस्वयमगन्तव्यमथवाप्रेषयेद्धितम् ॥ रात्रौरात्रौपुरेबुध्याश्रोतव्यंसकलैरितम् ७७

१ गत्वेतिपाठः ।

नकार्यःकलहोगेहे देगृहकृत्यंसमास्थितैः ॥ नवाच्यमणुमात्रंहिनतूष्णींष्ठीवनंचरेत् ७८ नकंडूयेच्छिरोराजासभायांस्वकरेणवै ॥ श्रुत्वारिपूणामुत्कर्षंनत्यजेद्धैर्यमात्मनः
७९ पलायनंनसंग्रामाद्राज्ञाकार्यंकदाचन ॥ नरिपूणांनिजापृष्ठिर्दर्शनीयाकदाचन ८० नोडुपेनतरेद्राजानदींमुख्यांकदापिहि ॥ सेतुंविनानदीराज्ञानोत्तीर्याहिकदाचन
८१ नोत्तीर्यानौकयाराज्ञानदीकाऽपिसुतादिभिः ॥ कार्यानैवजलक्रीडानौकायांस्वसुतैःसह ८२ नस्थेयंहट्टमध्येहितथाचैवचतुष्पथे ॥ नताडयेन्निजांपत्नींतथापुत्रंनताड
येत् ८३ स्वमुद्रांकितपत्रेणविनाकेवापुराद्बहिः ॥ ननिर्गमःप्रकर्तव्यस्तथैवाऽऽगमनंनृणाम् ८४ कर्तुमाज्ञापनर्थिनमुद्रापत्रांकितंविना ॥ नारण्येलुंठनंचोरैःपथिकार्यं
नृपोत्तमैः ८५ नकार्यंमुंडनंराज्ञाविनातीर्थंकदाचन ॥ पर्वकालेगृहेनैवस्नातव्यंपार्थिवोत्तमैः ८६ नपादेनस्पृशेच्चापंनपादेनशरंस्पृशेत् ॥ नातिक्रीडेत्सारिकाभिर्द्विजैर्वा
दंनवैचरेत् ८७ नतिष्ठेद्द्वारदेशेवैनस्थातव्यंनृपैर्भुवि ॥ राज्ञामार्गेनवैस्थेयंनखेदंनृपतिर्भजेत् ८८ तोयानयनमार्गेहिस्त्रीणांस्थेयंनृपेणन ॥ धान्यंसमर्घंकर्तुं वेदंडयेद्व्यव
सायिनः ८९ दृष्ट्वाकिंचिन्महर्घंतुस्वीयराष्ट्रेहिभूभृता ॥ न्यूनःकार्यःकरभारःकिंचिद्देशसुखायच ९० नातिशाठ्यंकदाकार्यमौदार्यंदर्शयेज्जनान् ॥ द्रव्यंगृहीत्वाराज्ञा
हिमोचनीयानतस्कराः ९१ मुखंदृष्ट्वानवैकार्योराज्ञान्यायःकदापिहि ॥ नन्यायश्चपरैःकार्यःस्वयमेवप्रकारयेत् ९२ आर्तानांसकलंवृत्तंश्रोतव्यंसादरंनृपैः ॥ आर्त्त
आकारणीयोहिनिकटंतुपयातृपैः ९३ आत्मानंमानयेन्नैववैद्यंचगणकंनटम् ॥ पण्डितंवैदिकंवीरंगायकंकतथार्मिणम् ९४ यज्ञोदानंजपोहोमःसन्ध्याध्यानंशिवार्च
नम् ॥ स्नानंपुराणश्रवणंभक्त्याकार्यंनृपोत्तमैः ९५ नमादकंनवस्तुसेव्यंनकृच्छ्रादिकमाचरेत् ॥ नयात्रास्वपदाकार्यासप्तद्वीपाधिपेनहि ९६ फलाहारश्चकर्तव्योराज्ञाह्ये
कादशीदिने ॥ निर्जलश्चोपवासश्चनकार्यःपृथिवीभृता ९७ येनयद्याचितंराज्ञेभूसुरेणार्पयेच्चतत् ॥ तस्मैविप्रायराज्ञाहिनृपाभूसुरदेवताः ९८ उत्साहेवन्धनान्मोच्या
ययेक्रोधात्सुरक्षिताः ॥ निजाज्ञाभंगर्तादृष्ट्वाज्ञेयंस्वीयंहृतंशिरः ९९ स्वीयदूतापमानोयःसस्वीयाश्चितयेनृपैः ॥ स्वीयदूतस्यसम्मानोराज्ञाज्ञेयःसआत्मनः १००
एवंकुशमयाप्रोक्ताराजनीतिःसविस्तरा ॥ दिनचर्यामयायद्वत्क्रियतेत्वंतथाकुरु १०१ ॥ इतिश्रीश०श्रीमदा०राज्यकांडेउत्त०राजनीतिशिक्षणंनामषोडशःसर्गः ॥ १६ ॥
श्रीरामदासउवाच ॥ एकदाकुशकन्यायाहेमायाश्चस्वयंवरम् ॥ अयोध्यायांचकाराऽथरामश्चातिमहोत्सवैः १ समाहूतान्नृपाःसर्वेनानाद्वीपांतरस्थिताः ॥ समाजग्मुः
सुवेषाश्चसभायांतस्थुरासने २ ययुर्देवाःसगंधर्वामुनयोऽपिसमाययुः ॥ यक्षविद्याधरानागाःकिन्नराद्याःसमाययुः ३ तदासभायामानीताहेमालंकारभूषिता ॥ आरु
ह्यशिविकायांतुरूक्ममय्यांवरानना ४ नवरत्नमयींमालांबिभ्रतीसास्वयंवरा ॥ ददर्शनृपतीन्सर्वान्नृपपुत्रान्सविस्तरम् ५ तद्भ्रूचापविनिर्मुक्तैस्तत्कटाक्षपतत्रिभिः ॥
संभिन्नास्तेनृपाःसर्वेकेवयंनविदुस्तदा ६ एतस्मिन्नंतरेतत्राऽऽतिनाथसुतोमहान् ॥ चित्रांगदःसभायाश्चतांजहारकुशात्मजाम् ७ दृष्ट्वाकायांतरव्यग्रान्रामादीन्वेगव
त्तरः ॥ मोहनास्त्रेणसकलान्वीरान्कृत्वातिमोहितान् ८ रथेनिवेश्यतांहेमांहिमामविगवत्तरः ॥ चित्रांगदोबहिर्गत्वाक्रोशमात्रेस्थिरोऽभवत् ९ किंतूष्णींचोरवन्नेया
हेमेयंकुशबालिका ॥ इतिनिश्चित्यमेधावीतस्थौचित्रांगदोमहान् १० एतस्मिन्नंतरेपुर्यांहाहाकारोमहानभूत ॥ नीताहेमाचोग्रबाहोःपुत्रेणाऽतिबलीयसा ११

नृपाःसर्वेसमुत्तस्थुःसमायांखिन्नमानसाः ॥ उपसंहरितेतेनमोहनास्त्रेऽतिसम्भ्रमात् १२ चित्रांगदेनयोद्धुंतेस्वसैन्यैर्निर्ययुर्नृपाः ॥ बहिःसाकेतनगरात्क्रोधादारक्त
लोचनाः १३ तूष्णीमेवोग्रबाहुःसददर्शपुत्रकौतुकम् ॥ एतस्मिन्नंतरेसर्वेतद्वर्थपार्थिवोत्तमाः १४ संवेष्टयकोटिशैःशस्त्रैर्ववर्षुश्चोग्रबाहुजम् ॥ तदाचित्रांगदोवीरो
वायव्यास्त्रेणपार्थिवान् १५ गगनेभ्रामयामासवाहनाद्यैःसमन्वितान् ॥ ततोरामाज्ञयासप्तलवाद्यानिर्ययुःपुरात् १६ उत्सवार्थसमायाताःस्वस्वराज्यात्तुबालकाः ॥
अंगदाद्यानिजैःसैन्यैःसलवाःसंगरंययुः १७ तदाबभूवतुमुलंयुद्धंतल्लोमहर्षणम् ॥ चित्रांगदंववर्षुस्तेनानाशस्त्राणिराघवाः १८ चित्रांगदःस्वबाणौघैर्भित्वाशस्त्राणि
तानिहि ॥ निजबाणैर्यूपकेतुंचकारविरथंक्षणात् १९ तथाचकारविरथंसुबाहुंपुष्करंतथा ॥ तक्षंकंचित्रकेतुंचह्यंगदंबलवत्तरः २० तद्दृष्ट्वाकौतुकंतस्यज्ञात्वातत
पसःफलम् ॥ लवश्चिच्छेदबाणौघैस्तद्धनुर्दिव्यमुत्तमम् २१ ततोलवःस्वबाणौघैरुग्रबाहुसुतंमुदा ॥ चकारव्याकुलंशीघ्रंतद्दृष्ट्वालवचेष्टितम् २२ उग्रबाहुर्ययौयोद्धुं
लवेनवेगवत्तरः ॥ लवस्तमपिबाणौघैश्चकारविरथंक्षणात् २३ उग्रबाहुस्तदावीरोऽन्येरथेचारुरोहसः ॥ ववर्षनिशितैर्बाणैर्मूर्छयामासतंलवम् २४ लवंविमूर्छितंदृष्ट्वा
हाहाकारोमहानभूत् ॥ तदाययौकुशोयोद्धुमुग्रबाहुनृपेणवै २५ कुशमागतमाज्ञायह्यंगदाद्यास्तदापुनः ॥ रथस्थायुयुधुस्तेनउग्रबाहुनृपेणच २६ पुनस्तानंगदा
दींश्चचकारविरथान्नृपः ॥ तदाकुशःस्वबाणौघैरुग्रबाहुंनृपंक्षणात् २७ चकारविरथंवीरश्चिच्छेदतस्यकार्मुकम् ॥ उग्रबाहुस्तदाव्यग्रोबभूवचकितस्तदा २८ तंदृष्ट्
वासकुशस्तोषाद्वादयामासदुंदुभीन् ॥ अथोग्रबाहुंससुतंनिन्येश्रीरामसन्निधिम् २९ रामस्तंमोचयामासमत्वातंसुहृदंवरम् ॥ तदारामोविजयिनेकंकणंमुनिनार्पि
तम् ३० ददौकुशायप्रीत्यासपुरतःकुंभजन्मनः ॥ कुशस्तदाऽतिशुशुभेवरकंकणमंडितः ३१ तदाकुशोमुनिंप्राहनत्वातंकुम्भसम्भवम् ॥ त्वयालब्धंकुतश्चेदंकंकणंव
दमांमुने ३२ तत्तस्यवचनंश्रुत्वाऽगस्तिःप्राहकुशंमुदा ॥ पुरेंद्ररिपवोवत्सबहवःसागरेणहि ३३ छताःस्वांतर्निवासाश्चतदाऽहंनाकपार्थितः[1] ॥ कृत्वास्वचुलकेऽब्धिं
तंपीतवांल्लीलयैवहि ३४ ततोलुप्तांद्वीपयोर्हिमर्यादांमध्यवर्तिनीम् ॥ दृष्ट्वापुनर्नाकपेनप्रार्थितोहतशत्रुणा ३५ सूत्रवत्सागरंमीमंसजीवंमुक्तवानहम् ॥ तदाऽब्धि
नाऽर्पितंमह्यंकुशतत्कंकणंवरम् ३६ नानारत्नविचित्रंचरवितेजविराजितम् ॥ तद्रामायार्पितंपूर्वंमयातेनतवार्पितम् ३७ तन्मुनेर्वचनंश्रुत्वाकुशस्तंप्राहवैपुनः ॥
लवस्यजीवनोपायंवदमामद्यभोमुने ३८ मूर्छितःपातितश्चाऽस्तिरणेरिपुशरैर्हतः ॥ कुशस्यवचनंश्रुत्वाऽगस्तिस्तंप्राहसादरम् ३९ विमूर्छितोयदापूर्वंभरतःपथिपार्थि
वैः ॥ मुद्गलाश्रमतोवल्ल्यस्तदाऽऽनीताःशुभावहाः ४० सौमित्रिणातदाऽद्यत्वंमुद्गलाश्रमतःपुनः ॥ महौषधीःसमानीयजीवयैनंलवंजवात् ४१ अथवात्वंहनूमंतंप्रेषयस्वा
श्रमंमुनेः ॥ एवंयावचसस्मुनिःकथयामासतंकुशम् ४२ तावत्तद्वचनंश्रुत्वामुनेर्मारुतिनाक्षणात् ॥ समानीयाश्रमाद्वल्लीर्मुद्गलस्यतपोनिधेः ४३ ताभिस्तंजीवयामासलवं
सैन्यसमन्वितम् ॥ विष्णुदासउवाच ॥ गुरोतस्यैवचमुनेर्मुद्गलस्याश्रमेकथम् ४४ मृतसंजीवनीवल्ल्यादिकावल्ल्योऽत्रनिर्गताः ॥ कथंताहिसमीपस्थाविस्मृत्यद्रोणपर्वतम्

१ इंद्रेणप्रार्थितः

४५ प्रेषितोऽञ्जनिपुत्रःसतेनजांबवतापुरा ॥ अमुंमत्संशयंछिंधिकृपांकृत्वामुनीश्वर ४६ ॥ श्रीरामदासउवाच ॥ यदामातुर्विमोक्षार्थममृतस्यखगाधिपः ॥ कलशंस्वमुखे
धृत्वानाकलोकात्समानयत् ४७ तदातत्कलशाद्वेगाद्बिंदुस्तत्रापतत्पुरा ॥ तद्धेतोर्मुद्गलस्यापिमुनेस्तपःप्रभावतः ४८ आसन्वल्यश्चतस्यैवह्याश्रमेहिद्विजोत्तम ॥
नैतावेदशुभावल्लीर्जांबवान्सवनेचरः ४९ द्रोणाचलंत्वतस्तेनप्रेषितोवायुनंदनः ॥ इतित्वयायथापृष्टंतथातेविनिवेदितम् ५० इदानींशृणुशिष्यत्वंशुभांतांप्राक्तनींकथाम् ॥
ततोल्वादिकाःसर्वेययुस्तेस्वपुरींमुदा ५१ नत्वामुनिंचरामादींस्तस्थुःश्रीराघवाग्रतः ॥ तदामहोत्सवश्चासीत्पुर्यांतल्लवदर्शनात् ५२ ततोदृष्ट्वालवंरामोजीवितंवायुजेन
हि ॥ समालिंग्यदृढंप्रेम्णापरंतोषमवापसः ५३ ततोरामोवायुजायकंकणेरत्नमंडिते ॥ ददौपरमसंतुष्टस्ताभ्यांसशुशुभेकपिः ५४ ततोलवायश्रीरामस्त्वपरंकंकणंवरम् ॥
ददावगस्तिनादत्तंपूर्वंयद्रत्नमंडितम् ५५ लवस्तेनातिशुशुभेवरकंकणमण्डितः ॥ लवस्तदामुनिंप्राहनत्वातंकुम्भसम्भवम् ५६ त्वयालब्धंकुतश्चेदंकंकणंवदमांमुने
ततस्यवचनंश्रुत्वाऽगस्तिःप्राहलवंमुदा ५७ एकदादंडकारण्येऽहंस्नातुंहिगतःसरः ॥ तस्मिन्स्नात्वानित्यविधिंकृत्वातत्रस्थितःक्षणम् ५८ एतस्मिन्नंतरेतत्रखात्स्व
र्गीससुपागतः ॥ दिव्यंविमानमारूढःशतस्त्रीपरिवेष्टितः ५९ दिव्यमाल्यांबरधरोदिव्यगंधादिचर्चितः ॥ सस्वर्गीखात्समायातोयावत्तावत्सरोवरात् ६० शवंविनिर्ग
तंश्रेष्ठंस्फुरितंडिभियंकरम् ॥ दुर्गंधसहितंवृष्टंप्राप्तंतत्सरसस्तटम् ६१ अवरुह्यविमानाग्र्यात्सस्वर्गीतच्छवंययौ ॥ छित्त्वातच्छवमांसादिभक्षयामाससादरम् ६२ ततः
पीत्वाजलंस्वर्गीविमानंचारुरोहसः ॥ निमग्नंतच्छवंचापिपुनस्तस्मिन्सरोवरे ६३ स्वर्गिणंगंतुकामंतंदृष्ट्वाऽहंचातिविस्मितः ॥ अब्रुवंमधुरंवाक्यं रेरेदिव्यस्वरूपधृक्
६४ क्षणंतिष्ठोत्तरंदेहिकौतुकंतेमयेक्षितम् ॥ ईदृशस्तेशवाहारःकथंस्वर्गनिवासिनः ६५ इतिमद्वचनंश्रुत्वासस्वर्गीप्राहमांतदा ॥ सम्यक्पृष्टंत्वयाब्रह्मन्शृणुसर्वंमयोच्य
ते ६६ सुदेवाख्योहिवैदर्भोनृपतिश्चाभवत्पुरा ॥ तत्पुत्रौश्वेतसुरथौश्वेतोऽहंपार्थिवोऽभवम् ६७ नैवदानंमयातस्मिन्जन्मन्यत्रकृतंकदा ॥ स्वीयराज्यमदाक्रांतःपाप
कर्मरतःसदा ६८ ततोऽपुत्रीत्वहंराज्येकृत्वार्तंसुरथानुजम् ॥ वार्धकेतुवनंप्राप्तस्तपस्तीव्रंसमाचरम् ६९ एकदाम्नातुमुद्युक्तोनिमग्नोऽहंसरोवरे ॥ ततोमृतोदिवंप्राप्त
स्त्वहंस्वीयतपोबलात् ७० तपसश्चफलैस्तत्रममासन्सर्वसंपदः ॥ अदृष्ट्वाभक्षितुंकिंचिन्मयापृष्टःसुराधिपः ७१ वर्ततेविविधास्त्वत्रममभोगाःसुदुर्लभाः ॥ कथंनासीद्भ
क्षणार्थंकथंमेऽत्रसुखंभवेत् ७२ इतिमद्वचनंश्रुत्वामामिंद्रःप्राहसस्मितः ॥ नैवदानंत्वयाभूमौकृतंराज्यमदेनहि ७३ अदत्तंलभ्यतेनैवनृपःपुण्यैःकदेतरैः ॥ अतस्त्वंप्र
त्यहंगत्वाविमानेनसरोवरम् ७४ भक्षयस्वशवंपुष्टंमिष्टान्नैःपोषितंचयत् ॥ चिरकालंभवेत्ततेक्षयंयास्यतिनैवतत् ७५ इतींद्रवचनंश्रुत्वासपृष्टश्चपुनर्मया ॥ दिव्यान्नानि
कथंचाहंप्राप्नुयांतद्वदस्वमाम् ७६ इतिमद्वचनंश्रुत्वातदेंद्रःप्राहमांपुनः ॥ अधुनादण्डकारण्यंवर्ततेहीनमानुषम् ७७ विंध्यवृद्धिनिषेधार्थमगस्तिःसुरयाचितः ॥
यदायास्यतिपत्न्याविमुक्ताकाशींहिदण्डकम् ७८ सरस्यस्मिन्कदास्नात्वास्थितंपश्यासितंमुनिम् ॥ तदातस्मैकंकणंस्वंदेहितोयैःपरिप्लुतम् ७९ तेनकंकणदानेन

१ स्फुटितमितिपाठः ।

दिव्यांधःप्राप्स्यसेनृप ॥ इतींद्रवचनंश्रुत्वातदारभ्यचिरंमुने ८० अत्रागत्यशवाहारःक्रियतेहिसदामया ॥ एतावत्कालपर्यंतंनात्रकश्चिन्मयेक्षितः ८१ मया
दृष्टस्त्वमेवाऽत्रवेद्मित्वांकुम्भसंभवम् ॥ अद्यत्वयातारितोऽहंदानंस्वीकुरुमेस्विदम् ८२ ॥ ॥ अगस्त्यउवाच ॥ ॥ इत्थंस्वर्गीसमामुक्त्वाददौकंकणमुज्ज्व
लम् ॥ महांसाद्रंततःस्वर्गंययौस्वर्गीमुदायुतः ८३ तदारभ्यशवंतोयाद्बहिस्तन्नययौकदा ॥ दिव्यान्नानितुसंप्रापनाकलोकेयथासुखम् ८४ इतियत्कंकणंलब्धंमयालव
पुरावने ॥ अर्पितंराघवायेदंतेनतच्चाऽद्यतेऽर्पितम् ८५ ॥ ॥ रामदासउवाच ॥ ॥ इत्यगस्त्यवचःश्रुत्वालवःपप्रच्छतंपुनः ॥ किमर्थंदण्डकाख्यंतद्बभूवाविपिनंवद
८६ ॥ अगस्त्यउवाच ॥ इक्ष्वाकुवंशसंभूतोऽभून्नृपोविंध्यदक्षिणे ॥ नाम्नादंडकेतिख्यातःपापकर्मरतःसदा ८७ एकदासवनंयातोमृगयार्थंस्वसेनया ॥ तत्रदृष्ट्वामृगंरा
जामृगपृष्ठेप्रदुद्रुवे ८८ एकाकीहयमारूढोदेशाद्देशांतरंययौ ॥ एवंहिगच्छतस्तस्यमृगोऽदृश्योऽभवत्तदा ८९ ततःसोऽतितृषाक्रांतःप्रययौवैजलाशयम् ॥ तत्रपीत्वाज
लंस्वच्छंसराजासरसस्तटे ९० अज्ञात्वास्वगुरोश्चैवतिभृगोराश्रममामयौ ॥ तत्रतातविहीनांतामरजस्कांभृगोःसुताम् ९१ दृष्ट्वाचन्द्राननांराजासोऽभूत्कामविमोहितः ॥
ततस्तांप्रार्थयामासरत्यर्थंसाऽब्रवीन्नृपम् ९२ स्ववशान्नृपनैवाहंतताधीनाऽस्मिसांप्रतम् ॥ बहिर्भृगुस्तवगुरुर्गतस्त्वां विद्ध्यहंनृपम् ९३ यदिमामिच्छसित्वंहितर्हि
त्वंस्वगुरुंभृगुम् ॥ प्रार्थयित्वाभजसुखंमांपत्नींस्वांविधायच ९४ इत्युक्तोऽपितयाराजादंडस्तांकामपीडितः ॥ भुक्त्वासुखंबलादेवजगामनगरींनिजाम् ९५ ततोऽर
जस्कासाबालादृष्ट्वातातंसमागतम् ॥ शोचंतीसकलंवृत्तंश्रावयामासविह्वला ९६ तद्वृत्तंसमुनिःश्रुत्वांऽजलौकृत्वाजलंकुधा ॥ अब्रवीत्स्वसुतांबालांसांत्वयन्रक्तलोच
नः ९७ दंडेनसहदंडस्यराज्यंवैशतयोजनम् ॥ भवत्वद्यक्षणाद्दग्धंमद्वाक्याच्चसमंततः ९८ हीनोदकंतथाचास्तुतथानष्टचराचरम् ॥ इतितच्छापमाकर्ण्यतातंसंप्रार्थ्य
बालिका ९९ प्रार्थयामासशापस्यसाऽवधिंविनयान्विता ॥ ततोभृगुःसुतामाहयदायास्यतिकुंभजः १०० मुनिःकाश्यास्त्वमुंदेशंतदाऽयंसजलोभवेत् ॥ देशस्तथाऽत्र
वासंहिकरिष्यंतिमुनीश्वराः १०१ अरण्यंदंडहेतोर्हिजातंतस्मात्सदानराः ॥ अमुंदेशंवदिष्यंतिदंडकारण्यमेवहि २ यदाभविष्यत्यग्रेऽत्ररामागमनमुत्तमम् ॥ भावि
ष्यंतितदाऽग्रेऽत्रनानाक्षेत्राणिदंडके ३ रामप्रसादात्क्षेत्राणिभविष्यंतितितोजनाः ॥ रामक्षेत्रमितिसदावदिष्यंतिहिदण्डकम् ४ मुनिरामप्रसादाच्चदेशोऽयंपूर्ववत्पुनः ॥
भविष्यत्युत्तमःपुण्यःसौख्यदश्चमनोरमः ५ देशेभ्यःसकलेभ्यश्चसुपुण्यंदंडकंभवेत् ॥ दंडकेनसमोदेशोनभूतोनभविष्यति ६ इतितांबालिकामुक्त्वाभृगुस्तस्थुंहिमाल
यम् ॥ ययौतांमुनयेदत्त्वाविधिनासुनिसंवृतः ७ भृगोःशापाच्चदंडेनदग्धंतद्राज्यमुत्तमम् ॥ शतयोजनमानंतदभवद्धिसमंततः ८ मद्रामागमनाभ्यांचततःस्वस्थंबभू
वतत् ॥ पूर्ववद्दंडकारण्यंचराचरसमाकुलम् ९ इतित्वयायथापृष्टंतथात्वमयोदिते ॥ कंकणस्यदण्डकस्यविचित्रेत्वांकथानके १० ॥ श्रीरामदासउवाच ॥ इत्यग
स्तिमुखाच्छ्रुत्वालवस्तुष्टोऽभवत्तदा ॥ नत्वामुनिंचश्रीरामसेवायांतत्परोऽभवत् ११ अथरामश्चोत्सवेनतस्मैचित्रांगदायताम् ॥ हेमांददौविवाहेनमहामंगलपूर्वकम् १२

१. दिव्यमन्नमित्यर्थः

त्काग्रुतरूपोऽभूत्स्वीयमूर्त्याद्विजाग्रतः ॥ तांशिलांस्थापयामासुर्भूम्यामेवाऽतियत्नतः ९८ ततस्तुष्टाद्विजाः सर्वेजग्मुःस्वंस्वंगृहंप्रति ॥ तदाऽजम्यनकेनाऽपितेषांरा
ज्यंहृतंकदा ९९ एवंशिष्यमयाप्रोक्ताकथाभावितवाग्रतः ॥ पूर्वमेवज्ञानदृष्टयाकौतुकार्थंसविस्तरा १०० अद्यापितत्रतैर्विप्रैस्तद्राज्यंभुज्यतेसदा ॥ येयेजातास्तृपाभू
म्यांरामाज्ञांमानयंतिते १ एवंनानाकौतुकानिराघवेणकृतानिहि ॥ पुत्राभ्यांसीतयाऽयोध्यापुर्यांबंधुजनैःसह १०२ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरा
मायणे वाल्मीकीये राज्यकांडे उत्तरार्धे रामनाथपुरराज्यप्रदानं नामाष्टादशःसर्गः ॥ १८ ॥ ॥ श्रीरामदासउवाच ॥ शृणुशिष्यवदाम्यद्यरामराज्ञाशुभावहा ॥ दि
नचर्यांराज्यकालेकृतालोकान्हिशिक्षितुम् १ प्रभातेगायकैर्गीतैर्बोधितोरघुनन्दनः ॥ नववाद्यनिनादांश्चसुखंशुश्रावसीतया २ ततोध्यात्वाशिवंदेवींगुरुंदशरथंसुरान् ॥
पुण्यतीर्थानिमानुंश्चदेवतायतनानिच ३ नानाक्षेत्राण्यरण्यानिपर्वतान्सागरांस्तथा ॥ नदांश्चैवनदीःपुण्यास्ततःसीतांददर्शसः ४ प्रणमंतींसमुत्थाप्यधृत्वासीताकरंप्र
भुः ॥ मंचकादवतीर्याऽथदासीभिःपरिवेष्टितः ५ बहिःकक्षांशनैर्गत्वासंपाद्यावश्यकंप्रभुः ॥ ययौपुनःसदासीभिःक्रीडाशालांरघूत्तमः ६ कृत्वाशौचंविधिंरामोदंतशु
द्धिंचकारसः ॥ ततःस्नानंकदागेहेशरय्वांवाऽकरोत्प्रभुः ७ आरुह्यशिबिकायांसभूसुरैर्यानसंस्थितैः ॥ वेष्टितःशरयूंगत्वायानंमुक्त्वातटेप्रभुः ८ पद्भ्यामेव
शनैर्गत्वाशरयूंप्रणिपत्यच ॥ शरय्वाःपुरतःस्थाप्यनारिकेलंसदक्षिणम् ९ सतांबूलंपुनर्नत्वास्तुत्वासम्यक्प्रसाद्यच ॥ स्नात्वायथाविधानेनब्रह्मघोषपुरःसरम् १०
प्रातःसंध्यांततःकृत्वाब्रह्मयज्ञंविधायच ॥ दत्त्वादानान्यनेकानिययौगेहंरथेनहि ११ रुक्मबंधैर्वेष्टितेनरौप्यरत्नमयेनच ॥ सुस्नातसूततुरगयुक्तेनध्वनिते
नच १२ हुत्वाहोमंविधानेनशिवंसंपूज्यसादरम् ॥ कौसल्यांचसुमित्रांचकैकेयींचसमर्चयत् १३ कामधेनुंकल्पवृक्षंपारिजातंतुपुष्पकम् ॥ चिंतामणिंकौ
स्तुभंचपूज्यसीतायुतोहरिः १४ मुनिवृक्षंवटंबिल्वमश्वत्थंतुलसींतथा ॥ शमींपलाशंदूर्वांचराजवृक्षंमपूजयत् १५ भानुंसंपूज्यतंनत्वासंपूज्यद्वारदेवताम् ॥ गोवृषा
श्ववारणांश्चरथंशस्त्राणिभूसुरान् १६ कोष्ठागाराणिकोशांश्चपाकशालांमपूजयत् ॥ सिंहासनंतथाछत्रंचामरेव्यजनेतथा १७ संपूज्यमुकुटंरामःपूजयामासमंचकम् ॥
दीपिकांदर्पणंपूज्यपुस्तकादीनप्रपूजयत् १८ पुनःसंपूज्यस्वगुरुंपूर्वंविप्रेषुपूजितम् ॥ उच्चासनस्थितंनत्वाकथांशुश्रावतन्मुखात् १९ पुत्राभ्यांबन्धुभिःपत्न्या
पण्डितैःपरिवेष्टितः ॥ ततःसंप्रार्थितोरामःसीतयासमुहुर्मुहुः २० विप्रादिभिश्चोपहारंचकारस्वस्थमानसः ॥ कामधेनूद्भवैश्चान्नैःकल्पवृक्षसमुद्भवैः २१ मणिद्वय
निर्मितैश्चवन्हौसीताकृतैरपि ॥ ततोभुक्त्वाहितांबूलंविप्रद्दासांसिराघवः २२ बध्वाकटिंदिव्यवस्त्रैःशस्त्राण्यपिदधारसः ॥ एतस्मिन्नंतरेपूर्वंसमाहूतोययौभिषक्
२३ गणकोऽपिराघवेणप्रत्युद्गम्यातिमानितौ ॥ निषेदतूराघवाग्रेपूजयामासतौप्रभुः २४ ततोभिषक्सुखंस्थित्वाराघवाग्रेतदाज्ञया ॥ ददर्शदक्षिणकरेनाडीं
रामस्यसादरम् २५ रत्नमुद्राकंकणाद्यैःशोभितस्योज्ज्वलस्यच ॥ करस्यांगुष्ठमूलेयाधमनीजीवसाक्षिणी २६ तच्चेष्टयासुखंदुखंज्ञायतेचभिषग्वरैः ॥ अ
तस्तांवैद्यवर्यःससूक्ष्मबुध्याव्यलोकयत् २७ रामकर्णेविहस्याहरात्रावाचरितःश्रमः ॥ तद्वैद्यवचनंश्रुत्वाऽकरोद्रामःस्मितानम् २८ ततोवैद्यायतां

बूलंददौरामःसदक्षिणम् ॥ ततःसगणकःप्राहविस्तीर्यंसुस्फुटाक्षरम् २९ पंचांगपत्रंचित्रंचराघवाग्रेस्थितःसुधीः ॥ विघ्नेश्वरोब्रह्महरीश्वराःसुराभानुःशशीभू
मिसुतोबुधःशुभः ॥ गुरुश्चशुक्रःशनिराहुकेतवःसर्वेग्रहामंगलदाभवंतुते ३० लक्ष्मीःस्यादचलातिथिश्रवणतोवारात्तथाऽयुश्चिरंनक्षत्रंकृतपापसंचयहरंयोगोवियो
गापहः ॥ सर्वाभीष्टकरंतथैवकरणंपंचांगमेतत्स्फुटंश्रोतव्यंप्रतिवासरंद्विजमुखाच्छ्रेयस्करंसग्रहम् ३१ स्वस्तिश्रीराघवाद्यास्तितिथिश्चदशमीसिता ॥ भानुवारःसुन
क्षत्रंपुष्याख्यंत्वद्यवर्तते ३२ ऐंद्रयोगोमहानद्यबवाख्यंकरणंशुभम् ॥ कर्कस्थितोऽद्यचन्द्रोऽस्तिद्वितीयस्तेरघूत्तम ३३ मासोऽयंचैत्रमासोऽस्तिवसंताख्यऋतुस्त्व
यम् ॥ सुखंकुरुष्वराज्यंत्वंचिरंतिष्ठावनीतले ३४ सर्वेपिसुखिनःसन्तुसन्तुसर्वेनिरामयाः ॥ सर्वेभद्राणिपश्यन्तुमाकश्चित्दुःखमाप्नुयात् ३५ एवंज्योतिर्विदागीतं
पंचांगंरघुनन्दनः ॥ श्रुत्वातंदक्षिणांदत्त्वासतांबूलांननामसः ३६ ततोरामंययौवेगान्मालाकारोमनोहरान् ॥ रामाग्रेवंशपात्रस्थान्पुष्पहाराव्न्यवेदयत् ३७ रामस्ता
न्सकलेभ्यश्चदत्त्वाबिभ्रत्स्वयंततः ॥ पुत्राभ्यामवतंसांश्चदत्त्वाबिभ्रत्स्वयंकरे ३८ एतस्मिन्नन्तरेरामंनापितःप्रययौजवात् ॥ मुकुरंदर्शयामासरुक्मबन्धनरंजितम् ३९
तत्रादर्शेददर्शाऽथस्वमुखंरघुनन्दनः ॥ चन्द्रोपमंसुस्मितंचकंजलोचनशोभितम् ४० ऋजुनासंमांसलंचश्मश्रुयुक्तंसुवर्तुलम् ॥ वरकुण्डलमुक्तानांवरदीप्त्यातिभासु
रम् ४१ प्रोच्चगण्डस्थलंसुभ्रुत्रिवलीभालमण्डितम् ॥ रुक्मरत्नसमुद्भूतमुकुटेनातिशोभितम् ४२ एवंमुखंनिरीक्ष्याऽथतुतोषनितरांप्रभुः ॥ ततोययौभूपपाणिर्धूपं
स्थाप्यप्रभोःपुरः ४३ नत्वारामंदूतमध्येतस्थिवान्राघवाग्रतः ॥ ततोरामःशिबिकायांस्थित्वागेहाद्बहिर्ययौ ४४ ददर्शमागधादींश्चबहिःकक्षास्थितान्प्रभुः ॥ ततस्ते
मागधारामंनत्वादीर्घस्वरेणवै ४५ सूर्यवंशभवान्सर्वान्नृपान्संवर्णयंस्तदा ॥ ततस्तेबन्दिनःसर्वेतुष्टुवूरघुनन्दनम् ४६ नानातत्कृतचारित्रैरावणादिवधादिकैः ॥ तत
197 स्तेचारणागानंप्रचक्रुर्मुदिताननाः ४७ नटावेश्याननृतुश्चनानावाद्यपुरस्सरम् ॥ अन्येचकुर्विनोदांश्चयैःसन्तुष्येत्सराघवः ४८ ततोनिनेदुर्वाद्यानिनववाद्यस्वनाअ
पि ॥ ततस्तृतीयकक्षायांददर्शनृपनन्दनः ४९ वारणेंद्रांश्चतुरगान्शिबिकाश्चरथांस्तथा ॥ नानालंकारयुक्तांश्चवरवस्त्रैःसमन्वितान् ५० ततश्चरथकक्षायांनृपान्पौरा
न्सुहृज्जनान् ॥ समागतान्दर्शनार्थंददर्शरघुनन्दनः ५१ ततःपञ्चमकक्षायांपुष्पकंपुष्पवाटिकाः ॥ दूतान्ददर्शश्रीरामःशस्त्रहस्तान्सहस्रशः ५२ ततःसषष्ठकक्षायां
मश्वारूढान्सहस्रशः ॥ वीरान्ददर्शश्रीरामःप्रबद्धकरसम्पुटान् ५३ ततःसप्तमकक्षायांययौरामःसभांप्रति ॥ शिबिकायाश्चवतीर्यशनैःसिंहासनंययौ ५४ सव्यंकृत्वानम
स्कृत्यसोपानैःसशनैःप्रभुः ॥ सिंहासनमारुरोहवरछत्रसुशोभितम् ५५ दधारछत्रंसौमित्रिश्चामरंभरतस्तदा ॥ शत्रुघ्नोव्यजनंरम्यंपादुकेवायुनन्दनः ५६ सुग्रीवोजल
पात्रंचवरादर्शंविभीषणः ॥ दधारहस्तेतांबूलपात्रंसवालिनन्दनः ५७ वस्त्रकोशंजांबवांश्चदधारवेगवत्तरः ॥ तस्थौसिंहासनेरामःसपृष्ठचंकोपबर्हणः ५८ तस्थौपृष्ठेल
क्ष्मणश्चभरतःसव्यपार्श्वके ॥ शत्रुघ्नोऽसौवामपार्श्वेपुरतोवायुनन्दनः ५९ वायव्यकोणेरामस्यसुग्रीवःसंस्थितोऽभवत् ॥ ईशान्यांराक्षसेंद्रःसआग्नेय्यामंगदःस्थितः ६०

१ निरापदाःइतिपाठः । २ गायकाइतिपाठः ।

नैर्ऋत्यांजांबवांश्चापिपौराःसर्वेसमन्ततः ॥ राघवाऽग्रेनृपाःसर्वेस्थिताःसम्बद्धपाणयः ६१ पार्श्वयोस्तेराघवस्यप्रोच्चस्थानेमुनीश्वराः ॥ पुरतोननृतुःसर्वावारवेश्याः
सहस्रशः ६२ ततोवीरास्ततोदूताःसभायांसंस्थिताःक्रमात् ॥ निषेदुर्मुनयःसर्वेरामपुत्रौनिषेदतुः ६३ राममित्रानिषेदुस्तेतथारामाज्ञयानृपाः ॥ येयेमुख्यानिषेदु
स्तेतथापौराःसुहृज्जनाः ६४ एभ्योऽन्येतेस्थिताएवननिषेदुःप्रभोःपुरः ॥ तेषांमध्येरामचन्द्रःशुशुभेऽनुपमस्तदा ६५ सेवकाद्याननिषेदुःसुमन्त्रएवतस्थिवान् ॥
एवंस्थित्वासभायांसकृत्वाकार्याण्यनेकशः ६६ नानाकार्येषुबन्धूंश्चपुत्रावाज्ञाप्यराघवः ॥ दृष्ट्वानानाकौतुकानिपूर्ववद्गृहमाययौ ६७ तदानिनेदुर्वाद्यानिगोमुखादीन्यने
कशः ॥ श्रुत्वावाद्यनिनादांश्चजानकीसम्भ्रमातुरः ६८ प्रत्युद्गम्यतोयहस्तातत्प्रतीक्षांचकारसा ॥ रामोऽपिपूर्ववल्लोकान्सप्तकक्षास्वनुक्रमात् ६९ प्रविशन्सकलाना
ज्ञांददौतांस्तान्स्वतोषवत् ॥ ततोऽग्रेऽनुघुभिर्गेहंपुत्राभ्यांसंविवेशसः ७० ददर्शजानकींरामःपीतकौशेयवाससाम् ॥ साऽपिरामंययौसीतालज्जयाऽवनतानना ७१ व
क्रनेत्रकटाक्षैश्चमोहयन्तीरघूत्तमम् ॥ नानालंकारसंयुक्तावरनूपुरनिःस्वना ७२ ततोरामोजलंस्पृष्ट्वाघ्रात्वासीताकरंमुदा ॥ लक्ष्मणादीन्संविसर्ज्यसीतागेहंविवेशसः ७३
बहिर्दृष्टंश्रुतंवाऽपियद्यत्कौतुकमुत्तमम् ॥ तत्सर्वंजानकींप्राहतोषयामासतांमुहुः ७४ ततःसर्वान्समाहूयभोजनार्थंसमुद्यतः ॥ स्नानंकृत्वासमाध्यान्हंकर्मचक्रेरघूत्तमः ७५ तर्प
यित्वापितॄंश्चापिनैवेद्यान्नंशंभवेददौ ॥ वैश्वदेवंततःकृत्वाबलिदानंविधायसः ७६ दत्वाभूतबलिंचापिपितॄंश्चापिस्वधेतिच ॥ बहिस्त्यक्त्वाकाकबलिंत्वतिथीन्पूज्यसादरम् ७७
यतींश्चब्राह्मणान्पूज्यहेमपात्रेषुराघवः ॥ परिवेष्टितेषुजानक्यात्रिपदासुष्टुतेषुच ७८ तैःसर्वैर्भोजनंचक्रेस्नुषाभिर्वीजितोमुदा ॥ करशुद्धिंततःकृत्वाभुक्त्वाताम्बूलमुत्तमम् ७९
ददौतेभ्योदक्षिणाश्चविप्रेभ्योरघुनायकः ॥ गत्वाशतपदंरामोनिद्राशालांययौशनैः ८० एतस्मिन्नंतरेसीताभुक्त्वारामांतिकंययौ ॥ वीजयामासश्रीरामंमंचकस्थंपुरःस्थि
ता ८१ चकारनिद्रांश्रीरामोमंचकेसीतयासह ॥ तौदास्योवीजयामासुर्दिव्यालंकारभूषिताः ८२ ततःप्रबुद्धासासीताप्रबुद्धोऽभूद्रमापतिः ॥ सारिभिःसीतयाक्रीडांतथा
बुद्धिबलेनहि ८३ नानाकृत्रिमसैन्यैश्चाऽकरोदन्यैरपिप्रभुः ॥ ततोद्राक्षामंडपाऽधोजलयंत्रादिकौतुकम् ८४ दृष्ट्वापक्षिकुलान्सर्वान्पंजरस्थान्ददर्शसः ॥ गत्वासोपान
मार्गेणप्रासादाऽग्रंपुरींनिजाम् ८५ वनारामान्वितांदृष्ट्वाहट्टवीथ्याऽतिरंजिताम् ॥ शनैर्ययौप्रभुर्गोष्ठंनानाधेनूर्ददर्शसः ८६ तांसम्प्रेष्यगृहंसीतांस्वदासीपरिवेष्टिताम् ॥
द्वारांतिकंययौरामस्तत्रतेलक्ष्मणादयः ८७ चक्रुःप्रणामंश्रीरामंतैःसहैवशनैःशनैः ॥ वाजिशालांययौरामोदृष्ट्वातत्रसवाजिनः ८८ गजशालामुष्ट्रशालांदृष्ट्वारामः
शनैःशनैः ॥ ददर्शशस्त्रशालांचव्याघ्रशालांप्रभुर्ययौ ८९ दृष्ट्वाऽथशिबिकाशालांमाहिषेर्यीविलोक्यच ॥ माहिषीर्वृषशालांचरथशालांददर्शसः ९० आरुह्य
स्यंदनेरामःशनैःसर्वैर्बहिर्ययौ ॥ सप्तकक्षाःसमुल्लंघ्यतत्रस्थैःपूर्ववज्जनैः ९१ सर्वैर्युक्तश्चाष्टमांतांश्रेष्ठांकक्षांददर्शसः ॥ तत्रयन्त्राणिश्रेष्ठानिशतघ्नीशकटस्थिताः ९२
तृणकाष्ठादिसद्मानिदूतस्थानान्यपश्यत ॥ ततोनवमकक्षायांददर्शरघुनन्दनः ९३ शस्त्रपाणीन्वारणस्थानतुरगस्थाननेकशः ॥ रक्षयन्तिहियेसर्वेस्वीयंगेहंत्वहर्नि

१ पक्षिगणानितिपाठः ।

शम् ९४ एवंसनवकक्षाश्वसमुल्लंघ्यरघूत्तमः ॥ बहिःससद्मनोद्दश्यपरिखास्सजलानव ९५ शनैःपश्यन्नयोध्यांतांराजमार्गेमुदान्वितः ॥ शीघ्रंययौपुरद्वारंददर्शद्वारर
क्षकान् ९६ नवकक्षास्त्वयोध्यायाःसमुल्लंघ्यशनैःप्रभुः ॥ परिखाश्चनवापश्यत्तोयवन्ह्यादिपूरिताः ९७ ततोनानावनारामकौतुकानिरघूत्तमः ॥ पश्यन्सबंधुपुत्रैश्च
सरय्वास्तीरमाययौ ९८ तत्रस्थित्वासुनौकायांक्रीडांकृत्वाकियत्क्षणम् ॥ नद्यास्तटेसभायांसतस्थौसैन्ययुतःप्रभुः ९९ तत्रापिवारवेश्यानांपश्यन्नृत्यानिराघवः ॥
कियत्कालमतिक्रम्यययौशीघ्रंततःपुरीम् १०० ततःशनैःसभांगत्वापूर्वोक्तैश्चोपकारकैः ॥ लक्ष्मणाद्यैःसेवितश्चतस्थौसिंहासनोपरि १ ततःकृत्वाह्यनेकानिनानाकार्या
णिराघवः ॥ आज्ञाप्यबन्धुपुत्रांश्चपूर्ववत्स्वगृहंययौ २ सायंकालेततःसन्ध्यांकृत्वाहुत्वायथाविधि ॥ गन्धाद्यैरुपचारैश्चशिवंसम्पूज्यभक्तितः ३ कृत्वोपहारंविप्रैश्चपुत्रा
न्भ्रातॄन्बन्धुभिःसह ॥ शिबिकायांपुनःस्थित्वादेवतायतनेषुच ४ साकेतस्थेषुश्रीरामोगत्वानत्वाशिवादिकान् ॥ नानाविधान्देवसंघान्फलैःपुष्पैःप्रपूजयत् ५ देवालयेषुसर्वे
षुसुराणांतेषुराघवः ॥ शृण्वन्नानाकीर्तनानिवारस्त्रीनर्तनान्यपि ६ पश्यन्नानाकौतुकानिपरांमुदमवापसः ॥ वाहनारूढदेवानामपश्यत्कौतुकानिच ७ ततोययौवाह
नेनहट्टमार्गेणराघवः ॥ रत्नदीपप्रकाशैश्चविवेशनिजमंदिरम् ८ ततोनानाकथाभिश्चवार्ताभिःपुत्रबंधुभिः ॥ सार्धयामांनिशांनीत्वारतिगेहेविवेशसः ९ एतस्मिन्नंत
रेतत्रसीताऽग्रेरतिमन्दिरे ॥ पुष्पशय्यादिसम्पाद्यतत्प्रतीक्षांचकारसा १० तावदायांतमालोक्यसहसोत्थायजानकी ॥ धृत्वाहस्तेराघवेंद्रंरतिशालांनिनायसा ११
सर्वाविसर्ज्यदासीश्चमुक्ताजालान्यनेकशः ॥ समंततोविमुच्याऽथतस्थौरामःसमंचके १२ ततस्तांमैथिलींधृत्वामंचकेसंन्यवेशयत् ॥ रामःक्रीडांविधायाऽथरंजयामास
जानकीम् १३ ततस्तुष्टंरमानाथंजानकीलज्जिताऽब्रवीत् ॥ रामराजीवपत्राक्षकिंचित्पृच्छामितेवद १४ कुशजन्मानन्तरंहिकथंगर्भोमयानवै ॥ धार्यतेकारणंत्वस्याकि
192 मस्तितद्वदस्वमाम् १५ तत्सीतावचनंश्रुत्वासस्मितंप्राहराघवः ॥ हेसीतेकंजनयनेसम्यक्पृष्टंत्वयामम १६ तत्सर्वंतेवदाम्यद्यतच्छृणुष्वसुमध्यमे ॥ किमर्थंचबहून्पु
त्रांस्त्वत्रत्वंवांछसिप्रिये १७ सद्वंशेबहवःपुत्रानयोग्यास्तत्रवैभुवि ॥ कदैकस्यदुराचारात्कुलस्यलांछनंभवेत् १८ अतएवममेच्छानबहुपुत्रेषुमैथिलि ॥ मदिच्छया
त्वयागर्भोधार्यतेनकदाचन १९ पुत्रस्त्वेकःप्रतीक्ष्योहियःकुलंभूषयेद्गुणैः ॥ किंजाताबहवःपुत्रादुष्टास्तेकमयोयथा १२० द्वावेवास्तांकदाचिच्चयथानेत्रेभुजौयथा ॥
यथातोशशिसूर्यौचयथाऽहंलक्ष्मणस्तथा २१ तवापिजातौद्वौपुत्रौमाऽग्रेऽस्तुसंततिस्त्वतः ॥ ततःप्राहपुनःसीतानजातादुहितामम २२ एकाऽपिकारणंतत्रकिम
स्तितद्वदस्वमाम् ॥ तत्सीतावचनंश्रुत्वाजानकींप्राहराघवः २३ त्वत्कन्याचमयाकस्मैदेयाऽत्रजगतीतले ॥ मत्समानोनृपःकोऽस्तिसप्तद्वीपपतिर्महान् २४ यस्यपत्न्यै
४१ त्वयाकार्यंशिरसानमनंतदा ॥ कोवरोऽस्तिजगत्यांहिनृपस्यतनयोमहान् २५ प्रक्षालनीयौचरणौविवाहेयस्यवैमया ॥ अतएवनमेच्छाऽभूत्कन्यायामपिजानकि २६
कुशादीनांनुयाःकन्यास्तास्तेकिंनैवबालिकाः ॥ किंयौवनमदात्सीतेमोहंप्राप्तासिभूतले २७ आत्मानंविस्मृताऽस्ययत्त्रैलोक्यजननीमिति ॥ यदत्रविश्वेस्त्रीरूपंदृश्य
तेतत्तवांशजम् २८ पौरुषंदृश्यतेयच्चतत्सर्वंचममांशजम् ॥ अत्रस्त्रीपुरुषायेचतेपुत्रदुहितास्तव २९ एष्टव्याबहवःपुत्रायद्येकोऽपिगयांव्रजेत् ॥ इतियद्वचनंसीतेसामा

न्यंविद्धिनोवरम् १३० एकःसतनयोधन्यःकुलंयस्तारयेन्निजम् ॥ कृमितुल्याश्चतेपुत्राःशतशोदुष्टमार्गगाः ३१ इतियद्वचनंसीतेवरिष्ठंतत्स्मृतंबुधैः ॥ अन्यत्तेकारणं
वच्मियस्मात्तेबहवःसुताः ३२ मयानैवार्पितास्त्वत्रतच्छृणुष्वशुचिस्मिते ॥ विनोदात्तेवदाम्यद्यमोऽन्यथाकुरुमद्वचः ३३ बहुपुत्रैश्चनारीणांतारुण्यंस्थास्यतेनहि ॥
॥ १३ ॥ मत्वेतितवतारुण्यच्छेदिनीबहुसन्ततिः ३४ नमयाऽत्रार्पितासीतेगुह्यंविद्धीतिमेप्रिये ॥ यदीच्छास्तिबहूनांतेतनयानांविदेहजे ३५ तर्हितेद्वापरेकृष्णरूपेणद्वारकापु
रि ॥ दशपुत्रानप्रदास्यामितदातेषांसुखंभज ३६ कन्यामपितदैकांतेऽहंदास्यामिनसंशयः ॥ तदातेबहुपुत्रैश्चतारुण्यंस्थास्यतेनहि ३७ अतःस्त्रीणांसहस्राणिषोडशै
कशतंपुनः ॥ तथामुख्यास्त्वष्टनार्यस्त्वयासहकरोम्यहम् ३८ तदाबहूनांपुत्राणांस्नुषाणांत्वंसुखंभज ॥ अहंचाऽपिबहुस्त्रीणांतदासौख्यंभजामि वै ३९ इतिरामवचः
श्रुत्वातदासीतास्मितानना ॥ राघवंहर्षिताप्राहवाक्चातुर्यंकुतःप्रभो १४० एतल्लब्धंत्वयारामयेनरंजयसीहमाम् ॥ एवंपरस्परंचोक्त्वासमालिंग्यपरस्परम् ४१ अ
र्धरात्र्यांसुखंनिद्रांचक्रतुर्जानकीप्रभू ॥ एवंप्रोक्तामयाशिष्यादिनचर्यारमापतेः १४२ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे राज्यकांडे उत्तरार्धे
वाल्मीकीये दिनचर्यावर्णनंनामैकोनविंशःसर्गः ॥ १९ ॥ श्रीरामदासउवाच ॥ अथैकदावसिष्ठंहिप्रभातेचाऽब्रवील्लवः ॥ किंचित्तेप्रष्टुमिच्छामितत्त्वंवदमुनीश्वर १
सर्वंयद्यपिजानामिवाल्मीकेश्चप्रसादतः ॥ तथापिलोकान्सकलान्ज्ञातुंपृच्छामितेऽद्यहि २ यदास्माभिर्निशायांहिसर्वैर्निद्राविधीयते ॥ तदासंश्रूयतेकर्णेमञ्जवत्कस्यवै
ध्वनिः ३ असुंमत्संशयंछिंधिपरंकौतूहलंगुरो ॥ लवस्येतिवचःश्रुत्वावसिष्ठःस्तमथाब्रवीत् ४ बह्वचश्चब्रह्महत्याश्चरावणेनकृताःपुरा ॥ येनदेहेनसोऽद्यापिलंकायांज्वल
तेलव ५ रावणोरामहस्तेनवधान्मुक्तिंगतःक्षणात् ॥ रामचिंतनपुण्येनवैरबुध्याकृतेनच ६ आत्मनःसकलंपापंतेनदग्धंपुरैवहि ॥ देहेननकृतंतस्यदेवानांनमनंपुरा ७
संमार्जनादिकंकर्मदेवागारेऽपिनोकृतम् ॥ नकृतातीर्थयात्राहितस्यदेहेनभक्तितः ८ नदेहेनतुनिष्कामंतपश्चर्यावतंकृतम् ॥ नदेहःश्रमितस्तस्यशीतोष्णसहनादिभिः ९
एतादृशस्तस्यदेहोबहुब्राह्मणहिंसकः ॥ लंकायांज्वलतेऽद्यापिनिशायांश्रूयतेऽत्रसः १० ज्वालानांमञ्जवच्छब्दोयःपृष्टोमांत्वयालव ॥ जनशब्दादिनेनैवश्रूयतेऽत्रजनैः
सदा ११ चितायांतस्यचाद्यापिवायुपुत्रेणप्रत्यहम् ॥ काष्ठभारशतंनीत्वालंकायांक्षिप्यतेमुहुः १२ यदातत्पापशांतिःस्यात्तदाभस्मीभविष्यति ॥ अन्यत्तेकारणंव
च्मितच्छृणुष्वशिशोलव १३ देहांतेरावणेनाऽपिरामाययाचितोवरः ॥ वरेणयेनलोकानांस्मरणंमेभविष्यति १४ सत्वयामेवरोदेयस्तच्छ्रुत्वाराघवोऽब्रवीत् ॥ त्वद्देह
ज्वलिनीज्वालाशब्दान्सर्वेजनाभुवि १५ श्रोष्यंतिसप्तद्वीपेषुतेनतेस्मरणंसदा ॥ भविष्यतिहिसर्वेषांब्रह्मांडांतर्निवासिनाम् १६ एवंश्रुत्वादशास्यःसवरंरामेल्लयंययौ ॥
एवंयत्त्वयापृष्टंतत्सर्वंकथितंमया १७ गुरोरितिवचःश्रुत्वातंनत्वासलवोऽपिच ॥ स्वगेहंगतसंदेहःप्रययौशिबिकास्थितः १८ एकदाबन्धुभिर्गेहेपुत्राभ्यांसीतयासह ॥ ॥ १३ ॥
मुनिभिर्गुरुणारामःसंस्थितःप्राहहर्षितः १९ ॥ श्रीरामचन्द्रउवाच ॥ शृण्वंतुमुनयःसर्वेसर्वेशृण्वंतुबन्धवः ॥ पुत्रौसीतामन्त्रिणश्चसर्वाःशृण्वंतुमातरः २० यथामया

१ मान्यंकथयमद्वचइतिपाठः ।

ऽवतारेऽस्मिन्सुखंभुक्तंहिसीतया ॥ नतथान्येषुसर्वेषुह्यवतारेषुवैकदा २१ अवतारास्तुबहवश्शतशोऽत्रमयाधृताः ॥ नानाकार्याणिवैकर्तुंतेषांसंख्यानविद्यते २२
सप्तावतारास्तेष्वेवश्रेष्ठास्त्वत्रमयाधृताः ॥ ईदृशंनसुखंतेषुकदाभुक्तंमयाभुवि २३ शंखासुरोमहादैत्यःपूर्वंजातोमहोदधौ ॥ येनवेदाहृताःसर्वेसत्यलोकात्कृतेयुगे २४
तदर्थंमत्स्यरूपेणह्यवतारोमयाधृतः ॥ तंहत्वाक्षणमात्रेणविष्णुरूपंमयाधृतम् २५ किंसुखंझषजात्यांहितिर्यग्योन्यपिगर्हिता ॥ अतस्तस्मिन्नवतारेनस्थितंहिचिरंम
या २६ ततःसमुद्रमथनेमज्जंतंमन्दराचलम् ॥ दृष्ट्वाधृत्वाकूर्मरूपंस्वपृष्ठेपर्वतोधृतः २७ तच्चापिगर्हितंरूपंमत्वानैवचिरंधृतम् ॥ किंवारिचरजात्यांहिसुखंतत्रभवेज्जले
२८ ततोदृष्ट्वासागरेहिमज्जंतींपृथिवींमया ॥ क्रोडरूपंमहत्कृत्वादंष्ट्रायामवनिर्धृता २९ ममपृथ्वीतिसंस्पर्धीहिरण्याक्षोमयाहतः ॥ किंसुखंपशुयोन्यांहिगर्हितायांभवेत्त
ले ३० अतस्तस्मिंश्चावतारेनलब्धंहिसुखंमया ॥ प्रल्हादवचनात्स्तंभान्नारसिंहस्वरूपधृक् ३१ अवतीर्णस्त्वहंभूम्यांहिरण्यकशिपुःक्षणात् ॥ मयातदाहतःक्रोधात्त
द्रूपमतिभासुरम् ३२ यद्भयान्निकटंकोपिप्रल्हादाच्चविनापरः ॥ नमानवःस्थितोभूम्यांतत्रवार्तासुखस्यका ३३ तदाऽतिक्रोधरूपेणसिंहयोन्यांतुकिंसुखम् ॥ मयानु
भूतंविपुलंसुखेच्छातृप्तिमापन ३४ ततोबलेर्मोहनार्थंखर्वरूपंतुवामनम् ॥ धृत्वाछलात्त्रिपाद्याञ्चांभूमेःपातालगःकृतः ३५ तत्रकिंसुनिदेहेनवनेसौख्यंभवेन्मम ॥
नयत्रास्तियथायोग्यंदेहमप्यतिसुन्दरम् ३६ तत्रकासुखवार्ताऽस्तिभूम्यांमेब्रह्मचारिणः ॥ अतस्तदेवसहसानाकलोकंगतंमया ३७ पुनर्विप्रोद्भवेनैवजामदग्न्यस्व
रूपिणा ॥ एकविंशतिवारंहिनिःक्षत्रीपृथिवीकृता ३८ सहस्रार्जुननामासमहावीरोहतस्त्वदा ॥ तच्चापिक्रोधसंयुक्तंमुनिरूपंमयाधृतम् ३९ सुखवार्तामुनीनांहि
कातत्रवनचारिणाम् ॥ ज्ञात्वेत्थंजन्मनातेनतपश्चर्यामयाकृता ४० किंसुखंतपसस्तत्रवनेमेजातमुत्तमम् ॥ एवंषड्वैधृताःपूर्वमवतारामयाभुवि ४१ नजातासु
खवार्ताऽपितत्रकापिमुनीश्वराः ॥ द्वापरेऽथकृष्णरूपंगोकुलेऽत्रकरोम्यहम् ४२ नेदृशंतत्रभोक्ष्यामिसुखंशृणुतविस्तरात् ॥ कारागृहस्थितिःपित्रोर्जन्मा
दावेवमेभवेत् ४३ मातापितृविहीनश्चतदास्थास्यामिशैशवे ॥ पारकीयेनंदगेहेदृष्ट्वाद्विगच्छामिगोकुले ४४ गोपवेषस्यकिंसौख्यंगोपृष्ठेभ्रमतोमम ॥ स्त्रीगोना
गाश्वपक्ष्यादिबहूंस्तत्रनिहन्म्यहम् ४५ देवपत्नीवरात्कुर्यांपरस्त्रीगमनादिकम् ॥ नानाचौर्यादिदुष्कर्मकृत्वाहंगोकुलेततः ४६ मथुरायांहनिष्यामिसगजंकंसमा
तुलम् ॥ तत्रदास्यारतिंकुर्यांनिष्ठुर्यंगोपिकादिषु ४७ यदुक्तागोपिकाःसर्वारामोबन्धुर्भजिष्यति ॥ अन्यच्चकालयवनभयान्मेहिपराभवः ४८ नपराभवतोदुः
खंकिंचिदस्तिजगत्त्रये ॥ ततोऽहंस्वस्थलंत्यक्त्वातटाकेसागरस्यच ४९ स्थास्यामिस्वल्पकालंहिचिरकालंनमेस्थितिः ॥ नस्थलंमध्यदेशेहिनराज्यंमेभविष्य
ति ५० विनाराज्येनकिंसौख्यंपराज्ञावशवर्तिनः ॥ छत्रादिराज्यभोगाश्चतस्मिन्जन्मनिमेनहि ५१ बहुस्त्रीणामेकदेहस्तदाऽयंमेभविष्यति ॥ तदाकासांसुखं
देयंदुःखंकासांतदामया ५२ एवंसदाव्यग्रचित्तस्तासांरंजनकर्मणि ॥ तत्रकासुखवार्ताऽस्तिनिशायांभ्रमतोमम ५३ घटिकायांचषट्त्रिंशत्पंचशतगृहाणिहि ॥

१ यद्भयात्कीटकश्चापिइतिपाठः । २ क्रोधसंरक्तमितिपाठः ।

पर्यटन्नप्यष्टविंशत्स्त्रीगेहानितदामम ९४ शेषाणिगंतुंनैवाऽस्तिकालोभानुरुदेष्यति ॥ त्रिंशद्घटिमयीरात्रिस्त्वेवंमेसागमिष्यति ९५ तदामेभ्रमतोरात्रौकुतोनि
द्राकुतःसुखम् ॥ यदाभवेन्निशावृद्धिःकिंचिन्निद्रांतदाप्नुयाम् ९६ यस्येच्छाऽस्त्यत्रदुःखंहिभोक्तुंतेननरेणहि ॥ कर्तव्याबह्वचःपत्न्यश्चद्रष्टव्यंतत्फलंततः ९७
एवंभवेन्नमेसौख्यंद्वापरेकृष्णजन्मनि ॥ भविष्यत्यवतारस्यसमाप्तिर्विप्रशापतः ९८ ततोदैत्यान्यज्ञकर्मसक्तान्दृष्ट्वापुनस्त्वहम् ॥ कलावग्रेबुद्धरूपंधरिष्याम्यतिमोहनम्
९९ निजवाक्यैर्मतिस्तेषांदैत्यानांयज्ञकर्मतः ॥ परिवर्त्यकियत्कालंस्थास्यामिजगतीतले ६० तदाहंमौनमाश्रित्यमलिनःकेशलुंचकः ॥ युगादिजीवधारीचसर्वेषामुप
देशकृत् ६१ अहिंसनव्रतंसर्वान्दर्शयिष्याम्यहंजनान् ॥ तज्जन्मन्यतिदुःखंमेकेशयूकामलादिना ६२ ततोऽग्रेऽहंधरिष्यामिकल्किरूपंमहत्कलेः ॥ अंतेदृष्ट्वाजनानां
चसर्वत्रवर्णसंकरम् ६३ भूत्वाऽत्रविप्रदेहेनखड्गधारीहयस्थितः ॥ संहारंक्षणमात्रेणदुष्टानांहिकरोम्यहम् ६४ सोऽवतारोनातिचिरंममस्थास्यतिभूतले ॥ नतत्रसुखले
शोऽपिमेभविष्यतिभूसुराः ६५ प्रवर्तयिष्यतिपुनस्ततोऽग्रेतत्कृतंयुगम् ॥ पूर्ववच्चपुनस्तत्रह्यवतारान्करोम्यहम् ६६ एवंनवाऽवतारेषुनभुक्तंहिसुखंमया ॥ अतस्त्व
स्मिन्नवतारेसुखंभुक्तंयथेच्छया ६७ नाऽनेनसदृशःकश्चिदवतारोऽवनीतले ॥ पूर्वंभूतोममाग्रेऽपिनभविष्यतिवैकदा ६८ सप्तद्वीपपतिर्यत्रयत्रसीताशुभाप्रिया ॥ यत्र
मेबाल्केपुत्रौमहावीरौधनुर्धरौ ६९ यत्रत्वेतेबंधवश्चत्रैलोक्यजयिनःशुभाः ॥ कामधेन्वादिरत्नानिसप्तयत्रममांतिके ७० साक्षाद्यवेदरूपोवसिष्ठस्त्वस्तिमेगुरुः ॥
आर्यावर्तेपुण्यदेशेऽयोध्यायांवसतिर्मम ७१ राज्यभोगादिभोगानांभोक्ताऽहंत्वत्रनोपरः ॥ यत्रसत्यव्रतंमेऽस्तितंयत्रैकदयितावतम् ७२ यत्रैकेनैवबाणेनमयाबाल्यादिका
हताः ॥ यत्रैकैवहिसीतायाममशय्यानचाऽपरा ७३ यत्राऽप्रतिहताज्ञामेत्रैलोक्येहिमुनीश्वराः ॥ यत्रयानंपुष्पकंतुयत्रदूतोंऽजनीसुतः ७४ सुग्रीवराक्षसेंद्रौचयत्रमित्रौ
ममांतिके ॥ कोदंडसदृशंचापंयत्रमेऽरिनिषूदनम् ७५ सूर्यवंशेयत्रजन्मतातोदशरथोवरः ॥ कौसल्यायत्रजननीयत्राहंस्ववशःसदा ७६ सुमेधासदृशीयत्रमेश्वश्रूःस्नेहव
र्धिनी ॥ विदेहःश्वशुरोयत्रविद्यादोयत्रगाधिजः ७७ लक्ष्मणोयत्रमेमन्त्रीसरयूर्यत्रमेनदी ॥ पार्श्वगाह्यंगदाद्याश्चचतुर्दंतोगजोमहान् ७८ द्विजेच्छापूरणंयत्रव्रतंमेऽकु
ण्ठितंसदा ॥ इदंवैकुंठसदृशंगृहंयत्राऽतिभासुरम् ७९ चिंतामणिरलंकारोहृदयेयत्रवर्तते ॥ एकादशसहस्राणिवर्षाण्यायुश्चिरंमम ८० अनभ्रंमेशिरश्चैदंकेशामप्यवनीभृ
ताम् ॥ एवंमयासुखंभुक्तमिहजन्मनिभूसुराः ८१ नाल्पावाप्युर्वरिताऽस्तिसुखेच्छाममभूतले ॥ अतएवाऽवतारोऽयंपूर्णरूपान्मयादृतः ८२ भूतभाव्यवतारायेतें
ऽशादेवमयादृताः ॥ यद्व्रतंतुवनेपूर्वंसीतयाबन्धुनामया ८३ तच्चलोकोपदेशार्थंभूभारहरणायच ॥ जनोपदेशःकीदृक्सकृतस्तंप्रवदाम्यहम् ८४ पितुर्वचोमाननीयंय
द्यप्यतिश्रमप्रदम् ॥ पुत्रैरित्युपदेशार्थंमयावाक्यंपितुःकृतम् ८५ नतदाकिंप्रष्टपाकर्तुंपितुर्वाक्यंबलंमयि ॥ तथाऽपिलोकशिक्षार्थंतद्वाक्यंपालितंमया ८५ नहंतव्या
मयाक्रोधाद्धष्टाकिंकैकयीतदा ॥ तथासामंथराचाऽपिमेराज्येविघ्नकारिणी ८७ किंतदाकुंठिताशक्तिःकैकेयीमंथरावधे ॥ स्त्रीहत्यानैवकर्तव्याचेतिसर्वान्सुशिक्षितम् ॥

१ कामधेनुः १ चिंतामणिः २ कौस्तुभमणिः ३ कल्पवृक्षः ४ पारिजातवृक्षः ५ पुष्पकविमानम् ६ ऐरावतकुलोद्भूतश्चतुर्दन्तःश्वेतगजश्च ७ इतिसप्तरत्नानि । २ तद्वाक्यंपालितंमयेतिपाठः ।

८८ सापत्नमातृवाक्यंतुपालनीयंस्वमातृवत् ॥ स्वसुखार्थंवधोऽन्यस्यनकर्तव्योजनैरिति ८९ उपदेष्टुंमयानैवकैकेयीमंथरेहते ॥ नबंधुर्हिंसासाकार्यापरराज्यंनकांक्ष
येत् ९० अहमुपदिशन्नित्थंजनान्बंधुर्हतोनमे ॥ मृतेपितर्यपिहृतंनतद्राज्यंबलान्मया ९१ राज्यासक्तानराभूम्यांभोगासक्ताभवंतुन ॥ उपदेष्टुंजनानित्थमहंपूर्वंवनंग
तः ९२ मातृपितृसुहृत्पुत्रस्नेहासक्तिंनकारयेत् ॥ इत्थंमयोपदिशतात्यक्तःस्नेहस्तदाद्विजाः ९३ सुखंदुःखंसमंज्ञेयंसुखेहर्षोनमानयेत् ॥ शोकःकार्योविपत्तौनचेतिलोकान्
प्रदर्शितुम् ९४ राज्यसौख्यंमयात्यक्ताभुक्ताःक्लेशास्तदावने ॥ कामादीनांरिपूणांचदुष्टानांहिवधोभुवि ९५ जनैःकार्यःसदाचेतिह्युपदेष्टुंमयावने ॥ बहवोनिहतास्तत्र
राक्षसामुनिहिंसकाः ९६ स्त्रीसंगःसर्वदात्याज्यस्त्वेकाकीचतपश्चरेत् ॥ नासक्तंनिजचित्तंहिस्त्रीपुकार्यंनरैःकदा ९७ इत्थंमयोपदिशतासीतायाश्चतदावने ॥ वियोगोद
र्शितोलोकान्मत्तोभिन्नानजानकी ९८ कदापिजायतेविप्राःसत्यंचेदंब्रवीम्यहम् ॥ आर्तस्यरक्षणंकार्यंकार्योदुष्टस्यनिग्रहः ९९ मयोपदिशताचेत्थंजनान्सुग्रीवराक्षसौ ॥
रक्षितौनिहतौवालिरावणाावितरेहताः १०० कीर्तिःकार्याजनेष्वत्रमयोपदिशतात्विति ॥ पाषाणास्तारितानीरेकिमाकाशगतिर्नमे १ यद्यपिशुद्धंस्वंचित्तेविरुद्धंचजने
ष्युयत् ॥ त्यक्तव्यंतत्प्रियंचापिमयोपदिशतात्विति २ जनानपापांज्ञात्वाऽपिलंकायांदिव्यदानतः ॥ लोकापवादभीत्यासापुरात्यक्ताऽत्रजानकी ३ स्वयमेवाऽत्रयत्त्य
क्तंशुद्धंज्ञात्वाहितत्पुनः ॥ अंगीकार्यंजनैर्बुध्यामयोपदिशतात्विति ४ जनानंगीकृतासीतापुरात्यक्तामयाशुभा ॥ एकपत्नीव्रतादीनिराज्यकर्माण्यनेकशः ५ अश्वमेधा
दियज्ञाश्चसदाचारोजपस्तपः ॥ स्नानसंध्यादिकंयद्यन्मयाऽत्राक्रियतेसदा ६ तत्सर्वंजनशिक्षार्थंमुक्तसंगस्यकिंमम ॥ कर्मातीतस्यभोविप्राःसदानन्दस्वरूपिणः ७ अ
हंसदाऽऽनंदमयःसुखात्मासुखदोनृणाम् ॥ अवतारपरत्वेनसुखंदुःखंमयाऽकथि ८ यदत्रभवतामग्रेकौतुकार्थंनसंशयः ॥ उपासकानांतोषार्थमवतारःस्वयंमया ९ वि
शेषगुणवान्युक्तःसंतिसर्वेसमामम ॥ सम्यग्बुध्याविचाराच्चवरिष्ठःसकलेष्वयम् ११० द्वावतारौजलचरौतथावनचरौचद्वौ ॥ द्वौतौचवल्कलधरौएकोवैश्यश्चगोपकः
११ एकस्तुमलिनश्चापिपरश्चक्षणिकस्तथा ॥ एवंभूताभविष्याश्चाऽवतारास्तोषदानमे १२ अयंसर्वविशिष्टोऽत्रह्युपासकजनप्रियः ॥ अवतारस्त्वहंवेद्मिसेवनान्मंगल
प्रदः १३ चरित्राण्यतिरम्याणिपातकघ्नानिवैमया ॥ कृतान्यस्मिन्नवतारेश्रवणान्मुक्तिदानिहि १४ सदाजनाभजंत्वत्रह्यवतारममुंमम ॥ भक्तायेस्याऽवतारस्यते
मेऽतीवप्रियाःसदा १५ एवंसर्वमिदंविप्राआनन्देनमयोदितम् ॥ दोषमारोपयंत्यस्मिन्नवतारेपियेजनाः १६ तेमद्द्वेष्यानरकेषुपतंतिसहपूर्वजैः ॥ श्रीरामदासउवाच ॥
एवमुक्त्वारामचंद्रःसम्पूज्याहिमुनीश्वरान् १७ विसृज्यसकलान्सीतांरंजयामासराघवः ॥ एवंशिष्यमयाप्रोक्तमवतारप्रवर्णनम् ११८ ॥ ॥ इति श्रीशतकोटिरामच
रितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये राज्यकांडे उत्तरार्धे अवतारवर्णनंनाम विंशःसर्गः ॥ २० ॥ ॥ ५ ॥ श्रीरामदासउवाच ॥ ॥ एकदाजानकींद्रष्टुं
सप्तद्वीपांतरस्त्रियः ॥ मुनीनांपार्थिवानांचसुहृदांव्यवसायिनाम् १ सामान्यक्षत्रियाणांचवैश्यानांचसहस्रशः ॥ चैत्रस्नानमिषेणैवययुर्वाहनसंस्थिताः २

१ सुहृत्स्नेहासक्तंचेतोनकारयेदितिपाठः । २ विशिष्टइतिपाठः ।

दृष्ट्वासमागतास्ताश्चजानकीगजगामिनी ॥ प्रत्युद्गम्यानयामासस्त्रीशालामतिसादरात् ३ पूजयामासताःसर्वानानालंकारभूषणैः ॥ ताःसर्वाःपूजयामासुःसीतांसिंहास
नस्थिताम् ४ दिव्यालंकारवस्त्राद्यैर्नानादेशोद्भवैर्वरैः ॥ परिवार्यततःसीतांतस्थुःसर्वाःस्त्रियश्चताः ५ श्रुत्वासीतामुखाद्रामचरित्राणिसहस्रशः ॥ तास्तुष्टाःश्रोतुमु
त्सुकास्तत्पाणिग्रहणंशुभम् ६ स्मितास्यास्ताःस्त्रियःसर्वास्तदाप्रोचुर्विदेहजाम् ॥ त्वत्पाणिग्रहणोत्साहंश्रोतुंवांछामहेवयम् ७ तत्सर्वंविस्तरेणाद्यवक्तुमर्हसिजानकि ॥
इतितासांवचःश्रुत्वालज्जयाजानकीतदा ८ स्वांसखींचोदयामासतुलसींरुक्मभूषिताम् ॥ तुलस्युवाच ॥ शृणुध्वंसकलानार्यःपाणिग्रहणमुत्तमम् ९ जानक्याःकथया
म्यद्यमहामंगलदायकम् ॥ वस्तोषार्थंहिसंक्षेपाच्छ्रवणात्पुण्यवर्द्धनम् १० साकेताद्रघुनंदनेनसमुनिर्भ्रात्रायुतेनाश्रमंस्वंगत्वाविनिहत्यराक्षसबलंतेनैवयज्ञंनिजम् ॥
संपाद्याशुरथस्थितश्चमिथिलामार्गेहरेरंघ्रिणःसंस्पर्शाद्गतकल्मषांसमकरोद्भार्यांमुनेर्गाधिजः ११ गत्वागाधिजसंयुतश्चमिथिलांभ्रात्रासभासंस्थितश्चापाधःपतितंनिरी
क्ष्यचरिपुंस्वीयंमुनेराज्ञया ॥ तन्नत्वागिरिजेश्वरस्यचधनुःकृत्वात्रिखंडंक्षणात्सीताहस्तविसर्जितांनिजगलेमालांदधौराघवः १२ बन्धूनांचनिजंविधायमिथिलापुर्यां
विवाहात्तशुभान्पितृभ्यांसहभार्ययारघुपतीराज्ञातिसंपूजितः ॥ त्यक्त्वातांमिथिलांययौनिजपुरींमार्गेकुघातिष्ठतोदुर्दर्पंजमदग्निजस्यधनुषासोपाहरल्लीलया १३ एवं
नार्यश्चसीतायाविवाहःकथितोमया ॥ युष्माभिःकौतुकात्पृष्टोयःसर्वमंगलप्रदः १४ ॥ श्रीरामदासउवाच ॥ एवंस्त्रियश्चताःश्रुत्वापरमांमुदमाप्नुयुः ॥ ततस्ताःपूजया
मासुःपुनःसीतांमुदान्विताः १५ सीतयापूजिताःसर्वास्तांनत्वाऽऽमंत्र्यजानकीम् ॥ चैत्रस्नानंसमाप्याऽथजग्मुःस्वंस्वंस्थलंप्रति १६ अथैकदागुरोरास्याद्रामाग्रेसं
स्थितोलवः ॥ शृण्वन्पुराणंपप्रच्छश्रोतुंसर्वान्जनान्गुरुम् १७ गुरोतेप्रष्टुमिच्छामितत्वंवदमुनीश्वर ॥ पुस्तकेषुचसर्वत्रपत्रेपत्रेपृथक्पृथक् १८ एकत्रलिख्यतेश्रीति
रामेत्येकत्रलिख्यते ॥ किमर्थंमानवैस्तच्चतत्सर्वंकथयस्वमाम् १९ इतितद्वचनंश्रुत्वागुरुस्तंवाक्यमब्रवीत् ॥ ॥ वसिष्ठउवाच ॥ सम्यक्पृष्टंत्वयावत्सलोकसंदेहहृत्प
रम् २० श्रीरामचरितंपूर्वंव्यासेनमुनिनापृथक् ॥ अष्टादशपुराणानितथोपपुराणानिच २१ कृतान्यन्यैश्चमुनिभिःषट्शास्त्रादीन्यनेकशः ॥ श्रीरामचरितादेवश्लो
कमात्रमपीहयत् २२ सर्वमस्तीतितद्बोद्धुमादावेकत्रश्रीतिच ॥ विलिख्यैकत्ररामेतितन्मध्येपरिलिख्यते २३ ॥ अनयासंज्ञयासर्वंज्ञास्यंत्यग्रेजनाभुवि ॥ श्रीराममं
ध्येलिखितंश्रीरामचरितादिदम् २४ कृतमस्तिपृथक्भिन्नंपुराण्व्यासादिभिस्त्विति ॥ एतस्मात्कारणाद्बालसूचनार्थंविलिख्यते २५ श्रीरामेतिपृथक्पत्रेपत्रेपर्वत्रजगती
तले ॥ अन्यत्तेकारणंवच्मितच्छृणुष्वशिशोलव २६ अशुद्धंलिखितंयच्चाज्ञानतोभ्रांतितोपिहि ॥ पत्रंतच्चातिशुद्धंहिभवत्वितिमनीषया २७ श्रीरामेतिचसर्वत्रपत्रेपत्रे
विलिख्यते ॥ यदंकितंश्रीरामेतिनाम्नापत्रंतुलेखकैः २८ ज्ञेयंतच्चापिशुद्धंहिगतदोषस्तुलेखकः ॥ भवत्यत्रजगत्यांहिसत्यंलववदाम्यहम् २९ इतिश्रुत्वागुरोर्वाक्यं ॥ १९ ॥
वसिष्ठंप्रणिपत्यच ॥ लवःसगतसन्देहस्तूष्णीमासीन्मुदान्वितः ३० एकदारघुनाथस्तुमंचकोपरिसंस्थितः ॥ मुखात्तांबूलस्यरसंप्रथमंदोषकारकम् ३१ त्यक्तुकामोनद

१ एतस्मिन्नंतरेबालेतिपाठः ।

दर्शपात्रंनिष्ठीवनस्यसः ॥ तस्यांतिकस्थितादासीनाम्नावैसुगुणेतिच ३२ तादृशंराममालोक्यपात्रंदूरंविलोक्यच ॥ कृत्वापात्रंस्वहस्ताभ्यामंजलावेवतद्रसम् ३३ रा
मेणमुक्तमास्याच्चजग्राहवेगवत्तरा ॥ ततःसाप्राशनंरामोच्छिष्टंदासीचकारतत् ३४ महाप्रसादंतंमत्वादैवाल्लब्धंविचिंत्यच ॥ तदाऽतितुष्टःश्रीरामस्तस्यैतत्कर्मणाऽब्रवीत्
३५ वरयस्ववरंदासियत्तेमनसिवर्तते ॥ तद्रामवचनंश्रुत्वादासीप्राहरघूत्तमम् ३६ एकपत्नीव्रतंतेऽस्तिसांप्रतंत्विहजन्मनि ॥ जन्मांतरेत्वयासंगंवांछामिरघुनायक ३७
तत्तस्यावचनंश्रुत्वाराघवोवाक्यमब्रवीत् ॥ यदाग्रेकृष्णरूपेणगोकुलेऽवतराम्यहम् ३८ तदाराधेतिनाम्नीत्वंगोपपत्नीभविष्यसि ॥ तदामयाचिरंक्रीडांत्वंभोक्ष्यसिनसंशयः
३९ तदाममाऽतिप्रीतात्वंगोपिकासुभविष्यसि ॥ इतिदासीरामचन्द्राद्वरंलब्ध्वातुतोषसा ४० अन्यच्छृणुविष्णुदासरामचन्द्रकथानकम् ॥ यत्प्रोच्यतेमयातेऽग्रेमह
त्कौतुककारकम् ४१ एकदाराघवःश्रीमान्सभायामासनोपरि ॥ संस्थितोबन्धुभिःपुत्रमन्त्रिभिःपुरवासिभिः ४२ एतस्मिन्नंतरेकश्चिद्ब्रह्मचारीसमाययौ ॥ युवादण्डध
रःश्रेष्ठःकमंडलुकरःशुचिः ४३ ऐणकृष्णाजिनधरःकाषायवसनोव्रती ॥ तंदृष्ट्वाराघवःश्रीमानवतीर्यवरासनात् ४४ प्रत्युद्गम्याऽथतंनत्वाऽऽसनेसमुपवेश्यच ॥ पूजया
मासविधिनाधेनुमग्रेनिवेद्यच ४५ ततःसम्पूजितंविप्रंराघवोवाक्यमब्रवीत् ॥ अद्यधन्योस्म्यहंविप्रयतस्तेदर्शनंमम ४६ जातमाज्ञाप्यतांकिंचिद्यदर्थंभवताऽऽगतम् ॥
तद्राघववचःश्रुत्वाब्रह्मचारीवचोऽब्रवीत् ४७ वाल्मीकिनाप्रेषितोऽहंयस्मात्तच्छृणुराघव ॥ यष्टुकामोमहायज्ञंसवाल्मीकिर्महामुनिः ४८ त्वामाकारयितुंमांत्वन्निकटंवेग
वत्तरम् ॥ प्रेषितवानतस्त्वंहिसीतयाबन्धुभिःसह ४९ प्रस्थानंकुरुराजेंद्रमुहूर्तस्त्वद्यवर्तते ॥ एवंवदतिश्रीरामंभूसुरेसदसिस्थिते ५० समाययौब्रह्मचारीद्वितीयोगाधि
जाश्रमात् ॥ तंदृष्ट्वापूर्ववद्रामःप्रत्युद्गम्यद्विजोत्तमम् ५१ आसनेऽन्येचोपवेश्यपूजयामाससादरम् ॥ ततस्तत्पुरतःस्थित्वातंपप्रच्छरघूत्तमः ५२ यदर्थंश्रमितोऽसि
त्वंतन्मामाज्ञाप्यतांमुने ॥ तद्रामवचनंश्रुत्वाब्रह्मचारीवचोऽब्रवीत् ५३ रामत्वांगाधिजेनाऽहंप्रेषितोऽस्मिजवेनहि ॥ यष्टुकामोमहायज्ञंविश्वामित्रोऽस्तिराघव ५४
त्वंतेनाकारितश्चासिप्रस्थानंकुरुसत्वरम् ॥ ब्रह्मचारिणोस्तद्वाक्यमुभयोःस्ररघूत्तमः ५५ श्रुत्वाविहस्यप्रोवाचद्विजाभ्यांवैतथेतिच ॥ तदाश्चर्यंजनाःप्रापुःप्रोचुस्तेतुप
रस्परम् ५६ कथमद्योभयोःसाकंरामोगच्छतितन्मखौ ॥ केचिदूचूराघवायाकिमशक्यंतवाऽत्रहि ५७ यथास्त्रीणांवनेपूर्वंतथाऽस्माकंहिदर्शनम् ॥ यदागतोसिलंकायाः
पुराभरतदर्शने ५८ मित्ररूपेपरामेणसर्वेषामार्पितंपृथक् ॥ तद्वदत्रापिद्विविधाभूत्वागन्ताचतन्मखौ ५९ किमाश्चर्यमिदंचाऽद्यकिमशक्यंपरात्मनि ॥ एवंवदत्सुपौरेषुल
क्ष्मणंप्राहराघवः ६० अद्यैवाहंगमिष्यामिभोजनानन्तरंबहिः ॥ वासोगेहानिनेयानिबहिःसेनांप्रचोदय ६१ आज्ञापनीयंवाद्यानांध्वनिंकर्तुंहिसेवकान् ॥ तद्रामवचनं
५५ श्रुत्वातथेत्युक्त्वासलक्ष्मणः ६२ कारयामासवाद्यानांध्वनिंदूतैश्चसंभ्रमात् ॥ सैन्यंप्रचोदयामासबहिर्वासोगृहाण्यपि ६३ नेतुमाज्ञापयामासुर्दूतास्तेनिन्युरादरात् ॥
ततोरामोऽपिविप्राभ्यांगृहंगत्वाविदेहजाम् ६४ सर्ववृत्तंनिवेद्याऽथकृत्वाविप्रैर्हिभोजनम् ॥ सीतांचकरिणीपृष्ठेबन्धुनाऽऽरोहयत्प्रभुः ६५ पुष्पकेपौरनारीश्चकरिणीषू
र्मिलादिकाः ॥ समारोहयच्छ्रीरामःस्वयंतस्यौगजोपरि ६६ लक्ष्मणाद्यागजेष्वेवतेसमारुरुहुस्तदा ॥ निनेदुश्चाऽथवाद्यानिननृतुर्वारयोषितः ६७ तुष्टुवुर्मागधाद्या

श्वप्रजगुःसुस्वरंनटाः ॥ एवंसमाययौरामस्तदावासौगृहाणिसः ६८ तांरात्रिंसमतिक्रम्यप्रभातेरघुनन्दनः ॥ स्नात्वानित्यविधिंकृत्वागजारूढोऽभवत्पुनः ६९ क्रो
शद्वयंततोगत्वाऽग्रेद्वौमार्गौनिरीक्ष्यच ॥ ससैन्येद्वेनिजेदेहेचकाररघुनन्दनः ७० तदाद्वयोर्मार्गयोश्चससैन्यौसीतयायुतौ ॥ पुत्राभ्यांबन्धुभिर्युक्तौद्वौरामौसकलाज
नाः ७१ ददृशुःपुष्पकेद्वेचजातौद्वौब्रह्मचारिणौ ॥ वाल्मीकीयोब्रह्मचारीत्वेकःसस्वंगुरुंययौ ७२ विश्वामित्राऽध्वरंचान्यःश्रीरामेणमुदायुतः ॥ गाधिजेयोब्रह्मचारीत्वेकः
सस्वंगुरुंययौ ७३ वाल्मीकेरध्वरंचान्यःश्रीरामेणययौमुदा ॥ एवंतेसारमेयांताःसर्वदेहद्वयानिहि ७४ निजानिददृशुस्तत्रविस्मयाविष्टमानसाः ॥ एवंतौरघुवीरौ
हितयोर्मुन्योस्तदाश्रमे ७५ ससैन्यौसीतयायुक्तौबन्धुपुत्रसमन्वितौ ॥ जग्मतुर्वैमुनीभ्यांहिप्रत्युद्गम्यातिपूजितौ ७६ तयोर्यागौविधायाऽथपरिपूर्णौपुनःपुरीम् ॥ स
माजग्मतुःश्रीरामौससैन्यौपूर्ववन्मुदा ७७ यत्रद्वेनिजदेहेवैकृतेतत्ररघूत्तमौ ॥ समागत्यपुनश्चैकंनिजदेहंचकारसः ७८ वाल्मीकीयोब्रह्मचारीविश्वामित्रद्विजस्तथा ॥
भिन्नदेहेत्वेकरूपंभजतस्तौतदाद्विजौ ७९ सैन्यंचपुष्पकंचापिबभूवैकंतुपूर्ववत् ॥ ततःश्रीरामचन्द्रस्सविवेशनगरींनिजाम् ८० तदानिनेदुर्वाद्यानिननृतुर्वारयो
षितः ॥ पौरनार्योविमानस्थाववर्षुःपुष्पवृष्टिभिः ८१ तुष्टुवुर्मागधाद्याश्चप्रजगुस्तेनटादयः ॥ एवंनानाकौतुकानिपश्यन्मार्गेशनैःशनैः ८२ ययौनिजगृहंरामःसभा
यांसंविवेशह ॥ सीताऽपिनिजगेहंसासंविवेशोर्मिलादिभिः ८३ एवंभूसुररामेणकौतुकानिमहांतिच ॥ अमानुषाणियान्यत्रकृतानिचसहस्रशः ८४ वाल्मीकिनावि
स्तरेणवर्णितानिहिकृत्स्नशः ॥ सारंसारंमयातेभ्यःसंगृह्याऽथकथानकम् ८५ तवाग्रेकथ्यतेशिष्यसंक्षेपेणाज्ञयाप्रभोः ॥ त्वंधन्योऽसियदर्थंचरामेणाज्ञापितस्त्व
हम् ८६ वक्तुंस्वचरितंपुण्यंरम्यमानंददायकम् ॥ वाल्मीकिश्चापिधन्यःसभाविसंवादमावयोः ८७ यःपूर्वंविरचितवान्स्वीयकालेऽत्रभूतवत् ॥ तथारामस्यचरितं
पूर्वरामावतारतः ८८ एवंसंवर्णितंकृत्स्नंगोप्यंयच्चकृतंरहः ॥ नवाल्मीकोपमःकश्चित्कविर्भूतोभविष्यति ८९ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदा
नन्दरामायणे वाल्मीकीये राज्यकांडे उत्तरार्धे दासीवरदानं तथारामादीनांदेहद्वयकरणंनामैकविंशःसर्गः ॥ २१ ॥ ॥ श्रीरामदासउवाच ॥ इदानींरामचन्द्र
स्यलीलाकौतुकमुत्तमम् ॥ अन्यद्रम्यंवर्ण्यतेहिमयातच्छृणुसादरम् १ एकदाराघवस्तस्थौसभायामासनोपरि ॥ बन्धुभिर्मंत्रिवर्गैश्चपौरैर्जानपदैःसह २ पुत्राभ्यांच
सुहृद्भिश्चमित्रैर्मंत्रिजनैःसह ॥ एतस्मिन्नंतरेभूरिकीर्तिनासुहृदाचरैः ३ द्राक्षाफलादिभिःपूर्णास्तथापुष्पैःसुपूरिताः ॥ करंडिकाःप्रेषिताश्चराघवार्थंसहस्रशः ४ ताः
सर्वाराघवोदृष्ट्वाप्रेषयामासजानकीम् ॥ युक्तासखीभिःसीतासाक्रीडाशालास्थितामुदा ५ दृष्ट्वाकरण्डिकाःसर्वास्त्वेकामुद्घाटयत्तदा ॥ तस्यांतामरसान्येवदृष्ट्वारम्याणि
जानकी ६ करेणादायपद्मंचराघवायार्पणंविना ॥ सातत्सुगंधंजघ्रावारंवारंमुदान्विता ७ करण्डिकांपूर्ववच्चसमाच्छाद्यविदेहजा ॥ स्थापयामासगेहेपुसर्वास्ताश्च
करण्डिकाः ८ तद्वृत्तंरामचंद्रोऽपिसर्वज्ञात्वासभास्थितः ॥ चित्तेविचारयामासवारंवारंमुदान्वितः ९ सीतयेदंकृतंकर्मयोग्यंभुविस्मृतंनहि ॥ यन्मयापतिनाऽभुक्तंप
द्मंमास्वादितंतया १० अग्रेप्येवंस्त्रियःसर्वाःकरिष्यंत्यत्रवैभुवि ॥ सीतादर्शितमार्गेणतस्माच्छिक्षांकरोम्यहम् ११ एवंमनसिनिश्चित्यततःसरघुनन्दनः ॥ तूष्णीमेव

गृहंगत्वापूर्ववज्जानकींमुदा १२ रंजयामासविविधैर्नानाक्रीडादिकौतुकैः ॥ सीतापिपेटिकाःसर्वाराघवाग्रेसहस्रशः १३ आनीयदर्शयामासफलपुष्पादिपूरिताः ॥
रामोऽपिदृष्ट्वाताःसर्वाःसमुद्घाट्यपृथक्पृथक् १४ प्रेषयामासबंधूनांगेहेषुदशपंचच ॥ फलादीनांपेटिकाश्चनानाचित्रविचित्रिताः १५ मातॄणांसकलानांचगृहेष्वपितथा
पुनः ॥ पुत्रयोःसुहृदांचाऽपिमंत्रिणांचगुरोस्तथा १६ पौराणांचाऽपिगेहेषुसेवकानांगृहेष्वपि ॥ दासीभ्यश्चशुभादत्त्वापेटिकाःसप्तपंचच १७ सीतायैशतशोदत्वा
मुदाताभ्योरघूत्तमः ॥ फलानिदशपंचाष्टस्वयंभुक्त्वाततःपरम् १८ पद्मादीनिसुपुष्पाणिविभज्यपूर्ववत्पुनः ॥ सीतायैशतशोदत्त्वास्वयमंगीचकारसः १९ अज्ञात
इवतद्वृत्तंगोपयामासचेतसि ॥ अथैकदाजनकजाहरिदिन्यामुपोषणम् २० कृत्वापरेदिनेस्नात्वागत्वावृंदावनांतिकम् ॥ तुलसींपूजयित्वातांसाचकारप्रदक्षिणाः २१
एतस्मिन्नंतरेसीतानिराहाराश्रमान्विता ॥ त्यक्त्वाप्रदक्षिणामार्गंकिंचिदेवचचालसा २२ चलितायाश्चसीतायाःपल्लवेनहिवाससः ॥ पत्रमेकंतुलस्याश्चपपातभुविवैतदा
२३ तत्पत्रंजानकीदृष्ट्वाद्वादश्यांत्रुटितंशुभम् ॥ ज्ञात्वाऽधर्मंकृतश्चेतिविभयभीताऽभवत्तदा २४ ततःसातत्करेणैवगृहीत्वापत्रमुत्तमम् ॥ नत्वावृंदावनेसीताचिक्षेपपरमा
दरात् २५ ततःप्रदक्षिणाःकृत्वाप्रार्थयित्वामुहुर्मुहुः ॥ तुलसींसाययौगेहंरञ्जयामासराघवम् २६ एतस्मिन्नंतरेतत्रनारदश्चसमाययौ ॥ वीणावाद्यस्वनेनैवकुर्वन्कीर्तन
मुत्तमम् २७ पाल्यमांदीनमितिराघवेतिपुनःपुनः ॥ पाल्यमांदीनमितिमनुंपंचदशाक्षरम् २८ कीर्तयामासमुनिर्वारंवारंमुदान्वितः ॥ कलकंठस्वरेणैवमहापातकनाश
नम् २९ पाल्यमांदीनंराघवपाल्यमांदीनम् ॥ इतिमंत्रः ॥ तंमुनिंराघवोदृष्ट्वाप्रत्युद्गम्याऽथभक्तितः ॥ नत्वाऽऽसनेसंनिवेश्यपूजयामाससादरम् ३० ततःप्रक्षाल्यतत्
पादौसीतयारघुनन्दनः ॥ धेनुंनिवेद्यगंधाद्यैःपूज्यतंमुनिपुंगवम् ३१ हेमपात्रंभोजनार्थंमुनेरग्रेनिवेश्यच ॥ परिवेषणार्थंश्रीरामस्त्वरयामासजानकीम् ३२ सीतापिका
मधेनूत्थवरान्नानिविशिष्यसा ॥ हेमपात्रेययौवेगात्पात्रेषुपरिवेषणम् ३३ कर्तुंकंकणमंजीरकिंकिणीनूपुरस्वना ॥ तांदृष्ट्वानारदःसीतांप्राहश्रीराघवंतदा ३४ रामराजीवपत्रा
क्षनाहंसीतासमर्पितैः ॥ दिव्यान्नैरशनंचाद्यकरिष्यामिरघूत्तम ३५ तन्मुनेर्वचनंश्रुत्वासीताऽऽसीच्चकितातदा ॥ अज्ञातइवरामोपिसंभ्रमेणमुनिंतदा ३६ पप्रच्छकारणं
व्यग्रःसर्वकर्तास्वयंप्रभुः ॥ किंकारणंवदमुनेकिमर्थमनयाऽर्पितैः ३७ अन्नैस्त्वंभोजनंनाऽद्यकरोषिमुनिपुंगव ॥ इतिरामवचःश्रुत्वानारदोवाक्यमब्रवीत् ३८ ॥ नारदउ
वाच ॥ सीतयाद्यकृतंपापंकिंत्वंवेत्सिनवैप्रभो ॥ यदित्वंनैवजानासितर्हिशृणुवदामिते ३९ द्वादश्यांतुलसीपत्रमनयाऽद्यनिकृंतितम् ॥ यद्यसत्यंतर्हिपश्यगत्वावृंदावनेप्रभो
४० संक्रमेषुचतुर्दश्योर्द्वादश्योःपातपर्वसु ॥ तुलसींनहरेत्संध्योर्भृगुवंगारापराण्हके ४१ नष्टेसूर्येंदुग्रहणेप्रसूतिमरणेतथा ॥ तुलसींयेनिकृंतंतितेच्छिंदंतिहरेःशिरः ४२ द्वाद
श्यांतुलसीपत्रंधात्रीपत्रंतुकार्तिके ॥ योलुनातिनरोगच्छेन्निरयानतिगर्हितान् ४३ अकालेतुलसीपत्रंछेदयंत्यःस्त्रियःपुमान् ॥ पत्रमेकंब्रह्महत्यासममाहुर्मनीषिणः ४४
एवंतुवचनंसर्वैर्मुनिभिर्हिप्रकीर्त्यते ॥ पुरुषाणामयंदोषस्तत्रस्त्रीणांकथात्रका ४५ एतन्निमित्तंश्रीरामसीतयापरिवेषितैः ॥ वरान्नैर्भोजनंनाद्यकरिष्यामिव्रतस्थितः ४६

१ मित्राणामितिपाठः ।

तन्मुनेर्वचनंश्रुत्वाराघवःप्राहतंपुनः ॥ मुनेत्वमेवसीतामिपूतांकर्तुमिहार्हसि ४७ वरदानंव्रतंवाऽपियेनपूताभवेत्क्षणात् ॥ त्वामहंप्रार्थयाम्यंद्यस्त्वीयंपल्लवमुत्तमम् ४८
प्रसार्यशिरसाचापिनमस्कृत्यपुनःपुनः ॥ तद्रामवचनंश्रुत्वानारदोवाक्यमब्रवीत् ४९ ब्रह्महत्यादिपापानांनिष्कृत्यर्थंमुनीश्वरैः ॥ प्रायश्चित्तानिचोक्तानिसंतिनानावि
धानिच ५० द्वादश्यांतुलसीपत्रच्छेदनाघप्रशांतये ॥ प्रायश्चित्तंमयानैवदृष्टंराघवसत्तम ५१ उपायस्त्वेकएवाऽत्रवर्ततेरघुनन्दन ॥ पातिव्रत्यबलात्सीतापत्रंतुलसीं
पुनः ५२ योजयिष्यतिमेऽग्रेऽद्यतर्हिपूताभविष्यति ॥ क्षणादेवनसंदेहस्सत्यमेववचोमम ५३ तन्मुनेर्वचनंश्रुत्वारामःसीतांव्यलोकयत् ॥ तदासीताऽब्रवीद्वाक्यंशृणुब्रह्म
सुतोत्तम ५४ अद्याऽहंयोजयिष्यामिपत्रंतत्तुलसींपुनः ॥ पातिव्रत्यबलेनैवतवाग्रेपश्यकौतुकम् ५५ इत्युक्त्वाजानकीदेवीतत्पात्रमन्नपूरितम् ॥ पाकस्थानेपुनर्नीत्वास्था
पयामासवेगतः ५६ ततोवृंदावनंसीतायर्यौनूपुरनिःस्वना ॥ नारदोरामचन्द्राद्यायर्युर्वृंदावनंप्रति ५७ तदातावूर्मिलाद्याश्चचांपिकाद्याःस्त्रियोययुः ॥ लक्ष्मणाद्याबंधवश्च
कुशश्चाथलवस्तथा ५८ तेषांमध्यगतासीतातदावृंदावनस्थिता ॥ नत्वातांतुलसींभक्त्याप्राहवाक्यंसखीयुता ५९ भोभोतुलसिमद्वाक्यंशृणुष्वाद्यसुशोभने ॥ पातिव्रत्य
बलंपूर्णमयियद्यस्तिपावनम् ६० तर्ह्यस्यतवपत्रस्यत्वयिसंधिर्भविष्यति ॥ एवमुक्त्वाजानकीसायावत्पश्यतिवैपुरः ६१ तावत्पत्रंतुलस्यांतत्संधिनैवगतंतदा ॥ तदा
विषण्णासासीताबभूवचकितापिच ६२ तदादेवाःसंगधर्वायक्षानागाःसकिन्नराः ॥ गुह्यकाऋषयःसर्वेतद्द्रष्टुंकौतुकंययुः ६३ यतःसीतांविषण्णांतांदृष्ट्वासनारदोमुनिः ॥
एकांतेजानकींनीत्वाबोधयामाससादरम् ६४ शृण्वत्रकारणंसीतेसर्वंत्वांप्रवदाम्यहम् ॥ पतिव्रताभिर्नारीभिर्विनास्वपतिनामुदा ६५ पुष्पादीनांसुगंधोऽपिनाघ्राह्यःक
दाचन ॥ सोऽत्राऽद्यघ्राहितःपूर्वंसुदातामरसस्यच ६६ तदुष्वारामचंद्रेणमायेयंरचिताद्यहि ॥ तदिच्छयातुलस्याश्चतत्पत्रंपतितंभुवि ६७ त्वद्धस्तपल्लवाग्रेणशिक्षांकर्तुं
तवात्रहि ॥ रामस्यांतर्गतंज्ञात्वादोषारोपःकृतस्त्वयि ६८ मयासीतेक्षमस्वाद्यमाक्रोधंभजमांप्रति ॥ नारीणामुपदेशार्थंतेनत्वामद्यशिक्षितम् ६९ नोचेत्त्वद्दर्शित
पथास्त्रियःसर्वाःपतिंविना ॥ एवमेवाचरिष्यंतिनानाभोगान्मुदान्विताः ७० इदानींशृणुमद्वाक्यंयेनश्रीराघवाग्रतः ॥ पत्रस्यचतुलस्याश्चदृढासन्धिर्भविष्यति ७१
वृंदावनेपुनर्गत्वात्वंब्रूहियन्मयोच्यते ॥ विनापद्मसुगन्धस्यावघ्राणाद्यदिरक्षितम् ७२ पातिव्रत्यंमयास्त्यत्रतर्ह्येतत्तुलसीदलम् ॥ तुलस्यांसंधिमाप्नोतुनोचेन्नाप्नोतुवैत्वि
दम् ७३ अनेनवचनेनाद्यतत्पत्रंसंधिमाप्नुयात् ॥ तुलस्याःक्षणमात्रेणपूर्ववच्चभविष्यति ७४ अतस्त्वंयाहितुलसींविषादंभजमारमे ॥ इत्युक्त्वासीतयाशीघ्रंतुलसींनार
दोययौ ७५ सीताऽपितुलसींनत्वाशृण्वत्सुसकलेष्वपि ॥ समूहेषुमुनीनांचदेवादीनांवचोऽब्रवीत् ७६ विनापद्मसुगंधस्यावघ्राणाद्यदिरक्षितम् ॥ पातिव्रत्यंमयास्त्यत्रत
र्ह्येतत्तुलसीदलम् ७७ तुलस्याःसंधिमाप्नोतुनोचेन्नाप्नोतुवैत्विदम् ॥ एवंवदतिजानक्यावाक्येपत्रंक्षणेनतत् ७८ प्राप्तंसंधिंपूर्ववच्चपश्यत्सुसकलेष्वपि ॥ तदानिनेदुर्वा ॥ १७॥
द्यानिदेवानांराघवस्यच ७९ देवनार्योविमानाग्रेसंस्थिताःपुष्पवृष्टिभिः ॥ ववर्षुर्जानकींरामंविप्राऊचुर्जयस्वनान् ८० तदासीतांसमालिंग्यराघवोमुदिताननाम् ॥ आह
तुष्टमनाःश्रीमान्वसनाहारभूषितः ८१ हेसीतेकंजनयनेमुनीनामपिमोहिनि ॥ नेदंमयाशिक्षितंतेसर्वस्त्रीणांसुशिक्षितम् ८२ धर्मसंस्थापनार्थायसाधूनांपालनायच ॥

दुष्टानांचविनाशायमयेदंरूपमाश्रितम् ८३ पातिव्रत्यंसदास्त्रीभिःपालनीयंधियेतिच ॥ मयातेशिक्षितंसीतेमाविषादंभजप्रिये ८४ इत्याश्वास्यमुहुःसीतांकृत्वातामति
हर्षिताम् ॥ विसर्जयित्वाश्रीरामःसुरादीन्समपूजयत् ८५ ततःसर्वान्नारदादीन्जानकीपरिवेषणम् ॥ वेगाच्चकारमुदितास्वेदबिंदुंकितानना ८६ ततःसर्वेनारदाद्याश्चकु
र्भोजनमुत्तमम् ॥ ततोभुक्त्वाऽथतांबूलंरामंतुष्टावनारदः ८७ ॥ ॥ श्रीनारदउवाच ॥ श्रीरामंमुनिविश्रामंजनसद्धामंहृदयारामंसीतारंजनसत्यसनातनराजारामंघन
श्यामम् ॥ नारीसंस्तुतकालिंदीनतनिद्राप्रार्थितभूपालंरामंत्वांशिरसासततंप्रणमामिच्छेदितसत्तालम् ८८ नानाराक्षसहर्तारंशरधर्तारंजनताधारंवालीमर्दनसागरबंधन
नानाकौतुककर्तारम् ॥ पौरानन्ददनारीतोषदकस्तूरीयुतसद्भालंरामंत्वांशिरसासततंप्रणमामिच्छेदितसत्तालम् ८९ श्रीकांतंजगतीकांतंस्तुतसद्भक्तंबहुसद्भक्तंसद्भक्तहृद
येप्सितपूरकपद्माक्षनृपजाकांतम् ॥ पृथ्वीजापतिविश्वामित्रसुविद्यादर्शितसच्छीलंरामंत्वांशिरसासततंप्रणमामिच्छेदितसत्तालम् ९० सीतारंजितविश्वेशंवरपृथ्वीशंसु
रलोकेशंप्रबोद्धारणरावणमर्दनतद्भ्रातृकृतलंकेशम् ॥ किष्किंधाकृतसुग्रीवंप्लवगवृंदाधिपसत्पालंरामंत्वांशिरसासततंप्रणमामिच्छेदितसत्तालम् ९१ श्रीनाथंजगतांनाथं
जयतीनाथंनृपनाथंभूदेवासुरनिर्जरपन्नगगंधर्वादिकसन्नाथम् ॥ कोदण्डधृततूणीराान्वितसंग्रामकृतभूपालंरामंत्वांशिरसासततंप्रणमामिच्छेदितसत्तालम् ९२ रामेशंजग
तामीशेजंबुद्वीपेशंनतलोकेशंवाल्मीकिकृतसंस्तवहर्षितसीतालालितवागीशम् ॥ पृथ्वीशंहृतभूभारंनतयोगींद्रंजगतीपालंरामंत्वांशिरसासततंप्रणमामिच्छेदिसत्तालम् ९३
चित्रूपंजितसद्रूपंनतसंदिक्पंनतसद्रूपंसप्तद्वीपजवर्षजकामिनिसंनीराजितपृथ्वीपम् ॥ नानापार्थिवनानोपायनसम्यक्तोषितसद्रूपंरामंत्वांशिरसासततंप्रणमामिच्छे
दितसत्तालम् ९४ संसेव्यंमुनिभिर्गेयंकविभिस्तव्यंह्रादिसंधार्यंनानापंडिततर्कपुराणजवाक्यादिकृतसत्काव्यम् ॥ साकेतस्थितकौसल्यासुतगन्धाद्यंकितसद्भालंरामंत्वां
शिरसासततंप्रणमामिच्छेदितसत्तालम् ९५ भूपालंघनसन्नीलंनृपसद्भालंकलिसंकालंसीताजानिवरोत्पललोचनमन्त्रीमोचितसत्कालम् ॥ श्रीसीताकृतपद्मास्वादनसम्यक्
शिक्षिततत्कालंरामंत्वांशिरसासततंप्रणमामिच्छेदितसत्तालम् ९६ हेराजन्नवभिःश्लोकैर्भुविपापघ्नंनवकंरम्यंमेबुध्याकृतमुत्तमनूतनमेतद्राघवमर्त्यानाम् ॥ स्त्रीपौत्राद्या
दिकक्षेमप्रदमस्मत्सद्भरतश्चालंरामंत्वांशिरसासततंप्रणमामिच्छेदितसत्तालम् ९७ ॥ श्रीरामदासउवाच ॥ एवंस्तुत्वारमानाथंराघवंभक्तवत्सलम् ॥ प्रणम्याज्ञांप्रभोः
प्राप्यप्रययौनारदोमुदा ९८ अमरामुनयःसर्वेजग्मुस्तेस्वस्थलानिवै ॥ एवंश्रीरामचंद्रेणनररूपधरेणच ९९ कौतुकानिविचित्राणिकृतानिजगतीतले ॥ कस्तान्यत्रक्ष
मोवक्तुंविस्तरेणद्विजोत्तम १०० तेषुयद्यद्राघवेणस्मारितंत्विहवैमम ॥ तत्तत्प्रकथ्यतेशिष्यतवाग्रेराघवाज्ञया १०१ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदा
नन्दरामायणे वाल्मीकीये राज्यकांडे उत्तरार्धे सीतयातुलसीपत्रसन्धिर्नामद्वाविंशः सर्गः ॥ २२ ॥ ॥ श्रीरामदासउवाच ॥ अथरामःसवैदेह्याबन्धुभिस्तनया
दिभिः ॥ चकारराज्यंधर्मेणलोकवंद्यपदांबुजः १ एतस्मिन्नंतरेऽयोध्यापुर्यांश्रीरघुनायकम् ॥ नत्वैकदाऽब्रवीद्दूतोहेरामकंजलोचन २ करोमितवसेवांनतपश्चर्यांकरो

१ सद्धाममितिपाठः । २ जनभर्तारमितिपाठः । ३ जनपुद्दीशमितिपाठः ।

म्यहम् ॥ ददस्वाज्ञांममत्वंहिगच्छामिनिजमंदिरम् ३ तथेतिराघवेणोक्तःसययौनिजमन्दिरम् ॥ तत्रगत्वाशुचिर्भूत्वाऽऽनन्दरामायणंशुभम् ४ पठित्वानवरात्रंतुततत
स्तूर्णंवहिर्ययौ ॥ एतस्मिन्नंतरेकश्चिद्देशेपौरांस्ततंनृपम् ५ दृष्ट्वातस्यसुतंबालंज्ञात्वाकर्त्तुंहिमन्त्रिणम् ॥ चक्रुस्तेनिश्चयंतत्रकेचिद्रूचुरयंशुभः ६ केचिदूचुरयंनैवकार्यो
मन्त्रीखलस्त्वयम् ॥ एवंविवदमानास्तेचक्रुर्वैनिश्चयंतदा ७ करिणीनिजशुंडाग्रमाल्ययायंवरिष्यति ॥ सोऽस्तुमन्त्रीनिश्चयेनततस्तांकरिणींवरैः ८ वस्त्रालंकारभूषा
द्यैःशोभयामासुरादरात् ॥ तच्छुण्डायांरत्नमालांदत्त्वातांमुमुचुस्तदा ९ ततस्तेनववाद्यानिवादयामासुरादरात् ॥ तदासाकरिणीग्रामाद्बहिस्तूर्णंययौशनैः १० अयो
ध्यायाःपथाऽयोध्यांययौदेशान्विलंघ्यसा ॥ तत्पृष्ठेसकलाःपौरानानावाहनसंस्थिताः ११ ययुस्तूर्णंकौतुकेनकोटिशोमुदिताननाः ॥ ततःसाकरिणीगत्वाऽयोध्यांहट्ट
स्थितंतदा १२ तंदूतंवरयामासयेनपारायणंकृतम् ॥ आनन्दरामचरितस्याहोतत्कौतुकंमहत् १३ बभूवसकलाँल्लोकान्ततस्तंमाल्यांकितम् ॥ करिण्यांमन्त्रिणंचक्रु
स्तेपौरायेसमागताः १४ तंनिन्युःकरिणीसंस्थंपत्नीपुत्रसमन्वितम् ॥ स्वदेशंमन्त्रिणंचक्रुस्तदद्भुतमिवाऽभवत् १५ ततःपरस्परंश्रुत्वाराजदूताःसहस्रशः ॥ नानादे
शेषुसर्वत्रसाकेतेऽपितदामुदा १६ राजसेवांपरित्यज्यजग्मुस्तेस्वगृहाणिहि ॥ ततःसर्वेस्वगृहेष्वानन्दरामायणस्यच १७ केचित्पारायणंचक्रुःकेचितच्छ्रवणंमुदा ॥ के
चित्तत्पठनंवाऽपिकेचिच्चक्रुश्चकीर्तनम् १८ केचिच्चक्रुश्चव्याख्यानमेवंतन्निष्ठमानसाः ॥ बभूवुःसकलादूताःकोटिशोजगतीतले १९ तदाकेनधनंलब्धंकेनलब्धंमहद्ध
नम् ॥ केनराज्यपदंलब्धंकेनलब्धंगृहंवरम् २० केनग्रामाधिकारश्चकेनलब्धाकृषिर्वरा ॥ केनवृत्तिःशुभालब्धाकेनस्वर्गोमनोरमः २१ केनलब्धंतुपातालंकैर्लोकाविवि
धाःशुभाः ॥ लब्धंकैश्चित्सूर्यपदंलब्धंतच्चमनोहरम् २२ केचिदिंद्रपदंप्रापुःकेचिदग्निपुरंगताः ॥ केचित्तेधर्मराजस्यलोकंवानिर्ऋतेरपि २३ वरुणस्याऽथवायोश्चकुवेर
स्येश्वरस्यच ॥ लोकान्जग्मुस्तदादूतास्तदद्भुतमिवाऽभवत् २४ केचिज्जग्मुश्चंद्रलोकंकेचिद्ध्रुवपदंगताः ॥ केचित्तेब्रह्मलोकंचवैकुण्ठंचापिकेचन २५ एवंयथायस्य
पुण्यंदूतस्याऽन्यनरस्यच ॥ आनन्दरामचरितपाठश्रवणसंभवम् २६ तथातस्यगतिर्जातासद्यएवावनीतले ॥ तदाकोऽपिनकस्यासीद्दूतोदेशांतरेष्वपि २७ त्यक्त्वा
सेवांसमस्ताश्चराघवस्याऽपितेगताः ॥ रामंपृष्ट्वागताःकेचिदपृष्ट्वैवगताःपरे २८ एवंसर्वत्रदेशेषुदूताभावोऽभवत्तदा ॥ एकदाराघवंद्रष्टुंगन्तुंसर्वेनृपोत्तमाः २९ सैन्या
न्याकारयामासुःस्वीयानितुपृथक्पृथक् ॥ तदाकुत्राऽपिसैन्यानिददृशुर्नंनृपोत्तमाः ३० आःकिमेतदितिप्रोच्कास्वसुहृद्भिःसुतादिभिः ॥ ययुस्तेराघवंद्रष्टुंविस्मयाविष्ट
मानसाः ३१ तानागतान्नृपान्ज्ञात्वातान्पुरोगन्तुमादरात् ॥ आकारयत्स्वसैन्यानितदाप्रापलक्ष्मणः ३२ ततोनिवेदयामासतद्वृत्तंराघवायसः ॥ तच्छ्रुत्वाराघवोप्या
सीद्विस्मयाविष्टमानसः ३३ सुहृज्जनैर्युतंबंधुंलक्ष्मणंप्रेष्यपार्थिवान् ॥ स्वपुरीमानयामासतेनेमुरघुनायकम् ३४ ततस्तेतस्थुःसदसिसेनावृत्तंन्यवेदयन् ॥ रामोऽपि
कथयामासस्वसेनावृत्तमादरात् ३५ तदाविहस्यश्रीरामःसमाहूयनिजंगुरुम् ॥ पृष्टवान्ममसैन्यानिनृपाणांचापिवैगुरो ३६ किंजातानिक्वसन्तितद्वदस्वसविस्तरम् ॥
तद्रामवचनंश्रुत्वाकृत्वाध्यानंक्षणंगुरुः ३७ तदाप्राहसभामध्येविहस्यरघुनन्दनम् ॥ रामराममहाबाहोसर्वंवेत्सित्वमेवहि ३८ यदिपृच्छसिमांरामतर्हिसर्वंवदाम्यहम् ॥

शतकोटिमितंरामचरितंतवपावनम् ३९ वाल्मीकिनाकृतंपूर्वंतन्मध्येरघुनन्दन ॥ आनन्दरामचरितंनवकांडसमन्वितम् ४० तस्यश्रवणपाठाद्यैःसर्वसैन्येषुयेनराः ॥
तेगतास्त्वत्पदंकेचित्केचिल्लोकांतरादिषु ४१ नसंतिशुविसैन्यानिसत्यंरामवचोमम ॥ नवकांडमितंतच्चरम्यमानन्ददायकम् ४२ तस्यैतच्छ्रवणाद्विद्विफलंरघुकुलोद्भ
व ॥ येनतेहीनजातिस्थाद्भूताश्चमुक्तिगामिनः ४३ सारकांडश्रवादेवसंसारान्मुच्यतेनरः ॥ यात्राकांडेनयात्राणांलभ्यतेमानवैःफलम् ४४ यागकांडेनयज्ञानांलभ्यतेफल
मुत्तमम् ॥ विलासकांडश्रवणादप्सरोभिर्विमोदते ४५ जन्मकांडेनचाप्नोतिनरःपुत्रादिसंततिम् ॥ विवाहकांडश्रवणाद्भुविरम्यांस्त्रियंलभेत् ४६ राज्यकांडेनराज्यंहिमा
नवैर्भुविलभ्यते ॥ कांडंमनोहरंश्रुत्वालभ्यतेमनसेप्सितम् ४७ पूर्णकांडश्रवादेवतेपूर्णस्यपदंलभेत् ॥ सर्वतन्मानवैःश्रुत्वाऽऽनन्दरामायणंभुवि ४८ सच्चिदानन्दरूपेते
लीनोभवतिमानवः ॥ एवंरामत्वयापृष्टंतत्सर्वंकथितंमया ४९ यदग्रेऽत्रकरोषित्वंतत्कुरुष्वरघूत्तम ॥ इतिरामंवसिष्ठस्तुयावत्प्राहनृपाग्रतः ५० तावद्भूम्यांहिकिंजातंत
च्छृणुष्वसविस्तरम् ॥ गतिंश्रुत्वातद्भूतानांनानादेशेषुयेनराः ५१ तेऽपिसर्वेतदानन्दरामायणश्रवादिभिः ॥ नानाविमानसंस्थास्तेययुःस्वर्लोकमुत्तमम् ५२ शून्यंदृष्ट्वा
निर्जलोकंयमोविधिसमन्वितः ॥ कैलासेशंकरंनत्वासर्वंवृत्तंन्यवेदयत् ५३ शिवःश्रुत्वाविहस्याऽथयमेनकेनदुर्गया ॥ ययौसवृषभारूढ साकेतंवेष्टितोऽमरैः ५४ शिवमा
गतमाज्ञायप्रत्युद्गम्यरघूद्वहः ॥ सिंहासनेशिवंदेव्यानिवेश्यपूजनंव्यधात् ५५ ससीतोब्रह्मणश्चाऽपिसुराणांचयमस्यच ॥ एतस्मिन्नंतरेब्रह्माराघवंप्राहवेतदा ५६ राम
राजीवपत्राक्षयमंपश्यनिरुद्यमम् ॥ शून्यासंयमिनीजाताऽऽनन्दरामायणश्रवात् ५७ शून्योजातोऽस्तिभूलोकःखेऽवकाशोनदृश्यते ॥ सर्वेषांतत्रवैवस्तुमग्रेकिंचिद्वि
चारय ५८ इतितस्यवचःश्रुत्वासमाहूयरघूत्तमः ॥ शत्रुघ्नंप्रेष्यवाल्मीकिंतस्मैवृत्तंन्यवेदयत् ५९ सोऽपिश्रुत्वाविहस्याऽथराघवंवाक्यमब्रवीत् ॥ येनमत्कवितानाशोन
भविष्यतिवैभुवि ६० तथासुखंचसर्वेषांयेनतत्कुरुराघव ॥ तथेतिराघवश्चोक्तातदावचनमब्रवीत् ६१ सप्तजन्मार्जितंपुण्यंममार्चनसमुद्भवम् ॥ यस्यस्यात्तस्यचानन्द
रामायणकथारुचिः ६२ भविष्यतिनसर्वेषांभवत्वत्रकदाचन ॥ इतिरामवचःश्रुत्वासर्वेसन्तुष्टमानसाः ६३ ययुःस्वंस्वंपदंदेवाःस्वंस्वंदेशंनृपाययुः ॥ तदारभ्यविष्णुदा
सशतकोटिमितेशुभे ६४ रामायणेशिवेनोक्तमानंदाख्यमिदंशुभम् ॥ रामायणंक्वचित्कुत्रकश्चिद्देरस्यतिमानवः ६५ नभूम्यांसकलालोकावेत्स्यंतिद्वापरेकलौ ॥ सप्तज
न्मार्जितंपुण्यंयेषांवेत्स्यंतितेनराः ६६ तद्रामवचनाद्भूम्यांबभूवपूर्ववत्तदा ॥ नाभूत्कस्यकदामेघाऽऽनंदरामायणंप्रति ६७ सहस्रेपुनरःकश्चित्सप्तजन्मसुपुण्यवान् ॥
आनन्दरामचरितंवेदस्तोत्रंनचापरः ६८ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये राज्यकांडे उत्तरार्धे आनन्दरामायणमहिमा
वर्णनंनाम त्रयोविंशःसर्गः ॥ २३ ॥ ॥ श्रीरामदासउवाच ॥ एकदासंस्थितंरामंसभायांसेवकोऽब्रवीत् ॥ राजराजमहाराजरविवंशैकमण्डन १ सुमंत्रस्तेऽतिवृद्धःस
मन्त्रीनाकंगतःप्रभो ॥ तत्पत्न्यस्तेनगन्तुंत्वामाज्ञांपृच्छंतिराघव २ तद्दूतवचनंश्रुत्वाचकितःखिन्नमानसः ॥ शीघ्रंसुमन्त्रगेहेसययौयानेनराघवः ३ सुमन्त्रजन्मपट्टेत
स्यायुःसंख्यांददर्शसः ॥ जन्मकालात्सहस्राणिनवनवशतानिच ४ नवनवतिवर्षाणि (९९९९) मासास्त्वेकादशैव (११) हि ॥ एकविंशदिना (२१) श्चातिक्रांताः

149

शेषदिनानव ५ ज्ञात्वेत्थंरामचन्द्रःसतदाप्राहगुरुंप्रति ॥ कृतेयुगेतुलक्षायुःसहस्रंद्वापरेस्मृतम् ६ शतवर्षंकलौप्रोक्तंसहस्राणिदशैवच ॥ त्रेतायांकथितंचायुस्तन्मद्राज्ये
मृषाकृतम् ७ यमेनमामवज्ञायमद्दण्डंलब्धुमिच्छता ॥ दिनानिनवशेषाणिसंतिमेमंत्रिणःकथम् ८ यमेननीतस्त्वद्यैवयमंबध्वानयाम्यहम् ॥ सुमन्त्रंजीवयाम्यद्य
॥ १९ ॥ पश्यमेत्वंपराक्रमम् ९ इत्युक्त्वागरुडारूढःकोदण्डंकलयन्करे ॥ वेगेनरघुनाथःसययौसंयमिनींपुरीम् १० तावन्मार्गेसुमंत्रंतंपाशबद्धंयमानुगैः ॥ गच्छंतंराघवोदृष्ट्वा
तान्सर्वांस्ताडयन्मुहुः ११ सुमंत्रंमोचयामासलिंगरूपधरंप्रभुः ॥ तदातेराघवंप्रोचुश्चाऽपराद्धंतवाऽद्यकिम् १२ अस्माभिश्चेद्दशोदण्डोयतोस्माकंकृतस्त्वया ॥
तदातान्राघवःप्राहदिनान्यायुर्नवाऽस्याहि १३ वर्ततेशेषभूतंवैकथमद्यैवनीयते ॥ भविष्यंतिदिनान्यग्रेयदानवयमानुगाः १४ तदानेयःसुखेनाऽयंननिषेधंकरोम्यहम् ॥
इतिरामवचःश्रुत्वातमूचुस्तेयमानुगाः १५ अपूर्वमभवज्जन्मसुमंत्रस्याऽस्यराघव ॥ मातुर्योन्यावहिश्चास्यमुखंहस्तौविनिर्गतौ १६ पूर्वंततोऽस्यदशमेदिवसेदैवयोग
तः ॥ उदरादीन्यथांगानिपदांतानिशनैःशनैः १७ विनिर्गतानिश्रीरामसुमंत्रैरक्षितोबुधैः ॥ यस्माज्जन्मन्ययंतस्मात्सुमंत्राख्याऽस्यसार्पिता १८ अतःपूर्वं
दिनारभ्यसंख्ययायुःप्रपूरितम् ॥ अस्यत्वंतदिनारभ्यसंख्ययादिवसानव १९ शेषभूताश्चभवताकीर्त्यंतेयेरघूत्तम ॥ अतोऽस्माकंनापराधःसंदिग्धंजन्मचाऽस्याहि ॥
२० वृथाऽयंनीयतेरामवृथाशिक्षाऽपिनःकृता ॥ इतितेषांवचःश्रुत्वारामःप्राहयमानुगान् २१ अस्यसोंत्यदिनोज्ञेयोप्रथमोहियमानुगाः ॥ यस्मिन्दिनेसुप्रसूति
रभवच्चास्यमातृकात् २२ उत्साहदिवसोज्ञेयःसएवजातकंतथा ॥ तस्मिन्नेवदिनेऽस्याऽन्नकृतंपित्राद्विजोत्तमैः २३ ज्योतिर्विदाजन्मपत्रेसएवलिखितोदिनः ॥
अतःशेषदिनाःसत्यंज्ञेयास्तस्यायुषोनव २४ अतोयुष्माभिर्गतव्यंनेयोऽयंदशमेदिने ॥ पुनरागत्यसान्निध्यान्मेनिषेधंकरोमिन २५ इतिरामवचःश्रुत्वातूष्णी
मेवयमानुगाः ॥ साश्रुनेत्राश्चछिन्नांगायमराजंशनैर्ययुः २६ रामोऽपिपरिवर्त्याऽथययौस्वनगरींप्रति ॥ स्त्रीभिर्नीराजितोमार्गेविवेशमन्त्रिणोगृहम् २७ तावत्स
र्वान्प्रमुदितान्सुमंत्रेणसमन्वितान् ॥ ददर्शरामचन्द्रःसतावद्दृष्ट्वारघूत्तमम् २८ प्रणनामसुमन्त्रःसपूजयामासराघवम् ॥ ततोरामोययौगेहंसर्वेप्रमुदिताननाः २९
दिनानिनवशेषायुर्ज्ञात्वादानादिकंसुधीः ॥ चकारप्रत्यहंभक्त्यासुमन्त्रोराघवाज्ञया ३० अथतेयमदूताश्चसाश्रुनेत्रायमाग्रतः ॥ उष्णीषाणिकरैःक्रोधादास्फाल्य
भुविचाब्रुवन् ३१ कथंकरोष्यधिकारंतवाज्ञाकारिणांत्विमाम् ॥ दृष्ट्वाऽवस्थांनलज्जातेजायतेहृदयेयम ३२ ताडचास्माकंराघवेणसुमन्त्रोमोचितःपथि ॥ दिनानि
नवशेषायुःपूर्त्यर्थमधुनावयम् ३३ देहत्यागंजलेकुर्मोनजीविष्यामयोयम ॥ तद्दूतवचनंश्रुत्वाप्रजज्वालयमस्तदा ३४ प्राहदूतानद्यरामंबध्वादंडंकरोम्यहम् ॥
चोदनीयानिसैन्यानिचेंद्रंप्राचारयाम्यहम् ३५ इत्युक्त्वात्वरितोगत्वावृत्तमिंद्रंन्यवेदयत् ॥ पुनरिंद्रंयमःप्राहसाहाय्यंक्रियतांमम ३६ ततस्यवचनंश्रुत्वादेवें ॥ १९ ॥
द्रोयममब्रवीत् ॥ किंभ्रांतोऽसियमाऽद्यत्वंविष्णुनायोद्धुमिच्छसि ३७ गच्छतूष्णींसंयमिनींरामस्यकिंकरिष्यसि ॥ तद्धियाहिपुरादत्तोमयातोसुरपादपो ३८

१ भूताश्चेतिपाठः । २ बिधिमिनिपाठः ।

एवंतद्वचनंश्रुत्वावन्हिर्लोकंययौयमः ॥ अग्निनाभाषितस्त्वेवंनैर्ऋतिंवरुणंतथा ३९ वायुंकुबेरमीशानंरविंचन्द्रंबुधंगुरुम् ॥ शुक्रंशनैश्चरंराहुंकेतुंभूमिसुतंध्रुवम् ४०
प्रार्थयामासयुद्धायसाहाय्यंक्रियतामिति ॥ उत्तरार्णीद्रुवत्सर्वेदद्गुर्भ्रातंयमंहिते ४१ ततोगत्वाविधिंचापिपातालांतरवासिनः ॥ सप्तद्वीपवासिनश्चयमःसंप्रार्थयन्नृपान् ४२
तेप्यूचुर्नकरिष्यामःसाहाय्यंराघवाग्रतः ॥ ततःक्रोधसमाविष्टःस्वसैन्येनसमन्वितः ४३ रामेणसङ्गरंकर्तुमयोध्यांसयमोययौ ॥ स्वगणैःसहवेगेनमहामहिषसंस्थितः ४४
अयोध्यांवेष्टयामासनवद्वारविराजिताम् ॥ नवप्राकारसहितांशतघ्नीयन्त्रसंयुताम् ४५ नवभिःपरिखाभिश्चसमन्तात्परिवेष्टिताम् ॥ दृढरत्नकपाटाढ्यांरत्नभित्तिवि
राजिताम् ४५ सरयूवेष्टितांरम्यांरविकोटिसमप्रभाम् ॥ नानाप्रासादवृन्दैश्चपताकाध्वजशोभिताम् ४६ यमेनवेष्टितांदृष्ट्वापुरींरामोमहामनाः ॥ लवमाज्ञापयामास
गच्छयोद्धुंयमेनहि ४८ लवस्तदारथारूढोदुन्दुभीनांमहास्वनैः ॥ अयोध्यायाबहिर्गत्वाचकारसङ्गरंमहत् ४९ तदालवशराघाताच्छिन्नदेहायमानुगाः ॥ निपेतुःक्ष
णमात्रेणकोटिशोरणभूमिषु ५० तान्सर्वान्निहतान्दृष्ट्वायमोमहिषसंस्थितः ॥ चकारतुमुलंयुद्धंलवेनक्रोधभासुरः ५१ स्वबाणैर्घैर्यमःशीघ्रंरथंसूतंबलंधनुः ॥ क
वचंमुकुटंचाऽपिचिच्छेदसलवस्यच ५२ तदालवश्चातिक्रुद्धःस्यंदनेन्येस्थितःपुनः ॥ चकारसङ्गरंघोरंयमेनाऽतिभयंकरम् ५३ तदाऽमराविमानस्थाददृशुर्युद्ध
कौतुकम् ॥ ततोलवःस्वबाणौघैर्महिषंमूर्छितंभुवि ५४ कृत्वातंताडयामासशतबाणैर्यमंजवात् ॥ ततोयमोप्यतिक्रुद्धोयमदण्डंमुमोचतम् ५५ तंदण्डंमोचितं
दृष्ट्वाब्रह्मास्त्रंसन्दधेलवः ॥ ब्रह्मास्त्रमागतंदृष्ट्वायमदण्डोन्यवर्तत ५६ तदायमोऽतिविकलःपलायनपरोऽभवत् ॥ ब्रह्मास्त्रंतस्यपृष्ठेतद्ययौकालानलप्रभम् ५७ तदा
दृष्ट्वारविःशीघ्रंस्त्रीयांभिन्नांप्रकल्प्यच ॥ रथेमूर्तिंययौवेगात्प्रार्थयामासतंलवम् ५८ रेरेबालयमंत्राहिचोपसंहारयाऽद्यहि ॥ त्वयोपसृष्टंब्रह्मास्त्रंत्वमेवास्त्रविदांवरः
५९ त्वंमेवंशप्रसूतस्त्वयंमेतनयोयमः ॥ कथंस्वपूर्वजंत्वद्यत्वंयमंहन्तुमिच्छसि ६० चेदेकोमूर्खतांयातःसर्वेमूर्खाभवन्तिन ॥ शत्रुंरणात्परिभ्रष्टंवीरास्तंरक्षयन्ति
हि ६१ इत्यादिनानावचनैःप्रार्थितोरविणायदा ॥ तदालवोऽपिसंहारंचकारास्त्रस्यब्रह्मणः ६२ ततोलवंपुरस्कृत्ययमेनतपनःपुरीम् ॥ विवेशरघुनाथस्यदर्शना
र्थंमुदान्वितः ६३ तदाखेदेववाद्यानिनेदुःकुसुमवृष्टिभिः ॥ लवंववर्षुरमराननृतुश्चाप्सरोगणाः ६४ पौरनार्योलवंमार्गेववर्षुःपुष्पवृष्टिभिः ॥ गोपुराट्टालसंस्थाश्च
ददृशुस्तंमुहुर्मुहुः ६५ नेदुर्नानासुवाद्यानिननृतुर्वारयोषितः ॥ तुष्टुवुर्मागधाद्याश्चजगुर्गंधर्वकिन्नराः ६६ एवंनानासमुत्साहैःस्त्रीभिर्नीराजितःपथि ॥ ययौसवि
जयीबालध्वपनामरघूत्तमम् ६७ रविमागतमाज्ञायप्रत्युद्गम्यरघूत्तमः ॥ नत्वारविंकरेधृत्वासभायांसंविवेशह ६८ ततःसिंहासनेभानुंन्यवेश्यस्वीयपूर्वजम् ॥ पू
जयामासश्रीरामःषोडशैरुपचारकैः ६९ तदाब्रवीद्रविंरामःसभायांपुरतःस्थितः ॥ पूर्वजस्त्वंक्षमस्वाऽद्ययल्लवेनापराधितम् ७० तद्रामवचनंश्रुत्वारामंप्राहरवि
स्तदा ॥ त्वन्नाभिकमलाद्ब्रह्मासमुद्भूतोरघूत्तम ७१ मरीच्याद्याविधेःपुत्रामरीचेःकश्यपःस्मृतः ॥ कश्यपाच्चममोत्पत्तिःपौत्रपौत्रस्त्वहंतव ७२ क्षमस्वममपुत्रे

१ सितैर्बाणैरितिपाठः । २ त्वंमद्वंशसमुद्भूतइतिपाठः ।

णयद्यमेनापराधितम् ॥ एवंसंप्रार्थ्यश्रीरामंचासनेसंन्यवेशयत् ७३ यमेनकारयामासरघुनाथायवन्दनम् ॥ तदासमाययुर्देवानेमुःसर्वेरघूत्तमम् ७४ रामोपिसकला
न्देवान्पूजयामाससादरम् ॥ ततोरामाज्ञयाचेंद्रःसुधावृष्ट्याचरणेहतान् ७५ शीघ्रमुत्थापयामाससर्वान्वीरान्सवाहनैः ॥ ततोरामोयमंप्राहयावद्राज्यंकरोम्यहम् ७६
तावत्त्वयातुपूर्णायुर्नरोनेयोनचेतरः ॥ तद्रामवचनंश्रुत्वातथेत्याहयमस्तदा ७७ ततःप्राप्तेसुदशमेदिनेस्त्रीभिर्विगाह्यसः ॥ सुमन्त्रोराघवंनत्वातदग्रेजीवितंजहौ ७८
तस्यतादयिताश्चाऽपिजीवितानितदाजहुः ॥ ततःसदिव्यदेहाभिःस्वस्त्रीभिर्दिव्यदेहधृक् ७९ सुमन्त्रःपूजितःसर्वैर्विमानेसंस्थितोबभौ ॥ रामाग्रेमरणादेवसुरैःसर्वत्रवे
ष्टितः ८० ततःप्रहारवीरामंयमेनस्वस्थलंययौ ॥ ययौसुमन्त्रःस्वस्त्रीभिर्वैकुण्ठंनिर्जरादिवम् ८१ रामःसुमन्त्रपुत्रेणतत्क्रियादिसुमन्तुना ॥ कारयित्वाययथाशास्त्रंत
त्पदेतंन्यवेशयत् ८२ ततोरामोलक्ष्मणेनपृथिव्यांघोषयन्मुहुः ॥ गजन्यस्तांदुन्दुभिंस्वांपताकाध्वजशोभिताम् ८३ तथेतिलक्ष्मणश्चापिदूतानाज्ञापयत्तदा ॥ दूता
स्तेऽथगजारूढाःसप्तद्वीपांतरेषुहि ८४ रामाज्ञांश्रावयामासुर्जनान्दुंदुभिनिःस्वनैः ॥ अपूर्णायुर्मृतःकश्चिन्नेतव्योराघवंप्रति ८५ पौराणिकाःस्थापनीयागेहेग्रामेपृथ
क्पृथक् ॥ नित्यनैमित्तिकंकर्मनत्याज्यंवैकदाचन ८६ नावमान्याभूसुराश्चद्वेषःकार्योनकस्यचित् ॥ हव्यंकव्यंसदादेयंदण्डनीयाश्चतस्कराः ८७ शासनीयादुराचार
तत्परायेजनाभुवि ॥ वन्दनीयासदामातावन्दनीयःसदापिता ८८ पूजनीयाःसदादेवाःकार्योधर्मोनिरन्तरम् ॥ चैत्रस्नानंसदाकार्यमयोध्यायामथापिवा ८९ राम
तीर्थेषुसर्वत्रकार्योधर्मोविशेषतः ॥ द्वारकांवैसदागत्वाकार्यंवैशाखमज्जनम् ९० ऊर्जेकाश्यांपञ्चनदेस्नातव्यंविधिपूर्वकम् ॥ गत्वाप्रयागंप्रत्यब्दंकर्तव्यंमाघमज्जनम्
९१ चातुर्मास्यव्रतादीनिकर्तव्यानिव्रतानिहि ॥ प्रत्यंगणेषुतुलसीपूजनीयाहिसर्वदा ९२ ननिराकरणीयोऽत्रत्वतिथिश्चकदाचन ॥ नविप्रयाञ्चाकर्तव्याह्यृषाकापि
कदाचन ९३ सर्वस्वमपिदातव्यंभूसुरायस्पृहान्विते ॥ गृहेग्रामेचकलहोनैवकार्यःकदाचन ९४ सदागुरुर्वंदनीयःकर्तव्यंश्रवणंसदा ॥ प्रातःस्नानंसदाकार्यंहोतव्यावि
विनाऽग्नयः ९५ कार्योजपःशंकरस्यध्येयोनित्यंमहेश्वरः ॥ एकांतेहितपःकार्यंद्वाभ्यामध्ययनंतथा ९६ त्रिभिर्गीतानिकार्याणिचतुर्भिर्विचरेत्पथि ॥ परदाररति
स्त्याज्यानावलोक्याऽन्यकामिनी ९७ परलक्ष्म्याःस्पृहाकार्यानानरैश्चकदाचन ॥ तीर्थंविनापुण्यकालेनस्नातव्यंगृहेष्वपि ९८ नद्वेष्यागणकावैद्यास्तेपोष्याश्चपरे
पुरे ॥ नवेश्यागमनंकार्यंनदासींस्पृहयेद्धृदि ९९ नित्यकर्मयथाकालेकर्तव्यंसर्वदानरैः ॥ नावमान्याहिगुरवःपरनिंदांनकारयेत् १०० जलाशयावनेकार्यारोपणीयान
गाःपथि ॥ धर्मशालापृथक्कार्यानननग्नोवीक्षयेद्धधूम् १ अन्नसत्राणिकार्याणिपुरेग्रामेवनेतथा ॥ प्रकुर्वंतुवनेरक्षांमार्गेस्थानांवनेचराः २ भयंमास्तुवनेकापिनिशायां
मार्गगामिनाम् ॥ वैश्येभ्यस्तुकरोग्राह्योनेतरेषांकदाचन १०३ पादयोःपादुकेहृत्वातीर्थदेवंगुरुंप्रति ॥ गोष्ठंवृन्दावनंहोमशालांगच्छेन्नसर्वदा १०४ पाराय
णानिग्रंथानांवेदानांचसदानरैः ॥ कर्तव्यानितुनिष्कामंमासकामानिकारयेत् ५ यतयोवन्दनीयाश्चभोजनीयागृहेगृहे ॥ यतयेकमण्डलवःकौपीनंपादुकास्तथा ६

१ वृक्षाः ।

वंशदण्डाःसदादेयाःसदातोष्याःसुभाषणैः ॥ नखेदयेद्वधूंस्वीयांदिनेनिद्रांनकारयेत् ७ हरिदिन्यांनभोक्तव्यमुपोष्याचचतुर्दशी ॥ कृष्णपक्षभवातस्यांरात्रौकार्यंशिवार्च
नम् ८ नानामहोत्सवाद्यैश्चयथाविधिपुरःसरम् ॥ अष्टमीकृष्णपक्षस्यसदोपोष्याशुभातिथिः ९ देवालयेषुकर्तव्यावलयोभक्तिपूर्वकाः ॥ नानापक्वान्ननैवेद्यान्देवेभ्यश्च
समर्पयेत् ११० धेनुदानंवाजिदानंगजदानंप्रकारयेत् ॥ भूसुरेभ्यःप्रदेयानिगृहदानानिसादरम् ११ गेहेगेहेसदाकार्यंधेनुविप्रप्रपूजनम् ॥ वसन्तेचन्दनंदेयंछत्राणिव्य
जनानिच १२ पानकंजलकुंभांश्चकार्यंपादावनेजनम् ॥ दधितक्रंहिजंबीरंदेयंविप्रेभ्यआदरात् १३ कार्तिकेदीपदानानिरात्रौजागरणानिच ॥ तुलसीसेवनंधात्रीछाया
माश्रित्यभोजनम् १४ गीतनृत्यादिकरणंविष्णोरग्रेनिरंतरम् ॥ त्रिपुरारेःसमीपेहिपौर्णिमायांहिकार्तिके १५ करणीयोमहादाहोघृताक्तवर्तिकादिभिः ॥ माघेदेयानिका
ष्ठानिकंबलाश्चित्रितास्तथा १६ चैत्रेतांबूलदानंचतथारम्भाफलानिच ॥ उर्वारुकानिदेयानिचन्दनंदधितक्रकम् १७ आदर्शदानंकस्तूरीदानंजातिफलस्यच ॥ एला
कर्पूरदानानिमधुमासिप्रकारयेत् १८ पदाग्रजंनस्पृशेच्चनपादंघर्षयेत्पदा ॥ द्वाभ्यांकराभ्यांकंडूर्तिमस्तकस्यनकारयेत् १९ दातव्यःकरभारोहिविनाविप्रैर्नृपायाहि ॥
नोपेक्षणीयोराज्ञश्चजन्त्रैर्दंडःकदाचन १२० माननीयाश्चश्वशुराःपोष्याःपाल्याःसदैवहि ॥ सुहृदस्तोषणीयाश्चमित्रेकोपंनकारयेत् २१ नकर्तव्योरिपूणांचविश्वासश्च
कदाचन ॥ कार्पण्यतानैवकार्यादानकर्मसुसर्वदा २२ नद्यूतेनसदाकार्याक्रीडादारिद्र्यसूचिनी ॥ नश्रोतव्याकदावार्तामद्यानांचनरोत्तमैः २३ तीर्थयात्रासदाकार्यांक
चक्रकादिसमाचरेत् ॥ कार्यंलिंगार्चनंनित्यंकोटिलिंगानिश्रावणे २४ कर्तव्यानिनरैर्भक्त्यासदैवापिचकारयेत् ॥ लघुरुद्रान्महारुद्रानतिरुद्रान्समाचरेत् २५ दानानि
पुस्तकानांचकर्तव्यानिनिरंतरम् ॥ कीर्तनानिचकार्याणिदेवागारेषुवागृहे २६ साधूनांपूजनंकार्यंनमस्कार्यःसदारविः ॥ ग्रामेग्रामेवायुपुत्रप्रतिमाःसर्वदापृथक् २७
सिंदूराक्ताश्चतैलाक्ताःपूजनीयानिरंतरम् ॥ चतुर्थ्यांगणराजस्यपूजनानिप्रकारयेत् २८ अर्पयेद्गणराजायमोदकान्पूर्णपूरितान् ॥ पंचखाद्यानिसिंदूरदूर्वादीन्यर्पये
त्सदा २९ सदाऽऽत्मचर्चाकर्तव्यास्तोत्रपाठान्प्रकारयेत् ॥ गीतायाःपठनंकार्यंवेदानध्यापयेत्सदा १३० सदैवशांतिसूक्तानिपुण्यसूक्तान्यनेकशः ॥ पुण्यंपुरुषसूक्तंच
श्रीसूक्तादीनिवैपठेत् ३१ सदाधर्मेमतिःकार्याकार्योधर्मस्यसंग्रहः ॥ दुष्टबुद्धिःसदात्याज्यापातकंपरिमार्जयेत् ३२ ज्ञातव्यंचपलंचायुःक्रूरोज्ञेयोयमोमहान् ॥ दारुणा
नारकीपीडास्मर्तव्याहृदिसर्वदा ३३ गतस्तातोमृतामातागतश्चप्रपितामहः ॥ पितामहोगतश्चेतिगमनंस्वंनिरीक्षयेत् ३४ गतंयथाऽत्रबालत्वंतारुण्यंचगतंतथा ॥
तथागच्छातिवार्धक्यंस्मरध्वंयमशासनम् ३५ गतादंतागतेनेत्रेश्लथाजातात्वगत्रहि ॥ कृष्णकेशाःसिताजातामृत्युर्ज्ञेयःपुरःस्थितः ३६ दानेविलंबोनोकार्यःकार्यंचित्तं
सुनिर्मलम् ॥ तुषवच्चधनंदेयंमाकार्पण्यात्प्ररक्षयेत् ३७ एवंश्रीरामदूतास्तेसप्तद्वीपांतरस्थितान् ॥ श्रावयित्वाराघवाज्ञांमहादुंदुभिनिःस्वनैः ३८ अयोध्यांस्वांययुः
सर्वेरामंप्रत्तंन्यवेदयन् ॥ संश्रावितातवास्माभिश्चाज्ञासर्वान्जनान्मुहुः ३९ सप्तद्वीपेषुसर्वत्रदुंदुभीनांमहास्वनैः ॥ तत्तेषांवचनंश्रुत्वारामस्तुष्टोऽभवत्तदा १४० एवंरामेण
भूम्यांहिचरित्राणिमहांतिच ॥ आचरितान्यनेकानिकस्तान्यत्रवदिष्यति ४१ एवंशिष्यमयाप्रोक्तंराज्यकांडंमनोरमम् ॥ चतुर्विंशत्सुसर्गैश्चमहामंगलकारकम् ४२

राज्यकांडंनृपायत्रपठंतिभक्तितत्पराः ॥ नतेराज्यात्परिभ्रष्टाभवन्तिह्किदाचन ४३ राज्यकांडंमहापुण्यंमहामांगल्यदायकम् ॥ येशृण्वंतिनराभूम्यांतेमांगल्यंभजन्ति
हि ४४ एकैकत्रांघ्रितैःसर्गैरेकैकेनक्षयेनच ॥ सप्तचत्वारिंशद्दिनैरनुष्ठानंसुसिद्धिदम ४५ आधिपत्यंनराःकृत्वाराज्यकांडंपठंतिये ॥ आधिपत्यात्परिभ्रष्टानभवन्ति
कदाचन ४६ राज्यकांडंपठित्वातुरणेवादेजयोभवेत् ॥ शरणंशत्रवश्शीघ्रंयास्यंत्येतच्छ्रवादिना ४७ आनन्दरामायणमध्यसंस्थंयेराज्यकांडंमनुजाःपठंति ॥ राज्या
च्च्युताराज्यपदंलभन्तेभवन्तिभ्रष्टानतुतेपदस्थाः ४८ आनन्दरामायणमेतदुत्तमंतत्रापिकांडेषुविचित्रमुत्तमम् ॥ श्रीराज्यकांडंपरमंसुसौख्यदंसदाऽतिभक्त्याश्रवणी
यमादरात् ४९ राज्यस्थितैर्वाव्यवसायतत्परैस्सदैवमेतच्छ्रवणीयमादरात् ॥ उत्साहकालेव्रतबंधमंगलेविवाहकालेपठनीयमुत्तमम् १५० श्रीराज्यकांडंश्रुतिसौख्यदा
यकंपुण्येषुकालेषुपठंतियेनराः ॥ लभंतिसौख्यान्यतिमंगलानितेगच्छंतिविष्णोर्वरयामगाःपदम् ५१ पुण्यंपवित्रंपरमंविचित्रंश्रीरामचंद्रस्यकथानकंसदा ॥ भ
क्त्यामुनीनामपिमंगलप्रदंश्रोतव्यमेतत्पठनीयमादरात् ॥ १५२ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये राज्यकांडे उत्त
रार्धे उमामहेश्वरसंवादे रामदासविष्णुदाससंवादे यमशिक्षाकरणं सुमन्त्रवैकुण्ठारोहणं प्रजोपदेशकरणंनाम चतुर्विंशः सर्गः ॥ २४ ॥ ॥ ७ ॥ ॥ ॥
॥ श्रीरामचन्द्रार्पणमस्तु ॥ ॥ ॥ ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ इति श्रीमदानन्दरामायणे राज्यकाण्डे उत्तरार्धः समाप्तः ॥

॥ श्रीगणेशायनमः ॥ ॥ अथमनोहरकांडप्रारंभः ॥ ॥ विष्णुदासउवाच ॥ गुरोतेप्रष्टुमिच्छामियत्तत्त्वंवक्तुमर्हसि ॥ वेदवाक्यैःपुराप्रोक्तंनारदेनमहात्मना १ रामा
यणंवाल्मीकयेसंक्षेपाद्वेतितेऽकथि ॥ तावदेवार्थमादायश्लोकरूपंवदस्वमाम् २ श्रीरामदासउवाच ॥ सम्यक्पृष्टंत्वयावत्ससावधानमनाःशृणु ॥ यत्पृष्टंचत्वयासर्वंतद्वदा
मितवाग्रतः ३ नारदाद्वेदवाक्यैश्चयथावाल्मीकिनाश्रुतम् ॥ तावदेवार्थमादायतेनवाल्मीकिनापुरा ४ शतश्लोकमितंरामचरितंपापनाशनम् ॥ शतकोटिमितायां
स्वकवितायांमनोरमम् ५ आदावेवोक्तमेवास्तितत्तवाग्रेवदाम्यहम् ॥ शतश्लोकमितंरम्यंलघुरामायणाह्वयम् ६ कूजंतंरामरामेतिमधुरंमधुराक्षरम् ॥ आरुह्यकविता
शाखांवंदेवाल्मीकिकोकिलम् ७ वाल्मीकेर्मुनिसिंहस्यकवितावनचारिणः ॥ शृण्वन्रामकथानादंकोनयातिपरांगतिम् ८ यःपिबन्सततंरामचरितामृतसागरम् ॥ अतृ
प्तस्तंमुनिंवंदेप्राचेतसमकल्मषम् ९ गोष्पदीकृतवारीशंमशकीकृतराक्षसम् ॥ रामायणमहामालारत्नंवंदेऽनिलात्मजम् १०. अंजनीनंदनंवीरंजानकीशोकनाशनम् ॥
कपीशमक्षहंतारंवंदेलंकाभयंकरम् ११ उल्लंघ्यसिंधोःसलिलंसलीलंयःशोकवन्हिंजनकात्मजायाः ॥ आदायतेनैवददाहलंकांनमामितंप्रांजलिरांजनेयम् १२ मनोजवं
मारुततुल्यवेगंजितेंद्रियंबुद्धिमतांवरिष्ठम् ॥ वातात्मजंवानरयूथमुख्यंश्रीरामदूतंमनसास्मरामि १३ रामायरामभद्रायरामचंद्रायवेधसे ॥ रघुनाथायनाथायसीतायाः
पतयेनमः १४ जितंभगवतातेनहरिणालोकधारिणा ॥ अजेनविश्वरूपेणनिर्गुणेनगुणात्मना १५ ॥ इतिमंगलाचरणं ॥ तपःस्वाध्यायनिरतंतपस्वीवाग्विदांवरम् ॥
नारदंपरिपप्रच्छवाल्मीकिर्मुनिपुंगवम् १ कोन्वस्मिन्सांप्रतंलोकेगुणवान्कश्चवीर्यवान् ॥ धर्मज्ञश्चकृतज्ञश्चसत्यवाक्योदृढव्रतः २ चारित्रेणचकोयुक्तःसर्वभूतेषुकोहि
तः ॥ विद्वान्कःकःसमर्थश्चकश्चैकःप्रियदर्शनः ३ आत्मवान्कोजितक्रोधोद्युतिमान्कोऽनसूयकः ॥ कस्यबिभ्यतिदेवाश्चजातरोषस्यसंयुगे ४ एतदिच्छाम्यहंश्रोतुंपरं
159 कौतूहलंहिमे ॥ महर्षेत्वंसमर्थोऽसिज्ञातुमेवंविधंनरम् ५ श्रुत्वाचैतत्त्रिकालज्ञोवाल्मीकेर्नारदोवचः ॥ श्रूयतामित्युपामंत्र्यप्रहृष्टोवाक्यमब्रवीत् ६ बहवोदुर्लभाश्चैवयेत्वया
कीर्तितागुणाः ॥ मुनेवक्ष्याम्यहंबुद्ध्वातैर्युक्तःश्रूयतांनरः ७ इक्ष्वाकुवंशप्रभवोरामोनामजनैःश्रुतः ॥ नियतात्मामहावीर्योद्युतिमान्धृतिमान्वशी ८ बुद्धिमान्नीतिमा
न्वाग्मीश्रीमाञ्शत्रुनिबर्हणः ॥ विपुलांसोमहाबाहुःकंबुग्रीवोमहाहनुः ९ महोरस्कोमहेष्वासोगूढजत्रुररिंदमः ॥ आजानुबाहुःसुशिराःसुललाटःसुविक्रमः १० समः
समविभक्तांगःस्निग्धवर्णःप्रतापवान् ॥ पीनवक्षाविशालाक्षोलक्ष्मीवाञ्शुभलक्षणः ११ धर्मज्ञःसत्यसंधश्चप्रजानांचहितेरतः ॥ यशस्वीज्ञानसंपन्नःशुचिर्वश्यःसमाधि
मान् १२ प्रजापतिसमःश्रीमान्धातारिपुनिषूदनः ॥ रक्षिताजीवलोकस्यधर्मस्यपरिरक्षिता १३ रक्षितास्वस्यधर्मस्यस्वजनस्यचरक्षिता ॥ वेदवेदांगतत्त्वज्ञोधनुर्वेदे
चनिष्ठितः १४ सर्वशास्त्रार्थतत्त्वज्ञःस्मृतिमान्प्रतिभानवान् ॥ सर्वलोकप्रियःसाधुरदीनात्माविचक्षणः १५ सर्वदाऽभिगतःसद्भिःसमुद्रइवसिंधुभिः ॥ आर्यः
५६ सर्वसमश्चैवसदैवप्रियदर्शनः १६ सचसर्वगुणोपेतःकौसल्यानंदवर्धनः ॥ समुद्रइवगांभीर्येधैर्येणहिमवानिव १७ विष्णुनासदृशोवीर्येसोमवत्प्रियदर्शनः ॥ कालाग्निसदृशः
क्रोधेक्षमयापृथिवीसमः १८ धनदेनसमस्त्यागेसत्येधर्मइवापरः ॥ तमेवंगुणसंपन्नंरामंसत्यपराक्रमम् १९ ज्येष्ठंज्येष्ठगुणैर्युक्तंप्रियंदशरथःसुतम् ॥ प्रकृतीनांहितैर्युक्तं

प्रकृतिप्रियकाम्यया २० यौवराज्येनसंयोक्तुमैच्छत्प्रीत्यामहीपतिः ॥ तस्याभिषेकसंभारान्दृष्ट्वाभार्याचकैकयी २१ पूर्वंदत्तवरादेवीवरमेनमयाचत ॥ विवास
नंचरामस्यभरतस्याभिषेचनम् २२ ससत्यवचनाद्राजाधर्मपाशेनसंयतः ॥ विवासयामाससुतंरामंदशरथःप्रियम् २३ सजगामवनंवीरःप्रतिज्ञामनुपालयन् ॥ पितुर्व
चननिर्देशात्कैकेय्याःप्रियकारणात् २४ तंव्रजंतंप्रियोभ्रातालक्ष्मणोऽनुजगामह ॥ स्नेहाद्विनयसंपन्नःसुमित्रानंदवर्धनः २५ भ्रातरंदयितोभ्रातुःसौभ्रात्रमनुदर्शयन् ॥
रामस्यदयिताभार्यानित्यंप्राणसमाहिता २६ जनकस्यकुलेजातादेवमायेवनिर्मिता ॥ सर्वलक्षणसंपन्नानारीणामुत्तमावधूः २७ सीताप्यनुगतारामंशशिनंरोहिणीयथा ॥
पौरैरनुगतोदूरंपित्रादशरथेनच २८ शृंगवेरपुरेसूतंगंगाकूलेव्यसर्जयत् ॥ गुहमासाद्यधर्मात्मानिषादाधिपतिंप्रियम् २९ गुहेनसहितोरामोलक्ष्मणेनचसीतया ॥ तेवनेन
वनंगत्वानदीस्तीर्त्वाबहूदकाः ३० चित्रकूटमनुप्राप्यभरद्वाजस्यशासनात् ॥ रम्यमावसथंकृत्वारममाणावनेत्रयः ३१ देवगंधर्वसंकाशास्तत्रतेन्यवसन्सुखम् ॥ चित्र
कूटगतेरामेपुत्रशोकातुरस्तदा ३२ राजादशरथःस्वर्गंजगामविलपन्सुतम् ॥ गतेतुतस्मिन्भरतोवसिष्ठप्रमुखैर्द्विजैः ३३ नियुज्यमानोराज्यायनैच्छद्राज्यंमहाबलः ॥
सजगामवनंवीरोरामपादप्रसादकः ३४ गत्वातुसुमहात्मानंरामंसत्यपराक्रमम् ॥ अयाचद्भ्रातरंराममार्यभावपुरस्कृतः ३५ त्वमेवराजाधर्मज्ञइतिरामंवचोऽब्रवीत् ॥
रामोऽपिपरमोदारःसुमुखःसुमहायशाः ३६ नचैच्छत्पितुरादेशाद्राज्यंरामोमहाबलः ॥ पादुकेचास्यराज्यायन्यासंदत्वापुनःपुनः ३७ निवर्तयामासततोभरतंभरता
ग्रजः ॥ सकाममनवाप्यैवरामपादावुपस्पृशन् ३८ नंदिग्रामेऽकरोद्राज्यंरामागमनकांक्षया ॥ गतेतुभरतेश्रीमान्सत्यसंधोजितेंद्रियः ३९ रामस्तुपुनरालक्ष्यनागर
स्यजनस्यच ॥ तत्रागमनमेकाग्रोदंडकान्प्रविवेशह ४० प्रविश्यतुमहारण्यंरामोराजीवलोचनः ॥ विराधंराक्षसंहत्वाशरभंगंददर्शसः ४१ सुतीक्ष्णंचाप्यगस्त्यं
चह्यगस्त्यभ्रातरंतथा ॥ अगस्त्यवचनाच्चैवजग्राहैंद्रंशरासनम् ४२ खड्गंचपरमप्रीतस्तूणीचाक्षयसायकौ ॥ वसतस्तस्यरामस्यवनेवनचरैःसह ४३ ऋषयो
ऽभ्यागमन्सर्वेवधायासुररक्षसाम् ॥ सतेषांप्रतिशुश्रावराक्षसानांवधायच ४४ प्रतिज्ञातश्चरामेणवधःसंयतिरक्षसाम् ॥ ऋषीणामग्निकल्पानांदंडकारण्यवासिनाम् ४५
तेनतत्रैववसताजनस्थाननिवासिनी ॥ विरूपिताशूर्पणखाराक्षसीकामरूपिणी ४६ ततःशूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् ॥ खरंत्रिशिरसंचैवदूषणंचैवराक्षसम्
४७ निजघानरणेरामस्तेषांचैवपदानुगान् ॥ वनेतस्मिन्निवसताजनस्थाननिवासिनाम् ४८ रक्षसांनिहतान्यासन्सहस्राणिचतुर्दश ॥ ततोज्ञातिवधंश्रुत्वारावणःक्रोध
मूर्छितः ४९ सहायंवरयामासमारीचंनामराक्षसम् ॥ वार्यमाणःसुबहुशोमारीचेनसरावणः ५० नविरोधोबलवताक्षमोरावणतेनते ॥ अनादृत्यतुतद्वाक्यंराव
णःकालचोदितः ५१ जगामसहमारीचस्तस्याश्रमपदंतदा ॥ तेनमायाविनादूरमपवाह्यनृपात्मजौ ५२ जहारभार्यांरामस्यगृध्रंहत्वाजटायुषम् ॥ गृध्रंचनिहतं
दृष्ट्वाहृतांश्रुत्वाचमैथिलीम् ५३ राघवःशोकसंतप्तोविललापाकुलेंद्रियः ॥ ततस्तेनैवशोकेनगृध्रंदग्ध्वाजटायुषम् ५४ मार्गमाणोवनेसीतांराक्षसंसददर्शह ॥

१ वनवासंचेतिपाठः । २ तेवनेनपाद्वचारः ।

कबंधंनामरूपेणविकृतंघोरदर्शनम् ५५ तंनिहत्यमहाबाहुर्ददाहस्वर्गतश्चसः ॥ सचास्यकथयामासशबरींधर्मचारिणीम् ५६ श्रमणांधर्मनिपुणामभिगच्छेतिराघव ॥
सोभ्यगच्छन्महातेजाःशबरींशत्रुसूदनः ५७ शबर्यापूजितःसम्यग्रामोदशरथात्मजः ॥ पंपातीरेहनुमतासंगतोवानरेणह ५८ हनुमद्वचनाच्चैवसुग्रीवेणसमागमः ॥
सुग्रीवायचतत्सर्वंशंसद्रामोमहाबलः ५९ आदितस्तद्यथावृत्तंसीतायाश्चविशेषतः ॥ सुग्रीवश्चापितत्सर्वंश्रुत्वारामस्यवानरः ६० चकारसख्यंरामेणप्रीतश्चैवाग्निसा
क्षिकम् ॥ ततोवानरराजेनवैरानुकथनंप्रति ६१ रामायावेदितंसर्वंप्रणयाद्दुःखितेनच ॥ प्रतिज्ञातंचरामेणतदावालिवधंप्रति ६२ वालिनश्चबलंतत्रकथयामासवानरः ॥
सुग्रीवःशंकितश्चासीन्नित्यंवीर्येणराघवे ६३ राघवप्रत्ययार्थंतुदुन्दुभेःकायमुत्तमम् ॥ दर्शयामाससुग्रीवोमहापर्वतसन्निभम् ६४ उत्स्मयित्वामहाबाहुःप्रेक्ष्यचास्थिमहाब
लः ॥ पादांगुष्ठेनचिक्षेपसंपूर्णंदशयोजनम् ६५ बिभेदचपुनस्तालान्सप्तैकेनमहेषुणा ॥ गिरिंरसातलंचैवजनयन्प्रत्ययंतदा ६६ ततःप्रीतमनास्तेनविश्वस्तःसमहा
कपिम् ॥ किष्किंधांरामसहितोजगामचगुहांप्रति ६७ ततोऽगर्जद्धरिवरःसुग्रीवोहेमपिंगलः ॥ तेननादेनमहतानिर्जगामहरीश्वरः ६८ अनुमान्यतदातारांसुग्रीवेणस
मागतः ॥ निजघानचतत्रैनंशरेणैकेनराघवः ६९ ततःसुग्रीववचनाद्धत्वावालिनमाहवे ॥ सुग्रीवमेवतद्राज्येराघवःप्रत्यपादयत् ७० सचसर्वान्समानीयवानरान्वानरर्ष
भः ॥ दिशःप्रस्थापयामासदिदृक्षुर्जनकात्मजाम् ७१ ततोगृध्रस्यवचनात्संपातेर्हनुमान्बली ॥ शतयोजनविस्तीर्णंपुप्लुवेलवणार्णवम् ७२ तत्रलंकांसमासाद्यपुरींरावण
पालिताम् ॥ ददर्शसीतांध्यायन्तीमशोकवनिकांगताम् ७३ निवेदयित्वाऽभिज्ञानंप्रवृत्तिंचनिवेद्यच ॥ समाश्वास्यचवैदेहींमर्दयामासतोरणम् ७४ पंचसेनाग्रगान्हत्वा
सप्तमन्त्रिसुतानपि ॥ शूरमक्षंविनिष्पिष्यग्रहणंसमुपागमत् ७५ अस्त्रेणोन्मुक्तमात्मानंज्ञात्वापैतामहाद्वरात् ॥ मर्षयन्राक्षसान्वीरोयंत्रिणस्तान्यदृच्छया ७६ ततो
155 दग्ध्वापुरींलंकांऋतेसीतांचमैथिलीम् ॥ रामायप्रियमाख्यातुंपुनरायान्महाकपिः ७७ सोभिगम्यमहात्मानंकृत्वारामंप्रदक्षिणम् ॥ न्यवेदयदमेयात्मादृष्टासीतेतितत्
त्वतः ७८ ततःसुग्रीवसहितोगत्वातीरंमहोदधेः ॥ समुद्रंक्षोभयामासशरैरादित्यसन्निभैः ७९ दर्शयामासचात्मानंसमुद्रःसरितांपतिः ॥ समुद्रवचनाच्चैवनलंसेतुमका
रयत् ८० तेनगत्वापुरींलंकांहत्वारावणमाहवे ॥ रामःसीतामनुप्राप्यपरांव्रीडामुपागमत् ८१ तामुवाचततोरामःपरुषंजनसंसदि ॥ अमृष्यमाणासासीताविवेशज्व
लनंप्रति ८२ ततोऽग्निवचनात्सीतांज्ञात्वाविगतकल्मषाम् ॥ कर्मणातेनमहतात्रैलोक्यंसचराचरम् ८३ सदेवर्षिगणंतुष्टंराघवस्यमहात्मनः ॥ बभौरामःसुसंतुष्टःपूजि
तःसर्वदैवतैः ८४ अभिषिच्यतुलंकायांराक्षसेंद्रंविभीषणम् ॥ कृतकृत्यस्तदारामोविज्वरःप्रमुमोदह ८५ देवताभ्योवरंप्राप्यसमुत्थाप्यचवानरान् ॥ अयोध्यांप्रस्थितो
रामःपुष्पकेणसुहृद्वृतः ८६ भरद्वाजाश्रमंगत्वारामःसत्यपराक्रमः ॥ भरतस्यांतिकेरामोहनुमन्तंव्यसर्जयत् ८७ पुनराख्यायिकांजल्पन्सुग्रीवसहितस्तदा ॥ पुष्प
कंतत्समारुह्यनन्दिग्रामंययौतदा ८८ नन्दिग्रामेजटांहित्वाभ्रातृभिःसहितोऽनघः ॥ रामःसीतामनुप्राप्यराज्यंपुनरवाप्तवान् ८९ प्रहृष्टमुदितोलोकस्तुष्टःपुष्टःसुधा
र्मिकः ॥ निरामयोह्यरोगश्चदुर्भिक्षभयवर्जितः ९० नपुत्रमरणंकेचिद्द्रक्ष्यंतिपुरुषाःक्वचित् ॥ नार्यश्चाविधवानित्यंभविष्यंतिपतिव्रताः ९१ नचाग्निजंभयंकिंचिन्नाप्सु

मज्जंतिजंतवः ॥ नवातजंभयंकिंचिन्नापिज्वरकृतंतथा ९२ नचापिक्षुद्भयंतत्रनतस्करभयंतथा ॥ नगराणिचराष्ट्राणिधनधान्ययुतानिच ९३ नित्यप्रमुदिताःसर्वे यथाकृतयुगेतथा ॥ अश्वमेधशतैरिष्ट्वातथाबहुसुवर्णकैः ९४ गवांकोटचयुतंदत्वाब्रह्मलोकंगमिष्यति ॥ असंख्येयंधनंदत्वाब्राह्मणेभ्योमहायशाः ९५ राजवंश्यान्शत गुणान्स्थापयिष्यतिराघवः ॥ चातुर्वर्ण्यंचलोकेऽस्मिन्स्वेस्वेलोकेनियोक्ष्यति ९६ दशवर्षसहस्राणिदशवर्षशतानिच ॥ रामोराज्यमुपासित्वाब्रह्मलोकंप्रयास्यति ९७ इदंपवित्रंपापघ्नंपुण्यंवेदैश्चसंमितम् ॥ यःपठेद्रामचरितंसर्वपापैःप्रमुच्यते ९८ एतदाख्यानमायुष्यंपठन्रामायणंनरः ॥ सपुत्रपौत्रःसगणःप्रेत्यस्वर्गेमहीयते ९९ पठन्द्विजोवागृषभत्वमीयात्स्यात्क्षत्रियोभूमिपतित्वमीयात् ॥ वणिक्जनःपण्यपतित्वमीयाज्जनश्चशूद्रोऽपिमहत्त्वमीयात् १० एवंशिष्यनारदेनमुनिनायच्चधीमता ॥ वाल्मीकयेनेदवाक्यैर्यावन्मात्रंनिवेदितम् १ तावदेवार्थमादायश्लोकबद्धंमनोरमम् ॥ वाल्मीकिनाकृतंपूर्वंलघुरामायणाभिधम् २ शतश्लोकमितंस्वीयकवितायांचत न्मया ॥ तवाग्रेकथितंसर्वंश्रवणात्पुण्यवर्द्धनम् ३ ब्रह्मदत्तवरेणैवसर्वंज्ञात्वासवैमुनिः ॥ शतकोटिमितांरामक्रीडांश्लोकैर्बबन्धह १०४ ॥ ॥ इति श्रीआनन्दरामा यणे मनोहरकांडे लघुरामायणं नाम प्रथमःसर्गः ॥ १ ॥ ॥ श्रीरामदासउवाच ॥ ॥ अथैकदासभामध्येपौराजानपदादयः ॥ ज्ञात्वारामंपरात्मानंपप्रच्छुर्विन यान्विताः १ रामराममहाराजकिंचिदुपदिशस्वनः ॥ विषयासक्तचित्तानांयेनज्ञानंभविष्यति २ इतितेषांवचःश्रुत्वाराघवःसस्मितोऽब्रवीत् ॥ निरन्तरंह्युपदेशोयु ष्माभिःश्रूयतेनकिम् ३ प्रहरेप्रहरेरात्रौमद्दूतैःनि[illegible]सदा ॥ अस्तुतत्त्वगतंपूर्वमिदानींसकलैर्जनैः ४ अद्यमद्दूतवचनंनिशायांबुद्धिपूर्वकम् ॥ श्रुत्वाविचार्यपश्चान्मां प्रष्टव्यंयत्तुरोचते ५ तथेतिरामवचनात्सर्वेगत्वानिजंनिजम् ॥ गेहंतेस्वस्थचित्ताश्चस्वस्त्रीभिर्मंचकादिषु ६ दूतवाक्येदत्तकर्णारात्रौतस्थुरनिद्रिताः ॥ तावत्तेरामदू ताश्चसार्द्धयामेसदीपकाः ७ धृतशस्त्रादण्डहस्तानानावाहनसंस्थिताः ॥ गजेषुदुन्दुभीन्धृत्वातथावाद्यान्यनेकशः ८ धृत्वापृथक्पृथङ्नानायानेषुमंजुलानिहि ॥ रा जमार्गेषुसर्वेदीर्घशब्दानुदीरयन् ९ हेजनाःश्रूयतांसर्वैकिंमोहेनविनिद्रिताः ॥ नेयंनिद्रासमीचीनाकदाऽनर्थोभविष्यति १० स्वस्थचित्तास्त्वद्यसर्वेभूत्वानःश्रूयतांव चः ॥ नवद्वाराण्ययोध्यायामेकंतुलघुवर्तते ११ रामराज्येभयंनेतिकारणाद्द्वाररक्षकैः ॥ दीयन्तेवानदीयन्तेकपाटादीनिवैतदा १२ नार्गलाशृंखलादीनिसन्तिद्वारे षुभोजनाः ॥ कृष्णवर्णोमहांश्चोरोयाम्याशायांस्थितस्त्विति १३ श्रूयतेनकदादृष्टःकेनापिभुविसांप्रतम् ॥ एवंसत्यपिनोपेक्षारोगशांत्यैप्रकार्यते १४ गुप्तरूपास्तस्य दूताःसाकेतेविचरंतिहि ॥ नज्ञायतेकदाऽस्माभिर्नागराइवसंस्थिताः १५ आगतश्चेत्परोदूतस्त्वेकोदुर्गेतदाक्षणात् ॥ भेदंकृत्वातुसर्वत्रदुर्गपालोनिहन्यते १६ इत्थं श्रुतंसदाऽस्माभिस्ततस्त्वस्यांसहस्रशः ॥ वर्ततेपरदूताश्चनानावेषधराजनाः १७ जीवत्वयंचिरंराजाएवंसत्यपिनोभयम् ॥ अयोध्यायांजायतेहितद्बलंकोव दिष्यति १८ एभिर्दूतैस्तस्यराज्ञआत्मारामस्यचात्रहि ॥ करणीयंप्रभोःकिंहिसच्चिदानन्दरूपिणः १९ तेषांभयंतुयुष्माकंदुर्बलानांसदाऽस्तिहि ॥ अजापुत्रो ॥ २ ॥

१ श्रीयन्तेदत्तवत्वितीतिपाठः । २ यमदूताश्चेतिपाठः ।

दुर्वलोऽत्रबल्यर्थंदीयतेजनैः २० दत्तोवलिस्तुसिंहस्यकदाकेनश्रुतोऽत्र न ॥ अतोयूयंहीनबलाःकिंनिशायांविनिद्रिताः २१ कदाकृत्वाऽत्रतेभेदंचोरमत्रानयंतिहि ॥
सकालोज्ञायतेनैवतस्मान्निद्राशुभानहि २२ स्वस्थचित्तास्त्यक्तनिद्रास्त्वस्यांपुर्यामहर्निशम् ॥ यूयंभूत्वासदाखड्गःशितोधार्यःस्वसन्निधौ २३ कवचानिशरीरेषुस
दाधार्याणिभोजनाः ॥ धैर्यंधृत्वानभेतव्यंयोजागर्तिनिरन्तरम् २४ अयोध्यायांनतस्यास्तिचोरादपिकदाभयम् ॥ नैतद्विस्मरणीयंहिसदास्माकंवचःशुभम् २५ सा
वधानंसावधानंसावधानंसदाजनाः ॥ भवध्वंचात्रसाकेतपुरिस्थाहिनिरन्तरम् २६ इत्युक्तातेराजदूता कृत्वादुन्दुभिनिःस्वनान् ॥ वादयामासुर्वाद्यानिमंजुलानिमहां
तिच २७ एवंसर्वत्रपुर्यांतेविचेरूरामसेवकाः ॥ एवंनिशायांतैर्दूतैस्त्रिवारंकिंचिदंतरात् २८ पौराद्याबोधिताःप्रापुर्ज्ञानंतस्यविचारतः ॥ ततःप्रभातेतेसर्वेपौराजान
पदादयः २९ सभायांराघवंनत्वातुष्टाःप्रोचुःपुरस्थिताः ॥ रामराजीवपत्राक्षत्वद्दूतवचनानिहि ३० श्रूयंतेऽत्रसदाऽस्माभिर्नविचारस्तदाकृतः ॥ अद्यास्माभिर्निशा
यांहित्वद्दूतवचनंशुभम् ३१ श्रुत्वाकृतोविचारोहिहृदिबुद्ध्यातवाज्ञया ॥ लब्धंज्ञानंप्रभोऽस्माभिस्त्वज्ज्ञानंतद्धृतंहिनः ३२ नेदानीमुपदेशंहित्वत्तोवांछामराघव ॥ इति
तेषांवचःश्रुत्वातान्रामःप्राहसस्मितः ३३ कथंलब्धंहितज्ज्ञानंकिंश्रुतंकिंविचिंतितम् ॥ तन्मेऽग्रेकथनीयंहिविस्तरेणयथाक्रमम् ३४ इतिरामवचःश्रुत्वाजनाःप्रोचु
र्मुदान्विताः ॥ शृणुराममहाबाहोयल्लब्धंज्ञानमुच्यते ३५ मोहएवनिशाज्ञेयानिद्राभ्रांतिस्तुकथ्यते ॥ नेयंभ्रांतिःसमीचीनाऽनर्थोमृत्युर्ग्रसिष्यति ३६ अयोध्येयंस्वीय
देहस्तत्रछिद्राणिवैनव ॥ लघुतन्मस्तकेज्ञेयंदंताद्याद्वाररक्षकाः ३७ पक्ष्मोष्ठादीनिद्वारेषुकपाटानीरितानिच ॥ प्राणाश्चतेराजदूताःपुर्यांनित्यमटंतिहि ३८ आ
त्माज्ञेयस्त्वत्रराजाजीवश्चेंद्रियदेवताः ॥ ज्ञेयाश्चदेहनगरेपौरास्तत्ररघूत्तम ३९ कालोज्ञेयोमहाचोरोत्रिदोषाद्यागदाश्चये ॥ कालस्यसेवकाज्ञेयानागराइवसंस्थिताः
४० दुर्बलास्तेऽत्रजीवाद्यास्तेषामेवाऽस्तितद्भयम् ॥ किंमोहेपतिताभ्रांताःकालमत्रानयन्तिते ४१ नज्ञायतेमृत्युकालस्तस्माद्भ्रांतिःशुभाऽत्र न ॥ ज्ञानमेवमहाखड्गोवै
राग्यंतीक्ष्णतास्वसेः ४२ सच्छीलंकवचंज्ञेयंधैर्यंभक्तिर्दृढात्वयि ॥ आत्मज्ञानेनजागर्तिनतस्यास्तिभयंकदा ४३सावधानंज्ञाननिष्ठैर्भवितव्यंसदाऽत्रहि ॥ वाद्यानिवचनान्ये
वसाधूनांबोधदानिवै ४४ सदाधृतानिहृदयेतानिबुद्ध्याऽवलोकयेत् ॥ मोहक्षयःप्रभातोऽयमिदानींत्वत्पुरःस्थिताः ४५ त्वमेवात्मासभेयंतेनिवासस्थानमीरितम् ॥
तवाग्रेयेस्थिताःसर्वेवयंत्वांमुक्तिमागताः ४६ किमिदानींतिप्रष्टव्यंचोपदेश्यंत्वयाऽद्यकिम् ॥ तवकीर्तनमात्रेणनरामुक्तिंलभंतिहि ४७ वयंत्वदंतिकाःसर्वेमुक्ताएवनसं
शयः ॥ इतितेषांवचःश्रुत्वासस्मितःप्राहतान्प्रभुः ४८ सम्यग्बुद्ध्यापरिज्ञातंसुखेस्थेयंसदाजनाः ॥ नान्यथास्वमतिःकार्याऽऽत्मनोरामंपृथक्स्थितम् ४९ इत्युक्त्वा
सकलान्रामोययौसीतागृहंमुदा ॥ पौराद्यागतमोहास्तेचात्मानंमेनिरेपरम् ५० एवंरामेणभोशिष्यदूतवाक्यैःसुबोधिताः ॥ पौराःसर्वेयथातत्त्वमयातेविनिवेदितम् ५१
एकदाकैकयीराममागत्यप्रणिपत्यसा ॥ अब्रवीन्मधुरंवाक्यंविनयात्पुरतःस्थिता ५२ रामराजीवपत्राक्षमयायदपराधितम् ॥ पुराऽज्ञानात्त्वयातत्क्षंतव्यं वैकृपालुना ५३

१ त्वनग्यथेतिपाठः । २ राममेकांतेहतिपाठः ।

अहंतेशरणंप्राप्तामामुद्धरजगत्पते ॥ किंचिदुपदिशस्वत्वंयेनाज्ञानंविनश्यति ५४ ततस्यावचनंश्रुत्वारामोराजीवलोचनः ॥ उवाचकैकयींवाक्यंमधुरंप्रहसन्निव ५५
नत्वयामेऽपराद्धंहिमच्छंदाच्चसरस्वती ॥ स्थित्वातवास्येसाप्राहवरयाच्ञादियत्पुरा ५६ त्वंचकैकयिशुद्धासित्वयिक्रोधोनमेऽस्तिवै ॥ श्वस्त्वांनीत्वोपदेशंहिकारयिष्य
तिलक्ष्मणः ५७ इत्युक्त्वातांविसर्ज्याऽथलक्ष्मणंराघवोऽब्रवीत् ॥ शिबिकास्याहिकैकेयीश्वःप्रभातेगिरामम ५८ त्वयानेयाबहिःपुर्याःसरय्वाश्वतटंप्रति ॥ अविसमूह
संस्थानंवर्ततेयत्रतत्रहि ५९ अविवृंदांतिकंनीत्वाकैकयींशिबिकास्थिताम् ॥ अविवाक्यानिश्राव्याणिमुहूर्तंममवाक्यतः ६० आनेतव्याततश्चेयंकैकयीममसन्निधौ ॥
इतितद्रामवचनंश्रुत्वासलक्ष्मणोपिच ६१ तथेत्युक्त्वातदारामंतूष्णींतस्थौतदग्रतः ॥ अथप्रभातेसौमित्रिर्गत्वाभरतमंदिरे ६२ शिबिकायांसकैकयींसमारुह्यमुदान्वि
ताम् ॥ दासीभिःसेवकैश्चैववेष्टितांवित्रपाणिभिः ६३ तांनिनायबहिःपुर्याःशरय्वाश्वतटेवरे ॥ अवियूथांतिकंयानंस्थापयामासलक्ष्मणः ६४ सुस्नातांकैकयींविप्रास्तेज्ञा
त्वादाक्षिण्येच्छया ॥ दुद्रुवुःशिबिकापृष्ठेलक्ष्मणस्तान्न्यवारयत् ६५ अतिमूर्खांश्चपंग्वाद्यायेतेज्ञेयाद्विजादयः ॥ दानार्हाःपंडितानैतेश्रोत्रियानप्रतिष्ठिताः ६६ ततो
दूतान्निराकृत्यमुक्ताजालानिलक्ष्मणः ॥ ऊर्ध्वंकृत्वास्वहस्ताभ्यांकैकयींवाक्यमब्रवीत् ६७[1] पश्यकैकयिमातस्त्वमवियूथंपुरःस्थितम् ॥ रामेणप्रेषिताऽसित्वमुपदेशार्थ
मादरात् ६८ तत्सौमित्रिवचःश्रुत्वाऽऽश्चर्ययुक्ताऽथकैकयी ॥ प्रतारिताऽहंरामेणकिमत्रप्रेष्यसादरम् ६९ इतितर्कान्कुर्वतीसातस्थौतूष्णींक्षणंतदा ॥ तावच्छुश्राव
सामेमेत्यविवाक्यानिवैमुहुः ७० तानिश्रुत्वाऽथकैकेयीतदाचित्तेविचारयत् ॥ मेमेत्वितिमुहुश्चात्रकिमर्थंवचनानिहि ७१ अव्यःसर्वावदंत्यत्रगूढोऽर्थस्त्वत्रवर्तते ॥
ततोनिमील्यकैकयीनेत्रंध्यात्वाक्षणंहृदि ७२ सर्वंज्ञात्वागताज्ञानातुतोषनितरांतदा ॥ ततःस्मिताननाप्राहलक्ष्मणंपुरतःस्थितम् ७३ लब्धंक्षानंमयाबालनयमांराघवं
प्रति ॥ इतितस्यावचःश्रुत्वामुक्ताजालानिमुच्यसः ७४ दूतान्दूरगतान्वेगादाहूयनगरींप्रति ॥ कैकयीमानयामाससीतागेहंविवेशसा ७५ तत्रदृष्ट्वासमासीनंसीतया
रघुनंदनम् ॥ वद्धमानंस्वाशिरसिचित्रोष्णीषंकरेणहि ७६ सीताकरधृतादर्शेपश्यंतंस्वमुखोत्पलम् ॥ तंनत्वापरयाभक्त्याकैकयीवाक्यमब्रवीत् ७७ रामतेकृपयालब्ध
मविवाक्यविचारतः ॥ सज्ज्ञानंमेगतोमोहश्चेदानींनप्रयोजनम् ७८ उपदेशस्यतेरामसदामुक्ताऽस्मिराघव ॥ ततस्यावचनंश्रुत्वासस्मितःप्राहतांविभुः ७९ कथंज्ञातं
त्वयाज्ञानंविचारश्चकथंकृतः ॥ तत्सर्वंविस्तरेणैवममाग्रेवदकैकयि ८० तद्रामवचनंश्रुत्वाकैकयीप्राहराघवम् ॥ शृणुरामयथालब्धंज्ञानंतत्तेवदाम्यहम् ८१ मयाऽविवच
नान्येवतत्राविसूथसन्निधौ ॥ श्रुत्वामेमेत्वितितदाहृदयेमंत्रितंक्षणम् ८२ मेमेत्वितिममैताश्चश्रावयंतिमुहुर्मुहुः ॥ श्रुत्वामेमेत्वितिमयाचेद्वाच्यंतर्हिवैमया ८३ मेमेप्रक
थ्यतेनित्यंपशुपुत्रगृहादिषु ॥ अतोवक्तुंनोपदेशोऽयंमामेताभिरुच्यते ८४ तद्यंचोपदेशोऽद्यनिषेधेमांप्रकीर्त्यते ॥ अतोऽहंनकदामेमेप्रवदामित्वितःपरम् ८५ मे
मातामेसुतश्चाऽयंमेबंधुर्मेगृहंवरम् ॥ मेराज्यंमेसपत्नीयंमेसापत्न्यसुतस्त्वयम् ८६ मेशरीरमिदंकांतंमेदिव्याभरणंवरम् ॥ मेमंथराप्रियादासीपुत्रादीत्यशुभामतिः ८७

---

[1] सौमित्रिरुवाचमातस्त्वमितिपाठः ।

यास्तिमेमेत्वितिमयिसात्यक्तव्योतिमामतः ॥ बोधयामासुर्वचनैःस्वीयैःस्पष्टंरघूत्तम ८८ अन्यद्ग्रामनरान्सर्वांस्ताश्चान्योबोधयंतिहि ॥ मेमेबुद्ध्यासदाऽस्माभिःपूर्वज
न्मनिवर्त्तितम् ८९ देहस्त्वतोह्यवेलैर्ध्योयुष्माभिर्ममतिस्त्वया ॥ सर्वतःसाऽत्रत्यक्तव्यानांगिकार्याकदाचन ९० मेमेमत्यागतिर्जातायाऽस्माकंसकलाजनाः॥ मेमेबुद्ध्या
हियुष्माकंगतिःसैवभविष्याति ९१ एवंताबोधयंत्यत्रजनान्स्ववचनैःसदा ॥ नतद्वाक्यंजनैर्बुद्ध्याकदाचित्तेविचार्यते ९२ तासांवाक्योपदेशेनप्रसादात्तवराघव ॥ मेमे
बुद्धिर्गतामतस्त्वतोमुक्तास्म्यहंत्विह ९३ मेदेहस्त्वितियाबुद्धिर्यदासक्तामयाऽत्रहि ॥ तदाकिंशेषमस्त्यत्रसंसारेदुःखदायके ९४ अस्त्वयंबाल्यंयातुदेहोवारितरंगवत ॥
कःपुत्रःकस्यकामातासर्वंब्रह्मनसंशयः ९५ अहमेवपरंब्रह्ममत्तोब्रह्मपरंनहि ॥ सर्वंयद्दृश्यतेचेदंमायेयंतवराघव ९६ नश्वरंबुद्बुदाकारंज्ञातंचेदंमयाप्रभो ॥ इतितस्यावचः
श्रुत्वाश्रीरामःप्राहसस्मितः ९७ सम्यक्विचारितंबुद्ध्यात्वयाविवाक्यमुत्तमम् ॥ गच्छेदानींसुखंतिष्ठजीवन्मुक्तासिकैकयि ९८ तद्रामवचनंश्रुत्वाकैकेयीतोषपूरी
ता ॥ देहाभिमानहीनासानत्वासीतांरघूत्तमम् ९९ ययौभरतगेहंहिनासक्ताकापिसात्वभूत ॥ एवंशिष्यमयाप्रोक्तमावीवाक्योपदेशतः १०० यथाज्ञानंहिकैकेय्यैजातं
तत्कथितंतव ॥ इदानींशृणुयच्चान्यत्तेवदामिकुतूहलम् १०१ सुमित्रात्वेकदारामंसीतयारहसिस्थितम् ॥ निरीक्ष्यनत्वातंप्राहरामराजीवलोचन १०२ किंचित्तेप्रार्थया
म्यद्यकिंचिदुपदिशस्वमाम् ॥ ततस्यावचनंश्रुत्वातामाहरघुनंदनः १०३ कात्वंचेतिवदादौमांपश्चादुपदिशामिते ॥ गच्छगेहंस्वस्थबुद्ध्याहृदिसम्यग्विचार्यच १०४
श्वोमामेत्यममप्रश्नस्योत्तरंदेहिवैततः ॥ अहमुपदिशाम्यंवयेनतुष्टाभविष्यासि १०५ तद्रामवचनंश्रुत्वासुमित्राविस्मितानना ॥ तूष्णीमेवययौगेहंरामवाक्यंव्याचिंत
यत १०६ काहंपृष्टाराघवेणकिंवादेयंमयोत्तरम् ॥ काहंदेवीचासुरीवादानवीराक्षसीतथा १०७ मानुषीचेत्यहंमत्वायदिरामंवदामिवै ॥ तर्हिनानाशरीराणिध्रीयंतेन
टवन्मया १०८ तदाकेदंमानुषीत्वमन्यजात्यांघटेच्चमे ॥ तर्ह्यहंमानुषीनैवनचैवान्याकदाचन १०९ मानुषीराक्षसीचेतीमानिनामानितानिन ॥ देहस्यैवात्रकथ्यंते
देहस्तुनश्वरःस्मृतः ११० देहाद्भिन्नास्मिकाप्यन्यायाऽहंरूपाण्यनेकशः ॥ धरामिसर्वदाभूम्यांसाकाऽहंचेतिवेद्मिन ११ इदानींतुमयाज्ञातंयथाविष्णुस्तथात्वहम् ॥
नानारूपाणिसोप्यत्रमत्स्यादीनिदधातिहि १२ तथानानास्वरूपाणिधार्यंतेऽत्रापिवैमया ॥ एवमेवहिवक्तव्यंतर्हिमेतस्यचांतरम् ११३ स्ववशोऽस्तिमहाविष्णुस्त्वहं
विष्णुवशासदा ॥ अतोविष्णोःकलाचाहंसत्यमेवनसंशयः १४ विष्णोर्मेनैवभेदोस्तियथागंगास्थलेघटे ॥ एकैवास्त्यत्रतद्वच्चविष्णुरेवाहमस्मिहि १५ अहमेवयदा
विष्णुस्तदाकिंचावशेषितम् ॥ यत्प्रष्टव्यंतुरामायजीवन्मुक्ताहमस्मिवै १६ एवंसुमित्रासंचिंत्यगताज्ञानामुदान्विता ॥ अतिक्रम्यनिशांतांसाप्रभातेराघवंययौ १७ नत्वा
रामंतदाप्राहमयारात्रौविचिंतितम् ॥ कात्वंपृष्टात्वयापूर्वंतर्ह्यहंब्रह्मराघव १८ त्वत्तोनान्यच्चप्रष्टव्यंत्वद्भिन्नाऽहंकदापिन ॥ इत्युक्त्वासायथागेहेनिशिस्वेहृदिमंत्रितम् १९
तत्सर्वंश्रावयित्वातंजीवन्मुक्ताऽभवत्तदा ॥ सुमित्रांराघवोप्याहसम्यग्बुद्ध्याविचिंतितम् २० जीवन्मुक्ताऽसिचांबत्वंगच्छगेहंसुखंवस ॥ ततःसुमित्रासंतुष्टागतमोहारघूत्त

१ एकैवाहंनवैभिन्नेतिपाठः ।

मम् २१ सीतांचापिपृथङ्नत्वाययौलक्ष्मणमंदिरम् ॥ एवंशिष्यमयाप्रोक्तंकाहंचेतिविचारतः २२ जीवन्मुक्तासुमित्रासाबभूवसुखनिर्भरा ॥ अन्यच्चतेवदाम्यद्यतच्छृ
णुष्वद्विजोत्तम २३ एकदाराघवंदृष्ट्वाकौसल्याजननीरहः ॥ आसनेचित्रशालायांसीतयासहसंस्थितम् २४ पप्रच्छनत्वाश्रीरामंज्ञात्वाविष्णुंपरात्परम् ॥ रामरामममहाबाहो
किंचिदुपदिशस्वमाम् ॥ येनमेतवसुज्ञानंभविष्यतिमहच्छुभम् २५ तन्मातृवचनंश्रुत्वातांविहस्याहराघवः ॥ श्वःप्रभातेसमुत्थायगत्वागोष्ठंकियत्क्षणं २६ श्रुत्वागोवत्सवाक्या
निसम्यक्तानिविचिंत्यच ॥ मर्मांतिकंततोयाहित्वमंबवचनान्मम २७ उपदेशंकरिष्यामिततोऽहंत्वांनसंशयः ॥ तद्रामवचनंश्रुत्वाकौसल्याविस्मितातदा २८ नत्वा
रामंससीतंचतूष्णीमेवगृहंययौ ॥ ततोनिशामतिक्रम्यकौसल्यासारुणोदये २९ गोष्ठंगत्वाक्षणंस्थित्वाधेनुवत्सवचांसिसा ॥ अहंमात्वितिशुश्रावसुश्रांतैर्मुहुर्मुहुः ३०
तानिवाक्यानिवत्सानांश्रुत्वाचित्तेविचारयत् ॥ अहंमात्वितिवत्साश्चकिंवदंतिमुहुर्मुहुः ३१ इमानिकिंबोधयंतिमांवत्साश्चमुहुर्मुहुः ॥ इत्युक्त्वासाक्षणंध्यात्वाहृदिसम्य
ग्विचार्यच ३२ वत्सवाक्यैश्चकौसल्यागताज्ञानाभवत्क्षणात् ॥ ततस्तुष्टाययौरामंनत्वातंप्राहहर्षिता ३३ रामविष्णोरमानाथवत्सवाक्यैःसुबोधिता ॥ त्वयैवाहंरामचंद्र
गताज्ञानाऽस्मिराघव ३४ तवोपदेशवांछामेनकिंचिदस्त्यतःपरम् ॥ लब्ध्वाज्ञानंमयारामत्वत्तोभिन्नाकदाऽस्मिन ३५ तन्मातृवचनंश्रुत्वाकौसल्यांराघवोऽब्रवीत् ॥ वत्स
वाक्यैःकथंलब्धंत्वयाज्ञानंवदस्वमाम् ३६ तद्रामवचनंश्रुत्वाकौसल्याप्राहराघवम् ॥ अहंमात्वितिवाक्यानितेषांश्रुत्वारघूत्तम ३७ इमानिकिंबोधयंतिमांवत्सोक्ता
निवैमुहुः ॥ एवंविचारितंध्यात्वाक्षणंस्वहृदयेमया ३८ वाक्यार्थश्चमयाज्ञातस्त्वहंमाकथ्यतांजनाः ॥ वत्सास्त्वेवंबोधयंतिनज्ञायेतजनैस्तुयत् ३९ अहंशब्दोदेहपरो
यदात्यक्तोमयाऽत्रहि ॥ अहंदेहीत्वहंमाताचेतिबुद्धिर्गतामम ४० देहबुद्धिर्यदानष्टातदाकिंशेषमस्तिहि ॥ सुखंदुःखंतुदेहायनमेकिंचिद्रघूत्तम ४१ तिष्ठत्वयंवापततुदे
होभोगाश्रयःप्रभो ॥ अहंत्वदंशएवात्रपृथगुपाधितःस्मृता ४२ यथाकुंभैर्विभिन्नोदृश्यतेऽभ्रमुपाधितः ॥ त्वत्तोऽहंनकदाभिन्नाब्रह्मैवास्म्यहमेववै ४३ इतितन्मातृवचनं
श्रुत्वारामःस्मिताननः ॥ कौसल्यामाहमातस्त्वंमुक्तास्यद्यनसंशयः ४४ सम्यग्विचारितंचित्तेवत्सवाक्यंसाविस्तरम् ॥ गच्छतिष्ठसुखंगेहेत्विमांबुद्धिंदृढांकुरु ४५ किमर्थं
नमयापूर्वंयुष्मान्स्ववचनेनहि ॥ उपदेशःकृतस्त्वंबतत्सर्वंत्वंनिबोधय ४६ उपदेष्टागुरुर्ज्ञेयोयुष्माकंतनयस्त्वहम् ॥ कथंयुष्मानत्रमातस्त्वहंचोपदिशामिवै ४७ स्त्री
णांपतिर्गुरुर्ज्ञेयस्त्रीभिर्नान्योगुरुःकदा ॥ कार्यस्तस्मान्मयानैवयुष्मान्स्वास्योपदेशितम् ४८ पौराणांचगुरुस्तातस्तथास्वीयपुरोहितः ॥ अतस्तेषामपिमयाद्भुतवा
क्योपदेशितम् ४९ परास्यैरेवयुष्माकमुपदेशःकृतोमया ॥ गच्छगेहेसुखंतिष्ठसदामांपरिचिंतय ५० तद्रामवचनंश्रुत्वाकौसल्यातुष्टमानसा ॥ रामंनत्वाययौगेहंसंतुष्टा
संस्थितासुखम् ५१ एवंतारामचंद्रेणबोधितामातरःशुभाः ॥ स्वस्वायुषःक्षयेसर्वाःस्वदेहान्मुमुचुःसुखम् ५२ रामसान्निध्यमात्रेणविमानवरसंस्थिताः ॥ जग्मुःसर्वा
स्तद्वैकुंठंराघवेणैवसत्कृताः ५३ शिष्यतासांमहद्भाग्यंयासांरामादिभिस्त्रिभिः ॥ पारलौक्यादिसत्कर्मस्वहस्तैर्विनिवर्तितम् ५४ एवंशिष्यमयाप्रोक्तातासामूर्ध्वंगति
स्तव ॥ उपदेशास्तथातासांप्रोक्ताश्चाप्यत्रतेमया ५५ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेमनोहरकाण्डे मातृवैकुंठारोहणंनाम द्वितीयःसर्गः ॥ २ ॥

॥ श्रीविष्णुदासउवाच ॥ ॥ कथंश्रीराघवस्यात्ररामोपासकमानवैः ॥ कार्यावैमानसीपूजाबहिःपूजातथाशुभा १ कथंचोपासनाग्राह्यागुरोःश्रीराघवस्यच ॥ काश्रे
ष्ठोपासनाचात्रकःश्रेष्ठोऽत्रगुरुस्तथा २ केकेमन्त्राराघवस्यभक्तानांसिद्धिदायकाः ॥ कातिथिस्तोषदातस्यकिंकिंतत्तोषवर्द्धनम् ३ कःश्रेष्ठोऽत्रवरोदेवोयस्यग्राह्यामु
पासना ॥ तत्सर्वंविस्तरेणैवगुरोत्वंवक्तुमर्हसि ४ ॥ श्रीरामदासउवाच ॥ सम्यक्पृष्टंत्वयाशिष्यसावधानमनाःशृणु ॥ सर्वंतद्विस्तरेणाद्यत्वदग्रेकथ्यतेमया ५ आदौ
गुरुंपरीक्ष्यात्रतचिन्हैश्चद्विजोत्तम ॥ उपदेशस्ततस्तस्माद्ग्राह्यस्तीर्थेविधानतः ६ गुरोश्चैवात्रचिन्हानितवादौप्रवदाम्यहम् ॥ क्रोधीकुष्टीमहारोगीमलिनोनिर्घृणोजडः
७ अपंडितोनिंदकश्चलोलुपोविषयातुरः ॥ दांभिकोगर्वसंयुक्तःपापात्माढुष्टवंशजः ८ घातीपरद्रोहकर्तापरद्रव्यापहारकः ॥ अजितात्मावेदबाह्यःपरदाररतःसदा ९
परदोषारोपकश्चकृपणश्चाजितेंद्रियः ॥ वेददेवद्विजातीनांयतितीर्थगवामपि १० तुलसीवन्हिसूर्याणांद्वेष्टायोग्योगुरुर्नहि ॥ वेत्तासकलधर्माणांशास्त्रेपुपरिनिष्ठकः ११
सत्यवाक्मितभुक्ज्ञानीकलावान्द्विजवंशजः ॥ सत्कर्मनिष्ठोधर्माणामुपदेष्टासुबुद्धिदः १२ योगाभ्यासकलाभिज्ञोयोगवान्समदर्शनः ॥ कृतकर्मातीर्थसेवीधर्माधर्मविवे
चकः १३ ब्रह्मचारीगृहस्थोवावानप्रस्थाश्रमीयतिः ॥ स्वाश्रमाचारसन्निष्ठोबुद्धिमान्विजितेंद्रियः १४ क्षमीकृपालुर्मृदुवाक्सुमुखःसौम्यदर्शनः ॥ अनिद्रश्चसमुद्योगी
शांतात्मापरतोषकृत १५ औदार्यवान्ज्ञाननिष्ठःशुचिस्त्यक्तपरिग्रहः ॥ इत्यादिगुणयुक्तोयःसगुरुःपरमोत्तमः १६ तस्यसेवांचिरंकृत्वासेवयातंप्रसाद्यच ॥ तस्मादु
पासनाग्राह्यासुतीर्थेविधिपूर्वका १७ उपासनास्त्रयःसंतिसात्विकीराजसीतथा ॥ तामसीचतृतीयासागर्हिताऽत्रनिगद्यते १८ भूतवेतालकूष्मांडपिशाचानामुपास
ना ॥ साज्ञेयातामसीघोरादेवानांसात्विकीस्मृता १९ यक्षाणांराक्षसानांचयासाज्ञेयातुराजसी ॥ शैवाःसौराश्चगाणेशाःशाक्ताश्चवैष्णवास्तथा २० अवतारास्त्व
संख्याताःपंचानांसन्तिभूतले ॥ तेषामुपासनाग्राह्यागुरोरास्याद्द्विजादिभिः २१ पंचानामवतारेषुविष्णोरेववदाम्यहम् ॥ चतुश्चत्वारिंशन्मितानवतारान्महत्तमान्
२२ पुरुषोत्तमोविधिश्चैवरुद्रोनारायणस्तथा ॥ हंसोऽथदत्तात्रेयश्चकुमारोऋषभस्तथा २३ हयग्रीवस्तथामत्स्यःकूर्मोवाराहएवच ॥ नारसिंहोवामनश्चजामदग्न्यस्त
थैवच २४ रामःकृष्णस्तथाबौद्धःकल्किर्यज्ञोहरिस्तथा ॥ वालखिल्योद्धारकश्चपृथुर्धन्वंतरिस्तथा २५ मोहिनीनारदोव्यासोकपिलःकेशवस्तथा ॥ माधवश्चाथगो
विंदोमधुसूदनएवच २६ त्रिविक्रमःश्रीधरश्चपद्मनाभस्तथास्मृतः ॥ दामोदरस्तथासंकर्षणःप्रद्युम्नएवच २७ अनिरुद्धोऽधोक्षजश्चह्यच्युतश्चजनार्दनः ॥ उपेंद्रश्च
हृषीकेशस्त्वेतेज्ञेयामहत्तमाः २८ मत्स्याद्याअवताराश्चदशैतेष्वपिचोत्तमाः ॥ दशावतारमध्येपिरामकृष्णौमहत्तमौ २९ ताभ्यामपिवरःपूर्वःसत्यसंधोरघूत्तमः ॥ ए
कपत्नीव्रतोवीरस्त्वेकबाणोनृपोत्तमः ३० सप्तद्वीपपतिःश्रीमांश्छत्रचामरमंडितः ॥ एवंज्ञात्वोपासनाऽत्रग्राह्याश्रीराघवस्यच ३१ गुरूपदिष्टविधिनासुमुहूर्तेशुभस्थ
ले ॥ अथवातत्तद्देवानांग्राह्यातज्जन्मसत्तिथौ ३२ चैत्रेमासेसितेपक्षेनवम्यांरामजन्मनि ॥ उपासनानंतरंहिरामंभक्त्याप्रपूजयेत् ३३ एवंयस्यावतारस्यगृहीतोपासना
नरैः ॥ तैस्तस्यजन्मदिवसेकार्यापूजामहोत्सवैः ३४ अथदशावताराणांशिष्यजन्मदिनानिते ॥ प्रोच्यंतेऽत्रशृणुष्वत्वंयेषुतान्पूजयेन्नरः ३५ चैत्रेतुशुक्लपंचम्यांभगवा

न्मीनरूपधृक् ॥ ज्येष्ठेतुशुक्लद्वादश्यांकूर्मरूपधरोहरिः ३६ चैत्रकृष्णनवम्यांतुहरिर्वाराहरूपधृक् ॥ वैशाखेऽभूचतुर्दश्यांशुक्लपक्षेनृकेसरी ३७ मासिभाद्रपदेशुक्लेद्वा
दश्यांवामनस्त्वभूत ॥ वैशाखेजामदग्न्यस्तुतृतीयायांसितेत्वभूत ३८ चैत्रशुक्लनवम्यांतुमध्यान्हेराघवस्त्वभूत ॥ कृष्णाष्टम्यांश्रावणेहिकृष्णोभून्मथुरापुरि ३९ पौ
षशुक्लासप्तमीयाबुद्धजन्मतिथिस्तुसा ॥ माघशुक्लतृतीयातुकल्किनःसातिथिःस्मृता ४० अन्होमध्येवामनोरामरामौमत्स्यःक्रोडश्चापराण्हेविभागे ॥ कूर्मःसिंहोबुद्धक
ल्कीचसायंकृष्णोरात्रौकालसाम्येचपूर्वे ४१ एवंतज्जन्मकालांश्वज्ञात्वातेषामुपासकैः ॥ उत्सवःपरमःकार्यस्तत्तदेवप्रपूजने ४२ नित्यपूजाप्रकर्तव्याभक्त्यातेषामुपास
कैः ॥ विशेषाज्जन्मदिवसेकार्यतत्पूजनंमुदा ४३ गुरोर्गृहीतोयोमन्त्रस्तंनित्यंहृदयेजपेत ॥ राममंत्रास्त्वनेकाश्वशतवर्णात्मकोमनुः ४४ पंचाशद्वर्णकश्चापिद्विचत्वा
रिंशदक्षरः ॥ द्वात्रिंशदक्षरश्चाथसप्तविंशाक्षरस्तथा ४५ पंचविंशद्वर्णकश्चचतुर्विंशाक्षरस्तथा ॥ एकविंशद्वर्णकश्चविंशद्वर्णात्मकस्तथा ४६ अष्टादशवर्णकश्चषोडशा
क्षरएवच ॥ पंचदशवर्णकश्चचतुर्दशाक्षरस्तथा ४७ त्रयोदशाक्षरश्चापिद्वादशाक्षरएवच ॥ एकादशाक्षरश्चापितथामन्त्रोदशाक्षरः ४८ नवाक्षरोऽष्टवर्णात्मासप्ताक्षर
मनुस्तथा ॥ षडक्षरोराममन्त्रस्तथापंचाक्षरोमनुः ४९ चतुर्वर्णात्मकश्चापितथावर्णत्रयात्मकः ॥ द्व्यक्षरोराममन्त्रश्चमनुस्त्वेकाक्षरोपिच ५० एवंनानाविधामन्त्राः
शतशोथसहस्रशः ॥ गुरोस्त्वेकोगृहीत्वाऽत्रजपेच्छ्रीरामसन्निधौ ५१ उपासनाविधानंचरामोपासकमानवैः ॥ यथामन्त्रस्यरूपंहिविज्ञेयंमंत्रशास्त्रतः ५२ अधुनामानसी
पूजाविधानंचमयोच्यते ॥ यद्दण्डकेसुतीक्ष्णायकथितंकुंभजन्मना ५३ सुतीक्ष्णस्त्वेकदाऽगस्त्यंदृष्ट्वारहसिसंस्थितम् ॥ प्रणम्यपरयाभक्त्याप्रोवाचविनयान्वितः ५४
॥ सुतीक्ष्णउवाच ॥ हृदयेमानसीपूजाकीदृशीचवदप्रभो ॥ उपचारैःकतिविधैःपूज्यतेरघुनंदनः ५५ ॥ अगस्त्यउवाच ॥ रामंपद्मविशालाक्षंकालांबुदसमप्रभम् ॥
स्मितवक्त्रंसुखासीनंचिंतयेच्चित्तपुष्करे ५६ रागादिकलुषंचित्तं वैराग्येणसुनिर्मलम् ॥ कृत्वाध्यायेत्सदारामंभवबंधविमुक्तये ५७ प्रातःशुद्धवपुर्भूत्वाशौचादिभिरतंद्रितः
॥ विविक्तदेशमाश्रित्यध्यानंपूजांसमारभेत् ५८ नाभिकुंदसमुद्भूतंकदलीकुसुमोपमम् ॥ अष्टपत्रंस्निग्धवर्णंध्यायेद्धृदयपंकजम् ५९ तत्पद्मंरामनाम्नैवफुल्लंकृत्वाऽस्यम
ध्यमे ॥ भावयेत्सूर्यसोमाग्निमण्डलान्युत्तरोत्तरम् ६० तस्योपरिन्यसेद्दिव्यंपीठंरत्नमयोज्ज्वलम् ॥ तन्मध्येराघवंध्यायेत्सूर्यकोटिसमप्रभम् ६१ इंदीवरनिभंशांतंविशा
लाक्षंसुवक्षसम् ॥ उद्यद्दीधितिमद्भास्वत्कुण्डलाभ्यांविराजितम् ६२ सुनासंसुकिरीटंचसुकपोलंशुचिस्मितम् ॥ विज्ञानमुद्रंद्विभुजंकंबुग्रीवंसुकुंतलम् ६३ नानारत्न
मयैर्दिव्यहारैर्भूषितमव्ययम् ॥ विद्युत्पुंजप्रतीकाशंवस्त्रयुग्मधरंहरिम् ६४ वीरासनस्थंसंतानतरुमूलनिवासिनम् ॥ महासुगंधलिप्तांगंवनमालाविराजितम् ६५ वामपा
र्श्वेस्थितांसीतांचामीकरसमप्रभाम् ॥ लीलापद्मधरांदेवींचारुहासांशुभाननाम् ॥ ६६ पश्यंतींस्निग्धयादृष्ट्यादिव्याकल्पविराजिताम् ॥ छत्रचामरहस्तेनलक्ष्मणेन
सुसेवितम् ६७ हनुमत्प्रमुखैर्नित्यंवानरैःपरिवारितम् ॥ स्तूयमानंऋषिगणैःसेवितंभरतादिभिः ६८ सनंदनादिभिश्चान्यैर्योगिवृंदैःस्तुतंसदा ॥ सर्वशास्त्रार्थकुशलंयोग

१ शुक्लेकादश्यामितिपाठः । २ चिंतयेच्चिंतितात्मेइतिपाठः ।

ज्ञंयोगसिद्धिदम् ६९ एवंध्यात्वारामचंद्रंमणिद्वयसुशोभितम् ॥ शुद्धेनमनसारामंपूजयेत्सततंहृदि ७० इतिध्यानम् ॥ आवाहयामिविश्वेशंजानकीवल्लभंविभुम् ॥ कौस
ल्यातनयंविष्णुंश्रीरामंप्रकृतेःपरम् ७१ राजाधिराजराजेंद्रराममचंद्रमहीपते ॥ रत्नसिंहासनंतुभ्यंदास्यामिस्वीकुरुप्रभो ७२ श्रीरामागच्छभगवन्रघुवीररघूत्तम ॥ जान
क्यासहराजेंद्रसुस्थिरोभवसर्वदा ७३ रामचंद्रमहेष्वासरावणांतकराघव ॥ यावत्पूजांसमाप्येऽहंतावत्त्वंसंनिधोभव ७४ रघुनन्दनराजर्षेरामराजीवलोचन ॥ रघुवंशजमे
देवश्रीरामाभिमुखोभव ७५ प्रसीदजानकीनाथसुप्रसिद्धसुरेश्वर ॥ प्रसन्नोभवमेराजन्सर्वेशमधुसूदन ७६ शरणंमेजगन्नाथशरणंभक्तवत्सल ॥ वरदोभवमेराजन्शरणंमेरघूत्त
म ७७ त्रैलोक्यपावनानंतनमस्तेरघुनायक ॥ पाद्यंगृहाणराजर्षेनमोराजीवलोचन ७८ परिपूर्णपरानंदनमोरामायवेधसे ॥ गृहाणार्घ्यंमयादत्तंकृष्णविष्णोजनार्दन ७९
ॐनमोवासुदेवायतत्वज्ञानस्वरूपिणे ॥ मधुपर्कंगृहाणेमंराजराजायतेनमः ८० नमःसत्यायशुद्धायबुध्न्यायज्ञानरूपिणे ॥ गृहाणाचमनंदेवसर्वलोकैकनायक ८१ ब्रह्मांडो
दरमध्यस्थैस्तीर्थैश्वरघुनन्दन ॥ स्नापयिष्याम्यहंभक्त्यात्वंगृहाणजनार्दन ८२ संतप्तकांचनप्रख्यंपीतांबरमिमंहरे ॥ संगृहाणजगन्नाथरामचंद्रनमोऽस्तुते ८३ श्रीरामा
च्युतयज्ञेशश्रीधरानन्दराघव ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाणरघुनायक ८४ किरीटहारकेयूररत्नकुंडलमेखलाः ॥ ग्रैवेयकौस्तुभंहारंरत्नकंकणनूपुरान् ८५ एवमादीनि
सर्वाणिभूषणानिरघूत्तम ॥ अहंदास्यामितेभक्त्यासंगृहाणजनार्दन ८६ कुंकुमागरुकस्तूरीकर्पूरोन्मिश्रचन्दनम् ॥ तुभ्यंदास्यामिविश्वेशश्रीरामस्वीकुरुप्रभो ८७
तुलसीकुन्दमन्दारजातिपुन्नागचंपकैः ॥ कदंबकरवीरैश्वकुसुमैःशतपत्रकैः ८८ नीलांबुजैर्बिल्वदलैःपुष्पमाल्यैश्वराघव ॥ पूजयिष्याम्यहंभक्त्यासंगृहाणनमोऽस्तुते ॥
८९ वनस्पतिरसैर्दिव्यैर्गंधाढ्यैःसुमनोहरैः ॥ रामचन्द्रमहीपालधूपोऽयंप्रतिगृह्यताम् ९० ज्योतिषांपतयेतुभ्यंनमोरामायवेधसे ॥ गृहाणदीपकंराजंस्त्रैलोक्यतिमिरा
पहम् ९१ इदंदिव्यान्नममृतंरसैःषड्भिर्विराजितम् ॥ श्रीरामराजराजेंद्रनैवेद्यंप्रतिगृह्यताम् ९२ नागवल्लिदलैर्युक्तंपूगीफलसमन्वितम् ॥ तांबूलंगृह्यतांरामकर्पूरादिस
मन्वितम् ९३ मंगलार्थंमहीपालनीराजनमिदंहरे ॥ संगृहाणजगन्नाथरामचंद्रनमोऽस्तुते ९४ अथाष्टनमस्काराः ॥ ॐनमोभगवतेश्रीरामायपरमात्मने ॥ सर्वभूतांत
रस्थायससीतायनमोनमः ९५ ॐनमोभगवतेश्रीरामचन्द्रायवेधसे ॥ सर्ववेदांतवेद्यायससीतायनमोनमः ९६ ॐनमोभगवतेश्रीविष्णवेपरमात्मने ॥ परात्परायरामाय
ससीतायनमोनमः ९७ ॥ ॐनमोभगवतेश्रीरघुनाथायशार्ङ्गिणे ॥ चिन्मयानन्दरूपायससीतायनमोनमः ९८ ॥ ॐनमोभगवतेश्रीरामकृष्णायचक्रिणे ॥ विशुद्धज्ञा
नदेहायससीतायनमोनमः ९९ ॥ ॐनमोभगवतेश्रीवासुदेवायविष्णवे ॥ पूर्णानन्दैकरूपायससीतायनमोनमः १०० ॥ ॐनमोभगवतेश्रीरामभद्रायवेधसे ॥ सर्वलो
४८ कशरण्यायससीतायनमोनमः १ ॐनमोभगवतेश्रीरामायामिततेजसे ॥ ब्रह्मानन्दैकरूपायससीतायनमोनमः २ ॥ इतिनमस्काराष्टकमन्त्राः ॥ नृत्यगीतादिवाद्या
दिपुराणपठनादिभिः ॥ राजोपचारैरखिलैःसन्तुष्टोभवराघव ३ विशुद्धज्ञानदेहायरघुनाथायविष्णवे ॥ अंतःकरणसंशुद्धिंदेहिमेरघुनन्दन ४ नमोनारायणानंतश्रीराम
करुणानिधे ॥ मामुद्धरजगन्नाथघोरात्संसारसागरात् ५ रामचन्द्रमहेष्वासशरणागततत्पर ॥ त्राहिमांसर्वलोकेशतापत्रयमहानलात् ६ श्रीकृष्णश्रीकरश्रीशश्रीरामश्री

निधेहरे ॥ श्रीनाथश्रीमहाविष्णोश्रीनृसिंहकृपानिधे ७ गर्भजन्मजराव्याधिघोरसंसारसागरात् ॥ मामुद्धरजगन्नाथकृष्णविष्णोजनार्दन ८ श्रीरामगोविंदमुकुंदकृष्णश्री
नाथविष्णोभगवन्नमस्ते ॥ प्रौढारिषड्वर्गमहाभयेभ्योमांत्राहिनारायणविश्वमूर्ते ९ श्रीरामाच्युतयज्ञेशश्रीधरानन्दराघव ॥ श्रीगोविंदहरेविष्णोनमस्तेजानकीपते ॥
११० ब्रह्मानन्दैकविज्ञानंत्वन्नामस्मरणंनृणाम् ॥ त्वत्पदांबुजसद्भक्तिंदेहिमेरघुवल्लभ ११ नमोऽस्तुनारायणविश्वमूर्तेनमोस्तुतेशाश्वतविश्वयोने ॥ त्वमेवविश्वंसचराच
रंचत्वामेवसर्वंप्रवदंतिसंतः १२ नमोऽस्तुतेकारणकारणायनमोऽस्तुकैवल्यफलप्रदाय ॥ नमोनमस्तेऽस्तुजगन्मयायवेदांतवेद्यायनमोनमस्ते १३ नमोनमस्तेभरताग्र
जायनमोऽस्तुयज्ञप्रतिपालनाय ॥ अनंतयज्ञेशहरेमुकुंदगोविंदविष्णोभगवन्मुरारे १४ श्रीवल्लभानंतजगन्निवासश्रीरामराजेंद्रनमोनमस्ते ॥ श्रीजानकीकांतविशालनेत्र
राजाधिराजत्वयिमेऽस्तुभक्तिः १५ तप्तजांबूनदेनैवनिर्मितंरत्नभूषितम् ॥ स्वर्णपुष्पंरघुश्रेष्ठदास्यामिस्वीकुरुप्रभो १६ हृत्पद्मकर्णिकामध्येसीतयासहराघव ॥ निव
सत्वंरघुश्रेष्ठसर्वैरावरणैःसह १७ मनोवाक्कायजनितंकर्मयच्छुभाशुभम् ॥ तत्सर्वंप्रीतयेभूयान्नमोरामायशार्ङ्गिणे १८ अपराधसहस्राणिक्रीयंतेऽहर्निशंमया ॥ दासोह
मितिमांमत्वाक्षमस्वरघुपुंगव १९ नमस्तेजानकीनाथरामचन्द्रमहीपते ॥ पूर्णानन्दैकरूपत्वंगृहाणार्घ्यंनमोऽस्तुते १२० एवंयःकुरुतेपूजांवहिर्वाहृदयेऽपिच ॥ स
कृत्पूजनमात्रेणरामएवभवेन्नरः २१ किंपुनःसततंब्रह्मण्येवंपूज्यस्थितोहिसः ॥ सर्वान्कामानवाप्नोतिचेहलोकेपरत्रच २२ एवंसुतीक्ष्णतेप्रोक्तंयथापृष्टंत्वयामम ॥ हृद
येमानसीपूजाविधानंराघवस्यच २३ ॥ ॥ श्रीरामदासउवाच ॥ ॥ एवंशिष्यसुतीक्ष्णायमुनयेऽगस्तिनापुरा ॥ यत्प्रोक्तंतन्मयासर्वंतवप्रोक्तंसविस्तरात् २४
शिष्याऽधुनाबहिःपूजाविधानंचमयोच्यते ॥ नरःप्रातःसमुत्थायकृत्वाशौचादिकाःक्रियाः २५ स्नात्वासंध्यादिकंकृत्वादेवपूजांसमारभेत् ॥ तीर्थेदेवालयेवाऽपिगोष्ठे
पुण्यस्थलेषुच २६ नद्यास्तटेदेवगेहेतुलसीसन्निधौतथा ॥ लिप्त्वाभूमिंगोमयेनततोपद्मानिलेखयेत् २७ सितारक्तहरित्पीतनीलकृष्णादिसंभवैः ॥ नानावर्णैश्चित्रिता
नितत्रपूजांसमारभेत् २८ अष्टोत्तरसहस्रश्रीरामलिंगात्मकासनम् ॥ वाष्टोत्तरशतंश्रीमद्रामलिंगात्मकासनम् २९ अष्टोत्तरसहस्रश्रीरामभद्रासनंहिवा ॥ वाष्टोत्तरशतंश्री
मद्रामभद्रासनंशुभम् ३० बहून्यन्यानिशतशःसंतिलिख्यासनानिहि ॥ तेषांमध्यादेकमेवासनंसंस्थाप्यचित्रितम् ३१ पीठोपरिवस्त्रकृतंपत्रादिष्वपिवाकृतम् ॥ आस
नोपरिजानक्याराघवादीन्यवेशयेत् ३२ आसनेसर्वतोभद्रमध्येपद्मोपरिन्यसेत् ॥ सीतयाराघवंरम्यंवरसिंहासनेस्थितम् ३३ रामस्यपृष्ठभागेचलक्ष्मणंस्थापयेत्ततः ॥
रामस्यदक्षिणेपार्श्वेभरतंविन्यसेच्छुभम् ३४ रामस्यवामपार्श्वेहिशत्रुघ्नंविन्यसेच्छुभम् ॥ पुरतोरामचंद्रस्यवायुपुत्रंतुविन्यसेत् ३५ रामस्यवायुदिग्भागेसुग्रीवंस्थापये 
त्ततः ॥ ईशान्यांरामचन्द्रस्यविन्यस्यचविभीषणम् ३६ रामस्यवन्हिदिग्भागेविन्यसेदंगदंततः ॥ नैर्ऋत्यांरामचंद्रस्यजांबवंतंतुविन्यसेत् ३७ पूज्यपूजकयोर्मध्ये
प्राग्दिक्ज्ञेयाऽर्चनेत्विह ॥ सर्वशास्त्रेष्वेवमेवनिर्णयःकथ्यतेबुधैः ३८ लक्ष्मणस्यकरेदेयंछत्रंमुक्ताविराजितम् ॥ भरतस्यकरेदेयंचामरंरुक्ममण्डितम् ३९ शत्रुघ्नस्यकरे

१ वरंछत्रंसुशोभितमितिपाठः ।

देयंव्यजनंचित्रितंशुभम् ॥ हनूमतःकरेदेयंरामस्यपादुकाद्वयम् १४० सुग्रीवस्यकरेदेयंजलपात्रंमनोहरम् ॥ करेविभीषणस्यापिदेयंमुकुरमुत्तमम् ४१ देयंतांबूलपात्रं
चवालिनन्दनसत्करे ॥ जांबवतःकरेदेयोवस्त्रकोशोमहत्तमः ४२ नवायतनमेवंहिस्थापयेद्राघवस्यच ॥ अथवापंचायतनंस्थापयेदासनोपरि ४३ सीतयारामचंद्रंचम
ध्येपृष्ठेतुलक्ष्मणम् ॥ भरतंसव्यपार्श्वेचशत्रुघ्नंवामपार्श्वके ४४ पुरतोवायुपुत्रंचपूर्वोक्तैरुपचारकैः ॥ एवंसंस्थापयेद्भक्त्यारामंभद्रासनोपरि ४५ अथवासीतयारामंमध्ये
स्थाप्यततःपरम् ॥ रामस्यपृष्ठेसौमित्रिंरामाग्रेवायुनन्दनम् ४६ स्थाप्यैवंपूजयेद्भक्त्यारामंधृतशरासनम् ॥ अथवासीतयारामंलक्ष्मणंपरिपूजयेत् ४७ सीतानुजौवि
नापूजारामस्यैकस्यनाचरेत् ॥ कृताचेद्विघ्नकर्त्रीसाभवेदत्रनसंशयः ४८ नवायतनपूजासाश्रेष्ठाज्ञेयाशुभप्रदा ॥ यापंचायतनीपूजाज्ञेयासामध्यमाऽत्रहि ४९ त्रिदैवत्या
तुयापूजाकनिष्ठासानिगद्यते ॥ अतिकनिष्ठापूजासाद्विदैवत्यास्मृताऽत्रहि ५० कोदण्डंवामहस्तेचतूणीरंवामपार्श्वके ॥ निजनामांकितंबाणंदधानंदक्षिणेकरे ५१ ए
वंश्रीराघवंस्थाप्यततःपूजांसमारभेत् ॥ आत्मनोवामभागेचजलकुंभंनिधायहि ५२ आत्मनोदक्षिणेभागेपूजापात्रंनिवेशयेत् ॥ आत्मनःपुरतःपात्रंस्थापयेद्विस्तृतंवरम्
५३ प्राङ्मुखःसुखमासीनोधृतपद्मासनःशुचिः ॥ मौनीधृताक्षतुलसीमालोनिश्चलमानसः ५४ बद्धग्रंथिशिखःशुद्धवस्त्रोधृतपवित्रकः ॥ शुद्धद्वारावतीमृत्कृततिलकोमु
द्रिकांकितः ५५ नत्वाऽदौगणराजंचतिथिवारादिकीर्तयेत् ॥ भूमिशुद्धिंभूतशुद्धिंन्यासौकृत्वायथाक्रमम् ॥ प्रोक्षणीपात्रमेकंतुजलपूर्णंप्रकारयेत् ५६ दूर्वागन्धाक्षतापु
ष्पैस्तत्पात्रंपरिपूरयेत् ॥ प्रोक्षयेत्तेननीरेणपूजाद्रव्यंसहात्मना ५७ पाद्यार्घ्याचमनार्थंतुत्रीणिपात्राणिविन्यसेत् ॥ गणराजंपूजयित्वासम्पूज्यवरुणंततः ५८ पांचज
160 न्यंपूजयित्वाप्रोक्षयेत्तज्जलैरपि ॥ पूजाद्रव्यंपूर्ववच्चस्वात्मानंचशुचंतथा ५९ धेनुशंखचक्रपक्षिराजमुद्राःप्रदर्शयेत् ॥ शैलीदारुमयीलौहीलिप्यालेख्याचसैकती ६० म
नोमयीमणिमयीप्रतिमाऽष्टविधास्मृता ॥ अथध्यायेद्रामचंद्रंससीतंपुरतःस्थितम् ६१ द्विभुजंधृततूणीरंचापबाणधृतायुधम् ॥ दिव्यालंकारसंयुक्तंपीतकौशेय
वाससम् ६२ सलक्ष्मणंसशत्रुघ्नंभरतेनसमन्वितम् ॥ हनुमत्सेवितपदंसिंहासनविराजितम् ६३ सितछत्रसमायुक्तंदिव्यचामरवीजितम् ॥ विभीषणसमायुक्तंसुग्रीव
परिवंदितम् ६४ जांबवतासमायुक्तमंगदेनपरिष्टुतम् ॥ अयोध्यावासिनंराममेवंहृदिविचिंतयेत् ६५ सीतारामसमागच्छमदग्रेत्वंस्थिरोभव ॥ गृहाणपूजांमद्दत्तांकृ
तमावाहनंतव ६६ हिरण्मयंरत्नयुक्तंनानाचित्रविचित्रितम् ॥ सिंहासनंसवस्त्रंतेह्यासनार्थंददामिते ६७ चन्दनागुरुसंयुक्तैर्जलैस्तीर्थसमुद्भवैः ॥ पाद्यंगृहाणश्रीराममया
दत्तंप्रसीदमे ६८ पुष्करादिषुतीर्थेषुगंगादिषुसरित्सुच ॥ यत्तोयंतन्मयाऽऽनीतंदत्तमर्घ्यंगृहाणभो ६९ सुगन्धवासितंतोयंबहुतीर्थसमुद्भवम् ॥ आचमनार्थमानीतंगृहा
णत्वंसुरेश्वर १७० हरिद्राकुंकुमैर्युक्तंसुगन्धद्रव्यमिश्रितम् ॥ सुगन्धस्नेहसंमिश्रमुद्वर्त्तनमयास्तुते ७१ कामधेनूद्भवंक्षीरंनन्दिन्यादधिसुंदरम् ॥ कपिलायाघृतंश्रेष्ठंमधु
विंध्याद्रिसंभवम् ७२ सीतोत्पलसमानाभंसिताद्युक्तंमनोहरम् ॥ पंचामृतंमयाऽऽनीतंस्नानार्थंत्वंगृहाणभो ७३ गंगाचयमुनाचैवगोदावरिसरस्वती ॥ नर्मदासिंधुकावेरी

१ विदेहजांविनेतिपाठः ।

सरयूगंडकीतथा ७४ ताम्रपर्णीभीमरथीकृष्णावेणीमहानदी ॥ गोमतीसागरास्सप्तपयोष्णीभवनाशिनी ७५ पूर्णातापीतुंगभद्राक्षिप्रावेगवतीतथा ॥ पिनाकीप्रवरा
सिंधुफेणासार्द्धत्रयानदाः ७६ घृतमालाकृतमालामहीनिक्षेपिकातथा ॥ पयोष्णीप्रेमगंगाचचित्रगंगाकरानदी ७७ नीराचर्मण्वतीवृद्धावंजराचपुनःपुना ॥ सिंधुक्षीरा
चवेकुंठाऽलकनंदाचवारणा ॥ ७८ इत्यादिसर्वतीर्थेषुयत्तोयंवर्ततेशुभम् ॥ तन्मयाऽऽनीतमद्यात्रस्नानंकुरुरघूत्तम ७९ पुनराचमनंरम्यंसर्वतीर्थसमुद्भवम् ॥ गृहाणरघु
नाथत्वंदीयतेयन्मयातव १८० सुवर्णतंतुभिश्चित्रंपीतकौशेयसंभवम् ॥ वस्त्रयुग्मंप्रदास्यामिगृहाणरघुनायक ८१ शुद्धंहेममयंरम्यंनवतंतुसमुद्भवम् ॥ ब्रह्मग्रंथिसमायुक्तं
ब्रह्मसूत्रंप्रगृह्यताम् ८२ मुकुटंकुंडलेरम्येमुद्रिकाःकंकणेतथा ॥ नूपुरेरशनामालाःकेयूरेरत्नमंडिते ८३ इत्यादीन्परमान्दिव्यान्स्वर्णमाणिक्यनिर्मितान् ॥ त्वदर्थंचम
यानीतानलंकारान्गृहाणभो ८४ छत्रंसव्यजनंरम्यंचामरद्वयसंयुतम् ॥ त्वदर्थंचमयानीतंगृह्णीष्वरिपुसूदन ८५ सुगंधचंदनंदिव्यंकृष्णागरुविमिश्रितम् ॥ रक्तचंदनसं
युक्तंगृह्णीष्वत्वंमयार्पितम् ८६ अक्षतांश्चवरान्दिव्यान्मुक्ताफलविनिर्मितान् ॥ कस्तूर्याकुंकुमेनाक्तान्गृहाणपरमेश्वर ८७ माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो ॥
मयाहृतानिपूजार्थंगृहाणरघुनायक ८८ वनस्पतिरसोद्भूतंगंधाढ्यंगंधमुत्तमम् ॥ आघ्रेयंसर्वदेवानांधूपंगृह्णीष्वराघव ८९ साज्यंत्रिवर्तिसंयुक्तंवन्हिनायोजितंमया ॥
दीपंगृहाणमोरामत्रैलोक्यतिमिरापह १९० भक्ष्यभक्तेनसंयुक्तंसपायसघृतान्वितम् ॥ शर्करामधुसंयुक्तंनैवेद्यंप्रतिगृह्यताम् ९१ आम्रादीनिसुपक्वानिफलानिविविधा
निच ॥ समर्पितानितेरामगृह्णीष्वरघुनंदन ९२ पूगीफलसमायुक्तंनागवल्लीदलैर्युतम् ॥ जातीचतुष्टययुतंतांबूलंस्वीकुरुप्रभो ९३ हिरण्यंब्रह्मसंभूतंवन्हितेजःसमुद्भ
वम् ॥ दीयतेदक्षिणार्थंतेगृह्णीष्वरघुनंदन ९४ एवंमयाषोडशचोपचाराःसविस्तरंतेकथिताःशिशोऽत्र ॥ आवाहनाद्याश्चहिदक्षिणांताःशेषांचपूजांसकलांहिवक्ष्ये ९५
पंचवर्तिसमायुक्तंकपिलाज्यविमिश्रितम् ॥ वन्हिनायोजितंरम्यंगृह्णीष्वत्वंनीराजनम् ९६ जातीचंपकमंदारोकेतकीतुलसीतथा ॥ दमनोमुनिकुंदेचह्यनंतंत्वितिवैनव ९७
एभिर्नवविधैःपुष्पैर्मंत्रपुष्पाणिराघव ॥ मयार्पितानिगृह्णीष्वप्रसीदपरमेश्वर ९८ यानिकानिचपापानिजन्मांतरकृतानिच ॥ तानिसर्वाणिनश्यंतुप्रदक्षिणपदेपदे ९९
उरसाशिरसादृष्ट्यामनसावचसातथा ॥ पद्भ्यांकराभ्यांजानुभ्यांसाष्टांगश्चनमोस्तुते २०० आवाहनंनजानामिनजानामिविसर्जनम् ॥ पूजांचैवनजानामिक्षम्यतां
परमेश्वर १ मंत्रहीनंक्रियाहीनंभक्तिहीनंरघूत्तम ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे २ एवंश्रीरामचंद्रस्यभक्त्याकार्यंप्रपूजनम् ॥ निरंतरंतथाकार्यंनवम्यांचविशेषतः ३
विष्णुदासउवाच ॥ गुरोनवविधैःपुष्पैस्त्वयापुष्पांजलिःकथम् ॥ निवेदितोऽत्ररामस्यपूजनेतद्वदस्वमां ४ त्वत्तोनानाविधाःपूजाःसुराणांचमयाश्रुताः ॥ पूर्वंतासुश्रुतोनै
वनवपुष्पांजलिःकदा ५ ॥ श्रीरामदासउवाच ॥ सम्यक्पृष्टंत्वयाशिष्यसावधानमनाःशृणु ॥ आसीत्पुराद्विजवरःकावेर्य्याउत्तरेतटे ६ रामनाथपुरेकश्चित्सुंदराख्योऽति
भक्तिमान् ॥ तस्यासन्नवपुत्राश्चरामचिंतनतत्पराः ७ चंद्रोऽतिचंद्रश्चंद्रामश्चंद्रास्यश्चंद्रशेखरः ॥ चंद्रांशुर्जितचंद्रश्चचंद्रचूडोऽष्टमःस्मृतः ८ रामचंद्रश्चेतिनवगृहाभा श्च
नवस्मृताः ॥ एकदातेत्वयोध्यायांराममक्तकृपाकरम् ९ द्रष्टुंययुश्चैत्रमासेतस्थुस्तेसरयूतटे ॥ तावत्तत्रसमायातानानादेशांतरस्थिताः ११० जनौघानांकोटयश्चनाना

वाहनसंस्थिताः ॥ सरय्वांरामतीर्थेहिचैवस्नानार्थमादरात् ११ तेषांसमागतानांहिसंमर्दस्तत्रवैह्यभूत् ॥ संमदाद्रामचंद्रस्यतेषांनाभूच्चदर्शनम् १२ तदातेमंत्रया
मासुर्नवविप्राःपरस्परम् ॥ कथंश्रीराघवस्यात्रसंमर्देदर्शनंभवेत् १३ चेज्ज्ञातंत्वतियत्नेनतर्हितत्किंतुदर्शनम् ॥ यावत्स्वस्थेनमनसाराघवोननिरीक्षितः १४
तावत्तद्दर्शनंनैवतुष्टिंनोजनयिष्यति ॥ तदाचंद्रोऽब्रवीज्ज्येष्ठस्त्वत्रैवरामदर्शनम् १५ वयंतीव्रेणतपसाप्राप्स्यामस्तप्यतांतपः ॥ तच्चंद्रवचनंश्रुत्वापुनःप्रोचुर्द्वि
जोत्तमाः १६ एककालेतुसर्वेषांतपतामंतरेणहि ॥ कस्यादौरामचंद्रश्चदास्यत्यत्रप्रदर्शनम् १७ कस्यदास्यतिपश्चाच्चविदितंतद्भविष्यति ॥ कस्यास्मासुदृढाभक्ति
र्विदितासाभविष्यति १८ एवंपरस्परंचोक्त्वातेसर्वेद्विजसूनवः ॥ त्यक्ताहारावायुभक्षाश्चैकांतेतेतत्परेणहि १९ गत्वातिदूरंसंमर्दात्तेपुःसर्वेतपोमहत् ॥ तत्स
र्वंराघवोज्ञात्वासर्वसाक्षीजगत्प्रभुः २० तेषांस्वदर्शनंदातुंनवमेदिवसेमुदा ॥ मंत्रयामासश्रीरामःक्षणंचित्तेसमास्थितः २१ एककालेतुसर्वेषांयदिदास्यामिदर्श
नम् ॥ तर्ह्येवतुष्टिःसर्वेषांभविष्यतिनचेन्नहि २२ अतोद्याहंकरिष्यामिनवरूपाणिनिश्चयात् ॥ एवंसंमंत्र्यश्रीरामोलक्ष्मणंप्राहसादरम् २३ शिबिकामानय
स्वाद्यबहिर्गच्छाम्यहंमुदा ॥ तथेतिरामवाक्येनशिबिकांलक्ष्मणस्तथा २४ आनयामासदूतैःसराघवायन्यवेदयत् ॥ तदासिंहासनाद्रामश्चोत्तीर्यशिबिकास्थितः २५
बन्धुभिर्मंत्रिवर्यश्चसुहृन्मित्रादिभिर्युतः ॥ बहिःशनैरयोध्यायाययौरामोमुदान्वितः २६ ततस्तंजनसंमर्दसमतिक्रम्यराघवः ॥ चकारनवरूपाणिह्यात्मनःपरमेश्वरः
२७ शिबिकाःसुहृदोभ्रातॄन्दूतान्मित्रान्सवाहनान् ॥ चकारनवधारामस्तदासक्षणमात्रतः २७ निरीक्षितुंसमायातानात्मानंतान्जनानपि ॥ चकारनवधारामस्तद
द्भुतमिवाभवत् २९ ततस्तैस्तैर्जनैर्मित्रैर्दूतैर्बंधुजनैःसह ॥ नवानांभूसुराणांहियययावग्रेरघूत्तमः ३० ततस्तेभूसुराःसर्वेतदेकसमयेप्रभुम् ॥ आत्मनःपुरतोरामंददृशु
स्तंपृथक्पृथक् ३१ तत्तुष्टमनसःसर्वेप्रणेमूरघुनन्दनम् ॥ शिबिकाभ्यस्ततोरामास्त्ववरुह्यपृथक्पृथक् ३२ नवरूपधराःसर्वान्विप्रानालिंग्यसादरम् ॥ ऊचुर्मधुरयावा
चाप्रसन्नमुखपंकजाः ३३ ॥ रामाऊचुः ॥ भोविप्राःश्रमिताःयूयंयुष्माकंज्ञातनिश्चयम् ॥ बुध्वावयंपृथक्रूपैर्जातास्मोनवधाह्यहि ३४ एककालेऽत्रतपतांसर्वेषांदर्शनं
निजम् ॥ कस्यदेयंतुपूर्वंहिपश्चात्कस्यप्रदीयताम् ३५ इतिसंमंत्र्यहृदयेत्वद्यैकसमयेनहि ॥ युष्माकंदर्शनंदत्तंवरयध्वंवरानितः ३६ रामाणांवचनंश्रुत्वातेप्रोचुर्भूसुरो
त्तमाः ॥ येनाऽस्माकंभवेत्कीर्तिःसवरोदीयतांतुनः ३७ तत्तेषांवचनंश्रुत्वारामाःप्रोचुर्द्विजान्पुनः ॥ युष्माकंदर्शनार्थंहिनवरूपधरावयम् ३८ अद्यजातायतस्तस्माद्यु
ष्माकंनामभिःसदा ॥ नवरामाःपरांख्यातिंगमिष्यामोऽवनीतले ३९ अस्माकंनवयत्किंचित्तत्प्रियंहिभविष्यति ॥ इतितेषांतुरामाणांवाक्यंश्रुत्वाद्विजोत्तमाः ४० संतु
ष्टास्तेतदानेमुःस्वंस्वंरामंमुहुर्मुहुः ॥ तदासर्वेजनारामान्लक्ष्मणान्भरतादिकान् ४१ आत्मानंनवधाजातान्दृष्ट्वाविस्मयमागताः ॥ ततोरामाःशिबिकासुस्थित्वापृष्ट्वा
द्विजोत्तमान् ४२ परावृत्त्ययुःसर्वेमार्गेत्वेकोभवत्पुनः ॥ सर्वेजातास्त्वेकरूपास्तदातेविस्मयंययुः ४३ ततोरामोबन्धुभिश्चपूर्ववन्नगरींययौ ॥ गत्वागेहेतुसीतायैसर्वं

१ चांतरेणहीतिपाठः ।

वृत्तंन्यवेदयत् ४४ अतस्तेनवविप्राणांनामभिर्जगतीतले ॥ ख्यातिंरामाययुस्तत्रनवयद्यत्प्रियम् ४५ यथार्काद्वादशप्रोक्ताएकविंशद्गणाधिपाः ॥ रुद्राएकादशप्रो
क्तायथाष्टभैरवाःस्मृताः ४६ नवदुर्गायथात्वत्रतथारामानवस्मृताः ॥ प्रियंद्वादशसूर्यायएकादशशिवप्रियम् ४७ एकविंशत्प्रियंयद्वद्गणेशायमहात्मने ॥ प्रिय
मष्टभैरवायदुर्गायैतुनवप्रियम् ४८ यथातथाऽत्ररामायनवशिष्यप्रियंसदा ॥ तस्मान्नवविधैःपुष्पैरंजलिस्तत्प्रियोमतः ४९ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गत
श्रीमदानन्दरामायणे मनोहरकांडे रामपूजाद्वयविस्तारो नामतृतीयःसर्गः ॥ ३ ॥ श्रीविष्णुदासउवाच ॥ स्वामिंस्त्वयारामनाम्नामष्टोत्तरसहस्रकम् ॥ भद्रमुक्तंतथा
चाष्टोत्तरशतमनुत्तमम् १ रामनाम्नांभद्रमुक्तंरामचंद्रप्रपूजने ॥ तत्कीदृशेतेतुभद्रेलेखनीयेमनोरमे २ तेमांविस्तरतोब्रूहियथाऽहंवेद्मितत्त्वतः ॥ तयोर्येयेविशेषाश्चभ
द्रयोस्तेऽपिमांवद ३ ॥ श्रीरामदासउवाच ॥ शृणुशिष्यप्रवक्ष्यामिभद्राणांरचनाःशुभाः ॥ यथापृष्टात्वयामह्यंरामनाम्नामनोरमाः ४ अष्टोत्तरशतंरामलिंगतोभद्रमुत्त
मम् ॥ आदौमयाविस्तरेणकथ्यतेतन्निशामय ५ अत्रोपास्यारामसुद्रारुद्रश्चोपासकःस्मृतः ॥ श्रीरामलिंगतोभद्रमतएवोच्यतेबुधैः ६ तिर्यगूर्ध्वंतदारेखाद्वेशतेरेखया
ऽधिके ॥ तत्रादौकृष्णपरिधिस्ततोरक्तःसितस्ततः ७ ततःपीतश्चपरिधिःकोणेंदुस्त्रिपदःस्मृतः ॥ चंद्राग्रेशृंखलाकृष्णास्मृताद्वादशपादिका ८ हरिताचततोवल्लीत्रयो
विंशत्पदात्मिका ॥ ततःपीताशृंखलाचस्मृताद्वादशपादिका ९ विंशत्पादभवंभद्रंरक्तंवापीसितातत ॥ त्रयोदशपदाज्ञेयालिंगंषड्विंशपादजम् १० कृष्णश्चतुष्पदो
मूर्द्धानाभिर्युग्मपदःस्मृतः ॥ मूलस्कंधौषट्पदजौपार्श्वेतुर्यपदात्मके ११ ततोरक्तश्चपरिधिर्मर्यादाख्योऽर्कपादजः ॥ ततोमुद्रातुर्यतुर्यभूमिपादमितास्मृता १२ ततो
मर्यादापरिधिर्लिंगमुद्राःपुनःपुनः ॥ एवंहरानवज्ञेयामुद्राश्चाष्टौप्रकीर्तिताः १३ परिधयःषोडशैवह्यंतेलिंगोर्ध्वपार्श्वके ॥ तिर्यक्भद्रंनवपदैःपीतंवाहरितंक्वचित् १४
रक्तभद्रोर्ध्वतःशेषपदानियानिसंतिहि ॥ यथेच्छंचित्रवर्णैश्चशृंखलार्थेनियोजयेत् १५ मध्यलिंगस्कंधयोश्चसितेनेत्रेस्मृतेशुभे ॥ पीतेलिंगस्कंधयोश्चशृंखलेत्रित्रिपाद
जे १६ अधोमुखंहरोर्ध्वंचरक्तंभक्तंद्विषट्पदम् ॥ तिर्यग्भद्रेतुहरितेस्मृतेऽष्टादशपादजे १७ ततःपंक्तेरूर्ध्वभागेहरितःपरिधिःस्मृतः ॥ ततऊर्ध्वेपीतवर्णःप्रोक्तश्चपरि
धिःशुभः १८ एवंप्रोक्ताप्रथमेयंपंक्तिःसर्वत्रकारयेत् ॥ द्वितीयायांविशेषंचवक्ष्यामिनपुरेरितम् १९ सप्तमुद्राहराह्यष्टपरिधयश्चतुर्दश ॥ भद्रंरक्तंषट्पदंचशेषंसर्वंतुपूर्व
वत् २० तृतीयायांततःपंक्तौमुद्राःपंचशिवारसाः ॥ परिधयोदशज्ञेयाभद्रंत्रिंशत्पदात्मकम् २१ ततःपंक्तौचतुर्थ्यांतुत्रीशामुद्राचतुष्टयम् ॥ परिधयोऽष्टविज्ञेयाभद्रं
चनववेदजम् २२ हरित्पीतयोर्मध्येहिलोहितःपरिधिःस्मृतः ॥ पंचमायांततःपंक्तौमुद्रैकाशंकरद्वयम् २३ परिधयश्चचत्वारिभद्रंनवतिपादजम् ॥ हरिद्रक्तपी
तवर्णाःपरिधयश्चपूर्ववत् २४ षष्ठायांचततःपंक्तौमुद्रैकापरिधिद्वयम् ॥ नववेदभवंभद्रंतिस्रःपरिधयोऽपिच २५ मध्येऽपिसर्वतोभद्रंवेदनेत्राग्निपादजम् ॥ त्रिप
देंदुःशृंखलाश्चकृष्णापंचपदामताः २६ एकादशपदावल्लीभद्रंनवपदात्मकम् ॥ चतुर्विंशत्पदावापीपीतश्चपरिधिःस्मृतः २७ पदेषुषोडशेष्वेवमध्येपद्मंयथा

१ मुद्रैकेशंकरस्तथाइतिपाठः ।

रुचि ॥ कर्णिकापीतवर्णाचशेषंबुद्ध्यानियोजयेत् २८ एतदष्टोत्तरशतंरामलिंगात्मकंस्मृतम् ॥ तत्रमुद्रास्वरूपंचवेदवेदैर्द्वभिःस्मृतम् २९ राज्यकाण्डेउत्तरार्ध
स्यसर्गेऽष्टादशमेपुरा ॥ उक्तंमुद्रास्वरूपंचतथाप्यत्रतुकथ्यते ३० पंक्तयोर्कमितास्तत्रसर्वाद्वादशपादजाः ॥ तासुपूर्वदिगारभ्यक्रमेणैवंप्रपूरयेत् ३१ प्रथमास
प्तमीचोभेपंक्तीकृष्णेप्रपूरयेत् ॥ उर्ध्वाधःपंचपंचैवपंक्तयस्तत्क्रमंब्रुवे ३२ पंचपंक्तिषुचोर्ध्वाद्दिप्रथमायाःप्रपूरयेत् ॥ प्रथमंचेशदिग्जंचकृष्णवर्णेनचापरम् ३३ तदध
श्चद्वितीयायाःप्रथमंचद्वितीयकम् ॥ चतुर्थंसप्तमंषष्ठंह्यष्टमंनवमंतथा ३४ तथैकादशमंचापिकृष्णवर्णानिपूरयेत् ॥ तदधश्चतृतीयायाश्चतुर्थंषष्ठसप्तमे ३५ तथैकादश
मंचापिकृष्णवर्णानिपूरयेत् ॥ चतुर्थ्यास्तदधश्चापिप्रथमंचद्वितीयकम् ३६ चतुर्थंसप्तमंषष्ठंनवमंरुद्रसंमितम् ॥ तदधःपंचमायाश्चप्रथमंचद्वितीयकम् ३७ चतुर्थंचत
थाषष्ठंनवमैकादशेतथा ॥ राजेतिद्वेऽक्षरेशुक्लेद्रष्टव्येपंचपंक्तिषु ३८ पञ्चपंक्तिष्वधश्चाऽथप्रथमायाश्चपूर्ववत् ॥ तदधश्चद्वितीयायाःप्रथमंचद्वितीयकम् ३९ चतुर्थंसप्तमं
षष्ठंनवमंदशमंतथा ॥ तथाचैवद्वादशमंकृष्णवर्णानिपूरयेत् ४० तृतीयायाश्चतुर्थंचषष्ठमर्कंचसप्तमम् ॥ चतुर्थ्याःप्रथमंषष्ठंद्वितीयंचचतुर्थकम् ४१ अष्टमंनवमं
चार्कंदशमंचापिपूरयेत् ॥ पंचमायाःप्रथमंचद्वितीयंचचतुर्थकं ४२ षष्ठमर्काष्टमंचापिसप्तमंदशमंतथा ॥ नवमंकृष्णवर्णानिरामेतिद्वेऽवलोकयेत् ४३ राजारामेति
चत्वारिह्यक्षराणिनिरीक्षयेत् ॥ व्यत्ययाद्रामराजेतिबुद्ध्याकार्येऽक्षरेनरैः ४४ अथवारामरामेतितृतीयंनामकारयेत् ॥ विशेषंतत्रवक्ष्यामिह्यधःपंचसुपंक्तिषु ४५ पंक्ते
श्चतुर्थ्याःप्रथमंपदंकृष्णेनकारयेत् ॥ नाकारस्तेनद्रष्टव्योरामनामावलोकयेत् ४६ अथवारामरामेतिविशेषश्चोर्ध्वपंक्तिषु ॥ प्रथमापूर्ववज्ज्ञेयाद्वितीयायास्ततःपरम् ४७
162 प्रथमंचद्वितीयंचतृतीयंपंचमंतथा ॥ अष्टमंनवमंषष्ठंतथैकादशमंत्वपि ४८ तृतीयायाश्चप्रथमंरुद्रंषष्ठंचपंचमम् ॥ चतुर्थ्याःप्रथमंचैवद्वितीयंचतृतीयकम् ४९ पंचमं
सप्तमंचापिह्यष्टमंनवमंतथा ॥ तथैकादशमंचापिकृष्णवर्णानिपूरयेत् ५० पञ्चमायाःप्रथमंचद्वितीयंचतृतीयकम् ॥ पञ्चमंसप्तमंषष्ठंह्यष्टमंनवमंतथा ५१ तथै
कादशमंचापिरामेतिद्वेऽक्षरेसिते ॥ नामान्येतानिचत्वारिचतुष्पार्श्वेषुयोजयेत् ५२ लघुमुद्रान्वितंरामलिंगाख्यंभद्रमुच्यते ॥ मयाशिष्याधुनातत्त्वंशृणुष्वस्वस्थमान
सः ५३ तिर्यगूर्ध्वमेकपंचाशद्रेखास्तत्पदेषुच ॥ सप्तसप्तपदातेद्वोपरिधीपीतवर्णके ५४ कार्यौतत्रकोणदेशेऽब्धिद्वाभ्रिपदशृङ्खलकः ॥ शृंखलतुंपदाकृष्णात्रयोदशपदालता
५५ हरितेशोवसुपदःकृष्णवर्णःप्रकारयेत् ॥ त्रिपदंलोहितंज्ञेयंभद्रंवल्यंतिकस्थितम् ५६ षष्टिपादात्मिकामुद्रातत्रैवद्रयमदिक्स्थिते ॥ त्यक्त्वापंक्तिकोणकोष्ठान्सिधु
४ सिंधु ४ मितांस्तथा ५७ सिंध्व ४ र्तु ६ पंक्तिद्वेसप्तमायाःपंक्तेःपदंत्वधः ॥ मषिणापूरयेत्तत्रभातिरामेतिसत्पदम् ५८ तत्रादावग्निमुद्रास्तत्सीमापरिधयस्तथा ॥
४९ रक्तालिंगद्वयंभद्रंतथालिंगोपरिस्थितम् ५९ पदद्वयंपीतवर्णंवीथीवल्यानियोजयेत् ॥ द्वितीयेत्वेकमुद्राद्वोपरिधीद्वोशिवौमतो ६० भद्रंनवपदंलिंगवल्योर्मध्येरसात्म
कम् ॥ भद्रंपीतंलिंगोपरिरक्तंतुर्यपदात्मकम् ६१ लिंगस्कंधपदेद्वेद्वेहरितेवीथिकाऽपिच ॥ भद्राणित्रीणिज्ञेयानिपीतंद्वेलोहितेऽत्रहि ६२ ततोंतःसर्वतोभद्रंकार्यंतत्रतु
वापिका ॥ चतुर्विंशत्पदाभद्रमंककोष्ठंलतेशिका ६३ त्रिपदोब्जःपञ्चपदाशृंखलापरिधिस्ततः ॥ मध्येपद्मंरक्तवर्णंरचयेद्वाविचित्रितम् ६४ पीतशुक्लरक्तकृष्णाश्चांतेप

रिघयोमताः ॥ एतत्षोडशमुद्राभीरामलिंगाख्यभद्रकम् ६५ सदानन्दमयंरामंचिज्ज्योतिषमनामयम् ॥ सर्वावभासकंनित्यंस्वात्मानंसमुपास्महे ६६ चन्द्रकलं १६
रामलिंगतोभद्रंयद्विकल्पितम् ॥ निर्विचारंवास्तितस्मिन्विवेकस्तंविविच्यते ६७ कल्पितःसनरोराजारामलिंगयुतःस्मृतः ॥ रमणाद्रामइत्युक्तोयोगिगम्यः
परंमहः ६८ लीयन्तेयत्रभूतानिनिर्गच्छन्तियतःपुनः ॥ तेनलिंगंपरंव्योमेत्युक्तंब्रह्मविदुत्तमैः ६९ लिंग्यतेचिंत्यतेयेनभावेनभगवांच्छिवः ॥ लिंगरूपीसरामेतिलिंगं
चेतिद्विनामकः ७० बहूनिसंतिनामानिरामेशस्यमहात्मनः ॥ रजांसिगणयेत्कोऽपिभूमेर्नैवाखिलेशितुः ७१ तस्मिन्यत्सर्वतोभद्रंहृदयंतत्प्रकीर्तितम् ॥ तत्रपद्ममष्टप
त्रंसकेसरसुकर्णिकम् ७२ तत्स्थानंरामलिंगस्यध्यानार्थंपरिकल्पितम् ॥ अन्यथासर्वगस्यास्यकथंदेशादिभेदता ७३ चिज्ज्योतिःपरमात्माऽयंस्वमायावशतांगतः ॥
धर्मार्थकाममोक्षार्थंसृष्ट्युपाधिप्रविष्टवान् ७४ तस्यचैतन्यचन्द्रस्यषोडशेमाःकलाःपराः ॥ चिद्व्याप्ताश्चद्वारभूतान्घटादीन्विषयानिह ७५ प्रकाशयन्तिघ्नन्तित्यज
न्तिचस्वभावतः ॥ बुद्धिरेकाऽत्यन्तसितासन्निकृष्टाशिवात्मनः ७६ अतोज्ञानप्रधानासातज्ज्ञातंचक्षुरादिषु ॥ प्रसृतंरूपशब्दादीन्जानातिसुविशेषतः ७७ चतुर्द्धा
वृत्तिभेदेनप्रोक्तातत्वार्थदर्शिभिः ॥ प्रयोजनंनतेनात्रप्रकृतंतद्विविच्यते ७८ क्रियाप्रधानःप्राणश्चपंचधाऽसौस्ववृत्तितः ॥ प्राणापानौतथाव्यानःसमानोदानका
विति ७९ वागादिकर्मेंद्रियेषुक्रियाप्राणाश्रयामता ॥ श्रवणंनयनंघ्राणंत्वग्रसनेंद्रियंतथा ८० पंचेमानिचेंद्रियाणिज्ञानद्वाराणिवैविदुः ॥ वाक्पाणिपादपायूप
स्थाश्चकर्मेंद्रियाणिच ८१ एवंषोडशसंख्यानंकलानामुच्यतेबुधैः ॥ तासुसर्वासुचैतन्यंरामनामेतिविश्रुतम् ८२ प्रविष्टंदीप्यतेशश्वत्तेनविश्वंविचेष्टते ॥ अनादिसंसार
तरुःकर्ममूलफलात्मकः ८३ देहाभिमानिनोजीवाःफलभोगायपक्षिणः ॥ यथाकर्मसुखंदुःखंखादंतिस्वेश्वरार्पितम् ८४ कश्चिज्जन्मसहस्रेषुज्ञानवान्जायतेयदा ॥ तदा
त्मस्थंरामरूपंज्ञात्वामोक्षीभवत्यलम् ८५ इंद्रियाणिपराण्येवतेभ्योबुद्धिःपरामता ॥ तत्परःपरमात्माचसर्वसाक्षीविनिश्चितः ८६ द्वौसुपर्णावेकवृक्षंसमाश्रित्यस्थितौ
तयोः ॥ एकःसारफलंस्वादुखादत्यन्योविचक्षते ८७ त्रिषुधामसुयद्भोग्यंभोक्ताभोग्यश्चयद्भवेत् ॥ तेभ्योविलक्षणःसाक्षीत्याहचाथर्वणीश्रुतिः ८८ यच्चास्ती
हयत्स्फुरतियच्चानंदयतिस्वयम् ॥ यस्मिंश्चमहसिप्रख्येसर्वेवेदाःसमन्विताः ८९ विषयादिधीपर्यंतंजडंसर्वमनात्मकम् ॥ यस्यार्थेचप्रियंचैतत्सरामात्मामहान्प्रियः ९०
सर्वेषांप्राणिनांस्वात्मापरप्रेमास्पदोमतः ॥ सतुसर्वत्रैकएवनेहनानास्तिगच्छति ९१ चिद्रामंहृद्गतंज्ञात्वायोसौसोहमितिस्थिया ॥ आचार्यदत्तयासम्यक्परमोपासनंगतः
९२ आवृत्तिरसकृच्छायात्फलीभूतेपरात्मनि ॥ बोधदार्ढ्येपुनस्तस्यनकार्यंविद्यतेभवे ९३ सर्वेप्युपायाःशास्त्रेषुयज्ज्ञानार्थेप्रयोजिताः ॥ सचेद्देशिकशब्देनहृद्याविः
किंपरंततः ९४ दृष्टेऽस्मिन्रचितेभद्रेयद्येवंप्रविचार्यते ॥ तदाचित्तेपराप्रीतिर्जायतेविदुषांसताम् ९५ नमोरामायशांतायलिंगरूपधरायच ॥ शंभवेविष्णवेतुभ्यंशंकराय
शिवात्मने९६अथवाऽन्द्रेस्थलेभद्रंकार्यंनवपदात्मकम् ॥ तिर्यक्भद्रंषट्पदजंरक्तपीतेत्रतेस्मृते ९७ स्थलेद्वितीयभद्रंहिरक्तंविंशपदात्मकम् ॥ तिर्यक्भद्रंनवपदैःपीतंचित्रे

१ बुद्धिरेकाकलातस्येतिपाठः ।

तुशृंखले ९८ द्विद्विपादात्मकेकार्यंशेषंसर्वंहिपूर्ववत् ॥ रामतोभद्रमेतच्चकेवलंरामतुष्टिदम् ९९ नत्वेशानंराममानंदकंदंमायातीतंनिर्विकारंनिरीहम् ॥ विद्याधीशंषड्गुणे
काश्रयंचवक्ष्येभद्रंरामनामांकितंतत् १०० प्रागुत्तराद्विशतमंकनवाधिका २११ श्वरेखाःसमाःसुपरिकल्प्यपदेषुतासाम् ॥ कोणांतरात्रउपरींदुशकुंतसंख्याः २१
पीताश्चतेपरिधयःपरिकल्पनीयाः १ कोणाब्जशृंखललताःसितकृष्णनीलाभद्राणिभिन्नरचनान्यरुणानितानि ॥ मुद्राश्चतत्परिधयश्चसिताश्चरक्ताःसंपूरिताश्चजनयंति
रतिंमुनीनाम् २ मुद्रातुषष्टिपदसंवलिताचतत्रपंक्तीविहाययमवासवदिक्तनस्थे ॥ प्रत्येककोणकपदानिचतुष्टयानिपंक्तिद्वयंरसतुरीयकमंजनाभम् ३ कृत्वापदैकमघत
स्त्वथसप्तमायास्तेनातिसुन्दरतरंपरिभातिसारम् ॥ रामेतिव्यक्षरमुमेशजपंनिधानंप्राणप्रयाणसमयेजपतांमहोदम् ४ रचयेदादितःसम्यग्यावद्विंशस्थलावधि ॥
सर्वत्ररामसुद्रासुमध्येसुपरिधिद्वयम् ५ आदौतत्त्वमितामुद्रास्त्रयोविंशन्मितास्ततः ॥ द्वाविंशैकविंशविंशत्रिषट्सप्तदशापराः ६ व्यष्टचतुर्दशत्रयोदशद्वादशरुद्रकाः ॥
नवांष्टसप्तषट्तुर्यंत्रिव्येकाश्चाप्यनुक्रमात् ७ भद्रंषोडशपादंचविंशत्रिंशत्षडग्निकम् ३६ ॥ चंद्रकलं १६ तत्वमितं २५ त्रिंशा ३० क्षिसिंधु ४२ विंशकम् ८ त
त्व २५ षडग्नि ३६ नेत्रांबुनिधि ४२ विंश २० त्रमोग्निकम् ३० ॥ षट्त्रिंश ३६ त्षोडश १६ पदंतत्वे २५ त्रिंश ३० द्विसिंधुकम् ४२ ९ विंशत्कोष्ठंक्रमादेवं
भवेत्पार्श्वचतुष्टये ॥ एकविंशत्पदेभद्रमंककोष्ठंचवापिका १० चतुर्विंशपदाकार्यापरिध्यंतोरुणांबुजम् ॥ भद्रोपरियत्रयत्रपदान्युर्वरितानिच ११ तिर्यक्भद्रशृंखलार्थं
163 यथेच्छंपूरयेद्धिया ॥ सर्वत्रशृंखलाःपंचपदजैकादशीलता १२ त्रिपदश्चशशीज्ञेयःपरिधयोबहिःक्रमात् ॥ कृष्णरक्तशुक्लपीताश्चतुर्दिक्षुसमंततः १३ एतदष्टोत्तरदशशतं
१००८ रामस्तुभद्रकम् ॥ अथवामनु १४ रेखानांद्दिद्दिकृत्वाप्रकल्प्यच १४ परिधिस्तत्रलिंगानामेकविंशाधिकंशतम् ॥ वाप्योभद्राणिचंद्रादिचतुःपार्श्वेषुयोजयेत्
१५ चतुर्विंशपदंलिङ्गंवाप्यष्टादशपादिका ॥ द्वेभद्रेनवनवपदेव्यष्टव्यष्टपदानिषट् १६ त्रिंशल्लिंगानिवाप्यस्तुसप्तविंशन्मितामताः ॥ एकस्मिन्पार्श्वेकेलिंगाधिक्येभद्रे
प्रकल्पयेत् १७ व्यष्टव्यष्टपदेशेषाण्यंककोष्ठानियोजयेत् ॥ लिंगंकृष्णंसितावाप्यःशेषंसर्वंपुरोदितम् १८ पदानिशेषभूतानियत्रयत्रेहतानिच ॥ भद्रशृंखलयोग्यानितद
र्थेविनियोजयेत् १९ कृष्णरक्तशुक्लपीतांतेपरिधयोमताः ॥ एवंलिंगयुतंरामतोभद्रंपरिकीर्तितम् २० अनेनदेवौसुप्रीतौरामेशौभवतस्त्विह ॥ रामस्यपूजनार्थंहित्वि
दंप्रोक्तंवरासनम् २१ आचार्यान्ज्ञानसंपन्नान्नत्वातेषांप्रसादतः ॥ वक्ष्येहंरामतोभद्रकृतिंचशंभुसंयुताम् २२ प्रकृतिरामतोभद्रंविकृतिर्लिंगसंयुतम् ॥ अन्येविकाराःसं
ज्ञेयाह्येवंकृतिस्त्रिधोच्यते २३ तिर्यगूर्ध्वमभ्यधिकाःशतरेखाःप्रकल्पयेत् ॥ तत्पदेषुपरिधयःषट्षडंतेषडेवतु २४ पीताःकोणेषुत्रिपदःशुक्लेंदुःशृंखलाऽसिता ॥ पंचपदै
कादशिकावल्लरीभद्रसंक्रमात् २५ सिंधु ४ षोडश १६ सूर्य १२ र्तु ६ युग ४ षोडशकोष्ठकम् ॥ कल्पयेत्त्वष्टकोष्ठेषुराममुद्राहिपूर्ववत् २६ अष्ट ८ षट् ६ चपंच
५ सिंधु ४ वन्हि ३ चंद्र १ मिताःशुभाः ॥ तासांसीमापरिधयस्त्वेकाधिकास्तुलोहिताः २७ रजनीशनेत्रसिंधुपंक्तिषुमध्यमास्त्रयः ॥ मर्यादाख्यापरिधयोभवंतिद्वि
गुणीकृताः २८ अंतिमेतुपरिध्यंतःसर्वतोभद्रकंलिखेत् ॥ विशेषस्तत्रवापीतुचतुर्विंशपदात्मिका २९ भद्रंनवपदंपद्मंपरिध्यंतःसुलोहितम् ॥ पीतातत्कर्णिकाकार्यांअं

तेपरिधयोपिच १३० पीतशुक्लरक्तकृष्णवर्णायत्रपदानिच ॥ भद्रोर्ध्वंशेषभूतानितानियुक्त्याप्रपूरयेत् ३१ तिर्यक्भद्रशृंखलाद्यैःपीतचित्रेचतेस्मृते ॥ एतदष्टोत्तरशतं
रामतोभद्रमीरितम् ३२ एकंसंसारशून्यंसकलसुखनिधिंसच्चिदानन्दकन्दंमायायोगेनविश्वात्मकमिदममलंब्रह्मविष्ण्वीशसंज्ञम् ॥ सृष्टिस्थित्यंतहेतुंनिगमकविनुतंसर्वभू
तात्मभूतंसर्वज्ञंसर्वशक्तिंरणहरमस्तंतन्महोभावयेऽहम् ३३ नत्वाश्रीदेशिकेंद्रस्यपादाब्जममरप्रदम् ॥ वक्ष्येआध्यात्मिकींसूक्तिंसतांचित्तचमत्कृतिम् ३४ पशूनांनखरोमा
दिसर्वंमर्थायकल्पते ॥ मृतस्यनरदेहस्यसृष्टिर्दोषावहोदिता ३५ एकमेवामुनासाध्यंज्ञानंस्वात्मस्वरूपदम् ॥ तद्विनातुपशुभ्यश्चनरोहीनतरोमतः ३६ प्रतिभावान्पु
ण्यतमःश्रद्धावान्गुर्वधोक्षजे ॥ कोटिष्वेकःस्वयंसाक्षान्नरोनारायणोभवेत् ३७ केनचिद्रामतोभद्रंमुद्राषष्टिपदात्मिका ॥ रामांकिताचसंकृतेविविच्येतेचतेउभे ३८ लो
काःसप्तयथांडेस्मिंस्तथातत्रप्रकल्पिताः ॥ तेनेयंरचनातुल्याज्ञात्वाहृत्स्थमुदीर्यते ३९ ब्रह्मांडरामतोभद्रंमुद्राभूतानिसंमताः ॥ रामचैतन्ययुक्तानिसंमतानितुसूरि
भिः १४० यस्यांस्यान्मुद्रितंवस्तुसामुद्रेतिनिगद्यते ॥ मुद्रितंचिन्हितंचाऽथपिहितंह्यर्थतोभवेत् ४१ तद्वत्सर्वासुचैतासुब्रह्ममुद्रितमुच्यते ॥ तथाप्यासांसबाह्यांतश्चै
तन्यंसंप्रकाशते ४२ आच्छादितोऽपिकलशेस्फाटिकेंतर्बहिःकिल ॥ दीपःप्रकाशतेकस्तंलोपयेच्चतथेष्यते ४३ मूषासिक्तंताम्ररसंतदाकारंप्रपद्यते ॥ तथाब्रह्मनिरा
कारंमुद्राकारंविभासते ४४ पुरश्चक्रेप्रभुःसर्वाःपुरःपुरुषआविशत् ॥ इत्युक्तंकण्वशाखायांअन्यत्राऽपिहिपठ्यते ४५ एकोवशीसर्वभूतांतरात्मेतिश्रुतेर्वचः ॥ एको
देवःसर्वभूतेष्वितिचैवापराश्रुतिः ४६ पुरःसृष्टाःपरेशेननैवताभिस्तुतोषसः ॥ सृष्ट्वेमांमानुषींमुद्रांपरंतोषमवापसः ४७ देवताश्चान्नभुक्त्यर्थंदृष्ट्वेमांपौरुषींतनुम् ॥ हर्षा
दाहुश्चसुकृतंवतेतिश्रूयतेस्फुटम् ४८ पुरुषंत्वेवाविस्तरमात्मेत्याहश्रुतिःस्वयम् ॥ पुरासृष्टैःसर्वभूतैरतुष्टहृदयःस्वराट् ४९ ब्रह्मावलोकधिषणंनरंदृष्ट्वामुदंगतः ॥ इत्य
स्माभिर्विष्णुदासश्रूयतेभगवद्वचः १५० मुदंकरोतिदेवस्यद्रावयेद्दुःखपातके ॥ इतिमुद्रानिरुक्तिश्चमन्त्रशास्त्रेऽपिश्रूयते ५१ अतःसर्वेषुदेहेषुसद्रूपग्रहणंकृतम् ॥
स्वर्गापवर्गयोश्चैषोऽधिकारोस्मिन्नचेतरे १५२ लोकेप्रसिद्धिर्यःकश्चिद्राजमुद्रांकितोनरः ॥ अधिकारीतिमन्यंतेपूजयंत्यादरादिभिः ५३ तथानयांकितोजीवोऽधि
कारीशास्त्रभूमिषु ॥ नान्याभिर्योनिभिर्ज्ञातुंशक्यतेस्वात्मनःपदम् ५४ तस्मिंश्चैवनरोपाधौपदानिषष्टिसंतिहि ॥ तानिसंक्षेपतःसम्यक्प्रदर्श्यंतेऽवबुद्धये ५५ अविद्या
कामकर्माणिभोक्तृभोगौसुषुप्तिका ॥ षट्पदानितुज्ञेयानिदेहेकारणसंज्ञके ५६ तमोऽज्ञानमविद्येतिशब्दाएकार्थवाचिनः ॥ अतोगुणाग्रहोनाऽत्रदृश्यतेषट्सुभोद्विज ५७ लिं
गेपुर्यष्टकेऽविद्याकामकर्मग्रहःस्मृतः ॥ तथाप्यत्रतुहेत्वाञ्चयाणांग्रहणंकृतम् ५८ कार्याभावेप्यवस्थानात्कारणेकारणात्मना ॥ कामस्यकर्मणश्चाऽत्रविद्यतेसूक्ष्मरूपता ५९
अविद्यायामुख्यताऽत्रविद्यतेकारणात्मनि ॥ वस्तुतस्तुनकामोऽत्रकामनावाश्रुतेर्मतम् ६० अष्टत्रिंशत्पदानीहविद्यंतेसूक्ष्मदेहके ॥ दशेंद्रियाणिपंचैवप्राणाबुद्धिर्मनास्त्विति
६१ सप्तदशात्मकंलिंगंप्रसिद्धंशास्त्रसंमतम् ॥ पंचविषयग्रहणंपंचकर्मक्रियास्तथा ६२ पंचसंप्राणव्यापाराःसंकल्पोनिश्चयस्त्विति ॥ सप्तदशचैवधर्माःप्रसिद्धाःशास्त्रसंमताः ॥ १० ॥
६३ स्वप्नाभिमानिनौभोगौरजश्चेतिचतुष्टयम् ॥ देवानामिंद्रियाणांचस्थानाभावेऽप्रवृत्तितः ६४ स्थूलदेहेषोडशैवपदानिसंमतानिहि ॥ गणःसप्तदशस्तेषामपानव्यानयोः

पदे ६५ पायुत्वक्स्थानयोर्ज्ञेयेवाचोरसिनिकेतने ॥ प्राणस्यमनसश्चापिबुद्धिस्थानेपदंत्विति ६६ पदानिद्वादशेमानिमोक्तृभोगौतथागुणः ॥ अवस्थाजाग्रतिश्चेतिकथिता
निमर्नाषिभिः ६७ मुद्रामेतादृशींप्राप्यवेदयेदात्मचित्पदम् ॥ तस्यजन्मकृतार्थंस्यान्महतीनाष्टिरन्यथा ६८ मुद्रारूपंविविच्यैवयत्नाद्मासांकितेतिच ॥ उक्तंतदधुनाकिंचि
त्संक्षेपेणनिरुच्यते ६९ रामेतिलोकरमणाद्रमंतेयोगिनोऽमले ॥ परानन्दपदेनित्यंतेनरामइतीर्यते ७० रसेनैवामुनासर्वेजीवाजीवंतिनान्यथा ॥ इमंरसमयंलब्ध्वाभवंत्यान
न्दिनोऽखिलाः ७१ विशतायेनविश्वेषुसर्वंचेतयतेजगत् ॥ नतंचेतयतेकश्चित्सरामइतिकीर्त्यते ७२ सत्तायेनाखिलंविश्वंसदेवेतिप्रतीयते ॥ असत्सत्ताप्रदःसाक्षाद्रामइत्य
भिधीयते ७३ यथाप्रसिद्धंरामेतिब्रह्मणोह्यभिधानकम् ॥ तथालिंगंचेतिनामरूपंचपरमात्मनः ७४ लीयंतेयत्रभूतानिनिर्गच्छंतियतःपुनः ॥ तेनलिंगंपरंव्योमनिष्कलः
परमःशिवः७५इतिशास्त्रविदांवाणीश्रूयतेतत्त्वदर्शिनाम् ॥ अतःसर्वाणिनामानिरूपाणिचांतरात्मनः७७पंतितेनशब्दभेदेरूपभेदेऽपिसर्वथा ॥ तत्त्वतोनैवभेदोस्तिह्यर्थस्यै
कस्यवस्तुनः ७७ सब्रह्मासशिवश्चाथसहरिःससुरेश्वरः ॥ सोऽक्षरःपरमश्चैवसस्वराडितिवेदवाक् ७८ यस्येमेसच्चिदानन्दाःसव्याप्ताःसर्ववस्तुषु ॥ तेनास्तिचप्रियंभातिवस्तु
मात्रंप्रदृश्यते ७९ आम्नायेषुचसर्वेषुरामब्रह्मात्मकीर्तनम् ॥ आदिमध्यावसानेषुश्रूयतेगुर्वनुग्रहात् ८० ऐतरेयकेआत्मावाइदमेकःपुराजनैः ॥ आसीत्तेनैवलोकानांपा
लानांसृष्टिरिच्छया ८१ कृतार्थंसर्वदेवानामन्नभुक्त्यर्थमीप्सितम् ॥ तदावायतनंचान्नंसृष्टंतेभ्यःस्ततःपरम् ८२ विचार्यस्वीयस्वामित्वंसीमाद्वाराप्रविष्टवान् ॥ तत्रा
त्मानंब्रह्मततंदृष्ट्वैवापेंद्रताकिल ८३ कोयमात्मेतिसंप्रश्नेयेनपश्यतिजिघ्रति ॥ इत्यादिभिर्विनिर्णीतंतदेतद्धृदयादिभिः ८४ प्रज्ञानस्यास्यनामानिचोक्त्वातत्सर्वतास
मा ॥ एषब्रह्मेत्यादिशब्दैर्दर्शिताचाखिलंजगत् ८५ प्रज्ञानेत्रंचप्रज्ञानेप्रतिष्ठंचेत्यनेनाहि ॥ प्रज्ञानंब्रह्मश्रुत्यांतित्रिकालेष्वितिदर्शितम् ८६ तद्रामसच्चिदानन्दघनान
न्तंनसंशयः ॥ तैत्तिरीयकशाखायांब्रह्मणोलक्षणंपुरा ८७ सत्यंज्ञानमनन्तंसंकीर्त्यवेदगुहादिकम् ॥ यश्चासावश्नुतेकामान्सर्वान्युगपदेवहि ८८ फलंज्ञानस्यचोक्ताऽथ
तस्माद्ब्रह्मात्मकेकिल ॥ क्रमोत्पत्तिर्हिभूतानांकोशपंचकवेदनम् ८९ तत्फलंतदनात्मत्वंसंप्रदर्श्यांतरत्वतः ॥ पुच्छंब्रह्मेतिनिर्णीयतदसत्सत्प्रतीतितः ९० असत्सद्ब्रव
तिह्येवंसंकीर्त्यचततःपरम् ॥ कामयित्वतदेवेहस्वात्मानंजगदात्मना ९१ कृत्वातस्मिन्प्रविष्टेवसच्चत्यच्चाभवत्किल ॥ अपानप्राणयोश्चेष्टायस्यास्तित्वेप्रजायते ९२
आत्मैवरसएवैषआनंदयतिचाखिलान् ॥ भयहेतुस्तदेवेहवातादीनांप्रदर्शितम् ९३ मानुषादारभ्यब्रह्मांताआनन्दायेशतोत्तराः ॥ विदवस्तेपरब्रह्मानन्दस्येतिविनि
श्चितम् ९४ सयश्चायंनरोपाधावादित्येयश्चवर्तते ॥ सएकइतिज्ञातारंपापंपुण्यंकृताकृते ९५ नसंतापयतस्त्वेवंसम्यक्सर्वप्रकीर्तितम् ॥ यद्ब्रह्ममहिमापेक्ष्यतद्रामे
तिनसंशयः ९६ छांदोग्येपिसवेदेतिब्रह्मोपक्रम्यब्रह्मणः ॥ तेजोबन्नादिकासृष्टिःसन्मूलासास्थितिर्हितिः ९७ जीवात्मनाप्रवेशश्चव्याकृतिर्नामरूपयोः ॥ श्वेतकेतो
स्त्वंपदस्यतत्पदेनैक्यतापिच ९७ सदसंभावनायांचसद्भावेचबहूक्तिता ॥ तज्ज्ञानेगुरोर्ज्ञानंज्ञानान्मोक्षोऽपुनर्भवः ९८ सत्यब्रह्माभिसंधस्येत्येवंसद्ब्रह्मकीर्तनम् ॥
तद्रामेतिपरंब्रह्मसृष्टिस्थित्यंतहेतुकम् ९९ अन्यस्यामपिशाखायांप्रश्नप्रत्युक्तितःस्फुटम् ॥ मनःप्राणेंद्रियाणांयन्मनःप्राणेंद्रियंहितत् २०० सर्वेषामनुभूतेःसाद्विदिता

विदितात्परम् ॥ विषयोनेंद्रियादीनामित्युक्तातस्यशोधनम् ॥२०१ सर्वदर्शीसर्ववेत्तृदेवानांजयकारणम् ॥ तदज्ञानंचदेवानांगुरोर्ज्ञानमुपास्तिता २०२ विंद्ये
वनाऽन्यन्मानुष्यंप्राप्यजन्मनवेदचेत् ॥ विनिष्टिर्महतीतस्यचेतिप्रोक्तंततःपरम् २०३ अध्यात्माऽधिदेवभिदाविद्यासाधनमेवच ॥ ब्रह्मज्ञानेनपापानांहानिस्त
त्प्राप्तिरित्ययम् २०४ ब्रह्मणोमहिमाश्रुत्याकीर्तितोव्यासतःस्वयम् ॥ तद्रामेतिगुरोर्ज्ञेयंनान्यथाग्रंथकोटिभिः २०५ मुंडकेपिपराविद्याविषयौब्रह्मब्रह्मणः ॥
सृष्टिश्चानेकदृष्टांतैरुक्तातस्मिंश्चसंस्थिता २०६ लयश्चापिहितत्रैवविश्वंसर्वंहितन्मयम् ॥ तारेणधनुषावेध्यंलक्ष्यआत्मार्पणंतथा २०७ महिमातिशयस्तस्यत
द्वासाभात्यशेषकम् ॥ अगोचरंचसर्वेषांध्यायमानोऽनुपश्यति २०८ वेदाहितंगुहायांयोविद्याग्रंथिंभिनत्तिसः ॥ कृपयावृणुतेब्रह्मयंकंचनसुसाधकम् २०९ ते
नैवलभ्यतेसाक्षान्नान्यथायत्नतोपिहि ॥ अथवायंपरेशानंप्राप्तुमिच्छतिसाधकः २१० तेनैवहेतुनालभ्योनान्ययासाधनांतरैः ॥ बलहीनादिभिर्नैवलभ्यतेतेस्तु
लभ्यते २११ संन्यासयोगतःसत्त्वंशुद्धंयेषांविचारतः ॥ तेपरांतिनकालेनपरिमुच्यंतिनान्यथा २१२ यथानद्यःसमुद्रेऽस्तंगच्छंतिनामरूपतः ॥ तथाविद्वान्क
लादेवप्रतिष्ठायांचसंक्षयम् १३ प्रारब्धकर्मणांसाक्षान्मोक्षमेत्यपुनर्भवम् ॥ योवेदपरमंब्रह्मसब्रह्मभवतीतिच १४ सर्वंसमुदितंयस्मात्तद्रामब्रह्मचिद्घनम् ॥ पूर्ण
मदःपूर्णमितिकंडिकायांसमासतः १५ आदिमध्यावसानेषुपूर्णंब्रह्मैवनिश्चितम् ॥ पूर्णंपरोक्षरूपेणजातंतत्पदसंज्ञितम् १६ प्रत्यक्षंत्वंपदाख्येनस्थितंभूतमयेषुच ॥
पूर्णान्निरूपकात्पूर्णंसोपाधिकमिहोच्यते १७ तत्पूर्णंशास्त्रशास्त्रभ्यांस्वाविद्याहानतःस्वयम् ॥ स्वाखंडैकरसंलक्ष्यमादायोपनिषद्गिरा १८ निर्गतोपाधिकंसर्वंपूर्णमेवा
वशिष्यते ॥ तद्रामपरमंब्रह्मयोगिध्येयंसनातनम् १९ सर्वधर्मनिषेधेनश्रुतिर्गीतंपरात्परम् ॥ अहंकृत्स्नस्यजगतःप्रभवःप्रलयस्तथा २० मत्तःपरतरंनान्यत्किंचिदस्तिध
नंजय ॥ मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइव २१ इत्याहभगवान्साक्षाद्वेदेपितज्जलानिति ॥ एवंसर्वासुश्रुतिषुस्मृत्यादिषुयदीरितम् २२ तद्रामपरमंब्रह्मयोगिगम्यमना
मयम् ॥ अनंतनामरूपैश्चविश्वाकारंस्वमायया २३ भूत्वासर्वेषुभूतेषुव्यापकंभूतचालकम् ॥ स्फुटमप्यस्फुटंतेषामज्ञानांस्वात्मनःसदा २४ ब्रह्मज्ञानेपरोहेतुःसर्वे
ऽपिबहिरक्षकाः ॥ मानवाःसंतितेनेदंचिद्ब्रह्मनप्रकाशते २५ परांचिखानिप्रभुणासृष्टानिचेक्षतेपराक् ॥ वीक्षंतेनांतरात्मानंप्रसिद्धंश्रुत्युदीरितम् २६ सर्वोपिमनुजो
दासोवित्तस्त्रीतनुजात्मनाम् ॥ किंवास्वःकामदासोयंतेनांतश्चिन्नकाशते २७ यदिभायात्सदानंदःस्वात्मासाक्षीगुणात्परः ॥ तदाकिन्नामरोचेतव्यासादन्यन्नरस्यहि २८
आत्मानंचेद्विजानीयादयमस्मीतिपूरुषः ॥ किमिच्छन्कस्यकामायशरीरमनुसंज्वरेत् २९ इत्याहचश्रुतिःसाध्वीबृहदारण्यगास्वयम् ॥ यस्त्वात्मरतिरेवस्यादात्मतृप्त
श्चमानवः ३० आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यते ॥ इतिसाक्षाज्जगन्नाथोऽर्जुनायप्रोक्तवान्स्वयम् ३१ भोगासक्तःपुमान्पूर्वमेकाकीरमतेनच ॥ एषणात्रयसंबद्धो
यततेऽर्थायनित्यदा ३२ नलोकोऽपुत्रिणंश्रुत्वापुत्रोत्पादनतत्परः ॥ जायांसंपादयत्यादावतियत्नेनमूढधीः ३३ पुत्रानुत्पाद्यक्लेशेनदेवतीर्थादिसेवया ॥ कुटुंबभर
णार्थंचयागार्थंवाधनेच्छया ३४ अनिशंदह्यतेचित्तेनप्राप्नोतियथेप्सितम् ॥ शास्त्रज्ञोऽपिसत्क्रियावानर्थदासःप्रतिग्रहं २३५ धनिनांचालयमवतोग्रामेकौलेयकोयथा ॥

अव्युत्पन्नमतीनांतुकावार्तास्वात्मचिंतने ३६ अनेकपुण्यपुंजैःसत्कुलेजन्माप्यसाधुभिः ॥ सज्जतेसद्भिरुक्तेनमार्गेणेतियदातदा ३७ रामब्रह्मदर्शनार्थंमुद्रांस्वांपूरयत्युत ॥
युत्त्याचदत्तयासाद्भिर्नस्वयाऽमूल्याकचित्त ३८ तंपूरणप्रकारंतुसंक्षेपेणोच्यतेऽधुना ॥ यथालोकेंऽजनंसम्यक्संपाद्यपूर्यतेक्षिच ३९ निधिःप्रत्यक्षतस्तस्यदर्शनंयाति
नान्यथा ॥ एवमत्रापितत्तुल्यंसाधनंयच्चतुष्टयम् ४० संपाद्यचेक्षतेशुद्धंरामेतिपदमव्ययम् ॥ मायाव्यासितवर्णंयद्ब्रह्मतत्साधनंयथा ४१ शुद्धाविद्यामयंचेतिप्रोच्यते
तत्त्वदर्शिभिः ॥ शास्त्रशास्त्रंचशास्यश्चमिथ्याऽविद्यामयंत्रयम् ४२ ज्ञानोत्तरमितिमतंतस्मात्तद्वर्णमीरितम् ॥ चतुष्पादंसाधनंतत्पूर्णमित्यभिधीयते ॥ प्रत्येकंसाधनं
यच्चचतुःसाधनमुच्यते ४३ विवेकवैराग्यशमादिषट्कंमुमुक्षताचेतिप्रसिद्धमेतत ॥ लक्ष्माणिप्रत्येकमुशत्तमानिप्रोक्तान्यमीषांस्स्मृतिभूमिकासु ४४ साधनानांचतुष्कंचह्ये
षणात्यागपूर्वकम् ॥ संन्यासश्चगुरोःसेवाश्रवणादित्रयंततः ४५ पूर्वोत्तरसमाधीचपुंजएकादशात्मकः ॥ एतेषांतुमिथःसाक्षात्प्राणाद्यासंगतिर्मता ४६ मुमुक्षयातुन्यासा
दिषण्णांसाक्षादिहोच्यते ॥ समाधिरुत्तरश्चाऽपिपृथगेवेतिसंमतः ४७ पूर्वत्रयाणांनविनामुमुक्षापाङ्क्तिरादरः ॥ एतैःसाधनसंघैश्चपदानिपूरयत्यलम् ४८ तानिसर्वाणिप्रो
च्यंतेश्रोतॄणामवबुद्धये ॥ दशेंद्रियाणितेषांतुगोलकानिनवैवतु ४९ प्राणापानौमनोबुद्धीतस्माद्धर्माश्चतन्मिताः ॥ बुद्धेर्ज्ञानंयथाऽसोश्चक्रियातत्तंत्रतामता ५० उभयें
द्रियधर्माणामतोमीषामनाग्रहः ॥ सप्तविंशतिसंख्यानिपदानीमानिसाधनैः ५१ योग्यानिलांछितुंसम्यक्पूरयत्येवसर्वथा ॥ तदायत्परमंब्रह्मरामेतिपदमव्ययम् ५२
भातिप्रत्यक्षतस्तेनकृतकृत्योहिजायते ॥ एतावताविगानेनरामतोभद्रमुद्रिके ५३ रामश्चकथितश्चाथसर्वतोभद्रमीर्यते ॥ स्थानतोनामतश्चापिसंशयस्यापनुत्तये ५४ क
ल्याणंसर्वतःपुंसांचितनाद्यस्यब्रह्मणः ॥ तद्भद्रवाचकंमुख्यंमंगलानांचमंगलम् ५५ यत्रतद्वच्यतेसाक्षात्तन्नाम्नातदुदीर्यते ॥ अधिदैवंतथाऽध्यात्मंसर्वतोभद्रमिष्यते ५६
विविच्यतेऽत्रोभयंचप्रोच्यतेवस्तुव्यक्तये ॥ अधिदैवेतुयद्भद्रंतदादावुच्यतेऽमलम् ५७ अंडस्थब्रह्मलोकस्तुसर्वतोभद्रमुच्यते ॥ तेनैवभद्रंसर्वेषांलोकानामितिहिस्थितिः
५८ तत्रस्वर्णमयंवेश्मनिर्मितंप्रभुणास्वयम् ॥ तत्पद्ममितिविज्ञेयंयत्रकार्यंचितिःस्वयम् ५९ न्यासेनसर्वसत्त्वानांगतानांसर्वयोगिनाम् ॥ प्राणोपासननिष्ठानांब्रह्मणा
चित्प्रकाशते ६० ब्रह्मणासहतेसर्वइतिस्मृतिरथागमः ॥ क्रममुक्तेस्त्वयंपंथाःश्रुतिस्मृतिमतोऽमलः ॥ ६१ आध्यात्म्येहृदयंयत्तत्सर्वतोभद्रमीर्यते ॥ तेनभद्रेणकल्या
णंसर्वेष्ववयवेष्विह ६२ तत्रयत्पुंडरीकंतद्ब्रह्मणःस्थानमुच्यते ॥ श्रुताचेवंप्रसिद्धिर्हिदहरांबुजवेश्मतः ६३ साधनसंपत्संयुक्तास्तस्मिन्येतुसमाहिताः ॥ गुरूपदिष्टयायु
क्त्यातेषांब्रह्मप्रकाशते ६४ परमःपुरुषोभूमासएवाधस्तथोपरि ॥ इत्यादिश्रुत्यायत्प्रोक्तंतन्नपरोक्षमित्यपि ६५ आहचाहमेवाधस्तादित्यादिसमन्व्यासिताम् ॥ मू
ढानामपिसर्वेषां देहेऽहमितिदृश्यते ६६ मामूत्संभ्रमइत्यर्थमात्मैवेतिपुनर्वचः ॥ एकात्मरूपयोस्तयोर्भेदशंकानिवृत्तये ६७ सर्वासूपनिषत्स्वेवंब्रह्माद्वैतंसुनिश्चितम् ॥
ब्रह्मैवेदममृतामित्याहचाथर्वणीश्रुतिः ६८ तत्त्वमेवत्वमेवैतदितिकैवल्यगंवचः ॥ तत्त्वमसीतिछांदोग्येब्रह्मात्मैक्यंनभेदधीः ६९ एकत्वंपदयोःस्पष्टंश्रुत्यायत्प्रतिपादि

१ मित्युवेतिपाठः ।

तम् ॥ साक्षान्मुक्तेःकारणंतद्बोधस्तेषांसएववहि ७० यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूयतेऽपिवा ॥ अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः ७१ इदंसर्वंयदयमात्मैकमेवाद्वि
तीयकम् ॥ सर्वंखल्विदमित्यादिश्रुतयोयद्ब्रुवंतिहि ७२ सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि ॥ संपश्यन्नात्मयाजीतिपरमार्थंमनोर्वचः ७३ एतादृशेनबोधेनभूत्वा
ब्रह्मात्मरूपकाः ॥ कृतकृत्याःस्वयंतीर्त्वासच्छिष्यान्प्राहयंतिच ७४ अत्रोक्तंश्रुत्यभिप्रायंजानंतिविदुषोऽखिलान् ॥ किंबहूक्तेनचोद्दिष्टंसंक्षेपेणोपसंहृतम् ७५ नारा
यणाच्युतजनार्दनवासुदेवगोविंदमाधवमुकुंदरमेशविष्णो ॥ संकर्षणाजनरसिंहपरावरात्मन्रामोरुमायशिववामनपाहिशिष्यम् ७६ येनेदंविकृतंविश्वंविशतायेनचेतनम् ॥
यत्स्थितंयत्प्रतिष्ठंचतस्मैसर्वात्मनेनमः ७७ इदानींरामतोभद्रस्याष्टोत्तरशतस्यच ॥ नानाभेदाःप्रकथ्यंतेलघुमुद्रान्वितस्यहि ७८ पूर्वोक्तेष्टविंशतिरेखाष्टद्विंप्रकल्पयेत् ॥
परिधीद्वावधिकौतत्पंक्त्योर्लिंगानियोजयेत् ७९ प्रथमेतिथि १५ मितेशाश्चतुर्विंशपदात्मकाः ॥ वाप्यःषोडशसंख्यातास्त्रयोदशपदात्मिकाः ८० भद्रंतत्वमितं २६
चाथद्वितीयेर्कमिताःशिवाः ॥ वाप्यस्त्रयोदशमितास्त्वष्टादशपदात्मिकाः ८१ भद्रमर्कपदंशेषंयथापूर्वंप्रकल्पयेत् ॥ एतद्रामलिंगतोभद्रंशतंचवसूत्तरम् ८२ अथ
वाद्येरसमुद्रारसेशावापिकाश्चषट् ॥ त्रयोदशपदाःकार्याभद्रंचंद्रकलात्मकम् ८३ द्वितीयेपंचमुद्राश्चलिंगषट्कंचवापिकाः ॥ तन्मिताश्चभद्रमर्कपदमग्रेऽष्टमावधि ८४
तुर्येपंचतुर्येनेत्रचंद्रसंख्याश्चमुद्रिकाः ॥ षण्नेत्रनेत्रनयननेत्रेंदुशंकरास्तथा ८५ भद्रंषट्पदमर्कांघ्रिषट्पदंविंशपादकम् ॥ षोडशांघ्रियुग्मपादंक्रमाज्ज्ञेयंविचक्षणैः ८६
अथवाष्टपदेमुद्रांविधायतत्स्थलिंगकम् ॥ रचयेत्स्थानकेतुर्येभद्रंविंशत्पदात्मकम् ८७ सर्वत्रसममुद्रासुमध्येचपरिधिद्वयम् ॥ मुद्रासीमालिंगगतावाप्यद्वौतुर्यकोष्ठका
८८ लिंगस्कंधगताकाष्ठावर्णैरिष्टैःप्रकल्पयेत् ॥ बल्लिवाप्योर्मध्यमानिपदान्युर्वरितानितु ८९ भद्रशृंखलयोग्यानितदर्थंविनियोजयेत् ॥ अथवाऽऽद्येदशमुद्राःसीमा
पारिधयस्तथा ९० भद्रमर्कपदंमध्येपरिधीद्वौप्रकल्पयेत् ॥ एवमग्रेपारिधयस्तृतीयेष्टैवमुद्रिकाः ९१ चतुष्पादात्मकंभद्रंपंचमुद्राश्चपंचमे ॥ अर्कपादात्मकंभद्रंनात्र
द्वौपरिधीस्मृतौ ९२ सप्तमेऽग्निमितामुद्राभद्रंतुर्यपदात्मकम् ॥ द्वयेत्रयोदशेशाश्चवाप्यश्चापिचतुर्दश ९३ भद्रंतत्वमितंतुर्येनवेशादशवापिकाः ॥ भद्रंतत्वमितं
षष्ठेपंचेशावापिकाश्चषट् ९४ भद्रंतत्वमितंशेषंयथापूर्वंप्रकल्पयेत् ॥ अथवाऽऽद्येपंचदशशिवानेत्रेष्टमुद्रिकाः ९५ शिवद्वयंत्रिषट्पादंत्रिषट्पादाचमुद्रिकाः ॥
षट्तुर्येपंचमुद्राःस्युर्बाणेसिंधुमितास्तथा ९६ षष्ठेद्वेमुद्रिकेमुद्रागिरौ ७ मुद्रागजे ८ स्तथा ॥ शिवद्वयंवापिकेचसप्तमांतंभवेदिदम् ९७ भद्रमानंतत्वकोष्ठंषट्षो
डशरवितुच ॥ विंशषोडशभिश्चापिक्रमेणैवंप्रकल्पयेत् ९८ यद्वाद्यौमुद्रिकामेकांमध्येलिंगंप्रकल्पयेत् ॥ भद्रमिंदुकलंकृत्वाताल्लिंगंरचयेद्गजे ९९ भद्रंगजेतत्वकोष्ठं
शेषंसर्वंतुपूर्ववत् ॥ अथवाद्यत्रिपंक्तिषुपंचाब्ध्यग्निमिताञ्छिवान् ३०० मुद्रामध्येनियोज्याऽथमर्यादापरिधिस्तथा ॥ भद्रसंख्यातुप्रथमाषट्पदाचद्वयार्किका १
द्वितीयाविंशकोष्ठास्याद्वेद्वेवाप्यौचलिंगके ॥ रचयेत्पार्श्वयोःसम्यक्शेषंसर्वंपुरोदितम् २ अथवोक्ताःप्रथमतःसप्तषट्पंचतुर्यकाः ॥ वन्हिचंद्रचंद्रमुद्राःसीमापरिधय



१ पूर्वोक्ताष्टविंशतिश्चेतिपाठः । २ अथवाद्यकाःप्रमताःइ०पा० ।

स्तथा ३ षट्सुस्थानेषुचशिवास्तुर्येतुर्यमिताःस्मृताः ॥ विशेषस्तुलिंगद्वयंबाणेस्त्रिषट्त्रिषट्पदम् ४ वाप्योऽपितान्मिताःकार्याभद्राणिवक्ष्यमाणतः ॥ तत्वकोष्ठंक लाकोष्ठंतुर्यकोष्ठंचषट्पदम् ५ षट्पदंचकलाकोष्ठंशेषंसर्वंपुरोदितम् ॥ अथवाप्रथमाद्यावत्पंचमस्थानकावधि ६ षट्षट्पंचतुर्यवन्हिमुद्राश्चमध्यशंकरान् ॥ तुर्यनेत्राक्षि नेत्राक्षिमर्यादापरिधींस्तथा ७ विशेषस्तुलिंगद्वयंबाणेस्त्रिषट्त्रिषट्पदम् ॥ भद्रसंख्येंदुकलें १६ दुकला १६ र्क १२ तुं ६ रसात्मिकाम् ८ प्रकल्प्यारचयेद्बुद्धचाशेषंसर्वं पुरोदितम् ॥ एवंनानाविधाभेदाबहवःसन्तिभोद्विज ३०९ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये मनोहरकांडे रामदासविष्णु दाससंवादे लघुरामतोभद्रविस्तारोनाम चतुर्थःसर्गः ॥ ४ ॥ ॥ श्रीरामदासउवाच ॥ पूर्वोक्तश्रेष्ठमुद्रीयरामतोभद्रविस्तरान् ॥ वदाम्यहंतवाग्रेहिविष्णुदासशृणु ष्वतान् १ तिर्यगूर्ध्वरक्तरेखाएकषष्टिमिताःशुभाः ॥ अंतात्कृष्णरक्तशुक्लपीताःपरिधयःक्रमात् २ द्वादशांतेपीतकृष्णरक्तशुक्लाःपुनःस्मृताः ॥ पंचमःपीतवर्णोपिसर्वं तोभद्रमालिखेत् ३ बहिःपंक्तौद्वादशांतेसीमापरिधयःस्मृताः ॥ पीतावालोहिताःकार्यामध्येद्वौपरिधिस्मृतौ ४ ततोमध्यगेहयोर्द्वेमुद्रिकेवेदवर्णके ॥ चतुःपार्श्वेषुच त्वारिनामानिपूर्ववल्लिखेत् ५ कोणगेहेषुकोणेंदुस्त्रिपदःशुक्लवर्णकः ॥ एकादशपदाकृष्णाशृंखलपीतवर्णका ६ दशपदाशृंखलान्यावल्लरीहरितास्मृता ॥ एकोनविंश त्पदजाभद्रंरक्तंनवात्मकम् ७ त्रयोदशपदावापीसितान्यांत्रिपदात्मकम् ॥ रक्तंभद्रंपीतभद्रंतिर्यङ्नवपदात्मकम् ८ भद्रयोःशृंखलारक्ताद्विपदेवसमंततः ॥ अष्टमु द्रात्मकंरामतोभद्रंतेमयोदितम् ९ त्यक्तापीतांशृंखलांवालिंगंकृष्णंत्रिषट्पदम् ॥ खण्डवाप्यश्चतुष्पादजाभद्रंलोहितंरसैः १० तिर्यक्भद्रेपीतवर्णेनिधि जंवेद
166 जंतथा ॥ लिंगोर्ध्वमालिकारक्तात्रिपदावात्रिलोचनाः ११ अष्टमुद्रात्मकंचैतत्सलिंगंराममद्रकम् ॥ तिर्यगूर्ध्वत्रिपंचाशद्रेखाःसर्वंहिपूर्ववत् १२ मुद्रिकापरिधीनां चषट्कंस्वेच्छंप्रपूरयेत् ॥ चतुर्मुद्रात्मकंचैतत्सलिंगंवापिपूर्ववत् १३ तिर्यगूर्ध्वंत्रिसप्त ७३ श्चरेखाःकार्याःसुलोहिताः ॥ तासुचतुर्षुपार्श्वेषुकार्याःपरिधयःक्रमात् १४ कृष्णरक्तशुक्लपीताद्वादशांतेपदेषुच ॥ कार्यःपुनश्चतुःपार्श्वेपरिधिःपीतवर्णकः १५ तदग्रेरक्तवर्णश्चपरिधिर्हिसमंततः ॥ ततोष्टपदोपरितःपरिधिःपीतवर्णकः १६ ततःषष्ठपदोर्ध्वंचपुनःपीतःप्रकारयेत् ॥ आद्यस्थानेचसीमाख्यःपीताःपरिधयोऽथवा १७ रक्तावेदमिताःकार्याद्वादशांतेपदेषुच ॥ कोणगेहेपूर्ववच्चमध्येचमुद्रि कात्रयम् १८ ततोद्वितीयस्थानेहिचंद्रःकृष्णाचशृंखला ॥ सप्तपदावल्लरीचचतुर्दशसुपादिका १९ वल्योर्नैयोजनंकार्यंरक्तंभद्रंद्विष पदम् ॥ त्रयोदशपदाःकार्यावा प्योवेदमिताःसिताः २० षड्विंशत्पदजाःकार्यास्त्रिशिवाःकृष्णवर्णकाः ॥ वाप्यस्त्रयोदशलेख्यानिलिंगमध्येपदेषुच २१ रामेतिरामनामानिमध्याकंकणवत्यपि ॥ मूर्द्धा चतुष्पदोज्ञेयःपादाभ्यांकंठईरितः २२ चतुष्पदौलिंगपार्श्वौपादस्कंधौहिषट्पदौ ॥ शिवनेत्रस्थलेशुक्लेद्वेपदेरक्षयेद्धिया २३ वाप्युपरिष्टाच्छेषाणियानिद्व्यष्टपदानि च ॥ तेषुरक्तानित्रीण्यादौपंचपीतानिचोपरि २४ मध्येऽथसर्वतोभद्रंपूर्ववच्चैवनोपरम् ॥ सर्वलिंगरामभद्रत्रयमेकेमयेरितम् २५ एतद्द्वादशमुद्राभीरामलिंगात्मकं शुभम् ॥ अतिरम्यंविचित्रंचरामतुष्ट्यर्थमीरितम् २६ तिर्यगूर्ध्वमंकसप्त ७९ रेखाःसर्वंहिपूर्ववत् ॥ चतुर्मुद्रात्मकंभद्रंयथातद्वच्चमध्यमे २७ आद्येतिस्रःस्थलेमुद्राः

सीमापरिधयस्तथा ॥ मध्येत्रयस्त्रयोज्ञेयाह्यंतेद्वौद्वौशुभौस्मृतौ २८ एतत्षोडशमुद्राभीरामतोभद्रमीरितम् ॥ अंतर्गेहेकृतेलिंगेसलिंगंषोडशात्मकम् २९ तिर्यगूर्ध्वंमू
मिवाणवेदरेखाः ४८१ सुलोहिताः ॥ अष्टमुद्रात्मकंमध्येरामतोभद्रकंलिखेत् ३० तिर्यगूर्ध्वंपरिधयःपीताश्चैवसमन्ततः ॥ द्वादशांतिरचनीयावहिःपरिधयो
ऽपिच ३१ पूर्ववत्कोणगेहानिमुद्राणांचक्रमोऽधुना ॥ उक्तेद्वेमुद्रिकेपूर्वंतदधोवेदमुद्रिकाः ३२ मध्येसर्वत्रपरिधिद्वयंनान्यस्थलंकदा ॥ ततोरसमिताह्यष्टविशेषःपञ्च
मेस्थले ३३ षण्मुद्रिकावेदवाप्यश्चतुरशीतिपादिकाः ॥ वाप्यन्तर्गतकुण्डश्चकृष्णंद्वादशपादजम् ३४ वापिपार्श्वेशुभद्राणिचत्वारिलोहितानिच ॥ पृथक्पृथक्पं
चदशपदैर्ज्ञेयानितानिहि ३५ षष्ठेस्थानेद्वादशैवमुद्राह्यग्रेचतुर्दश ॥ षोडशाष्टादशैवाथविंशद्द्वाविंशमुद्रिकाः ३६ चतुर्विंशाथषड्विंशह्यष्टाविंशत्सुमुद्रिकाः ॥ त्रिंशद्द्वा
त्रिंशन्मुद्राणांस्थानेषोडशमुद्रिकाः ३७ वाप्यःषोडशविज्ञेयामध्येवापीद्वयंस्मृतम् ॥ अष्टोत्तरसहस्रंचरामतोभद्रमीरितम् ३८ तिर्यगूर्ध्वंहिवस्वंकवाणरेखाःसुलो
हिताः ॥ सर्वलिंगरामभद्रत्रयमेकेपुरोरितम् ३९ तदत्रमध्येलेख्यंहिमध्यमुद्रास्थलेशिवः ॥ द्विसप्ततिपदैःकार्यःकृष्णवर्णःप्रकारयेत् ४० षट्त्रिंशद्रामनामानिवाले
ख्यानिचहस्ततः ॥ कृष्णात्कर्णिकाकार्याचतुर्भिश्चशिरःस्मृतम् ४१ कटिश्चतुष्पदैःकार्यापार्श्वेद्वादशपादजे ॥ स्कंधोविंशत्पदैर्ज्ञेयोमूलंविंशपदात्मकम् ४२ षड्विं
शपदजेज्ञेयेद्वेवापीशकलेसिते ॥ द्वाभ्यांशिवस्यवैनेत्रे सितेशेषपदानिहि ४३ पंचरक्तानिचत्वारिपीतानिशिवकर्णयोः ॥ स्थानेतृतीयेमुद्राश्चतिस्रोद्वौशंकरौवरौ ॥ स्थाने
चतुर्थेमुद्राश्चचत्वारस्त्रिशिवाःस्मृताः ४४ एवमग्रेक्रमेणैवविशेषंकथयाम्यहम् ॥ स्थानेचतुर्दशेमुद्राश्चतुर्दशशिवास्तथा ४५ पंचदशेहिविज्ञेयाएवमग्रेधियालिखेत् ॥ को
णस्थगेहयोःकार्यौद्वौशिवौचत्रिषट्पदौ ४६ अष्टमुद्रात्मकेभद्रेसलिंगेचकृतेयथा ॥ मुद्राभ्योलिंगवृद्धिर्हिकर्तव्याचरमावधि ४७ स्थानेद्वाविंशतितमेमुद्राद्वादशचेरिताः ॥
त्रयोविंशच्चलिंगानिवहिःपरिधयस्ततः ४८ एवंयुक्त्यारचनीयंशेषंसर्वंपुरोदितम् ॥ अष्टोत्तरसहस्रंचरामलिंगात्मकंत्विदम् ॥ रामासनंवरिष्ठंहिराघवस्यातितुष्टिदम् ४९
तिर्यगूर्ध्वंवाणशास्त्रभूमिरेखाश्चपूर्ववत् ॥ अष्टमुद्रात्मकंमध्येपरिधयःसमंततः ५० तिर्यगूर्ध्वंद्वादशांतेवहिःपरिधयस्तथा ॥ मध्येसीमापरिधिद्वयंनान्यस्थलेकदा ५१
नेत्रस्थाने वेदमुद्राविशेषश्चतृतीयके ॥ तिस्रोवाप्यस्त्रिमुद्राश्चह्यष्टमेचचतुर्थके ५२ पंचमेदशमुद्राश्चशेषंसर्वंपुरोदितम् ॥ अष्टोत्तरशतंरामतोभद्रंतेमयोदितम् ५३ ति
र्यगूर्ध्वंत्रिपूर्णाक्षिरेखाःकार्याश्चपूर्ववत् ॥ सर्वलिंगंरामभद्रत्रयमेकेपुरोदितम् ५४ तदत्रमध्येलेख्यंहिमध्यमुद्रास्थलेसिता ॥ वापिकार्याद्वादशांतेपरिधयश्चपूर्ववत् ॥
५५ तिर्यगूर्ध्वंशुभाःकार्यावहिःपरिधयस्तथा ॥ स्थानेतृतीयेमुद्राश्चतिस्रोद्वौशंकरौवरौ ५६ चतुर्थेवेदमुद्राश्चत्रयस्तेशंकराःस्मृताः ॥ पंचमेपंचमुद्राश्चचत्वारश्चहरा
वराः ५७ षष्ठेस्थानेचषण्मुद्राःशिवाःसप्तप्रकीर्तिताः ॥ कोणस्थगेहयोःकार्यौद्वौहरौचत्रिषट्पदौ ५८ अष्टमुद्रात्मकेभद्रेसलिंगेचकृतेयथा ॥ स्थानेचसप्तमेमुद्राःसप्त
लिंगानिचाष्टवै ५९ कोणस्थगृहयोःकार्यौद्वौहरौचत्रिषट्पदौ ॥ एतदष्टोत्तरशतंरामलिंगात्मकंस्मृतम् ६० षष्ठेस्थानेकोणगेहेऽथवाशंभुंनकारयेत् ॥ स्थानेतृतीयेमुद्रैका
वाप्यौद्वौद्वौहरावपि ६१ एतच्छतात्मकंभद्रंरामलिंगात्मकंमया ॥ अष्टोत्तरशतेरामतोभद्रेवान्हिसद्मनि ६२ षडेवमुद्राःकर्तव्याअंतेस्थानेहिपंचमे ॥ पंचमुद्राःपंचवाप्यः

शतमुद्रात्मकंत्विदम् ६३ अष्टोत्तरसहस्रेश्रीरामतोभद्रकेवरे ॥ बाणस्थानेद्विपङ्क्त्याप्योवेदमुद्राःप्रकारयेत् ६४ सहस्ररामसुद्राणांरामतोभद्रमीरितम् ॥ अष्टोत्तरसहस्रेश्रीराम
लिंगात्मकासने ६५ स्थानेचतुर्दशेकोणगेहेशंभुंनकारयेत् ॥ मुद्रास्थानेचद्वौवाप्यौमध्येकापिनकारयेत् ६६ सहस्ररामसुद्राणांरामलिंगात्मकंत्विदम् ॥ षोडशरामतो
भद्रेचाद्यस्थानेत्रिदिक्षुच ६७ मध्यमुद्रास्थलेवाप्यस्तिस्रःकार्यामहत्तमाः ॥ त्रयोदशात्मकंचैतद्रामतोभद्रमीरितम् ६८ अथवाऽऽद्यस्थलेमध्यमुद्रासुवेददिक्षुच ॥
वेदवाप्योऽपरेस्थानेतिस्रश्चैवत्रिदिक्षुच ६९ वाप्यश्चैतद्विज्ञातव्यंनवमुद्रात्मकंशुभम् ॥ रामतोभद्रकंरम्यंराघवस्यातिहर्षदम् ७० तिर्यगूर्ध्वंबाणपूर्णभूमिरेखाश्चपू
र्ववत् ॥ त्रयोदशात्मकंमध्येस्थानेतेमुद्रिकात्रयम् ७१ मुद्रामध्येहिद्वौवाप्यौपरिधयोऽर्कमध्यमाः ॥ द्वौद्वौसर्वत्रसंयोज्यौतत्वमुद्रात्मकंत्विदम् ७२ ज्ञातव्यंरामतोभद्रं
तोषदंतत्त्ववादिनाम् ॥ कोणगेहेषुलिंगानिमेत्रस्थानेहिपार्श्वयो ७३ कार्यंवापीस्थलेलिंगपंचविंशतिमंवरम् ॥ पंचविंशतिमुद्राभीरामलिंगात्मकंत्विदम् ७४ अथोच्यं
तेदैवतानिरामासनभवानिच ॥ मध्येऽथसर्वतोभद्रेसमावाह्यात्रतत्सुरान् ७५ ततोबहिस्तुलिंगेषुरुद्रंवापिपुर्वेनलम् ॥ सुग्रीवंतत्रभद्रेषुतिर्यक्क्रमद्रेषुवैगवम् ७६
पीतासुचशृंखलासुहनुमंतंपरिचिंतयेत् ॥ पीतशृंखलाभावेतंतिर्यक्भद्रेचतुःपदे ७७ कृष्णवर्णशृंखलासुसमावाह्यविभीषणम् ॥ वल्लीषुचजांबवंतंमैंदंखंडेंदुषुस्मरेत् ७८
द्विविदंपरिधिष्वेवमुद्रायांराघवंस्त्रिया ॥ मुद्रायाःपश्चिमेचाथदक्षिणेह्युत्तरंपुरः ७९ लक्ष्मणंभरतंचापिशत्रुघ्नंवायुनन्दनम् ॥ पूज्यपूजकयोर्मध्येज्ञेयापूर्वदिगत्रहि ८०
सितापरिधिष्वत्रैवसुषेणंपरिचिंतयेत् ॥ सर्वत्रपदमात्रेषुचिंतयेत्सर्ववानरान् ८१ बहिस्त्रिपरिधिष्वेवात्रिवेणींपरिचिंतयेत् ॥ चतुर्दिक्पालाभिमुखाहारारुद्राश्चवापिकाः
८२ कर्तव्यावात्माभिमुखाःकार्यावापद्मसंमुखाः ॥ चतुर्दिक्पालाभिमुखाएवंभद्रेषुमेऽकथि ८३ पक्षत्रयेवरिष्ठास्तावदंतीत्थंमुनीश्वराः ॥ पूर्वोक्तभद्रेदेवान्हिसंपूज्या
दौततःपरम् ८४ समारभेद्राघवस्यश्रेष्ठांपूजांसविस्तराम् ॥ पद्मस्यकर्णिकायांचससीतंराघवंन्यसेत् ८५ अष्टपद्मदलेष्वेवतस्यावरणदेवताः ॥ पूजयेदितिसर्वत्रबुधे
स्तुपरिकथ्यते ८६ पद्मेसंकोचमालक्ष्यप्रकारांतरमुच्यते ॥ सर्वतोभद्रकमलेधान्यराशौघटंन्यसेत् ८७ जलपूर्णंचतस्यास्येकेतकीपत्रपूरिते ॥ ताम्रपात्रेविस्तृतंचान्य
स्यतंडुलपूरितम् ८८ तत्रवस्त्रेसावरणंरामचन्द्रंप्रपूजयेत् ॥ शैलीदारुमयीलौहीलेप्यालेख्याचसैकती ८९ मनोमयीमणिमयीप्रतिमाष्टविधास्मृता ॥ सर्वेषुरामभद्रे
षुमुद्रापूज्योरघूत्तमः ९० पूजकश्चशिवोज्ञेयोभद्राद्यारामपार्षदाः ॥ श्रीरामलिंगतोभद्रमतएवोच्यतेबुधैः ९१ एवंनानाविधाभेदाभद्रवःसंतिभोद्विज ॥ श्रीमद्राम
तोभद्राणांयेषांसंख्यानविद्यते ९२ मयाभेदाःकियंतोऽत्रतवाग्रेविनिवेदिताः ॥ नरैर्बुध्वाप्रकर्तव्याःपूजनार्थंरमापतेः ९३ हेमतंतुमयंचैवंकार्यमासनमुत्तमम् ॥
राघवार्थंमहच्छ्रेष्ठंरौप्यतंतुभवंतुवा ९४ अथवापट्टकूलस्यचैवंकार्यंवरासनम् ॥ अथवालेखयेत्पत्रेसर्वभावेद्विजोत्तमैः ९५ भूर्जपत्रेविलिखितंविशेषात्सिद्धिदंनृणाम् ॥
वावस्त्रोपरिलेख्यंवाकर्तव्यंचित्रतंतुभिः ९६ विनासनेनयापूजासापूजानिष्फलाभवेत् ॥ रामभद्रासनेपूजासापूजातिफलप्रदा ९७ यद्यद्रामपरंकर्मंतत्तच्चद्विजपुं
गवैः ॥ रामासनस्थितंरामंपुरस्कृत्यसमारभेत् ९८ रामभद्रासनेहीनंयत्कर्मतच्चनिष्फलम् ॥ तस्मादेवंस्वमेवैतत्कर्तव्यंरामपूजने ९९ अष्टोत्तरसहस्रंचराम

लिंगात्मकंहियत् ॥ आसनंतद्धरिष्ठंहिराघवस्यातितोषदम् १०० तदघोरामतोभद्रमष्टोत्तरसहस्रकम् ॥ तदघोरामलिंगाख्यमष्टोत्तरशतात्मकम् १ तदघोराम
तोभद्रमष्टोत्तराशतात्मकम् ॥ तदधःपंचविंशच्छ्रीरामभद्रासनंशुभम् २ तदघोरामतोभद्रंषोडशात्मकमीरितम् ॥ त्रयोदशात्मकंरामतोभद्रंतदधःस्मृतम् ३
द्वादशंचनवाख्यंचह्यष्टमुद्रात्मकंतथा ॥ चतुर्मुद्रात्मकंवापिपूर्वंतश्चापरंह्यधः ४ एवंक्रमेणज्ञेयानिरामभद्रासनानिहि ॥ श्रेष्ठासनेषुयापूजातस्याःश्रेष्ठंफलंस्मृतम् ५
लघ्वासनेषुयापूजाताद्दशंतत्फलंस्मृतम् ॥ एवंज्ञात्वाफलंबुद्ध्याश्रेष्ठमेवासनंशनैः ६ यत्नेनैवप्रकर्तव्यंरामोपासनमानवैः ॥ प्रतिवर्षेनवीनंचकार्यमासनमादरात् ७ एक
स्मिन्ह्यासनेपूजानवर्षादूर्ध्वतःशुभा ॥ एवंशिष्यासनानांचभेदाःपृष्टास्त्वयापुरा ८ तवाग्रेहिमयाख्याताःश्रीरामस्यातितोषदाः ॥ त्वत्पृष्टरामतोभद्रवर्णनस्यप्रसं
गतः ९ स्मारितारामचंद्रस्यकिंचिल्लीलामयाऽद्यहि ॥ वदाम्यहंतवाग्रेतांत्वंशृणुष्वद्विजोत्तम १० प्रत्यब्दंश्रावणेमासेगुरुवाक्याद्रघूत्तमः ॥ चत्वारिंशट्टंकमितसुवर्णस्य
पृथक्पृथक् ११ प्रत्यहंलक्षलिंगानिकृत्वापत्न्यायुतोऽर्चयत् ॥ अष्टोत्तरसहस्रैश्चलिंगैर्यद्भद्रमुत्तमम् १२ तच्छंभोरासनंज्ञेयंमहाप्रीतिविवर्द्धनम् ॥ तन्मध्यगतकमलेचैकं
लिंगंनिवेश्यच १३ षोडशैरुपचारैस्तत्संपूज्यसरघूत्तमः ॥ हेममुद्रांदक्षिणार्थंदत्वासंपूज्यभूसुरम् १४ तस्मैलिंगंसासनंतद्ददौप्रत्येकमादरात् ॥ एवंसकोटिलिंगानित्रय
स्त्रिंशद्दिनैर्ददौ १५ एवंव्रतंश्रावणेहिप्रतिवर्षेऽकरोद्विभुः ॥ दिव्यैराभरणैर्वस्त्रैर्द्विजारामार्पितैर्विभुः १६ हेमतंतुसमुद्भूतान्यकरोदासनानिसः ॥ उद्यापनंचहवनंचकाररघु
नंदनः १७ ॥ विष्णुदासउवाच ॥ अष्टोत्तरसहस्रैर्यल्लिंगतोभद्रमीरितम् ॥ कथंकार्यंतस्यभेदाविस्तराद्वक्तुमर्हसि १८ हेमतंतुसमुद्भूतमकरोदासनंविभुः ॥ सहेमान्यपि
लिंगानिचाकरोच्चवराणिहि १९ दिव्यैराभरणैर्वस्त्रैरकरोत्सद्विजार्चनम् ॥ अशक्तौतद्व्रतंसिद्धचेत्कथंतद्वक्तुमर्हसि २० श्रीरामदासउवाच ॥ शक्तौचपट्टकूलस्यकंबलस्या
थवानरैः ॥ कार्यंतदथवावस्त्रेतंतुभिश्चप्रकारयेत् ॥ २१ लेख्यंवस्त्रेऽथवारंगैर्लेख्यंपत्रादिसत्स्थले ॥ अशक्तौराजतान्येवलिंगानिताम्रजानिच २२ किंवापारदभूतानि
स्फाटिकान्यौपलानिवा ॥ दारुजानिचंदनैर्वागोमयेनमृदापिवा २३ कृत्वालिंगानिपूज्यानिस्वशक्त्यापूजयेद्द्विजान् ॥ इदानींलिंगतोभद्ररचनांतेवदाम्यहम् २४ तिर्यगू
र्ध्वंरक्तरेखाद्विशतेऽष्टादशस्मृताः ॥ तासांपदानामेकेनपूर्वसंख्याभवेदिह २५ पीताःपरिधयःकार्याःषट्पदांतेऽत्रसर्वतः ॥ युगेंदु १४ संमितास्तेषुलिंगादिरचयेद्वि
या २६ चतुष्कोणेषुशशिनस्त्रिपदैःपरिकल्पयेत् ॥ तदग्रेशृंखलापंचपादैःकार्याचसर्वतः २७ एकादशपदावल्लीवापीत्रिदशपादिका ॥ अष्टादशपदैःशंभुःसर्वत्रैवंलिखे
त्क्रमात् २८ तत्रप्रथमपरिधेर्वाक्लिंगानियोजयेत् ॥ त्रिरेकादशसंख्यानि ३३ वाप्यस्त्वेकाधिका ३४ स्ततः २९ भद्रेऽर्कार्कपदैःकार्याद्वितीयेलिंगसंततिः ॥ एकत्रिं
शन्मिताकार्याभद्रेनवनवात्मके १३० तृतीयेनवनेत्रेश २९ संख्याभद्रेषट्षट्पदे ॥ तुर्येपङ्क्तिशर्लिंगानिभद्रेर्कार्कपदेमते ३१ पंचमेतुर्यनेत्रेशाभद्रेनवनवात्मके ॥
षष्ठेद्वादशलिंगानिभद्रेषट्षट्पदेस्मृते ३२ सप्तमेलिंगविततिरेकोनविंशत्संख्यकाः ॥ भद्रेर्कार्कपदेज्ञेयेऽष्टमेसप्तदशेश्वराः ३३ भद्रेनवनवपदेनवमेमनु १४
शंकराः ॥ भद्रेशशिकला १६ संख्येदशमेऽर्कमिताःशिवाः ३४ भद्रेऽर्कार्कपदेज्ञेयेतथात्वेकादशेदश ॥ शिवानवनवपदेभद्रेज्ञेयेमनोरमे ३५ द्वादशेसप्तलिंगानिभद्रेचंद्र

कलात्मके ॥ त्रयोदशेपंचहराभद्रेऽर्कार्कपदेमते ३६ चतुर्दशेत्रिलिंगानिभद्रेनवनवात्मके ॥ चरमेंऽतस्तुरचयेत्सर्वतोभद्रमुत्तमम् ३७ खंडेंदुस्त्रिपदःकोणेशृंखलाषट्
पदात्मिका ॥ त्रयोदशपदावल्लीवापीतत्वमितिर्मता ३८ भद्रेषोडशषोडशपदैंऽतःपरिधिर्भवेत् ॥ तदंतरेपंचपंचपदैःपद्मंसमुद्धरेत् ३९ विचित्रंचित्रवर्णंचश्वेतेंदुःशृंखला
ऽसिता ॥ वापीशुक्लाऽसितःशंभूरक्तंभद्रंप्रकल्पयेत् १४० नीलावल्लीश्वरस्कंधकोष्ठाश्चित्रायथारुचि ॥ यत्रयत्रपदानीहशेषभूतानितानितु ४१ यथायोग्यंधियातत्रशृं
खलार्थेनियोजयेत् ॥ शुक्लरक्तकृष्णवर्णाह्यंतेपरिधयस्त्रयः ४२ वापूर्वंपीतपरिधिंदत्वादेयास्त्रयस्ततः ॥ एतेषांपरिधीनांवैपदान्यष्टाधिकानिहि ४३ नोक्तानिपूर्वसंख्यायां
ज्ञात्वेत्थंवृद्धिमाचरेत् ॥ अग्रेप्येवंहिबोद्धव्यंपरिधीनांचतुष्टये ४४ एतदष्टोत्तरदशशतंलिंगोद्भवंस्मृतम् ॥ एकस्त्वयंप्रकारोहिप्रकारांतरमुच्यते ४५ द्वेशतेसप्तपंचाश
द्रेखाःपूर्वोत्तराःस्मृताः ॥ पीताःपरिधयःकार्याःषट्पदांतेत्रसर्वतः ४६ सप्तेंदुसंख्या १७ रचयेल्लिंगानांयोजयेद्धिया ॥ सर्वतस्तन्मिता १७ चाद्यानवनेत्रमिता २९
परा ४७ सप्ताक्षिसंमितात्वन्यावक्ष्यमाणानिधारय ॥ बाणाक्षा २५ त्रिनयना २३ चनेत्रनेत्राथ २२ विंशतिः ४८ गजेंदु १८ गिरिचंद्रा १७ चबाणेंदु १५ हुतभुक्
शशी १३ ॥ रुद्रा ११ दशा १० न्याष्ट ८ मिताषट् ६ चत्वारि ४ त्रि ३ चंद्रमाः १ ४९ प्रतिपंक्तिमेकवापीलिंगेभ्यस्त्वधिकाभवेत् ॥ चतुर्विंशत्पदंलिंगंवापीवास्त्विदु १८
पादिका ५० भद्रसंख्याक्रमेणैवजानीयाद्वक्ष्यमाणतः ॥ पूर्वपंक्तौचपंचम्यानवम्यांहितथैवच ५१ त्रयोदशसप्तदश्योर्भद्रंविंशपदैःस्मृतम् ॥ द्वितीयायांचषष्ठ्यांचदश
म्यांचतनोतथा ५२ चतुर्दश्यांस्मृतंभद्रंपंचविंशपदैःस्मृतम् ॥ तृतीयायांचसप्तम्यामेकादश्यांतथैवच ५३ पंचदश्यांहिपंक्तौचभद्रंत्रिंशपदात्मकम् षाड्विंशद्भिःपदै
र्भद्रंचतुर्थ्यांचततःस्मृतम् ५४ वस्वर्कषोडशीष्वेवभद्रंषोडशपादजम् ॥ सर्वकोणेषुत्रिपदश्चंद्रःशृंखलिकापदैः ५५ पंचभिरेकादशभिर्लताकार्याततोंतरे ॥ सर्वतोभद्रकं
रम्यंचतुर्विंशैस्तुवापिका ५६ भद्रंनवपदंसर्वपार्श्वेष्वेवंप्रकल्पयेत ॥ परिध्यंतर्भवेत्पद्मंरक्तंचित्रंयथारुचि ५७ कृष्णंलिंगंशृंखलाऽपिभद्रंरक्तंचवापिका ॥ श्वेताशशी
सितोज्ञेयस्तथानीलास्मृतालता ५८ शिष्टानीहपदान्येवमद्राद्यर्थंनियोजयेत ॥ पीतशुक्लकृष्णरक्ताह्यन्तेपरिधयःस्मृताः ५९ अष्टोत्तरसहस्राख्यंलिंगतोभद्रकंत्वि
दम् ॥ एवंविकल्पतःप्रोक्तारचनाद्विविधामया ६० अथान्यत्तेप्रवक्ष्यामिप्रकारांतरमुत्तमम् ॥ सैकविंशच्छतैर्लिंगैर्लिंगतोभद्रमादरात् ६१ अष्टाष्टरेखाः ८८ प्राक्
याम्याःपश्चिमोत्तरदिक्षुच ॥ सप्ताशीतिपदेष्वेवलिंगानांपंचपंक्तयः ६२ तासुप्राथमिकायाश्चविस्तारःकथ्यतेऽधुना ॥ पृथक्कोणेषुत्रिपदैःशशीश्चितस्तदग्रतः ६३
शृंखलाकृष्णवर्णाचपदैःपंचभिरुत्तमा ॥ तस्याःपार्श्वद्वयेकार्येवल्योहरितवर्णके ६४ पृथगेकादशपदैस्ततःपीतेतुशृंखले ॥ षड्भिःपदैरुभयतोभद्रंषोडशपादजम् ६५
आरक्तंचसितावाप्योदशाष्टादशपादजाः ॥ कृष्णान्यष्टादशपदैर्नवलिंगानिकारयेत् ६६ मस्तकोपरिभद्रस्यलोहितेशृंखलेशुभे ॥ द्वाभ्यांपदाभ्यांचपृथङ्मध्येहरितशृं
५१ खला ६७ रचितात्रिपदारम्यावापीनांमस्तकोपरि ॥ आरक्तेद्वेपदेकार्येचैकंहरितमुत्तमम् ६८ उभयोःपार्श्वयोर्लिंगमस्तकस्यासितेपदे ॥ एवंसर्वत्रबोद्धव्यंपरिधिःपीतव
र्णकः ६९ सप्ताशीतिपदैश्चेयंसमाप्ताप्रथमातनिः ॥ प्रोच्यतेऽग्रेद्वितीयातुपंक्तिस्त्रिसप्तपादजा १७० शशीचशृंखलावल्योःशृंखलेद्वेऽत्रपूर्ववत् ॥ भद्रंविंशपदैर्ज्ञेयंनव

वाप्यस्त्रयोदशैः ७१ पदैरष्टात्रलिंगानिभद्रयोर्मस्तकोपरि ॥ द्वाभ्यांकार्येशृंखलेऽत्रलोहितेह्युत्तरेतयोः ७२ द्विपदाशृंखलापीताहरितात्रिपदास्मृता ॥ आरक्तंचप
दंकार्यंवापीनांमस्तकोपरि ७३ पूर्ववत्सकलंज्ञेयमेकषष्टिपदैःशुभः ॥ परिधिःपीतवर्णश्चजातापंक्तिर्द्वितीयका ७४ ऊनैकेनपदाषष्टिपदैःपंक्तिस्तृतीयका ॥ भद्रंषड्भिः
पदैःप्रोक्तंसप्तलिंगानिकारयेत् ७५ वसुवाप्यःस्मृताःशेषंपूर्ववत्संप्रकीर्तितम् ॥ सप्तचत्वारिंशत्पदैःपरिधिश्चप्रकीर्तितः ७६ जातातृतीयापंक्तिर्हिचतुर्थ्यर्थेनिगद्यते ॥
पंचचत्वारिंशत्पदैरियंपंक्तिरुदाहृता ७७ भद्रमर्कपदैर्ज्ञेयंपंचवाप्योऽत्रकीर्तिताः ॥ तुर्यलिंगानिकार्याणिभद्रस्यमस्तकोपरि ७८ आरक्ताषट्पदावल्लीपरिधिस्त्रिभिः
पदैः ॥ जाताचतुर्थपंक्तिर्हिपंचमैकत्रिभिःपदैः ७९ भद्रंनवपदंज्ञेयंत्रिवाप्योद्वौहरौस्मृतौ ॥ त्रिपदाशृंखलारक्ताभद्रस्योपरिकीर्तिता १८० एकोनविंशतिपदःपरिधिः
संप्रकीर्तितः ॥ जातेयंपंचमापंक्तिस्त्वग्रेसप्तदशैःपदैः ८१ चतुष्कोणसमंतत्रसर्वतोभद्रमालिखेत् ॥ तस्याऽपिक्रमएवाऽयंत्रिपदश्चशशीसितः ८२ कृष्णाःपंचपदैः
कार्याःशृंखलाःसर्वतःशुभाः ॥ पदैरष्टादशैर्लिंगंपश्चिमेतस्यपार्श्वयोः ८३ त्रयोदशपदैर्वाप्यौभद्रेतुर्यपदात्मके ॥ याम्यप्रागुत्तरेष्वेवमध्येतिस्रश्चवापिकाः ८४ भद्रंनव
पदैःकार्यंवल्ल्योदशपदात्मिकाः ॥ वल्ल्योःस्थानेपश्चिमेऽत्रह्याद्यंतेहरितेपदे ८५ मध्येऽत्रत्रुटितावल्लीभद्रंयत्रनवात्मकम् ॥ तस्योपरिपदाभ्यांहिरक्ताऽत्रशृंखलास्मृ
ता ८६ वापीनांमस्तकेकार्यंपदंरक्तंचपार्श्वयोः ॥ सितेद्वेद्वेपदेकार्येपरिधिःपंचपादजः ८७ रक्तमष्टदलंमध्येकार्यंनवपदात्मकम् ॥ कर्णिकापीतवर्णाचबाह्याःपरिधयः
क्रमात् ८८ पीतशुक्लरक्तकृष्णाःसैकविंशशतात्मकम् ॥ कथितंलिंगतोभद्रंसर्वेषांमुकुटोपमम् ८९ प्रकारांतरमन्यच्चशृणुशिष्यब्रवीमिते ॥ तिर्यगूर्ध्वंकृतारेखाऽष्ट्यधिकाः
शतसंख्यकाः १९० शतंद्व्यधिककोष्ठेपुरचयेल्लिंगपंक्तयः ॥ नवाष्टरसचत्वारिद्व्येकसंख्याश्चतुर्दशम् ९१ लिंगसंख्याधिकावापीप्रतिपंक्तिभवेदिह ॥ षट्सुपरिध
यस्तत्रषट्पदातितुवापिकाः ९२ कोणेष्विंदुःशृंखलाचवल्लीचरचयेत्क्रमात् ॥ त्रिपंचैकादशपदेलिंगंत्र्यष्ट २४ मितंत्रिषट् ९३ वापीभद्राणिक्रमशःषट्त्रिंश ३६ द्वि
शतत्वजम् २९ ॥ त्रिंश ३० त्षट्त्रिंश ३६ द्विशच्चां २० तिमपंक्तेश्चपार्श्वके ९४ एकस्मिन्रचयेल्लिंगद्वयंभद्रेरसात्मके ॥ तस्योपरिभवेत्सर्वतोभद्रंतत्रवापिका
९५ चतुर्विंशत्पदाभद्रमंकसंख्याततःपरम् ॥ परिध्यंतेतुर्यंतुर्यं१६ पदैःपद्मंसमुद्धरेत् ९६ चित्रंवालोहितंलिंगशृंखलेकृष्णवर्णके ॥ हरितावल्लरीभद्रंरक्तंशुद्धेत्ववापिके ९७
ऐकविंशोत्तरशतलिंगतोभद्रमीरितम् ॥ प्रकारांतरमन्यच्चशृणुशिष्यब्रवीमिते ९८ षडधिकाशीतिरेखास्तिर्यगूर्ध्वंप्रकल्पयेत् ॥ पंचाशीतिपदानिस्युःपंक्तयस्तत्रसर्वतः
९९ तत्रषट्षट्पदातिस्यात्परिधिःपीतवर्णकः ॥ सर्वतोऽनेनविधिनाचतुःपरिधयःक्रमात् २०० तेषुवैपंक्तिकोष्ठेषुलिंगादिरचयेद्धिया ॥ कोणेषुत्रिपदश्चंद्रस्तदादिशृं
खलामता १ ततोवल्लीततोभद्रंवापीलिंगंक्रमाद्भवेत् ॥ तत्रप्रथमपंक्तौतुशृंखलापंचकादिका २ एकादशपदावल्लीशृंखलाषट्पदात्मिका ॥ भद्रमेकपदंवापीत्रिषट्कोष्ठैःप्रक
ल्पयेत् ३ ईशानस्तन्मितेकार्यएवंतेनवसंख्यया ॥ भवंतिवाप्योदशताभद्रद्वयमभीप्सितम् ४ द्वितीयपंक्तौवापीतुत्रयोदशपदामता ॥ भद्रंतुषट्दशपदंशेषंपूर्वंसमीरितम् ५

१ भद्रमर्कपदमितिपाठः ।

अष्टौलिंगानिवाप्यस्तुभवन्तिनवसंमिताः ॥ तृतीयायांतुर्यपदंभद्रंशेषंतुपूर्ववत् ६ अष्टौवाप्यःसप्तहराःक्रमशःस्युःसमुद्धृताः ॥ द्वेवाप्यावन्तिमेन्यूनेत्रिभिःकोष्ठैस्तुसं
स्मृते ७ चतुर्थपंक्तौवाप्यस्तुचतस्रःशंकरत्रयम् ॥ भद्रंद्विदशकंज्ञेयंशेषंपूर्ववदुद्धरेत् ८ चतुर्थपरिध्युपरिबाणांतेपरिधिर्भवेत् ॥ तत्पंक्तौशृंखलेन्यूनेपदेनैकेनवल्लरी ९
द्वाभ्यांपदाभ्यांचन्द्रस्तुयथापूर्वंप्रकल्पयेत् ॥ भद्रद्वयंषट्षट्पदंत्वन्येभद्रेनवात्मके १० त्रयोदशपदैर्वापीतत्रतत्रप्रकल्पयेत् ॥ भद्रयोरूर्ध्वस्याद्भद्रद्वयंषट्षट्पदंशुभम्
११ संसृष्टानिपदान्येवंशृंखलार्थेनियोजयेत् ॥ तस्योपरिपरिधिस्तुबाणांतेपरिकल्पयेत् १२ उभयोरंतरेवापीत्रयोदशपदात्मिका १३ भद्रद्वयंषट्षट्पदंशेषंसर्वंयथोदि
तम् ॥ अंतिमेंतःपंचपंचपदैःपद्मंसमुद्धरेत् १४ रक्तंवाचित्रवर्णंचश्वेतश्चन्द्रोऽसितामता ॥ शृंखलाहरितावल्लीपीतंतच्छृंखलाद्वयम् १५ रक्तंभद्रंसितावापीलिंगंकृष्णंप्रक
ल्पितम् ॥ लिंगस्कंधगताःकोष्ठाःशोभाकोष्ठाःप्रकल्पयेत् १६ पदानिशेषभूतानियत्रकचभवंतिहि ॥ तानितत्रयथायोग्यंधियासम्यङ्नियोजयेत् १७ यद्वातुर्यपरि
ध्यूर्ध्वमेकादशपदात्परम् ॥ परिधिःस्यात्तयोर्मध्येकोणेचन्द्रोयथोदितः १८ शृंखलादशपादास्याद्वल्लीस्यादेकविंशतिः ॥ शृंखलाऽन्यारुद्रपदाभद्रंत्रिंशत्पदात्मकम् ॥
१९ एकषष्टिपदैर्वापीसम्यग्बुद्ध्याप्रकल्पयेत् ॥ अथवाद्वेपदेचान्येसंयोज्यगिरि ७ हस्तिषु २२० पदेषुरचयेद्बुद्ध्यालिंगानांपंक्तयःक्रमात् ॥ नवाष्टसप्तत्रीण्येकाशेषं
पूर्वंयथोदितम् २१ विशेषस्तत्रभद्रेषुषड्लिंगेषोडशात्मकम् ॥ एकलिंगेविंशपदंद्वाभ्यामन्यत्रचाधिकम् २२ पूर्ववत्सर्वतोभद्रंपद्मवर्णास्तुपूर्ववत् ॥ पीतशुक्लरक्तकृष्णा
बहिःपरिधयःस्मृताः २३ एतदष्टोत्तरशतलिंगतोभद्रमीरितम् ॥ प्रकारांतरमन्यत्तेशृणुशिष्यब्रवीमियत् २४ तिर्यगूर्ध्वगतारेखानवाष्टलोहिताःस्मृताः ॥ तत्कोष्ठेष्व
ब्धि ४ नेत्रा २ ग्नि ३ कोष्ठकैरचयेद्धिया २५ सर्वतोभद्रकंरम्यंपरितःपरिधिर्मतः ॥ ततोरसरसांतेस्युश्चतुःपरिधयःशुभाः २६ तत्रचतुर्षुपार्श्वेषुकोणेंदुःस्त्रिपदःस्मृ
तः ॥ शृंखलापंचभिर्वल्लीत्वेकादशपदामता २७ लिंगंचतुर्विंशपदंवापीत्वष्टादशाभवेत् ॥ नवसप्ततथापंचयुगनेत्रमिताःशिवाः २८ पंचपंक्तयएवस्युर्वापिकैकाधिकात
तः ॥ तुर्ये ४ लिंगानिद्वेवाप्यौत्रयोदशपदात्मिके २९ षडंकाकैरसरसभद्रसंख्याक्रमाद्भवेत् ॥ सर्वतोभद्रकेवापीयुगनेत्रमितातथा १३० नवकोष्ठमितंभद्रंशेषंसर्वंतुपूर्वव
त् ॥ ततोंतःपरिधिःकार्यस्तत्रपद्मंसमुद्धरेत् ३१ श्वेतोऽब्जःशृंखलाकृष्णानीलावल्लीहरिकाऽरुणम् ॥ भद्रंवापीसिताकृष्णंलिंगंपरिधयोंतिमाः ३२ पीतशुक्लरक्तकृष्णाज्ञे
याःपीताश्चमध्यमाः ॥ एतदष्टोत्तरशतलिंगतोभद्रमीरितम् ३३ तिर्यगूर्ध्वंपंचपंचरेखाःकार्याःसुलोहिताः ॥ तत्कोष्ठेषुपरिधयःषट्षडंतेत्रयःस्मृताः ३४ त्रिव्येकलिंग
रचनाचतुर्विंशतिपादिका ॥ वापीत्वष्टादशपदाषट्त्रिंश ३६ द्विदशा २० क ९ कम् ३५ भद्रंभद्रंपीतमन्यद्भद्रपार्श्वेप्रकल्पयेत् ॥ प्रथमंनवपादंस्याद्द्वितीयंषट्पदा
त्मकम् ३६ वापीपार्श्वेचत्रिपदाशृंखलालोहिताभवेत् ॥ प्रतिपार्श्वेभवेदेतच्छृंखलापंचपादिका ३७ एकादशपदावल्लीत्रिपदश्चन्द्रईरितः ॥ चतुर्विंशपदैर्ज्ञेयंलिंगंपरमसुं
दरम् ॥ मध्येचन्द्रःशृंखलाचत्रिपदाषट्पदालता ॥ भद्रमर्कपदंलिंगमष्टाविंशत्पदात्मकम् ॥ लिंगमस्तकपार्श्वस्थेपदानिपीतकानितु३९लिंगंकृष्णंसितावापीभद्रंरक्तंसितः

१ त्रिव्येकलिंगरचनाइतिपाठः । २ इदमर्धं मुद्रितपुस्तकेनास्ति ।

शशी ॥ शृंखलाकृष्णाहरितावल्लीवर्णास्त्वितीरिताः २४० परिधिःपीतवर्णःस्यात्पदान्युर्वरितानितु ॥ यथेष्टंरंजयेदेतद्बाणाक्षिलिंगसाधनम् ४१ पीतशुक्लरक्तकृष्णावाह्याः परिधयःक्रमात् ॥ प्रकारांतरमन्यद्वाशृणुशिष्यब्रवीम्यहम् ४२ चंद्राब्धि ४१ पदसंख्यासुसर्वतस्तत्व २५ संमितम् ॥ लिंगपीठंविरचयेत्खंडंतेपरिधीमतो ४३ तयोर्वाक्लिंगपंक्तिद्वयंसम्यक्प्रकल्पयेत् ॥ अष्टादशपदंलिंगंवापीत्रिदश १३ पादिका ४४ त्रिपदोर्ध्वःशृंखलाचपंचपादेशवल्लरी ॥ प्रथमांयुगलिंगाऽन्यापंक्तिर्लिंगद्वयान्विता ४५ अदोभद्रंनवपदंपरंभद्रंतुषट्पदम् ॥ परिध्यंतेत्रयस्त्रिंशत्कोष्ठैर्लिंगंप्रकल्पयेत् ४६ मूलस्कंधासप्तसप्तपदजोषट्पदैःशिरः ॥ पंचपंचपदैःपार्श्वौकटिःशंभोस्त्रिपादजः ४७ चतुर्दिक्षुहरस्याऽस्यचतुर्भद्रंनवांघ्रिकम् ॥ चंद्रोऽत्रत्रिपदोज्ञेयःशृंखलाद्विपदास्मृता ४८ वल्लरीपंचपादास्याच्छृंखलान्यात्रिपादजा ॥ लिंगस्कंधगताःकोष्ठाःपीताःकार्याःशुभावहाः ४९ अन्यानिशेषभूतानिपदानिपूरयेद्धिया ॥ यथेच्छंवैपरिधयःकार्यावेदमितावहिः २५० पंचविंशाच्छिवैरेतौप्रकारौद्वौमयोदितौ ॥ अतिप्रियोशंकरायज्ञातव्योद्विजसत्तम ५१ नमस्कृत्वामहद्ब्रह्मगुरुपादसरोरुहम् ॥ संसारतारकंवक्ष्येकथामध्यात्मसंग्रहाम् ५२ पंचविंशतिसंख्याकलिंगतोभद्रमीप्सितम् ॥ केनचित्कल्पितंतार्किकतत्वंतत्कथ्यतेस्फुटम् ५३ लिंगतोभद्रमित्येतन्निरुक्तमर्थवद्भवेत् ॥ लिंगंगमकमित्याहुर्ज्ञानंज्ञापकमित्यपि ५४ पीयूषवापनाद्वापीभद्रंभद्रसमीक्षणात् ॥ साध्यशब्दाःप्रसिद्धंहिवर्ततेसाधनेष्वपि ५५ तस्मिन्शुक्लमुतनीलमित्यादिश्रुतिशासनात् ॥ वर्णाअपिपरस्मिंस्तूपासनार्थंभवंतिहि ५६ तद्ब्रह्मपरमंलिंगंमंगलंभद्रवाचकम् ॥ मंगलंमंगलानांचशिवंशांतमितिस्फुटम् ५७ लीयंतेयत्रभूतानिनिर्गच्छंतियतःपुनः ॥ तेनालिंगंपरंव्योमानिष्कलःपरमःशिवः ५८ सत्त्वंरजस्तमोवर्णत्रयंमायासुवेष्टितम् ॥ मनश्चंद्रोमहामोहशृंखलाप्रेहवल्लिका ५९ तैरिदंसर्वतस्तत्त्वंवेष्टितंघटव्योमवत् ॥ तिर्यगूर्ध्वमहंकारःप्रसृतःपटतंतुवत् २६० तेनस्थानानिजातानिलक्षाणांचतुरशीतिहि ८४ ॥ गुणास्तेषुप्रपूर्यंतेयथाचित्रपटोभवेत् ॥ ६१ आसीदिकंपुरातत्वंतस्मिन्मायानियोगतः ॥ कामोबहुधाभवतिभवेयमितिसादरम् ६२ एकःसन्नितिचात्मानंस्वयमकुरुतेतिच ॥ इंद्रोमायाभिरितिचएकधाबहुधेतिहि ६३ ऊचुश्चश्रुतयःसाध्योब्रह्मणोभवनंप्रति ॥ तज्जलानितिचश्रुत्यानततोऽस्तिहिकिंचन ६४ यद्यप्येवंतथाप्यस्मिन्नस्थितिर्मोहतोभवेत् ॥ यावदहंकृताभावस्तावत्संसारआयतः ६५ भिन्नोहमितिहृद्ग्रंथौनसंसारस्तदाश्रयः ॥ गतेतेजस्यंबुयातिस्वप्नोनिद्राऽनुगोयथा ६६ एतदर्थविरक्तःसन्जिज्ञासुःश्रेयमुत्तमम् ॥ आश्रयेत्सद्गुरुंसाक्षाद्ब्रह्मभूतंनिरामयम् ६७ तेनप्रबोधितःसिद्धमात्मानंसंतमात्मनि ॥ जानीयाद्ब्रह्मभावेनजगच्चित्तंस्थितंसदा ६८ ईश्वरःसर्वभूतानांहृद्देशेसंस्थितोऽमलः ॥ एकोऽद्वितीयःपरमोनांतःप्रज्ञादिलक्षणः ६९ अक्षरःसच्चिदानन्दोऽमरोऽजरउत्तमः ॥ निर्विकारोनिराकारोनिरामयउदीरितः २७० अलिंगोऽरूपएवासावेकत्वगणनात्परः ॥ माययालिंगरूपीवह्येकइत्यभिधीयते २७१ पुरुषश्चप्रकृतिश्चव्यक्तोऽहंकारएवच ॥ चतुर्लिंगानिप्रोक्तानिलक्षकानिशिवस्यच २७२ कार्यकारणभूतानामेकमेवहिपंचकम् ॥ सत्त्वंरजस्तमइतिवसुर्लिंगानिचात्मनः २७३

१ तिर्यक्पंक्तिद्वयमितिपाठः । २ युगलिंगेतिपाठः । ३ वाप्यहतिपाठः ।

दशेंद्रियाणिचमनोबुद्धिर्द्वादशकंस्मृतम् ॥ लिंगानांपरमेशस्यविवेकोत्रप्रतिष्ठितः ७४ इतिकारणलिंगानिकार्यलिंगान्यनेकशः ॥ शतंसहस्रमयुतंकोटिशःसंतिसंख्य
या ७५ सर्वाणिज्ञापकान्येवाशिवस्यपरमात्मनः ॥ वस्तुतस्तुपरंतत्त्वंसजातीयादिहीनकम् ७६ विचारेवर्तमानेतुतंत्वाद्येवपटादिन ॥ एवंसर्वंशिवोभातिनसर्वंशिव
एवहि ७७ बिंदुनादमकारादिमात्रात्रयमुदीरितः ॥ आत्मैवपंचधासाक्षात्तथाब्रह्मेश्वरोहरिः ७८ विधिरुद्रौपंचपंचसद्योजातादिरूपकः ॥ शुद्धोसाक्षीतथाप्राज्ञस्तैजसो
विश्वएवच ७९ सच्चित्सुखत्रयंनामरूपेब्रह्मैवकेवलम् ॥ जातंपंचात्मकंनान्यद्ब्रह्मैवेदमितिश्रुतिः २८० प्रधानंमहदहंचपंचतन्मात्रकंचतत ॥ अष्टप्रकृतिरित्येतच्छा
स्त्रेषुपरिगीयते . ८१ अष्टमूर्तिस्वरूपंसद्भवशर्वादिनामभृत ॥ वस्वष्टकस्वरूपेणमाययाभातिसर्वतः ८२ ज्योतिर्लिंगद्विषट्कंचद्वादशादित्यनामकम् ॥ दशेंद्रियमनोबु
द्धिनामभिर्भातिसत्स्फुटम् ८३ दशेंद्रियाणिचप्राणपंचकंभोग्यपंचकम् ॥ चेतश्चतुष्कमात्मैवपंचविंशमतोबुधैः ८४ लक्षाणांचतुराशीतिभोगायतनविस्तरः ॥ तस्यै
वकल्प्यतेभ्रांत्याकर्मभिर्गुणभेदतः ८५ जाग्रत्स्वप्नसुषुप्तिंचभोगस्थानानिचात्मनः ॥ भोगोभोक्ताभोजयितासर्वंब्रह्मैवनपृथक् ८६ अध्यात्ममधिदैवंचह्यधिभूतमितित्रि
धा ॥ स्थूलंसूक्ष्मंकारणंचसर्वंब्रह्मैवनपृथक् ८७ श्रुतज्ञानंचध्यानंचविवेकश्चविरागिता ॥ जीवेश्वरजगद्भानमात्मैवेतिनतुपृथक् ८८ सर्वंखल्विदमितिचेदंसर्वंयदयमात्मा ॥
ब्रह्मैवेदंसर्वमितिश्रुतयःप्रवदंतिहि ८९ अयंसिद्धस्यविषयोयत्सर्वात्मनिदर्शनम् ॥ आरुरुक्षुःशांतदांतस्तितिक्षुःसर्वतोभवेत् ९० स्वदेशेप्रान्तपुरुषंनिबध्नंतिवशीकृतम् ॥
तेनामीविषयाःप्रोक्तामुमुक्षुस्तान्विवर्जयेत् ९१ विविक्तसेवीलघ्वाशीत्यादिभागवतंवचः ॥ किंबहूक्तेनविधिनासमाप्तंशास्त्रहृद्गतम् ९२ दत्तंमेगुरुणाकिमप्यजडमानंदात्म
वस्त्वद्वयंयत्सेवातइदंतदात्मकमहंत्वंचाशुनष्टंतमः ॥ आपूर्णंसहसोदितंमहदकृतंगंभीरमव्याकृतंयेनाच्छादितमिंदुसूर्यपवनंविश्वंविशेषात्मकम् ९३ तिर्यगूर्ध्वंगतारेखा
श्चत्वारिंशत्समाःशुभाः ॥ तासामंकत्रिकोष्ठेषु ३९ परिधीन्द्रौप्रकल्पयेत् ९४ सप्तांतिप्रथमान्यास्तुततोबाणांतकोष्ठके ॥ तन्मध्येरुद्ररुद्रेषु १२१ पदेष्वष्टादशैःपदैः९५
लिंगमेकंखंडवाप्यौतुर्यंतुर्यपदात्मिके ॥ अष्टकोष्ठात्मकंभद्रंप्रोक्तंपार्श्वेचतुष्टये ९६ शृंखलाद्विपदाचंद्रंत्रिपदोवल्लरीतथा ॥ पंचपादैःस्मृतावल्ल्योत्रिपार्श्वेषुनिमीलयेत् ९७
द्वितीयेत्रिपदश्चंद्रःशृंखलावेदपादिका ॥ वल्लीनवपदाभद्रत्रयंनवपदात्मकम् ९८ त्रयोदशपदंवापीद्वयंपार्श्वेतुशृंखले ॥ द्विपदेरक्तवर्णेचभद्रंतुर्यपदंहरित् ९९ प्रतिपार्श्वे
भवेदेतत्प्रथमाघःसुयोजयेत् ॥ प्रतिपार्श्वेचतुर्लिंगंवापीनांपंचकंतथा ३०० अष्टादशपदंलिंगंवापीत्रयोदशात्मिका ॥ भद्रंरसपदेर्ज्ञेयंवल्लीरुद्रपदात्मिका १ शृंखलापंच
भिःपादैस्त्रिपदश्चंद्रईरितः ॥ लिंगोपरितनावीथीनीलावल्ल्यानियोजयेत् २ यद्वारसांतेपरिधिंविधायतदनंतरम् ॥ त्रिलिंगान्येकलिंगंचद्वयोःपंक्त्योःप्रकारयेत् ३ आदौ
चंद्रकलंभद्रंपदमर्कपदैःस्मृतम् ॥ शृंखलापंचभिर्वल्लीरुद्रकोष्ठासमीरिता ४ वापीचतुष्टयंपूर्वपरंवापीद्वयंस्मृतम् ॥ पूर्ववत्सकलंज्ञेयंबाह्याःपरिधयःक्रमात् ५ पीतशुक्ल
रक्तकृष्णाज्ञेयाःसंख्याधिकाःशुभाः ॥ एतत्सप्तेंदुलिंगाख्यंपीठंसम्यगुदाहृतम् ६ अथवास्मिंस्त्रिकोष्ठानिवर्द्धयित्वाक्रमेणतु ॥ षष्ठांतेपरिधींकार्यौतत्रलिंगानियोजयेत्
७ प्रथमेत्रीणिलिंगानिद्वितीये चैकमीरितम् ॥ चतुर्विंशपदैर्लिंगंवाप्यष्टादशपादजा ८ आदौवेदमितावाप्योद्वेवाप्यौचद्वितीयके ॥ आदौनवपदंभद्रंद्वितीयेऽर्कपदंस्मृ

तम् ९ चंद्रवल्ल्यादिपूर्वोक्तंमध्येलिंगंप्रकारयेत् ॥अष्टाविंशपदैर्ज्ञेयंचतुःपादैःशिरःकटिः ३१० अर्कंत्र्यर्कपदेखंडवाप्यौद्विपदशृंखलाः ॥ पंचपादास्स्मृतावल्लीत्रिपदापीत
शृंखला ११ अर्कपादैश्चतुर्दिक्षुमध्येभद्रचतुष्टयम् ॥ चंद्रश्चत्रिपदःकोणेशिवमस्तकपार्श्वके १२ नेत्रार्थेद्विपदेशुक्लेशेषाणिचपदानिहि ॥ लिंगपार्श्वेपंचपंचयथेच्छंतानि
पूरयेत् १३ पीतशुक्लरक्तकृष्णाबहिःपरिधयोमताः ॥ एतत्सप्तदशलिंगैर्लिंगतोभद्रमीरितम् १४ दशकंकरणानांचप्राणानांपंचकंमनः ॥ षोडशेमाःकलाआत्मासाक्षीसप्त
दशःस्मृतः १५ अर्कलिंगात्मकंभद्रंशृणुशिष्यमयोच्यते ॥ प्रागुदीच्यायतारेखाःषट्त्रिंशाद्विप्रकल्पयेत् १६ पदानिद्वादशशतंपंचविंशतिरेवच ॥ खंडेंदुस्त्रिपदःकोणेशृं
खलाषट्पदात्मिका १७ त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः ॥ भद्रोर्ध्वेत्रिपदाज्ञेयाद्वितीयापीतशृंखला १८ त्रयोदशपदावापीलिंगमष्टादशैःस्मृतम् ॥ लिंगनियम्यपंक्तौ
तुशोभाकोष्ठाश्चतुर्दश १९ तेषामुपरिपंक्तौतुकोष्ठाःसप्तदशैवतु ॥ पूजापंक्तिःसिताज्ञेयापरितःपरिकल्पिता ३२० पूजापंक्त्यंतरापंक्तौकोष्ठाअशीतिसंख्यया ॥ परिधिःस
चविज्ञेयोमंडलांतरयोर्द्वयोः २१ परिध्यंतरकोष्ठेषुसर्वतोभद्रमालिखेत् ॥ विशेषश्चात्रविज्ञेयोशृंखलाषट्पदाभवेत् २२ त्रयोदशपदावल्लीभद्रंतुद्वादशैःपदैः ॥ पंचविंश
त्पदावापीपरिधिःषोडशात्मकः २३ मध्येनवपदैःपद्मंकर्णिकाकेसरान्वितम् ॥ सत्वंरजस्तमोवर्णाःपरितोमंडलस्यच २४ त्रयःपरिधयःकार्यास्तत्रद्वाराणिकारयेत् ॥
सितेंदुःशृंखलाकृष्णावल्लीनीलाप्रपूरयेत् २५ भद्रंरक्तंशृंखलाऽन्यापीतावापीसितास्मृता ॥ लिंगानिकृष्णवर्णानिपार्श्वेषुद्वादशैवतु २६ परिधिःपीतवर्णःस्यात्कमलं
पंचवर्णकम् ॥ कर्णिकाचकेसराणिपीतवर्णानिकारयेत् २७ प्रकारांतरमन्यत्तेशृणुशिष्यमयोच्यते ॥ पूर्वोत्तरगतारेखासप्तविंशान्विताःशुभाः २८ तत्षट्त्रिंशत्पदेष्वेवसर्वतो
भद्रमुत्तमम् ॥ अब्धिनेत्राग्निकोष्ठैश्च ३२५ रचयेत्पूर्ववच्छुभम् २९ परिधिस्तत्समंताच्चप्रकल्प्यःपीतवर्णकः ॥ अष्टोत्तरशतैर्लिंगतोभद्रंकथितंयथा ३३० तस्यचतुर्षुपा
र्श्वेषुरचयेदर्कलिंगकम् ॥ कोणकोणेत्रिपदोक्ताःशृंखलासप्तपादिका ३१ वल्लीमनुपदाभद्रंषट्पदंत्रींदुवापिका ॥ लिंगंषड्विंशपदजंभद्रंस्याद्वापिकोपरि ३२ लिंगपार्श्वपदान्ये
वषट्पीतानिप्रकल्पयेत् ॥ लिंगोपरितनावीथिनीलावल्ल्योर्नियोजयेत् ३३ चतुष्पदैर्लिंगशिरस्तथापरिधयोबहिः ॥ सर्वाणितुयथापूर्वमुक्तवर्णैःसुरंजयेत् ३४ चतुर्विंशति
रालेख्यारेखाःप्राग्दक्षिणायताः ॥ कोणेषुशृंखलापंचपदावल्ल्यश्चपार्श्वतः ३५ पदैर्नवभिरालेख्याश्चतुर्भिर्लघुशृंखलाः ॥ लघुवल्ल्यःपदैःषड्भिस्ततोष्टादशभिःपदैः ३६
कृत्वालिंगानिवाप्यस्तुत्रयोदशभिरंतरा ॥ ततोवीथीद्वयेनैवपीठंकुर्याद्विचक्षणः ३७ तस्यपादाःपंचपदाद्वाराण्यपितथैवच ॥ एकाशीतिपदंमध्येपद्मंस्वस्तिकमिष्यते ३८
कोणेषुशृंखलाःकार्याःपदैस्त्रिभिरतःपरम् ॥पदैश्चतुर्भिर्दिक्षुस्युर्भद्राण्येषांसमंततः ३९ एकादशपदेवल्ल्यौमध्येऽष्टदलमालिखेत् ॥ पद्मंनवपदंह्येतल्लिंगतोभद्रमिष्यते ४०
शृंखलाकृष्णवर्णेनवल्लीनीलेनपूरयेत् ॥ रक्तेनशृंखलालघ्वीवल्लीपीतेनपूरयेत् ४१ लिंगानिकृष्णवर्णानिश्वेतेनाप्यथवापिका ॥ पीठंस्वपादंश्वेतेनपीतेनद्वारपूरणम् ४२
मध्येस्युःशृंखलारक्तावल्लीनीलेनपूरयेत् ॥ भद्राणिपीतवर्णानिपीतापंकजकर्णिका ४३ दलानिश्वेतवर्णानियद्वाचित्राणिकल्पयेत् ॥ तिस्रोरेखाबहिःकार्याःसितरक्ताऽसि
ताःक्रमात् ४४ ऊर्ध्वलिंगोद्भवंह्येतल्लिंगतोभद्रमुच्यते ॥ अन्यन्मयातिरम्यंतच्छृणुशिष्यात्रकौतुकात् ४५ अष्टाविंशतिरेखाश्चतिर्यगूर्ध्वंसमंततः ॥ सप्तविंशतिकोष्ठेषुष

डंतेपरिघयःस्मृताः ४६ कोणेपुत्रिपदैश्चन्द्रःशृंखलापंचपादिका ॥ वाप्यर्कपादजाभद्रंषद्वंषट्षट्पदात्मकम् ४७ ऊर्ध्वेंमद्रेरविपदेपदैरष्टादशैःशिवाः ॥ आत्मनोऽभिमु
खाःसर्वेकार्याह्यष्टशुभावहाः ४८ त्रयोदशांध्रिजावापीतत्त्रयंपश्चिमेस्मृतम् ॥ पूर्वेत्वेकादशेकलेशेषंसर्वंतुपूर्ववत् ४९ तिर्यक्भद्रेवेदपदेपदन्यूनोर्ध्ववल्लरी ॥ दक्षिणोत्तरत
श्चापिवापीनांशकलाष्टकम् ५० उभयोर्लिंगयोर्मालासत्रिभिर्नयनैःस्मृता ॥ सर्वत्रनेत्रेद्वेज्ञेयेदक्षिणोत्तरयोस्त्रिभिः ॥ पृथक्चत्वारिभद्राणिह्यधोभद्रेचतुष्पदे ५१ दक्षिणो
त्तरदिग्भागेपूर्ववल्यौचसंधयेत् ॥ त्र्यंतेमध्येतुपरिधिःपंचविंशैर्जलेरुहम् ५२ शृंखलाद्विपदामध्येवल्लीषट्पदजास्मृता ॥ वाप्यःपंचपदैर्ज्ञेयाभद्रंवेदपदात्मकम् ५३ सि
तावापीशिवःकृष्णःपद्मभद्रेचलोहिते ॥ तिर्यक्भद्रेलिंगमालेपरिधीपीतवर्णकौ ५४ नेत्रेंदूधवलौकृष्णाशृंखलाहरितालता ॥ पदत्रयंहिवाप्यूर्ध्वंतद्यथारुचिपूरयेत् ५५
पीतशुक्लरक्तकृष्णाबाह्यःपरिघयःस्मृताः ॥ अष्टलिंगात्मकंज्ञेयंलिंगतोभद्रमुत्तमम् ५६ अथवाऽन्यौद्वौप्रकारौप्रोच्येतेशृणुतावपि ॥ द्वात्रिंशच्चरणेष्वेवंचतुर्लिंगंतथाष्ट
कम् ५७ युक्त्याविरचयेत्तत्रविशेषोथनिगद्यते ॥ आद्येलिंगंचतुर्विंशपदमष्टेंदु १८ वापिका ५८ भद्रंविंशपदंचान्यल्लिंगमष्टादशात्मकम् ॥ भद्रंनवपदंशेषंयावदवधियो
जयेत् ५९ रेखास्त्वष्टादशप्रोक्ताश्चतुर्लिंगसमुद्भवे ॥ कोणेंदुस्त्रिपदःश्वेतःस्त्रिपदैःकृष्णशृंखला ३६० वल्लीसप्तपदानीलाभद्रंरक्तंचतुष्पदम् ॥ भद्रपार्श्वेमहालिंगंकृष्णम
ष्टादशैःपदैः ६१ शिवपार्श्वेतुवापींचकुर्यात्पंचपदांसिताम् ॥ पदमेकंतथापीतंभद्रंवाप्यस्तुमध्यतः ६२ शिरसिशृंखलापार्श्वेकुर्यात्पीतंपदत्रयम् ॥ लिंगानांस्कंधतःको
ष्ठाविंशतीरक्तवर्णकाः ६३ परिधिःपीतवर्णस्तुपदैःषोडशभिःस्मृतः ॥ पदैस्तुनवभिःपश्चात्पद्मंचित्रंसकर्णिकम् ६४ तिर्यगूर्ध्वगतारेखाःकार्याःस्निग्धास्त्रयोदश ॥ कोणें
दुस्त्रिपदःकार्यःशृंखलात्रिपदास्मृता ६५ वल्लीचषट्पदानीलारक्तंभद्रंप्रकल्पयेत् ॥ पदैर्द्वादशभिःस्पष्टमुत्तरेपूर्वदक्षिणे ६६ पश्चिमायांमहारुद्रमष्टाविंशतिकोष्ठके ॥
लिंगपार्श्वेतथामूर्ध्निह्यष्टकोष्ठास्तुपीतकाः ६७ लिंगमेकंतथागौर्यास्तिलकंप्रोक्तमण्डले ॥ पूजयेन्मण्डलंचैवतस्यगौरीप्रसीदति ६८ प्रागुदीच्यांगतारेखाःकुर्यादेकोन
विंशतिः ॥ खण्डेंदुस्त्रिपदःकोणेशृंखलापंचभिःपदैः ६९ एकादशपदावल्लीभद्रंतुनवभिःपदैः ॥ चतुर्विंशत्पदावापीपरिधिर्विंशकैःपदैः ३७० मध्येषोडशभिःकोष्ठैःपद्ममष्ट
दलंस्मृतम् ॥ श्वेतेंदुःशृंखलाकृष्णावल्लीनीलेनपूरयेत् ७१ भद्रारुणासितावापीपीतेपरिधिकर्णिके ॥ रक्तंवाचित्रितंपद्मंबाह्यासत्वरजस्तमाः ॥ सर्वतोभद्रकंचेदंकर्त्तव्यंसर्व
कर्मसु ७२ एवंलिंगतोभद्राणांरचनाःकथितामया ॥ एताःशिवपराज्ञेयानयोग्याविष्णुपूजने ७३ रामलिंगात्मकंयोग्यंश्रीविष्णोरर्हणस्यच ॥ पूजनेत्वेकएवात्रतद्विस्ता
रेणकथ्यते ७४ शिवस्यपूजनेलिंगमुपास्यंपरिचिंतयेत् ॥ उपासिकारामसुद्राज्ञेयातद्वद्भवानपि ७५ लिंगतोभद्रवच्चात्रसमावाह्यातिबुद्धितः ॥ रामतोभद्रकंयच्चज्ञेयंविष्णु
९२ परंहितत् ७६ रमारामेतिवर्णैश्चिन्हितंभद्रकंत्कतम् ॥ धियादेवीपरंतच्चज्ञातव्यंसर्वकर्मसु ३७७ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वा
ल्मीकीये मनोहरकांडे रामदासविष्णुदाससंवादे रामलिंगतोभद्राणां तथा लिंगतोभद्राणां रचनाप्रकारकथनंनामपंचमःसर्गः ॥ ५ ॥ अथसर्वतोभद्रंतदेवतालिख्यंते ॥

१ शेषास्तद्दैवतान्यपीतिपाठः ।

प्राणानायम्यदेशकालौस्मृत्वा रामतोभद्रदेवतास्थापनंवाराम लिंगतोभद्रदेवतास्थापनंवारमानामतोभद्रदेवतास्थापनंवारमारामतोभद्रदेवतास्थापनंकरिष्यइतिसंकल्प्य॥
ब्रह्मजज्ञानमितिमन्त्रस्यवामदेवऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता ब्रह्मस्थापनेविनियोग ॥ ब्रह्मजज्ञानं०सर्वतोभद्रमध्येब्रह्माणमावाहयामि १ उत्तरेवापीप्रांतभागे आप्याय स्वस० सोमायनमःसोममावाहयामि २ ईशान्यां खंडेंदौ तमीशानंज० ईशानायनमःईशानमावाहयामि ३ पूर्वे वाप्यां त्रातारमिंद्र० इंद्रायनमःइंद्रमावाहयामि ४ आग्नेय्यां खंडेंदो अग्निंदूतं० अग्नयेनमःअग्निमावाहयामि ५ दक्षिणे वाप्यां यमायत्वांगिर० यमायनमःयममावाहयामि ६ नैर्ऋत्यां खंडेंदो असुन्वंतं०निर्ऋतयेनमः निर्ऋतिमावाहयामि ७ पश्चिमे वाप्यां तत्वायामि० वरुणायनमःवरुणमावाहयामि ८ वायव्ये खंडेंदो आनोनियुद्भिः० वायवेनमःवायुमावाहयामि ९ वायुसोममध्ये भद्रे निवेशनीसंगमनीवसूनां० ध्रुवं अध्वरं सोमं अपः अनिलं अनलं प्रत्यूषं प्रभासमित्यष्टवसूनावाहयामि १० सोमेशानमध्ये भद्रे नमस्तेरुद्र० वीरभद्रं शंभुं गिरिशं अजैकपादं अहिर्बुध्न्यं पिनाकिनं भुवनाधीश्वरं कपालिनं दिक्पतिं स्थाणुं रुद्रमित्येकादशरुद्रानावाहयामि ११ ईशानेंद्रमध्ये भद्रे आकृष्णेन० भगं वरुणं सूर्यं वेदांगं भानुं रविं गभस्तिं हिरण्यरेतसं दिवाकरं मित्रं आदित्यं विष्णुमितिद्वादशादित्यानावाहयामि १२ इंद्राग्निमध्ये भद्रे अश्विनातेजसाचक्षुः० अश्विनीकुमाराभ्यांनमःअश्विनौदेवावावाहयामि १३ अग्नियममध्ये भद्रे समाश्वर्षणिघृतो० सपैत्रकानविश्वान्देवानावाहयामि १४ यमनिर्ऋतिमध्ये भद्रे अभित्यंदेवं०यक्षेभ्यो नमःयक्षानावाहयामि १५ निर्ऋतिवरुणयोर्मध्ये भद्रे आयंगौः० भूतनागेभ्योनमःभूतान्नागानावाहयामि १६ वरुणवायुमध्ये भद्रे नदीभ्यःपौजिष्टं० गंधर्वाप्सरोभ्यो नमःगंधर्वाप्सरसआवाहयामि १७ ब्रह्मसोममध्ये वाप्यां यदक्रंदःप्रथमं० स्कंदायनमःस्कंदमावाहयामि १८ नमःशंभवे० नंदीश्वरायनमःनंदीश्वरमावाहयामि १९ भद्रंकर्णेभिः०शूलाय०शूलमावाहयामि २० विश्वकर्मोह्यज०महाकालाय०महाकालमावाहयामि २१ ब्रह्मेशानमध्ये वल्लीषु अदितिर्द्यौरं०ऋक्षादीनावाहयामि २२ ब्रह्मेंद्रमध्ये वाप्यां श्रीश्चते०दुर्गायै०दुर्गामावाहयामि २३ इदंविष्णु०विष्णवेनमःविष्णुमावाहयामि २४ ब्रह्माग्निमध्ये वल्लीषु उदीरता०स्वधायै०स्वधामावाहयामि २५ ब्रह्मयममध्ये वाप्यां परंमृत्यो० मृत्यवेनमःमृत्युमावाहयामि २६ ब्रह्मनिर्ऋतिमध्ये वल्लीषु गणानांत्वा०गणपतयेनमःगणपतिमावाहयामि २७ ब्रह्मवरुणमध्ये वाप्यां शन्नोदेवी०अद्भ्योनमःअपःआवाहयामि २८ ब्रह्मवायुमध्ये वल्लीषु मारुतोयस्य० मरुतेनमःमरुतमावाहयामि २९ ब्रह्मणः पादमूले कर्णिकाधः स्योनापृथिवी० पृथ्व्यैनमःपृथ्वीमावाहयामि ३० तत्रैव ॥ पंचनद्यःसरस्वती०गंगादिसर्वेदीभ्योनमःगंगादिसनर्वनदीरावाहयामि ३१ तत्रैव ॥ धाम्नोधाम्नोराजंस्ततोवरुण०सप्तसागरेभ्यो नमःसप्तसागरानावाहयामि ३२ ततः कर्णिकोपरि नाममंत्रेण मेरवेनमःमेरुमावाहयामि ३३ ततःपीतपरिधौ सोमादिसन्निधौक्रमेणआयुधानि सोमसमीपे गदायैनमः गदामावाहयामि ३४ ईशानसमीपे शूलायनमःशूलमावाहयामि ३५ इंद्रसमीपे वज्रायनमःवज्रमावाहयामि ३६ अग्निसमीपे शक्त्यैनमःशक्तिमावाहयामि ३७ यमसमीपे दंडायनमःदंडमावाहयामि ३८ निर्ऋतिसमीपे खड्गायनमःखड्गमावाहयामि ३९ वरुणसमीपे पाशायनमःपाशमावाहयामि ४० वायुसमीपे अंकुशायनमः

अंकुशंआवाहयामि ४१ पुनःसोमस्योत्तरे गदासमीपे गौतमायनमःगौतमंआवाहयामि ४२ ईशान्यां भरद्वाजायनमःभरद्वाजंआवाहयामि ४३ पूर्वे विश्वामित्रा
यनमःविश्वामित्रंआवाहयामि ४४ आग्नेय्यां कश्यपायनमःकश्यपंआवाहयामि ४५ दक्षिणे जमदग्नयेनमःजमदग्निंआवाहयामि ४६ नैर्ऋत्यां वसिष्ठायनमः
वसिष्ठंआवाहयामि ४७ पश्चिमे अत्रयेनमःअत्रिंआवाहयामि ४८ वायव्यां अरुंधत्यैनमःअरुंधतीमावाहयामि ४९ पुनःपूर्वादिक्रमेण ॥ पूर्वे विश्वामित्रसमी
पे ऐंद्र्यैनमःऐंद्रीमावाहयामि ५० आग्नेय्यांकौमार्यैनमःकौमारीमावाहयामि ५१ दक्षिणे ब्राम्हयैनमःब्राह्मीमावाहयामि ५२ नैर्ऋत्यां वाराह्यैनमःवाराहींआ० ५३
पश्चिमे चामुंडायै०चामुंडांआ० ५४ वायव्ये वैष्णव्यैन०वैष्णवींआ० ५५ उत्तरे माहेश्वर्यै०माहेश्वरींआ० ५६ ईशान्यां वैनायक्यैनमः वैनायकींआ० ५७
अष्टदलमध्ये सूर्यायनमःसूर्यंआ० ५८ बाह्यपूर्वाद्यष्टदिक्षु यथास्थानेषु ॥ पूर्वेसोमाय०सोमंआ० ५९ आग्नेय्यां भौमाय०भौमंआ० ६० दक्षिणेबुधाय०बुधंआ०
६१ नैर्ऋत्यां बृहस्पतयेनमः बृहस्पतिंआ० ६२ पश्चिमे शुक्रायनमःशुक्रंआ० ६३ वायव्यां शनैश्वरायनमःशनैश्वरंआ० ६४ उत्तरे राहवेनमःराहुंआ० ६५
ईशान्यां केतवेनमःकेतुंआ० ६६ एतादेवताःसर्वतोभद्रेप्रतिष्ठाप्य ॥ ततःपरिधिभूतपंक्तौ सुषेणाय०सुषेणंआ० ६७ सर्वेषुलिंगेषु रुद्राय०रुद्रंआ० ६८ सर्वासु
वापीषु नलाय०नलंआ० ६९ सर्वेषुभद्रेषु सुग्रीवाय०सुग्रीवंआ० ७० सर्वेषुतिर्यक्भद्रेषु गवाय०गवंआ० ७१ सर्वासुपीतशृंखलासु अंगदाय०अंगदंआवा० ७२
सर्वासुकृष्णशृंखलासु विभीषणाय०विभीषणंआ० ७३ सर्वासुवल्लीषु जांबुवंतायनमःजांबुवंतंआ० ७४ सर्वेषुखंडेषु मैंदायनमःमैंदंआ० ७५ सर्वासुपरिधिषु द्वि
विदाय०द्विविदंआ० ७६ मुद्रायां रामजानकीभ्यांनमःरामजानक्यौआ० ७७ मुद्रायाःपश्चिमेपीतपरिधौ लक्ष्मणाय०लक्ष्मणंआ० ७८ मुद्रायाउत्तरे भरता
172 य०भरतंआ० ७९ मुद्रायादक्षिणे शत्रुघ्ना०शत्रुघ्नंआ० ८० मुद्रायाःपुरतः वायुपुत्राय०वायुपुत्रंआ० ८१ बहिस्त्रिपरिधिषुश्वेतपरिधौ भागीरथ्यै०भागीरथींआ०
८२ रक्तपरिधौ सरस्वत्यै०सरस्वतीं० ८३ कृष्णपरिधौ यमुनायै०यमुनांआ० ८४ एवमेव रमारामभद्रेपिआवाहनंकार्यम् ॥ रमानामभद्रेमुद्रायामेवविशेषः ॥
आदौरमामावाह्यरामंआवाहयेत् ॥ एवमावाहनंकृत्वाषोडशोपचारैःपूजयेत् ॥ शेषान्नेनदिग्बलिःकार्यः ॥ इतिआनंदरामायणांतर्गतरामतोभद्रदेवतास्थापनम् ॥
॥ श्रीरामदासउवाच ॥ शिष्ययद्यत्प्रियंतस्मैरामायतद्ददाम्यहम् ॥ मासेषुचैत्रमासस्तुराघवास्यातिवल्लभः १ पक्षयोःसितपक्षस्तुप्रियोऽस्तिराघवस्याहि ॥ सर्वासु
तिथिषुश्रेष्ठानवमीराघवप्रिया २ सूर्यवंशसमद्भूतस्तस्माच्चभानुवासरः ॥ प्रियोतिराघवस्यैवनक्षत्रेषुपुनर्वसुः ३ चंपकःपुष्पजातौहितुलसीचतथैवच ॥ अथवानवकं
चापिपुष्पाणांराघवप्रियम् ४ जातिश्चंपकमंदारौतुलसीमुनिमालती ॥ दमनःकेतकीसिंहीपुष्पाणांनवकंस्मृतम् ५ तथानवविधंचान्नंराघवस्यातिवल्लभम् ॥ मोद
कोलड्डुकोमंडोपूर्णगर्भोथफेणिका ६ वटकःपर्पटःखाद्यंघृतपक्कंनवत्विति ॥ एतानिनवभक्ष्याणिराघवस्यप्रियाणिहि ७ अथवान्यत्प्रवक्ष्यामिदिव्यान्ननवकंशु

१ पूरणपोळिकेत्यर्थः ।

मम् ॥ मोदकोलडुकोमंडोवटकोफेणिकातथा ८ वरान्नमोदनःशाकंपायसंनवकंशुभम् ॥ अन्यच्छ्रुणुष्वभोशिष्यनवान्नंराघवप्रियम् ९ एकाशीतिकुडवंचगोक्षीरं
तंडुलास्तथा ॥ सपादद्विकुडवाश्चमुद्गाश्चवितुषास्तथा १० कुडवस्त्वेकएवाथशर्करःकुडवानव ॥ त्रिकुडवंमधुप्रोक्तंघृतंचकुडवद्वयम् ११ मरीचंकुडवाष्टांशमितं
नारीफलंतथा ॥ कुडवस्त्वेकएवाथजातिपत्रिस्तथैवच १२ ग्राह्यामरीचमानेननवान्नंनवभिस्त्विदम् ॥ तोषदंरामचंद्रस्यभक्त्याकार्यंसदानरैः १३ लघुनवान्नंवक्ष्या
मिनैवेद्यार्थंनिरंतरम् ॥ कुडवानवगोक्षीरंतंडुलाःकुडवस्यच १४ चतुर्थांशमिताग्राह्याःकुडवाष्टांशसंमिताः ॥ ग्राह्यावितुषमुद्गाश्चकुडवार्धंसितास्मृता १५ घृतं
मुद्गसमंग्राह्यंतावन्मानंमधुस्मृतम् ॥ तावन्मानंश्रीफलंचमरीचंटंकसंमितम् १६ टंकार्धंजातिपत्रिश्चनवान्नंलघुकीर्तितम् ॥ कुडवोऽर्कटंकमितष्टंकोमाषचतुष्टयम्
१७ लघुनवान्नमेतच्चराघवायनिवेदयेत् ॥ निरंतरंहिपूजायांराघवस्यातिहर्षदम् १८ चूतजंबुकपित्थाश्चबीजपूरंचदाडिमम् ॥ खर्जूरीनारिकेलंचकदलीफलमेवच
१९ पनसंचेतिरामायफलानिनवसर्वदा ॥ एतान्यतिप्रियाण्यत्रपूजायांतन्निवेदयेत् २० सीताफलंचजंबीरंनारंगंस्निग्धमज्जकम् ॥ जातीफलंमातुलिंगंतथाद्राक्षा
फलंशुभम् २१ उर्वारुकंतथाधात्रीफलंचैतानिवैनव ॥ फलानिरामपूजायामुक्तानिमुनिभिःसदा २२ नवोपचारस्तांबूलेराघवायनिवेदयेत् ॥ नागवल्लीःक्रमुकंच
खदिरःसौधएवच २३ जातिपत्रीलवंगंचजातीफलवरांगके ॥ एलाचेतिनवविधस्तांबूलःकीर्त्यतेबुधैः २४ नवराजोपचारांश्चराघवायनिवेदयेत् ॥ छत्रंसिंहासनंया
नंचामरंव्यजनंतथा २५ पानतांबूलपात्रंचपात्रंनिष्ठीवनस्यच ॥ वस्त्रकोशश्चेतिराज्ञामुपचारानवस्मृताः २६ नवाथभोग्यवस्तूनिराघवायनिवेदयेत् ॥ चंदनंपु
ष्पमालांचद्रव्यंपरिमलंतथा २७ अवतंसोफलंचापिसुगंधतैलमुत्तमम् ॥ तांबूलंकस्तूरीचापितथारक्ताक्षताःशुभाः २८ एतानिभोग्यवस्तूनिराघवायनिवेदयेत् ॥
नवोपचाराःशय्यापिराघवायसमर्पयेत् २९ पर्यंकतूलिकारम्यावितानंचोपबर्हणम् ॥ आदर्शोदीपिकातोयपात्रंप्रावरणंशुभम् ३० व्यजनश्चेतिशय्यायाश्चोप
चारानवस्मृताः ॥ नववस्त्राणिरामायदेयान्यतिमहांतिच ३१ पीतांबरमुत्तरीयंचोष्णीषंकंचुकंतथा ॥ उष्णीषोर्ध्वेस्थितंदिव्यंतथाचकटिबंधनम् ३२ मुखशो
धनवस्त्रंचत्रिसुखंह्यंकयोग्यकम् ॥ तथाप्रावरणंदिव्यंनववस्त्राणिभोद्विज ३३ नवदिव्यास्त्वलंकारादेयाःश्रीराघवायहि ॥ कुंडलेकंकणेमालाकेयूरेनूपुरेतथा ३४
पदकंकटिसूत्रंचशृंखलामुद्रिकेतिच ॥ एतेनवत्वलंकारादेयारामायभक्तितः ३५ एवंशिष्यमयारामप्रीतिदानिमहांतिच ॥ नवकान्यतिरम्याणितवाग्रेकीर्तिता
निहि ३६ मुख्यास्त्वत्रपदार्थाहिनवकेषुमयास्मृताः ॥ एभ्यस्त्वन्येपदार्थाश्चयेयेसंतिसहस्रशः ३७ तेसर्वेराघवायातिभक्त्यादेयास्तुपूजने ॥ प्रत्यहंरामचंद्र
स्यत्रिकालंपूजनंनरैः ३८ कार्यंवित्तानुसारेणनकदाशाठ्यमाचरेत् ॥ प्रतिपद्दिनमारभ्ययावच्चनवमीतिथिः ३९ तावद्विशेषतःकार्यंप्रत्यहंरामपूजनम् ॥ वि
चित्रैर्मंडपाद्यैश्चसंपूज्यरघुनंदनम् ४० पारायणंतदग्रेहिकर्तव्यंनवभिर्दिनैः ॥ आनंदरामचरितंपठनीयंतुसर्वदा ४१ नवम्यांराघवंरामतीर्थेवाहनसंस्थितम् ॥



१ जातीफलमितिपाठः । २ कुडवोऽर्कबमूकश्चेतिपाठः । ३ कस्तूरीतिलकारम्याइतिपाठः ।

नीत्वामंगलतूर्याद्यैर्ध्वजाद्यैर्दुंदुभिस्वनैः ४२ अभिषेकस्तत्रकार्योरुद्रसूक्तैःसुपुण्यदैः ॥ तथापुरुषसूक्तेनश्रीसूक्तेनतथैवच ४३ विष्णुसूक्तादिभिःसूक्तैरभिषिच्य
रघूत्तमम् ॥ पूजनंविस्तरेणाथकृत्वागेहंसमानयेत् ४४ ततोहरेःकीर्तनानिस्वयंकार्याणिवापरैः ॥ गायकैःकारणीयानिवेश्याभिर्नर्तनान्यपि ४५ ततःस्वयमु
पोष्याथभक्त्याविप्रप्रपूजनम् ॥ कार्यंवैगायकानांचपूजनंविस्तरेणहि ४६ रात्रौजागरणंकार्यंकथाभिर्गीतनृत्यकैः ॥ दशम्यांप्रातरुत्थायस्नात्वासंपूज्यराघवम् ४७
मध्यान्हेरामचंद्रस्यपूजनंब्राह्मणेषुहि ॥ कार्यंतस्यविधानंतेवदाम्यद्यशृणुष्वतत् ४८ एकंयुग्मंतुविप्रस्यविप्राष्टंचनिमंत्रयेत् ॥ भूमिंगृहेविलिख्याथगोमयेनातिविस्तृ
ताम् ४९ रंगवल्याश्वपद्मानिनीलपीतादिवर्णकैः ॥ तत्रसमंततःकृत्वामध्येसिंहासनंशुभम् ५० स्थाप्यतत्रमहावस्त्रैरासनंपरिकल्पयेत् ॥ अष्टोत्तरसहस्रंचरामलिंगा
त्मकंशुभम् ५१ अथवाष्टोत्तरशतंरामलिंगात्मकंशुभम् ॥ अष्टोत्तरसहस्रंवारामतोभद्रमुत्तमम् ५२ अथवाऽष्टोत्तरशतंरामतोभद्रमुत्तमम् ॥ सिंहासनेनिधायाथराम
स्यासनमुज्ज्वलम् ५३ भद्रोपरिसपत्नीकंतत्रविप्रंनिवेशयेत् ॥ पश्चिमाभिमुखेवामभागेतत्स्त्रींन्यवेशयेत् ५४ सीतारामौतुदंपत्योरावाह्यतदनंतरम् ॥ तत्पृष्ठेलक्ष्मणं
विप्रंचिंतयेच्चततःपरम् ५५ भरतंरामसव्येतुआवाह्यमूसुरेतथा ५६ विप्रेऽञ्जनिसुतंचापिरामस्याग्रेविचिंतयेत् ॥ रामस्यवायुदिग्भागात्सुग्रीवादीन्विचिंतयेत् ५७
चतुष्कोणेषुविप्रेषुततःपूजनमाचरेत् ॥ नवायतनपूजेयंज्ञेयाश्रीराघवायहि ५८ अथवापंचायतनंपंचविप्रेषुचिंतयेत् ॥ ससीतंशक्तिहीनेननरेणसर्वदाभुवि ५९ अथवा
यतिंनरामस्थानेभक्त्यानिवेशयेत् ॥ पूगीफलमयींसीतांयतिवामेनिवेश्यच ६० कार्यंसम्यक्पूजनंचततोगेहेसुवासिनीम् ॥ सीतांमत्वापुनःपूज्यभोजनीयासविस्त
रम् ६१ आदौसीताराघवयोःकृत्वापूजनमुत्तमम् ॥ ततःपूजातुसर्वेषांकार्यानानोपचारकैः ६२ क्रमेणलक्ष्मणादीनामुपचारैस्तुषोडशैः ॥ अथवासहतंत्रेणरामपूजन
माचरेत् ६३ आदावावाह्यविप्रेषुदेयमासनमुत्तमम् ॥ ततःप्रक्षाल्यपादौचसर्वेषांचपृथक्पृथक् ६४ यतिपादोदकंभिन्नंस्थापनीयंनरोत्तमैः ॥ ततःपृथक्पृथगर्घ्यान्दत्वासु
चंदनादिभिः ६५ ततश्चाचमनंदत्वास्नानार्थंजलमुत्सृजेत् ॥ ततोवस्त्रंसमर्प्याथदेयान्याभरणानिहि ६६ समर्प्यब्रह्मसूत्राणिगंधंदेयंमनोहरम् ॥ ततोरक्ताक्षतादेयाःपुष्प
मालास्तथापराः ६७ ततोमांगल्यवस्तूनिततश्छत्रंचचामरम् ॥ व्यजनंचततोदेयंदेयस्तूणीरकस्तथा ६८ देयावाणाश्चचापानिदेयानिहिपृथक्पृथक् ॥ दत्वापरि
मलादीनिभोग्यवस्तूनिविस्तरात् ६९ धूपोदेयस्तथादीपोनैवेद्योदीयतांततः ॥ अथवाऽन्यच्छर्करादिनैवेद्यार्थंसमर्पयेत् ७० नानाफलानिदेयानिदेयस्तांबूलउत्तमः ॥
दक्षिणांचततोदत्वादेयोमुकुरउज्ज्वलः ७१ नीराजनंततःकृत्वामंत्रपुष्पाणिदीयतां ॥ प्रदक्षिणानमस्कारान्नवकृत्वाततःपरम् ७२ नृत्यगीतादिकंकृत्वाप्रार्थयेद्रघुनायकम्॥
विनिमील्यकरौपादौरामाग्रेसंस्थितैर्नरैः ७३ वामेभूमिसुतापुरस्तुहनुमान्पृष्ठेसुमित्रासुतःशत्रुघ्नोभरतश्चपार्श्वदलयोर्वाय्वव्यकोणादिषु ॥ सुग्रीवश्चविभीषणश्चयुवराट्
तारासुतोजांबवान्मध्येनीलसरोजकोमलरुचिंरामंभजेश्यामलम् ७४ रामोहत्वादशास्यंद्विजवचनगुरुत्वेनयात्राश्वयज्ञान्कृत्वाभुक्त्वातिभोगानवनितलविशंतींगृहीत्वा
थसीताम् ॥ लब्ध्वानानास्तुपास्तास्त्ववनितलगतान्पार्थिवादींश्चजित्वाकृत्वानानोपदेशान्गजपुरनिकटेस्वीयलोकंजगाम ७५ नवकांडमयःश्लोकःपठित्वाऽयंहरेः

पुरः ॥ ततःक्षमाप्यश्रीरामंपूजांतस्मैसमर्पयेत् ७६ मयामासव्रतेरामनवम्यांयत्प्रपूजनम् ॥ पारायणादिकंसर्वंनवरात्रेऽपियत्कृतम् ७७ तत्सर्वंतेऽर्पितंत्वद्यप्रसन्नोभवमे
प्रभो ॥ नवायतनपूजेयंयाकृतानवमीदिने ७८ नवविप्रेषुसाप्यद्यतेऽर्पितारामवैमया ॥ त्वंगृहाणयथाशक्त्याकृतांतांत्वंप्रसीदमे ७९ एवंसमर्प्यरामायसकलंपूजना
दिकम् ॥ ततोभोजनरीत्यातान्सन्निवेश्याथभोजयेत् ८० पुनर्दत्त्वातुतांबूलंदक्षिणांतुविसर्जयेत् ॥ ततःस्वयंविप्रतीर्थंगृहीत्वावैततःपरम् ८१ यतिपादोदकंप्राश्यदेव
तीर्थंततःपरम् ॥ गृहीत्वाभोजनंकार्यंसुहृन्मित्रजनैःसह ८२ ॥ समर्पितंयद्यतयेततश्चब्राह्मणायहि ॥ देयंस्वगुरवेसर्वंब्रह्मसूत्रादिकंशुभम् ८३ एवंव्रतंराघवस्यपक्षेपक्षे
प्रकारयेत् अथवाशुक्लपक्षेहिकार्यंव्रतमिदंशुभम् ८४ मासेमासेसर्वदेवरामोपासकमानवैः ॥ एवंमासव्रतंप्रोक्तंराघवस्यातितोषदम् ८५ संतिव्रतान्यनेकानिजगत्यां
पुण्यदानिहि ॥ तथाप्यनेनसदृशंनभूतंनभविष्यति ८६ व्रतानामुत्तमंचैतद्भुक्तिमुक्तिप्रदायकम् ॥ अवश्यमेवकर्तव्यंरामोपासकमानवैः ८७ एवंशिष्यमयाप्रोक्तंव्रता
नामुत्तमंव्रतम् ॥ सविस्तारंतवाग्रेहिराघवस्यातितोषदम् ८८ विष्णुदासउवाच ॥ श्रीरामनवमीमासव्रतस्योद्यापनंवद ॥ कदाकार्यंकथंकार्यंगुरोकृत्वाकृपांमयि ८९
श्रीरामदासउवाच ॥ सम्यक्पृष्टंत्वयावत्ससावधानमनाःशृणु ॥ नवसंवत्सरंमासनवमीव्रतमुत्तमम् ९० कृत्वाचोत्थापनंकार्यंचैत्रेश्रीरामजन्मनि ॥ नवम्यांसमुपोष्याथ
कर्तव्यमधिवासनम् ९१ गृहेवृंदावनेवाथगोष्ठेदेवगृहादिषु ॥ संमार्जनंगोमयेनकार्यंवाचंदनादिभिः ९२ ततःपाषाणचूर्णैश्चनानापद्मादिकानिहि ॥ भुविसंलेखनीया
निनीलपीतादिवर्णकैः ९३ रंजनीयानिरम्याणिततःपत्रादिसंस्थले ॥ पूर्वोक्तरामभद्राणांमध्येत्वेकंवरासनम् ९४ लिखित्वाचित्रवर्णश्चप्रोक्तैरेवंसुरंजयेत् ॥ तस्योपरि
महान्रम्यश्चित्रवर्णश्चमंडपः ९५ देयोद्वाराणिचत्वारिकार्याणितोरणानिच ॥ कदलीस्तंभयुक्तानिचेक्षुदंडयुतानिच ९६ नानाघंटाकिंकिणीभिर्ध्वनितान्युज्ज्वलानि
च ॥ रम्यादर्शमंडितानिविचित्राणिशुभानिच ॥ ९७ चित्रध्वजैर्वितानैश्चमुक्ताहारैर्युतान्यपि ॥ अथतद्रामभद्रस्थेकलशेवारिपूरिते ९८ ताम्रपात्रेरामचंद्रंनवायतन
चिन्हितम् ॥ सीतयापूजयेद्रात्रौमहोत्साहपुरःसरम् ९९ नवपलमितांमूर्तिंहैमींकृत्वाप्रपूजयेत् ॥ सीताहैमीप्रकर्तव्याशुभाष्टपलसंमिता १०० राजतास्तेलक्ष्मणा
द्याःपृथक्पंचपलैःस्मृताः ॥ अशक्तौचतदर्धेनतदर्धार्धेनवापुनः १ तस्याप्यर्धंतदर्धार्धंवित्तशाठ्यंनकारयेत् ॥ षोडशैरुपचारैश्चपूजोक्तानिशिजागरः २ दशम्यांप्रा
तरुत्थायस्नात्वासंपूज्यराघवम् ॥ राममंत्रेणहवनंकार्यंनवसहस्रकम् ३ तिलाद्यैःपायसाद्यैश्चनवान्नेनाथतत्स्मृतम् ॥ तद्दशांशेनक्षीरेणतर्पणंहिप्रकारयेत् ४ तस्यापिच
दशांशेनमार्जनंद्विजभोजनम् ॥ कर्ममुद्रांहस्तमुद्रांवसनेब्रह्मसूत्रकम् ५ चित्रासनमुत्तरीयंमुकुटंझर्झरींतथा ॥ कांस्यपात्रंभोजनस्यनवान्नेनप्रपूरितम् ६ घृतपात्रंका
स्यमयंनवान्नोपरिसंस्थितम् ॥ पादुकेपुस्तकंदिव्यंयत्किंचिद्राघवस्यच ७ तांबूलंदक्षिणांचापिप्रत्येकंभूसुरायहि ॥ अर्पयेत्सकलंचेत्थमेवंसर्वान्समर्पयेत् ८ ततोगुरुंस
मभ्यर्च्यतस्मैधेनुंसमर्पयेत् ॥ तामर्चामर्पयेत्सर्वांगुरवेदक्षिणान्विताम् ९ ततोगुरुंप्रार्थयेत्तंप्रणम्यचपुनःपुनः ॥ मासेमासेनवम्यांतुसोद्यापनव्रतंमया १० यत्कृतंनवव

१ रंगवल्यादिभिरित्यर्थः ।

र्षाणितेनतुष्यतुराघवः ॥ अग्रेऽपियावज्जीवामितावत्कालंकरोम्यहम् ११ मतानामुत्तमंचेदंतुष्टयर्थंराघवस्यच ॥ गुरोत्वत्कृपयारामोमांप्रसीदतुशीतया १२ एवंसंप्रार्थ्यस्वी
यंतंगुरुंनत्वाविसर्जयेत् ॥ ततःस्वयंहिभुंजीतसुहृन्मित्रसुतादिभिः १३ एवमुद्यापनंकृत्वाकार्यमग्रेव्रतंपुनः ॥ मासेमासेराघवस्यनत्याज्यंसर्वथानरैः १४ एकादशीव्रतं
नित्यंयथातत्क्रियतेनरैः ॥ तथामासव्रतंचेदंनित्यमेवस्मृतंबुधैः १५ अशक्तेनयथाशक्त्याकार्यमुद्यापनंव्रतम् ॥ उपोष्यानवमीशुक्लासर्वदैवनरैर्भुवि १६ नवम्यांशुक्लप
क्षेयोभुंक्तेऽन्नंमूढधीर्नरः ॥ रौरवेकल्पपर्यंतंतस्यवासःस्मृतोबुधैः १७ एवंशिष्यत्वयायच्चपृष्टंतत्तेनिवेदितम् ॥ कातेऽन्याश्रोतुमिच्छास्तितांवदस्ववदामिते १८
विष्णुदासउवाच ॥ ॥ गुरोत्वयाराघवस्यश्रीरामनवमीव्रतम् ॥ मासेमासेप्रकर्तव्यमितिप्रोक्तंममाग्रतः १९ तत्केनाचरितंपूर्वंसिद्धिर्लब्धात्रकेनाहि ॥ तत्सर्वंविस्तरे
णैववदकृत्वाकृपांमयि २० अन्यत्तेप्रष्टुमिच्छामितत्त्वंमांवक्तुमर्हसि ॥ अशक्तेननरेणेदंव्रतंकार्यंकथंमहत् २१ ॥ श्रीरामदासउवाच ॥ सम्यक्पृष्टंत्वयाशिष्यसावधानमनाः
शृणु ॥ आसीत्पुराद्विजःकश्चित्केरलेरामतत्परः २२ नाभूत्तस्यविवाहोऽत्रनिर्धनस्यजनस्यच ॥ नासीत्तस्मैगेहमपिनमातानपिचापिच २३ तस्यैकोनियमश्चासीद्धरि
द्रस्यचतंशृणु ॥ नित्यंप्रातःसमुत्थायकृतमालानदीजले २४ स्नात्वानदीसिकतायांसिकतावेदिकानव ॥ कृत्वातत्रजनकजासहितंरघुनन्दनम् २५ पत्रनिर्मितश्रीराम
लिंगात्मकवरासने ॥ मध्यमायांवेदिकायांसंस्थाप्यधातुनिर्मितम् २६ अष्टदिक्षुवेदिकासुतरुपत्रासनेपृथक् ॥ समंततोराघवस्यलक्ष्मणादीन्न्यवेशयत् २७ ततःसराघवं
127 प्राहरामंराजीवलोचनम् ॥ कर्तुमावश्यकंकर्मगन्तुमर्हसिसत्वरम् २८ इत्युक्त्वातंस्वयंपृष्ठेनिवेश्यरघुनन्दनम् ॥ कियद्दूरंरहोवृक्षखंडेगत्वाद्विजोत्तमः २९ रामंतृणभु
विस्थाप्यतदग्रेपात्रमुत्तमम् ॥ सजलंमृत्तिकांचापिसंस्थाप्यचजवेनहि ३० किंचिद्दूरंस्वयंगत्वास्थितवान्सक्रियत्क्षणम् ॥ रामांतिकंपुनर्गत्वापादप्रक्षालनादिकम् ३१
अकरोन्मृत्तिकाशौचंसतस्यस्वकरेणाहि ॥ दत्त्वान्यपात्रतोयेनरामायाचमनंततः ३२ दंतकाष्ठेनतद्दंतान्संशोध्यभक्तिपूर्वकम् ॥ गंडूषार्थंजलंदत्त्वाकवोष्णंशीतलंपुनः
३३ समर्प्याचमनार्थंसवस्त्रेणास्यंप्रमार्जयत् ॥ संमार्ज्यहस्तौपादौचरामस्यवाससाद्विजः ३४ तंविगृह्यपुनःपृष्ठेनम्रीभूतःशनैःशनैः ॥ सिकतावेदिकायांचपूर्वस्थानेन्य
वेशयत् ३५ एवंसीतांलक्ष्मणंचभरतंलवणांतकम् ॥ सुग्रीवादीन्पृथङ्नीत्वाऽऽवश्यकादीन्यकारयत् ३६ ततःपृथक्कवोष्णेनतैलाभ्यंगान्विधायसः ॥ नीरेणस्नापयत्स
र्वान्कृत्वाचोद्वर्तनान्यपि ३७ ततोभूर्जादिपत्राणिवस्त्रार्थंसपृथक्ददौ ॥ ततःपत्रैःफलैःपुष्पैर्लब्धैस्तानर्चयत्क्रमात् ३८ ततःसस्थूलव्रीहीणांकृत्वौदनमनुत्तमम् ॥ स्ना
त्वामाध्यान्हिकंकृत्वापुनःसंपूज्यराघवम् ३९ दत्त्वौदनस्यनैवेद्यंवैश्वदेवंविधायच ॥ किंचिद्भिक्षामतिथयेमत्स्यान्गामण्डजादिकान् ४० दत्वापृथक्पृथग्विप्रश्चक्रेरामा
९३ ज्ञयाऽशनम् ॥ ततोरामंपुनःपृष्ठेसमारोहयदादरात् ४१ ततःसीतांततःसर्वांन्लक्ष्मणादीन्क्रमेणाहि ॥ पूजोपकरणंसर्वंपेटिकायांनिधायसः ४२ कृत्वातांपेटिकांकक्षेज
गामाथशनैर्द्विजः ॥ सवनारामोपवनंगत्वाराममवोचोऽब्रवीत् ४३ रामराजीवपत्राक्षवनारामादिकौतुकम् ॥ जानकीसहितःपश्यनानांडजमृगादिकान् ४४ ततोययौग्रा
महद्दंदर्शयत्कौतुकंविभुम् ॥ संमर्देताडयामासमार्गार्थंयान्सयष्टिना ४५ तेऽपितत्कौतुकाविष्टाजनाःकोपंनमेनिरे ॥ एवंनानाकौतुकानिदर्शयामासराघवम् ४६

ततःशून्येतृणगृहेरामंतानवरुह्यच ॥ काष्ठनिर्मितपर्यंकेकारयामासनिद्रितान् ४७ ततोवेगाद्धट्टमध्येगत्वासब्राह्मणोत्तमः ॥ याञ्चयातंडुलान्तैलंघृतंशाकंफलानिच ॥
४८ नागवल्लीदलादीनिक्रमुकंकुंकुमादिकम् ॥ लब्ध्वाताम्रमयंकिंचिद्द्रव्यंरामार्तिकंययौ ४९ तद्ग्रामवासिनःसर्वेयेयेहट्टेस्थिताजनाः ॥ स्वस्वनानाव्यवसायतत्परास्ते
द्विजोत्तमम् ५० श्रीरामनिष्ठंतंदृष्ट्वाददुस्तद्याचितंमुदा ॥ विप्रःशून्यगृहेरामंरामाग्रेदीपमुत्तमम् ५१ प्रज्वाल्यारार्त्तिकंकृत्वागंधाद्यैःपरिपूज्यच ॥ वीजयामासरामादी
न्पल्लवेनमुदान्वितः ५२ ततःस्तुत्वामुहुर्जप्त्वाकृत्वाचापिप्रदक्षिणाः ॥ चकारकीर्तनंवक्ष्यमाणैःसन्मनुभिर्द्विजः ५३ ततस्तान्याचितान्येववस्तूनिमिश्रितानिहि ॥
पृथक्कृत्वातुसर्वेषांत्रीन्भागांश्चचकारसः ५४ द्वौभागौसस्वनिकटेस्थाप्यैकंभागमुत्तमम् ॥ मित्रगेहेन्यासभूतंनवम्यर्थंचकारसः ५५ ततःस्वयंद्वारमध्येचकारशयनंद्वि
जः ॥ पुनःप्रभातेचोत्थायाचम्यगीतादिभिःप्रभुम् ५६ ताल्वाद्यैःप्रबोध्याथतान्पृष्ठेस्थाप्यपूर्ववत् ॥ नदीतीरंययौविप्रःपूजयामासपूर्ववत् ५७ एवंनित्यपूजनंचचका
राहतमानसः ॥ नवम्यांचविशेषेणपूजयित्वाऽथराघवम् ५८ स्वयमुपोषणंकृत्वास्वयंचक्रेसुकीर्तनम् ॥ रात्रौजागरणंचापिराघवंपूज्यवैपुनः ५९ चकारकीर्तनैश्चाथनर्त
नाद्यैःस्वयंकृतैः ॥ ततःप्रभातेश्रीरामंदशम्यांपरिपूज्यच ६० प्रतिपद्दिनमारभ्यनवरात्रेऽथयत्कृतम् ॥ आनंदरामचरितपारायणमनुत्तमम् ६१ तत्समाप्यपूजयित्वा
पुस्तकंब्राह्मणान्नव ॥ निमंत्रितान्समाहूयतेष्वेवैकंसपत्निकम् ६२ द्विजमाकारयामासततःसंचिततंडुलाः ॥ मित्रगेहेन्यासभूतास्तेषांकृत्वौदनंशुभम् ६३ तथासंचि
तशाकादितथालब्धानियानिसः ॥ तानिसर्वाणिसंस्कृत्यवरान्नादीनिचाकरोत् ६४ वालुकावेदिकायांवैमध्येपत्नीयुतंद्विजम् ॥ अष्टकोणेषुविप्रांस्तानष्टसंवेश्यवैक्रमात्
६५ षोडशैरुपचारैस्तान्पूजयामासभक्तितः ॥ रंभादलेषुचततोविस्तीर्णेषुद्विजोत्तमः ६६ चकारतैःकृतैरन्नैःसमुदापरिवेषणम् ॥ ततस्तेभोजनंचक्रुस्तद्भक्त्याऽतिमु
दान्विताः ६७ ततोदत्वासुतांबूलंदक्षिणांतान्प्रणम्यच ॥ विसर्जयामासविप्रांस्ततश्चक्रेऽशनंद्विजः ६८ एवंविप्रोमासिमासिनवायतनपूजनम् ॥ नवम्याःपारणायाश्च
दिवसेदशमीदिने ६९ चकारनवविप्रेषुयांच्वांकृत्वाऽपिभक्तितः ॥ एवंगतानिवर्षाणिनवतस्यद्विजन्मनः ७० एकदाश्रावणेमासितद्ग्रामेसेनयान्नृपः ॥ कश्चिद्ययौतदावि
प्रःस्वस्थलेनिशिनिद्रितः ७१ एतस्मिन्नन्तरेवृष्टिपीडितान्नृपसेवकाः ॥ ग्रामेगेहानिविविशुःशून्यगेहंययुर्दश ७२ अश्वारूढाःसशस्त्रास्तेद्वारमध्येद्विजोत्तमम् ॥ दृष्ट्वावि
निद्रितंप्रोचुर्द्विजोत्तिष्ठजवेनहि ७३ मार्गंदेहिवयंवृष्ट्याचापीडिताःस्मश्चिरंबहिः ॥ शून्यगेहेऽत्रस्थास्यामःसुखंसाश्वाःससेवकाः ७४ ततेषांवचनंश्रुत्वासंभ्रमेणद्विजोऽब्रवी
त् ॥ रामचन्द्रःसीतयात्रनिद्रितोऽस्तिसबंधुभिः ७५ नवर्ततेऽत्रयुष्माकंस्थलंसत्यंवचोमम ॥ गच्छध्वंनगरेनानास्थलान्यन्यानिसंतिहि ७६ ततस्यवचनंश्रुत्वाराजदू
ताःपुनर्द्विजम् ॥ प्रोचुस्तेह्यस्तिश्रीरामःसोऽपिनिर्यातुवैबहिः ७७ सीतयाबंधुभिर्युक्तःस्थलंनोदेहिभोद्विज ॥ पुनराहद्विजस्तान्सकथंरामंविनिद्रितम् ७८ प्रबुद्धंवैकरोम्य
द्यनिशायांराजसेवकाः ॥ युष्माकंप्रार्थनात्वद्यक्रियतेवैभयामुहुः ७९ प्रणम्यविविवधूयंगच्छध्वंवैस्थलांतरम् ॥ ततस्तन्निग्रहंदृष्ट्वातेऽतिवृष्ट्याप्रपीडिताः ८० तंविप्रंताडयां
चक्रुस्तदाप्राहद्विजोत्तमः ॥ रामंबहिःकरोम्यद्यतिष्ठध्वंराजसेवकाः ८१ इत्युक्त्वाऽऽचम्यश्रीरामंप्रभुरोवाक्यमब्रवीत् ॥ रामोत्तिष्ठबहिर्दुष्टाःस्थिताःसंत्यश्वसंस्थिताः ८२

वेषांवस्तुंस्थलंदेहिवयंयामोवहिर्निशि ॥ इत्युक्तानिजपृष्ठेतानारोहयत्सपूर्ववत् ८३ ततःकृत्वामहाकोशंवस्त्रादीनांद्विजोत्तमः ॥ धृत्वाकक्षेतोयकुंभंधृत्वावामकरेणसः ८४
यष्टिंधृत्वासव्यहस्तेशनैर्द्वाराद्बहिर्ययौ ॥ तेद्विजंताद्दृशंदृष्ट्वाभ्रांतंतंमेनिरेखलाः ८५ ततोदृष्ट्वाऽतिवृष्टिंसगेहाग्राशोवहिर्द्विजः ॥ नम्रीभूतस्तदातस्थौगेहेसंविविशुःखलाः
८६ ततोऽतिश्रमितोविप्रश्चिंतयामासचेतसि ॥ पुराणेवायुपुत्रस्यमयासारंश्रुतंबहु ८७ तत्सर्वंपुष्टपात्वद्यकिमस्त्यत्रप्रयोजनम् ॥ इतिनिश्चित्यविप्रःसक्रोधेनमहता
वृतः ८८ शीघ्रंघटंभुविस्थाप्यवामहस्तेनमारुतेः ॥ पुच्छंधृत्वाप्राक्षिपत्तमाकाशेवेगवत्तरः ८९ तदासामारुतेर्धातुमयीमूर्तिःशुभावहा ॥ गत्वाऽऽकाशेगर्जनां वैचका
रातिभयंकराम् ९० तांगर्जनांमहावीराग्रामस्थाश्चवहिःस्थिताः ॥ श्रुत्वाऽतिभयसंत्रस्तामृताःसर्वेक्षणेनहि ९१ अश्वानागावृषाद्याश्चमृताःसर्वेतदाक्षणात् ॥ यद्यद्ग्रा
मेवहिर्वाऽपिचरंपुरुषसंज्ञितम् ९२ पुत्रगर्भाश्चनारीणांसर्वेप्रापुःक्षयंतदा ॥ तदासपुरुषस्त्वेकोनमृतोब्राह्मणोत्तमः ९३ कृपयारामचंद्रस्यमारुतेःकृपयाऽपिच ॥ ततः
प्रभातेतानार्यःसर्वान्स्वपुरुषान्मृतान् ९४ दृष्ट्वातिविस्मयंप्रापुस्ताभिर्नैवश्रुतोध्वनिः ॥ तदाविप्रंजीवितंतंदृष्ट्वापंकेऽपिमारुतिम् ९५ पतितंविस्मयाविष्टाःपप्रच्छु
स्तंद्विजोत्तमम् ॥ ततःससकलंवृत्तंनारीःसंश्रावयत्तदा ९६ ततस्ताःप्रार्थयित्वातंचक्रुःस्वीयपुराधिपम् ॥ सोऽपिरामाज्ञयाराज्यंचकारतत्पुरस्यच ९७ पुरस्थिता
नांनारीणांसएवासीत्पतिस्तदा ॥ तन्मारुतेर्गर्जितंहिकालेकालेतुपूर्ववत् ९८ अद्यापिश्रूयतेतस्मिन्नगरेघनशब्दवत् ॥ तच्छ्रुत्वापुत्रगर्भाश्चप्रस्खलंतिहियोषिताम् ९९
स्त्रियःसहस्रशश्चासन्पुरुषस्त्वेकएवसः ॥ तदारभ्यतत्स्त्रीराज्यंकथ्यतेमानवोत्तमैः १०० ततःकालांतरेणैवसविप्रश्चमृतोयदा ॥ तदास्वपूर्वपुण्येनविष्णुसायुज्यमाप
सः १०१ ततस्ताभिस्तुनारीभिःकश्चित्पार्थःसमागतः ॥ सएवक्रियतेभर्तानतंतामोचयंतिहि २ ज्ञात्वातंगर्जनाकालंपुरुषान्विवरेषुहि ॥ गोपयित्वादुंदुभीनांशंखा
नांनिःस्वनादिभिः ३ नश्रावयंतितेषांतंध्वनिंमारुतिसंभवम् ॥ अतिक्रांतेऽथतत्कालेतान्पुनर्जीवितानिति ४ मत्वानानोत्सवैःपूज्यतेभोगंताभजंतिहि ॥ नार्यातच्छा
स्यतेराज्यंसदैवद्विजसत्तम ५ स्त्रीणामेवसदोत्पत्तिर्जायतेपुरुषस्यच ॥ तद्राज्यनिकटस्थायेदेशास्तेष्वपिभोद्विज ६ मारुतेःशब्दसंस्पृष्टवायुनास्पर्शितानराः ॥ अश
क्ताएवजायंतेनतेष्वासीत्सुपौरुषम् ७ अतस्तेषामशक्तानांवीर्यक्षीणतयाद्विज ॥ भवंतिदुहिताएवकचित्पुत्रःप्रजायते ८ आधिक्येरजसःकन्याशुक्राधिक्येसुतोभवेत् ॥
नपुंसकःसमत्वेनयथेच्छापारमेश्वरी ९ अन्यत्तेकारणंवच्मिनभवंतिसुतायतः ॥ कारणंशृणुतस्येदंविष्णुदासद्विजोत्तम १० तेषुदेशेषुनार्यश्चनिजराज्यमदेनहि ॥ रति
कालेऽधःपुरुषंकृत्वाक्रीडांभजंतिताः ११ नस्वीयांरतिकालेताःपृष्ठिंभूमिंस्पृशंतिहि ॥ अतएवरतिकालेशुक्रंतुस्रवतेबहिः १२ सूक्ष्मछिद्रेयथागर्भस्थानेतन्नैवगच्छ
ति ॥ नासानयनकर्णानांद्विद्वेरंध्रेप्रकीर्तिते १३ मेहनापानवक्राणामेकैकंरंध्रमुच्यते ॥ दशमंमस्तकेप्रोक्तंरंध्राणीतिनृणांविदुः १४ स्त्रीणांत्रीण्यधिकानिस्युःस्तनयोर्गर्भ
वर्त्मनः ॥ सूचिकाग्रसमान्येवतानिछिद्राणिसंतिहि १५ गर्भछिद्रंरतिकालेकिंचिद्विकसितंद्विज ॥ भूत्वामार्गंतुवीर्याययददातिपुरुषस्यच १६ तन्मार्गेणगतंवीर्यंचे
तसम्यक्पुरुषस्यच ॥ गर्भस्थानेतदापुत्रोजायतेनात्रसंशयः १७ स्वल्पंप्रविष्टंवीर्यंचतदाकन्याप्रजायते ॥ रजसश्चाधिकत्वेनजानीह्येवंविनिश्चयम् १८ तस्माद्यदा

ऽधःशेते वैतद्देशेपुनरोत्तमः ॥ रतिकालेतस्यवीर्यमूर्ध्वंगच्छतिनैवतत् १९ यदिदैववशात्किंचिद्गतंस्त्रीरंध्रमार्गतः ॥ तदादैववशात्पुत्रोजायतेसोऽपिषंढवत् २० अतए
वहितद्देशेबहुकन्याभवंतिहि ॥ एवंतेकारणंप्रोक्तंकन्योत्पत्तेर्द्विजोत्तम २१ एवंसर्वेषुदेशेषुचेन्नार्याअधिकंबलम् ॥ अस्तितर्हिभवेत्कन्यापुत्रःपुरुषसारतः २२ तस्मा
त्पुत्रार्थिनानारीपोषणीयाकदापिन ॥ पोषयेच्चसदात्मानंनानाखाद्यरसायनैः २३ अतएवहिवैद्याश्चपालनीयाःसदानरैः ॥ बलाबलप्रवेत्तारस्तैर्ज्ञेयंस्वबलाबलम् २४
पुष्टदेहंनिरीक्ष्याथनज्ञेयंत्वधिकंबलम् ॥ वातेनापिपुमान्पुष्टोजायतेऽत्रसदैवहि २५ अतो वैद्यंविनातत्रनज्ञास्यातिबलाबलम् ॥ अतोवैद्यास्तेप्रष्टव्याःसदाभक्तिपुरः
सराः २६ मंत्रेतीर्थेद्विजेदेवे वैद्येऽथगणकेगुरौ ॥ यादृशीभावनास्वीयासिद्धिर्भवतितादृशी २७ अतोवैद्योक्तमार्गेणसदागच्छेन्नरोत्तमः ॥ बलाबलविचारेणपुत्राएव
भवंतिहि २८ एकएववरःपुत्रःकिंजातादशकन्यकाः॥ पुन्नाम्नोनरकात्पुत्रस्तारयेत्स्वकुलंक्षणात् २९ कन्यास्वीयदुराचारात्क्षणान्निजपितुःकुलम् ॥ तथाभर्तुःकुलंचापि
नरकेपातयेच्चसा ३० तस्मान्नरैश्चपुत्रार्थंयत्नःकार्यस्त्वहर्निशम् ॥ एष्टव्याबहवःपुत्रायद्येकोऽपिगयांव्रजेत् ॥ यजेतवाऽश्वमेधेननीलंवावृषमुत्सृजेत् ३१ जीवतोवाक्य
करणात्प्रत्यब्दंभूरिभोजनात् ॥ गयायांपिंडदानेनत्रिभिःपुत्रस्यपुत्रता ३२ एवंशिष्यत्वयापृष्टमशक्तेनकथंव्रतम् ॥ कार्यंतच्चमयासर्वंभूसुरस्यकथानकम् ३३ तवाग्रे
कथितंरम्यंत्वत्तोषार्थमनुत्तमम् ॥ तस्यव्रतस्यसामर्थ्यात्सदरिद्रीद्विजोत्तमः ३४ लब्ध्वातद्विपुलंराज्यंभुक्त्वाभोगान्मनोरमान् ॥ सायुज्यंप्रापविष्णोश्चस्वायुषःक्ष
येद्विजः ३५ एवंतद्रामचंद्रस्यव्रतंकोऽत्रनुनाचरेत् ॥ सुखेनभुक्तिदंचाऽत्रपरलोकेविमुक्तिदम् ३६ मुनिभिश्चसुरैर्नागैर्गंधर्वैःकिन्नरैर्नृपैः ॥ सदाऽनुभवितंचेदंव्रतानामुत्त
मंव्रतम् ३७ स्त्रीपुत्रधनदंचैतत्सर्वसौख्यप्रदंनृणाम् ॥ इहलोकेपरेचापिविष्णोःसायुज्यदायकम् ३८ संतिव्रतान्यनेकानिस्वर्गेमर्त्येरसातले ॥ तथाऽपिमासनवमी
समानंव्रतमुत्तमम् ३९ विष्णुदासद्विजश्रेष्ठनभूतंनभविष्यति ॥ तस्मात्सदानरैःकार्यंव्रतंचेदंमहत्तरम् ४० एवंत्वयायथापृष्टंतथातेविनिवेदितम् ॥ किमन्यच्छ्रोतुमि
च्छास्तितद्वदस्ववदामिते २४१ ॥ इति श्रीशतकोटिरामचरितांतर्गत श्रीमदानंदरामायणेवाल्मीकीयेमनोहरकांडेआदिकाव्ये नवमीकथावर्णनंनाम षष्ठःसर्गः॥ ६ ॥
॥ श्रीविष्णुदासउवाच ॥ अन्यद्गुरोराघवस्यतुष्टिदंकिंवदस्वतत् ॥ श्रीरामदासउवाच ॥ शृणुष्वविष्णुदासत्वंयत्तेऽहंप्रवदामिच ॥ तुष्ट्यर्थंरामचंद्रस्यनित्यंपत्रेतुमानवैः
१ लेखनीयंरामनामशतानिनवप्रत्यहम् ॥ अथवाऽष्टोत्तरशतंपूजनीयंसविस्तरम् २ एवंकोटिमितंलेख्यंलक्षंवानुततःपरम् ॥ हवनंहिदशांशेनकर्तव्यंविधिपूर्वकम् ३
इदंविष्णुरितिऋचातिलाज्यैःपायसेनवा ॥ नवान्नेनाऽथवाकार्यंराघवंपरिपूज्यच ४ हवनांगेराघवादिदेवानांपूजनेनरैः ॥ आसनार्थंतुभद्रंचस्थापनीयंप्रयत्नतः ५ अ
ष्टोत्तरसहस्रंचरामलिंगात्मकंशुभम् ॥ अथवाऽष्टोत्तरशतंरामलिंगात्मकंशुभम् ६ अष्टोत्तरसहस्रंवारामतोभद्रमुत्तमम् ॥ अथवाष्टोत्तरशतंरामतोभद्रमुत्तमम् ७ एवंहोमं
लेखनंचपूजनादिचयत्कृतम् ॥ अर्पयेद्रघुनाथायतत्सर्वंत्वतिभक्तितः ८ ॥ विष्णुदासउवाच ॥ त्वयागुरोशुभंप्रोक्तंरामनामप्रलेखनम् ॥ नतस्योद्यापनंप्रोक्तंतद्वदस्व
ममाऽधुना ९ ॥ श्रीरामदासउवाच ॥ शृणुशिष्यभविष्यांतिकथांवक्ष्यामिभूतवत् ॥ रामनामोद्यापनस्यविस्तरेणमनोरमाम् १० पंडुपुत्रोमहावीरोबंधुभिश्चयुधिष्ठिरः ॥

स्त्रियामात्राभ्रष्टराज्योवनेवासंकरिष्यति ११ तंद्रष्टुंद्वापरेकृष्णंकदागच्छतिवैवनें ॥ तंकृष्णंपूजयित्वासतस्मैप्रश्नंकरिष्यति १२ ॥ युधिष्ठिरउवाच ॥ देवदेवजगन्नाथ
भक्तानांवरदायक ॥ किंचित्त्वांप्रष्टुमिच्छामिमयितुष्टोसिचेत्प्रभो १३ लक्ष्मीप्राप्तिकरंपुण्यंपुत्रपौत्रप्रवर्धनम् ॥ व्रतमाख्याहिदेवेशराज्यभ्रष्टस्यमेऽधुना १४ ॥ श्रीकृष्ण
उवाच ॥ गुह्याद्गुह्यतमंश्रोतुंयदिवांछसिभूपते ॥ तदानिगदतोमत्तःसकाशाच्छृणुसादरम् १५ रामनाम्नःपरंनास्तिमोक्षलक्ष्मीप्रदायकम् ॥ तेजोरूपंयदव्यक्तंरामनामा
भिधीयते १६ तस्मात्तन्नामजस्त्वंवैरामरूपोभवेन्नरः ॥ एतदेवहिरामेणमारुतिंप्रतिभाषितम् १७ ॥ युधिष्ठिरउवाच ॥ कस्मिन्कालेहनुमतेरामेणैवोपदेशितम् ॥ एत
द्विस्तरतोब्रूहिसुमतेरुक्मिणीपते १८ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ पुरारामावतारेचसीतानीताऽसुरारिणा ॥ हनूमंतंसमाहूयरामचंद्रोऽब्रवीद्वचः १९ ॥ श्रीरामचंद्र
उवाच ॥ वायुसूनोमहावीरसीतान्वेषणहेतवे ॥ समस्तांदक्षिणदिशंगत्वाशुद्धिंसमानय २० ॥ श्रीहनुमानुवाच ॥ रघुनाथजगन्नाथदक्षिणस्यांहिसागरः ॥ बहवोराक्षसाः
संतितत्रशक्तिःकथंमम २१ ॥ श्रीरामचंद्रउवाच ॥ मारुतेरावणादीनांराक्षसानांनिवारकम् ॥ मंत्रंददामिसुगमंयेनसर्वजयोभवेत् २२ ॥ हनुमानुवाच ॥ महाराजकृपा
सिंधोदीनानांत्वंसुतारकः ॥ उपदेशोऽधुनाकार्यस्तस्यमंत्रस्यतत्वतः २३ ॥ श्रीरामदासउवाच ॥ इतिश्रुत्वाचतद्वाक्यंरहस्याहूयसत्वरम् ॥ मारुतेर्दक्षिणेकर्णेश्रीरामे
त्युपदेशितः २४ तस्यमंत्रस्यसकलंपुरश्चरणमुत्तमम् ॥ लक्षसंख्यंविधायाशुप्रतस्थेदक्षिणांदिशम् २५ तन्मंत्रस्यप्रभावेणनानाजलचराकुलम् ॥ दुर्गमंसागरंतीर्त्वालं
कामध्येसमाययौ २६ नसलेभेतत्रशुद्धिमशोकाख्यवनंगतः ॥ वृक्षमूलेस्थितांसीतांदूरतोग्रेददर्शसः २७ तांदृष्ट्वाशीघ्रमागत्यहर्षनिर्भरमानसः ॥ सीतायाश्चरणौनत्वादं
डवत्पतितोभुवि २८ अत्यंतंसूक्ष्मवपुषंबालकाकारसंयुतम् ॥ तंभूमौपतितंदृष्ट्वासीतावचनमब्रवीत् २९ आगतोसिकुतोबालकुत्रत्यःकस्यबालकः ॥ हनुमानुवाच ॥
सीतामातापितारामोरामचंद्रसमीपतः ३० समागतोस्मिहनुमान्ग्राह्येयंमुद्रिकात्वया ॥ रामनामांकितांमुद्रांशुद्धकांचननिर्मिताम् ३१ ज्ञात्वारामस्यसासीतापरमंतो
षमाययौ ॥ तांज्ञात्वातोषसहितामांजनेयोऽब्रवीद्वचः ३२ मातःक्षुधास्त्यतिममत्वद्यातिक्लेशकारिणी ॥ अस्मिन्वनेऽतिमधुरःफलसंघोऽतिदुर्लभः ३३ तवाज्ञयाऽहंसी
तेऽद्यकरिष्येभक्षणंध्रुवम् ॥ सीतोवाच ॥ भोबालकमहावीररावणोस्तिवनाधिपः ३४ नशक्तिर्नचशक्यंतेकथंत्वंभक्षयिष्यसि ॥ हनुमानुवाच ॥ श्रीरामेतिपरोमन्त्रः
शश्वन्मेहृदयांतरे ३५ तेनसर्वाणिरक्षांसितृणरूपाणिसांप्रतम् ॥ इत्युक्त्वाथतदीयाज्ञांगृहीत्वावनभूरुहान् ३६ उन्मूलनंचकाराथश्रुत्वारक्षांसिचाययुः ॥ युद्धंचतुमुलंजा
तंपश्चान्मन्त्रप्रभावतः ३७ दलितंराक्षसबलंदग्धालंकाहनूमता ॥ पुनर्गत्वाशोकवनंसीतांनत्वाचमारुतिः ३८ तदलंकारमादायरामचन्द्रंसमाययौ ॥ रामायालंकृतिंद
त्वातस्थौतत्पादसन्निधौ ३९ रामोऽलंकृतिमादायतच्छ्रुत्वामुदितोऽभवत् ॥ रामनामप्रभावोऽयंमहाराजयुधिष्ठिर ४० तस्मात्त्वमपिराजेंद्ररामनामजपंकुरु ॥ युधिष्ठिर
उवाच ॥ कथंजपोविधेयोऽस्यपुरश्चरणकंफलम् ४१ कथमुद्यापनंचैवसर्वमाख्याहियत्नतः ॥ श्रीकृष्णउवाच ॥ स्नात्वाशुचिस्थलेजाप्योतुलसीमालयेतिच ४२ अथ
वापुस्तकेलेख्यंस्मरणंहृदयेऽथवा ॥ कोटिसंख्यापरिमितमथवालक्षसंमितम् ४३ मन्त्रानानाविधाःसन्तिशतशोराघवस्यच ॥ तेभ्यस्त्वेकंवदाम्यद्यतवमन्त्रंयुधिष्ठिर ४४

श्रीशब्दपूर्वंजयशब्दमध्यंजयद्वयेनापिपुनःप्रयुक्तम् ॥ त्रिःसप्तकृत्वोरघुनाथनामजपोनिहन्याद्द्विजकोटिहत्याः ४५ अनेनैवचमन्त्रेणजपःकार्यःसुमेधसा ॥ लक्षसंख्येकृ
तेतस्मिन्नुद्यापनविधिंचरेत् ४६ जपाच्छतगुणंपुण्यंरामनामप्रलेखने ॥ लक्षेलक्षेपृथक्कार्यमुद्यापनमनुत्तमम् ४७ उद्यापनविधानंचसंक्षेपेणवदामिते ॥ पूर्वेद्युरुपवासीस्या
द्रात्रौमंडपिकांतरे ४८ रामलिंगात्मकेभद्रेरामतोभद्रकेथवा ॥ अष्टोत्तरसहस्राख्येह्यष्टोत्तरशतेऽथवा ४९ धान्यराशौमध्यदेशेकलशंस्थापयेत्ततः ॥ तन्मुखेस्वर्णपात्रेवै
वरवस्त्रोपशोभिते ५० सीतालक्ष्मणसंयुक्तांराघवंप्रतिमांशुभाम् ॥ आमाषात्पलपर्यंतांसौवर्णींप्रतिमांयजेत् ५१ राजतीवाताम्रमयीवित्तशाठ्यंनकारयेत् ॥ उपचारैःषो
डशभिःपूजयेत्सुसमाहितः ५२ रामनामांकितंहेमपत्रंतत्पुरतोऽर्चयेत् ॥ कथांश्रुत्वाचविधिवद्देवदेवंक्षमापयेत् ५३ सापराधंचशरणंत्वद्भक्तिनिरतंहिमाम् ॥ दीनानाथकृ
पासिंधोत्राहिसंसारसागरात् ५४ रात्रौजागरणंकृत्वागीतवाद्यैश्चमंगलैः ॥ ततःप्रभातसमयेस्नात्वाहोमंसमारभेत् ५५ दशांशेनैवहोमःस्यात्तद्दशांशेनतर्पणम् ॥ गव्येनपय
साकार्यंराममंत्रेणयत्नतः ५६ तस्यापिचदशांशेनकुर्याद्ब्राह्मणभोजनम् आचार्यायसवत्सांगांसालंकारांसवाससाम् ५७ भक्त्यार्पयेत्ससुवर्णांव्रतसंपूर्णहेतवे ॥ अन्यानपि
द्विजांस्तोष्यराज्यंलक्ष्मींसमाप्नुयात् ५८ पुत्रार्थीलभतेपुत्रंधनार्थीलभतेधनम् ॥ नानादानानितीर्थानिप्रदक्षिणतपांसिच ५९ तानिसर्वाणिलक्षांशसमान्यस्यभवंतिच ॥
निष्कामोवासकामोवायःकुर्याद्भक्तिसंयुतः ६० तस्यसर्वेऽपिकामाःस्युरिहलोकेपरत्रच ॥ लिखित्वापुस्तकंवापिवरंरामायणस्यच ६१ एवमुद्यापनंकार्यंश्लोकसंख्या
दशांशतः ॥ पूर्ववद्धवनंकार्यंतद्दशांशाच्चतर्पणम् ६२ तस्यापिचदशांशेनकुर्याद्ब्राह्मणभोजनम् ॥ पूर्वश्लोकेनवान्येनहवनादिप्रकीर्तितम् ६३ अथवाग्रंथश्लोकानांदशांशे
हवनंस्मृतम् ॥ अथवाग्रेवक्ष्यमाणरीत्याविंशकुनस्यच ६४ श्लोकंनिष्कास्यवैग्रंथादाचरेद्धवनादिकम् ॥ अथवारामगायत्र्याराममंत्रैस्तुवाचरेत् ६५ हेमपत्रेत्वेकएवलेख्यः
श्लोकःशुभावहः ॥ अर्चयित्वापूर्ववच्चहेमपत्रंसविस्तरम् ६६ राममूर्तेःपुरःस्थाप्यसर्वंतद्गुरवेऽर्पयेत् ॥ श्रीरामकवितांकृत्वात्वेवमुद्यापनंनरैः ६७ अवश्यमेवकर्तव्यंकवि
ताफलमीप्सुभिः ॥ देवालयगजाश्वानांवृक्षाणांवापिकूपयोः ६८ सर्वापणानांपण्यानांचिन्हार्थंयोषितांनृणाम् ॥ काव्यानांचकवीनांचपश्वादीनांचसर्वशः ६९ राजप्रासादवा
स्तूनांनामकर्मविशिष्यते ॥ विनाकर्णोपदेशेनस्थावराणांविधानकम् ७० कृत्वानामकर्मणश्चकार्यमुद्यापनंततः ॥ लक्षपुष्पैःपूजनादियद्यच्छ्रीराघवस्यच ७१ संतोषा
र्थंकृतंतस्यकार्यमुद्यापनंवरम् ॥ एवंराजन्मयासर्वंतवाग्रेविनिवेदितम् ७२ रामनामप्रभावेणस्वीयंराज्यंलभिष्यसि ॥ श्रीरामदासउवाच ॥ युधिष्ठिरस्तुतच्छ्रुत्वाकरि
ष्यतियथाविधि ७३ मासत्रयेणतस्यैवराज्यप्राप्तिर्भविष्यति ॥ अंतेचपरमंस्थानंगमिष्यतिमनोर्बलात् ७४ एवंकथाभविष्याचतवाग्रेविनिवेदिता ॥ रामनाममहिमान
मिमंनरःशृणोतियः ७५ परमभक्तिसमेतःपुत्रपौत्रजवत्सुखम् ॥ भुविभुक्त्वाप्राप्नुयात्परममोक्षपदंतुसः ७६ नित्यंव्याख्याश्रीरामाग्रेकर्तव्यात्वतिभक्तितः ॥ आनंद
रामचरितस्याथवान्यस्यविस्तरात् ७७ सर्गस्यवार्धसर्गस्यपादसर्गस्यवातथा ॥ नवश्लोकमितावापिश्लोकमात्रस्यवातथा ७८ श्लोकार्धश्लोकपादंवाऽऽनंदरामा

१ ताम्रपात्रेवेइतिपाठः । २ मंत्रबलादित्यर्थः ।

यणस्थितम् ॥ येपठंतिनरानित्यंतेनरामुक्तिभागिनः ७९ येऽश्वत्थमूलेमुनिवृक्षमूलेतथातुलस्याश्वसमीपदेशे ॥ पुण्यस्थलेभास्करभूसुराग्रेश्रीरामचंद्रस्यपुरःसदैव८०तथा
सभायांद्विजवृंदमध्येनद्यास्तटेवारघुनायकस्य ॥ आनंदरामायणमादरेणपठंतिधन्याभुविमानवास्ते ८१ रामायणंलिखित्वातुदातव्यंभूसुरायहि ॥ समग्रंवाकांडमेकं
सर्गोवातिसुपुण्यदः ८२ सर्गस्त्वेकःप्रत्यहंहिलिखित्वाभूसुरायहि ॥ संपूज्यदेयश्चानंदरामायणसमुद्भवः ८४ अशक्तेननवश्लोकाःसदादेयाविलेख्यच ॥ प्रीत्यर्थंरामचंद्रस्य
विप्रेभ्यःपरिपूज्यवै ८४ नित्यदानमेतदेवकर्त्तव्यंसर्वदानरैः ॥ नित्यंसुवर्णमुद्रायादानेनयत्फलंस्मृतम् ८५ तत्फलंप्रत्यहंसर्गदानेनलभ्यतेनरैः ॥ नानेनसदृशंदानंराघव
स्यातितोषदम् ८६ तस्मादवश्यमेवैतद्दानंकार्यंनिरंतरम् ॥ श्रीरामचंद्रतुष्ट्यर्थंनवपूगफलैस्तथा ८७ नागवल्लीनवदलैस्तांबूलःसोपचारकः ॥ पृथक्पृथग्भूसुरेभ्यो
देयोनित्यंसदक्षिणः ८८ अशक्तेनैकएवापिदेयस्तांबूलउत्तमः ॥ नतांबूलसमंदानंकिंचिदस्तिजगत्त्रये ८९ तांबूलःशुद्धिदःप्रोक्तस्तांबूलोमंगलप्रदः ॥ तांबूलःश्रीकरो
ज्ञेयस्तांबूलोराघवप्रियः ९० तस्मात्प्रयत्नतस्त्वत्रदेयस्तांबूलउत्तमः ॥ सदारामंपूजयेच्चसदारामंविचिंतयेत् ९१ श्रीरामस्मरणंनित्यंकार्यंभक्त्यामुहुर्मुहुः ॥ यस्य
वाण्यांरामनामहस्तौपूजनतत्परौ ९२ श्रीरामचरितान्येवश्रोतुकामाचयच्छ्रुतिः ॥ रामतीर्थानिरामेशान्रामक्षेत्राणियानिच ९३ यदंघ्रीगंतुकामौतुरामपूजोत्सवान्
वरान् ॥ संद्रष्टुकामौयन्नेत्रौसधन्यःपुरुषःस्मृतः ९४ रामरामेतिरामेतियेवदंतिजनाभुवि ॥ महापातकिनस्तेऽत्रमुक्तिंयांतिनसंशयः ९५ रामचंद्रेतिमंत्रोऽस्तिवागस्तिव
शवर्तिनी ॥ तथापिनिरयेघोरेपतंतीत्यद्भुतंमहत् ९६ श्रीरामनामामृतमंत्रबीजसंजीवनीचेन्मनसिप्रविष्टा ॥ हालाहलंवाप्रलयानलंवामृत्योर्मुखंवाविशतांकुतोभीः ९७
आसनेचतथानिद्राकालेभोजनकर्मणि ॥ क्रीडनेगमनेनित्यंराममेवविचिंतयेत् ९८ श्रवणीयःकीर्त्तनीयश्चिंतनीयःसदानरैः ॥ गेयश्चह्युपदेश्यश्चरामएवावनीतले ९९
172 स्वर्गेसुराणामसृतंयथास्तिपरमंशुभम् ॥ रामनामाऽमृतंभूम्यांक्षयंनाप्नोतिवैकदा १०० गोपीचंदनलिप्तांगोराममुद्रांकितोनरः ॥ रामनामोच्चारकश्चतुलसीकाष्ठमा
लिकः १ शंखचक्रगदापद्मधारकोराममानसः ॥ यस्त्वत्रसनरोधन्योनेतरश्चकदाचन २ सएवपुरुषाभ्योयोरामनामसदावदेत् ॥ सएवपुरुषोनिंद्यस्त्वत्ररामंस्मरेन्नयः ३
येनराःशिवसद्भक्तिंकृत्वानिंदन्तिराघवम् ॥ पूर्ववच्चखरास्तेऽपिनराज्ञेयावनीतले ४ रामएवहरोज्ञेयःशिवएवरघूत्तमः ॥ उभयोर्नांतरंज्ञेयंभेदकृद्द्वारकीनरः ५ रा
मशंकरयोरत्रभिन्नत्वंयेनमानितम् ॥ अजागलस्तनवच्चतस्यजन्मवृथागतम् ६ शंभोश्चहृदयंरामोरामस्यहृदयंशिवः ॥ नैवांतरंकल्पनीयंकुतर्कैर्विविधैर्नरैः ७ रा
मेतिद्व्यक्षरंनामयेवदन्तित्वहर्निशम् ॥ नकस्यापिभयंतेषांजीवन्मुक्ताश्चतेनराः ८ राममुद्रांकितंदृष्ट्वानरंतेयमकिंकराः ॥ पलायन्तेदशदिशःसिंहंदृष्ट्वागजायथा ९
ललाटेपृष्ठदेशेचकुक्ष्योर्द्वेजठरेतथा ॥ हृदयेभुजयोर्द्वेहिमस्तकेत्वितिवैनव १० राममुद्राधारणीयागोपीचंदनचिन्हिताः ॥ राममुद्रामहाश्रेष्ठासर्वदोषनिकृंतनी ११ सदादेहे
९४ नरैर्धार्यागोपीचंदनचिन्हिता ॥ राममुद्रास्तियद्देहेतंपापंस्पृशतेनहि १२ स्तुतिःसदैवरामस्यस्तोत्रैःकार्यात्वहर्निशम् ॥ प्राचीनैर्वानवीनैश्चस्वबुद्ध्याचरचितैरपि १३ सना
म्निसर्गोजनताघविप्लवोयस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनंतस्ययशोंकितानियच्छृण्वन्तिगायंतिगृणन्तिसाधवः १४ कवित्वमत्यद्भुतंचरामनामांकितंच

यत् ॥ तज्ज्ञेयमतिशुद्धंचश्रवणात्पातकापहम् १५ यस्मिन्नामस्यकृष्णस्यचरित्राणिमहांतिच ॥ कवित्वेतत्पुण्यतमंसदागेयंमहत्तमैः १६ शृणुशिष्यतवाग्रेऽन्यद्गुह्यं किंचिद्ब्रवीम्यहम् ॥ कविताविषयंयच्चसर्वसंदेहनाशकम् १७ अश्वत्थामाबलिर्व्यासोहनूमांश्चविभीषणः ॥ कृपःपरशुरामश्चसप्तैतेचिरजीविनः १८ एवंयद्वचनंशिष्य प्रोच्यतेसर्वदाबुधैः ॥ तदग्रेसर्वदासत्यंज्ञेयंकलियुगेऽपिच १९ येषुमंत्रबलंभूम्यांवर्ततेऽत्रनरेषुहि ॥ अश्वत्थामांशभूतास्तेज्ञेयाश्चपुरुषाबुधैः १२० न्यायार्जितेनद्रव्येणराज्यंकुर्वंतिधर्मतः ॥ बल्यंशभूतास्तेज्ञेयामानवाजगतीतले २१ रामस्तुतिंकवित्वेयेचरित्रंवर्णयंतिच ॥ व्यासांशभूतास्तेज्ञेयामानवाजगतीतले २२ येयेवीरास्त्वत्रभूम्यांवायुपुत्रांशरूपिणः ॥ तेतेज्ञेयानरास्तस्यचिरंजीवित्वसूचकाः २३ येयेशांतारामभक्ताःसंत्यत्रमानवाभुवि ॥ विभीषणांशभूतास्तेज्ञेयाश्चसकलैर्जनैः २४ येधैर्यवंतोयोद्धारःसंत्यत्रमानवाभुवि ॥ कृपाचार्यांशभूतास्तेज्ञेयाःसर्वैर्बुधैःसदा २५ येवीराःक्रोधसंयुक्तास्तेऽत्रसर्वेऽवनीतले ॥ जामदग्न्यंशभूताश्चसदाज्ञेयानरोत्तमैः २६ चिरंजीवीतिव्यासःकःकथंज्ञेयोजनैर्भुवि ॥ तस्यस्वरूपंवक्ष्यामिसावधानमनाःशृणु २७ येगीर्वाण्याकवित्वानिकरिष्यंत्यवनीतले ॥ व्यासांशभूतास्तेज्ञेयाः पंडितामानवास्त्विह २८ येरामचन्द्रंकृष्णंचशिवंस्तुत्यास्तुवंतिहि ॥ वर्णयंतिचरित्राणितेज्ञेयाव्यासमूर्तयः २९ येराजानंचगणिकांनारींराज्ञःशमांतथा ॥ नरास्तुवंतिस्तुत्यातेनज्ञेयाव्यासमूर्तयः ३० यावद्भूम्यांतुरामस्यचरित्राणिस्तुवंतिहि ॥ तावदत्रस्मृतोव्यासस्ततोमुक्तिंगमिष्यति ३१ किंफलंकस्यपाठाच्चतद्ब्रवीमि तवाधुना ॥ शृणुस्वस्थमनाःशिष्यविस्तरेणोच्यतेचयत् १३२ ॥ ॥ इति श्रीमदानंदरामायणे मनोहरकांडे रामनामलक्षोद्यापनादिवर्णनं नाम सप्तमः सर्गः ॥ ७ ॥

॥ श्रीरामदासउवाच ॥ ॥ शिरोव्याहृतिसंयुक्तागायत्रीपरिकीर्तिता ॥ वेदाक्षराणांतुल्यासाशतेनमुनिभिःस्मृता १ चतुःशतेन गायत्र्याःसंमितंपरिकीर्तितम् ॥ पावमानंमहासूक्तंषट्शतर्चंसुपुण्यदम् २ तथोपनिषदःपुण्यागायत्र्यक्षरसंख्यया ॥ प्रोच्यंतेपुण्यदालोकेपुण्यसूक्तानियान्यपि ३ संहितापाठतःप्रोक्तंद्विगुणंपदपाठतः ॥ त्रिगुणंक्रमपाठेस्याज्जटापाठेतुषड्गुणम् ४ महाभारतपाठस्तुवेदतुल्यःप्रकीर्तितः ॥ पुराणानांतदर्धेनस्मृतीनांचततोच्यते ५ भारतेभगवद्गीतातथानामसहस्रकम् ॥ गायत्र्याश्चसमंप्रोक्तंपुण्येपापक्षयेऽपिच ६ पाठेनयत्फलंप्रोक्तमर्थज्ञानाच्चतुर्गुणम् ॥ सद्वक्तेभ्यःश्रावणाच्चपुण्यंदशगुणंस्मृतम् ७ भूमिदानंयथालोकेमहादानमितीरितम् ॥ विद्यादानंदशगुणंततोऽपिस्यात्फलप्रदम् ८ ॥ विष्णुदासउवाच ॥ कस्मैदानंप्रकर्तव्यंसुवर्णस्येतरस्यवा ॥ कथंवापात्रतामेतिब्राह्मणश्चेतरोऽथवा ९ ॥ रामदासउवाच ॥ वसेद्गुरुकुलेयस्तुभिक्षान्नाशीश्रुतिंपठन् ॥ अधीत्यशाखांपूर्णांसयथोक्तंलभतेफलम् १० शिष्यस्याध्यापकस्यापिसंहितांपठतःफलम् ॥ प्रत्यक्षरंतुगायत्रीसकृत्पाठफलंलभेत् ११ पदपाठेतदर्धंस्यात्तदर्धंक्रमपाठतः ॥ संहितापाठतोद्विघ्नंगाथापाठफलंस्मृतम् १२ ततोऽप्युपनिषत्पाठेद्विगुणंफलमीरितम् ॥ पाठेचपाठनेतुल्यंफलंवैगुरुशिष्ययोः १३ अधीतान्त्रिगुणंतुस्यात्फलंवैकंठपाठतः ॥ तदर्धंलेख्यपाठात्तुफलमुक्तंमनीषिभिः १४ अधीत्यापिनयस्यस्यात्कंठपाठसमंस्वतः ॥ कृतेयत्नेऽपिदैवेनसलभेत्पाठमात्रजम् १५ प्रज्ञायामपिसत्यांतुविस्मरेत्तपठितांश्रुतिम् ॥ अनास्थयाप्रमादेनस्मृतोगर्दभतांव्रजेत् १६

यावद्वेदोत्थवर्णानांपठितानांचविस्मृतिः ॥ तावद्वर्षाणिभुक्त्वासखरयोनिंततःपरम् १७ पाठपुण्यार्जितंलोकंलभतेनात्रसंशयः ॥ स्वशाखांप्रथमंयस्तुपठित्वान्यांपठे
द्यदि १८ प्रत्यक्षरंतुलभतेगायत्र्याद्विगुणंफलम् ॥ पठित्वापिस्वकांशाखांरामोत्कर्षंनवेत्तियः १९ रामपूजायुतश्चापिसोर्द्धंफलमवाप्नुयात् ॥ वर्जितोरामभक्त्यायःकेवलं
पाठकोभवेत् २० लभेत्फलस्यतुर्यांशंतद्द्वेषान्निष्फलंभवेत् ॥ अंगानिवेदाश्चत्वारोमीमांसान्यायविस्तरः २१ पुराणंधर्मशास्त्रंचविद्याह्येताश्चतुर्दश ॥ अयुर्वेदोधनुर्वेदो
गांधर्वंचार्थशास्त्रकम् २२ उपविद्याश्चतस्रःस्युरेवमष्टादशस्मृताः ॥ शिक्षाकल्पोव्याकरणंनिरुक्तंछंदोज्योतिषम् २३ इत्यंगानितुवेदस्ययोऽधीतेतत्फलंशृणु ॥ संहि
तापाठतोप्यर्धंलभतेपाठतःफलम् २४ शिक्षाघ्राणंतुवेदस्यकल्पःपाणीप्रकीर्तितौ ॥ मुखंव्याकरणंप्रोक्तंनिरुक्तंश्रोत्रमुच्यते २५ ज्योतिषंनयनंप्राहुश्छंदःपादाविति
स्मृतौ ॥ शिक्षाकल्पनिरुक्तानांछंदसश्चार्थवित्तये २६ सम्यग्योगंप्रकुर्वीतिफलंतेषांचतुर्गुणम् ॥ भवेत्पाठात्ततोज्योतिःशास्त्रार्थज्ञानतःफलम् २७ संहितापाठजंपुण्यंग
णितज्ञोलभेत्फलम् ॥ ज्योतिषांसंहिताज्ञानादर्धंतुलभतेफलम् २८ जातकप्रश्नयोगेननकिंचित्पुण्यमीरितम् ॥ वेदाध्ययनहीनोयोजातकप्रश्नमात्रवित् २९ नवेत्तिग
णितंयस्तुज्ञेयोनक्षत्रसूचकः ॥ दानंनार्हतिविप्रस्तुसर्वकर्मसुगर्हितः ३० स्वल्पामपिचस्वांशाखांयोऽनधीत्यद्विजाधमः ॥ अंगादिष्वन्यशास्त्रेषुसक्तःसतुविगर्हितः ३१
किंचिच्छाखामधीत्यापियश्चोपनिषदःपठेत् ॥ ज्ञानाधिक्यायशास्त्राणिवेदज्ञानार्थमेववा ३२ अधीतेज्ञानपात्रंस्यात्पुण्याधिक्येनयुज्यते ॥ यतोविप्रेषुवृद्धत्वंपूज्यत्वंज्ञा
नतःस्मृतम् ३३ ज्ञानाधिक्येषुतेषुस्यात्पात्रापात्रविचारणा ॥ पुण्याधिक्येनवाज्ञेयापाठकानांचपात्रता ३४ ज्ञानिपाठकयोर्मध्येज्ञानीपुण्याधिकोयतः ॥ ततःपू
ज्यत्वमस्यस्याज्ज्ञानिनस्त्वितिमेमतम् ३५ नहिज्ञानेनसदृशंपवित्रमिहविद्यते ॥ प्रियोहिज्ञानिनोऽत्यर्थंरामःसोपिचतत्प्रियः ३६ परंवादिजयेशक्तिर्यस्यस्यात्तद्गति
पुनः ॥ सएवश्रेष्ठतांयातिपाठकानांशतादपि ३७ वेदादिसर्वविद्यानामर्थज्ञानाययःपठेत् ॥ शास्त्रंव्याकरणंनामलभेद्वेदसमंफलम् ३८ ज्ञानाधिक्येनलभतेवेदार्थज्ञान
जंफलम् ॥ मीमांसाद्विविधाप्रोक्ताकर्मणोब्रह्मणस्तथा ३९ वेदार्थज्ञानतुल्यायाद्वितीयायाःफलंशृणु ॥ प्रत्यक्षरंतुलभतेगायत्रीशतजंफलम् ४० येतूपयोगिनःसाक्षा
द्ग्रंथास्तेभ्योभवंतिहि ॥ तेऽप्यर्थंफलदाज्ञेयाव्यवधानानुपादशः ४१ वेदोपनिषदामर्थज्ञानाधिक्यायचेत्पठेत् ॥ प्रदीपंसर्वविद्यानांयोविद्वान्न्यायविस्तरान् ४२ वेदार्थ
ज्ञानतुल्यंतुफलंतस्यप्रकीर्तितम् ॥ केवलंजीविकार्थंतुयःपठेन्न्यायविस्तरम् ४३ हेतुवादरतोब्रह्मजिज्ञासांनैवयःपठेत् ॥ ससृगालोभवेद्देवपठिताक्षरसंख्यया ४४ वर्षा
णिनात्रसंदेहोवृथाभाषणतत्परः ॥ पुराणंवैष्णवंमात्स्यंकौर्मंभागवतंतथा ४५ आदित्यंगारुडंस्कांदंमार्कंडेयमथाष्टमम् ॥ ब्राह्मंब्रह्मांडलैंग्यानिब्रह्मवैवर्तमेवच ४६ भवि
ष्योत्तरमाग्नेयंपाद्मंवामनमेवच ॥ वाराहंचैववायव्यंह्यष्टादशानिवेत्त्विति ४७ महापुराणान्येतानिरामायणभवानिहि ॥ रामायणात्पुराणाच्चव्यासेनखण्डितानिहि ४८
अतःपुराणंनामसूदेतेषांजगतीतले ॥ आदौकृतानियान्यत्रतेषांज्येष्ठत्वसूचकः ४९ महाशब्दःप्रोच्यतेहिवैष्णवादिषुषट्त्रिषु ॥ पुराणानांतुसर्वेषांफलंशिष्यब्रवीम्य
हम् ५० वेदतुल्यफलंपाठेश्रवणेचतदर्धकम् ॥ अर्थश्रवणतश्चास्यपुण्यंदशगुणंस्मृतम् ५१ वक्तुःस्याद्द्विगुणंपुण्यंव्याख्यातुश्चशताधिकम् ॥ अन्यान्युपपुराणानि

संतितेषांफलंशृणु ५२ विष्णुधर्मोत्तरंशैवंबृहन्नारदमेवच ॥ भगवतीपुराणंचलघुनारदमेवच ५३ भविष्यत्पर्वषष्ठंस्यात्तंत्रंभागवतंतथा ॥ अष्टमंनारसिंहंस्यात्पुराणंरेणु
काभिधम् ५४ दशमंतत्वसारंस्याद्वायुप्रोक्तंतथैवच ॥ नंदिप्रोक्तंद्वादशंस्यात्तथापाशुपताभिधम् ५५ यमनारदसंवादैस्तथाहंसपुराणकम् ॥ विनायकपुराणंचबृहद्ब्र
ह्मांडमेवच ५६ पुण्यंविष्णुरहस्यंस्यादितिह्यष्टादशानिवै ॥ एतान्युपपुराणानिपुराणार्धफलानिच ५७ भारतंवेदतुल्यंस्यादर्थतोऽधिकमुच्यते ॥ तत्रापिभगवद्गीता
विष्णोर्नामसहस्रकम् ५८ दशाधिकफलंप्रोक्तंभारतादपिसर्वशः ॥ श्रोतार्धफलमाप्नोतिभक्तितःशृणुयात्तुयः ५९ भारतंत्वितिहासश्चरामायणसमुद्भवः ॥ यद्वेदपाठपु
ण्यंतज्ज्ञेयंरामायणस्यच ६० पाठात्तदर्धंश्रवणेव्याख्यातुश्चदशाधिकम् ॥ वाल्मीकिनाकृतंयच्चशतकोटिप्रविस्तरम् ६१ तत्सर्वेषामादिभूतंमहामंगलकारकम् ॥ रामा
यणादेवनानामंतिरामायणानिहि ६२ शेषभूतंचतुर्विंशसहस्रंप्रथमंस्मृतम् ॥ तथाचयोगवासिष्ठमध्यात्माख्यंतथास्मृतम् ६३ वायुपुत्रकृतंचापिनारदोक्तंतथापुनः ॥
लघुरामायणंचैवबृहद्रामायणंतथा ६४ अगस्त्युक्तंमहाश्रेष्ठंसाररामायणंतथा ॥ देहरामायणंचापिवृत्तरामायणंपुनः ६५ ब्रह्मरामायणंरम्यंभारद्वाजंतथैवच ॥ शिवरामाय
णंक्रौंचंभरतस्यचजैमिनेः ६६ आत्मधर्मंश्वेतकेतुऋषेश्चैवजटायुषः ६७ रवेःपुलस्तेर्देव्याश्चगुह्यकंमंगलंतथा ॥ गाधिजंचसुतीक्ष्णंचसुग्रीवंचविभीषम् ६८ तथाऽऽनं
दरामायणमेतन्मंगलकारकम् ॥ एवंसहस्रशःसंतिश्रीरामचरितानिहि ६९ कःसमर्थोऽस्तितेषांहिसंख्यांवक्तुंसविस्तरात् ॥ शतकोटिमितादेवविभक्तानिपृथक्पृथक् ७०
सर्वेष्वप्यानंदसंज्ञंवरिष्ठंप्रोच्यतेत्विदम् ॥ अस्यपाठेनयत्पुण्यंतत्तेशिष्यवदाम्यहम् ७१ शतकोटिमितंश्रुत्वायत्फलंलभ्यतेनरैः ॥ फलमस्यतदर्धंहिज्ञेयंशिष्यशुभप्रदम् ७२
श्रवणाद्द्विगुणंपाठेव्याख्यातुश्चदशाधिकम् ॥ तस्मादेतत्सदानंदसंज्ञंश्राव्यंनरोत्तमैः ७३ नानेनसदृशंकिंचिद्भूतंचाग्रेभविष्यति ॥ सर्वेष्वपिचशास्त्रेषुपंचरात्रागमोऽधि
कः ७४ भगवद्गीतयातुल्यंफलंतस्याखिलस्यच ॥ भारतीयकथाबंधंसद्भक्तैरेवनिर्मितम् ७५ तत्काव्यंयःपठेत्प्राज्ञोदशांशंफलमाप्नुयात् ॥ सद्भक्तैर्निर्मितंयत्तुशतांशफल
दंस्मृतम् ७६ यःकरोतिस्वयंकाव्यंकल्पयित्वास्वयंकथां ॥ तच्छ्रमोव्यर्थतामेतितदध्येताचदोषभाक् ७७ पौराणींभारतींवापितथारामायणास्थिताम् ॥ तथाह्युपपुरा
णस्थांकथांग्रथतियःस्वयम् ७८ रामभक्तोऽपिलभतेशक्रलोकाधिवासताम्[1] ॥ प्रत्यक्षरंवर्षमेकंवासस्तस्यभवेद्ध्रुवम् ७९ रामभक्तःपुराणेभ्यःकथांग्रथातियःपुनः ॥ व्या
समूर्तिःसलभतेबृहस्पतिसलोकताम् ८० दौहित्रपोषितःशिष्यआरामश्चजलाशयः ॥ सद्ग्रंथकरणंपुत्रःसत्पुत्राश्चप्रकीर्तिताः ८१ एवंभूम्यामंशभूतैर्नरैस्तेविचरंतिहि ॥
अश्वत्थामादयःमत्येचिरंजीविनःसदा ८२ अतःश्रीरामभक्तैश्चकवित्वैस्तत्स्तुतिःकृता ॥ सापिमान्यासदाश्राव्यापठनीयाबुधैर्मुहुः ८३ भारताचशतांशेनफलदात्रीस्मृ
तात्रहि ॥ निंदंतियेभक्तकृतांकवितांतिखराःस्मृताः ८४ तत्तद्भाषाकृतंकाव्यंरामवर्णनसंयुतम् ॥ भारतस्यसहस्रांशंश्रोतुर्वक्तुःफलंस्मृतम् ८५ निर्मातुस्तुभवेत्पुण्यंसा
धुशब्दशतांशतः ॥ गीर्वाणीकविताकर्तासोपिव्यासांशईरितः ८६ स्वस्वभाषाकवित्वानांकर्तारस्तेकवीश्वराः ॥ गीर्वाणीकविताचापिपदान्वयसमान्विता ८७

१ रामभद्रेसलभतेश्लोकादपिचदासतामितिपाठः ।

अर्थप्रमाणसहितासैवमान्यानचेतरा ॥ नरस्तुतिंतुयःकुर्याज्जीविकार्थंकविःक्वचित् ८८ निष्फलस्तच्छ्रमःप्रोक्तस्तदध्येताचदोषभाक् ॥ उन्मादेनतुयःकुर्यात्कामिनी
नांतुवर्णनम् ८९ सहिश्वयोनिंप्राप्नोतिवर्षाण्यक्षरसंख्यया ॥ वेदोक्तार्थानुसारेणमन्वाद्याःस्मारकाःस्मृताः ९० तेषांवैस्मृतयोनामनानाधर्मप्रवर्तकाः ॥ तत्रकेचिद्वैदि
केषुकर्मस्वधिकृताःपरे ९१ अवैदिकेषुमंत्रेषुकेचित्पशुसमाःस्मृताः ॥ अवैदिकेष्वपिप्रोक्तोनाधिकारोनृणामिह ९२ ब्रह्मचारीगृहस्थोवावानप्रस्थोयतिस्तथा ॥ प्रोक्ता
ह्याश्रमिणस्त्वेतेभिन्नधर्माणएवच ९३ कदाकुत्रकथंकर्मकेनकार्यमितिस्फुटम् ॥ धर्मशास्त्रंतुनिर्णीयमन्यथादोषभाग्भवेत् ९४ अदेशेयत्कृतंव्यंगमकालेनाधिकारिणा ॥
प्रत्येकंतद्भवेद्व्यर्थंप्रत्यवायोऽधिकोभवेत् ९५ तस्मादावश्यकंतत्तुविप्राणांचविशेषतः ॥ स्मृत्यर्थज्ञानतोवापिवेदार्थज्ञानतोऽधिकम् ९६ ऋग्वेदस्योपवेदःस्यादायुर्वेदो
हिवैदिकः ॥ परेषामुपकारायस्वस्यारोग्यार्थमेववा ९७ जीविकार्थमप्यसौहिपठितव्योद्विजातिभिः ॥ ब्राह्मणंरोगिणंक्षीणमुपचारेणजीवयेत् ९८ ब्रह्महत्याभवंपापंतस्य
नश्यतिवैध्रुवम् ॥ यतःसलभतेपुण्यंचतुःकृच्छ्रसमुद्भवम् ९९ एवंपुण्यंभवेत्तस्यतत्तद्वर्णानुसारतः ॥ यत्नेकृतेऽपियोरोगीनजीवत्यायुषःक्षयात् १०० सोऽप्यर्थफलमा
प्नोतिनात्रकार्याविचारणा ॥ जीविकार्थंतुयःकुर्यादुपविद्याचतुष्टयम् १ इहलोकेफलंतस्यपरलोकेनकिंचन ॥ नरंरोगार्णवेमग्नंयोऽभ्युद्धरतिमानवः २ कस्तेननकृतोध
र्मःकांवापूजांनसोऽर्हति ॥ गतश्रीर्गणकान्द्वेष्टिगतायुश्चचिकित्सकान् ३ गतश्रीश्चगतायुश्चब्राह्मणान्द्वेष्टिमूढधीः ॥ गांधर्वमप्यधीयीतरामाग्रेयश्चगायति ४ तद्भक्तियु
क्तोलभतेगांधर्वलोकमुत्तमम् ॥ धनुर्वेदोदंडनीतिर्ब्राह्मणानांतुजीविका ५ क्षत्रियाणांतुसाप्रोक्तावेदादर्धफलप्रदा ॥ ज्ञातिष्वेतेषुसर्वेषुपुण्यंज्ञानानुसारतः ६ विवेकस्त
स्यकर्तव्योद्रव्यदानेविशेषतः ॥ अन्नस्यक्षुधितःपात्रंपानीयस्यपिपासितः ७ द्रव्यदानेतुकर्तव्यंविशेषात्पात्रवीक्षणम् ॥ खलायांगविदुग्धंस्याद्दुग्धमप्युरगेविषम् ८
पात्रापात्रविचारेणसत्पात्रेदानमुत्तमम् ॥ यथापुण्याधिकंपात्रंतथादानंफलाधिकम् ९ ज्ञानाधिक्याद्भवेत्पुण्याधिक्यात्पात्रंश्रमेणवा ॥ रामभक्तश्चपात्रंस्याद्रामाभक्तोनस
र्वथा १० रामद्वेषीविवर्जनीयोदर्शनालापनादिषु ॥ संगतश्चभवेत्पूतस्तद्भक्तानांतुनान्यथा ११ यच्छक्तेरधिकंदद्यात्तद्दानंपरिकीर्तितम् ॥ वित्तशाठ्येनयद्दानंनतद्दानंस्मृ
तंबुधैः १२ देशकालविशेषेणतत्तत्पात्रविशेषतः ॥ दानस्यफलमुद्दिष्टमधिकंन्यूनमेवच १३ विप्रशुल्कंतुयोमूढोनदद्याच्छक्तिसंभवम् ॥ विष्ठाकृमिर्भवेदेवसुवर्णैरेवसंख्यया
१४दिव्यवर्षाणिनैवात्रत्वयाकार्यस्तुसंशयः ॥ यत्तुज्ञानवताकर्मक्रियतेपुण्यदायकम् १५ अधिकंतत्फलंप्रोक्तमज्ञानिकृतकर्मणः ॥ यथायथाधिकंज्ञानंपापहानिस्तथातथा
१६ यत्तुज्ञानवताकर्मक्रियतेपापकारकम् ॥ तन्न्यूनफलकंप्रोक्तमज्ञानिकृतपातकात् १७ यथायथाधिकंज्ञानंपापहानिस्तथातथा ॥ यथैधांसिसमिद्धोऽग्निर्भस्मसात्कु
रुतेक्षणात् १८ ज्ञानाग्निर्दैष्टकर्माणिभस्मसात्कुरुतेतथा ॥ वर्णाधिक्यंयथाहेम्नोवन्हिसंगेनजायते १९ पुण्याधिक्यंतथाशिष्यज्ञानिसंगेनजायते ॥ पुण्येनवर्धतेपुण्यंपापंस्व
ल्पंचजायते २० पापेनपापवृद्धिश्चपुण्यंस्वल्पंचजायते ॥ अतिसूक्ष्मोविचारोऽयंदुर्ज्ञेयःस्थूलदृष्टिभिः २१ तथाप्येवंविचार्यंस्यात्तत्त्वज्ञानानुसारतः ॥

१ स्वस्यज्ञानानुसारतइतिपाठः ।

आ० रा० यस्तुसत्यधिकारेऽपिज्ञानेवापठनेऽपिवा २२ प्रयत्नंनैवकुर्वीतसनरोजायतेपशुः ॥ ज्ञानाद्वाध्ययनाद्वापिपुण्यंविप्रस्यवर्धते २३ इतिसंक्षेपतःप्रोक्तमेतत्पृष्टंत्वयानघ ॥ मनो० का०
उन्नेयंचाप्यनेनैवपुण्यंपापमथापिवा २४ धर्मास्तुबहवःसंतितथापापान्यनेकशः ॥ तत्रतत्रोदितान्येवप्रायश्चित्तानिवैबुधैः २५ कर्तव्यानिजनैस्तानिसम्यग्बुद्ध्याविवि
॥ २६ ॥ च्यच ॥ सर्वसारमिदंप्रोक्तंरहस्यंपुरतस्तव २६ गृहणीयंप्रयत्नेननह्यभक्तायदीयताम् ॥ शुश्रूषवेसाधवेचरामभक्तायदीयताम् १२७ ॥ इति श्रीशतकोटिरामचरितां ८
तर्गतश्रीमदानंदरामायणे मनोहरकांडेसर्वेषविदादीनांफलश्रुतिर्नामाष्टमःसर्गः ८ ॥ ॥ गुरोन्यद्रामचंद्रस्यविशेषेणचपूजनम् ॥ यस्मिन्कालेप्रकर्तव्यंतंकालंकथयस्व
माम् १॥रामदासउवाच ॥ शृणुशिष्यप्रवक्ष्यामिकालपुण्यतमंशुभम् ॥ वदामिरामचंद्रस्यपूजनार्थंविशेषतः २ माघस्यशुक्लपक्षस्ययापुण्यापंचमीतिथिः ॥ पुण्याश्रीपंच
मीनाम्नीसाख्यातास्तिजगत्त्रये ३ तदारभ्यसार्धमासद्वयंरामंमहोत्सवैः ॥ पूजयेत्पंचमीयावद्वैशाखेकृष्णपक्षजा ४ माघकृष्णचतुर्थ्योश्वनवमीमधुशुक्लजा ॥ यावत्ताव
त्फलाहारीचैकाशीतिदिनानिहि ५ सीतारामस्यनित्यंहिकेचित्कुर्वंतिपूजनम् ॥ पौर्णिमांताःस्मृताश्चात्रमासाःसर्वत्रमोद्विज ६ प्रत्यहंवाहनारूढंकृत्वारामंमहोत्सवैः ॥
भेरीदुंदुभिनिर्घोषैर्महावाद्यपुरःसरैः ७ वारस्त्रीणांनृत्यगीतैश्छत्रचामरतोरणैः ॥ नानाकुसुमवर्षावैर्नानास्तोत्रादिपाठनैः ८ नानापरिमलद्रव्यांजलीनांमोचनादिभिः ॥
नानामांगल्यवस्तूनामंजलीभिःसुमोचनैः ९ नानाकुसुमरंगानांतैलानांचपरस्परम् ॥ रामंचवारनार्यश्चजलयंत्रैःकरेधृतैः १० मुहुर्मुहुःसिंचनाद्यैस्तथास्त्रीणांसुगाय
नैः ॥ द्विजानांवेदघोषैश्चधूपैर्नीराजनादिभिः ११ सहकाराराममध्येनीत्वैवंपरमोत्सवैः ॥ सहकारवृक्षबद्धदोलकेतंनिवेशयेत् १२ नागेनवापुष्पकेणशेषयानेनवाजिना ॥
रथेनगरुडेनापितथासिंहासनेनच १३ तथाशिबिकयावापिवायुपुत्रेणवातथा ॥ यानैर्नवभिरेतैश्चसदानेयोरघूत्तमः १४ आम्रवृक्षाराममध्येवल्लीपुष्पनगान्विते ॥ अव
निंचंदनैर्लिप्त्वाविकीर्यकुसुमानिच १५ आच्छाद्यनानावस्त्रैश्चशोभनीयाऽवनिःशुभा ॥ हेमसिंहासनस्यैवकृत्वादोलकमुत्तमम् १६ चूतवृक्षस्यशाखायांतंबध्वाशृंखला
दिभिः ॥ तत्रश्रीरामतोभद्रेरामचंद्रंप्रपूजयेत् १७ नानानवविधैःपुष्पैःषोडशैरुपचारकैः ॥ संपूज्यसीतयाबंधुसुग्रीवाद्यैःसमन्वितम् १८ आंदोलयेद्दोलकंतंशिशुपाल
कवच्छनैः ॥ नर्तितव्यावारवेश्यास्तदग्रेशतशोमुदा १९ गायनीयागायकाश्चनर्तितव्यानटादयः ॥ वादनीयानिवाद्यानिज्वालनीयाःसुधूपकाः २० वीजनीयश्चामरा
द्यैःसीतयारघुनंदनः ॥ तद्दासैःकीर्तनान्येवकारयित्वामहोत्सवैः २१ पुनःपूज्यपूर्ववच्चसमानीयोगृहंप्रति ॥ संपूजनीयःश्रीरामःकुंभदीपार्तिकादिभिः २२ एवंनित्यंसा
र्धमासद्वयंरामंप्रपूजयेत् ॥ चूतवृक्षतलेनीत्वापूजयेच्चसविस्तरम् २३ यदारामश्चसीताचबहिर्नेयानिजगृहात् ॥ तदातयोर्नयनयोःकस्तूर्यांगुलिनाऽसिताः २४ देयाश्च
विंदवोयत्नात्परदुर्दृष्टिनाशनाः ॥ एवंदोलापूजनंचशिष्यतेकथितंमया २५ विशेषंशृणुतत्रापिकथ्यतेयोमयाधुना ॥ वसंतपूजनात्पूर्वंदिवसेगणनायकम् २६ माघशुक्ल ॥ २६ ॥
चतुर्थ्यांहिपूजयेद्विघ्ननाशनम् ॥ माघशुक्लचतुर्थ्यांतुनक्तव्रतपरायणाः २७ येढुंढिंपूजयिष्यंतितेऽर्च्याःस्युरसुरद्रुहाम् ॥ माघमासेचतुर्थ्यांतुतस्मिन्कालउपोषितः २८
अर्चयित्वाविघ्नराजंजागरंतत्रकारयेत् ॥ चतुर्थींकुंदनाम्नीयंकुंदपुष्पैःप्रपूजयेत् २९ माघशुक्लपंचमीसाज्ञेयाश्रीपंचमीशुभा ॥ तस्यांतिथौरमानाथंरामचंद्रंश्रियार्चयेत् ३०

माघशुक्लचतुर्थ्यांतुवरमाराध्यचश्रियः ॥ पंचम्यांकुंदकुसुमैःपूजांकुर्यात्सशुद्धये ३१ नीत्वारामंचूतवृक्षतलेंदोलकसंस्थितम् ॥ सीतारामंपूजयेच्चगेहेवाथप्रपूजयेत्
३२ प्रवृत्तेमधुमासेतुप्रतिपद्युदितेरवौ ॥ कृत्वाचावश्यकार्याणिसंतर्प्यपितृदेवताः ३३ वंदयेद्धोलिकाभूमिंसर्वदुःखोपशांतये ॥ वंदितासिसुरेंद्रेणब्रह्मणाशंकरेणच
३४ अतस्त्वंपाहिमांदेविभूतेभूतिप्रदाभव ॥ चैत्रेमासिमहापुण्येपुण्येतुप्रतिपादिने ३५ यस्तत्रश्वपचंस्पृष्ट्वास्नानंकुर्यान्नरोत्तमः ॥ नतस्यदुरितंकिंचिन्नाधयोव्याधयोनृप
३६ वृत्तेतुषारसमयेसितपंचदश्यांप्रातर्वसंतसमयेसमुपस्थितेच ॥ संप्राश्यचूतकुसुमंसहचंदनेनसत्यंहिविप्रपुरुषोथसमाःसुखीस्यात् ३७ चूतमग्र्यंवसंतस्यमाकं
दकुसुमंतव ॥ सचंदनंपिबाम्यद्यसर्वकामार्थसिद्धये ३८ पंचम्यांमाघमासेऽपिचूतपुष्पंसचंदनम् ॥ प्राशनीयंनरैर्भक्त्याकलकंठोभविष्यति ३९ चूतपुष्पप्राश
नेनकोकिलास्वरवत्स्वरः ॥ भविष्यतिमानवानांकलकंठोमनोरमः ४० सीतारामंचूतपुष्पैस्तथाकोमलपल्लवैः ॥ पूजयेत्प्रत्यहंभक्त्यादोलकस्थंमहोत्सवैः ४१ चै
त्रकृष्णप्रतिपदिचूतपुष्पंसचंदनम् ॥ पीत्वामहोत्सवेनैवसीतारामंप्रपूजयेत् ४२ एवंतद्यादिनंनीत्वाततश्चाग्रेदिनत्रयम् ॥ नानोत्सवसुगीताद्यैर्नीत्वाचैवततःपरम् ४३ पंच
म्यांचैत्रकृष्णेऽपिसौभाग्यद्रव्यमंगलैः ॥ स्नात्वाकेशरपालाशकृतरागैःशुभावहैः ४४ चित्रितानिहिवासांसिपरिधायनरोत्तमैः ॥ नानासुगंधतैलाद्यैरभ्यंगंतूर्यनिस्वनैः
४५ जानक्यैरामचंद्रायकृत्वातीर्थोदकैःशुभैः ॥ केशरादिभीरागैश्चवासांसिचित्रितानिहि ४६ दत्वारामायसीतायैततोभक्त्याप्रपूजयेत् ॥ वसंतोद्भवपुष्पैश्चनानामंगलपू
र्वकम् ४७ नानादानानिदेयानिनिजमांगल्यहेतवे ॥ नानासुगंधद्रव्याणिगृहीत्वाचपरस्परम् ४८ एकैकोपरिसिंचेच्चमहामांगल्यदायकम् ॥ मिष्टान्नैर्भोजयेद्विप्रान्स्व
यंचापिसुहृज्जनैः ४९ भोक्तव्यंतुवसंततौपंचम्यांमानवैःसुखम् ॥ वसन्तपंचमीनाम्नीमहापुण्यात्मिकासिता ५० पक्षेपक्षेतुपंचम्यामारभ्यमाघपंचमीम् ॥ एवंरामं
पूजयेच्चयावद्देशाखपंचमी ५१ विशेषेणनवम्यांहिपक्षेपक्षेप्रपूजयेत् ॥ अथवामाघशुक्लायांकृष्णायांचैत्रमासिवै ५२ कृष्णायांमाघवेचापिपंचम्यांपूजयेन्नरैः ॥ महोत्सा
हेनश्रीरामोदोलकस्थोऽतियत्नतः ५३ ततश्चैत्रशुक्लपक्षेप्रतिपदिनरोत्तमैः ॥ तैलाभ्यंगंस्वयंकृत्वारामायाभ्यंगमाचरेत् ५४ पूजयेन्नवरात्रंतंयावत्सानवमीतिथिः ॥ वत्सरा
दौवसंतादौबलिराज्येतथैवच ५५ तैलाभ्यंगमकुर्वाणोनरकंप्रतिपद्यते ॥ अतीतेफाल्गुनेमासिप्राप्तेचैत्रेमहोत्सवे ५६ पुण्येऽन्हिविप्रकथितेप्रपादानंसमारभेत् ॥ प्रपामु
त्सर्जयेद्विद्वान्मन्त्रेणानेनमानवः ५७ अरण्येनिर्जलेदेशेपथिग्रामेऽथवाशुभा ॥ प्रपेयंसर्वसामान्याभूतेभ्यःप्रतिपादिता ५८ अस्याःप्रदानात्पितरस्तृप्यंतुहिपितामहाः ॥
अनिवार्यंततोदेयंजलंमासचतुष्टयम् ५९ देवालयेषुलिंगानांदियास्तोयगलंतिकाः ॥ प्रपांदातुमशक्तेनविशेषाद्धर्ममीप्सुना ६० प्रत्यहंधर्मघटकोवस्त्रसंवेष्टिताननः ॥
ब्राह्मणस्यगृहेदेयःशीतामलजलःशुचिः ६१ तांबूलफलधान्यैश्चदक्षिणाभिःसमन्वितः ॥ एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः ६२ अस्यप्रदानात्सकलाःसर्वेसन्तुमनो
रथाः ॥ अनेनविधिनायस्तुधर्मकुंभंप्रयच्छति ६३ प्रपादानफलंसोऽपिप्राप्नोतीहनसंशयः ॥ तृतीयायांचैत्रशुक्लेसीतारामौप्रपूजयेत् ६४ कुंकुमागुरुकर्पूरमणिवस्त्रसु
गंधकैः ॥ स्रग्गंधधूपदीपैश्चदमनेनविशेषतः ६५ आंदोलयेत्ततःसीतारामौचदोलकस्थितौ ॥ वसन्तमासमासाद्यतृतीयायांद्विजोत्तम ६६ सौभाग्यायसदास्त्रीभिः

का. रा. सौभाग्यशयनव्रतम् ॥ कार्यमहोत्सवेनैवसुखंपुत्रसुखेप्सुभिः ६७ विशेषंचात्रवक्ष्यामितृतीयायांद्विजोत्तम ॥ तृतीयायांतुनारीभिःशुक्लपक्षेमघौशुभे ६८ स्नात्वाष्टण्म मनो. कां.
यद्गृहेकार्यंचित्रविचित्रितम् ॥ तत्राष्टादशधान्यानिवापयेत्तदनंतरम् ६९ पुष्पवृक्षांश्चशुभांस्तत्रलापयेत्सर्वतस्ततः ॥ जलयंत्राणिकार्याणिचित्राण्यपिविलेखयेत् ७०
॥ २७ ॥ तुर्यद्वाराणिकार्याणिपूर्ववन्मण्डपादिकम् ॥ यथाश्रीरामपूजायामुक्तंतद्वत्प्रकारयेत् ७१ दुर्गोपरिघटंस्थाप्यंसजलंपुष्पगुंफितम् ॥ दोलकंचततोन्यस्यघटपृष्ठेमहच्छु ८
भम् ७२ कांचनींराजतींमूर्त्तिसीतायाःपरिकल्प्यच ॥ रामस्यापिशुभांमूर्तिंकृत्वातौपूजयेत्ततः ७३ दोलकोपरिसंस्थाप्यमासमेकंप्रपूजयेत् ॥ केचिच्छिष्यात्रपार्वत्या
शिवेनचप्रपूजनम् ७४ वदन्तिमुनयस्तत्रनिर्णयंशृणुवक्ष्यते ॥ रामस्यहृदयंशंभुःश्रीरामोहृदयंस्मृतः ७५ शंकरस्यतथागौरीहृदयंजानकीस्मृता ॥ जानक्याहृदयं
गौरीशिवानैवांतरंकदा ७६ रामस्यचशिवस्यापिसीतागिरिजयोस्तथा ॥ येमानयंतिवैभेदंतेषांवासस्तुरौरवे ७७ अतश्चैत्रतृतीयायांसीतारामौप्रपूजयेत् ॥ अश
क्तौताम्रजेमूर्तीकार्येवाकाष्ठनिर्मिते ७८ पाषाणनिर्मितेचापिमूर्तीकार्येयथासुखम् ॥ प्रत्यहंमंगलद्रव्यैःसर्वस्त्रीभिःप्रपूजयेत् ७९ मासमेकंतुनारीभिःस्नानंहिसीतला
भिधम् ॥ अवश्यमेवकर्तव्यंसीतातीर्थेविशेषतः ८० यत्रयत्ररामतीर्थंतस्यवामेऽवनीतले ॥ सीतातीर्थंतत्रतत्रज्ञेयंसीताकृतंशुभम् ८१ चैत्रशुक्लतृतीयायामारभ्या
क्षय्यसंज्ञिता ॥ यावत्तृतीयावैशाखशुक्लातावन्निरन्तरम् ८२ सीतलासंज्ञकंस्नानंस्त्रीभिःसीतार्थमाचरेत् ॥ चैत्रशुक्लतृतीयायामक्षय्यायांतथापिच ८३ तृतीयायां
तुनारीभिस्तैलाभ्यंगंप्रकारयेत् ॥ अन्यत्रदिवसेस्त्रीभिस्तैलाभ्यंगंनकारयेत् ८४ प्रत्यहंचोत्सवाःकार्याःसीतायाःपुरतःशुभाः ॥ सुवासिनीपूजनंचकार्यंभक्त्यादिनेदिने
८५ सुवासिनीनांदेयानिवायनानिशुभानिच ॥ निरंतरंपूजनार्थंयदिशक्तिर्नवर्त्तते ८६ तदाकार्यंचैकदिनेसुभगानांप्रपूजनम् ॥ सुवासिनीनांदेयंहिप्रत्यहंभोजनंव
रम् ८७ नानापक्वान्नसंयुक्तंघृतपायससंयुतम् ॥ अलंकाराश्चवस्त्राणिकंचुक्यादिचयच्छुभम् ८८ भर्तुरायुष्यवृद्ध्यर्थंनारीभिर्देयमुत्तमम् ॥ एवंस्नात्वामासमात्रंसीतला
स्नानमुत्तमम् ८९ अक्षय्यायांतृतीयायांपूजयित्वाविशेषतः ॥ त्रिंशत्सुवासिनीभ्यश्चदातव्यंभोजनादिकम् ९० गुरुपत्नींनिजांपूज्यतस्यैसर्वंविसर्जयेत् ॥ एवंस्त्री
णांव्रतंप्रोक्तंमासमात्रंद्विजोत्तम ९१ अन्यद्विशेषंवक्ष्यामितवाग्रेशृणुचोत्तमम् ॥ अशोककलिकाभिस्तुचैत्रशुक्लाष्टमीदिने ९२ सीतारामौपूजयित्वामहामंगलपूर्व
कम् ॥ अशोककलिकाश्चाष्टौयेपिबंतिपुनर्वसौ ९३ चैत्रेमासिसिताष्टम्यांनतेशोकमवाप्नुयुः ॥ त्वामशोककराभीष्टंमधुमाससमुद्भवम् ९४ पिबामिशोकसंतप्तोमामशो
कंसदाकुरु ॥ पुनर्वसुबुधोपेतांचैत्रेमासिसिताष्टमीम् ९५ प्रातस्तुविधिवत्स्नात्वावाजपेयफलंलभेत् ॥ चैत्रेनवम्यांप्राक्पक्षेदिवापुण्येपुनर्वसौ ९६ उदयेगुरुगौरांश्वोःस्वो ॥ २७ ॥
चस्थेग्रहपंचके ॥ मेषेपूषणिसंप्राप्तेलग्नेकर्कटकाह्वये ९७ आविरासीन्महाविष्णुःकौसल्यायांपरःपुमान् ॥ तस्मिन्दिनेतुकर्तव्यमुपवासव्रतंनरैः ९८ तत्रजागरणंकुर्याद्र
घुनाथपुरेजनैः ॥ चैत्रशुक्लातुनवमीपुनर्वसुयुतायदि ९९ सैवमाध्यान्हयोगेनमहापुण्यतमाभवेत् ॥ केवलापिसदोपोष्यानवमीशब्दसंग्रहात् १०० तस्मात्सर्वात्मनासर्वैः
कार्यंवैनवमीव्रतम् ॥ श्रीरामनवमीप्रोक्ताकोटिसूर्यग्रहाधिका १ उपोषणंजागरणंपितृनुद्दिश्यतर्पणम् ॥ तस्मिन्दिनेतुकर्तव्यंब्रह्मप्राप्तिमभीप्सुभिः २ सर्वेषामप्ययंधर्मो

भुक्तिमुक्त्यैकसाधनः ॥ अशुचिर्वापिपापिष्ठःकृत्वेदंव्रतमुत्तमम् ३ पूज्यःस्यात्सर्वभूतानांयथारामस्तथैवसः ॥ यस्तुरामनवम्यांतुभुंक्तेमोहाद्विमूढधीः ४ कुंभीपाकेषुघोरें
षुपच्यतेनात्रसंशयः ॥ अकृत्वारामनवमीव्रतंसर्वव्रतोत्तमम् ५ व्रतान्यन्यानिकुरुतेनतेषांफलभाग्भवेत् ॥ आचार्यंचैवसंपूज्यशृणुयात्प्रार्थयेन्निशि ६ श्रीरामप्रतिमादानंक
रिष्येऽहंद्विजोत्तम ॥ भक्त्याचार्यमवप्रीतःश्रीरामोऽसित्वमेवच ७ स्वगृहेचोत्तमेदेशेदानस्योज्ज्वलमण्डपम् ॥ शंखचक्रहनूमद्भिःप्राग्द्वारेसमलंकृतम् ८ गरुत्मच्छार्ङ्ग
बाणैश्चदक्षिणेसमलंकृतम् ॥ गदाखड्गांगदैश्चैवपश्चिमेसुविभूषितम् ९ पद्मस्वस्तिकनीलैश्चकौबेरेसमलंकृतम् ॥ मध्येहस्तचतुष्काढ्यंवेदिकायुक्तमायतम् १० अ
ष्टोत्तरसहस्रैश्चरामलिंगात्मकंशुभम् ॥ आस्तीर्यरामतोभद्रंवेदिकायामनुत्तमम् ११ ततःसंकल्पयेदेवंराममेवस्मरन्द्विज ॥ अस्यांरामनवम्यांचरामाराधनतत्परः १२
उपोष्याष्टसुयामेषुपूजयित्वायथाविधि ॥ इमांस्वर्णमयींरामप्रतिमांचप्रयत्नतः १३ श्रीरामप्रीतयेदास्येरामभक्तायधीमते ॥ प्रीतोरामोहरत्वाशुपापानिसुबहूनिमे १४
अनेकजन्मसंसिद्धान्यभ्यस्तानिमहांतिच ॥ ततःस्वर्णमयींरामप्रतिमांपलमानतः १५ निर्मितांद्विभुजांदिव्यांवामांकस्थितजानकीम् ॥ बिभ्रतींदक्षिणकरेज्ञानमु
द्रांमनोरमाम् १६ वामेनाधःकरेणारादेवीमालिंग्यसंस्थिताम् ॥ सिंहासनेराजतेचपलद्वयविनिर्मिते १७ अशक्तोयोमहानत्रसतुवित्तानुसारतः ॥ पलेनवातदर्धेनतदर्धा
र्धेनवापुनः १८ सौवर्णंराजतंवापिकारयेद्रघुनन्दनम् ॥ पार्श्वेभरतशत्रुघ्नौधृतछत्रकरावुभौ १९ चापद्वयसमायुक्तंलक्ष्मणंचापिकारयेत् ॥ मातुरंकगतंराममिंद्रनीलसम
प्रभम् २० पंचामृतस्नानपूर्वंसंपूज्यविधिवत्ततः ॥ अशोककुसुमैर्युक्तमर्घ्यंदद्याद्विचक्षणः २१ दशाननवधार्थायधर्मसंस्थापनायच ॥ राक्षसानांविनाशायदैत्यानांनिधनायच
२२ परित्राणायसाधूनांजातोरामःस्वयंहरिः ॥ गृहाणार्घ्यंमयादत्तंभ्रातृभिःसहितोऽनघ २३ दिवैवंविधिवत्कृत्वारात्रौजागरणंततः ॥ ततःप्रातःसमुत्थाय,स्नानसंध्यादिकाः
क्रियाः २४ समाप्यविधिवद्रामंपूजयेद्विधिवन्मुने ॥ ततोहोमंप्रकुर्वीतमूलमंत्रेणमंत्रवित् २५ पूर्वोक्तमंडपेकुंडेस्थंडिलेवासमाहितः ॥ लौकिकाग्नौविधानेनशतमष्टो
त्तरंशनैः २६ साज्येनपायसेनैवस्मरन्राममनन्यधीः ॥ ततोभक्त्यासुसंतोष्यह्याचार्यंपूजयेद्द्विज २७ ततोरामंस्मरन्दद्यादेवंमंत्रमुदीरयन् ॥ इमांस्वर्णमयीं
रामप्रतिमांसमलंकृताम् २८ चित्रवस्त्रयुगच्छन्नांरामोऽहंराघवायते ॥ श्रीरामप्रीतयेदास्येतुष्टोभवतुराघवः २९ इतिदत्त्वाविधानेनदद्याद्वैदक्षिणांशुभम् ॥
ब्रह्महत्यादिपापेभ्योमुच्यतेनात्रसंशयः ३० एवंशिष्यचैत्रमासेनवम्यांभूसुरायहि ॥ दानंदेयंराघवस्यरामसंतुष्टिहेतवे ३१ अन्यद्विशेषंवक्ष्यामिचैत्रेमासिशृणु
ष्वतम् ॥ चैत्रस्यशुक्लैकादश्यांदोलकस्थंरघूत्तमम् ३२ पूजयेन्मानवोभक्त्याचूतवृक्षतलस्थितम् ॥ चैत्रमासस्यशुक्लायामेकादश्यांतुवैष्णवैः ३३ आंदोलनीयोदेवेशः
सलक्ष्मीकोमहोत्सवैः ॥ द्वादश्यांचैत्रमासस्यशुक्लायांदमनोत्सवः ३४ बौधायनादिभिःप्रोक्तंकर्तव्यःप्रतिवत्सरम् ॥ ऊर्जेव्रतंमधौदोलाश्रावणेतंतुपूजनम् ॥ चैत्रेचदम
नारोपमकुर्वाणोव्रजत्यधः ३५ वन्हिर्विरंचिर्गिरिजागणेशःफणीविशाखोदिनकृन्महेशः ॥ दुर्गांऽतकोविश्वहरिःस्मरश्चशर्वःशशीवैतिथिषुप्रपूज्याः ३६ अथचै

१ पवित्रारोपणमित्यर्थः । २ यमः ।

श्रीपौर्णिमायांभक्त्यारामंप्रपूजयेत् ॥ सीतयादोलकस्थंवैदमनेनमहोत्सवैः ३७ चैत्रीचित्रायुताचेत्स्यात्तदापुण्यामहातिथिः ॥ ज्ञेयासर्वाधिकासाहिस्नानदानजपादिषु ३८ स्त्रीभिर्देयंचित्रवस्त्रंतस्यांसौभाग्यदायकम् ॥ सीतारामौचित्रवस्त्रैःपूजनीयौमहोत्सवैः ३९ मंदेवार्केगुरौवापिवारेष्वेतेषुचैत्रिका ॥ तत्राश्वमेधजंपुण्यंस्नानश्राद्धादिभिर्लभेत् ४० संवत्सरकृतार्चायाःसाफल्यायाखिलान्सुरान् ॥ दमनेनार्चयेच्चैत्र्यांविशेषेणरघूत्तमम् ४१ चैत्रस्नानोद्यापनंचतिथौतस्यांस्मृतंबुधैः ४२ अथवैशाखकृष्णायांपंचम्यांपरमोत्सवैः ॥ सीतारामौप्रपूज्याथदोलकस्थौतुबंधुभिः ४३ उद्यापनंतत्रकार्यंमहाफलमभीप्सुना ॥ वैशाखेकृष्णपक्षेतुचतुर्थ्यांसमुपोष्यच ४४ निशायांचप्रकर्तव्यमधिवासनमुत्तमम् ॥ शुचौदेशेमंडपादिकृत्वापूर्वोक्तवच्छुभम् ४५ रामलिंगात्मकेभद्रेधान्यराशौमहत्तमम् ॥ सजलंकलशंस्थाप्यताम्रपात्रंतुतन्मुखे ४६ स्थाप्यवस्त्रेदोलकस्थंरामचंद्रंप्रपूजयेत् ॥ हैमोवाराजतोवापिदोलकस्त्रिपलैःस्मृतः ४७ हैमीपलमितारामसूर्तिःकार्यामनोरमा ॥ तावन्मितारुक्ममूर्तिःसीतायाश्चापिकारयेत् ४८ नानोपचारैःसंपूज्यरात्रौजागरणंचरेत् ॥ नृत्यगीतमंगलाद्यैःपुराणश्रवणादिभिः ४९ प्रभातेतंपुनःपूज्यरामंसीतासमन्वितम् ॥ सहस्रंहवनंकार्यंतिलाज्यपायसादिना १५० तर्पणंराममंत्रेणक्षीरेणैवप्रकारयेत् ॥ ततोगुरुंसपत्नीकंसंपूज्यवसनादिभिः ५१ रामायप्रार्थयेद्भक्त्याप्रबद्धकरसंपुटः ॥ सार्द्धमासद्वयंरामवसंतेतवपूजनम् ५२ दोलकस्थस्यजानक्यायथाशक्त्यामयाकृतम् ॥ प्रसीदानेनश्रीराममामुद्धरभवार्णवात् ५३ एवंसंप्रार्थ्यश्रीरामंतामर्चांमूर्तिसंयुताम् ॥ दद्यात्स्वगुरवेभक्त्यातंप्रणम्यपुनःपुनः ५४ पंचसप्ततियुग्मानिद्विषट्त्रिंशन्मितानिवा ॥ तदर्धान्यथवाशक्त्याभोजयेद्गुरुणासुखम् ५५ ततःस्वयंसुहृन्मित्रैःकार्यंवैभोजनंसुखम् ॥ अशक्तोऽपियथाशक्त्याव्रतमेतत्तुसर्वदा ५६ करोतुरामतुष्ट्यर्थंवसंतपूजनंवरम् ॥ एवंशिष्यत्वयापृष्टंविशेषेणचपूजनम् ५७ सीतारामस्यतत्प्रोक्तंदोलकस्थस्यतेमया ॥ विष्णुदासउवाच ॥ गुरोतेप्रष्टुमिच्छामियत्त्वंवदसविस्तरात् ५८ कयाकामनयाकस्यकार्यंपूजनमुत्तमम् ॥ तत्सर्वंकथयस्वाद्यमयिकृत्वापरांकृपाम् ५९ ॥रामदासउवाच ॥ सम्यक्पृष्टंत्वयावत्ससावधानमनाःशृणु ॥ ब्रह्मवर्चसकामस्तुयजेतब्रह्मणस्पतिम् ६० इंद्रमिंद्रियकामस्तुप्रजाकामःप्रजापतीन् ॥ देवींमायांतुश्रीकामस्तेजस्कामोविभावसुम् ६१ वसुकामोवसून्रुद्रान्वीर्यकामोऽथवीर्यवान् ॥ अन्नादिकामस्त्वदितिंस्वर्गकामोऽदितेःसुतान् ६२ विश्वान्देवान्राज्यकामःसाध्यान्संसाधकोविशाम् ॥ आयुष्कामोऽश्विनौदेवौपुष्टिकामइलांयजेत् ६३ प्रतिष्ठाकामःपुरुषोरोदसीलोकमातरौ ॥ रूपाभिकामोगंधर्वान्स्त्रीकामोऽप्सरउर्वशीम् ६४ आधिपत्यकामःसर्वेषांयजेतपरमेष्ठिनम् ॥ यज्ञंयजेद्यशस्कामःकोशकामःप्रचेतसम् ६५ विद्याकामस्तुगिरिशंदांपत्यार्थंउमांसतीम् ॥ धर्मार्थउत्तमश्लोकंतंतुंतन्वन्पितॄन्यजेत् ६६ रक्षाकामःपुण्यजनानोजस्कामोमरुद्गणान् ॥ राज्यकामोमनून्देवान्निर्ऋतिंत्वभिचरन्यजेत् ६७ कामकामोयजेत्सोममकामःपुरुषंपरम् ॥ अकामःसर्वकामोवामोक्षकामउदारधीः ६८ तीव्रेणभक्तियोगेनयजेतरघुनंदनम् ॥ रामेणसदृशोदेवोनभूतोनभविष्यति ६९ तस्मात्सर्वप्रयत्नेनरामचंद्रंप्रपूजयेत् ॥ तस्याद्यवर्णसामर्थ्याद्यद्वदस्त्वत्रवादिकम् ७० परंश्रेष्ठत्वमापन्नंविस्तारेणवदाम्यहम् ॥ रुक्मंरत्नंरथोरामाराक्षसोरजतंरजः ७१ रक्षारणोरमारक्तंरजकोरागरामठौ ॥ राजारोगोरवीरात्रीराज्यंरजस्वलातथा ७२ एवमादी

192

न्यनेकानिश्रेष्ठान्येवात्रभोद्विज ॥ रुक्मंपीतंमहार्हंचरत्नंरम्यंसुदुर्लभम् ७३ रथोयानंवरिष्ठंचरामायस्याइदंजगत् ॥ राक्षसोदेवभयदोरजतंतत्सुदुर्लभम् ७४ रजःसाक्षा
त्परमाणुर्नित्यःसोत्रप्रकीर्त्यते ॥ रक्षारक्षाकरीज्ञेयारणोजयकरःस्मृतः ७५ रमासादुर्लभात्वत्ररक्तेस्तिरक्ततावरा ॥ रजकोनिर्मलकरोरागःप्रीतिःसुखप्रदा ७६ रामठः
शुद्धिदोऽन्नस्यरुचिदश्चप्रकीर्तितः ॥ राज्यंसौख्यकरंश्रेष्ठंपुत्रदासारजस्वला ७७ एवंयद्यद्रकाराद्यंतत्तच्छ्रेष्ठंभुविस्मृतम् ॥ रामाद्यवर्णसामर्थ्याद्विष्णुदासमयेरितम् ७८
अन्यच्छिष्यशृणुष्वत्वंयन्मयाकथ्यतेतव ॥ यथाप्रोक्तारामनाममुद्रातवमयाशुभा ७९ तथानान्यस्यदेवस्यनाममुद्राप्रजायते ॥ रामनामविनानाममुद्रिकायांस्फुटाक्ष
रम् ८० नकदादृश्यतेस्पष्टंनेतच्चमहदद्भुतम् ॥ अत्रप्रमाणोरामस्यत्वंविद्धिद्विजपुंगव ८१ अतएवरामनामकाश्यांविश्वेश्वरःसदा ॥ स्वयंजप्त्वोपदिशतिजंतूनांमुक्ति
हेतवे ८२ संसारार्णवसंमग्नंनरंयस्तारयेन्मनुः ॥ सएवतारकस्त्वत्ररामिमंत्रःप्रकथ्यते ८३ तारकाख्यस्त्वयंरामनाममंत्रोनचेतरः ॥ अतएवांतकालेऽपिमर्तुकामनरस्य
च ८४ कर्णेसर्वत्रदेवेशरामनामोपदिश्यते ॥ अंतकालेनृणांरामस्मरणंचमुहुर्मुहुः ८५ इतिकुर्वंत्युपदेशंमानवामुक्तिहेतवे ॥ अन्यच्चापिशववाहेःसदालोकैर्मुहुर्मुहुः ८६
रामनामैवमुक्त्यर्थंशवस्यपथिकीर्त्यते ॥ रामनामात्परोमंत्रोनभूतोनभविष्यति ८७ रामनाम्नोजपोनित्यंक्रियतेशंभुनापिच ॥ पार्वत्यानारदेनापिवायुपुत्रादिभिःसदा
८८ रमयतिजनान्रामोरमतेवासदात्मनि ॥ राक्षसानांमारणाद्वारामनाममहत्तमम् ८९ रसातलाद्रकारोहित्वकारोऽवनिसंभवः ॥ महर्लोकान्मकारश्चत्रिवर्णात्मकमुच्य
ते ९० रकारेणनिजंभक्तंभवाब्धेःपरिरक्षति ॥ आकारेणातिसौख्यंहिस्वभक्तस्यकरोतियत् ९१ मनोरथान्मकारेणददातिस्वजनस्ययत् ॥ अथवानिजभक्तस्यमरणा
दिसुहुर्मुहुः ९२ निवारयतियत्शीघ्रंरामनामवरंततः ॥ अयमेवसदाजप्योरामेतिद्व्यक्षरोमनुः ॥ ९३ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणे वा
ल्मीकीयेआदिकाव्येमनोहरकांडेरघुनाथस्यविशेषकालपरत्वेनपूजाविस्तारोनामनवमःसर्गः ॥ ९ ॥ ॥ रामदासउवाच ॥ एवंशिष्यत्वयापूर्वंयेयेप्रश्नाःकृताःशुभाः ॥
श्रीरामविषयेतेतेमयोक्ताःपरमादरात् १ इदानींतिपुनःश्रोतुमिच्छास्तितांवदस्वमाम् ॥ यद्यत्पृच्छसिभोवत्सतत्सर्वंप्रवदाम्यहम् २ ॥ महादेवउवाच ॥ एवंगुरोर्वचःश्रुत्वा
विष्णुदासोऽब्रवीत्पुनः ॥ विष्णुदासउवाच ॥ गुरोत्वयात्वयोध्यायांचैत्रमासफलंमहत् ३ प्रोक्तंतद्विस्तरेणाद्यकथयस्वममांतिकम् ॥ किंदानंकिंफलंतत्रकमुद्दिश्यचरेद्व्रतम्
४ कोविधिश्चकदारंभःसर्वंविस्तरतोवद ॥ यच्छरय्वांरामतीर्थेस्नातव्यंचेतिकीर्तितम् ५ ॥ रामदासउवाच ॥ साधुसाधुमहाप्राज्ञशुभःप्रश्नःकृतस्त्वया ॥ अधुनाचैत्रमा
सस्यमहिमाप्रोच्यतेमया ६ मासानांप्रथमोमासश्चैत्रमासःप्रकीर्त्यते ॥ मातेवसर्वजीवानांसदैवेष्टफलप्रदः ७ दानयज्ञव्रतसमःसर्वपापप्रणाशनः ॥ धर्मसारःक्रियासारस्तपःसारः
सदार्चितः ८ विद्यानांवेदविद्येवमंत्राणांप्रणवोयथा ॥ भूरुहाणांसुरतरुर्धेनूनांकामधेनुवत् ९ शेषवत्सर्वनागानांपक्षिणांगरुडोयथा ॥ देवानांतुयथाविष्णुर्वर्णानांब्राह्मणोयथा १०
प्राणवत्प्रियवस्तूनांभार्येवसुहृदांयथा ॥ आपगानांयथागंगातेजसांतुरविर्यथा ११ आयुधानांयथावज्रंधातूनांकांचनंयथा ॥ वैष्णवानांयथारुद्रोरत्नानांकौस्तुभोयथा १२
पुष्पेपुचयथापद्मंसरसांमानसंयथा ॥ मासानांधर्महेतूनचैत्रमासस्तथास्मृतः ॥ नानेनसदृशोलोकेविष्णुप्रीतिविधायकः १३ चैत्रस्नानेचनिरतेमीनेप्रागरुणोदयात् ॥

लक्ष्मीसहायोभगवान्प्रीतिंतस्मिन्करोत्यलम् १४ जंतूनांप्रीणनंयद्वदन्नेनैवहिजायते ॥ तद्वच्चैत्रेचस्नानेनविष्णुःप्रीणात्यसंशयः १५ यश्चैत्रस्नाननिरतान्जनान्
दृष्ट्वानुमोदते ॥ तावतापिविमुक्ताघोविष्णोर्लोकेमहीयते १६ सकृत्स्नात्वामीनसंस्थेसूर्येप्रातःकृताह्निकः ॥ महापापैर्विमुक्तोऽसौविष्णुसायुज्यमाप्नुयात् १७ स्नानार्थंचै
त्रमासेयःपादमेकंचलेद्यदि ॥ सोऽश्वमेधायुतानांचफलंप्राप्नोत्यसंशयः १८ अथवाकूटचित्तस्तुकुर्यात्संकल्पमात्रकः ॥ सोपिक्रतुशतंपुण्यंलभत्येवनसंशयः १९ योग
च्छेद्वनुरायामंस्नातुंमीनगतेरवौ ॥ सर्वबंधविर्निमुक्तोविष्णोःसायुज्यमाप्नुयात् २० त्रैलोक्येयानितीर्थानिब्रह्मांडांतर्गतानिच ॥ तानिसर्वाणिभोशिष्यसंतिबाह्यजलेऽल्प
के २१ तावद्धिखंतिपापानिगर्जंतियमशासने ॥ यावन्नकुरुतेजंतुश्चैत्रेस्नानंजलाशये २२ तीर्थादिदेवताःसर्वाश्चैत्रेमासिद्विजोत्तम ॥ बहिर्जलंसमाश्रित्यसदासंनिहिताः
शिशो २३ सूर्योदयंसमारभ्ययावत्षट्घटिकावधि ॥ तिष्ठंतिचाज्ञयाविष्णोर्नराणांहितकाम्यया २४ तत्राप्यकुर्वतांस्नानंशापंदत्वासुदारुणम् ॥ स्वस्थानंयांतिभो
शिष्यतस्मात्स्नानंसमाचरेत् २५ नहिचैत्रसमोमासोनकृतेनसमंयुगम् ॥ नचवेदसमंशास्त्रंनतीर्थंगंगयासमम् २६ नजलेनसमंदानंनसुखंभार्ययासमम् ॥ नहिचैत्रसमं
लोकेपवित्रंकवयोविदुः २७ तस्मादयंचैत्रमासःशेषशायिप्रियःसदा ॥ अव्रतेननयेद्यस्तुचांडालश्चसजायते २८ यथागृहंसर्वगुणोपपन्नंपरिच्छदैर्हीनमशोभतेयथा ॥
यथैवकन्यासकलैस्तुलक्षणैर्युक्तापिजीवत्पतिलक्षणोज्झिता २९ शाकंतुयद्वल्लवणेनहीनंनशोभतेसर्वगुणोपपन्नम् ॥ यथाललामैश्चविनासभातैर्वस्त्रेणहीनाललनाचशिष्य ॥
तथान्यमासेषुकृतोहिधर्मश्चैत्रेणहीनश्चवृथैवयाति ३० तस्मात्सर्वप्रयत्नेनयेनकेनापिदेहिना ॥ चैत्रमासस्ययोधर्मःकर्तव्यइतिनिश्चयः ३१ ननंदसूनोःपृथगस्तिरामो
नरामतोऽन्योवसुदेवसूनुः ॥ अतस्त्वयोध्यापुरपालकस्यचैत्रेतुकार्यंविधिवत्प्रपूजनम् ३२ जानकीकांतमुद्दिश्यमीनसंस्थेदिवाकरे ॥ प्रातःस्नात्वाजपेद्राममन्यथानर
कंव्रजेत् ३३ चैत्रमासोहिसकलःसीताराघवदैवतः ॥ यद्यत्कर्महितत्सर्वंतमुद्दिश्यचरेन्नरः ३४ जानकीकांतहेरामचैत्रेमीनगतेरवौ ॥ प्रातःस्नानंकरिष्यामिनिर्विघ्नंकुरु
राघव ३५ चैत्रेऽद्यमीनगेभानौप्रातःस्नानपरायणः ॥ अर्घ्यंतेऽहंप्रदास्यामिगृहाणरघुनायक ३६ गंगाद्याःसरितःसर्वास्तीर्थानिजलदानदाः ॥ प्रतिगृह्णमयादत्तमर्घ्यं
सम्यक्प्रसीदथ ३७ ब्रह्माद्याःसरितःसर्वाऋषयोयेचवैष्णवाः ॥ तेगृह्णंतुमयादत्तंप्रसीदंत्वर्घ्यदानतः ३८ ऋषभःपापिनांशास्तात्वयमत्वंसमदर्शनः ॥ गृहाणार्घ्यंमयादत्तं
यथोक्तफलदोभव ३९ इतिचार्घ्यंसमर्प्याथपश्चात्स्नानंसमाचरेत् ॥ वाससीपरिधायाथकृत्वाकर्माणिसर्वशः ४० जानकीकांतमभ्यर्च्यप्रसूनैर्मधुसंभवैः ॥ श्रुत्वारामक
थांदिव्यामेतन्मासप्रशंसिनीम् ४१ कोटिजन्मार्जितात्पापान्मुक्तोमोक्षमवाप्नुयात् ॥ चैत्रेयःकांस्यभोजीहितथाचाश्रुतसत्कथः ४२ नस्नातोचाप्यदाताचनरकानेवविं
दति ॥ यथामाघःप्रयागेहिस्नातव्यःपुण्यमिच्छता ४३ कार्तिकोपियथाकाश्यां पंचगंगाजलेस्मृतः ॥ द्वारकायांयथाप्रोक्तो वैशाखोमाधवप्रियः ४४ अयोध्यायांराम
तीर्थेतथाचैत्रःप्रकीर्तितः ॥ प्रयागेमासमात्रेणयत्फलंप्राप्यतेनरैः ४५ अयोध्यायांरामतीर्थेसकृत्स्नानेनतत्फलम् ॥ वैशाखद्वादशभवंपुण्यंयद्गोमतीजले ४६ तत्पुण्यं
शरयुतोयेऽयोध्यायांप्राप्यतेनरैः ॥ चैत्रेमासित्रिभिःस्नानैरामतीर्थेनसंशयः ४७ कार्तिकेपंचगंगायांयेस्नानंद्वादशाब्दकम् ॥ अयोध्यायांरामतीर्थेचैत्रेपक्षेण

॥ २९ ॥

तत्फलम् ४८ अयोध्यादुर्लभालोकेनराणांपापकारिणाम् ॥ तावद्गर्जंतिपापानियावद्दृष्टानसापुरी ४९ अयोध्यायांयथाभावोतदारामकृतानिच ॥ जगत्यांयानितीर्थानितत्र स्नानंविधीयताम् ५० यत्रायोध्यापुरीनास्तिस्नानार्थंसरयूर्नच ॥ रामतीर्थंनयत्रास्तितदातीर्थेपुकारयेत् ५१ तैलाभ्यंगंदिवास्वापस्तथावैकांस्यभोजनम् ॥ खट्वा निद्राग्रहेस्नानंनिषिद्धस्यचभक्षणम् ५२ चैत्रेतुवर्जयेदष्टौद्विर्भुक्तंनक्तभोजनम् ॥ चैत्रेमासेतुमाध्यान्हेश्रांतानांचद्विजन्मनाम् ५३ पादावनेजनंकुर्यात्तद्व्रतंतुव्रतोत्तमम् ॥ मार्गेऽध्वगानांयोमर्त्यःप्रपादानंचचैत्रके ५४ मार्गेछायांतुयःकुर्यात्सस्वर्गेचमहीयते ॥ सलिलंसलिलाकांक्षीछायांछायामपीच्छति ५५ व्यजनंव्यजनाकांक्षीदानमेतत्तुचै त्रके ॥ जलंछत्रंतुव्यजनंदानंमीनेविशिष्यते ॥ चैत्रेमासेतुसंप्राप्तेब्राह्मणायकुटुंबिने ५६ अदत्त्वोदककुंभंतुचातकोभुविजायते ॥ चैत्रेदेयंजलंचान्नंदेयाशय्यामनोरमा ५७ आदर्शदानंतांबूलगुडदानेप्रकारयेत् ॥ गोधूमतुवरीदानंदानंदध्योदनस्यच ५८ घृतयुक्तंकांस्यपात्रंदानमिक्षुरसस्यच ॥ तथाश्रीफलदानंचदानंचूतफलस्यच ॥ ५९ सूक्ष्मवस्त्रमंचकयोःपानपात्रंकमंडलुम् ॥ यतीनांदंडदानंवैतैलदानंमठेषुच ६० जीर्णोद्धारंमठानांचघंटानांकरणंतथा ॥ प्रासादकरणंचैववापीकूपादिकंतथा ॥ ६१ मार्गस्थानांछत्रदानंमाध्यान्हेऽतिथिपूजनम् ॥ करपात्रंयतीनांचगोग्रासंतुगवामपि ६२ एतानिचैत्रमासेतुदानानिकथितानिहि ॥ फलंशाकंतुमूलंचकंदंपुष्पंतुचं दनम् ६३ उशीरंशीतलंद्रव्यंकर्पूरंकस्तुरींशुभाम् ॥ दीपदानंधेनुदानंगेहदानंतथास्मृतम् ६४ गोरसानांपृथग्दानंयतिब्राह्मणभोजनम् ॥ सुवासिनीपूजनंचरामनाम प्रलेखनम् ६५ पुस्तकानांतथादानंतथाकुंकुमकेशरे ॥ जातीफलंलवंगाश्वजातीपत्रिवरांगके ६६ धातकीनागरंधूपंबीजपूरंकलिंगम् ॥ जंबीरंपनसश्चैवकपित्थंमातुलिं गकम् ६७ कूष्मांडदानमारामकरणंमार्गशोधनम् ॥ तथोपानहदानंचगजवाजिभवंतथा ६८ एतानिचैत्रमासेतुदानानिकथितानिहि ॥ यानिचैत्रेतुवर्ज्यानितानितेप्रव दाम्यहम् ६९ सर्वाण्येतानिमांसानिक्षौद्रंसौवीरकंतथा ॥ राजमाषादिकंचापिचैत्रस्नायीप्रवर्जयेत् ७० परान्नंचपरद्रोहंपरदारागमंतथा ॥ तीर्थंग्रानिसदेवेहचैत्रस्ना यीप्रवर्जयेत् ७१ द्विदलंतिलतैलंचतथान्नंशल्यदूषितम् ॥ भावदुष्टंशब्ददुष्टंचैत्रस्नायीतुवर्जयेत् ७२ देववेदद्विजानांचगुरुगोव्रतिनांतथा ॥ स्त्रीराजमहतांनिंदांचैत्र स्नायीविवर्जयेत् ७३ प्राण्यंगमामिषंचूर्णफलेजंबीरमामिषम् ॥ धान्येमसूरिकाप्रोक्ताचान्नंपर्युषितंतथा ७४ ब्रह्मचर्यमधःसुप्तिःपत्रावल्यांचभोजनम् ॥ चतुर्थकालेभुं जीतकुर्यादेवंसदाव्रती ७५ संवत्सरप्रतिपदितैलाभ्यंगंतुकारयेत् ॥ चैत्रस्नायीनरोन्यत्रतैलाभ्यंगंनकारयेत् ७६ अलाबूंचापिवृंताकंकूष्मांडंबृहतीफलम् ॥ श्लेष्मातकं कलिंगंचकपित्थंचैववर्जयेत् ७७ रजस्वलांत्यजम्लेच्छपतितंव्रातकैःसह ॥ द्विजद्विड्देवबाह्यैश्चनवदेत्सर्वदाव्रती ७८ पलांडुंलशुनंचैवछत्राकंगृंजनंतथा ॥ नालिकामूलकं शिग्रुंचैत्रस्नायीविवर्जयेत् ७९ एभिःस्पृष्टंश्वकाकैश्चसूतकान्नंचवर्जयेत् ॥ द्विपाचितंचदग्धान्नंचैत्रस्नायीविवर्जयेत् ८० एतानिवर्जयेन्नित्यंव्रतीसर्वव्रतेष्वपि ॥ कृच्छ्रा द्यंचप्रकुर्वीतस्वशक्त्यारामतुष्टये ८१ क्रमात्कूष्मांडबृहतीछत्राकंमूलकंतथा ॥ श्रीफलंचकलिंगंचफलंधात्रीभवंतथा ८२ नारीकेलमलाबुंचपटोलंबदरीफलम् ॥ चर्मवृं

१ अयोध्यायापदाभावइतिपाठः । २ पतितान्नवकैःसहेतिपाठः ।

ताकर्कंवल्लीशाकंतुलसिजंतथा ८३ शाकान्येतानिवर्ज्यानिक्रमात्प्रतिपदादिषु ॥ धात्रीफलंरवौतद्वद्वर्जयेत्सर्वदागृही ८४ एभ्योऽन्यद्वर्जयेत्किंचित्तद्रामप्रीतयेनरैः ॥
दत्त्वाव्रतांतेविप्रायभक्षयेत्सर्वदैवहि ८५ फाल्गुनीपौर्णिमारभ्ययावच्चैत्रीतुपौर्णिमा ॥ चैत्रस्नानंतुतावद्धिनरैःकार्यंचभक्तितः ८६ अथवामीनगोभानुर्यावत्तावत्प्रकारयेत् ॥
दशमींफाल्गुनींशुद्धांसमारभ्यमधोःसिता ८७ यावद्भवेत्तुदशमीतावत्स्नानंप्रकारयेत् ॥ स्नानस्यैवंत्रयोभेदाःशिष्यैतेसमुदीरिताः ८८ चैत्रशुक्लतृतीयायायावद्वैशाखसं
भवा ॥ तृतीयाशुक्लपक्षस्याक्षय्येतिस्मृतात्रया ८९ तावच्चसीतलागौरीस्नातव्यासुखलब्धये ॥ सीतातीर्थेतुनारीभिःपूजनीयाचजानकी ९० तृतीयायांतुचैत्रस्य
सितपक्षोद्भवातथा ॥ वैशाखशुक्लपक्षेयातृतीयाक्षय्यसंज्ञिका ९१ नारीयासीतलागौरीव्रतस्नानपरायणा ॥ अभ्यंगंसाकरोत्वस्योस्तिथ्योर्नान्यदिनेकदा ९२ त्रिंशच
तिथयःपुण्याश्चैत्रमासेमहत्तमाः ॥ तथापिहिविशेषोऽत्रतिथीनांवर्ण्यतेमया ९३ चैत्रमासेकृष्णपक्षेपंचमीदशमीतथा ॥ एकादशीद्वादशीचशिवरात्रिस्त्वमातथा ९४
एताःशुभाश्चैत्रकृष्णेमहापातकनाशनाः ॥ इदानींचैत्रमासस्यसितपक्षोद्भवाःशुभाः ९५ वर्ण्यंतेतिथयःश्रेष्ठानराणांहितकाम्यया ॥ सांवत्सरप्रतिपदमारभ्यदशमीदिनम्
९६ यावत्तावच्छुभाःसर्वाःस्नानदानादिकर्मणि ॥ यत्कृतंचप्रतिपदिस्नानदानव्रतादिकम् ९७ द्वितीयायांचतत्प्रोक्तंद्विगुणंनात्रसंशयः ॥ यत्कृतंचद्वितीयायांभक्त्या
स्नानादिकंनरैः ९८ द्विगुणंतत्तृतीयायांचैत्रमासेनृपोत्तम ॥ एवंसर्वासुतिथिषुयावत्स्यान्नवमीशुभा ९९ एवंविशेषोज्ञातव्योयथाऽऽज्यादिषुचर्वणात् ॥ यथाक्षीराद्दधिप्रो
क्तंदध्नस्तुनवनीतकम् १०० नवनीताद्घृतंयद्वत्तथात्रतिथिनिर्णयः ॥ चैत्रमासस्तुमासानांतत्रपक्षःसितोवरः १०१ सितपक्षेक्रमेणैवयावत्सानवमीतिथिः ॥ ता
वदेकैकशःश्रेष्ठाःसर्वासुनवमीवरा १०२ यस्यांजातंरामजन्मधर्मसंस्थापनायहि ॥ तस्मात्तिथिस्तुसाज्ञेयाकर्मनिर्मूलनक्षमा १०३ तस्यांदत्तंहुतंजप्तंयत्किंचित्सुकृतं
शुभम् ॥ सर्वंतदक्षयंविंद्यान्नात्रकार्याविचारणा ४ प्रतिपद्दिनमारभ्यनवरात्रमुपोषयेत् ॥ प्रत्यहंरघुवीरस्यपूजनंचैवकारयेत् ५ संवत्सरप्रतिपदिध्वजाःसौधोपरिस्थिताः ॥
दिव्यवस्त्रैश्चमाल्यैश्चमंडिताश्चमनोरमाः १०६ रामजन्मसूचनार्थंप्रीत्यर्थंराघवस्यच ॥ गृहेगृहेनरैःकार्याःपूजनीयाश्चभक्तितः ७ गृहेदेवालयेवाथगोष्ठेवृंदावनेशुभे ॥
संमार्जनादिकंनित्यंकार्यंचन्दनवारिभिः ८ ततःपाषाणचूर्णैश्चनानापद्मादिकानिहि ॥ लेखनीयानिभूम्यांतुनीलपीतादिवर्णकैः ९ अष्टोत्तरसहस्राख्यंरामतोभद्रमुत्त
मम् ॥ शताख्यंवालिखेद्भद्रमथवान्यन्मनोरमम् ११० तस्योपरिमहान्रम्यश्चित्रवर्णश्चमण्डपः ॥ देयोद्वाराणिचत्वारिकार्याणितोरणानिच ११ कदलीस्तंभयुक्तानिही
क्षुदण्डयुतानिच ॥ नानाघण्टाकिंकिणीभिर्ध्वनितान्युज्ज्वलानिच १२ रम्यादर्शैर्मंडितानिविचित्राणिशुभानिच ॥ नानाचित्रवितानैश्चमुक्ताहारैर्युतानिच १३ त
स्मिन्हेममयःकार्योमंचकोरत्नमण्डितः ॥ तस्योपरिमहावस्त्रैःशय्याकार्यामनोरमा ॥ तस्यांषोडशमाषैस्तुप्रतिमाकांचनोद्भवा १४ द्विभुजारामचन्द्रस्यसर्वलक्षणल
क्षिता ॥ चतुर्विंशतिमाषैश्चप्रतिमारजतोद्भवा १५ कौसल्यायाःशुभाकार्यापूजनीयामनोरमा ॥ यथावित्तानुसारेणपूजयेत्प्रत्यहंनरः १६ भेरीमृदंगतूर्यैश्चगीतनृत्यादि
कारयेत् ॥ नानापकान्ननैवेद्यैरुपचारैःसुपूजयेत् १७ प्रतिपद्दिनमारभ्ययावत्तुनवमीदिनम् ॥ रामायणंतावदेवपठनीयमिदंशुभम् १८ यद्वैवाल्मीकिनागीतंश्रवणान्मंग

ल्पदम् ॥ आनन्दसंज्ञकंरम्यंपठनीयंमनोरमम् १९ नवकांडानिनवभिर्दिनैरेवपठेन्नरः ॥ दिवसेदिवसेकांडंपठनीयंप्रयत्नतः २० अथवाप्रत्यहंसर्गाःपठितव्यास्तुद्वादश ॥
शेषस्त्वेकःकदामध्येऽधिकःसोऽपिपठेन्नरः २१ अष्टोत्तरशतैःसर्गैरामकीर्तनमालिका ॥ मेरुयुक्तापठेद्देवंरामाग्रेनवभिर्दिनैः २२ सर्वतीर्थेषुयत्पुण्यंसर्वदानेषुयत्फलम् ॥
रामायणस्यपठनात्तत्फलंनवरात्रके २३ श्लोकंवाश्लोकपादंवायद्रामायणसंभवम् ॥ नवरात्रेपठिष्यंतिचैत्रेतेमोक्षभागिनः २४ एवंहिप्रत्यहंकार्यंकौसल्यारामपूजनम् ॥
सपुत्रीणांतुनारीणांतत्रकार्यंप्रपूजनम् २५ सपुत्रद्विजवर्याणांविशेषात्पूजनंस्मृतम् ॥ वस्त्राद्यलंकारयुतंचित्रभोजनभोजितम् २६ एवंकृत्वाविधिंसर्वंनवम्यांचविशेषतः ॥
पूजयित्वारामचन्द्रंवाहनारूढमुत्तमम् २७ भेरीमृदंगघोषैश्चतूर्यदुंदुभिनिःस्वनैः ॥ वारस्त्रीकृतनृत्यैश्चगायकानांचगायनैः २८ एवंनानासमुत्साहैर्मंडितंछत्रशोभि
तम् ॥ चामरैर्वीज्यमानंचपुष्पकेसंस्थितंवरम् २९ रामतीर्थांतिकंनीत्वापंचामृतघटैर्वरैः ॥ स्नापयेद्रघुवीरंहिपुण्यतोयैस्ततःपरम् ३० रुद्रसूक्तैर्विष्णुसूक्तैःसहस्रैर्ना
मभिस्तुवा ॥ मांगल्यद्रव्यसंमिश्रैर्जलैस्तमभिषेचयेत् ३१ मांगल्यवरद्रव्यैश्चनानातन्मंगलाभिदम् ॥ प्रोच्यतेमंगलस्नानंतच्चैत्रेदुर्लभंनृणाम् ३२ तत्पंचामृततीर्थंतु
तीर्थमध्येविनिक्षिपेत् ॥ तत्रसर्वैर्जनैःशीघ्रंस्नातव्यंतदनंतरम् ३३ सहस्रावभृथस्नानैर्यत्फलंप्राप्यतेनरैः ॥ तत्फलंरामचन्द्रस्यमंगलस्नानकारणात् ३४ पुष्करादिषु
तीर्थेषुगंगाद्यासुसरित्सुच ॥ प्राप्यतेयत्फलंस्नानान्मंगलस्नानकृच्चतत् ३५ एवंरामंतुसंस्नाप्यसीतायुक्तंप्रपूज्यच ॥ पुनःपूर्वोक्तवाद्यादिमंगलैरानयेद्गृहम् ३६ गृहेरा
मंपुनःपूज्यरामायणकृतंवरम् ॥ पारायणंसमाप्याथपुस्तकंपूजयेच्छुभम् ३७ नानोत्सवैर्दिनंनीत्वाकार्यंजागरणंनिशि ॥ दशम्यांप्रातरुत्थायभोजयित्वाद्विजान्बहून् ॥
३८ पूजयित्वापुनःसर्वंगुरवेतद्विसर्जयेत् ॥ ततःस्वयंसुहृन्मित्रैःकुर्याद्भोजनमुत्तमम् ३९ एवंव्रतंसमाख्यातंचैत्रस्यनवरात्रके ॥ अतस्तन्नवरात्रंहिश्रेष्ठंचैत्रेमहत्तमम् ॥
४० नवरात्रेऽपिसारामनवमीपरमार्थदा ॥ तत्समानातिथिर्नान्याचैत्रमासेशुभप्रदा ४१ अतःपरंप्रवक्ष्यामिचैत्रोद्यापनकंविधिम् ॥ यत्कृत्वासफलंसर्वंचैत्रस्नानंतुजायते
४२ चैत्रेमासिसितेपक्षेयाचैह्येकादशीतिथिः ॥ सर्वासुतिथिषुश्रेष्ठाचोपोष्याव्रतकारिभिः ४३ श्रेष्ठासाद्वादशीज्ञेयातस्यांतुयमपूजनम् ॥ कार्यंदध्योदनंदत्वाजलकुंभः
प्रदीयताम् ४४ तिस्रश्चतिथयःश्रेष्ठाश्चैत्रेमासिमहत्तमाः ॥ त्रयोदशीतथाभूतांपौर्णमासीतथैवच ४५ यासुस्नानंचदानंचसर्ववांछितदायकम् ॥ यैर्नस्नातंचैत्रमासेनस्ना
तंनवरात्रके ४६ तैस्तुचान्यदिनेस्नात्वाचैत्रस्नानफलंलभेत् ॥ तासुश्रेष्ठापौर्णिमाहिसर्वपातकनाशिनी ४७ तस्यामुद्यापनंप्रोक्तंचैत्रस्नानफलाप्तये ॥ उपोष्यचचतुर्दश्यांपूर्व
वन्मण्डपादिकम् ४८ कृत्वातस्मिन्धान्यराशौकलशंवारिपूरितम् ॥ स्थापयित्वातदुपरिहेमपात्रंसुविस्तृतम् ४९ पंचरत्नयुतंस्थाप्यवस्त्रेणाच्छादयेच्चतत् ॥ तस्मि
न्सीतायुतंरामंसौवर्णंविधिपूर्वकम् ५० भ्रातृभिर्वायुपुत्रेणसुग्रीवेणसमन्वितम् ॥ विभीषणांगदाभ्यांतुजांबवत्सहितंतथा ५१ पूजयेद्देवदेवेशंपरमंगुर्वनुज्ञया ॥ उपचारैः
षोडशभिर्नानाभक्ष्यसमन्वितैः ५२ रात्रौजागरणंकुर्याद्गीतवाद्यादिमंगलैः ॥ ततस्तुपौर्णिमास्यांचसपत्नीकान्द्विजोत्तमान् ५३ त्रिंशन्मितानथैकंवास्वशक्त्या
वानिमन्त्रयेत् ॥ ततस्तान्भोजयेद्धीमान्पायसान्नादिनाव्रती ५४ अतोदेवाइतिद्वाभ्यांजुहुयात्तिलसर्पिषा ॥ प्रीत्यर्थंदेवदेवस्यदेवानांचपृथक्पृथक् ५५ दक्षिणां

चयथाशक्त्याप्रदद्याच्चततोनमेत् ॥ पुनर्देवंसमभ्यर्च्यदेवांश्चतुलसींतथा ९६ ततोगांकपिलांतत्रपूजयेद्विधिनाव्रती ॥ गुरुंव्रतोपदेष्टारंवस्त्रालंकारमण्डनैः ९७ मनो. कां.
श्रा. रा. सपत्नीकंसमभ्यर्च्यततोविप्रान्क्षमापयेत् ॥ युष्मत्प्रसादाद्देवेशःसुप्रसन्नोऽस्तुवैमम ९८ व्रतादस्माच्चयत्पापंसप्तजन्मकृतंमया ॥ तत्सर्वंनाशमायातुस्थिरामेचास्तु
संततिः ९९ मनोरथास्तुसफलाःसंतुनित्यंममार्चनात् ॥ देहांतेवैष्णवंस्थानंममचास्त्वतिदुर्लभम् ६० इतिक्षमाप्यतान्विप्रान्प्रसाद्यचविसर्जयेत् ॥ तामर्चां ८
॥ ३१ ॥ गुरवेदद्याद्रत्नयुक्तांसदाव्रती ६१ ततःसुहृत्प्रियैर्युक्तैःस्वयंभुंजीतभक्तिमान् ॥ एवमुद्यापनविधिश्चैत्रस्नानफलाप्तये ६२ सविस्तरश्चकर्तव्यश्चैत्रस्नानपरायणैः ॥ एवंयः
कुरुतेसम्यक्चैत्रस्नानव्रतंनरः ६३ सर्वपापैर्विनिर्मुक्तोविष्णुसायुज्यमाप्नुयात् ॥ सर्वव्रतैःसर्वतीर्थैःसर्वदानैश्चयत्फलम् ६४ तत्कोटिगुणितंपुण्यंसम्यगस्यविधानतः ॥ देह
स्थितानिपापानिनाशमायांतितद्भयात् ६५ क्वयास्यामोवदंत्येवंयच्चैत्रव्रतकृन्नरः ॥ तस्मादवश्यमेवैतच्चैत्रस्नानंसमाचरेत् ६६ श्रीचैत्रव्रतकथनंपठंतिभक्त्यायेवैतद्द्विज
यतिवैष्णवान्वदंति ॥ तेसम्यक्व्रतकरणात्फलंलभेततत्सर्वकलुषविनाशनंलभंते १६७ ॥ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेवाल्मीकीयेआदिका
व्येमनोहरकांडेचैत्रमहिमावर्णनंनामदशमःसर्गः १० ॥ ॥ विष्णुदासउवाच ॥ किमर्थंसर्वमासेषुचैत्रमासःस्मृतोवरः ॥ तत्कारणंवदस्वाद्यगुरोसंतोषहेतवे १ ॥ श्रीरा
मदासउवाच ॥ शृणुशिष्यमहाबुद्धेसम्यक्पृष्टंत्वयामम ॥ ब्रह्मप्रार्थनयाविष्णुर्यदाभूम्यांद्विजोत्तम २ अयोध्यापालकस्याथराज्ञोदशरथस्यहि ॥ कौसल्यायास्तुभार्याया
जठरान्निर्गतोबहिः ३ चैत्रेमासिसितेपक्षेनवम्यांपरमेदिने ॥ पुनर्वस्वृक्षनक्षत्रेप्रोच्चस्थेग्रहपंचके ४ मध्यान्हेप्रकटोजातःश्रीरामोराजसद्मनि ॥ आनंदश्चतदाजातःसर्वत्र
जगतीतले ५ देवदुंदुभयोनेदुःपुष्पवृष्टिःशुभाऽपतत् ॥ राजसद्मनिवाद्यानांसंघानेदुःपृथक्पृथक् ६ ननृतुर्वारनार्यश्चजगुर्गीतंमनोरमम् ॥ तदासर्वेहिभूमिस्थाजनाद्रष्टुं
शिशुंशुभम् ७ प्रययुर्नृपजंबालंदृष्ट्वामुदमवाप्नुयुः ॥ नानाविमानमारूढादिविदेवाःसवासवाः ८ मिलिताराघवंद्रष्टुंकौसल्याजठरोद्भवम् ॥ ब्रह्मारुद्रश्चसूर्यश्चदेवेंद्रादिसुराः
शुभाः ९ उत्सवान्विदधुःसर्वेतदाश्रीरामजन्मनि ॥ एवमुत्साहसमयेदेवाहर्षाद्दिविस्थिताः १० नमस्कृत्वारामचंद्रंतुष्टुवुर्विविधैःस्तवैः ॥ प्रोचुस्तदासुराःसर्वेहर्षाद्देवं
रघूत्तमम् ॥ ११ अद्यधन्यावयंदेवमुक्ताश्चासुरजाद्भयात् ॥ यन्निमित्तंत्वयादेवह्यवतारःकृतोभुवि १२ अस्माकंहर्षकालोऽयंदेवदेवकृपानिधे ॥ तस्मादयंसदापुण्यःश्रेष्ठः
कालेभविष्यति १३ त्वंचाप्यंगीकुरुष्वाद्यदेह्यस्मैसुबहून्वरान् ॥ इतितेषांवचःश्रुत्वादेवानांराघवःशुभम् १४ तुतोषनितरांतेषुदेवेषुभगवान्हरिः ॥ श्रीरामउवाच ॥
सम्यक्प्रोक्तंसुराःसर्वैर्यत्त्रैलोक्योपकारकम् १५ भवद्भिःप्रार्थितोऽहंतुहर्षकालेमहत्तमे ॥ शृणुध्वंवचनंमेऽद्ययद्वर्षात्प्रोच्यतेमया १६ सर्वेषामेवमासानांश्रेष्ठश्चायंभविष्य
ति ॥ वैशाखात्कार्तिकःश्रेष्ठःकार्तिकान्माघएवच १७ माघमासाद्वरश्चायंचैत्रमासोभविष्यति ॥ चैत्रमासेकृतंदत्तंहुतंस्नातंविचिंतितम् १८ सर्वंकोटिगुणंप्रोक्तमयो ॥ ३१ ॥
ध्यायांविशेषतः ॥ यच्छ्रेयश्चाश्वमेधेनयद्गोमेधेनवैफलम् १९ यत्फलंसोमयागेनतच्चैत्रेस्नानमात्रतः ॥ सूर्यग्रहेकुरुक्षेत्रेयच्छ्रेयःस्नानदानतः २० तच्छ्रेयःस्यान्मधौस्ना
नादयोध्यायांसुरोत्तमाः ॥ अत्रवैशरयूतीरेरावणंलोकरावणम् २१ हत्वातत्पापशांत्यर्थंकरिष्यामिक्रतुंशुभम् ॥ यत्रयागसमाप्तिर्हिभविष्यतिसुरोत्तमाः २२ तत्तीर्थं

ममनाम्नाहिख्यातिंश्रेष्ठांगमिष्यति ॥ अयोध्यायांरामतीर्थेशरयूजलमध्यगे २३ चैत्रस्नानंप्रकुर्वाणास्तेनरामोक्षभागिनः ॥ यथामाघःप्रयागेहिस्नातव्यःसुखमि
च्छता २४ कार्तिकोऽपियथाकाश्यांपंचगंगाजलेस्मृतः ॥ द्वारकायांयथाप्रोक्तोवैशाखोमाधवप्रियः २५ अयोध्यायांरामतीर्थेतथाचैत्रोभविष्यति ॥ सर्वेषामेव
मासानामादौश्रेष्ठोभविष्यति २६ चैत्रमासेतुसंप्राप्तेसर्वेदेवाःसवासवाः ॥ बहिर्जलेसमाश्रित्यातिष्ठध्वंहिममाज्ञया २७ एवंहरिस्तान्मघवादिकान्सुरानुक्त्वा
सुरैस्तैश्चनमस्कृतोबभौ ॥ वृषेंद्रमारुह्यशिवोनिजंस्थलंययौसुरास्तेऽपिययुर्निजंस्थलम् २८ तस्मात्सर्वेषुमासेषुमुख्यश्चैत्रःप्रकीर्त्यते ॥ मासादौप्रथमःसर्वैःप्रोच्यते
हिवराद्वरेः २९ एवंशिष्ययथापृष्टंतथातेविनिवेदितम् ॥ कारणंचैत्रमासस्यरामचंद्रवरादिकम् ३० ॥ विष्णुदासउवाच ॥ स्वामिन्गुरोत्वयाचैत्रस्नानं
पुण्यतमंस्मृतम् ॥ तत्केनाचरितंपूर्वंकासिद्धिस्तत्प्रभावतः ३१ तत्सर्वंविस्तरेणैवममाग्रेत्वंनिवेदय ॥ रामदासउवाच ॥ सम्यक्पृष्टंस्वस्थमनाःशृणुत्वं
यन्मयोच्यते ३२ ममतातोनृसिंहाख्यःपुराऽभ्वासीद्द्विजोत्तम ॥ तस्यैकोनियमश्चासीत्प्रत्यहंभूसुरोत्तमम् ३३ एकमब्जकक्षेत्रस्थंद्विजमन्नार्थिनंत्वपि ॥ स्नुषास्त्रीपुत्र
तनयदासीदासादिभिर्युतम् ३४ कुटुंबभोजनंतस्मैसंपूज्यान्नैर्विधीयताम् ॥ लक्ष्मीनाम्नीतुमन्माताताबुभौरामतत्परौ ३५ पुत्रोत्पत्तिमदृष्ट्वातौवृद्धौपुत्रार्थमुद्यतौ ॥ स्व
दोषपरिहारार्थमुपायंकर्तुमुद्यतौ ३६ निवासाख्येपुरेगत्वादंपतीमोहिनींशुभाम् ॥ स्वीयेष्टदेवतामंबांप्रवरातीरवासिनीम् ३७ दृष्ट्वादेव्याश्चतौसेवांनित्यंतत्रप्रचक्रतुः ॥ गते
बहुतिथेकालेवरदासामहालया ३८ प्रसन्नातंद्विजंभूत्वाप्राहतद्दोषशांतये ॥ हेनृसिंहमहाबुद्धेगच्छायोध्यापुरींप्रति ३९ तत्रवैसरयूतोयेरामतीर्थेमहत्तमे ॥ चैत्रेमासिवसं
ततौयदास्यान्मीनगोरविः ४० चैत्रस्नानंमासमेकंकुरुतत्रद्विजोत्तम ॥ पातकंसकलंत्यक्त्वापुत्रंप्राप्स्यस्यनुत्तमम् ४१ इतिदेव्यावचःश्रुत्वाद्विजश्चितापरस्तदा ॥ ययौ
मार्गेह्हदिध्यायन्नयोध्याख्यांपुरींशुभाम् ४२ चिंतयापरयाव्याप्तःकथंगंतुंहिशक्यते ॥ मयायोध्यापुरीदूरमितःकष्टंचजीवितम् ४३ इतिचिंतायुतोमार्गेकचित्तिष्ठन्क
चित्स्खलन् ॥ भार्यायाश्चकरंधृत्वावृद्धश्चैवंययौद्विजः ४४ एवंगोदावरीतीरंगत्वास्नात्वाद्विजोत्तमः ॥ राममूर्तिंपुरःस्थाप्यपूजयामासभक्तितः ४५ तावत्तस्मैप्रसन्नोभू
द्रामोदेव्याःप्रसादतः ॥ द्विजंप्राहरघुश्रेष्ठोभोनृसिंहद्विजोत्तम ४६ माऽयोध्यांत्वमितोगच्छशृणुमेवचनंशुभम् ॥ इतःपूर्वेह्यदूरंहियोजनत्रयसंमितम् ४७ प्रतिष्ठाना
भिधंक्षेत्रंगोदायाउत्तरेतटे ॥ तत्रास्तिरामतीर्थंहिमन्नाम्नाचमयाकृतम् ४८ तत्रत्वंगच्छविप्रेंद्रस्नानंशीघ्रंहिभार्यया ॥ चैत्रमासेवसंततौयदास्यान्मीनगोरविः ४९ तदा
कुरुविशेषेणपूजयित्वाचमांशुभम् ॥ पापक्षयःपुत्रलाभोभविष्यतिनसंशयः ५० इत्युक्त्वारघुवीरस्तुतत्रैवांतरधीयत ॥ यत्रगंगान्हदेरामःप्रसन्नोभूद्द्विजायहि ५१ तस्मा
त्सवैरामन्हदोनाम्नासर्वत्रकीर्त्यते ॥ तद्रामवचनाद्विप्रःप्रतिष्ठानंपुरंययौ ५२ मासमेकंचवैस्थित्वाचैत्रस्नानंचकारह ॥ सूर्योदयेसमुत्थायकृतशौचादिसत्क्रियः ५३
स्नात्वातस्मिन्रामतीर्थेसरयूसंगमान्विते ॥ रामचंद्रंस्वर्णगिरौपूजयामासभक्तितः ५४ प्रदक्षिणाःस्वर्णगिरेश्चकारनवप्रत्यहम् ॥ नवपुष्पैश्चनैवेद्यैःपूजयामासराघ
वम् ५५ चैत्रशुक्लतृतीयायायावद्वैशाखसंभवा ॥ तृतीयासीतलागौरीस्नानंचक्रेचभार्यया ५६ एवंमासंव्रतंकृत्वासद्विजस्तुष्टमानसः ॥ अब्जकंप्रतिमार्गेणययौल

क्ष्म्यासमन्वितः ५७ यावन्मार्गेद्विजोऽगच्छत्तावद्दृष्टस्त्रिभिर्वरैः ॥ पिशाचैःक्षुत्तुधाक्रांतैस्तानुद्धार्यंसभार्यया ५८ ययौस्वनगरंरम्यंगोदानाभिविराजितम् ॥ चैत्रस्नानप्र
भावेणजातस्तस्मात्सुतरत्वहम् ५९ तस्मान्मयातेकथितंवरंहिस्नानंमघोतेसरयूजलेवै ॥ साकेतपुर्यांवररामतीर्थेमुक्तिप्रदंमोक्षदमुत्तमंच ६० ॥ विष्णुदासउवाच ॥
कथंपिशाचयोन्यास्तेमुक्ताविप्रेणवैत्रयः ॥ कस्मात्पापाच्चतेसर्वेपैशाचींयोनिमाश्रिताः ६१ तत्सर्वंविस्तरेणैवश्रोतुमिच्छामित्वन्मुखात् ॥ ॥ श्रीरामदासउवाच ॥
शृणुशिष्यप्रवक्ष्यामिरंभानाम्नीवराप्सराः ६२ चैत्रेस्नात्वावरायोध्याशरयूनिर्मलेजले ॥ आर्द्रवस्त्रयुताचारुहास्याऽलंकारमण्डिता ६३ गृहीत्वाशरयूतोयंरत्नकांचन
निर्मिते ॥ पात्रेरामेश्वरंसेतौद्रष्टुंमौनेनसाजवात् ६४ ययावाकाशमार्गेणपिशाचायत्रतेत्रयः ॥ तदार्द्रवस्त्रचांचल्याद्बिंदुभिःप्रोक्षिताश्चते ६५ क्रूरस्वभावमुत्सृज्यचा
श्चर्यंपरमंययुः ॥ पूर्वजन्मानुस्मरणमभूत्तेषांतदाऽप्सरः ६६ विस्मयाविष्टचित्तास्तेतांदृष्ट्वाप्सरसंदिवि ॥ बहुधाप्रार्थयामासुस्तान्सापप्रच्छसंज्ञया ६७ कस्माद्यूयंपि
शाचाहिजातास्तत्कथ्यतांमम ॥ इतितत्करकृत्संज्ञाप्रेरितास्तेत्रयस्तदा ६८ तेषुद्वौवर्तमानंहिकथयामासतुश्चताम् ॥ शृणुभामिनिचावांहिपूर्वजन्मनिभूसुरात् ६९
विरजायांसमुत्पन्नौश्रोत्रियाद्धरशर्मणः ॥ उभावध्ययनंकर्तुंकंचिन्नारायणाह्वयम् ७० शुश्रूषयातोषयित्वागुरुंतत्रैवतस्थतुः ॥ नारायणसुतांचारुहासांचंद्रनिभान
नाम् ७१ दृष्ट्वापरस्परंमैथुनंबहुधाप्रार्थ्यतांस्त्रियम् ॥ आवाभ्यांचहिसाभुक्तातज्ज्ञातंगुरुणाचिरात् ७२ आवाभ्यांचददौशापंतस्यैचाप्यशपत्क्रुधा ॥ युवांचापिकुमारी
यंपिशाचत्वंगमिष्यथ ७३ ततोऽस्माभिस्त्रिभिस्तंतुमुनिंनत्वापुनःपुनः ॥ शापस्यांतस्ततोलब्धस्तच्छृणुष्वमनोरमे ७४ चैत्रमासेनृसिंहाख्यःकश्चिद्विप्रश्चकानने ॥
ददातिस्नानजंपुण्यंतदोद्धारोभविष्यति ७५ एवंजाताःपिशाचाहिवयंत्वद्वस्त्रबिंदुभिः ॥ प्रोक्षिताःस्मोऽद्यतेजातापूर्वजन्मस्मृतिःशुभा ७६ तत्तेषांवचनंश्रुत्वाज्ञात्वा
शापस्यमोक्षणम् ॥ सांत्वयित्वाकरेणैवशीघ्रंसनृहरिःस्त्रिया ७७ आगमिष्यतिमार्चितांकुरुतेतिवरांगना ॥ ययौरामेश्वरंशीघ्रंपूजयित्वागतादिवम् ७८ चैत्रमासेह्यति
क्रांतेमार्गेसनृहरिर्द्विजः ॥ भार्ययासहितोदृष्टःपिशाचैस्तैःपितामम ७९ स्थित्वादूरंचतेसर्वेतम्भूचुर्नृहरिंद्विजम् ॥ नैजंवृत्तंसमस्तंहिशापस्यापिविमोक्षणम् ८० त
च्छ्रुत्वानृहरिर्विप्रस्तान्प्रोवाचमुदान्वितः ॥ माभेतव्यंपिशाचत्वाद्यथाशंभुद्विजेनसः ८१ राक्षसोमोचितःपूर्वंमोचयिष्याम्यहंतथा ॥ पिशाचउवाच ॥ कःशंभुश्चक
दामुक्तोराक्षसःकःसविस्तरम् ८२ कथयस्वद्विजश्रेष्ठकृपांकृत्वातुकौतुकात् ॥ नृसिंहउवाच ॥ शृणुध्वंकथयिष्यामियद्वृत्तंचपुरातनम् ८३ शिवकांचीपुरीमध्येकश्चि
द्विप्रःशुचिव्रतः ॥ शंभुनामाचिरंकालंतस्थौसचस्वभार्यया ८४ सकस्मिंश्चिद्दिनेविप्रश्चैकांबरशिवांतिके ॥ पौराणिकमुखाच्चैत्रमासमाहात्म्यवर्तिनीम् ८५ कथांश्रो
तुंसमायातस्तत्रश्रुत्वामहत्फलम् ॥ अयोध्यायांहिचैत्रस्यस्नानात्कैवल्यदायकम् ८६ ततोबहुगतेकालेसंस्मरन्तांकथांशुभाम् ॥ ज्ञात्वासमागतंचैत्रंस्वगृहान्निर्गतस्त
दा ८७ भार्ययासहितोविप्रःशनैर्मार्गेणवैययौ ॥ तीर्त्वातांजान्हवींरम्यांयावदग्रेसगच्छति ८८ तावद्दृष्टोहिभिल्लेनकर्कशाख्येनकानने ॥ गृहीत्वासशरंचापंधर्षयित्वाचभू
सुरम् ८९ लुलुंठकर्कशःक्रूरोवस्त्रेणैकेनतंद्विजम् ॥ मुमोचतस्यपाथेयंगृहीत्वासकलंशुभम् ९० द्विजोऽपिप्रार्थयामासकर्कशंचपुनःपुनः ॥ वस्त्रादिकंगृहाणत्वंभक्ष्यापिष्टंददस्व

माम् ९१ ततस्यवचनंश्रुत्वामुक्तातद्वस्त्रबंधनम् ॥ सर्वंददर्शपाथेयंनानाविधमनुत्तमम् ९२ तस्मिन्ददर्शसव्याधोदशरंभाफलानि वै ॥ अपक्वान्यतिशुष्काणिततश्चित्ते
विचारयत् ९३ एतैःफलैर्नमेकार्यंजानामिब्राह्मणोत्तमम् ॥ तंहिंदास्याम्यहंदीनंक्षुधाक्रांतंचसात्त्विकम् ९४ इतिनिश्चित्यसव्याधोददौतानिद्विजन्मने ॥ गृहीत्वाऽभक्ष
यद्विप्रःप्रारंभेभार्ययामधौ ९५ तद्रंभाफलदानेनकर्कशस्यतदाशुभा ॥ जाताबुद्धिःक्षणादेवसात्विकीक्रूरतागता ९६ एवंपिशाचाःसकलास्ततःपरंभिल्लायतस्मैतुशु
भामतिर्बभूव ॥ समागतंचात्रकुतःसपृष्टवान्विप्रंसवैप्राहवनेचकर्कशम् ९७॥ शंभुरुवाच ॥ कांचीपुर्याःसमायातंगम्यतेऽयोध्यकांपुरीम् ॥ चैत्रमासेऽवगाहार्थंसरयूनिर्म
लेजले ९८ इतिविप्रवचःश्रुत्वापुनःपप्रच्छकर्कशः ॥ किंलभ्यतेहिस्नानेनतन्मेवदसविस्तरम् ९९ पुनःप्राहसविप्रेंद्रोकर्कशंभक्तितःफलम् ॥ स्नानेनमधुमासेहिरघुनाथः
प्रसीदति १०० प्रसादात्सकलान्भोगान्लभंतेमानवाभुवि ॥ अंतेमोक्षोऽपिभोभिल्ललभ्यतेनात्रसंशयः १ इतिविप्रवचःश्रुत्वापुनःपप्रच्छकर्कशः ॥ मो[illegible]रूपंकथय
रूपांकृत्वाममोपरि २ ततस्यवचनंश्रुत्वापत्नीप्राहद्विजोत्तमः ॥ पश्यपश्यवरारोहेकौतुकंमहदद्भुतम् ३ यद्रंभाफलदानेनचैत्रेमासिवरानने ॥ अयंकभिल्लजातीयःकप्र
श्चेदृशःशुभः ४ मोक्षस्वरूपज्ञानार्थंतस्माद्दानंप्रशस्यते ॥ इत्युक्त्वातांप्रियांविप्रःकर्कशंप्राहसादरम् ५ साधुसाधुमहाव्याधसम्यक्प्रश्नःकृतस्त्वया ॥ इदानींप्रोच्य
तेमोक्षस्वरूपंतन्निशामय ६ समोक्षस्त्वंहिजानीहियतोनास्तिपुनर्भवः ॥ इतिविप्रवचःश्रुत्वापुनःपप्रच्छकर्कशः ७ तस्यप्राप्तिर्यथास्यान्मेतन्मेवदद्विजोत्तम ॥ शंभु
रुवाच ॥ शृणुकर्कशतत्प्राप्तिर्यथास्यात्तद्वदामिते ८ दारपुत्रगृहादीनांप्रीतिंमुक्त्वाजनार्दनम् ॥ दिवारात्रंचिंतयित्वासर्वदेहस्यचालकम् ९ आत्मानंबहुपुण्यौघैर्निर्म
186 लीकृत्यमानसम् ॥ तत्स्वरूपेयदातिष्ठेत्समुक्तोनेतरोजनः ११० एवंवदतिविप्रेंद्रेव्याधोमुक्त्वाशरंधनुः ॥ शंभुपादौजवान्नत्वात्राहित्राहीतिवैवदन् ११ प्रोवाचद्विजवर्यं
सव्याधोमामुद्धरेतिच ॥ एतस्मिन्नंतरेतत्रराक्षसोघोरदर्शनः १२ दुद्रावदीर्घशब्देनयत्रासंस्तेत्रयोवने ॥ आयांतंराक्षसंदृष्ट्वाचक्रुस्तेतुपलायनम् १३ तावज्जवेनतान्
धर्तुंनिकटंराक्षसोययौ ॥ तंदृष्ट्वानिकटंशंभुस्तुंबिकांसजलांनिजाम् १४ कृत्वोच्चांप्राक्षिपत्तस्मिन्रामचंद्रंस्मरन्मुखे ॥ मंत्रितंरामनाम्नाचयत्तोयंमधुमासिवै १५
तत्सेकाद्राक्षसस्यापिजातापूर्वभवस्मृतिः ॥ ततःसराक्षसोदूरंस्थित्वाशंभुंव्यजिज्ञपत् १६ मामुद्धरमुनिश्रेष्ठघोराद्राक्षसदेहतः ॥ शरणंतेगतोऽस्म्यद्यजातापूर्वस्मृ
तिर्मम १७ इतितत्कौतुकंदृष्ट्वाराक्षसंप्राहसद्द्विजः ॥ कस्मात्तेराक्षसत्वंहिजातंतत्त्वंवदाधुना १८ राक्षसःप्राहवेगेनशंभुंवृत्तंनिजंतदा ॥ जनस्थानेपुराचाहंविप्रःकर्मपरा
ङ्मुखः १९ प्रतिग्रहपरःपापीदुर्मार्गव्यसनीसदा ॥ एतस्मिन्नंतरेचैत्रेममभार्यासतीशुभा १२० स्नानार्थंरामतीर्थंसामामपृष्टाग्रहाद्ययौ ॥ सामार्गेचमयादृष्टाहत्वामार्गेच
९७ तांशुभाय् २१ प्रोक्ताक्रोधान्मयारंडेमामपृष्ट्वाक्वयास्यसि ॥ साप्राहभयभीताबुरामतीर्थंप्रगम्यते २२ मधुमासेऽवगाहार्थंनमयादुष्कृतंकृतम् ॥ एवंश्रुत्वापितद्वाक्यंता
डितासामयाबलात् २३ प्रेषितास्वगृहंमार्गात्ततःकालांतरेगते ॥ मृतोऽहंचतदानीतोयमलोकंयमानुगैः २४ चित्रगुप्तोपिदृष्ट्वामांधिकृत्वापिपुनःपुनः ॥ यमराजंसवै
प्राहधर्षयन्मांस्वगर्जितैः २५ भोधर्मराजपापोऽयंचैत्रस्नाननिवारकः ॥ शुक्त्वाऽऽदौराक्षसींयोनिंनिरयान्नमोक्तुमर्हति २६ इतितद्वचनंश्रुत्वायमःप्राहानुगांस्तदा ॥

आ. रा. मोभटाराक्षसीयोनिर्दयितांनिर्जनेवने २७ पापिनेऽस्मैचमद्वाक्यात्ततस्तैश्चयमानुगैः ॥ दत्वामेराक्षसींयोनिंत्यक्त्वाचात्रगतायमम् २८ तमारभ्यवनेचाहंक्षुत्तृषा मनो. क
परिपीडितः ॥ पंचत्रिंशत्सहस्राणिवर्षाण्यत्रस्थितश्चिरम् २९ किंमयासुकृतंपूर्वंकृतंयस्माद्वनेतव ॥ संगतिश्चाद्यवैजातासाधुसंगोगतिप्रदः १३० इतितद्वचनं
॥ ३३ ॥ श्रुत्वाशंभुर्ध्यात्वाक्षणंहृदि ॥ ज्ञात्वातत्सुकृतंपूर्वंराक्षसायन्यवेदयत् ३१ शृणुराक्षसयत्पूर्वंकृतंवैसुकृतंत्वया ॥ यस्माज्जातासंगतिर्मेवनेनिर्मानुषेशुभा ३२ एका ८
दश्यांचैत्रशुक्लेकृत्वान्यश्राद्धभोजनम् ॥ तांबूलंदक्षिणायुक्तंकट्यांवस्त्रेत्वयाधृतः ३३ द्वादश्यांप्रातरुत्थायगत्वास्नानंत्वयाकृतम् ॥ पतितःसहितांबूलोविस्मृत्या
गौतमीतटे ३४ दक्षिणासहितोदृष्टःसकेनापिद्विजेनवै ॥ गृहीतश्चसहिद्वादश्यांनज्ञातश्चत्वयापुनः ३५ तांबूलदानाद्धरचैत्रमासेजातावनेमेऽद्यहिसंगतिस्ते ॥ त
स्मान्मघोराक्षसमानवैर्हितांबूलदानंकरणीयमेतत् ३६ इत्युक्त्वाराक्षसंशंभुश्चैत्रमाहात्म्यमुत्तमम् ॥ उभाभ्यांश्रावयित्वाथकर्कशंवाक्यमब्रवीत् ३७ भोकर्कशमहा
बुद्धेशृणुष्ववचनंमम ॥ आगच्छत्वंसहैवाद्यमयायोध्यापुरींप्रति ३८ सरयूस्नानमात्रेणमघौपापाद्विमोक्ष्यसे ॥ इत्युक्त्वाकर्कशंशंभुस्ततःप्रोवाचराक्षसम् ३९
भोराक्षसत्वमत्रैवमासमात्रंस्थिरोभव ॥ अयोध्यायांप्रवेशश्चराक्षसानांनविद्यते १४० अतोऽहंमधुमासेहिस्नात्वानेनपथापुनः ॥ यदाऽऽगच्छामिकांचींत्वांचोद्ध
रीष्याम्यहंतदा ४१ मासंदेहोऽस्तुतेचित्तेशपथेनब्रवीम्यहम् ॥ यत्पापंब्रह्महत्यायास्तथागोयतिनिंदनात् ४२ नोद्धृत्यत्वांहिगच्छामितर्हितन्मयितिष्ठतु ॥ म
द्यपानेचयत्पापंहेमस्तेयादिकंचयत् ४३ नोद्धृत्यत्वांहिगच्छामितर्हितन्मयितिष्ठतु ॥ यत्पापंभ्रूणहत्यायास्तथाचैत्रेह्यमज्जनात् ४४ नोद्धृत्यत्वांहिगच्छामितर्हि
तन्मयितिष्ठतु ॥ इत्यादिशपथैस्तर्हिराक्षसंहर्षयन्द्विजः ४५ यावत्पश्यतिसर्वत्रतावज्जातंहिकौतुकम् ॥ व्याधायचैत्रमासस्यमाहात्म्यस्योपदेशतः ४६ तरवःफलिनो
जाताःपरितोदशयोजनम् ॥ पत्रैःपुष्पैर्विनम्राश्चसौगंधःपवनोववौ ४७ नद्यस्तोयवहंत्यश्चनन्नृतुर्बर्हिणोवने ॥ तदृष्ट्वाकर्कशश्चापिचैत्रमाहात्म्यकीर्तनात् ४८ दुर्वनंसुवनं
जातंचैत्रश्रैष्ठ्यममन्यत ॥ ततस्तेहित्रयस्तस्माद्वनान्मार्गेणनिर्गताः ४९ शनैःशनैरयोध्यायाःपथ्यपश्यन्वनस्थलीम् ॥ तावच्छब्दोमहान्जातःसिंहमातंगसंभवः १५०
धावन्नग्रेतुमातंगःपृष्ठेधावंश्चकेसरी ॥ एवंतौशंभुसान्निध्यंप्राप्तौकलहकारिणौ ५१ मार्गरोधकरौदुष्टौतौदृष्ट्वाशंभुरब्रवीत् ॥ पश्यकर्कशविघ्नानिचैत्रस्नानपदेपदे ५२
संभवंतीतिवैबुध्वाचैत्रस्नानंनलंघयेत् ॥ काश्यांविवाहेगीतायांगयायांरामचिंतने ५३ चैत्रस्नानेमहादानेविघ्नानिसंभवंतिहि ॥ एवंवदतिविप्रेंद्रेतौदुष्टौकरिसिंहकौ ५४
चैत्ररामश्रवात्पूर्वजन्मस्मृत्याऽतिविस्मितौ ॥ भूत्वावैत्राहित्राहीतिकृत्वादीर्घंमहारवम् ५५ शरणंद्विजवर्यायजग्मतुःशंभुशर्मणे ॥ सोऽपिशंभुश्चताभ्यांहिपृष्टवान्तत्कृ
पान्वितः ५६ किमर्थंदुष्टजातिर्हिप्राप्तातत्कथ्यतांमम ॥ इतिविप्रवचःश्रुत्वाकेपरीवाक्यमब्रवीत् ५७ सेतौरामेश्वरक्षेत्रेपूर्वजन्मन्यहंद्विजः ॥ निंदकःसर्वधर्माणांपाखं
डोक्त्येकतत्परः ५८ कदाचिच्चैत्रमासेतुतत्रश्रीरामसंज्ञके ॥ तीर्थेजनसमूहेचश्रुत्वापौराणिकींकथाम् ५९ पौराणिकेनकथितांचैत्रमाहात्म्यसूचिकाम् ॥ कृतवान् ॥ ३३ ॥
निंदनंचाहंवारंवारंपुनःपुनः ६० तन्मत्कृतंनिंदनंचकश्चिद्विप्रस्तपःस्थितः ॥ शुश्रावसकलंदुष्टंतेनशप्तोऽस्म्यहंतदा ६१ क्रूरांजातिंत्वरंगच्छयदाचैत्रेशकीर्तनम् ॥

भविष्यातिमहारण्येशापशांतिस्तदेतिच ६२ एवंप्रोक्तंमयासर्वंपूर्वजन्मनियत्कृतम् ॥ तेनशापेनजातोऽस्मिकेसरीभयकारकः ६३ चैत्ररामश्रवाज्जातापूर्वस्मृतिरनु
त्तमा ॥ इदानींरक्षमांविप्रत्वंचैतत्सिंहदेहतः ६४ इतिसिंहस्यवृत्तंतुज्ञात्वोवाचगजंद्विजः ॥ कस्माच्चमातंगगतोऽसिदुष्टजातोवदस्वाद्यमहाघसंघात् ॥ सचापिमातंगव
रःसमस्तंवृत्तंनिजंचाकथयच्चजीर्णम् ६५ ॥ ॥ मातंगउवाच ॥ शृणुविप्रप्रवक्ष्यामिपूर्ववृत्तंमयाकृतम् ॥ रामनाथपुरेचाहंकावेर्याउत्तरेतटे ६६ विप्रःपरमदुर्वृत्तःसर्व
शास्त्रपराङ्मुखः ॥ लक्ष्मीभरमदाक्रांतःपण्यस्त्रीभोगकारकः ६७ एकदासुहृदाचाहंभोजनार्थंनिमंत्रितः ॥ श्राद्धाहेमधुमासेहिशुक्लेश्रीनवमीदिने ६८ मयाभुक्तंसुहृद्गे
हेनवम्यांद्विजसत्तम ॥ तेनपापेनजातोऽस्मिकरिजातौनसंशयः ६९ सर्वदाप्रतिमासेऽपिनवम्यांनहिभोजनम् ॥ कार्यविशेषतोरामनवम्यांनिंदितंचतत् ७० इदानींन
हिजानामिकेनपुण्येनतेऽत्रवै ॥ संगतिश्चवनेजातासर्वेषांपरमार्तिहृत् ७१ इतितस्यवचःश्रुत्वाशंभुर्ध्यानेविचारयत् ॥ ज्ञात्वामातंगपुण्यंतुप्रोवाचकरिणंद्विजः ७२ शृणु
मातंगवक्ष्यामियत्पुण्यंचत्वयाकृतम् ॥ पूर्वजन्मनितत्सर्वंयेनमेसंगतिर्वने ७३ जातात्वामुद्धरिष्यामिमाचिंतांकुरुसर्वथा ॥ रामनाथपुरेरम्येकावेरीतटशोभिते ७४ रामाय
णकथाचैत्रेश्रुताश्रीनवमीदिने ॥ रामतीर्थेत्वयास्नातंदृष्टोरामेश्वरःशिवः ७५ तेनपुण्येनतेजातासंगतिर्ममकानने ॥ इदानींशृणुसिंहत्वंशृणोतुचकरीमहान् ७६ साकेतेमधु
मासेहिस्नात्वातेनपथापुनः ॥ यदागच्छामितांकांचींयुवामुद्धारयाम्यहम् ७७ मासंदेहोऽत्रकर्तव्यःशपथैःप्रब्रवीम्यहम् ॥ संतोषार्थंयुवाभ्यांहिप्रोच्यंतेशपथामया ७८
परस्त्रीगमनात्पापंतथामित्रवधादिकम् ॥ युवांनोद्धृत्यगच्छामितांहितन्मयितिष्ठतु ७९ ब्रह्मस्वहरणात्पापंयत्स्मृतंमातृनिंदनात् ॥ युवांनोद्धृत्यगच्छामितांहितन्म
यितिष्ठतु ८० इत्युक्त्वाद्विजवर्यःसस्त्रियाभिक्षेनसंयुतः ॥ करिसिंहौवनेस्थाप्यगच्छन्मार्गेशनैःशनैः ८१ ददर्शान्यपथायांतंश्रेष्ठंकार्पटिकोत्तमम् ॥ वहंतंरामलिंगार्थं
श्रेष्ठंभागीरथीजलम् ८२ शंभुःपप्रच्छतंनत्वानम्रःकार्पटिकोत्तमम् ॥ कुतःसमागतंविप्रगम्यतेकाधुनावद ८३ ॥ कार्पटिकउवाच ॥ प्रयागादागतंविद्धिमांत्वंभूसुरस
तम ॥ मधुमासेऽवगाहार्थंमयोध्यांप्रतिगम्यते ८४ इदानींत्वंनिजंवृत्तंवदब्राह्मणसत्तम ॥ कुतःसमागतंचात्रगम्यतेकाधुनावद ८५ इतितद्वचनंश्रुत्वाशंभुःप्रोवाच
तंतदा ॥ शिवकांच्याःसमायातमयोध्यांप्रतिगम्यते ८६ चैत्रमासेऽवगाहार्थंमंततेकथितंमया ॥ इतिशंभुवचःश्रुत्वापुनःकार्पटिकोत्तमः ८७ पप्रच्छद्विजव
र्यंयकौतुकाविष्टमानसः ॥ शिवकांच्यांशंभुनामाकश्चिद्विप्रोऽस्तिमोद्विज ८८ ततस्यवचनंश्रुत्वापुनःशंभुस्तमब्रवीत् ॥ बहवःशंभुनामानोवर्ततेद्विजतत्रहि ८९
कस्त्वयापृच्छतेतस्यवदगोत्रोपनामनी ॥ इतिविप्रवचःश्रुत्वापुनःकार्पटिकोऽब्रवीत् ९० भारद्वाजकुलोत्पन्नंचक्रगोप्युपनामकम् ॥ महादेवसुतंसर्ववेदशास्त्रविशा
रदम् ॥ ब्राह्मणंशंभुनामानंजानीषेत्वंनवावद ९१ एवंमहाकार्पटिकेनसर्वगोत्रोपनामादिकमादरेण ॥ प्रोक्तंयथातच्चसभूसुरोपिज्ञात्वानिजंसर्वमथावदत्तम् ९२ भो
भोकार्पटिकश्रेष्ठकिमर्थंत्वांहिपृच्छसि ॥ तद्वदस्वसविस्तारंमाशंकांकुरुचात्रहि ९३ ॥ कार्पटिकउवाच ॥ शृणुविप्रप्रवक्ष्यामियदर्थंपृच्छतेमया ॥ यदाहंगतवान्गंगा
सागरंद्रष्टुमादरात् ९४ सीताकुंडसमीपेहिदेशेकैकटनामके ॥ दृष्टोऽहंमार्गमध्येचपिशाचेनोग्ररूपिणा ९५ मांहंतुंनिकटंप्राप्तंतंदृष्ट्वाऽहंतदाद्विज ॥ श्रीरामकीर्तनंदीर्घं

कृतवान्भयकंपितः ९६ कीर्तनाद्रामचंद्रस्यसपिशाचःपलायनम् ॥ मत्तःकृत्वादूरदेशेस्थित्वाशुश्रावकीर्तनम् ९७ तस्माज्जातापूर्वजन्मस्मृतिस्तस्यशुभावहा ॥
त्राहित्राहीतिमांप्राहमयापृष्टःसवैपुनः ९८ कस्मात्पिशाचदेहेत्वंजातस्तद्वदसत्वरम् ॥ इतिमेवचनंश्रुत्वापिशाचःप्राहमांपुनः ९९ कांचीपुर्यांद्विजश्चाहंधुंढिनामापुरा
स्थितः ॥ नान्नदानंमयापूर्वंकृतंस्वल्पमपिकचित् २०० तस्मात्पिशाचदेहत्वंप्राप्तंकार्पटिकोत्तम ॥ इतितस्यवचःश्रुत्वापुनःप्रोक्तःसवैमया १ कथंपिशाचयोन्यास्तुते
मुक्तिश्चभविष्यति ॥ ततःपुनःसमांप्राहयदिमेतनयःशुचिः २ चैत्रेदर्शेममोद्देशादन्नदानंकरिष्यति ॥ भविष्यतिममोद्धारस्तत्क्षणान्नात्रसंशयः ३ इतितद्वचनंश्रुत्वा
पुनःप्रोक्तःसवैमया ॥ वर्ततेक्वसुतस्तेहिकिंनामावदमांप्रति ४ ततस्तेनयथाप्रोक्तंभारद्वाजाद्यचिन्हजम् ॥ तत्प्रोक्तंचमयासर्वंनिकटेतवभोद्विज ५ पिशाचंहिपुनश्चाहमु
क्तवान्तद्वदाम्यहम् ॥ रामेशार्थंभोपिशाचनीयतेजान्हवीजलम् ६ मयाकरंडमध्येहियदागच्छाभिदक्षिणाम् ॥ दिशंकालेनकांचींहिप्रनेक्ष्यामियदातदा ७ तवपुत्रायवृत्तं
हिकथयिष्याम्यहंतव ॥ इतिमद्वचनंश्रुत्वासंतोषंपरमंगतः ८ पिशाचःप्राहमांविप्रस्तुत्वानत्वापुनःपुनः ॥ अवश्यमेववक्तव्यंमेवृत्तंममसूनवे ९ यथादृष्टंत्वयापांथयथोक्तं
चमयातव ॥ अन्यच्चकथ्यतांतस्मैममपुत्रायसादरम् २१० मधुदर्शेऽन्नदानस्यमहिमाश्रूयतेदिवि ॥ अतस्त्वंहिममोद्देशेनान्नदानंमघोकुरु ११ एवमुक्त्वासापिशाचःशपथं
मांचकारह ॥ नब्रूषेस्मरणंकृत्वाममपुत्रायतद्विज १२ भविष्यतिवृथासर्वंयात्रातवमहामते ॥ इतितद्वचनंश्रुत्वासांत्वयित्वाचतंपुनः १३ निर्गतोऽस्मिमघो
स्नातुमयोध्यांगंतुमादरात् ॥ कृत्वायोध्यापुरीमध्येचैत्रस्नानंमहाफलम् १४ यदागच्छामितांकांचींतदातस्मैवदाम्यहम् ॥ अतएवमयापृष्टस्तवशंभुर्द्विजोत्तमः १५
प्रोक्तंगोत्रादिभिर्लिंगंवर्ततेचेद्वदस्वमां ॥ इतिशंभुःपितुर्वृत्तंज्ञात्वामूर्छांगतस्तदा १६ आश्वासितश्चभिक्षेनविप्रःप्रोवाचतंपुनः ॥ भोभोकार्पटिकश्रेष्ठनमत्तोऽस्तिनरोऽध
मः १७ यस्त्वयापृच्छ्यतेशंभुःसोऽहंविद्धिनसंशयः ॥ मयापुत्रेणनकृतंस्वपितुर्मोक्षदायकम् १८ अन्नदानादिकंकर्मधिग्धिङ्मेऽयंवृथाभवः ॥ इदानींतववाक्येनदास्याम्यन्नं
मघोपितुः १९ एवंशंभुःकार्पटिकायचोक्त्वाऽयोध्यांरम्यांदूरतोवेददर्श ॥ प्रणेमुस्तांदंपतीपांथभिक्षास्ततशंभुश्चावदत्कर्कशंसः २२० ॥ शंभुरुवाच ॥ पश्यपश्यमहाभि
क्षमहायोध्यापुरींशुभाम् ॥ यस्यांस्नातुंसमायाताद्दृश्यंतेकोटिशोजनाः २१ जनौघानांध्वनिश्चायंश्रूयतेमेघशब्दवत् ॥ नानाध्वजपताकाश्चदृश्यंतेचेंद्रचापवत् २२ त
थवाद्यध्वनिश्चायंश्रूयतेहिमनोहरः ॥ अग्निहोत्राग्निधूमैर्व्याप्तंपश्यनभोऽङ्गणम् ॥ कैलासगिरिसाम्यानिपश्यसौधानिकर्कश २३ नवप्रतोलीपरिखावलयीकृतमेखलाम् ॥
उत्तुंगहर्म्यांविलसत्पताकाशतसंकुलाम् २४ अभ्रंलिहमहासौधसुवर्णकलशोज्ज्वलाम् ॥ पश्यायोध्यापुरींश्रेष्ठांसरयूतीरनादिताम् २५ हाटकोद्घाटितैरत्नखचितैर्याकपाटकैः
सुसंवृतैर्विवृतैःस्वैरुन्मिषंतीवलक्ष्यते २६ दोधूयमानैर्मरुतापताकांचलसूचितैः ॥ आह्वयंतीवपुरतोलक्ष्यतेपथिकान्जनान् २७ अधःकृताघोभुवनाजेतुमेकामरावतीम् ॥
प्रासादशूलव्याजेनसन्नद्धेवात्रलक्ष्यते २८ पवित्रेऽस्मिन्महाक्षेत्रेनिवसंतितिरोहिताः ॥ ब्रह्मेशहरिभिःसर्वदेवास्तेऋषयोऽमलाः २९ कुबेरस्पर्द्धयायत्रचिन्वंतिवसुसंचयान् ॥
दातुंभोक्तुंसर्वजनाःस्वधर्मनिरताःसदा २३० गेहेगेहेसदानन्दएवासीदत्रवैपुरि ॥ येषांप्रक्षालयंतिस्मचरणान्वासवादिकाः ३१ तेद्विजाःकस्यनोवंद्याअयोध्यानगरीस्थि

ताः ॥ औदार्येकल्पतरवोगांभीर्येसागराइव ३२ क्षमयाक्षमयातुल्याजंगमानिगमाइव ॥ दैन्यग्राहमहांबोधिग्रासागस्त्यमहर्षयः ३३ निवसंतिद्विजायत्रवंद्याःसर्वमहीभुजाम् ॥
चतुर्वर्गफलोपेतेचातुराश्रम्यमुज्वलम् ३४ चातुर्वर्ण्यमिहैवास्तेचतुराम्नायमार्गगम् ॥ कृमिकीटपतंगानांविनाज्ञानसमाधिभिः ३५ अत्रनिर्वाणपदवीसुलभाऽस्तिवनेच
र ॥ एनःपानघटान्भोक्तुंतरंगानंकुशानिव ३६ बिभर्तिसरयूतोयंनिःश्रेणिर्मोगमोक्षयोः ॥ पश्यस्फाटिकसोपाननिविष्टमुनिसंस्तुताम् ३७ सरयूनदीमुत्तरीयीकृतामि
वपुराऽनया ॥ इंद्रनीलमहातुंगप्रतोलीचारुदर्शनः ३८ रामचंद्रस्यदिव्योऽयंप्रासादस्तुंगतोरणः ॥ प्रतोलीयस्यघटिताकाश्मीरैरुपलैरलम् ३९ सीतायाश्चमहानेषप्रा
सादोरत्नतोरणः ॥ नानारत्नैर्मंडितश्चहेमस्तंभविराजितः ४० स्फाटिकैरुपलैश्चित्रःसरयूतीरसंश्रितः ॥ रामतीर्थसमीपेऽयंसीतारामस्यवैपरः ४१ प्रासादोविमलोभा
तितप्तकांचननिर्मितः ॥ पताकाभिर्विचित्राभिःकलशैःसुविराजितः ४२ उत्तप्तजांबूनदरत्नकुंभःप्रवालवैडूर्यनिबद्धभूमिः ॥ हेमप्रतोलीरचितःसएषप्रासादवर्योऽस्ति
हिलक्ष्मणस्य ४३ चातुर्ययत्रविश्रांतंसकलंविश्वकर्मणः ॥ सोऽयंभरतराजस्यप्रासादोहेमतोरणः ४४ तथादेदीप्यमानोऽयंरत्नभित्तिविनिर्मितः ॥ प्रासादोदृश्यतेरम्यः
शत्रुघ्नस्यशुभावहः ४५ स्फाटिकैर्भित्तिभिश्चित्रःप्रोच्चःकनकरेखितः ॥ प्रासादोवायुपुत्रस्यदृश्यतेऽयंमहोज्वलः ४६ यएषमुक्ताफलजालशोभीसुदर्शनांकःखगराजकेतुः ॥
कुशस्यरम्यस्त्वयमाविरास्तेप्रासादकुंभःकिमुबालसूर्यः ४७ प्रासादोऽयंलवस्यात्रबहुरत्नविराजितः ॥ यत्रचित्राण्यनेकानिमोहयंतिमृगीदृशाम् ४८ चक्षूंषिजातरागाणि
योगिनामपिमानसम् ॥ विन्यस्तरत्नविन्यासाःशातकुंभभुवोबहिः ४९ हेषयंतिवसततंरत्नसानुमहाप्रभाम् ॥ रत्नप्रासादसंयुक्तामयोध्यांपश्यसुप्रभाम् ५० यदंगणंक्षा
लयंतीनदीयंस्वीयैर्जलैःसोऽयमनर्घ्यरत्नः ॥ अभ्रंकषैर्हेममयैःस्वकुंभैर्विराजितोऽयंखलुचित्रकेतोः ५१ दिव्यप्रवालघटितकपाटेयत्रचंचले ॥ प्रासादोऽयमंगदस्यरुक्मभि
त्तिविनिर्मितः ५२ गरुडोद्गारघटितप्रतोलीपरिशोभितः ॥ प्रासादःपुष्करस्यायंनयनानंददोनृणाम् ५३ विशुद्धजांबूनददिव्यभूमिर्लसत्पताकस्त्रिदशाभिवंद्यः ॥
प्रासादएषःपरमोमनोज्ञस्तक्षस्यवीरस्यमहान्विभाति ५४ यस्याधिभूमिंनवरत्नसिंहस्त्रिभिःपदैर्मेविजिताख्रयोऽपि ॥ लोकाश्चतुर्थोनहिदृश्यतेऽतःपदंसमुद्यम्यकिमा
विरास्ते ५५ अघौघमत्तकरिणांघटादारयितुंकिमु ॥ उदस्तचरणोयस्यरत्नसिंहोविराजते ५६ सोऽयंहेमभित्तिमयःप्रासादःप्रोन्नतःशुभः ॥ सुबाहोःपश्यभोभिल्लरत्नसा
नुविराजितः ५७ रत्नप्रवालस्फटिकनीलकाश्मीरनिर्मितः ॥ प्रासादोऽयंयूपकेतोर्महान्दीप्तिमयःशुभः ५८ कल्हारैरुत्पलैःशोणैररविंदैःशतच्छदैः ॥ विराजितंपाप
हरंरामतीर्थंप्रदृश्यते ५९ इंदूत्पलैरविदलैर्निबद्धायस्यभूमयः ॥ हरंतिग्रीष्मसंतापंनिष्पंदसीकरोत्करैः ६० अमंदकुरुविंदानांविन्यासैर्यत्रचारुभिः ॥ मुह्यंतिशुकचेतां
सिमुद्ध्दाडिमशंकया ६१ एवंपश्यशुभारम्यांपताकाभिर्विराजिताम् ॥ भिल्लायोध्यांमुक्तिपुरींद्वितीयाममरावतीं ६२ यत्रकार्तस्वरघटाःप्रतोलिशिरसिस्थिताः ॥ रा
मंद्रमुमनंतास्तंप्राप्ताःसूर्याइवाबभुः ६३ ॥ नृसिंहउवाच ॥ एवमुक्काकर्कशेनपत्न्याकार्पटिकेनच ॥ सहितश्चतदाशंभुस्तांपुरींसंविवेशसः ६४ रामतीर्थंततोगत्वाकृत्वा
क्षौरादिकंविधिम् ॥ उपोष्यदिनमेकंहितीर्थेश्राद्धंचकारसः ६५ अमावास्यांशुभांचैत्रेप्राप्तांज्ञात्वाद्विजोत्तमः ॥ मुक्त्यर्थंस्वपितुश्चक्रेह्यन्नदानंयथाविधि ६६ तच्चैत्रमा

सेरजनीशसंक्षयेदत्तंपितुर्यच्छुभंदंमनोहरम् ॥ विप्रणचंन्निपेथिकस्यवाक्यतस्तस्मात्पिशाचभ्सुरसद्मनिस्थितः ६७ अयोध्यायांततःशंभुःकृत्वाचैत्रेऽवगाहनम् ॥
उद्यापनविधिंचापियथोक्तंचचकारसः २६८ कर्कशोऽपिमघोस्नात्वामुक्तापापौघभूधरम् ॥ अयोध्यानगरीमध्येसाधुवृत्त्यावसच्चिरम् २६९ श्रीरामचिंतनंकुर्वन्नि
नायायुष्यसंक्षयम् ॥ ततःप्रापहरेर्लोकमयोध्यामरणेनसः २७० शंभुश्चापिमघौस्नानंकृत्वाकांचीपुरींपुनः ॥ गंतुंप्रतस्थेश्रीरामंनत्वाऽयोध्यांपुनःपुनः २७१ भार्यया
सहितःशंभुस्तेनकार्पटिकेनच ॥ ययौपूर्वेणमार्गेणयत्रतौकरिकोहलौ २७२ स्थापितौशपथैःकृत्वाशनैस्तत्रसमागमत् ॥ दत्त्वादिनद्वयंपुण्यशुभाभ्यांमधुमासजम्
२७३ दत्त्वास्वीयांजलौतोयंतयोर्मुक्तिंचकारसः ॥ ततस्तौकरिसिंहौचदिव्यमाल्यानुलेपितौ २७४ दिव्यंविमानमारुह्यविष्णुलोकंगतावुभौ ॥ ततोऽग्रेद्विजवर्यः
सययौमार्गेणभार्यया २७५ सयत्रराक्षसःपूर्वंस्थापितःशपथैर्वने ॥ तंदृष्ट्वाराक्षसश्रेष्ठंभार्याप्राहद्विजोत्तमः २७६ अयिकाश्याव्हयेरम्येशृणुमेवचनंशुभम् ॥ यात्वयासी
तलागौरीस्नातावैसरयूजले २७७ तस्यैकदिवसस्याद्यदेहिपुण्यंशुभावहम् ॥ राक्षसायहिमद्वाक्याद्दृष्ट्वाध्वजलमंजलौ २७८ इतिशंभुवचःश्रुत्वापद्मनेत्राकृशो
दरी ॥ काशीनाम्नीद्विजपत्नीददौपुण्यंनिजंतदा २७९ ततःप्रराक्षसश्रेष्ठस्त्यक्त्वादेहंमलीमसम् ॥ दिव्यंविमानमारुह्यनत्वाभार्यायुतंद्विजम् २८० दिव्यमा
ल्यांबरधरोहरेर्लोकंजगामसः ॥ शंभुश्चापिप्रियायुक्तोमधुमासंविवर्णयन् २८१ ययौकांचीपुरींश्रेष्ठांजनान्वृत्तांतंनिवेदयन् ॥ भोपिशाचायथापृष्टंभवद्भिश्चकथानकम्
२८२ तत्सर्वंचमयाख्यातंराक्षसोद्धारणादिकम् ॥ ॥ रामदासउवाच ॥ ॥ इत्युक्त्वात्वहरिर्विप्रोगृहीत्वास्वांजलौजलम् २८३ ददौदिनद्वयस्याथपुण्यंचैत्रकृतं
निजम् ॥ ततःप्रोवाचभार्यांतुरम्येचन्द्रप्रभेप्रिये २८४ यात्वयासीतलागौरीस्नातासीताकृतेवरे ॥ तीर्थेतस्यदिनैकस्यदेहिपुण्यंशुभानने २८५ पिशाचिन्येसमुद्ध
र्तुंमाविचारोऽस्तुतेहृदि ॥ इतिभर्तृवचःश्रुत्वारम्यापंकजलोचना २८४ लक्ष्मीनाम्नीममसाताददौपुण्यंनिजंतदा ॥ ततःपिशाचास्तेसर्वेमुक्ताःशीघ्रंशुभावहाः २८७
निजरूपाणिवैप्रापुःप्रणेमुर्नृहरिंरजवात् ॥ नत्वास्तुत्वापुनर्नत्वात्वहरिंतंप्रियायुतम् ८८ आपृच्छ्यजग्मिरेसर्वेस्वगुरोराश्रमंप्रति ॥ गुरुश्चापिसुतांस्वीयांतांददावतिहर्षितः
८९ तयोर्ज्येष्ठायशिष्यायकनिष्ठायापरांसुताम् ॥ स्वीयोदरसमुत्पन्नांददावप्रतिमांवराम् ९० ततस्तौसस्त्रियौविप्रौजग्मतुस्तौमुदान्वितौ ॥ स्वस्वापितुश्चाश्रमांहितयो
स्तौपितरावपि ९१ दृष्ट्वापुत्रौसमायातौसस्त्रियौतोषमापतुः ॥ नृहरिश्चप्रियायुक्तोऽब्जकंप्रतिसमाययौ ९२ चैत्रस्नानेनतत्पुत्रोरामदासाभिधस्त्वहम् ॥ जातस्तत
स्तौदेहांतेजग्मतुर्वैष्णवंपदम् ९३ एवंशिष्यमधुस्नानमहिमाबहुभिर्नरैः ॥ देवैःसिद्धैश्चगंधर्वैःसदानुभवितोऽस्तिहि ९४ तस्मान्मघावश्यंहिस्नातव्यंमानवोत्तमैः ॥
रामतीर्थेषुसर्वत्ररामचन्द्रंप्रपूजयेत् ९५ एवंत्वयायथापृष्टंतथासर्वंनिवेदितम् ॥ मयाकाऽन्यास्पृहातेऽस्तिश्रोतुंतद्वदवच्म्यहम् २९६ ॥ ॥ इति श्रीशतकोटिरामच
रितांतर्गत श्रीमदानन्दरामायणे वाल्मीकीये मनोहरकांडे चैत्रस्नानमाहात्म्ये एकादशःसर्गः ॥ ११ ॥ ॥ विष्णुदासउवाच ॥ गुरोऽन्यद्रामचन्द्रस्यचरित्रंवदमां
प्रति ॥ शृण्वतोमेमुहुर्नासीत्तृप्तिःश्रोतुंस्पृहैधते १ ॥ ॥ श्रीरामदासउवाच ॥ सम्यक्पृष्टंत्वयाशिष्यसावधानमनाःशृणु ॥ एकदाहयमारूढोपुत्रबंधुबलैःसह २ वनं

ययौविहारार्थंरामचंन्द्रोमुदान्वितः ॥ तत्रदृष्ट्वामृगंश्रेष्ठंतंहन्तुंरघुनन्दनः ३ बाणमाकृष्यतत्पृष्ठेययौवेगेनसादरम् ॥ वनाद्वनांतरंरामोमृगस्यचपदानुगः ४
एकाकीहयमारूढोविवेशगहनंवनम् ॥ पश्चाद्दूरस्थिताःसर्वेलक्ष्मणाद्याबलैःसह ५ रामोऽपिनिजबाणेनमृगंहत्वावनेऽहरत् ॥ निर्जलेऽतितृषाक्रांतःक्षुधाव्याप्तो
ऽप्यभूत्तदा ६ ततोरामोवृक्षतलेक्षणंतस्थौश्रमान्वितः ॥ तावत्तंशबरीकाचिद्दृष्ट्वारामंमुदान्विता ७ नृपंज्ञात्वाराजचिन्हैस्तंप्रणम्यपुरःस्थिता ॥ तांदृष्ट्वाराघवो
ऽप्याहवाक्यंशबरिमेशृणु ८ लक्ष्मणाद्याःस्थितादूरंक्षुत्तृड्भ्यांपीडितोऽस्म्यहम् ॥ किंचिद्यत्नंकुरुष्वात्रयेनमेऽद्यसुखंभवेत् ९ तद्रामवचनंश्रुत्वाशबरीवाक्य
मब्रवीत् ॥ इतोविदूरेश्रीरामदुर्गास्तिसरसस्तटे १० भौमवारेऽद्यनार्यश्चबहवोऽत्रसमागताः ॥ तत्रत्वंचमयारामयदियास्यसिसांप्रतम् ११ तर्हितत्रविचित्रान्वै
स्तुष्टिंप्राप्स्यसिवीक्षणात् ॥ ततस्तस्यावचनंश्रुत्वाशबरींप्राहराघवः १२ अहमत्रैवतिष्ठामिप्रतीक्षार्थंकुशस्यच ॥ लवस्यलक्ष्मणादीनांसैन्यस्यचनवासिनि १३
गच्छत्वमेवतांदुर्गांस्त्रीभिर्वृत्तांनिवेदय ॥ तद्रामवचनंश्रुत्वातथेत्युक्त्वात्वरान्विता १४ स्त्रीर्गत्वाशबरीप्राहशृणुध्वंवचनंमम ॥ रामोराजीवपत्राक्षोमृगयांकर्तुमागतः
१५ अविदूरेवृक्षतलेक्षुधाक्रांतःस्थितोऽस्तिहि ॥ तेनाहंप्रेषिताऽस्म्यद्यसूचनार्थंवराननाः १६ युष्माकंकथितंवृत्तंतस्यगच्छाम्यहंपुनः ॥ शबर्यास्तद्वचःश्रुत्वा
तानार्यःसंभ्रमान्विताः १७ अभिनंद्यनिजैर्वाक्यैःशबरींतांमुहुर्मुहुः ॥ परस्परंतदाप्रोचुस्तानार्यःशतशोमुदा १८ धन्योऽद्यदिवसोऽस्माकंयस्मिन्राघवदर्शनम् ॥
भविष्यतिवरान्नैश्चतोषयामोरघूत्तमम् १९ आदौदुर्गांपूजयित्वानैवेद्यंतांनिवेद्यच ॥ ततःसमर्प्यरामायभोक्ष्यामश्चवयंततः २० इतिसंमंत्र्यतानार्योरुक्मालंकारम
ण्डिताः ॥ पीतकौशेयवासिन्योवरास्याम्रृगलोचनाः २१ विप्रक्षत्रियवैश्यानांशूद्राणांचापिवैमतः ॥ नैवेद्यपात्रैस्तांदुर्गांययुर्नूपुरनिःस्वनाः २२ एतस्मिन्नंतरेदेवी
स्वालयस्यसमंततः ॥ कपाटानिदृढंबध्वातूष्णीमासीद्गिरींद्रजा २३ ततस्ताद्वारमासाद्यद्वारंबद्धंनिरीक्ष्यच ॥ बभ्रमुःसर्वद्वाराणिनमार्गंलेभिरेस्त्रियः २४ तदाश्चर्य
मनाःसर्वाद्वारदेशेस्थिताःक्षणम् ॥ तावद्देवालयाच्छब्दोनिर्गतःशुश्रुवुःस्त्रियः २५ अहमेवात्रसीतास्मिरामःसाक्षान्महेश्वरः ॥ येभिन्नंमानयंत्यत्रमांसीतांराघ
वंहरम् २६ तेकोटिकल्पपर्यंतंपच्यंतेरौरवेषुहि ॥ अतोयूयंहिभोनार्योमन्नाथंचजगत्प्रभुम् २७ तोषयध्वंवरान्नैश्चतच्छेषेणत्वहंततः ॥ तुष्टाभवामिगच्छध्वंक्षुधितंतं
रघूत्तमम् २८ इतिनार्योवचःश्रुत्वादेव्यास्ताविस्मयान्विताः ॥ द्रुतंद्रुतंगजगामिन्यःशबरीचरणानुगाः २९ ततःसाशबरीताभ्योदर्शयामासराघवम् ॥ तानेत्रपंकजैः
सर्वादृष्ट्वानत्वारघूत्तमम् ३० दिव्यान्नानिपुरःस्थाप्यहेमपात्रैर्जलान्यपि ॥ ततस्तंप्रार्थयामासुःस्त्रियःसर्वाःपुरःस्थिताः ३१ त्वयाद्यतारितारामवयंनार्यःसहस्रशः ॥ शबरी
प्रेष्यगहनेवनेऽत्रपरमादरात् ३२ अन्नानिस्वीकुरुष्वत्वंदेव्यात्वांप्रेषितानिहि ॥ ततस्तासांवचनंश्रुत्वाराघवःप्राहसस्मितः ३३ देव्याकिमुक्तंभोनार्यःकथनीयंममाद्यतत् ॥
ताःप्रोचूराघवंनार्योदुर्गावाक्यंसविस्तरम् ३४ दुर्गावाक्यंशृणुष्वाद्यत्वहमेवात्रजानकी ॥ रामःसाक्षान्महादेवोनात्रभेदःकदाचन ३५ मानयंत्यत्रभेदंयेरौरवेषुपतंतिते ॥
अतोरामंतोषयित्वातदुच्छिष्टंत्वहंततः ३६ भोक्ष्यामिनार्योगच्छध्वंक्षुधार्तंरघुनंदनम् ॥ देव्येत्थंभाषितंरामततस्त्वांसमुपागताः ३७ अग्रेत्वंपूर्वंपुण्यैर्नोभुंक्ष्वान्नंरघुनंदन ॥

ततस्ताःप्राहश्रीरामोविहस्यमुदिताननः ३८ यादेदेविवचःसत्यंतर्ह्यत्रगहनेवने ॥ सीतारूपेणसादुर्गामांसमायातुसत्वरम् ३९ युष्मान्नारीसमूहान्तुकाचिन्नारीगिरींद्र
जाम् ॥ गत्वामद्वचनंदुर्गांश्रावयत्वद्यकौतुकात् ४० तद्रामवचनंश्रुत्वात्वेकास्त्रीस्त्रीकदंबकात् ॥ गत्वादुर्गांरामवाक्यंश्रावयामाससादरम् ४१ दुर्गाश्रुत्वारामवाक्यंतथेत्यु
क्त्वातुतांस्त्रियम् ॥ किंचित्कपाटमुद्घाट्यसीतारूपेणनिर्ययौ ४२ ततःपुनर्दृढंबध्वाकपाटंजानकीजवात् ॥ तोयपात्रंकरेधृत्वाययौरामंस्मितानना ४३ नमस्कृत्वाराम
चंद्रंतत्पार्श्वेसंस्थिताऽभवत् ॥ तदाताःसकलानार्यस्त्वभूवन्विस्मिताहृदि ४४ ततोरामोवरान्नानिविप्रस्त्रीणांतथापुनः ॥ क्षत्रियाणांचनारीणांभोक्तुंस्नानार्थमु
द्यतः ४५ ततःशरासनेबाणंसंधायजगदीश्वरः ॥ भुवंभित्त्वाऽथपातालाज्जलंतत्रसमानयत् ४६ तत्रसस्नौरामचंद्रःकृत्वामाध्यान्हिकंततः ॥ यावद्भोक्तुंमनश्चक्रेताव
तेऽपिसमाययुः ४७ कुशाद्याःसर्वसैन्यैश्चरामवाजिपदानुगाः ॥ तेसर्वेजानकींदृष्ट्वाविस्मयंपरमंययुः ४८ ततस्तेशबरीवाक्यात्सर्वंश्रुत्वाकुशादिकाः ॥ गतमोहा
रामचंद्रंमेनिरेचंद्रशेखरम् ४९ सीतांगिरींद्रजांचापिमेनिरेतेविनिश्चयात् ॥ ततोरामःकुशाद्यैश्चसुदासैन्येनसीतया ५० भुक्त्वापीत्वाजलंस्वच्छंवाक्यंस्त्रीःप्राह
सादरम् ॥ वरयध्वंवरान्नार्योयुष्माकंयत्तुरोचते ५१ तद्रामवचनंश्रुत्वास्त्रियःप्रोचूरघूत्तमम् ॥ येनास्माकंभवेत्कीर्तिस्त्वंवरंदातुमर्हसि ५२ ततःप्राहरामचंद्रस्ता
नारीस्तुष्टमानसः ॥ ममनामास्तुयुष्माकंरामेतिजगतीतले ५३ युष्माकंमयिसद्भक्तिःपुरुषेभ्योपिचाधिका ॥ भविष्यतिसदानार्योवरेणममनिश्चयात् ५४ देवविप्रे
कथायांचधर्मेभक्तिर्भविष्यति ॥ सदायूयंपवित्राश्चभवध्वंसधवाःस्त्रियः ५५ मांगल्येशकुनेसर्वकर्मसुचपुरःसराः ॥ यूयंभवध्वंसर्वत्रत्रिवेणीधृतमस्तकाः ५६ ममबाणा
त्कृतंतीर्थमत्राम्रेदंभविष्यति ॥ इतिरामवचःश्रुत्वास्त्रियःप्रोचूरघूत्तमम् ५७ जन्मांतरेऽपित्वंरामदर्शनंदेहिनःपुनः ॥ तत्तासांवचनंश्रुत्वाराघवोवाक्यमब्रवीत् ५८
द्वापरेकृष्णरूपेणयुष्माकंदर्शनंमम ॥ भविष्यतिवनेयज्ञेत्वन्नयाञ्चाप्रसंगतः ५९ द्विजपत्न्यस्तदायूयंभविष्यथस्त्रियोवने ॥ इयंतुशबरीपत्नीविप्रस्यैवभविष्यति ॥
६० मद्दर्शनार्थमुद्युक्तामेनामस्याःपतिर्यदा ॥ स्तंभेबध्वामहादण्डैस्सकरिष्यतिवैगृहे ६१ तदेयंमद्गतमनावनेयास्यतिमांप्रति ॥ भिन्नदेहेनशबरीकौतुकंतद्भविष्य
ति ६२ तदायूयंस्त्रियःसर्वास्तद्दृष्ट्वाकौतुकंमहत् ॥ भूत्वात्रमद्गतमनामांध्यात्वासर्वदाहृदि ६३ अंतेमल्लोकमासाद्यमोक्ष्यथसुखमुत्तमम् ॥ रामेतितारकंनाममम
नित्यंहिसर्वदा ६४ युष्माभिर्जपनीयंवैतेनास्तुगतिरुत्तमा ॥ इतिदत्त्वावरांस्ताभ्यःसीतामाहपुरःस्थिताम् ६५ सुखंयाहिस्थलंस्वीयंतथेत्युक्त्वाविदेहजा ॥ रामं
प्रणम्यस्त्रीयुक्तायययौदेवालयंपुनः ६६ देवालयगताभूत्वादुर्गारूपंदधारसा ॥ तदातिविस्मयंप्रापुस्तानार्योनिजचेतसि ६७ तास्तांदुर्गांप्रपूज्याथनार्योजग्मुः
स्थलंनिजम् ॥ रामोऽपिबंधुपुत्राद्यैर्ययौनिजपुरींप्रति ६८ ततोगेहेकुशःसीतांपप्रच्छवनचेष्टितम् ॥ दृष्टवच्चयथावृत्तंतथासीतान्यवेदयत् ६९ ततस्तेलक्ष्मणा
द्याश्चमेनिरेराघवंहरम् ॥ सीतांसाक्षान्महादुर्गांमेनिरेगतविभ्रमाः ७० एवंशिष्यजनानांचरामेणपरमात्मना ॥ द्वैतबुद्धिःखंडितात्रवनेकृत्वातुकौतुकम् ७१ एवं
वरेणरामस्यरामानार्यत्रकथ्यते ॥ तासामपिमनुश्चायंस्मृतोरामेतिद्व्यक्षरः ७२ नान्योमंत्रोऽस्तिनारीणांशूद्राणांचापिभोद्विज ॥ सर्वेभ्योमंत्रवर्येभ्योरामस्यायं

॥ ३६ ॥

मनुर्वरः ७३ त्रासेभयेमहापापेधार्यासर्वदानरैः ॥ रामेतिद्व्यक्षरोमंत्रः कीर्त्यतेजगतीतले ७४ कृत्वापापंमहाघोरंपश्चात्तापेनयोनरः ॥ सकृद्रामेतिमंत्रंहिकीर्त
येच्छुद्धिमाप्नुयात् ७५ रामेतिमंत्रराजोऽयंगमनेभोजनेतथा ॥ शयनेक्रीडनेरात्रौस्थितेकार्यांतरेनरैः ७६ जपनीयःसर्वदैवसंध्ययोरुभयोरपि ॥ चातुर्वर्णैःसदाजप्यश्चतु
राश्रमवासिभिः ७७ नास्यमंत्रस्यकालोऽस्तिजपार्थंकालरूपिणः ॥ तस्माज्जनैर्जपनीयःसर्वदामनुरुत्तमः ७८ राममंत्रोमुखेयस्यदेहोमुद्रांकितस्तथा ॥ राममु
द्रांकितंवस्त्रंयस्यतंनेक्षयेद्यमः ७९ राममुद्रांकितंवस्त्रंसमुद्रंवस्त्रमुच्यते ॥ सर्ववस्त्रेषुतच्छ्रेष्ठंपवित्रंपापनाशकम् ८० समुद्रवसनंदेहेबिभ्रंतंमानवोत्तमम् ॥ कृतं
पापंनलिप्येतपद्मपत्रमिवांभसा ८१ समुद्रवस्त्रसंयुक्तंदृष्ट्वाभुविनरोत्तमम् ॥ यमदूताःपलायंतेसिंहंदृष्ट्वामृगायथा ८२ पुरैकदातुमुनयःसंमंत्र्योचुरघूत्तमम् ॥ राम
राममहाबाहोकलावग्रेद्विजोत्तमाः ८३ व्यग्रचित्तामंदधियोभविष्यंत्यवनीतले ॥ निजजाठरपूर्त्यर्थंद्वाराद्वारंभ्रमंतिहि ८४ कुतोऽवकाशःस्मरणेतवतेषांभविष्य
ति ॥ अतस्तेषांहितार्थायत्वांयाचामोऽद्यराघव ८५ तेषांहितार्थंकिंचित्त्वमुपायंवक्तुमर्हसि ॥ ततस्तेषांवचनंश्रुत्वामुनीनांरघुनंदनः ८६ उवाचवाक्यंसंतुष्टस्ता
न्मुनीन्प्रहसन्प्रभुः ॥ सम्यगुक्तंमुनिश्रेष्ठाःशृणुध्वंवचनंमम ८७ ममसुद्रांकितंवस्त्रंकलौधार्यंजनैःसुखम् ॥ ममसुद्रांकितंवस्त्रंबिभ्रंतंमानवोत्तमम् ८८ नस्पर्शेत्पा
तकंकिंचित्कृतंचापिनरेणहि ॥ शंखचक्रगदापद्मनाममुद्रांकितंशुभम् ८९ वस्त्रंधार्यंनरैर्भक्त्यामुद्रयैवांकितंतुवा ॥ शंखादिपंचभिर्युक्तंसदावस्त्रंममप्रियम् ९० मन्मुद्र
यांकितंवापिवस्त्रंमत्तोषदंस्मृतम् ॥ स्नात्वाधार्यंसदातच्चजपकालेविशेषतः ९१ मलमूत्रोत्सर्जनेचशयनेक्रीडनेतथा ॥ अशुचौचक्षयेवृद्धौहट्टेराजसभासुच ९२ पथि
दुर्जनसंसर्गेमुद्रावस्त्रंनधारयेत् ॥ तथाभोजनकालेऽपिविहारेनैवधारयेत् ९३ स्नानकालेव्रतेतीर्थेपूजायांपितृकर्मणि ॥ होमेदानेजपेकृच्छ्रचांद्रायणव्रतादिषु ९४
नित्यकर्मसुकाम्येषुतथानैमित्तिकेष्वपि ॥ तथातपस्सुमन्मुद्रावस्त्रंधार्यंसदैवहि ९५ ममसुद्रांकितंवस्त्रंबिभ्रंतंमानवोत्तमम् ॥ अहंमोक्षंप्रदास्यामिसत्यंसत्यंमुनीश्व
राः ९६ एवंश्रुत्वारामवाक्यंमुनयस्तेमुदान्विताः ॥ रामंप्रदक्षिणीकृत्यस्वंस्वंस्थानंययुस्तेमुदिताननाः ९७ तस्मात्सदाराममुद्रावस्त्रंधार्यंनरैर्भुवि ॥ रामेतिद्व्यक्षरोमंत्रो
जपनीयस्तुसर्वदा ९८ राममुद्राशुभाधार्यागोपीचंदनसंयुता ॥ सदात्रमानवैर्भक्त्यारामतोषार्थमादरात् ९९ पूजासदाराघवस्यकार्यात्रमानवैर्भुवि ॥ सदात्रा
नंरामतीर्थेनरैःकार्यंप्रयत्नतः १०० सदारामायणंचेदंश्रवणीयंनरैर्भुवि ॥ चिंतनीयःसदारामोजन्ममृत्युनिवारकः १ स्तोतव्यःकीर्तनीयश्चवंदनीयोऽत्रराघवः ॥
नकिंचिद्गुणमात्रंहिविनारामंसदाचरेत् २ हनुमत्कवचंदिव्यंपठित्वादौनरैर्भुवि ॥ ततःश्रीरामकवचंपठनीयंहिसर्वदा ३ पठंतिरामकवचंहनुमत्कवचंविना ॥ अर
ण्येरोदनंतेस्तुकृतमेवनसंशयः ४ स्तोत्राणामुत्तमंस्तोत्रंसर्वभीतिनिवारकम् ॥ श्रीरामकवचंनित्यंपठनीयंनरैर्भुवि ५ ॥ ॥ विष्णुदासउवाच ॥ ॥ गुरो
ऽहंश्रोतुमिच्छामिहनुमत्कवचंशुभम् ॥ तथैवरामकवचंवदकृत्वाकृपांमयि ६ ॥ ॥ रामदासउवाच ॥ ॥ सम्यक्पृष्टंत्वयावत्ससावधानमनाःशृणु ॥

१ निष्फलमित्यर्थः ।

193

हनुमत्कवचंरामकवचंचवदामिते १०७ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गत श्रीमदानन्दरामायणे वाल्मीकीये मनोहरकांडे श्रीरामेणाद्वैतप्रदर्शनं नाम द्वा
दशःसर्गः ॥ १२ ॥ ॥ रामदासउवाच ॥ एकदासुखमासीनंशंकरंलोकशंकरम् ॥ पप्रच्छगिरिजाकांतंकर्पूरधवलंशिवम् १ ॥ पार्वत्युवाच ॥ भगवन्देवदेवेशलो
कनाथजगत्प्रभो ॥ शोकाकुलानांलोकानांकिंनरक्षाभवेद्ध्रुवम् २ संग्रामेसंकटेघोरेभूतप्रेतादिकेभये ॥ दुःखदावाग्निसंतप्तचेतसांदुःखभागिनाम् ३ ॥ श्रीमहादेवउवाच ॥
शृणुदेविप्रवक्ष्यामिलोकानांहितकाम्यया ॥ विभीषणायरामेणप्रेम्णादत्तंचयत्पुरा ४ कवचंकपिनाथस्यवायुपुत्रस्यधीमतः ॥ गुह्यंतत्तेप्रवक्ष्यामिविशेषाच्छृणुसुन्दरि ५
उद्यदादित्यसंकाशमुदारभुजविक्रमम् ॥ कंदर्पकोटिलावण्यंसर्वविद्याविशारदम् ६ श्रीरामहृदयानन्दंभक्तकल्पमहीरुहम् ॥ अभयंवरदंदोर्भ्यांकलयेमारुतात्मजम् ७
हनुमानंजनीसूनुर्वायुपुत्रोमहाबलः ॥ रामेष्टःफाल्गुनसखःपिंगाक्षोऽमितविक्रमः ८ उदधिक्रमणश्चैवसीताशोकविनाशनः ॥ लक्ष्मणप्राणदाताचदशग्रीवस्यदर्पहा ९
एवंद्वादशनामानिकपींद्रस्यमहात्मनः ॥ स्वापकालेप्रबोधेचयात्राकालेचयःपठेत् १० तस्यसर्वभयंनास्तिरणेचविजयीभवेत् ॥ राजद्वारेगव्हरेचभयंनास्तिकदाचन ॥
११ उल्लंघ्यसिंधोःसलिलंसलीलंयःशोकवन्हिंजनकात्मजायाः ॥ आदायतेनैवददाहलंकांनमामितंप्रांजलिरांजनेयम् १२ ॐनमोहनुमतेसर्वग्रहान्भूतभविष्यद्वर्तमानान्
समीपस्थान्सर्वकालदुष्टबुद्धीनुच्चाटयोच्चाटय परबलान्क्षोभयक्षोभय ममसर्वकार्याणिसाधयसाधय ॐह्रांह्रींह्रूंफट् ॥ घेघेघेॐशिवसिद्धं ॐह्रांॐह्रींॐह्रूंॐह्रैंॐह्रौं
ॐह्रःस्वाहा ॥ परकृतयंत्रमन्त्रपरहंकारभूतप्रेतपिशाचदृष्टिसर्वविघ्नदुर्जनचेष्टाकुविद्यासर्वोग्रभयानिनिवारयनिवारय बंधबंध लुंठलुंठ विलुंचविलुंच किलिकिलिकिलिसर्व
कुयन्त्राणिदुष्टवाचंॐफट्स्वाहा ॥ ओंअस्यश्रीहनुमत्कवचस्तोत्रमंत्रस्य ॥ श्रीरामचन्द्रऋषिः ॥ श्रीहनुमान्परमात्मादेवता ॥ अनुष्टुप्छंदः ॥ मारुतात्मजइतिबी
जम् ॥ अंजनीसूनुरितिशक्तिः ॥ लक्ष्मणप्राणदातेतिकीलकम् ॥ रामदूतायेत्यस्त्रम् ॥ हनुमान्देवताइतिकवचम् ॥ पिंगाक्षोऽमितविक्रमइतिमन्त्रः ॥ श्रीरामचं
द्रप्रेरणयारामचन्द्रप्रीत्यर्थंममसकलकामनासिद्ध्यर्थंजपेविनियोगः ॥ अथांगुलिन्यासः ॥ ॐह्रांअंजनीसुतायअंगुष्ठाभ्यांनमः ॥ ॐह्रींरुद्रमूर्तयेतर्जनीभ्यांनमः ॥ ॐह्रूं
रामदूतायमध्यमाभ्यांनमः ॥ ॐह्रैंवायुपुत्रायअनामिकाभ्यांनमः ॥ ॐह्रौंअग्निगर्भायकनिष्ठिकाभ्यांनमः ॥ ॐह्रःब्रह्मास्त्रनिवारणायकरतलकरपृष्ठाभ्यांनमः ॥ एवं
हृदयाद्यंगन्यासंकृत्वा ॥ अथध्यानम् ॥ ध्यायेद्बालदिवाकरद्युतिनिभंदेवारिदर्पापहंदेवेंद्रप्रमुखंप्रशस्तयशसंदेदीप्यमानंरुचा ॥ सुग्रीवादिसमस्तवानरयुतंसुव्यक्तत
त्त्वप्रियंसंरक्तारुणलोचनंपवनजंपीतांबरालंकृतम् १ उद्यन्मार्तंडकोटिप्रकटरुचियुतंचारुवीरासनस्थंमौंजीयज्ञोपवीताभरणरुचिशिखंशोभितंकुण्डलांकम् ॥ भक्ताना
मिष्टदंतंप्रणतमुनिजनंवेदनादप्रमोदंध्यायेदेवंविधेयंप्लवगकुलपतिंगोष्पदीभूतवार्धिम् २ वज्रांगंपिंगकेशाढ्यंस्वर्णकुण्डलमंडितम् ॥ निगूढमुपसंगम्यपारावारपराक्रमम् ॥
३ स्फटिकाभंस्वर्णकांतिंद्विभुजंचकृतांजलिम् ॥ कुण्डलद्वयसंशोभिमुखांभोजंहरिंभजे ४ सव्यहस्तेगदायुक्तंवामहस्तेकमण्डलुम् ॥ उद्यद्दक्षिणदोर्दंडंहनुमंतंविचिंतयेत्
५ ॥ अथमंत्रः ॥ ॐनमोहनुमतेशोभिताननाय यशोलंकृताय अंजनीगर्भसम्भूताय रामलक्ष्मणानन्दकाय कपिसैन्यप्रकाशनपर्वतोत्पाटनाय सुग्रीवसाह्यकरण परोच्चाट

नं कुमारब्रह्मचर्यं गंभीरशब्दोदय ॐह्रींसर्वदुष्टग्रहनिवारणायस्वाहा ॥ ॐनमोहनुमतेएहिएहिएहिसर्वग्रहभूतानांशाकिनीडाकिनीनांविशम दुष्टानांसर्वेषामाकर्षयाकर्षय
मर्दयमर्दय छेदयछेदय मर्त्यान्मारयमारय शोषयशोषय प्रज्वलप्रज्वल भूतमण्डलपिशाचमण्डलनिरसनाय भूतज्वरप्रेतज्वरचातुर्थिकज्वरब्रह्मराक्षसपिशाचछेदनक्रिया
विष्णुज्वरमहेशज्वरछिंधिछिंधिभिंधिभिंधि अक्षिशूलेशिरोभ्यंतरेह्यक्षिशूलेगुल्मशूलेपित्तशूलेब्रह्मराक्षसकुलप्रबलनागकुलविषनिर्विषझटितिझटिति॥ॐह्रींफट्घेघेस्वाहा
ॐनमोहनुमतेपवनपुत्रवैश्वानरमुखपापदृष्टिशोदादृष्टिहनुमतेकोअज्ञाफुरेस्वाहा॥ स्वगृहेद्वारेपट्टकेतिष्ठतितिष्ठेतितत्ररोगभयंराजकुलभयंनास्तितस्योच्चारणमात्रेणसर्वेज्वरा
नश्यंति ॥ ॐह्रांह्रींह्रूंफट्घेघेस्वाहा ॥ श्रीरामचन्द्रउवाच ॥ हनुमान्पूर्वतःपातुदक्षिणेपवनात्मजः ॥ पातुप्रतीच्यांरक्षोघ्नःपातुसागरपारगः १ उदीच्यामूर्ध्वतःपातु
केसरीप्रियनन्दनः ॥ अधस्तुविष्णुभक्तस्तुपातुमध्यंचपावनिः २ लंकाविदाहकःपातुसर्वापद्भ्योनिरन्तरम् ॥ सुग्रीवसचिवःपातुमस्तकंवायुनन्दनः ३ भालंपातुमहावीरो
भ्रुवोर्मध्येनिरंतरम् ॥ नेत्रेछायापहारीचपातुनःप्लवगेश्वरः ४ कपोलेकर्णमूलेचपातुश्रीरामकिंकरः ॥ नासाग्रमंजनीसूनुःपातुवक्त्रंहरीश्वरः ५ वाचंरुद्रप्रियःपातुजिव्हां
पिंगललोचनः ॥ पातुदेवःफाल्गुनेष्टश्चुबुकंदैत्यदर्पहा ॥ पातुकण्ठंचदैत्यारिःस्कन्धौपातुसुरार्चितः ६ भुजौपातुमहातेजाःकरौचचरणायुधः ॥ नखान्नखायुधःपातु
कुक्षौपातुकपीश्वरः ७ वक्षोमुद्रापहारीचपातुपार्श्वेभुजायुधः ॥ लंकानिभंजनःपातुपृष्ठदेशेनिरंतरम् ८ नाभिंचरामदूतस्तुकटिंपात्वनिलात्मजः ॥ गुह्यंपातुमहाप्राज्ञो
लिंगंपातुशिवप्रियः ९ ऊरूचजानुनीपातुलंकाप्रासादभंजनः ॥ जंघेपातुकपिश्रेष्ठोगुल्फौपातुमहाबलः १० अचलोद्धारकःपातुपादौभास्करसन्निभः ॥ अंगान्यमित
सत्त्वाढ्यःपातुपादांगुलीस्तथा ॥ सर्वांगानिमहाशूरःपातुरोमाणिचात्मवित् ११ हनुमत्कवचंयस्तुपठेद्विद्वान्विचक्षणः ॥ सएवपुरुषश्रेष्ठोभुक्तिंमुक्तिंचविंदति १२ त्रि
कालमेककालंवापठेन्मासत्रयंनरः ॥ सर्वान्रिपून्क्षणाज्जित्वासपुमान्श्रियमाप्नुयात् १३ मध्यरात्रेजलेस्थित्वासप्तवारंपठेद्यदि ॥ क्षयापस्मारकुष्ठादितापत्रयनिवारणम्
१४ अश्वत्थमूलेऽर्कवारेस्थित्वापठतियःपुमान् ॥ अचलांश्रियमाप्नोतिसंग्रामेविजयंतथा १५ बुद्धिर्बलंयशोधैर्यंनिर्भयत्वमरोगताम् ॥ सुदार्ढ्यंवाक्स्फुरत्वंचहनुम
त्स्मरणाद्भवेत् १६ मारणंवैरिणांसद्यःशरणंसर्वसंपदाम् ॥ शोकस्यहरणेदक्षंवंदेतंरणदारुणम् १७ लिखित्वापूजयेद्यस्तुसर्वत्रविजयीभवेत् ॥ यःकरेधारयेन्नित्यं
सपुमान्श्रियमाप्नुयात् १८ स्थित्वातुबन्धनेयस्तुजपंकारयतिद्विजैः ॥ तत्क्षणान्मुक्तिमाप्नोतिनिगडात्तुतथैवच १९ ॥ ईश्वरउवाच ॥ भान्विदुचरणारविं
दयुगलंकौपीनमौंजीधरंकांचिश्रेणिधरंदुकूलवसनंयज्ञोपवीताजिनम् ॥ हस्ताभ्यांधृतपुस्तकंचविलसद्धारावलिंकुण्डलंयश्चालंविशिखंप्रसन्नवदनंश्रीवायुपुत्रंभजे २० यो
वारांनिधिमल्पपल्वलमिवोल्लंघ्यप्रतापान्वितो वैदेहीघनशोकतापहरणो वैकुंठभक्तिप्रियः ॥ अक्षाद्यूर्जितराक्षसेश्वरमहादर्पापहारीरणेसोऽयंवानरपुंगवोऽवतुसदायोऽस्मा
न्समीरात्मजः २१ वज्रांगंपिंगनेत्रंकनकमयलसत्कुण्डलाक्रांतगण्डंदंभोलिस्तंभसारंप्रहरणसुवशीभूतरक्षोधिनाथम् ॥ उद्यल्लांगूलसप्तप्रचलंचलधरंभीममूर्तिंकपीन्द्रं

१ लद्दिजलद्दिजहीतिपाठः । २ पःकंठेइतिपाठः । ३ चरचरमितिपाठः ।

ध्यायेत्तंरामचंद्रंभ्रमरदढकरंसत्त्वसारंप्रसन्नम् २२ वज्रांगंपिंगनेत्रंकनकमयलसत्कुंडलैःशोभनीयंसर्वांपीठाादिनाथंकरतलविधृतंपूर्णकुंभंदढेवा ॥ भक्तानामिष्टकारंविदधाति
चसदासुप्रसन्नंहरीशंत्रैलोक्यत्रातुकामंसकलभुविगतंरामदूतंनमामि २३ वामेकरेवैरिभिदंवहंतंशैलंपरंशृंखलहारकंठम् ॥ दधानमाच्छाद्यसुवर्णवर्णंभजेज्वलत्कुंडलमां
जनेयम् २४ पद्मरागमणिकुंडलत्विषापाटलीकृतकपोलमंडलम् ॥ दिव्यदेहकदलीवनांतरेभावयामिपवमाननंदनम् २५ यत्रयत्ररघुनाथकीर्तनंतत्रतत्रकृतमस्तकां
जलिम् ॥ बाष्पवारिपरिपूर्णलोचनंमारुतिंनमतराक्षसांतकम् २६ मनोजवंमारुततुल्यवेगंजितेंद्रियंबुद्धिमतांवरिष्ठम् ॥ वातात्मजंवानरयूथमुख्यंश्रीरामदूतंशिरसा
नमामि २७ विवादेदिव्यकालेचद्यूतेराजकुलेरणे ॥ दशवारंपठेद्रात्रौमिताहारोजितेंद्रियः २८ विजयंलभतेलोकेमानवेषुनरेषुच ॥ भूतेप्रेतेमहादुर्गेऽरण्येसागरसंप्लवे २९
सिंहव्याघ्रभयेचोग्रेशरशस्त्रास्त्रपातने ॥ शृंखलाबंधनेचैवकारागृहादियंत्रणे ३० कोपेस्तंभेवन्हिचक्रेक्षेत्रेघोरेसुदारुणे ॥ शोकेमहारणेचैवब्रह्मग्रहनिवारणम् ३१
सर्वदातुपठेन्नित्यंजयमाप्नोतिनिश्चितम् ॥ भूर्जेवावसनेरक्तेक्षौमेवातालपत्रके ३२ त्रिगंधिनावामध्यावाविलेख्यधारयन्नरः ॥ पंचसप्तत्रिलोहैर्वागोपितःसर्वतःशुभम् ३३
करेकट्यांबाहुमूलेकंठेशिरसिधारितम् ॥ सर्वान्कामानवाप्नोतिसत्यंश्रीरामभाषितम् ३४ अपराजितनमस्तेऽस्तुनमस्तेरामपूजित ॥ प्रस्थानंचकरिष्यामिसिद्धिर्भ
वतुमेसदा ३५ इत्युक्त्वायोव्रजेद्ग्रामंदेशंतीर्थांतरंरणम् ॥ आगमिष्यतिशीघ्रंसक्षेमरूपोगृहंपुनः ३६ इतिवदतिविशेषाद्राघवेराक्षसेंद्रःप्रमुदितवराचित्तोरावणस्यानुजो
हि ॥ रघुवरपदपद्मंवंदयामासभूयःकुलसहितकृतार्थःशर्मदंमन्यमानः ३७ तंवेदशास्त्रपरिनिष्ठितशुद्धबुद्धिंशर्मांवरंसुरमुनींद्रनुतंकपींद्रम् ॥ कृष्णत्वचंकनकपिंगजटाक
लापंव्यासंनमामिशिरसातिलकंमुनीनाम् ३८ यइदंप्रातरुत्थायपठेतकवचंसदा ॥ आयुरारोग्यसंतानैस्तस्यस्तव्यःस्तवोभवेत् ३९ एवंगिरींद्रजेश्रीमद्धनुमत्कवचंशुभम् ॥
त्वयापृष्टंमयाप्रीत्याविस्तराद्विनिवेदितम् ४० ॥ रामदासउवाच ॥ एवंशिवमुखाच्छ्रुत्वापार्वतीकवचंशुभम् ॥ हनूमतःसदाभक्त्यापपाठतन्मनाःसदा ४१ एवंशिष्य
त्वयाप्यत्रयथापृष्टंतथामया ॥ हनुमत्कवचंचेदंतवाग्रेविनिवेदितम् ४२ इदंपूर्वंपठित्वातुरामस्यकवचंततः ॥ पठनीयंनरैर्भक्त्यानैकमेवपठेत्कदा ४३ हनुमत्कवचंचात्रश्री
रामकवचंविना ॥ येपठंतिनराचात्रपठनंतद्वृथाभवेत् ४४ तस्मात्सर्वैःपठनीयंसर्वदाकवचद्वयम् ॥ रामस्यवायुपुत्रस्यसद्भक्तैश्वविशेषतः ४५ इतिहनुमत्कवचम् ॥ इदानीं
रामकवचंशृणुशिष्यवदामिते ॥ परंगुह्यंपवित्रंचसर्ववांछितपूरकम् ४६ सुतीक्ष्णस्त्वेकदागस्तिंप्रोवाचरहसिस्थितम् ॥ भगवन्परमानंदतत्त्वज्ञकरुणानिधे ॥ गुरोत्वंमां
वदस्वाद्यस्तोत्रंरामस्यपावनम् ४७ ॥ अगस्तिरुवाच ॥ आजानुबाहुमरविंददलायताक्षमाजन्मशुद्धरसहासमुखप्रसादम् ॥ श्यामंगृहीतशरचापमुदाररूपंरामंसरा
ममभिराममनुस्मरामि ४८ शृणुवक्ष्याम्यहंसर्वंसुतीक्ष्णमुनिसत्तम ॥ श्रीरामकवचंपुण्यंसर्वकामप्रदायकम् ४९ अद्वैतानंदचैतन्यशुद्धसत्त्वैकलक्षणः ॥ बहिरंतःसुती
क्ष्णात्ररामचंद्रःप्रकाशते ५० तत्त्वविद्यार्थिनोनित्यंरमंतेचित्सुखात्मनि ॥ इतिरामपदेनासौपरब्रह्माभिधीयते ५१ जयरामेतियन्नामकीर्तयन्नाभिवर्णयेत ॥ सर्वपापे

१ सर्वांविद्यादिनाथमितिपाठः ।

विनिर्मुक्तोयातिविष्णोःपरंपदम् ९२ श्रीरामेतिपरंमंत्रंतदेवपरमंपदम् ॥ तदेवतारकंविद्धिजन्ममृत्युभयापहम् ॥ श्रीरामेतिवदन्ब्रह्मभावमाप्नोत्यसंशयम् ९३ अस्यश्रीराम
कवचस्यअगस्त्यऋषिः अनुष्टुप्छंदः सीतालक्ष्मणोपेतःश्रीरामचंद्रोदेवता ॥ श्रीरामचंद्रप्रसादसिद्ध्यर्थंजपेविनियोगः ॥ अथध्यानंप्रवक्ष्यामिसर्वाभीष्टफलप्रदम् ॥
नीलजीमूतसंकाशंविद्युद्वर्णांबरावृतम् ९४ कोमलांगंविशालाक्षंयुवानमतिसुंदरम् ॥ सीतासौमित्रिसहितंजटामुकुटधारिणम् ९५ सासितूणधनुर्बाणपाणिंदानवमर्द
नम् ॥ यदाचोरभयेराजभयेशत्रुभयेतथा ९६ ध्यात्वारघुपतिंक्रुद्धंकालानलसमप्रभम् ॥ चीरकृष्णाजिनधरंभस्मोद्धूलितविग्रहम् ९७ आकर्णाकृष्टसशरकोदंडभुजमंडि
तम् ॥ रणेरिपून्रावणादींस्तीक्ष्णमार्गणवृष्टिभिः ९८ संहरंतंमहावीरमुग्रमैंद्ररथस्थितम् ॥ लक्ष्मणाद्यैर्महावीरैर्वृतंहनुमदादिभिः ९९ सुग्रीवाद्यैर्महावीरैःशैलवृक्ष
करोद्यतैः ॥ वेगात्करालहुंकारैर्भुभुक्कारमहारवैः ६० नदद्भिःपरिवादद्भिःसमरेरावणंप्रति ॥ श्रीरामशत्रुसंघान्मेहनमर्दयखादय ६१ भूतप्रेतपिशाचादीन्श्रीरामाशुविना
शय ॥ एवंध्यात्वाजपेद्रामकवचंसिद्धिदायकम् ६२ सुतीक्ष्णवज्रकवचंशृणुवक्ष्याम्यनुत्तमम् ॥ श्रीरामःपातुमेमूर्ध्निपूर्वेचरघुवंशजः ६३ दक्षिणेमेरघुवरःपश्चिमेपातु
पावनः ॥ उत्तरेमेरघुपतिर्भालंदशरथात्मजः ६४ भ्रुवोर्दूर्वादलश्यामस्तयोर्मध्येजनार्दनः ॥ श्रोत्रंमेपातुराजेंद्रोदृशौराजीवलोचनः ६५ घ्राणंमेपातुराजर्षिर्गंडौमेजानकी
पतिः ॥ कर्णमूलेखरध्वंसीभालंमेरघुवल्लभः ६६ जिव्हांमेवाक्पतिःपातुदंतपंक्तीरघूत्तमः ॥ ओष्ठौश्रीरामचंद्रोमेमुखंपातुपरात्परः ६७ कंठंपातुजगद्वंद्यःस्कंधौमे
रावणांतकः ॥ धनुर्बाणधरःपातुभुजौमेवालिमर्दनः ६८ सर्वाण्यंगुलिपर्वाणिहस्तौमेराक्षसांतकः ॥ वक्षोमेपातुकाकुत्स्थःपातुमेहृदयंहरिः ६९ स्तनौसीतापतिःपातु
पार्श्वेमेजगदीश्वरः ॥ मध्यंमेपातुलक्ष्मीशोनाभिंमेरघुनायकः ७० कौसल्येयःकटिंपातुपृष्ठंदुर्गतिनाशनः ॥ गुह्यंपातुहृषीकेशःसक्थिनीसत्यविक्रमः ७१ ऊरूशार्ङ्ग
धरःपातुजानुनीहनुमत्प्रियः ॥ जंघेपातुजगद्व्यापीपादौमेताटिकांतकः ७२ सर्वांगंपातुमेविष्णुःसर्वसंधीननामयः ॥ ज्ञानेंद्रियाणिप्राणादीन्पातुमेमधुसूदनः ७३ पातु
श्रीरामभद्रोमेशब्दादीन्विषयानपि ॥ द्विपदादीनिभूतानिमत्संबंधीनियानिच ७४ जामदग्न्यमहादर्पदलनःपातुतानिमे ॥ सौमित्रिपूर्वजःपातुवागादीनींद्रियाणिच ७५
रोमांकुराण्यशेषाणिपातुसुग्रीवराज्यदः ॥ वाङ्मनोबुद्ध्यहंकारैर्ज्ञानाज्ञानकृतानिच ७६ जन्मांतरकृतानीहपापानिविविधानिच ॥ तानिसर्वाणिदग्ध्वाशुहरकोदंडखंड
नः ७७ पातुमांसर्वतोरामःशार्ङ्गबाणधरःसदा ॥ इतिश्रीरामचंद्रस्यकवचंवज्रसंमितं ७८ गुह्याद्गुह्यतमंदिव्यंसुतीक्ष्णमुनिसत्तम ॥ यःपठेच्छृणुयाद्वापिश्रावयेद्वासमा
हितः ७९ सयातिपरमंस्थानंरामचंद्रप्रसादतः ॥ महापातकयुक्तोवागोघ्नोवाभ्रूणहातथा ८० श्रीरामचंद्रकवचपठनाच्छुद्धिमाप्नुयात् ॥ ब्रह्महत्यादिभिःपापैर्मुच्यतेना
त्रसंशयः ८१ भोःसुतीक्ष्णयथापृष्टंत्वयाममपुराशुभम् ॥ तथाश्रीरामकवचंमयातेविनिवेदितम् ८२ ॥ रामदासउवाच ॥ एवंशिष्यत्वयापृष्टंश्रीरामकवचंवरम् ॥ हनु
९९ मत्कवचंचापितथातेविनिवेदितम् ८३ वायुपुत्रस्यरामस्यकवचेऽत्रनरैर्भुवि ॥ विनासीताकवचेनपठनीयंनवैकदा ८४ आदौपठित्वाकवचंवायुपुत्रस्यधीमतः ॥ पठ

१ नक्तंचरात्मकमितिपाठः । २ ग्रहमर्दनिवारयेतिपाठः ।

नयिंततःसीताकवचंसौख्यवर्द्धनम् ८५ ततश्श्रीरामकवचंपठनीयंमहत्तमम् ॥ एवमेवहिमंत्राश्चजपनीयास्त्रयःक्रमात् ८६ ॥ विष्णुदासउवाच ॥ गुरोऽहंश्रोतुमि
च्छामिसीतायाःकवचंशुभम् ॥ तथान्यान्यपिवैदेह्यास्तोत्रादीनिवदस्वतत् ८७ सीतायास्तोषदंभूम्यांतत्सर्वंविस्तरेणच ॥ महादेवउवाच ॥ इतितद्वचनंश्रुत्वारा
मदासोऽब्रवीद्वचः ८८ ॥ इतिश्रीशतकोटिरामचरितांतर्गत श्रीमदानंदरामायणे वाल्मीकीये कवचद्वयवर्णनं नाम त्रयोदशःसर्गः ॥ १३ ॥ ॥ श्रीरामदासउवाच ॥
शृणुशिष्यप्रवक्ष्यामिसीतायाःकवचंशुभम् ॥ पुराप्रोक्तंसुतीक्ष्णाययद्रम्यंकुंभजन्मना १ एकदाकुंभजन्मानंसुतीक्ष्णःप्राहवैमुनिः ॥ रहःस्थितंगुरुंदृष्ट्वाप्रणम्यभक्तिपूर्व
कम् २ ॥ सुतीक्ष्णउवाच ॥ गुरोऽहंश्रोतुमिच्छामिसीतायाःप्रीतिदानिहि ॥ यानिस्तोत्राणिकर्माणितानित्वंवक्तुमर्हसि ३ ॥ अगस्तिरुवाच ॥ सम्यक्पृष्टंत्वयावत्स
सावधानमनाःशृणु ॥ आदौवक्ष्याम्यहंरम्यंसीतायाःकवचंशुभम् ४ यासीतावनिसंभवाथमिथिलापालेनसंवर्द्धितापद्माक्षनृपतेःसुतानलगतायामातुलिंगोद्भवा ॥ यार
त्नेलयमागताजलनिधौयावेदवारंगतालंकांसामृगलोचनाशशिमुखीमांपातुरामप्रिया ५ अस्यश्रीसीताकवचस्तोत्रमंत्रस्य ॥ अगस्तिर्ऋषिः ॥ श्रीसीतादेवता ॥
अनुष्टुप्छन्दः ॥ रमेतिबीजम् ॥ जनकजेतिशक्तिः ॥ अवनिजेतिकीलकम् ॥ पद्माक्षसुतेत्यस्त्रम् ॥ मातुलिंगीतिकवचम् ॥ मूलकासुरघातिनीतिमंत्रः ॥ श्रीसी
तारामचंद्रप्रीत्यर्थंसकलकामनासिध्यर्थंजपेविनियोगः ॥ अथअंगुलीन्यासः ॥ ॐ ह्रांसीतायैअंगुष्ठाभ्यांनमः ॥ ॐ ह्रींरमायैतर्जनीभ्यांनमः ॥ ॐ ह्रूंजनकजायैमध्य
माभ्यांनमः॥ ॐ ह्रैंअवनिजायैअनामिकाभ्यांनमः ॥ ॐ ह्रौंपद्माक्षसुतायैकनिष्ठिकाभ्यांनमः ॥ ॐ ह्रःमातुलिंग्यैकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयाद्यंगन्यासः
कार्यः ॥ अथध्यानम् ॥ सीतांकमलपत्राक्षींविद्युत्पुंजसमप्रभाम् ॥ द्विभुजांसुकुमारांगींपीतकौशेयवासिनीम् ६ सिंहासनेरामचंद्रवामभागस्थितांवराम् ॥ नानालंकार
संयुक्तांकुंडलद्वयधारिणीम् ७ चूडाकंकणकेयूररशनानूपुरान्विताम् ॥ सीमंतेरविचंद्राभ्यांनिटिलेतिलकेनच ८ मयूराभरणेनापिघ्राणेऽतिशोभितांशुभाम् ॥ हरिद्रां
कज्जलंदिव्यंकुंकुमंकुसुमानिच ९ बिभ्रतींसुरभिद्रव्यंसुगंधस्नेहसुत्तमम् ॥ स्मितानननांगौरवर्णांमंदारकुसुमंकरे १० बिभ्रतीमपरेहस्तेमातुलिंगमनुत्तमम् ॥ रम्यहासांच
बिंबोष्ठींचंद्रवाहनलोचनाम् ११ कलानाथसमानास्यांकलकंठमनोरमाम् ॥ मातुलिंगोद्भवांदेवींपद्माक्षदुहितांशुभाम् १२ मैथिलींरामदयितांदासीभिःपरिवीजिताम् ॥
एवंध्यात्वाजनकजांहेमकुंभपयोधराम् १३ सीतायाःकवचंदिव्यंपठनीयंशुभावहम् १४ श्रीसीतापूर्वतःपातुदक्षिणेऽवतुजानकी ॥ प्रतीच्यांपातुवैदेहीपातूदीच्यांचमैथि
ली १५ अधःपातुमातुलिंगीऊर्ध्वंपद्माक्षजावतु ॥ मध्येऽवनिसुतापातुसर्वतःपातुमांरमा १६ स्मिताननाशिरःपातुपातुभालंनृपात्मजा ॥ पद्मावतुभ्रुवोर्मध्येमृगाक्षीन
यनेऽवतु १७ कपोलेकर्णमूलेचपातुश्रीरामवल्लभा ॥ नासाग्रंसात्विकीपातुपातुवक्त्रंतुराजसी १८ तामसीपातुमद्वाणींपातुजिव्हांपतिव्रता ॥ दंतान्पातुमहामायाचिबुकं
कनकप्रभा १८ पातुकंठंसौम्यरूपास्कंधौपातुसुरार्चिता ॥ भुजौपातुवरारोहाकरौकंकणमंडिता २० नखान्रक्तनखापातुकुक्षौपातुलघूदरा ॥ वक्षःपातुरामपत्नीपा

१ चतुर्वारमित्यर्थः । २ अवतुश्रीर्भ्रुवोर्मध्येइतिपाठः ।

श्वेरावणमोहिनी २१ पृष्ठिदेशेवन्हिगुप्ताऽव्वतुर्मांसर्वदेवहि ॥ दिव्यप्रदापातुनाभिंकटिंराक्षसमोहिनी २२ गुह्यंपातुरत्नगुप्तालिंगंपातुहरिप्रिया ॥ ऊरूरक्षतुरंभोरूर्जानुनी
प्रियभाषिणी २३ जंघेपातुसदासुभ्रूर्गुल्फौचामरवीजिता ॥ पादौलवसुतापातुपात्वंगानिकुशांबिका २४ पादांगुलीःसदापातुममनूपुरनिःस्वना ॥ रोमाण्यवतुमेनित्यंपीत
कौशेयवासिनी २५ रात्रौपातुकालरूपादिनेदानैकतत्परा ॥ सर्वकालेषुमांपातुमूलकासुरघातिनी २६ एवंसुतीक्ष्णसीतायाःकवचंतेमयेरितम् ॥ इदंप्रातःसमुत्थायस्ना
त्वानित्यंपठेत्तुयः २७ जानकींपूजयित्वासससर्वान्कामानवाप्नुयात् ॥ धनार्थीप्राप्नुयाद्द्रव्यंपुत्रार्थीपुत्रमाप्नुयात् २८ स्त्रीकामार्थीशुभांनारींसुखार्थीसौख्यमाप्नुयात् ॥ अष्ट
वारंजपनीयंसीतायाःकवचंसदा २९ अष्टभूसुरसीतायैनरैःप्रीत्याऽर्पयेत्सदा ॥ फलपुष्पादिकादीनियानितानिपृथक्पृथक् ३० सीतायाःकवचंचेदंपुण्यंपातकनाशनम्
॥ येपठंतिनरामक्त्यातेधन्यामानवाभुवि ३१ पठंतिरामकवचंसीतायाःकवचंविना ॥ तथाविनालक्ष्मणस्यकवचेनवृथास्मृतम् ३२ तस्मात्सदानरैर्जाप्यंकवचानांच
तुष्टयम् ॥ आदौतुवायुपुत्रस्यलक्ष्मणस्यततःपरम् ॥ ३३ ततःपठेच्चसीतायाःश्रीरामस्यततःपरम् ॥ एवंसदाजपनीयंकवचानांचतुष्टयम् ३४ ॥ इतिसीताकवचम् ॥
एवंसुतीक्ष्णसीतायाःकवचंतेमयेरितम् ॥ अतःपरंशृणुष्वान्यत्सीतायाःस्तोत्रमुत्तमम् ३५ यस्मिन्नष्टोत्तरशतंसीतानामानिसंतिहि ॥ अष्टोत्तरशतंसीतानाम्नांस्तोत्रमनु
त्तमम् ३६ येपठंतिनरास्त्वत्रतेषांचसफलोभवः ॥ तेधन्यामानवालोकेतेवैकुंठंव्रजंतिहि ३७ अस्यश्रीसीतानामाष्टोत्तरशतमंत्रस्य ॥ अगस्तिऋषिः ॥ अनुष्टुप्छंदः
193 ॥ रमेतिबीजम् ॥ मातुलिंगीतिशक्तिः ॥ पद्माक्षजेतिकीलकम् ॥ अवनिजेत्यस्त्रम् ॥ जनकजेतिकवचम् ॥ मूलकासुरमर्दिनीतिपरमोमन्त्रः ॥ श्रीसीतारामचंद्रप्रीत्यर्थं
सकलकामनासिध्यर्थंजपेविनियोगः ॥ अथांगुलीन्यासः ॥ ॐसीतायैअंगुष्ठाभ्यांनमः ॥ ॐरमायैतर्जनीभ्यांनमः ॥ ॐमातुलिंग्यैमध्यमाभ्यांनमः ॥ ॐपद्माक्षजा
यैअनामिकाभ्यांनमः ॥ ॐअवनिजायैकनिष्ठिकाभ्यांनमः ॥ ॐजनकजायैकरतलकरपृष्ठाभ्यांनमः ॥ अथहृदयादिन्यासः ॥ ॐसीतायैहृदयायनमः ॥
ॐरमायैशिरसेस्वाहा ॥ ॐमातुलिंग्यैशिखायवषट् ॥ ॐपद्माक्षजायैनेत्रत्रयायवषट् ॥ जनकात्मजायैअस्त्रायफट् ॥ ॐमूलकासुरमर्दिन्यैइतिदिग्बंधः ॥ ॥
अथध्यानम् ॥ वामांगेरघुनायकस्यरुचिरेयासंस्थिताशोभनायाविप्राधिपयानरम्यनयनायाविप्रपालानना ॥ विद्युत्पुंजविराजमानवसनाभक्तार्तिसंखण्डनाश्रीमद्राघ
वपादपद्मयुगुलन्यस्तेक्षणासाऽव्वतु ३८ श्रीसीताजानकीदेवीवैदेहीराघवप्रिया ॥ रमाऽवनिसुतारामाराक्षसांतप्रकारिणी ३९ रत्नगुप्तामातुलिंगीमैथिलीभक्तते
षदा ॥ पद्माक्षजाकंजनेत्रास्मितास्यानूपुरस्वना ४० वैकुंठनिलयामाश्रीर्मुक्तिदाकामपूरणी ॥ नृपात्मजाहेमवर्णामृदुलांगीसुभाषिणी ४१ कुशांबिकादि
व्यदाचलवमातामनोहरा ॥ हनुमद्वन्दितपदामुग्धाकेयूरधारिणी ४२ अशोकवनमध्यस्थारावणादिकमोहिनी ॥ विमानसंस्थितासुभ्रूःसुकेशीरशनान्विता ४३
रजोरूपासत्त्वरूपातामसीवन्हिवासिनी ॥ हेममृगासक्तचित्तावाल्मीकाश्रमवासिनी ४४ पतिव्रतामहामायापीतकौशेयवासिनी ॥ मृगनेत्राचबिंबोष्ठीधनुर्विद्या
विशारदा ४५ सौम्यरूपादशरथस्नुषाचामरवीजिता ॥ सुमेघादुहितादिव्यरूपात्रैलोक्यपालिनी ४६ अन्नपूर्णामहालक्ष्मीर्धीर्लज्जाचसरस्वती ॥ शांतिः

पुष्टिःशमागौरीप्रभाऽयोध्यानिवासिनी ४७ वसंतसीतलागौरीस्नानसंतुष्टमानसा ॥ रमानाममद्रसंस्थाहेमकुंभपयोधरा ४८ सुरार्चिताधृतिःकांतिःस्मृति
र्मेधाविभावरी ॥ लघूदरावरारोहाहेमकंकणमण्डिता ४९ द्विजपत्न्यर्पितनिजभूषाराघवतोषिणी ॥ श्रीरामसेवनरतारत्नताटंकधारिणी ५० रामवामांगसं
स्थाचरामचन्द्रैकरंजिनी ॥ सरयूजलसंक्रीडाकारिणीराममोहिनी ५१ सुवर्णतुलितापुण्यापुण्यकीर्तिःकलावती ॥ कलकण्ठाकंबुकण्ठारंभोरूर्गजगामिनी ५२
रामार्पितमनारामवंदितारामवल्लभा ॥ श्रीरामपदचिन्हांकारामरामेतिभाषिणी ५३ रामपर्यंकशयनारामांघ्रिक्षालिनीवरा ॥ कामधेन्वन्नसन्तुष्टामातुलिंगकरधृता
५४ दिव्यचन्दनसंस्थाश्रीर्मूलकासुरमर्दिनी ॥ एवमष्टोत्तरशतंसीतानाम्नांसुपुण्यदम् ५५ येपठंतिनराभूम्यांतेधन्याःस्वर्गगामिनः ॥ अष्टोत्तरशतंनाम्नांसीतायाःस्तो
त्रमुत्तमम् ५६ जपनीयंप्रयत्नेनसर्वदाभक्तिपूर्वकम् ॥ संतिस्तोत्राण्यनेकानिपुण्यदानिमहांतिच ५७ नानेनसदृशानीहतानिसर्वाणिभूसुर ॥ स्तोत्राणामुत्तमंचेदंभुक्तिमु
क्तिप्रदंनृणाम् ५८ एवंसुतीक्ष्णतेप्रोक्तमष्टोत्तरशतंशुभम् ॥ सीतानाम्नांपुण्यदंचश्रवणान्मंगलप्रदम् ५९ नरैःप्रातःसमुत्थायपठितव्यंप्रयत्नतः ॥ सीतापूजनकालेपिसर्व
वांछितदायकम् ६० अन्यंत्सीतातोषदानिव्रतादीनिमहांतिच ॥ यानिसंत्यद्यतेशिष्यतानिसम्यग्वदाम्यहम् ६१ नारीभिस्तुसदाकार्यंसीतायास्तुष्टिहेतवे ॥ वसन्त
सीतलागौरीस्नानंतीर्थेतुतत्कृते ६२ यत्रसीताकृतंतीर्थंरामतीर्थंनवर्तते ॥ तदालक्ष्म्याश्चगौर्याश्चसरस्वत्यादियोषिताम् ६३ तीर्थेषुचसदाकार्यंतदभावेनदीषुच ॥ यत्र
यत्ररामतीर्थंतद्रामेजानकीकृतम् ६४ ज्ञेयंतीर्थंतुसर्वत्रनैकंज्ञेयंतुराघवम् ॥ वसंतसीतलागौरीस्नानंसौभाग्यवर्धनम् ६५ नकुर्वंत्यत्रयानार्यःस्नानंताःसप्तजन्मसु ॥
भवन्तिविधवास्तस्मात्सदास्नानंसमाचरेत् ६६ ॥ सुतीक्ष्णउवाच ॥ भोगुरोशीतलागौरीस्नानस्योद्यापनंकथम् ॥ स्त्रीभिःकार्यंवदस्वाद्यसविस्तरंशुभाहवम् ६७
॥ अगस्तिरुवाच ॥ ॥ सम्यक्पृष्टंत्वयाशिष्यसुतीक्ष्णशृणुसादरम् ॥ चैत्रमासेसितेस्त्रीभिस्तृतीयायाःसदात्रवै ६८ कार्यंतुशीतलागौरीस्नानंत्रिंशद्दिनानिहि ॥ वैशा
खस्यसितेपक्षेद्वितीयायामुपोष्यच ६९ स्त्रीभिश्चविधिनाकार्यंनिशायामधिवासनम् ॥ पूर्ववच्चप्रकर्तव्यंमण्डपादिकमुत्तमम् ७० तत्ररमानामभद्रमष्टोत्तरसहस्रकम् ॥
अथवाष्टोत्तरशतंसूक्ष्मान्यन्यानिवाक्रमात् ७१ स्थापनीयंमध्यदेशेतन्मध्येपंकजोपरि ॥ धान्यराशौतोयपूर्णःस्थापनीयोघटःशुभः ७२ तन्मुखेताम्रपात्रंचस्थापनीयंतु
विस्तृतम् ॥ आच्छाद्यपात्रंकौशेयवस्त्रेणतन्मनोरमम् ७३ तस्मिन्सीतारामयोश्चद्वेमूर्तीरुक्मनिर्मिते ॥ स्थापनीयेपूजनीयेषोडशैरुपचारकैः ७४ नवमाषात्मकोरा
मःसीताऽष्टमाषनिर्मिता ॥ निजशक्त्याथवाकार्येद्वेमूर्तीरजतस्यवा ७५ गन्धपुष्पधूपदीपनैवेद्यवसनादिकम् ॥ सर्वंपृथगष्टविधंजानक्यैतुनिवेदयेत् ७६ ततःस्त्रीणांवा
यनानिवस्त्रालंकारवस्तुभिः ॥ कुंकुमादिपूरितानिदेयानिविविधानिच ७७ देयानिकांस्यपात्राणिपक्वान्नपूरितानिच ॥ त्रयस्त्रिंशत्तथावाष्टौस्त्रिभिर्देयानिशक्तितः ७८
त्रयस्त्रिंशच्चयुग्मानिभोजयेच्चप्रयत्नतः ॥ अथवाष्टौयथाशक्त्याभोजनीयानिषड्रसैः ७९ रात्रौजागरणंकार्यंगीतवाद्यादिमंगलैः ॥ प्रातःकालेतृतीयायांस्नात्वासम्पूज्य

१ अन्युच्छिन्नतोपदानीतिपाठः ।

जानकीम् ८० होमश्चापिप्रकर्तव्यश्चसीतामन्त्रेणयत्नतः ॥ तिलाज्यैःपायसैश्चापिसहस्राण्यष्टभूसुरैः ८१ मुद्राहीनंनवार्णंचज्ञेयमष्टान्नमुत्तमम् ॥ तत्सीतातोषदंज्ञेयंतेन
वाजुहुयात्सुखम् ८२ ततःस्वयंसुहृन्मित्रैर्भोक्तव्यंचयथासुखम् ॥ एवमुद्यापनविधिस्तवाग्रेविनिवेदितः ८३ ॥ ॥ रामदासउवाच ॥ ॥ अगस्तिनासुतीक्ष्णाय
यदिदंकथितंपुरा ॥ तत्सर्वंचत्वयापृष्टंमयातेऽद्यनिवेदितम् ८४ ॥ ॥ विष्णुदासउवाच ॥ ॥ कथंरमानाममद्रंकार्यंस्त्रीभिःप्रपूजने ॥ तत्सर्वंविस्तरेणाद्यकथयस्वम
माग्रतः ८५ ॥ ॥ रामदासउवाच ॥ यथाप्रोक्तंमयाशिष्यरामतोभद्रमुत्तमम् ॥ कार्यंरमानाममद्रंतथैवसकलंशुभम् ८६ किंचिद्विशेषस्तत्रास्तितत्तेऽद्यकथयाम्य
हम् ॥ लिंगस्थलेषुकर्तव्यावापिकाश्चैवपूर्ववत् ८७ मुद्रायामेवकिंचिच्चविशेषोऽस्तिशृणुष्वतत् ॥ नाकारश्चमकारश्चपूर्ववद्रचयेदधः ८८ ऊर्ध्वंरमेत्यक्षरेद्वेरचनीयेतुपूर्व
वत् ॥ एवंकृत्वारमानामश्वेतवर्णंनिरीक्षयेत् ८९ एतद्रमानाममद्रंदेवीनांपूजनादिषु ॥ नानाकर्मसुसर्वेषुकर्तव्यंचप्रयत्नतः ९० विनारमानाममद्राद्यानिदेव्याःकृता
निहि ॥ पूजनादीनिकर्माणितानिज्ञेयानिमानवैः ९१ अकृतान्यत्रतस्माद्धिकर्तव्यंयत्नतस्त्विदम् ॥ कृतारमानाममद्रेयापूजामानवैर्भुवि ९२ सादेव्यैतोषदाज्ञेयात
स्मात्कार्याप्रयत्नतः ॥ पूर्वोक्तानिदैवतानितान्येवात्रविचिंतयेत् ९३ आवाहयेच्चमुद्रायांजानकींरघुनन्दनम् ॥ अन्यच्छृणुष्वभोशिष्यसीतारामप्रपूजने ९४ रमारा
मतोभद्रंचकार्यंवामानवैर्भुवि ॥ तच्चापिपूर्ववत्सर्वंकर्तव्यंमानवैर्धिया ९५ इदंसीतारामयोश्चपूजनार्थंप्रकल्पयेत् ॥ रामनाम्नोरमानाम्नइदंभद्रंमहत्तमम् ९६ यत्रद्वयो
र्नामनीचरमारामेतिचोत्तमे ॥ रमारामतोभद्रंचतस्माच्छ्रेष्ठंप्रकारयेत् ९७ रामासनोपमान्येवदैवान्यत्रविचिंतयेत् ॥ एवंशिष्यत्वयापृष्टंयद्यत्तत्तन्मयोदितम् ९८ कोते
ऽन्यास्तिस्पृहाश्रोतुंवदतांतद्ददाम्यहम् ॥ ॥ विष्णुदासउवाच ॥ ॥ कवचंलक्ष्मणस्यापिपठनीयमितिस्मृतम् ९९ पुरागुरोत्वयातच्चमांवदस्वसविस्तरम् ॥ भर
194
तस्यापिकवचंशत्रुघ्नस्यतथावद १०० ॥ रामदासउवाच ॥ एवमेवसुतीक्ष्णेनपृष्टंचकुंभजन्मना ॥ पुरातद्विस्तरेणाद्यतवाग्रेकथयाम्यहम् १ ॥ सुतीक्ष्णउवाच ॥ गुरो
त्वयापुराप्रोक्तंकवचंलक्ष्मणस्यच ॥ पठनीयंजनैश्चेतितन्मामद्यप्रकाशय २ भरतस्यापिकवचंशत्रुघ्नस्यतथावद ॥ अगस्तिरुवाच ॥ सम्यक्पृष्टंत्वयावत्ससावधानमनाः
शृणु ॥ आदौसौमित्रिकवचंकथ्यतेऽद्यमयाशुभम् १०२ ॥ इतिश्रीशतको०श्रीरा०रा०वाल्मी०मनोहरकांडेसीतारामकवचादिनिरूपणंनामचतुर्दशःसर्गः ॥ १४ ॥
अगस्तिरुवाच ॥ सौमित्रिंरघुनायकस्यचरणद्वंद्वेक्षणंश्यामलंबिभ्रंतंस्वकरेणरामशिरसिछत्रंविचित्रंवरम् ॥ बिभ्रंतंरघुनायकस्यसुमहत्कोदंडबाणासनेतंवंदेकमलेक्षणंज
नकजावाक्येसदातत्परम् १ अस्यश्रीलक्ष्मणकवचमंत्रस्य ॥ अगस्त्यऋषिः ॥ अनुष्टुप्छंदः ॥ श्रीलक्ष्मणोदेवता ॥ शेषइतिबीजम् ॥ सुमित्रानंदनइतिशक्तिः ॥ रा
मानुजइतिकीलकम् ॥ रामदासइत्यस्त्रम् ॥ रघुवंशजइतिकवचम् ॥ सौमित्रिरितिमंत्रः ॥ श्रीलक्ष्मणप्रीत्यर्थंसकलमनोभिलषितसिद्ध्यर्थंजपेविनियोगः ॥ अथां
गुलिन्यासः ॥ ॐलक्ष्मणायअंगुष्ठाभ्यांनमः ॥ ॐशेषायतर्जनीभ्यांनमः ॥ ॐसुमित्रानंदनायमध्यमाभ्यांनमः ॥ ॐरामानुजायअनामिकाभ्यांनमः ॥
ॐरामदासायकनिष्ठिकाभ्यांनमः ॥ ॐ रघुवंशजायकरतलकरपृष्ठाभ्यांनमः ॥ ॐ एवंहृदयाद्यंगन्यासः ॥ ॐ लक्ष्मणायहृदयायनमः ॥ ॐ शेषायशिरसेस्वाहा ॥

ॐ सुमित्रायशिखायैवषट् ॥ ॐ रामानुजायकवचायहुम् ॥ ॐ रामदासायनेत्रत्रयायवौषट् ॥ ॐ रघुवंशजायअस्त्रायफट् ॐसौमित्रयइतिदिग्बंधः ॥ अथध्यानम् ॥
रामपृष्ठिस्थितंरम्यंरत्नकुंडलधारिणम् ॥ नीलोत्पलदलश्यामंरत्नकंकणमंडितम् २ रामस्यमस्तकेदिव्यंबिभ्रंतंछत्रमुत्तमम् ॥ वरपीतांबरधरंमुकुटेनातिशोभितम् ३ तूणी
रेकार्मुकेचापिबिभ्रंतंचस्मिताननम् ॥ रत्नमालाधरंदिव्यंपुष्पमालाविराजितम् ४ एवंध्यात्वालक्ष्मणंचराघवन्यस्तलोचनम् ॥ कवचंजपनीयंहिततोभक्त्यात्रमानवैः ५
ॐलक्ष्मणःपातुमेपूर्वेदक्षिणेराघवानुजः ॥ प्रतीच्यांपातुसौमित्रिःपातूदीच्यांरघूत्तमः ६ अधःपातुमहावीरश्चोर्ध्वंपातुनृपात्मजः ॥ मध्येपातुरामदासःसर्वतःसत्यपाल
कः ७ स्मिताननःशिरःपातुभालंपातूर्मिलाधवः ॥ भ्रुवोर्मध्येधनुर्धारीसुमित्रानंदनोऽक्षिणी ८ कपोलेराममंत्रीश्चसर्वदापातुवैमम ॥ कर्णमूलेसदापातुकबंधभुजखंड
नः ९ नासाग्रंमेसदापातुसुमित्रानंदवर्द्धनः ॥ रामन्यस्तेक्षणःपातुसदामेऽत्रमुखंभुवि १० सीतावाक्यकरःपातुममवाणींसदात्रहि ॥ सौम्यरूपःपातुजिव्हामनंतःपातु
मेद्विजान् ११ चुबुकंपातुरक्षोघ्नःकंठंपात्वसुरार्दनः ॥ स्कंधौपातुजितारातिर्भुजौपंकजलोचनः १२ करौकंकणधारीचनखान्रक्तनखोऽवतु ॥ कुक्षिंपातुविनिद्रोमेवक्षः
पातुजितेंद्रियः १३ पार्श्वेराघवपृष्ठिस्थःपृष्ठदेशंमनोरमः ॥ नाभिंगंभीरनाभिस्तुकटिंचरुक्ममेखलः १४ गुह्यंपातुसहस्रास्यःपातुलिंगंहरिप्रियः ॥ ऊरूपातुविष्णुत
ल्पःसुमुखोऽवतुजानुनी १५ नागेंद्रःपातुमेजंघेगुल्फौनूपुरवान्मम ॥ पादावंगदतातोऽव्यात्पात्वंगानिसुलोचनः १६ चित्रकेतुपितापातुममपादांगुलीःसदा ॥ रोमा
णिमेसदापातुरविवंशसमुद्भवः १७ दशरथसुतःपातुनिशायांममसादरम् ॥ भूगोलधारीमांपातुदिवसेदिवसेसदा १८ सर्वकालेषुमामिंद्रजिद्धंताऽवतुसर्वदा ॥ एवंसौमि
त्रिकवचंसुतीक्ष्णकथितंमया १९ इदंप्रातःसमुत्थाययेपठंत्यत्रमानवाः ॥ तेधन्यामानवालोकेतेषांचसफलोभवः २० सौमित्रेःकवचस्यास्यपठनान्निश्चयेनहि ॥ पुत्रा
र्थीलभतेपुत्रान्धनार्थीधनमाप्नुयात् २१ पत्नीकामोलभेत्पत्नींगोधनार्थीतुगोधनम् ॥ धान्यार्थीप्राप्नुयाद्धान्यंराज्यार्थीराज्यमाप्नुयात् २२ पठितंरामकवचंसौमित्रिक
वचंविना ॥ घृतेनहीनोनैवेद्यस्तेनदत्तोनसंशयः २३ केवलंरामकवचंपठितंमानवैर्यदि ॥ तत्पाठेनसुसंतुष्टोनभवेद्रघुनंदनः २४ अतःप्रयत्नतश्चेदंसौमित्रिकवचंनरैः ॥
पठनीयंसर्वदेवसर्ववांछितदायकम् २५ इतिलक्ष्मणकवचम् ॥ अतःपरंभरतस्यकवचंतेवदाम्यहम् ॥ सर्वपापहरंपुण्यंसदाश्रीरामभक्तिदम् २६ कैकेयीतनयंसदारघुवर
न्यस्तेक्षणंश्यामलंसप्तद्वीपपतेर्विदेहतनयाकांतस्यवाक्येरतम् ॥ श्रीसीताधवसव्यपार्श्वनिकटेस्थित्वावरंचामरंधृत्वादक्षिणसत्करेणभरतंतंवीजयंतंभजे २७ अस्यश्रीभर
तकवचमंत्रस्यअगस्त्यऋषिः ॥ श्रीभरतोदेवता ॥ अनुष्टुप्छंदः ॥ शंखइतिबीजम् ॥ कैकेयीनंदनइतिशक्तिः ॥ भरतखंडेश्वरइतिकीलकम् ॥ रामानुजइत्यस्त्रम् ॥
सप्तद्वीपेश्वरदासइतिकवचम् ॥ रामांशजइतिमंत्रः ॥ श्रीभरतप्रीत्यर्थंसकलमनोरथसिध्यर्थंजपेविनियोगः ॥ अथांगुलीन्यासः ॥ ॐभरतायअंगुष्ठाभ्यांनमः ॥ ॐकैके
यीनंदनायमध्यमाभ्यांनमः ॥ ॐभरतखंडेश्वरायअनामिकाभ्यांनमः ॥ ॐरामानुजायकनिष्ठिकाभ्यांनमः ॥ ॐसप्तद्वीपेश्वरदासायकरतलकरपृष्ठाभ्यांनमः ॥ एवं

१ पातुपालकइतिपाठः ।

हृदयायंगन्यासः॥ ॐभरतायहृदयायनमः॥ ॐशंखायशिरसेस्वाहा॥ ॐकैकेयीनंदनायशिखायैवषट्॥ ॐभरतखंडेश्वरायकवचायहुं॥ ॐरामानुजायनेत्रत्रयायवौषट्॥
ॐसतद्वीपेश्वरदासायअस्त्रायफट्॥ ॐरामांशजायचेतिदिग्बंधः॥ अथध्यानम्॥ रामचंद्रसव्यपार्श्वेस्थितंकैकयजासुतम्॥ रामायचामरेणैववीजयंतंमनोरमम् २८
रत्नकुंडलकेयूरकंकणादिसुभूषितम्॥ पीतांबरपरीधानंवनमालाविराजितम् २९ मांडवीधौतचरणंरशनानूपुरान्वितम्॥ नीलोत्पलदलश्यामंद्विजराजसमाननम् ३०
आजानुबाहुंभरतखंडस्यप्रतिपालकम्॥ रामानुजंस्मितास्यंचशत्रुघ्नपरिवंदितम् ३१ रामन्यस्तेक्षणंसौम्यंविद्युत्पुंजसमप्रभम्॥ रामभक्तंमहावीरंवंदेतंभरतंशुभम् ३२
एवंध्यात्वातुभरतंरामपादेक्षणंहृदि॥ कवचंपठनीयंहिभरतस्येदमुत्तमम् ३३ ॐपूर्वतोभरतःपातुदक्षिणेकैकयीसुतः॥ नृपात्मजःप्रतीच्यांहिपातूदीच्यांरघूत्तमः ३४
अधःपातुश्यामलांगश्चोर्ध्वंदशरथात्मजः॥ मध्येभरतवर्षेशःसर्वतःसूर्यवंशजः ३५ शिरस्तक्षपितापातुभालंपातुहरिप्रियः॥ भ्रुवोर्मध्यंजनकजावाक्येकतत्परो
ऽवतु ३६ पातुजनकजामातामममनेत्रेसदाऽत्रहि॥ कपोलेमांडवीकांतःकर्णमूलेस्मिताननः ३७ नासाग्रंमेसदापातुकैकेयीतोषवर्द्धनः॥ उदारांगोमुखेपातुवाणींपातु
जटाधरः ३८ पातुपुष्करतातोमेजिह्वांदंतान्प्रभामयः॥ चुबुकंवल्कलधरःकंठेपातुवराननः ३९ स्कंधौपातुजितारातिर्भुजौशत्रुघ्नवंदितः॥ करौकवचधारीचनखान्ख
ड्गधरोऽवतु ४० कुक्षीरामानुजःपातुवक्षःश्रीरामवल्लभः॥ पार्श्वेराघवपार्श्वस्थःपातुपृष्ठिंसुभाषणः ४१ जठरंचधनुर्धारीनाभिंशरकरोऽवतु॥ कटिंपद्मेक्षणःपातुगुह्यंरामै
कमानसः ४२ राममित्रःपातुलिंगमूरूश्रीरामसेवकः॥ नंदिग्रामस्थितःपातुजानुनीममसर्वदा ४३ श्रीरामपादुकाधारीपातुजंघेसदामम॥ गुल्फौश्रीरामबंधुश्चपादौपातुसु
रार्चितः ४४ रामाज्ञापालकःपातुममांगान्यत्रसर्वदा॥ ममपादांगुलीःपातुरघुवंशसुभूषणः ४५ रोमाणिपातुमेरम्यःपातुरात्रौसुधीर्मम॥ तूणीरधारीदिवसेदिक्पातुममसर्व
दा ४६ सर्वकालेषुमांपातुपांचजन्यःसदाभुवि॥ एवंश्रीभरतस्येदंसुतीक्ष्णकवचंशुभम् ४७ मयाप्रोक्तंतवाग्रेहिमहामंगलकारकम्॥ स्तोत्राणामुत्तमंस्तोत्रमिदंज्ञेयंसुपुण्यदम्
४८ पठनीयंसदाभक्त्यारामचंद्रस्यहर्षदम्॥ पठित्वाभरतस्येदंकवचंरघुनंदनः ४९ यथायातिपरंतोषंतथास्वकवचेनन॥ तस्मादेतत्सदाजप्यंकवचानामनुत्तमम् ५०
अस्यात्रपठनान्मर्त्यःसर्वान्कामानवाप्नुयात्॥ विद्याकामोलभेद्विद्यांपुत्रकामोलभेत्सुतम् ५१ पत्नीकामोलभेत्पत्नींधनार्थीधनमाप्नुयात्॥ यद्यन्मनोभिलषितंतत्तत्क
वचपाठतः ५२ लभ्यतेमानवैरत्रसत्यंसत्यंवदाम्यहम्॥ तस्मात्सदाजपनीयंरामोपासकमानवैः ५३ इतिभरतकवचम्॥ अथशत्रुघ्नकवचंसुतीक्ष्णशृणुसादरम्॥ स
र्वकामप्रदंरम्यंरामसद्भक्तिवर्द्धनम् ५४ शत्रुघ्नंघृतकार्मुकंघृतमहातूणीरबाणोत्तमंपार्श्वेश्रीरघुनंदनस्यविनयाद्वामेस्थितंसुंदरम्॥ रामंस्वीयकरेणतालदलजंघृत्वाऽतिचि
५० त्रंवरंसूर्याभंव्यजनंसभास्थितमहंतंवीजयंतंभजे ५५ अस्यश्रीशत्रुघ्नकवचमंत्रस्यअगस्तिऋषिः॥ श्रीशत्रुघ्नोदेवता॥ अनुष्टुप्छंदः॥ सुदर्शनइतिबीजम्॥ कैकेयीनं
दनइतिशक्तिः॥ श्रीभरतानुजइतिकीलकम्॥ भरतमंत्रीत्यस्त्रम्॥ श्रीरामदासइतिकवचम्॥ लक्ष्मणांशजइतिमंत्रः॥ श्रीशत्रुघ्नप्रीत्यर्थंसकलमनःकामनासिद्ध्यर्थंज

१ दिवसेपातुमांसदावतिपाठः।

पेविनियोगः ॥ अथांगुलीन्यासः ॥ ॥ ॐशत्रुघ्नायअंगुष्ठाभ्यांनमः ॥ ॥ ॐसुदर्शनायतर्जनीभ्यांनमः ॥ ॥ ॐकैकेयीनंदनायमध्यमाभ्यांनमः ॥
ॐभरतानुजायअनामिकाभ्यांनमः ॥ ॥ ॐभरतमंत्रिणेकनिष्ठिकाभ्यांनमः ॥ ॥ ॐश्रीरामदासायकरतलकरपृष्ठाभ्यांनमः ॥ ॥ एवंहृदयादिन्यासः ॥
ॐलक्ष्मणांशजेतिदिग्बंधः ॥ ॥ अथध्यानम् ॥ ॥ रामस्यसंस्थितंवामेपार्श्वेविनयपूर्वकम् ॥ कैकेयीनन्दनंसौम्यंमुकुटेनातिरंजितम् ५६ रत्नकं
कणकेयूरवनमालाविराजितम् ॥ रशनाकुंडलधरंरत्नहारसुनूपुरम् ५७ व्यजनेनवीजयंतंजानकीकांतमादरात् ॥ रामन्यस्तेक्षणंवीरंकैकेयीतोषवर्द्धनम् ५८
द्विभुजंकंजनयनंदिव्यपीतांबरान्वितम् ॥ सुभुजंसुंदरंमेघश्यामलंसुंदराननम् ५९ रामवाक्येदत्तकर्णंरक्षोघ्नंखड्गधारिणम् ॥ धनुर्बाणधरंश्रेष्ठंधृततूणीरमुत्त
मम् ६० सभायांसंस्थितंरम्यंकस्तूरीतिलकांकितम् ॥ मुकुटस्थावतंसेनशोभितंचस्मिताननम् ६१ रविवंशोद्भवंदिव्यरूपंदशरथात्मजम् ॥ मथुरावासिनं
देवंलवणासुरमर्दनम् ६२ एवंध्यात्वातुशत्रुघ्नंरामपादेक्षणंहृदि ॥ पठनीयंवरंचेदंकवचंतस्यपावनम् ६३ पूर्वेत्ववतुशत्रुघ्नःपातुयाम्येसुदर्शनः ॥ कैकेयीनंदनः
पातुप्रतीच्यांसर्वदामम ६४ पातूदीच्यांरामबंधुःपात्वधोभरतानुजः ॥ रविवंशोद्भवश्चोर्ध्वंमध्येदशरथात्मजः ६५ सर्वतःपातुमामत्रकैकेयीतोषवर्द्धनः ॥ श्यामलांगः
शिरःपातुभालंश्रीलक्ष्मणांशजः ६६ भ्रुवोर्मध्येसदापातुसुमुखोऽत्रावनीतले ॥ श्रुतकीर्तिपतिर्नेत्रेकपोलेपातुराघवः ६७ कर्णौकुंडलकर्णोऽव्यान्नासाग्रंनृपवंशजः ॥
मुखंममयुवापातुपातुवाणींस्फुटाक्षरः ६८ जिव्हांसुबाहुतातोऽव्याद्यूपकेतुपिताद्विजान् ॥ चुबुकंरम्यचुबुकःकंठंपातुसुभाषणः ६९ स्कंधौपातुमहारोजाभुजौराघव
वाक्यकृत् ॥ करौमेकंकणधरःपातुखड्गीनखान्मम ७० कुक्षीरामप्रियःपातुपातुवक्षोरघूत्तमः ॥ पार्श्वेसुरार्चितःपातुपातुपृष्ठंवराननः ७१ जठरंपातुरक्षोघ्नःपातुनाभिं
सुलोचनः ॥ कटीभरतमंत्रीमेगुह्यंश्रीरामसेवकः ७२ रामार्पितमनाःपातुलिंगमूरूस्मिताननः ॥ कोदंडपाणिःपात्वत्रजानुनीममसर्वदा ७३ राममित्रःपातुजंघेगुल्फौ
पातुसुनूपुरः ॥ पादौनृपतिपूज्योऽव्याच्छ्रीमान्पादांगुलीर्मम ७४ पात्वंगानिसमस्तानिसुदारांगःसदामम ॥ रोमाणिरमणीयोऽव्याद्रात्रौपातुसुधार्मिकः ७५ दिवसेस
त्यसंधोऽव्याद्भोजनेशरसत्करः ॥ गमनेकलकंठोऽव्यात्सर्वदालवणांतकः ७६ एवंशत्रुघ्नकवचंमयातेसमुदीरितम् ॥ येपठंतिनरास्त्वेतत्तेनराःसौख्यभागिनः ७७ शत्रुघ्नस्य
वरंचेदंकवचंमंगलप्रदम् ॥ पठनीयंनरैर्भक्त्यापुत्रपौत्रप्रवर्द्धनम् ७८ अस्यस्तोत्रस्यपाठेनयंयंकामंनरोऽर्थयेत् ॥ तंतंलभेन्निश्चयेनसत्यमेतद्वचोमम ७९ पुत्रार्थीप्राप्नुया
त्पुत्रंधनार्थीधनमाप्नुयात् ॥ इच्छाकामंतुकामार्थीप्राप्नुयात्पठनादिना ८० कवचस्यास्यभूम्यांहिशत्रुघ्नस्यविनिश्चयात् ॥ तस्मादेतत्सदाभक्त्यापठनीयंनरैःशुभम् ८१
आदौनरैर्मारुतेश्चपठित्वाकवचंशुभम् ॥ ततःशत्रुघ्नकवचंपठनीयमिदंशुभम् ८२ पठनीयंभरतस्यकवचंपरमंततः ॥ ततःसौमित्रिकवचंपठनीयंसदानरैः ८३ पठनीयं
ततःसीताकवचंभाग्यवर्द्धनम् ॥ ततःश्रीरामचंद्रस्यकवचंसर्वदोत्तमम् ८४ पठनीयंनरैर्भक्त्यासर्ववांछितदायकम् ॥ एवंषट्कवचान्यत्रपठनीयानिसर्वदा ८५ पठ
नंषट्कवचानांश्रेष्ठंमोक्षैकसाधनम् ॥ ज्ञात्वात्रमानवैर्भक्त्याकार्यंचपठनंसदा ८६ अशक्तेनात्रचत्वारिपठनीयानिसादरम् ॥ हनूमतश्चसौमित्रेःसीतायाराघवस्यच

च ८७ इमानिपठनीयानिचत्वारिकवचानिहि ॥ चतुर्णांकवचानांचपठनेमानवायच ८८ नयद्यत्रावकाशश्चेत्तदात्रीणिपठेन्नरः ॥ मारुतेश्चात्रसीतायास्तथाश्रीराघ
वस्यच ८९ त्रयाणांकवचानांचनपाठावसरोयदा ॥ पठनार्थमानवायतदाद्वेकवचेस्मृते ९० मारुतेश्चाथरामस्यसीतायाराघवस्यवा ॥ नैकमेवपठेच्चात्रश्रीरामकवचं
शुभम् ९१ अवकाशेकवचानांषट्कमेवसदानरैः ॥ पठनीयंक्रमेणैवकर्तव्योनालसःकदा ९२ यदावकाशोनास्त्येवतदातेषांसुखाप्तये ॥ मयाविशेषःप्रोक्तोऽयंनसर्वेषां
मयेरितः ९३ ॥ ॥ इतिशत्रुघ्नकवचम् ॥ ॥ रामदासउवाच ॥ एवंशिष्यत्वयायद्यत्पृष्टंतत्तन्मयोदितम् ॥ अन्यत्किंचित्प्रवक्ष्यामितच्छृणुष्वाद्यसादरम् ९४
गीतैःप्रबंधैश्श्रीरामःसदागेयोऽत्रमानवैः ॥ वीणावाद्यादिभिर्भक्त्यानृत्यान्यपिसमाचरेत् ९५ दशरथनंदनेतिपूर्वमुक्त्वाततःपरम् ॥ मेघश्यामेतिवैचोक्त्वातथारविकु
लेतिच ९६ मंडनराजारामेतिद्वाविंशाक्षरजपस्त्वयम् ॥ मनुःसदाजपनीयोवीणावाद्येनसुस्वरम् ९७ ॥ ॥ दशरथनंदनमेघश्यामरविकुलमंडनराजारामइति
मनुः ॥ ॥ कीर्तनेऽस्यमनोर्नैवकार्योन्यासोजपेस्मृतः ॥ एवंसर्वेषुमंत्रेषुबोद्धव्यंमानवैर्भुवि ९८ रामजयेतिचोक्त्वातुत्रिवारंचात्रसुस्वरम् ॥ रामेतिद्व्यक्षरेत्वंतेचो
क्त्वावीणास्वरेणच ९९ चतुर्दशाक्षरश्चायंकीर्तनार्थमयेरितः १०० ॥ ॥ रामजयरामजयरामजयइतिमनुः ॥ ॥ मंत्रशास्त्रेषुयेमंत्रास्तेजपार्थप्रकीर्तिताः ॥
इमेमंत्राःकीर्तनार्थंज्ञातव्यामानवोत्तमैः १ एतेषामपिचेद्भक्त्यामंत्राणांचजपःकृतः ॥ तदाभस्मीभविष्यंतितेषांपापानिवैक्षणात् २ अन्यान्मंत्रान्प्रवक्ष्याभितान्
शृणुष्वद्विजोत्तम ॥ राजीवलोचनेत्युक्त्वामेघश्यामेतिवैततः ३ तथासीतारंजनेतिराजारामेति वैततः ॥ एकोनविंशद्वर्णश्चराममंत्रस्त्वयस्मृतः ४ ॥ ॥
राजीवलोचनमेघश्यामसीतारंजनराजारामइतिमंत्रः ॥ ॥ अयंमंत्रःसुस्वरेणकीर्तनीयोमुहुर्मुहुः ॥ वीणास्वरेणसंयुक्तश्चासनेगमनेपिच ५ श्रीशब्दपूर्वंजयशब्द
196 मध्यंजयद्वयेनापिपुनःप्रयुक्तम् ॥ त्रिःसप्तकृत्वारघुनाथनामजपंनिहन्याद्द्विजकोटिहत्याः ६ त्रयोदशाक्षरश्चायंराममंत्रःशुभावहः ॥ जपनीयःकीर्तनीयःसर्वदायं
मुहुर्मुहुः ७ ॥ ॥ श्रीरामजयरामजयजयरामइतिमनुः ॥ ॥ अयंमंत्रःसुस्वरेणतथावीणास्वरादिना ॥ कीर्तनीयोमुदामर्त्यैर्मंत्रशास्त्रेऽप्ययंस्मृतः ८ तस्मा
त्सदाजपनीयःसर्वसिद्धिप्रदायकः ॥ अष्टादशाक्षरंमंत्रंत्वन्यंशृणुशुभावहम् ९ उक्त्वासीतारंजनेतिमेघश्यामेति वैततः ॥ कौसल्यासुतेत्युक्त्वाथराजारामेतिवैत
तः ११० ॥ ॥ सीतारंजनमेघश्यामकौसल्यासुतराजारामइतिमनुः ॥ ॥ अष्टादशाक्षरश्चायंकीर्तनीयोमहामनुः ॥ वीणास्वरसमेतश्चकलकंठेनसुस्वरः ११
रविवरकुलजातंवंदेचेतिप्रकीर्त्यच ॥ सुरभूसुरेत्युक्त्वाऽग्रेगीतंचेतिततःपरम् १२ सप्तदशसुवर्णैश्चराममंत्रस्त्वयंशुभः ॥ कीर्तनीयःसुस्वरंहिवीणावाद्यस्वरादिना १३ ॥
रविवरकुलजातंवंदेसुरभूसुरगीतम्इतिमनुः ॥ ॥ विष्णुदासशृणुष्वान्यान्राममंत्रान्शुभावहान् ॥ येषांस्मरणमात्रेणमहत्पापंलयंव्रजेत् १४ कौसल्या
सुतेत्युक्त्वाथरामेतिद्व्यक्षरेतथा ॥ तथासीतारंजनेतिमेघश्यामेतिवैततः १४ षोडशाक्षरमंत्रोऽयंकीर्तनीयःशुभावहः ॥ वीणास्वरपूर्वकश्चकलकंठेनसुस्वरः १५ ॥ कौस
ल्यासुतरामसीतारंजनमेघश्यामइतिमनुः ॥ ॥ षोडशाक्षरमंत्रोऽयंकीर्तनीयःसदानरैः ॥ सर्वपापक्षयकरःसर्ववांछितदायकः १६ दशरथनंदनेतिपूर्वमुक्त्वाततःपरम् ॥

मेघश्यामेतिवैचोक्त्वासीतेतिद्व्यक्षरेततः १७ रंजनेतिततश्चोक्त्वाराजारामेतिवैततः ॥ विंशाक्षरमनुश्चायंमहापातकनाशनः १८ ॥ ॥ दशरथनंदनमेघश्यामसी तारंजनराजारामइतिमनुः ॥ ॥ अयंविंशाक्षरोमन्त्रःकीर्तनीयःसुखप्रदः ॥ वीणास्वरसमेतश्चमहापुण्यप्रदःस्मृतः १९ वंदेरघुवीरमितिचोक्त्वाचैवततःपरम् ॥ उक्त्वासीताकांतमितिरणधीरमितिक्रमात् २० चतुर्दशाक्षरश्चायंराममंत्रःशुभावहः ॥ कीर्तनीयोजनैर्भक्त्यामहामंगलकारकः २१ ॥ ॥ वंदेरघुवीरंसीताकांतंरणधीरम्इति मनुः ॥ ॥ जयरामजयरामसंकीर्त्यसुस्वरंततः ॥ जयजयेतिसंकीर्त्यरामेतिद्व्यक्षरेपुनः २२ ॥ जयरामजयरामजयजयराम ॥ इतिमनुः ॥ ॥ चतुर्दशाक्षरश्चायंतृतीयःकथितो मनुः ॥ कीर्तनीयोजनैर्नित्यंमहापातकनाशनः २४ मनुःसीताराघवेतिपंचवर्णात्मकःस्मृतः ॥ जपनीयःकीर्तनीयोवीणावाद्येनसुस्वरः २४ ॥ ॥ सीताराघवइतिमनुः ॥ ॥ भजेतिद्व्यक्षरेपूर्वंसीताराममितिक्रमात् ॥ मानसेतिततश्चोक्त्वाभजेतिद्व्यक्षरेपुनः २५ ततोराजाराममितिमंत्रःपंचदशाक्षरः ॥ कीर्तनीयोमनुश्चायंवीणावाद्येनसुस्वरः २६ ॥ ॥ भजसीताराममानसभजराजारामम्इतिमनुः ॥ ॥ श्रीसीताराममित्युक्त्वावन्देचोक्त्वाततःपुनः ॥ श्रीराजाराममितिचकीर्तयेत्सुस्वरंमुहुः२७ ॥ ॥ श्रीसीतारामं वंदेश्रीराजारामम्इतिमनुः ॥ ॥ द्वादशाक्षरमंत्रोऽयंकीर्तनीयःसदाजनैः ॥ वीणावाद्यादिनापुण्यःसर्ववांछितदायकः २८ रावणमर्दनेत्युक्त्वारामेत्युक्त्वाततःपरम् ॥ राघवे तिततश्चोक्त्वावालीचेतिततःक्रमात् २९ मर्दनेतिपुनश्चोक्त्वारामेतिद्व्यक्षरेपुनः ॥ स्मृतोऽष्टादशवर्णश्चद्वितीयोऽयंमनुःशुभः ३० ॥ ॥ रावणमर्दनरामराघववालीमर्दन रामेतिमनुः ॥ ॥ अयंमंत्रःकीर्तनीयःसर्वदामानवोत्तमैः ॥ श्रीसीताराममितिचमानसेतिततःपरम् ३१ भजेतिद्व्यक्षरेचोक्त्वाराजेतिद्व्यक्षरेपुनः ॥ राममितिद्व्यक्षरे चमंत्रोऽयंपरमःशुभः ३२ चतुर्दशाक्षरश्चायंचतुर्थश्चमयेरितः ॥ कीर्त्तनीयःसुस्वरोऽयंवीणावाद्यपुरःसरः ३३ ॥ ॥ श्रीसीताराममानसभजराजारामंइतिमनुः ॥ ॥ सीता रामजयेत्युक्त्वाराजारामेतिवैततः ॥ अयंदशाक्षरोमंत्रःकीर्तनीयोऽत्रसुस्वरः ३४ ॥ ॥ सीतारामजयराजारामइतिमनुः ॥ ॥ श्रीसीतारामंमित्युक्त्वाचवंदेराममितिक्रमात् ॥ जयरामंततश्चोक्त्वात्रयोदशाक्षरोमनुः ३५ कीर्तनीयश्सदामर्त्यैःसर्वपातकनाशनः ॥ वीणावाद्यादिनानित्यंद्वितीयोऽयंमनुःस्मृतः ३६ ॥ श्रीसीतारामंवंदेरामंजयरामं इतिमनुः ॥ ॥ मांपाह्यतीतिचोक्त्वादौदीनंराघवचेतिहि ॥ त्वत्पदयुगलीनं वैचेत्येषषोडशाक्षरः ३७ कीर्त्तनीयोमनुर्मर्त्यैःसर्वपातककृंतनः ॥ वीणावाद्यस्वरेणोच्चैःकल कंठेनसुस्वरः ३८ ॥ ॥ मांपाह्यतिदीनंराघवत्वत्पदयुगलीनमितिमनुः ॥ ॥ द्वितीयोऽयंमयाप्रोक्तोमंत्रो वैषोडशाक्षरः ३९ जयजयेतिवैचोक्त्वाराघवेतिततःपरम् ॥ सप्ता क्षरमनुश्चायंकीर्तनीयःसदानरैः ४० ॥ ॥ जयजयराघवइतिमनुः ॥ ॥ जयजयेतिसंकीर्त्यतथारघुवरेतिच ॥ अष्टाक्षरमनुश्चायंकीर्तनीयःसदानरैः४१ ॥ ॥ जयजयरघुव रइतिमनुः ॥ ॥ त्वंमांपालयेत्युक्त्वासीतारामेतिवैपुनः ॥ नवाक्षरमनुश्चायंकीर्तनीयःसदानरैः ४२ वीणावाद्यस्वरेणैवमहापातकनाशनः ४३ ॥ ॥ त्वंमांपालयसीताराम इतिमनुः ॥ ॥ सीतारामजयेत्युक्त्वामनुःषडक्षरःस्मृतः ॥ कीर्तनीयःसदामर्त्यैर्वीणावाद्येनसुस्वरः ४४ ॥ ॥ सीतारामजयइतिमनुः ॥ ॥ श्रीसीतारामेतिमनुर्ज्ञेयः पंचाक्षरःशुभः ॥ कीर्तनीयःसदामर्त्यैर्महापातकनाशनः ४५ ॥ ॥ श्रीसीतारामइतिमनुः ॥ सीतारामेतिमनुश्चतुर्वर्णात्मकःस्मृतः ॥ ॥ सीतारामइतिमनुः ॥ ॥ श्रीरामेति

त्र्यक्षरश्चरामेतिद्व्यक्षरोमनुः ४६ ॥ ॥ श्रीरामइतिमनुः ॥ ॥ रामइतिमनुः ॥ राकारोबिंदुनायुक्तश्चैकवर्णात्मकोमनुः ॥ अयंसदाजपनीयःकीर्तनीयोनवैकदा ४७
॥ ॥ रांइतिमनुः ॥ ॥ रामजयेतिचोक्त्वाऽऽदौसीतारामेति वैततः ॥ राघवेतिततश्चोक्त्वामंत्रस्त्वेकादशाक्षरः ४८ ॥ ॥ रामजयसीतारामराघवेतिमनुः ॥ ॥दशरथनंदनेतिरघु
कुलेतिवैततः ॥ भूषणेतिततश्चोक्त्वाकौसल्येतिततःपरम् ४९ विश्रामेतिततश्चोक्त्वापंकजलोचनेतिच ॥ रामेतिद्वेऽक्षरेचापिह्यष्टाविंशाक्षरोमनुः ५० अयंसदाकीर्तनीयो
वीणावाद्येनसुस्वरः ॥ प्रोक्तःपातकविध्वंसीसर्ववांछितदायकः ५१ ॥ ॥ दशरथनंदनरघुकुलभूषणकौसल्याविश्रामपंकजलोचनरामेतिमनुः ॥ ॥ सीतारामजयेत्युक्त्वारा
घवेतिततःपरम् ॥ रामेतिद्वेऽक्षरेचापिमंत्रस्त्वेकादशाक्षरः ५२ कीर्तनीयःसुस्वरोऽयंमंत्रोवीणास्वरेणच ॥ महापातकहृत्प्रोक्तःसर्ववांछितदायकः ५३ ॥ ॥ सीताराम
जयराघवरामेतिमनुः ॥ ॥ एकादशाक्षरश्चायंमंत्रःप्रोक्तोमयात्रहि ॥ द्वितीयःपरमःश्रेष्ठोमहापातकनाशनः ५४ पंचवटीस्थितेत्युक्त्वारामजयजयेतिच ॥ दशरथनन्द
नेतिरामेतिद्वेऽक्षरेतथा ५५ एकविंशाक्षरश्चायंकीर्तनीयोमहामनुः ॥ कलकंठेनमर्त्यैश्चमहापातकनाशनः ५६ ॥ ॥ पंचवटीस्थितरामजयजयदशरथनंदनरामेतिमनुः ॥ ॥
दशरथसुतेत्युक्त्वाबालंवंदेत्वितिक्रमात् ॥ रामंघननीलमितिमंत्रोऽयंषोडशाक्षरः ५७ तृतीयोऽयंमयाप्रोक्तःकीर्तनीयोमनोरमः ॥ वीणावाद्यस्वरेणैवमहापुण्यविवर्द्धनः
५८ ॥ ॥दशरथसुतबालंवंदेरामंघननीलमितिमनुः ॥ ॥ कोदंडखंडनेत्युक्त्वादशशिरमर्दनेतिच ॥ कौसल्यासुतरामेतिसीतारंजनचेतिवै ५९ राजारामेतिवैचोक्त्वाह्येकोनत्रिं
शवर्णकः ॥ कीर्तनीयोमनुश्चायंवीणावाद्येनसुस्वरः ६० ॥ ॥ कोदंडखंडनदशशिरमर्दनकौसल्यासुतरामसीतारंजनराजारामेतिमनुः ॥ ॥ कोदंडभंजनेत्युक्त्वारावणमर्दनेति
च ॥ कौसल्येतिततश्चोक्त्वाविश्रामेतिततःपरम् ६१ सीतारंजनेतिततोराजारामेतिवैततः ॥ सप्तविंशाक्षरश्चायंमनुःप्रोक्तःशुभप्रदः ६२ ॥ ॥ कोदंडभंजनरावणमर्दनकौसल्या
विश्रामसीतारंजनराजारामेतिमनुः ॥ ॥ कोदंडखंडनेत्युक्त्वावालीताडनचेतिवै ॥ लंकादाहनेतिततःपाषाणतारणेतिच ६३ रावणमर्दनेत्युक्त्वारविकुलेतिवैततः ॥ भूष
णेतिततश्चोक्त्वाकौसल्येतिवतःपरम् ६४ विश्रामेतिततश्चोक्त्वासीतारंजनचेतिवै ॥ राजारामेति वैचोक्त्वापंचाशदक्षरोमनुः ६५ अयंसदाकीर्तनीयोवीणावाद्येनसुस्वरः ॥
मंत्राणांहिवरिष्ठोऽयंमहापातकनाशनः ६६ ॥ ॥कोदंडखंडनवालीताडनलंकादाहनपाषाणतारणरावणमर्दनरविकुलभूषणकौसल्याविश्रामसीतारंजनराजारामेतिमनुः ॥ ॥
एवंनानाविधामंत्राःसन्तिशिष्यसहस्रशः ॥ सहस्रवर्षपर्यंतंकस्तान्वक्तुंभवेत्क्षमः ६७ एतेसर्वेकीर्तनीयावीणावाद्येनसुस्वराः ॥ इमेमंत्राजपनीयानज्ञेयामानवोत्तमैः
६८ मंत्रशास्त्रेषुयेप्रोक्तास्तेजप्याएवमानवैः ॥ तेमंत्राःकीर्तनीयानकीर्तनीयास्त्विमेस्मृताः ६९ एतान्मंत्रान्पुरस्कृत्यप्रबंधाविविधाःशुभाः ॥ रचनीयाबुद्धिमद्भिर्नां
नाभाषाभिरादरात् ७० येयेनोक्तामयामन्त्रास्तान्प्रयुक्त्यारचयेन्नरः ॥ रचनेनैवदोषोऽस्तितैस्तुष्टोजायतेहरिः ७१ मंत्रैःप्रबंधैःकाव्यैश्चस्तुतिभिःकीर्तनादिभिः ॥ प्राचीनै
र्वाकल्पितैर्वारामोगेयःसदानरैः ७२ येनकेनप्रकारेणकार्यंराघवचिंतनम् ॥ पापराशिःक्षणाद्दग्धःश्रीरामचिंतनेनहि ७३ भवत्यत्रनसंदेहःपावकेनयथाकुटी ॥ दंभे
नवातिभक्त्यावानिष्कामाद्वासकामतः ॥ यद्यत्रराघवोगीतस्तेनपापंहृतंभवेत् ७४ यथावन्हिःस्थूलराशिंस्पर्शितःकामनांविना ॥ कामेनवादहत्येवक्षणात्तद्वन्नसंशयः ७५

मंत्रैःप्रबंधैःकाव्यैश्चनानाचारित्रवर्णनैः ॥ अत्यशुद्धैःस्तुतोरामःकल्पितैरपिस्वेच्छया ॥ तैश्चतुष्टोभवत्यत्रश्रीरामोनात्रसंशयः ७६ विनाश्रयेणरामस्ययत्कृतंस्तवना
दिकम् ॥ तेनापितुष्टःश्रीरामोभवत्येवनसंशयः ७७ आश्रयेणापियानिंदाकृताश्रीराघवस्यच ॥ रामवेत्तत्कृतैवनात्रकार्याविचारणा ७८ किंशास्त्रैश्चपुराणैश्चपठितैःपा
ठितैरपि ॥ यदिरामेरतिर्नास्तितैर्भवेन्मानवस्यच ७९ रामप्रीतियुतस्यास्यसर्वस्यापिनरस्यच ॥ तन्नाचाकृतस्तुत्याद्यैःप्रसन्नोजायतेहरिः १८० रामचन्द्रस्यशास्त्रार्थं
यत्कृतंमानवैर्भुवि ॥ तेनातितुष्टःश्रीरामोभवत्येवनसंशयः ८१ रामोगेयश्चिंतनीयोऽत्ररामःस्तव्योरामःसेवनीयोऽत्ररामः ॥ ध्येयोरामोवंदनीयोत्ररामोदृश्योरामःसर्वभू
तांतरेषु ॥ १८२ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये आदिकाव्ये मनोहरकांडे लक्ष्मणादीनां कवचादिवर्णनं नाम पंचद
शःसर्गः ॥ १५ ॥ ॥ रामदासउवाच ॥ ॥ एवंयद्यत्त्वयापृष्टंतन्मयापरिवर्णितम् ॥ किमन्यच्छ्रोतुकामस्त्वंतद्वदस्ववदामिते १ ॥ ॥ विष्णुदासउवाच ॥
रामायणंनरैःश्रुत्वाकिंविधानंसमाचरेत् ॥ तत्त्वंवदमहाभागयद्यस्तितत्सविस्तरम् २ ॥ रामदासउवाच ॥ रामायणेश्रुतेदद्याद्रथंहेममयंसुधीः ॥ चतुर्भिःकोविदैर्युक्तं
तथाक्षौमपताकया ३ एतैश्चैवसमायुक्तंकिंकिणीनादनादितम् ॥ संपादितैश्चसम्यग्वैधेनुंदद्यात्पयस्विनीम् ४ ब्राह्मणान्भोजयेत्पश्चाच्छतमष्टोत्तरंसुधीः ॥ एवंकृतेविधा
नेतन्महाकाव्यंफलप्रदम् ५ रामायणंभवेत्नूनंनात्रकार्याविचारणा ॥ यस्मिन्रामस्यसंस्थानंरामायणमथोच्यते ६ एवंत्वयायथापृष्टंमयातत्तेनिवेदितम् ॥ विष्णुदास
उवाच ॥ किंचिद्वृत्तंहनुमतस्त्वंमांवक्तुमिहार्हसि ७ ॥ ॥ रामदासउवाच ॥ यदारामस्त्रिकूटाद्रौनागपाशैस्तुपीडितः ॥ नारदस्यवचःश्रुत्वासस्मारविनतासुतम् ॥
८ तदासौकाश्यपिर्वीरःसमागत्यरणांगणे ॥ प्रणाममकरोत्तस्मैरामायामिततेजसे ९ निवार्यपन्नगास्त्रंतन्मेघनादसमीरितम् ॥ तुष्टावरघुवीरंतंससैन्यंसलक्ष्मणम् १०
उवाचप्रणिपत्याथरामभद्रंखगेश्वरः ॥ ॥ गरुडउवाच ॥ ॥ आश्चर्यमिदमत्यंतंयद्भवानस्मरद्धिमाम् ११ सतिवीरेमहारुद्रेसगणेश्रीहनूमति ॥ सुग्रीवेचनलेनीलेसुषे
णेजांबवत्यपि १२ अंगदेदधिवक्त्रेचतारेचतरलेतथा ॥ मैंदेसतिमहावीर्येकिंमेऽत्रास्तिप्रयोजनम् १३ ॥ ॥ श्रीरामउवाच ॥ भवद्भीतिमुपागम्यविद्रुताश्चभुजंग
माः ॥ एतेपुसत्सुवीरेषुकिसुसैन्यमपीडयन् १४ ॥ ॥ गरुडउवाच ॥ रामदेवमहाबाहोकपीनांचरितंशृणु ॥ आत्मनोऽपिसमाविष्टान्माकुरुष्वात्रगर्हणम् १५ साक्षा
त्त्वंभगवान्विष्णुर्लक्ष्मीस्तुजनकात्मजा ॥ सौमित्रिःफणिराजोऽयंरुद्राश्चकपयःस्मृताः १६ सुग्रीवोवीरभद्रोऽयंशंभुरेषस्मृतोनलः ॥ विद्धिदाशरथेनूनंगिरिशोनीलएव
च १७ महायशाःसुषेणोऽयंजांबवांश्चाप्यजैकपात् ॥ अहिर्बुध्न्यस्त्वंगदोऽत्रदधिवक्त्रःपिनाकधृक् १८ अपराजितस्त्वयंतारःस्थाणुश्चतरलोमतः ॥ मैंदोभर्गस्तंतुःसाक्षाद
हनुमान्भगवान्स्मृतः १९ अवतीर्णामहारुद्रास्त्वदर्थंरघुनंदन ॥ अवसन्सर्वदेशेषुनानापर्वतमध्यतः २० धृत्वाचकपिरूपाणिअवतेरुर्महीतले ॥ सर्वेऽपिकपितांप्राप्ताः
कारणंतद्ब्रवीमिते २१ पुरादेवासुरैःसिंधोर्मथिताब्धावधयोऽभवन् ॥ नानापीडाकराःसर्वाल्लूताविस्फोटकादयः २२ तैरेवव्याधिभिःसर्वंपीडितंजगतीतलम् ॥ ऋषयो

१ वीणाश्रयेणेतिपाठः।

ऽपित्रपालाश्चब्रह्माणंशरणंययुः २३ ऊचुश्चजगतांनाथंब्रह्माणंकमलोद्भवम् ॥ आदिनाथदिजगन्नाथव्याधिभ्योजगतीमिमाम् २४ पीडितांदारुणैर्दोषैर्ज्वरैरन्यैश्चमहोल्बणैः
त्रिदोषैर्जर्जरीभूतांविभ्रमैर्व्याकुलीकृताम् २५ औषधानिनसिध्यंतिमंत्रयंत्राणिचैवहि ॥ पीडयंतिमहारोगामानवान्नाशकारिणः २६ एतत्तेकथितंसर्वंब्रह्मंस्त्वत्पुरतःसु
धीः २७ ततेषांवचनंश्रुत्वारुद्रान्संप्रार्थयद्विधिः ॥ तेपिश्रुत्वाब्रह्मवाक्यंरुद्राएकादशामलाः २८ समाश्वास्यविरिंचितेवीरभद्रादयःसुराः ॥ संभूयवानरेष्वेवसुग्रीवप्रमु
खाइमे २९ पर्यटन्पर्वताग्राणिमण्डलानिचसर्वशः ॥ नादयन्तोजगत्सर्वंबुभुक्कारैःसुदारुणैः ३० क्ष्वेडितैःक्रीडनैस्तेषांव्याधयोनाशमाययुः ॥ ततस्तुसकलांद्वावानरै
र्वेष्टितांभुवम् ३१ तुतोषभगवान्ब्रह्माददौतेभ्योवरान्बहून् ॥ ॥ ब्रह्मोवाच ॥ ॥ युष्मास्वपिचरुद्रास्तुमृतसंजीवनीकला ३२ आज्ञास्तुसर्वजगतिवोस्तुमनसः
समः ॥ युष्मान्स्मरंतियेमर्त्याःपूजयंतिभवत्तनूः ३३ पताकाविविधाःकृत्वाचित्रतोरणसंयुताः ॥ भक्ष्यभोज्यानिखाद्यानिलेह्यंपेयंचसर्वशः ३४ युष्मानुद्दिश्ययेमर्त्या
जुह्वंतिहिहुताशने ॥ हविःपुष्यतमंरुद्रास्तेषांसिद्धिर्नसंशयः ३५ पायसेनैवसाज्येनतथैवातिलसर्पिषा ॥ यजंतिभवतांवृंदंतेयांतिपरमंपदम् ३६ एवंवैरुद्रमखिलंगा
थवैश्वानरीस्तथा ॥ मानस्तोकेतिवामन्त्रोमनोज्योतिरथापिवा ३७ भवतायजनंचात्रगायत्र्यावाप्रकीर्तितम् ॥ एवंयेमानवालोकेविधानंपरिकुर्वते ३८ व्याधिमुक्ता
सुखासीनास्त्वन्तेयांत्यक्षयंपदम् ॥ गरुडउवाच ॥ इतिरामपुरावृत्तंकपीनांकथितंमया ३९ एषुरुद्रेषुसर्वेषुहनुमान्भद्रनायकः ४० विधानंतत्रकर्तव्यंयत्रास्तेहनुमत्त
नुः ॥ गोपुरेहनुमन्मूर्तिःशिलायांचप्रतिष्ठिता ४१ तत्रसर्वंप्रकर्तव्यंविधानंसुरसत्तम ॥ श्रीरामउवाच ॥ केनकेनप्रकारेणक्रीयतेकपिपूजनम् ४२ पताकाःकीदृश्यस्तत्र
198 कतिकार्याविहंगम ॥ हवनंकतिसंख्याकंकिंद्रव्यंकोजपोऽत्रवै ४३ किंदानंकेनविधिनातन्ममाचक्ष्वसुव्रत ॥ गरुडउवाच ॥ जनमारेसमुत्पन्नेग्रामेवापत्तनेऽपिवा ४४ प्रभ
वत्यौषधैर्नैवमणिमन्त्रपुरःक्रिया ॥ विधानंतत्रकर्तव्यमेकादश्यांतिथौनृप ४५ प्रातःकालेसमुत्थायकृतशौचोद्विजोत्तमः ॥ स्नात्वागंगाजलेपुण्येविलमलकसंस्कृतः ४६
एकादशद्विजान्श्रेष्ठान्सोपवासान्निमन्त्रयेत् ॥ जागरस्तैस्तुकर्तव्यःसर्वोपस्करसंयुतः ४७ आदौतुमण्डपंकृत्वासर्वत्रापिसुशोभितम् ॥ पुष्पमण्डपिकामध्येमण्डपेस्था
पयेद्वरान् ४८ पंचामृतैस्तुस्नपनंरुद्रेभ्यःपरिकल्पयेत् ॥ ततस्तुकुसुमैःपूजाशतपत्रादिभिःशुभैः ४९ चन्दनंचसकर्पूरंरुद्रेभ्योलेपनंवरम् ॥ दशांगधूपमादद्याद्दीपै
र्नीराजयेत्ततः ५० नैवेद्यंविविधंदद्यात्ताम्बूलेनैवसंयुतम् ॥ एकादशपताकास्तुपटैःसुपरिकल्पयेत् ५१ यायायस्मैसमुद्दिष्टापताकाचसुशोभना ॥ तस्यतस्यैवरूपंतुत
स्यामेवप्रकल्पयेत् ५२ एवंकृतेविधानेचसुपताकासुतोरणैः ॥ प्रातःकालेतुराजेंद्रजागरांतेद्विजोत्तमः ५३ कृतस्नानोनदीतोयेहोमंकुर्यात्समाहितः ॥ पायसेनतुसाज्ये
नतथैवतिलसर्पिषा ५४ अयुतंहवनंकृत्वापुनःपूजांप्रकल्पयेत् ॥ पताकांहनुमद्द्वारेतस्यैवचनिधापयेत् ५५ राजद्वारेतुसौग्रीवींसौषेणींमापणेन्यसेत् ॥ नलनीलपताके
तुशिवद्वारेतुविन्यसेत् ५६ तारस्यतरलस्यापिमैंदस्यद्युंगदस्यच ॥ ग्रामाद्बहिश्चतुर्दिक्षुमार्गेषुस्थापयेद्द्विया ५७ जलस्थानेजांबवतोदधिवक्रीचतुष्पथे ॥ स्थापयेत्प
रमांदिव्यांमहावाद्यादिमंगलैः ५८ द्वारदेशेजनानांचरुद्रमूर्तिंविलेखयेत् ॥ चित्रितांपंचवर्णैश्चग्रामसूत्रैश्चवेष्टयेत् ५९ प्र[illegible]कारयेद्विद्वान्भक्त्याब्राह्मणतर्पणम् ॥

दद्याद्वस्त्राणिऋत्विग्भ्योसालंकाराणिभूपतिः ६० छत्राणिकरपत्रैश्चपादुकाश्चविशेषतः ॥ धेनुंपयस्विनींदद्यादाचार्यायसवत्सकाम् ६१ सदक्षिणांसवस्त्रांचसालंकारांगु
णान्विताम् ॥ द्विजायमहिषींदद्यात्तथैवपृथिवीपते ६२ अन्येभ्योब्राह्मणेभ्यश्चसप्तधान्यानिभूरिशः ॥ लवणंसघृतंदेयंतैलंचसगुडंतथा ६३ शय्यादानानिभूरीणिछत्रा
णिविविधानिच ॥ एतत्कृत्वाविधानंचराजाक्षेममवाप्नुयात् ६४ रुद्रएवात्रनिर्दिष्टोजपेसर्वैःसुलक्षणः ॥ अथवाहवनेशस्तंमानस्तोकइतिस्फुटम् ६५ ॥ इतिहनुमत्प
ताकाभिधानंव्रतम् ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये आदिकाव्ये मनोहरकांडे हनुमत्पताकारोपणव्रतवर्णनंनामषोडशः
सर्गः ॥ १६ ॥ ॥ श्रीरामदासउवाच ॥ विष्णुदासत्वयायद्यत्पृष्टंतत्तन्मयेरितम् ॥ रामाज्ञयातवप्रीत्याऽनन्दचारित्रमुत्तमम् १ रामेणैवममास्येनतवोपदिष्टमादरात् ॥
त्वय्यस्तिरामसंप्रीतिस्तस्माद्रामेणमेद्विज २ आज्ञापितंपूजनांतेपुरातवतपोबलात् ॥ आनन्दरामचरितंममेदंमंगलप्रदम् ३ विष्णुदासायविप्रायकथयस्वेतिवैमुहुः ॥
त्वदर्थंपूजनांतेमेदर्शनंदत्तवान्निजम् ४ नवोत्तरशतश्लोकसाररामायणेनच ॥ पुरामेप्रथितेनात्ररामेणस्मारितोऽप्यहम् ५ श्रीराघवोपदिष्टेनमहामंगलदेनच ॥ नवाधिक
शतश्लोकसाररामायणेनच ६ यद्यन्मयाविस्मृतंचश्रुतंपूर्वंकथानकम् ॥ मम तच्चापिस्मारितंवाल्मीकिमुखानिर्गतम् ७ ततोमयाविष्णुदासराघवस्याज्ञयातव ॥ शतको
टिमिताद्रामचरितात्संविविच्यच ८ सारंसारंचकथितंमहामांगल्यकारकम् ॥ विष्णुदासउवाच ॥ त्वयैतत्कथितंचेदमानन्दसंज्ञकंमम ९ श्रीरामचरितंरम्यंममतोषा
र्थमुत्तमम् ॥ शतकोटिमितात्तत्किंकथितंचविविच्यच १० अथवाभरतखंडांतर्भागादुक्तंवदस्वतत् ॥ रामदासउवाच ॥ शतकोटिमितंकृत्स्नंमयारामायणंशुभम् ११
विविच्यज्ञानदृष्ट्याऽत्रतवेदमुपदेशितम् ॥ विशेषात्स्मरितंचापिसाररामायणश्रवात् १२ रामोपदेशिताद्रम्यात्ततस्तेकथितंमया ॥ विष्णुदासउवाच ॥ शतकोटिमिते
रामचरितेपातकापहे १३ कतिकांडानिसर्गाश्चसम्यग्वक्तुंत्वमर्हसि ॥ ॥ श्रीरामदासउवाच ॥ नवलक्षाणिकांडानि ९०००० शतकोटिमितेद्विज १४ सर्गानवति
लक्षाश्च ९०००००० ज्ञातव्यामुनिकीर्तिताः ॥ कोटीनांचशतंश्लोकमानंज्ञेयंविचक्षणैः १०००००००००० ॥ १५ ॥ विष्णुदासउवाच ॥ ॥ गुरोऽहंश्रोतुमिच्छा
मियत्त्वांश्रीराघवेणहि ॥ उपदिष्टंमदर्थंहिसाररामायणंशुभम् १६ नवोत्तरशतश्लोकसंमितंचमनोहरम् ॥ तत्त्वंवदाधुनापुण्यंपरंकौतूहलंमम १७ ॥ रामदासउवाच ॥
सम्यक्पृष्टंत्वयाशिष्यसावधानमनाःशृणु ॥ साररामायणंतेद्यप्रोच्यतेरामकीर्तितम् १८ आविर्भूत्वापूजनांतेमदग्रेभ्रातृभिःश्रिया ॥ मांप्रोवाचरघुश्रेष्ठःप्रसन्नमुखपंकजः
१९ ॥ श्रीरामचन्द्रउवाच ॥ रामदासशृणुष्वाद्ययत्सारंप्रोच्यतेतव ॥ चरित्रंसकलंस्वीयंमयातत्त्वंसविस्तरम् १ विष्णुदासायशिष्यायमद्भक्तिनिरतायच ॥ कथयस्वय
थाऽन्यच्चज्ञानादृष्टंयथाश्रुतम् २ यथाभरतखंडांतर्भागेचापित्वयेक्षितम् ॥ स्मरणार्थंत्वहंकिंचित्तत्रवक्ष्यामिसादरम् ३ पार्वतीशिवसंवादःसूर्यवंशार्घपार्थिवाः ॥ मत्पि
त्रोर्हरणंलंकारावणेनविसर्जनम् ४ दशरथविवाहश्चकैकेय्यैद्विवरार्पणम् ॥ कैकेय्यैद्विजशापश्चवरदानकरायच ५ राज्ञःशापोवैश्यहत्याऋष्यशृंगार्थमुद्यमः ॥ ऋष्यशृं
गमुनेस्तेजःप्रतापाद्वह्निनार्पितम् ६ पायसंतद्विभक्तेचचतुर्भागंगिरौनयत् ॥ अंतर्गर्भांत्वपपत्न्यस्तासामासन्सुदोहदाः ७ ततोभूम्यांब्रह्मणामेप्रार्थनंमंथराजनिः ॥

चैत्रेमासिममोत्पत्तिर्बंधुभिश्चहनूमता ८ बालक्रीडामल्लताचव्रतबंधस्ततोमम ॥ वेदाभ्यासोवसिष्ठाच्चतीर्थयात्राचबंधुभिः ९ विश्वामित्राद्धनुर्विद्याताटिकामर्दनंवने ॥
प्रारंभोरणदीक्षायाःसुबाहोर्मर्दनंमखे १० मारीचक्षेपणंचापिह्यहल्योद्धरणंमया ॥ स्वयंवरंचशापश्चमुनिपत्न्याःसविस्तरम् ११ नौकापेनाहिगंगायांमदंघ्रिक्षालनंकृतम् ॥
शैवंधनुर्जामदग्न्यन्यस्तंभग्नंसभांगणे १२ सीतोत्पत्तिश्चसीतायालंकागमननिर्गमौ ॥ बंधूनांमेविवाहाश्चजामदग्न्यपराजयः १३ दीपावल्युत्सवश्चापिनृपैःपथिमहा
रणः ॥ जीवनंभरतस्यापिमद्द्राविमुनिनेरितम् १४ वृंदाशापःपितुःपुण्यंकैकेयीपूर्वकर्मच ॥ ततोमदिनचर्यांचगर्भाधानमहोत्सवः १५ नारदाग्रेप्रतिज्ञामेयौवराज्या
र्थंसुद्यमः ॥ कैकेयीवरदानेनदंडकेगमनंमम १६ दर्शनंगुहकस्यापिसीतावाक्यंचजाह्नवीम् ॥ भरद्वाजवाल्मकियोर्दर्शनंचागिरौस्थितिः १७ काकाक्षिभेदनंचापिरा
ज्ञश्चमरणंपुरि ॥ दर्शनंभरतस्यापिभरतस्यविसर्जनम् १८ सीतायास्तिलकोऽरण्येऽनसूयाभूषणार्पणम् ॥ विराधमर्दनंमार्गेनानाश्रमविलोकनम् १९ अगस्तेश्चाथ
गृध्रस्यदर्शनंसांबमर्दनम् ॥ विरूपणंशूर्पणखायाःखरादिप्रमर्दनम् २० सीतादेहविभागश्चमारीचस्यवधोमया ॥ सीतायाहरणंलंकांसंगरश्चजटायुषः २१ इंद्रेणपाय
संदत्तंसीतायैगिरिजेक्षणम् ॥ कबंधमर्दनंमार्गेशबर्यापूजितस्त्वहम् २२ ततःसख्यंकपींद्रेणशिरसःक्षेपणंमया ॥ छेदनंसप्ततालानांसर्पेणमालिकाहृता २३ वालेर्घातो
मयातत्रसीताशुध्यर्थंसुद्यमः ॥ हनूमताऽब्धितरणंलंकायांजानकीक्षणम् २४ मंदोदरीसमुत्पत्तिर्वनपाक्षादिमर्दनम् ॥ लंकादाहश्चदेहांतंकर्तुंसिद्धोभवत्कपिः २५ जांबू
नदवृक्षशाखाकथाऽब्धेस्तरणंपुनः ॥ बहुमुद्रादर्शनंचसेतुबंधस्ततःपरम् २६ विभीषणाभिषेकश्चविश्वनाथकथाशुभा ॥ गंधमादनेशाख्यानंसंगरश्चततःपरम् २७
कालनेमिवधश्चाथतथैरावणमर्दनम् ॥ मैरावणमर्दनंचमयामंचकभंगनम् २८ कुंभकर्णवधश्चापिमेघनादस्यमर्दनम् ॥ ततोहोमस्याविध्वंसस्ततोरावणमर्दनम् २९ सी
तायादिव्यदानंचस्वपुरीगमनंमम ॥ रणदीक्षासमाप्तिश्चराज्याभिषेचनंमम ३० उत्पत्तीरावणादीनामिंद्रजेतापराक्रमः ॥ मानभंगोरावणस्यवालीसुग्रीवजन्मनी ३१
वायुपुत्रजन्मकर्मवरदानंहनूमतः ॥ शापोऽपिवायुपुत्रायह्यगस्तेश्चविसर्जनम् ३२ ॥ इतिसारकांडम् ॥ १ ॥ गंगायात्रासमुद्योगःशरयूभेदनंततः ॥ मयास्वबाणरेखाचसी
तावाक्यविसर्जनम् ३३ कुंभोदरस्यवाक्येनपृथ्वीयात्रामयाकृता ॥ कुमारीवरदानंचसुरभिःकेनमेऽर्पिता ३४ चिंतामणेःशिवाल्लाभस्ततोऽयोध्याप्रवेशनम् ॥ यात्राकांड
म् ॥ २ ॥ आरंभोवाजिमेधस्यपृथ्व्यांवाजीविमोचितः ३५ तुरगायससैन्यायमार्गदानंतुगंगया ॥ पृथ्वीप्रदक्षिणांकृत्वावाटेऽश्वस्यप्रवेशनम् ३६ तमसातटशालाचकुंभो
दरप्रदर्शनम् ॥ अष्टोत्तरशतंनाम्नांममस्तोत्रंमुनीरितम् ३७ दिनचर्याध्वजारोपाववसृथोत्सवोमम ॥ सीतादानंचतन्मुक्तीरामतीर्थादिवर्णनम् ३८ ततोयज्ञसमाप्तिश्चद
शयज्ञाविशेषतः ॥ यागकांडम् ॥ ३ ॥ ततोममस्तवराजःक्रीडाशालाप्रवर्णनम् ३९ पक्षिणांनवकंस्तोत्रंजानक्यावर्णनंमया ॥ देहरामायणंपत्न्यैमयाकथितमुत्तमम् ४०
दिनचर्यांपुनर्मेहिसीतालंकारवर्णनम् ॥ पक्वान्नानांचविस्तारोजलक्रीडाचसीतया ४१ माध्यान्हिकंभोजनादिममकर्मप्रवर्णनम् ॥ द्विजपत्न्यैभूषणानांदानंजनकजाकृ

१ वनपक्षादीतिपाठः । २ ब्राह्मणा ।

तम् ४२ रात्रौनानास्थलेष्वत्रक्रीडाश्चविविधाःस्त्रिया ॥ रुक्मषोडशमूर्तीनांव्यासाग्रेदानमर्पितम् ४३ ततोनिर्जरपत्नीभ्योवरदानंमयाऽर्पितम् ॥ गुणवत्यैवरदानंपिंग
लायैवरार्पणम् ४४ सीतायाःप्रत्ययार्थंचदिव्यदानंमयामुदा ॥ कुरुक्षेत्रेऽग्निपत्न्यासंवादेजानकीजयः ४५ ॥ विलासकांडं ॥४॥ सीतायादोहदार्थंहिक्रीडाऽऽरामादिषु
कृता ॥ सीमंतोन्नयनादीनिनानाकर्माणिवैततः ४६ विसर्जितश्चजनकोवाल्मीकेराश्रमंमया ॥ सीतयाद्वेनिजेरूपेकृतेमद्वाक्यगौरवात् ४७ अंगुष्ठयोग्योलिखितःकैकेय्या
रावणोमहान् ॥ लोकानांरंजकस्यापिह्यपवादाद्विदेहजा ४८ मयारजस्तमोयुक्तात्यक्ताऽऽनीतश्चतद्भुजः ॥ गुप्तरूपेणपुत्रस्यकृतंगत्वातुजातकम् ४९ शतयज्ञामयाऽऽत्वा
कृताःश्रीजान्हवीतटे ॥ वाल्मीकिनलवानांचलवःपुत्रःकृतःपरः ५० तयोःकृतंतुमुनिनारामरक्षाभिमंत्रणम् ॥ कमलानांचहरणेलवस्यविजयोमहान् ५१ रामायणस्यश्रवणं
पुत्राभ्यामभ्यांमयाऽध्वरे ॥ युद्धंलवकृतंचाथजलैस्तस्याभिषेचनम् ५२ मयायुद्धंकुशेनाथसीतायाःशपथस्ततः ॥ सीतायाग्रहणंचापिविशंत्याश्चतलंपुनः ५३ ततोयज्ञ
समाप्तिश्चबंधुपुत्रजनिस्ततः ॥ बालक्रीडोपनयनंवेदानांग्रहणंक्रमात् ५४ बालानांशुभचिन्हानिसीतायाःपुत्रलालनम् ॥ सर्वेषांव्रतबंधाश्चतेषांयात्रास्ततःपरम् ५५
॥इतिजन्मकांडम् ॥५॥ सूरिकीर्तेःपत्रिकयातत्पुरंगमनंमम ॥ व्यग्रतासीत्पुरस्त्रीणांदर्शनार्थंतदामम ५६ वंदितोऽहंनृपैःसर्वैस्तदाराजसभांगणे ॥ क्रमेणवर्णनंचापिपा
र्थिवानांहिनंदया ५७ कुशकंठेचंपिकयारत्नमालाविसर्जनम् ॥ क्रमेणवर्णनंचाथपार्थिवानांसुनंदया ५८ सुमत्यारत्नमालायालवकंठेविसर्जनम् ॥ उत्साहोऽथविवाहस्यना
नासंमानपूर्वकः ५९ गमनंहिस्नुषाभ्यांचसीतयास्वपुरींमम ॥ निग्रहोजलदेवीनांबालकानांप्रमोचनम् ६० सर्वेषांचविवाहाश्चपृथक्पुत्रगृहाणिहि ॥ कांतिपुर्यांश्च
मदनसुंदरीहरणंततः ६१ यूपकेतोर्विवाहश्चपौत्राणांगणनाततः ॥ पौत्रीणांगणनाचापिसर्वैःसौख्यंततोमम ६२ ॥ विवाहकांडम् ॥६॥ सहस्रनामस्तोत्रंमेकल्पवृक्षसु
रद्रुमौ ॥ समानीतौमयास्वर्गाद्दुर्वासईक्षणात् ६३ भक्तकृष्णोपासकयोश्चसंवादश्चपरस्परम् ॥ काकायवरदानंचशतस्त्रीणांवरार्पणम् ६४ स्थानान्युक्तानिनिद्रायैकृतः
क्रोधोऽनुगादिषु ॥ शतशीर्ष्णोरावणस्यपौंड्रकस्यवधोऽपिच ६५ सीतायैविरहोजातोहतश्चपूल्कासुरः ॥ सीतायाश्चस्तुतिःकेनलंकायांचप्रवेशनम् ६६ लंकायाः
परितश्चापंभ्रमित्वागमनंपुरि ॥ लाभःकपिलवाराहमूर्तेर्दत्ताचबंधवे ६७ लवणासुरघातश्चमधुरायांनिवेशनम् ॥ पुत्राणांराज्यभागाश्चसप्तद्वीपजयोमया ६८ यति
शूद्रस्यप्रशिक्षासप्तप्रेतसुजीवनम् ॥ शूद्राणांवरदानंचद्विजस्त्रीणांवरार्पणम् ६९ षोडशस्त्रीसहस्राणांवराश्चष्टगयामम ॥ कालिंद्यैवरदानंचपिप्पलंछेत्तुमुद्यमः ७० ॥ रा
ज्यकांडपूर्वार्धम् ॥ ७ ॥ वाल्मीकेर्वचनाद्धास्यंकर्तुमाज्ञापितंजनान् ॥ शापोऽश्विनीकुमाराभ्यांगणयोश्चपरस्परम् ७१ ब्रह्मणामेऽवताराणांवर्णनंचपृथक्कृतम् ॥ जन्मत्रयंच
वाल्मीकेर्वरदानस्वातिर्मम ७२ मद्राज्यवर्णनंचाथहेमायाश्चस्वयंवरम् ॥ चित्रांगदेनसंग्रामःकथाकंकणयोस्तथा ७३ लवस्यजीवदानंचरामसुद्रासविस्तरा ॥ रामनाथ
पुरदानंविप्रैर्दृष्टश्चमारुतिः ७४ दिनचर्याममततःस्वल्पसंततिकारणम् ॥ कर्णध्वनेःकथाचापिमेवतारेष्वयंवरः ॥ पत्रपार्श्वेश्रीरामेतिलेखनस्यचकारणम् ७५ सुगुणायैवर
दानंद्वेरूपेचमयाधृते ७६ तुलसीपत्रसंघिश्चरामायणश्रुतेःफलम् ॥ सुमंत्रजीवदानंचसंग्रामश्चयमेनहि ७७ सप्तद्वीपेषुसर्वत्रधर्मशिक्षामयाकृता ॥ राज्यकांडम् ॥ ७ ॥

नारदोक्तंशतश्लोकैश्चरितंममपावनम् ७८ पौराणामुपदेशश्चवन्यातृणांपरास्यतः ॥ मनःपूजाबहिःपूजानवरूपधरस्त्वहम् ७९ रामलिंगतोमद्राणांनानाभेदाविचित्रितः॥
मासनवम्याविस्तारःकथास्त्रीराज्यसंभवा ८० ममनामलेखनस्योद्यापनंदानविस्तरः ॥ चिरंजीवित्वविस्तारोवेदादीनांश्रुतेःफलम् ८१ सार्द्धमासद्वयंनाममेव्रतंति
थिविस्तरः ॥ गौरीव्रतस्यविस्तारोदोलकेममपूजनम् ८२ नवम्यांमूर्तिदानंचदमनोत्सवविस्तरः ॥ काम्यदैवतविस्तारोरकाराद्येवरोगुणः ८३ ममनाम्नश्चमहिमामन्त्रा
र्थउदाहृतः ॥ चैत्रव्रतस्यविस्तारोराक्षसादेगतिःस्मृता ८४ अद्वैतंदर्शितंलोकान्नारीणांचवरार्पणम् ॥ मन्मुद्राचक्रमहिमाकवचंमेहनूमतः ८५ सीतायालक्ष्मणा
दीनांकवचानिपृथक्पृथक् ॥ सीतलाव्रतमाहात्म्यंतस्यचोद्यापनंतथा ८६ रमानाममनोभद्रंचमंत्राश्चकीर्तनायच ॥ पताकारोपणंनामव्रतंमारुतितोषदम् ८७ मयो
पदिष्टमेतत्तेसाररामायणंत्वपि ॥ हनूमताशरसेतोरर्जुनस्यात्रखंडनम् ८८ ॥ मनोहरकांडम् ॥ ८ ॥ वाल्मीकिनासोमवंशनृपवृत्तनिवेदनम् ॥ पुत्रयोरभिषेकश्चप्र
स्थानंहस्तिनापुरम् ८९ ततोमहान्संगरश्चपुत्रयोश्चजयोमम ॥ ब्रह्मणाप्रार्थनामेऽत्रवाल्मीकेश्चकुशस्यच ९० रिपुस्त्रीणांप्रार्थनयासीतापुत्रंन्यवारयत् ॥ ततोवि
धेश्चवाक्येनवैकुंठंगंतुमुद्यमः ९१ सोमवंशोद्भवायाथदत्तंवैहस्तिनापुरम् ॥ आजमीढाभिषेकश्चसर्वेषांचविसर्जनम् ९२ कुशस्यगमनंस्वीयपुरिराज्यंशशासस ॥ सर्पं
स्वसुःकुमुद्वत्यावीरवंशसमुद्भवः ९३ वरदानंलक्ष्मणायवानरेभ्यस्तथामया ॥ अयोध्यासंस्थितानांचततोदेहविसर्जनम् ९४ वानरास्तेसुराजाताःसीताजातारमामम ॥
लक्ष्मणःपन्नगोजातःशंखोऽभूद्भरतस्तदा ९५ सुदर्शनंचशत्रुघ्नोविष्णुरूपधरस्त्वहम् ॥ तदोर्मिलादिकानांचप्रयाणंसर्वयोषिताम् ९६ नीराजनंसुरस्त्रीभिस्तेषां
सांतानिकंपदम् ॥ शंभुनासंस्तुतश्चाहंगरुडारोहणंमम ९७ पुष्पवृष्टिर्मयितदावैकुंठेगमनंमम ॥ वैकुंठेरमयास्थित्वादेवानांचविसर्जनम् ९८ सूर्यवंशोनुक्रमश्चानं
दरामायणस्यच ॥ कांडसंख्यासर्गसंख्याग्रंथसंख्याफलश्रुतिः ९९ रामायणश्रवणस्योद्यापनंचमहत्तमम् ॥ ग्रंथदानमनुष्ठानंप्रकाराःपंचवैततः १०० अनुष्ठानोद्या
पनंचशकुनस्यचविस्तरः ॥ संवादस्यपूर्णतापिद्वयोर्गुरुशिष्ययोः १ आशंकाछेदनंदेव्याःकलास्यपठनस्यच ॥ रामायणस्यमहिमाचैकश्लोकेनवैत्विदम् २ मम
ध्यानंचेशदेव्योःसंवादस्यापिपूर्णता ॥ इतिपूर्णकांडम् ॥ ९ ॥ एवंमयारामदाससाररामायणंतव ३ स्मरणार्थंचरित्राणांसंक्षेपेणनिवेदितम् ॥ इदंगोप्यंत्वयाकार्यं
महत्पुण्यप्रदंस्मृतम् ४ शतकोटिमितग्रंथात्सारंसारंमयोदितम् ॥ कःक्षमःसकलंवक्तुंविनावाल्मीकिनाभुवि ५ सएवधन्योवाल्मीकिर्येनमच्चरितंकृतम् ॥ साररामायण
मिदंयेपठंत्यत्रमानवाः ६ तेषांभुक्तिश्चमुक्तिश्चद्विजदास्याम्यहंमुदा ॥ कृत्स्नंरामायणंश्रोतुंपठितुंवानरोत्तमान् ७ अवकाशोयदानास्तितदैतत्संपठेन्नरैः ॥ अन्यद्यद्य
६१ न्मयाकर्मकृतंपूर्वंशुभाशुभम् ८ तत्तन्मच्छन्दात्त्वन्मुखाच्छ्रोभिष्यतिनिश्चयात् ॥ त्वद्दृष्टिगोचरंकृत्स्नंचरितंमेभविष्यति ९ विष्णुदासायशिष्यायवदत्वमघुनासुखम् ॥
॥ १२८ ॥ ॥ श्रीरामदासउवाच ॥ ॥ एवंश्रीरामचंद्रेणयथात्रकथितंमम ॥ साररामायणंरम्यंतदिदंतेनिवेदितम् २९ इदंरम्यंपवित्रंचमहापातकनाशनम् ॥
सर्वदामानवैर्जप्यंभुक्तिमुक्तिप्रदायकम् ३० कृत्स्नंरामायणंश्रुत्वायत्फलंप्राप्यतेनरैः ॥ तदस्यपठनादेवसत्यंसत्यंवचोमम ३१ तस्माद्बुधैःसदाजप्यंसर्वेषांशा

तिकारकम् ॥ पुत्रपौत्रप्रदंह्रीदंमहत्सौख्यप्रदंनृणाम् १३२ रामायणानिशतशःसन्तिशिष्यावनीतले ॥ तथाप्यनेनसदृशंनभूतंनभविष्यति १३३ ॥ इतिश्रीशतको
टिरामचरितांतर्गतश्रीमदानन्दरामायणेवाल्मीकीयेआदिकाव्येमनोहरकांडेरामदासविष्णुदाससंवादेश्रीरामचन्द्रोपदिष्टंसाररामायणंनामसप्तदशःसर्गः ॥ १७ ॥ ॥
॥ विष्णुदासउवाच ॥ कपिध्वजोऽर्जुनश्चेतिमयापूर्वंश्रुतंगुरो ॥ तन्नामकारणंमांत्वंविस्तराद्वक्तुमर्हसि १ ॥ ॥ रामदासउवाच ॥ सम्यक्पृष्टंत्वयाशिष्यसावधानमनाः
शृणु ॥ द्वापारांतेभाविकथांत्वांवदामिचमत्कृताम् २ एकदाकृष्णरहितोऽर्जुनःस्यन्दनसंस्थितः ॥ ययावरण्येविचरन्मृगयार्थंहिदक्षिणाम् ३ एकाकीसूतसंस्थानेस्थि
त्वातत्कृत्यमाचरन् ॥ हत्वावनेमृगान्धन्वीमध्यान्हेस्नातुमुद्यतः ४ ययौरामेश्वरंसेतौधनुष्कोट्यांविगाह्यच ॥ माध्यान्हकृत्यंसंपाद्यपुनःस्यंदनसंस्थितः ५ अब्धेस्तटे
विचचारकिंचिद्गर्वसमन्वितः ॥ एतस्मिन्नंतरेऽरण्येपर्वतोपरिसंस्थितम् ६ ददर्शमारुतिंवीरःसामान्यकपिरूपिणम् ॥ रामरामेतिजल्पंतंपिंगलोमधरंशुभम् ७ तमर्जु
नोऽब्रवीद्वाक्यंकिंनामास्तिकपेतव ॥ तदर्जुनवचःश्रुत्वाविहस्यकपिरब्रवीत् ८ यत्प्रतापाच्चरामेणशिलाभिःशतयोजनम् ॥ बद्धोऽयंसागरेसेतुस्तंमांत्वंविद्धिवायुजम् ॥
९ इतितद्गर्वसहितंवाक्यंश्रुत्वाऽर्जुनस्तदा ॥ गर्वाद्विहस्यप्रोवाचमारुतिंपुरतःस्थितम् १० वृथारामेणसेत्वर्थंश्रमःपूर्वंकृतस्त्वयम् ॥ कथंतेनशरैःसेतुंकृत्वाकार्यंकृतंन
हि ११ तदर्जुनवचःश्रुत्वामारुतिःप्राहतंपुनः ॥ मत्तुल्यकपिभारेणशरसेतुःपयोनिधौ १२ न्युब्जिष्यतीतिमत्वातंनाकरोद्रघुनन्दनः ॥ तत्कपेर्वचनंश्रुत्वाऽर्जुनोमारुति
मब्रवीत् १३ कपिभाराद्यदासेतुर्जलेमग्नोभविष्यति ॥ धनुर्विद्याधन्विनःकातदावानरसत्तम १४ अधुनाहंकरिष्यामिशरसेतुंतवाग्रतः ॥ त्वंतस्योपरिनृत्यादिकुरुष्वात्र
यथासुखम् १५ धनुर्विद्यामत्वंकपेपश्यतुमर्हसि ॥ तदर्जुनगिरंश्रुत्वातमाहसस्मितःकपिः १६ ममांघ्र्यंगुष्ठभारेणशरसेतुस्त्वयाकृतः ॥ चेन्मग्नःस्यात्समुद्रेहितदा
कार्यंत्वयात्रकिम् १७ तत्कपेर्वाक्यमाकर्ण्यसोऽर्जुनःप्राहतंपुनः ॥ यदिमग्नःशरसेतुस्त्वद्भारात्तर्ह्यहंकपे १८ विशाम्यत्रानलेसत्यंत्वंचाप्यद्यपणंवद ॥ तत्प्रतिज्ञांकपिःश्रुत्वा
ऽर्जुनंवचनमब्रवीत् १९ मयास्वांगुष्ठभारेणत्वत्सेतुश्चेन्नलोपितः ॥ तर्हित्वद्ध्वजसंस्थोऽहंतवसाहाय्यमाचरे २० तथास्त्वित्यर्जुनःप्राहटणत्कृत्यमहद्धनुः ॥ निर्ममेशरसंजा
लैःसेतुंदृढतरंघनम् २१ शतयोजनविस्तीर्णंसागरस्योर्ध्वतःस्थितम् ॥ तंसेतुंमारुतिर्दृष्ट्वार्जुनाग्रेंऽगुष्ठभारतः २२ अकरोत्सागरेमग्नंक्षणमात्रेणलीलया ॥ तदादेवाःसगं
धर्वाःकिन्नरोरगराक्षसाः २३ विद्याधराश्चाप्सरसःसिद्धाद्यागगनेस्थिताः ॥ मारुतिंह्यर्जुनस्याग्रेनववृषुःपुष्पवृष्टिभिः २४ तत्कर्मणाऽर्जुनश्चापिचितांकृत्वाऽग्निरोधासि ॥
निवारितोऽपिकपिनादेहंत्यक्तुंसमुद्यतः २५ एतस्मिन्नंतरेकृष्णस्तंप्राहबटुरूपधृक् ॥ ज्ञात्वाऽर्जुनमुखात्सर्वंपूर्ववृत्तंपणादिकम् २६ उभाभ्यांयद्यच्चरितंपूर्वंतत्तद्वृथाग
तम् ॥ साक्षित्वेनविनाकर्मसत्यंमिथ्यानबुध्यते २७ साक्षित्वेनाधुनामेऽग्रयुवाभ्यांकर्मपूर्ववत् ॥ कर्तव्यंतदहंदृष्ट्वासत्यंमिथ्यावदाम्यहम् २८तद्वटोर्वचनंश्रुत्वाद्वावूचतुस्तथे
तिच ॥ ततश्चकारगांडीवीशरसेतुंहिपूर्ववत् २९ सेतोरंतर्गतंचक्रंश्रीकृष्णश्चाकरोत्तदा ॥ ततःस्वांगुष्ठभारेणकपिःसेतुंप्रपीडयत् ३०सेतुंदृढंकपिर्ज्ञात्वापादजानुकरादिभिः॥
बलेनपीडयामाससोसेतुस्तैश्चचालन ३१ तदातूष्णींहनूमान्संमंत्रयामासचेतसि ॥ पूर्वंमयांगुष्ठभारात्सेतुश्चाब्धौविलोपितः ३२ हस्तादिभिःकथंनायमिदानींचविलुप्यते

कारणंबटुरेवात्रबटुर्नायंहरिस्त्वयम् ३३ अस्तीत्यहंविजानामिस्त्वतंपूर्ववरादिकम् ॥ मद्गर्वपरिहारोऽद्यकृष्णेनानेनकर्मणा ३४ कृतोऽस्त्यत्रकृष्णाग्रेमन्मर्कटसुपौरुषम् ॥
इतिनिश्चित्यमनसिकपिःसोर्जुनमब्रवीत् ३५ जितंत्वयाबटोर्योगात्तवसाहाय्यमाचरे ॥ नायंबटुस्त्वयंकृष्णःसेतुचक्रप्रवेशकृत ३६ त्वत्साहाय्यार्थमायातःसत्यंज्ञातोम
यार्जुन ॥ अनेनरामरूपेणत्रेतायामिवरोऽर्पितः ३७ दास्यामिदर्शनंतेऽहंद्वापरेकृष्णरूपधृक् ॥ तत्सत्यंवचनंचाद्यकृतंत्वत्सेतुहेतुतः ३८ इत्यर्जुनंकपिर्यावदब्रवीत्तावद
ग्रतः ॥ बटुरेवाभवत्कृष्णःपीतवासाघनप्रभः ३९ तद्दर्शनोर्ध्वरोमाऽभूत्प्रणनामांजनीसुतः ॥ आलिंगितोऽपिकृष्णेनसमेनेकृतकृत्यताम् ४० चक्रेययोयथास्थानंश्रीकृ
ष्णस्याज्ञयातदा ॥ सागरेणस्ववीचिभिःशरसेतुर्विलोपितः ४१ तदार्जुनोगर्वहीनोमेनेकृष्णेनजीवितः ॥ कृष्णस्तदार्जुनंप्राहत्वयारामेणस्पर्द्धितम् ४२ हनूमताधनु
र्विद्यातवातोऽत्रमृषाकृता ॥ यत्प्रतापादितिगिरात्वयापिवायुनन्दन ४३ रामेणस्पर्द्धितंयस्मात्तस्मादर्जुनसंजितः ॥ अतःपरंवीतगर्वस्त्वंमांभजनिरन्तरम् ४४ इत्यु
क्त्वामारुतिंपृष्ट्वार्जुनेनतत्पुरंययौ ॥ अतःकपिध्वजश्चेतिजनैरर्जुनईर्यते ४५ इतिभाविकथाप्रष्टात्वयासापिमयोदिता ॥ किमग्रेश्रोतुकामोऽसितत्पृच्छस्ववदामिते ४६
॥ विष्णुदासउवाच ॥ गुरोऽधुनाराघवस्यवैकुंठारोहणोत्सवम् ॥ मांवदस्वसविस्तारंयेनाहंतोषमाप्नुयाम् ४७ ॥ रामदासउवाच ॥ पूर्णकाण्डंतवाद्याहंवदिष्या
मिशृणुष्वतत ॥ यस्मिन्श्रीरामचंद्रस्यवैकुंठारोहणोत्सवः ४८ इदंमनोहरंकांडंमयातेसमुदीरितम् ॥ येशृण्वंतिनराभूम्यांतेषांरामेरतिर्भवेत् ४९ मनोभिलषितान्का
मांस्तेलभन्तिनसंशयः ॥ पुत्रार्थीप्राप्नुयात्पुत्रंधनार्थीधनमाप्नुयात् ५० इदंरम्यंपवित्रंचश्रवणान्मंगलप्रदम् ॥ पठनीयंप्रयत्नेनरामभक्तिवर्द्धनम् ५१ आनन्दरामायण
मध्यसंस्थंमनोहरंकांडमिदंविचित्रम् ॥ पठंतिशृण्वंतिशृणंतिमर्त्यास्तेस्वीयकामानखिलानलभंति ५२ इदंपवित्रंपरमंविचित्रंनानाचरित्रंत्वतिपुण्यदंच ॥ सदानरैःश्रा
व्यमिदंमुदाश्रीसीतापतेर्भक्तिविवृद्धिकारि ५३ ॥ इतिश्रीशतकोटिरामचरितांतर्गत श्रीमदानन्दरामायणे वाल्मीकीये आदिकाव्ये मनोहरकांडे रामदासविष्णुदासस
वादे हनूमताशरसेतुभंगोनाम अष्टादशःसर्गः ॥ १८ ॥ ॥ इतिमनोहरकांडमष्टमंसंपूर्णम् ॥ मनोहरकांडेसर्गाआनंदरामायणेऽष्टादशज्ञातव्याः ॥ एकत्रिंशच्छताः
श्लोकारामदासमुनिनापापनुदःप्रोक्ताः ॥ १ ॥ ॥ श्रीरस्तु ॥ ॥ शुभंभवतु ॥ ॥ मनोहरकांडे प्रकरणानुक्रमः ॥ ॥ लघुरामायणम् ॥ ११९ ॥
वैकुंठारोहणम् ॥ १५५ ॥ रामपूजा ॥ २४७ ॥ ॥ लघुरामतोभद्रम् ॥ ३१२ ॥ ॥ रामलिंगतोभद्रम् ॥ ३८१ ॥ ॥ नवमीव्रतम् ॥ २४२ ॥
रामनवमीउद्यापनम् ॥ १३४ ॥ वेदादिकाव्यपूजा ॥ १२८ ॥ विशेषकालपूजा ॥ १९२ ॥ चैत्रवर्णनम् ॥ १६९ ॥ पिशाचमुक्तिः ॥ ३३१ ॥
अद्वैतवर्णनम् ॥ १०७ ॥ कवचद्वयम् ॥ ९२ ॥ सीताकवचम् ॥ १८२ ॥ हनुमत्पताकारोपणम् ॥ ६५ ॥ साररामायणम् ॥ १३३ ॥ शरसेतुभंगः ॥ ५३ ॥
इतिप्रकरणानि ॥ ॥ एवंमिलित्वाकांडेग्रंथसंख्या ॥ ३११० ॥ ॥ इयंमंत्रवृत्तादिरहितासंख्यास्ति ॥ ॥ श्रीरामचंद्रःप्रसन्नोऽस्तु ॥ ॥

श्रीगणेशायनमः ॥ ॥ श्रीगुरवेनमः ॥ सीतारामाभ्यांनमः ॥ रामदासउवाच ॥ अथशासतिराजेंद्रेरामेसीताभिरंजिते ॥ सभायामेकदादूतःसुषेणस्यगजाव्हयात् १
समायद्योसविकलोरामंनत्वाऽब्रवीद्वचः ॥ रामराजीवपत्राक्षसोमवंशोद्भवैर्नृपैः २ संवेष्टितंगजपुरंनलाद्यैश्चिरजीवितैः ॥ तद्दूतवचनंश्रुत्वाराघवोऽतीवविस्मितः ३
वसिष्ठंप्राहमद्राज्येनकदापार्थिवोत्तमाः ॥ समागतामयायेद्धुंकिमिदानींहिश्रूयते ४ किंकारणंगुरोह्यत्रविचारयसविस्तरम् ॥ तद्रामवचनंश्रुत्वातंगुरुःप्रत्यभाषत ५
प्रष्टव्यमद्यवाल्मीकिंयेनतेचरितंकृतम् ॥ तच्छ्रुत्वालक्ष्मणंप्रेष्यसमाहूयाऽथतंमुनिम् ६ सीतयापूजनंकृत्वारामोवृत्तंन्यवेदयत् ॥ वाल्मीकिस्तुतदाप्राहरामंकिंचिद्वि
हस्यसः ७ किंत्वंनवेत्सिराजेंद्रविनोदान्मांतुपृच्छसि ॥ शृणुष्वतर्हिमेवाक्यंसर्वेशृण्वंतुतेप्रियाः ८ एकादशसहस्राणिवत्सराणितथापुनः ॥ एकादशसमाश्चापि
मासास्त्वेकादशेवहि ९ एकादशदिनान्यत्रघटिकाश्चापितन्मिताः ॥ एकादशपलान्येवतेराज्यंनिश्चितंमया १० शतकोटिमितेकाव्येपुरैवतेऽवतारतः ॥ तन्मध्ये
ऽत्रह्यतीतानिसहस्राणितथासमाः ॥ अतीताःशेषभूताश्चमासाःशेषंदिनादिकम् ११ अष्टादशदिनैर्न्यूनमग्रेवर्षंप्रभोऽत्रयत् ॥ शेषभूतंसंगरेणपरिपूर्णंभविष्यति १२
अयंकालोऽवतारस्यसमाप्तेस्तेसमागतः ॥ गत्वाभागीरथींपुण्यांपूर्वजेनाऽवनीतलम् १३ प्रापितांतवराजेंद्रतस्यांस्नात्वायथाविधि ॥ स्तुतोब्रह्मादिकैःसर्वैःपदं
स्वीयंगमिष्यसि १४ ॥ तन्मुनेर्वचनंश्रुत्वाराघवोवाक्यमब्रवीत् ॥ एतावत्कालपर्यंतंनलाद्याःकुत्रसंस्थिताः १५ कुतोधुनासमायातास्तत्सर्वंविस्तराद्वद ॥ तद्राम
वचनंश्रुत्वावाल्मीकिर्वाक्यमब्रवीत् १६ ॥ वाल्मीकिरुवाच ॥ शृणुराममहाबाहोसर्वंतेकथयाम्यहम् ॥ अत्रिर्मुनिःपुरारामपूर्णिमायांकृतेयुगे १७ वैशाख्यामे
कदासोमंदृष्ट्वानारीमुखोपमम् ॥ मुमोचवीर्यंभूम्यांसतस्मात्पुत्रोबभूवह १८ सोमस्यदर्शनाज्जातःसोमाख्यःसबभूवह ॥ सोऽरण्येजान्हवीतीरेचकारतपउत्तमम् १९
एतस्मिन्समयेतत्रकश्चिद्धस्तीसमाययौ ॥ निहतःपक्षिभिस्तत्रतद्दृष्ट्वाकौतुकंमहत् २० सोमोविचारयामासपक्षिभिर्निहतःकरी ॥ अस्याभूम्याःप्रभावोऽयं
पुरंतत्रचकारसः २१ हस्तिनाशात्पुरंजातंतस्मात्तद्धस्तिनापुरम् ॥ तत्रपौरैःकृतोराजासोमएषरघूत्तम २२ तस्यजातौबुधःपुत्रस्तावुभौजगतीतलम् ॥ सद्वीपं
स्ववशंकृत्वासुरलोकंप्रजग्मतुः २३ तत्रजित्वासुरान्सर्वान्सुरर्षिभिश्चसंयुतौ ॥ मुक्त्वादेवान्स्वर्गलोकेनिवासंचक्रतुर्मुदा २४ तयोर्ददौवरान्ब्रह्मायुवां
मद्वंशसंभवौ ॥ युवाभ्यांमोचितस्त्वद्यदेवसंघयुतस्त्वहम २५ युवाभ्यांतर्ह्यहंवच्मिवरांच्छृणुतबालकौ ॥ युष्मद्वंशेनृपाःकेचिदग्रेत्रिपुरुषोर्ध्वतः २६ अन्यैः
पराजिताःसप्तपुरुषानभवंतिहि ॥ इतिदत्त्वावरंब्रह्माययौनिजपदंप्रति २७ ततःसोमायदौहित्रींदत्तापद्मावतीशुभा ॥ इंद्रेणतत्रतौसोमबुधौस्वैरंस्थितौचि
६२ रम् २८ बुधस्यतनयोभूम्यांनाम्नाख्यातःपुरूरवाः ॥ चकारराज्यंधर्मेणतदातद्धस्तिनापुरे २९ तस्यपुत्रश्चगव्योऽभूद्गव्यपुत्रोऽल्पउच्यते ॥ अल्पपुत्रोनलःश्री
मान्दिक्पालान्जेतुमुद्यतः ३० राज्येपुरूरवादींश्चत्रीन्स्थाप्यनिजपूर्वजान् ॥ सप्तद्वीपनृपैर्युक्तःप्रययौमेरुमुन्नतम् ३१ आदौजित्वासवन्हिंहियमंजित्वाऽथनैर्ऋतिम् ॥

१ सीवपाशहस्त्येत्यर्थः ।

प्रययौवरुणंजेतुंसवणादिभिरन्वितः ३२ एतस्मिन्नंतरेरामतूर्णंसैन्येनरावणः ॥ प्रययौनाकलोकंहिसुरानिंद्रादिकान्रणे ३३ जित्वानिनायस्वांलंकांसोमोयुद्धाय
सात्मजः ॥ निर्ययौसुहृदःसर्वान्सेन्द्रानमोचयितुंसुरान् ३४ तदानिवारयामासब्रह्मासोमंत्वरान्वितः ॥ विष्णुर्भूत्वान्नवेषेणरावणंहिहनिष्यति ३५ त्वंमाऽद्यरावणं
याहिवरस्तस्मैमयाऽर्पितः ॥ तद्ब्रह्मवचनंश्रुत्वाययौसोमोऽमरावतीम् ३६ भूम्यांनलस्ततोभूत्वावरुणंपवनंतथा ॥ जित्वाकुबेरमीशानंकृतकार्यममन्यत ३७ आत्मा
नंचततःस्वर्गेचेन्द्रंजेतुंसमुद्यतः ॥ एवंनलेनभ्रमतागतंतच्चकृतंयुगम् ३८ त्रेतायुगसमाप्तौसददर्शसकलंबलम् ॥ तत्राऽदृष्ट्वारावणंसदूताच्छ्रुत्वाऽवनौस्थिति ३९ देवा
न्स्ववशगान्कृत्वालंकांस्वांसगतःपुरा ॥ तत्रमार्गेतुभ्रमतोनलायनहुकःसुतः ४० पुत्रस्तस्यजातीकरस्तत्सुतोवसुदःस्मृतः ॥ तस्यपुत्रोलघुश्रुतःसुरथस्तत्सुतः
स्मृतः ४१ अजमीढस्तुतत्पुत्रस्त्वेवंवंशोऽभवत्पथि ॥ ततःसमंत्रयामासनलोमंत्रिजनैःसह ४२ किमर्थमिंद्रलोकंतंगंतव्यमधुनायदि ॥ भुविदेवाःसमानीतालंकायां
रावणेनहि ४३ अस्माकंसेवकःसोऽस्तिदशास्यःकरभारदः ॥ निजंपुरंप्रगंतव्यमधुनाचिरकालतः ४४ दिगाश्रयाद्वयंसर्वेजीविताःस्मचिरंत्विह ॥ पुरूरवादिकास्ते
नःपूर्वजाःसंतिवामृताः ४५ नास्माभिश्चिरकालंहितद्वृत्तंभ्रमतःश्रुतम् ॥ अतःस्वीयपुरंगत्वाद्रष्टव्यास्तेत्रिपूर्वजाः ४६ चेत्सोमबुधयोर्नाकंगंतव्यंदर्शनेच्छया ॥
तर्हिताभ्यांयुतादेवाकिंजितारावणेनहि ४७ किंताभ्यांरहितादेवाजिताश्चेतिनवेद्म्यहम् ॥ अतस्तत्सकलंवृत्तंविदितंहस्तिनापुरे ४८ भविष्यतिततोयद्धिकर्तव्यंतत्क
रोम्यहम् ॥ इतिनिश्चित्यसनलःशनैःस्वनगरंययौ ४९ एतस्मिन्नंतरेरामत्वंजातोऽस्यवनीतले ॥ हत्वातंरावणंदेवामोचितास्तेदिवंगताः ५० सप्तद्वीपांतर
स्थायेनृपास्तेस्ववशीकृताः ॥ पुरूरवादिकांस्त्रींश्चनिष्कास्याऽत्रगजाह्वये ५१ सुषेणःस्थापितःपूर्वंवानरैस्सहितस्त्वया ॥ ततःपुरूरवाद्यास्तेस्वकालेनमृता
स्त्विह ५२ इदानींतेसमायाताःसोमवंशोद्भवानृपाः ॥ नलाद्याःसप्तस्वपुरंसप्तद्वीपनृपैःसह ५३ त्वंकृताःस्ववशगायेद्वीपांतरस्थिताः ॥ नृपास्तेषांपूर्वे
जाश्चस्वसैन्यैस्तेनृपोत्तमाः ५४ बलिनःकोटिशःसर्वेसमायातागजाह्वयम् ॥ भविष्यतित्वयातैश्चसंगरःसोमवंशजैः ५५ तदाब्रह्मासुरैर्युक्तःसमागत्यतवांतिकम् ॥
पादयोस्तेप्रणामांश्चनलाद्यैःकारयिष्यति ५६ कृत्वाकःप्रार्थनांतेपित्वांवैकुंठंप्रणेष्यति ॥ एवंरामसविस्तारंतवाग्रेकथितंमया ५७ यत्पृष्टंमांत्वयापूर्वंनला
दीनांकथानकम् ॥ विवाहकांडमारभ्यरम्यंरामायणंशुभम् ५८ समग्रंहिश्रयारामपुरानंश्रावितंतव ॥ पुत्राभ्यामधुनासर्वंशृणुष्वरघुनंदन ५९ इत्युक्त्वा
कुशलवयोश्चकाराज्ञांमुनिस्ततः ॥ विवाहकांडात्कांडानिचत्वारिजगतुःशिशू ६० तत्सर्वंराघवःश्रुत्वापरांमुदमवापसः ॥ विदुःसर्वेजनाश्चाऽपिवैकुंठारोहणंप्रभोः ६१
॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेवाल्मीकीयेपूर्णकांडेसोमवंशनृपकथानकविस्तारोनामप्रथमःसर्गः ॥ १ ॥ ॥ रामदासउवाच ॥ अथरा
मस्तदाप्राहवाल्मीकिंमुनिसत्तमम् ॥ आगंतव्यंत्वयातत्रमुनिभिस्तुगजाह्वयम् १ तथेतिसमुनिःप्राहराघवंभक्तवत्सलम् ॥ ततःसलक्ष्मणंशीघ्रंराघवोवाक्यमब्रवीत् २ ॥ १ ॥

१ जित्वेतिपाठः । २ स्ववशितस्ववशगाःकृताःइतिपाठः । ३ बहुश्रुता । ४ पुरानंश्राविताविति पाठः ।

पत्राणिप्रेषयस्वाऽन्यकुमारान्राज्यसंस्थितान् ॥ स्वस्वराज्येमंत्रिणश्चकृत्वाऽऽत्राम्यतांबलैः ३ एवमेवम्लेछ्यानिजंबूद्वीपपतीन्वरान् ॥ तथाद्वीपपतींश्चाऽपिद्रुतास्तां
स्त्वरयंतुनः ४ तथेतिलक्ष्मणश्चोक्त्वातथाचक्रेयथोदितम् ॥ राघवेणसभामध्येवाल्मीकिगुरुसन्निधौ ५ ततःप्राहपुनःश्रीमान्राघवोलक्ष्मणंमुदा ॥ वासोगेहानिनेयानिब
हिर्मेमरघूद्वह ६ मुहूर्तोवर्त्ततेश्वोवैसेनांचोदयसादरात् ॥ आयुधान्यथयंत्राणिजीर्णानिचबहूनिहि ७ पूर्वजैर्निहितान्येवकोशागारेषुवैसदा ॥ तानिनिष्कासनीयानितेषां
कालोऽयवर्त्तते ८ अंतःपुराणिसर्वाणिबहिर्नेयानिमेऽग्रतः ॥ अग्निहोत्रंपुरस्कृत्यसीताऽप्यग्रेऽनुगच्छतु ९ कोशागाराणिसर्वाणिबहिर्नेयानिवाहनैः ॥ हस्त्यश्वरथ
पादातानेयाःसर्वेबहिस्त्वया १० इत्याज्ञाप्यरघुश्रेष्ठोलक्ष्मणंविनयान्वितम् ॥ मन्त्रिणोनैगमांश्चैववसिष्ठंचेदमब्रवीत् ११ अभिषेक्ष्याभिभरतंसप्तद्वीपपतेःपदे ॥ ल
क्ष्मणोमांविनानैवभूम्यांवासंकरिष्यति १२ एवंवदतिराजेंद्रेपौरास्तेभयविव्हलाः ॥ द्रुमाइवछिन्नमूलाःदुःखार्ताःपतिताभुवि १३ मूर्च्छितोभरतश्चापिश्रुत्वारामाभि
भाषितम् ॥ गर्हयामासराज्यंसप्राहदुःखाद्रघूत्तमम् १४ सत्येनतुशपेनाऽहंत्वांविनादिविवाभुवि ॥ कांक्षेराज्यंरघुश्रेष्ठशपेत्वत्पदयोःप्रभो १५ अमुयोग्यंवरंराजन्न
भिषिंचस्वराघव ॥ अयोध्यायांकुशंवीरंसप्तद्वीपपतेःपदे १६ अस्त्युत्तरकुरुष्वत्रजंबुद्वीपपतेःपदे ॥ लवोऽभिषेचितःपूर्वंसएवंतेपुगच्छतु १७ भरतेनोदितंश्रुत्वापतिता
स्ताःसमीक्ष्यच ॥ प्रजावैभयसंविग्नारामविश्लेषकातराः १८ वसिष्ठोभगवान्राममुवाचसदयंवचः ॥ पश्यतामादरात्सर्वाःपतिताभूतलेप्रजाः १९ तासांभावानुगंराम
प्रसादंकर्तुमर्हसि ॥ श्रुत्वावसिष्ठवचनंताःसमुत्थाप्यपूज्यच २० सस्नेहोरघुनाथस्ताःकिंकरोमीतिचाऽब्रवीत् ॥ ततःप्रांजलयःप्रोचुःप्रजाभक्त्यारघूद्वहम् २१ गन्तु
मिच्छसिवैकुंठंत्वमस्माकंनयप्रभो ॥ यत्रगच्छसित्वंरामह्यनुगच्छामहेवयम् २२ अस्माकमेषापरमाप्रीतिर्धर्मोऽयमक्षयः ॥ तवानुगमनेरामहृद्गतानोदृढामतिः २३
पुत्रदारादिभिःसार्द्धमनुयामोऽद्यसर्वथा ॥ तपोवनंवास्वर्गंवापुरंवारघुनन्दन २४ ज्ञात्वातेषांमनोदार्ढ्यंकारुण्याद्रघुनायकः ॥ भक्तंपौरजनंदीनंबाढमित्यब्रवीद्वचः २५
कृत्वैवंनिश्चयंरामस्तस्मिन्नेवाऽहनिप्रभुः ॥ कुशंतथाभिषेक्तुंवैचोदयामासलक्ष्मणम् २६ सौमित्रिश्चापिगुरुणाविप्रैःपौरजनैस्तदा ॥ शोभयित्वास्वनगरींमुदातमभ्य
षेचयत् २७ अभिषेकेकुशस्यासीन्महोत्साहोगृहेगृहे ॥ रामाऽवरोधेसुमहान्समुत्साहस्तदाऽभवत् २८ तदासिंहासनारूढंछत्रचामरशोभितम् ॥ प्रजाःसर्वाःकुशपतिं
प्रणामंचक्रुरादरात् २९ तदाकुशोन्नृपोविप्रान्धनंबहुतरंददौ ॥ प्रजास्तंपूजयामासुर्वस्त्रालंकारवाहनैः ३० ततःप्रपूजयत्सर्वाःप्रजाःसकुशभूपतिः ॥ भोजयामास
विप्रौघान्कोटिशःसकुशेश्वरः ३१ अथरामाज्ञयाशीघ्रंसौमित्रिःसीतयासह ॥ अंतःपुराणिसर्वाणिनिनायनयराद्बहिः ३२ नानावाहनसंस्थानिनृत्यवाद्यादिमंगलैः ॥
ततोरामःस्वयंबन्धुपुत्राद्यैःसर्वतोवृतः ३३ मुनिभिर्जयशब्दैश्चस्तुतोमंगलनिःस्वनैः ॥ अयोध्यायाबहिःपौरैर्येयौमागधसंस्तुतः ३४ रथारूढश्चामराद्यैर्वीजितश्च
शनैर्मुदा ॥ विवेशवासोगेहानितदारामोजनैःसह ३५ नद्युर्वीरनार्यश्चतदाश्रीराघवाग्रतः ॥ ततःपौराःसाऽवरोधाश्चांडालांताविनिर्ययुः ३६ निन्युस्तेसारमेयांतान्

१ अंतःपुरेइत्यर्थः ।

पुर्याः पौराश्चतुष्पदान् ॥ नासन्पक्षिकुलांताद्यास्तत्पुर्यांतेवहिर्ययुः ३७ नासीत्कोऽपितदापुर्यांजनशून्याबभूवसा ॥ अयोध्यानगरीपुण्यांगजभुक्तकपित्थवत् ३८ एतस्मि
न्नन्तरेसर्वेद्वीपांतरनिवासिनः ॥ जंबूद्वीपांतरस्थाश्चययुःसैन्यैर्नृपोत्तमाः ३९ कोटिशोराघवंनेमुस्ततोनेमुःकुशेश्वरम् ॥ उपायनानिरामायकुशायचपृथक्पृथक् ४० दत्त्वा
संपूजितास्ताभ्यांतस्थुःसर्वेनृपोत्तमाः ॥ ततोंऽगदश्चित्रकेतुःपुष्करस्तक्षएवच ४१ सुबाहुर्यूपकेतुश्चययुःसर्वेनिजैर्बलैः ॥ साऽवरोधाःसपुत्राश्चसपौत्रास्तेस्नुषादिभिः ४२
प्रणेमूराघवादींश्चसीतादींश्चाऽपिसादरात् ॥ रामेणालिंगिताःसर्वेसीतयाभोजिताअपि ४३ तस्थुःसर्वेसभायांतेस्वस्वपौरजनैःसह ॥ तदागतान्नृपान्सर्वान्रामोवृत्तंन्यवेद
यत् ४४ पुनःपप्रच्छतान्सर्वान्संस्थितान्रघुनन्दनः ॥ युष्माकंपूर्वजाःसर्वेममायातागजाह्वये ४५ भवतांरोचतेयुद्धंयदितैःपूर्वजैःसह ॥ आगन्तव्यंतर्हिसवर्मयासहगजा
ह्वयम् ४६ नोचेद्भवद्भिर्गंतव्यमितएवनिजस्थलम् ॥ निर्बंधोऽत्रनमेज्ञेयःसर्वैःपार्थिवसत्तमैः ४७ इतिरामवचःश्रुत्वानृपाराघवमब्रुवन् ॥ रामराममहावीर्यवयंसर्वेतवानुगाः
४८ त्वयैववर्द्धिताःसर्वेतवान्नैःपोषितावयम् ॥ वीराःक्षत्रियवंशीयारणेतातप्रहारिणः ४९ तवाज्ञयावधामोऽद्यपितृपुत्रान्रणाजिरे ॥ नाऽस्मांस्त्वंविद्धिराजेंद्रस्वामिकार्ये
पराङ्मुखान् ५० इतितेषांवचःश्रुत्वातानालिंग्यसराघवः॥ संपूज्याभरणैर्वस्त्रैःसुखंसुष्वापसीतया ५१ ततःप्रभातेश्रीरामोगत्वातांशरयूनदीम्॥स्नात्वादानानिवेदत्त्वासी
तयाविधिपूर्वकम् ५२ नत्वातांशरयूंपुण्यांगन्तुंपप्रच्छवैमुहुः ॥ तद्रामवचनंश्रुत्वाशरयूराममब्रवीत् ५३ एतावत्कालपर्यंतंस्थितात्वद्दर्शनेच्छया ॥ अहमद्यत्वयारामया
स्यामित्वत्पदंत्वितः ५४ ततस्यावचनंश्रुत्वातामाहराघवःपुनः ॥ यावत्कथाममशुभास्थास्यत्यत्राऽघनाशिनी ५५ तावत्त्वमंशरूपाऽत्रवसलोकाघनाशिनी ॥ तथेतिराम
वचनादंशरूपंनिधायसा ५६ साकेतेऽत्रपूर्णरूपाययौरामेणतत्पदम् ॥ अथरामःशरय्वाऽसौपरिक्रम्यनिजांपुरीम् ५७साष्टांगंतांनमस्कृत्यगन्तुंपप्रच्छपूज्यताम् ॥ अयो
ध्येऽवनमस्तेऽस्तुत्वयाऽहंरक्षितस्त्विह५८आज्ञांदेहस्वपृच्छामिस्वस्थलंगंतुमुद्यतः ॥ क्षमस्वमेऽपराधांस्त्वंपुनर्दर्शनमस्तुते ५९ इतिरामवचःश्रुत्वापुरीराघवमब्रवीत् ॥
एतावत्कालपर्यंतंस्थितात्वद्दर्शनेच्छया ६० यास्येत्वयासमर्थानसोढुंत्वद्विरहंत्वहम् ॥ ततस्यावचनंश्रुत्वापुरीमाहरघूत्तमः ६१ यावत्कथाममशुभास्थास्यत्यत्राऽघना
शिनी ॥ तावत्त्वमंशरूपेणवसाऽत्रमृण्मयीचिरम् ६२ तथेतिरामवचनादंशरूपाऽत्रमृण्मयी ॥ अयोध्यासंस्थितादिव्याहेमागमेणसाययौ ६३ अयोध्ययाशरय्वा
ऽपिरामःसेनास्थलंययौ ॥ अयोध्यायाःसरय्वाश्चप्रभावोनगतोत्वितः ६४ अथसीतामहानागीमारुरोहसखीजनैः ॥ पृथङ्नागीषूर्मिलाद्यास्ताःसमारुरुहुस्तदा ६५
अथरामोमुदावेगात्समारुह्यगजोपरि ॥ उवाचलक्ष्मणंवाक्यंपुष्पकेसकलान्जनान् ६६ पौरानारोहयस्वत्वंस्वबंधुभ्यांसुतादिभिः ॥ नागारूढैःपृथक्शीघ्रंसमारुह्यगजो
परि ६७ अनुगच्छस्वमत्पृष्ठेलक्ष्मणःसतथाऽकरोत् ॥ अथसर्वेनृपतयोनानायानेषुसंस्थिताः ६८ ययुःस्वस्वबलैर्युक्ताःशीघ्रंश्रीरामपार्श्वतः ॥ ययावग्रेत्वग्रसरोरज्जु
कुद्दालधारिभिः ६९ हस्तकारतक्षकैश्चकुठारटंकिपाणिभिः ॥ ततोययौमहानागःपताकाध्वजशोभितः ७० ततोययुर्यंत्रहस्तानानावाहनसंस्थिताः ॥ ततोययुश्च

१ निःसारेत्यर्थः । २ मत्स्वरूपेतिपाठः ।

तघ्नीभिःपूरिताःशकटाःशुभाः ७१ ततोऽश्वसंस्थावाद्यानिवादयंतोययुर्भटाः ॥ ततोऽश्वसंस्थाःशतशोययुस्तेवेत्रपाणयः ७२ ततोययुर्मागधाश्चवंदिनोयानसंस्थि
ताः ॥ ततोनटाश्चारणाश्चयानस्थाःसुविभूषिताः ७३ ततस्तावारनार्यश्चकाष्ठमंचकवाहिताः ॥ मस्तकेघुमटैर्मार्गेनृत्यंत्यःप्रययुःसुखम् ७४ ततोययुर्भूषितास्ते
श्रीरामस्यतुरंगमाः ॥ ततःपुरुषवद्वेषान्विभ्रंत्यःप्रमदोत्तमाः ७५ ययुस्तरुण्यःशतशःशस्त्रहस्तास्सुभूषिताः ॥ गोपितास्याःकंचुकिन्यस्तुरंगादिषुसंस्थिताः ७६
ततोययुर्दंडहस्तादासीपुत्राःसुभूषिताः ॥ ततोययौरामचंद्रस्तत्पृष्ठेलक्ष्मणोययौ ७७ तत्पृष्ठेभरतश्चाऽपिशत्रुघ्नश्चततोययौ ॥ ततःकुशोलवश्चाऽथततश्चोऽप्यंगदो
ययौ ७८ ययौततश्चित्रकेतुःपुष्करश्चततोययौ ॥ ततस्तक्षःसुबाहुश्चयूपकेतुस्ततोययौ ७९ ततःसीताययौशीघ्रमूर्मिलाचततःपरम् ॥ मांडवीश्रुतिकीर्तिश्चस्नुषाः
सर्वाःक्रमाद्ययुः ८० ततस्तेमंत्रिणःसर्वेशिबिकासंस्थिताययुः ॥ ततोययुर्वानराश्चकोटिशःपर्वतोपमाः ८१ ततोययुर्नृपाःसर्वेकोटिशोवारणास्थिताः ॥ ततोनृपाणां
सैन्यानिययुर्वाजिस्थितानिहि ८२ ययुस्ततस्तेयंत्राणांशकटाःकोटिशोवराः ॥ शतघ्नीखड्गचर्मादिपूरिताःशकटास्तदा ८३ ततोवारणमुख्याश्चनववाद्यसमन्विताः ॥
ततश्चोष्ट्राःसुवर्णानांततःपृष्ठेखरादयः ८४ एवंरामःशनैर्मार्गेचामराद्यैःसुवीजितः ॥ सीतयाजालरंध्रैश्चवीक्षितश्चमुहुर्मुहुः ८५ ययौशनैःशनैःश्रीमान्स्तुतोमागधवंदि
भिः ॥ पश्यन्नृत्यान्यप्सरसांशृण्वन्सगायनान्यपि ८६ सेनानिवेशस्थानानांयात्राकांडेयथोदिता ॥ मयापूर्वंसुरचनातद्वदासीत्पुनस्त्विह ८७ इतिशतकोटिरामचरि
तांतर्गतश्रीमदानंदरामायणेवाल्मीकीयेआदिकाव्येपूर्णकांडेरामदासविष्णुदाससंवादेरामप्रस्थानंनामद्वितीयःसर्गः ॥ २ ॥ ॥ रामदासउवाच ॥ अथरामःशने
र्मार्गेनानादेशान्विलंघ्यच ॥ एकादशदिनैःप्रापसेनयातद्व्रजाव्हयम् १ राममागतमाज्ञायसुषेणोवेगवत्तरः ॥ प्रत्युद्ययौस्वकपिभिर्विंशल्लक्षसमन्वितैः २ नत्वारामंचसी
तांचसर्ववृत्तंन्यवेदयत् ॥ रामराममहाबाहोप्रतापात्तवमेमया ३ चतुर्दशदिनंयुद्धंकृतमेभिःसुदुष्करम् ॥ अधुनात्वंसमायातःक्वैतेस्थास्यंतिभूतले ४ सुषेणस्यवचः
श्रुत्वातमप्याश्वासयत्प्रभुः ॥ अथरामःसजान्हव्याश्चोत्तरेपरमेतटे ५ सेनानिवासमकरोद्ददर्शरिपुवाहिनीम् ॥ तांनिशांसमतिक्रम्याद्वितीयेदिवसेततः ६ चोदयामास
युद्धायवानरान्रघुनंदनः ॥ ततस्तेवानराःसर्वेजान्हव्यामवप्लुत्यच ७ रामंसीतांनमस्कृत्यनिर्ययुःसमरंमुदा ॥ ततस्तेवानराश्चकुःसिंहनादान्भयंकरान् ८ वादयामासुर्वा
द्यानिदुद्रुवुःशत्रुवाहिनीम् ॥ नलाद्यास्तेऽपिश्रीरामसेनांदृष्ट्वाऽतिविस्मिताः ९ चकिताभयभीताश्चनिर्ययुःसंगरेद्रवात् ॥ ततस्तेवानराःसर्वेगंगामुल्लंघ्यवेगतः १० द्रुम
द्रिःपर्वतैर्वृक्षैःशिलाभिर्मुष्टिभिःपदैः ॥ निजघ्नुःशत्रुवीरांस्तेकीर्तयंतोरघूत्तमम् ११ नलवीराश्चतेसर्वेशस्त्रैस्तीक्ष्णैःकपीश्वरान् ॥ निजघ्नुःसमरेवेगाद्बभूवतुमुलोरणः १२
६२ अथतैर्वानरैःसर्वेबलाद्वृक्षैःप्रपीडिताः ॥ पराङ्मुखाःकृताःसर्वेरणात्तेनलसैनिकाः १३ तान्दृष्ट्वातेनलाद्याश्चरणाद्वीरान्पराङ्मुखान् ॥ निहतान्कपिवीरैश्चचोदयन्नृपतीं
स्तदा १४ ततस्तेपार्थिवाःसर्वेजंबूद्वीपनिवासिनः ॥ तथाद्वीपांतरोद्भूतायेव्रद्धाश्चपुरोदिताः १५ ययुर्युद्धायसन्नद्धानानावाहनसंस्थिताः ॥ तान्सर्वानागतान्दृष्ट्वाययुः

१ शिबिकाश्रमभोस्त्वतइतिपाठः ।

श्रीरामसैनिकाः १६ जंबुद्वीपांतरस्थाश्चतथाद्वीपांतरस्थिताः ॥ युवानश्चनृपाःसर्वेनानावाहनसंस्थिताः १७ सुग्रीवश्चांगदश्चाऽथहनुमांश्चविभीषणः ॥ जांबवांश्च
सुषेणश्चसंपातिर्मकरध्वजः १८ गुहकोभूरिकीर्तिश्चकंबुकंठःप्रतापवान् ॥ तथाऽन्येजनकाद्याश्चययुःसंग्रामभूतलम् १९ तदोभयोर्महानासीत्सैन्ययोर्वीरनिःस्वनः ॥
नववाद्यानिवैनेदुरुभयोःसैन्ययोःपृथक् २० तदाब्रह्मादयोदेवाःशिवेनसहिताश्चखे ॥ सद्युघेनाथसोमेनदेवेंद्रेणयुतामुदा २१ नानाविमानमारूढाददृशुर्युद्धकौतु
कम् ॥ अथचंद्रादयोदेवाश्चक्रुर्मंत्रंपरस्परम् २२ महाभयंसमुत्पन्नंप्रलयोऽद्यभविष्यति ॥ ब्रह्मदत्तवराश्चैतेसोमवंशोद्भवानृपाः २३ रामोविष्णुरयंसाक्षात्कथंजयपराज
यौ ॥ भविष्यतःकथंयुद्धान्निवृत्तिरुभयोरपि २४ भविष्यतिउपायःकःकार्योयुद्धनिवारणे ॥ तदाब्रह्मासुरानाहकिंचिद्द्रष्टावयंरणम् २५ करिष्यामस्तयोःसख्यंरामसो
मजयोस्त्विह ॥ इत्युक्त्वासकलान्वेधाददर्शरणकौतुकम् २६ तयोभयोःसैन्ययोश्चबभूवुर्यंत्रनिःस्वनाः ॥ यंत्रोत्थवन्हिज्वालाभिर्व्याप्तादशदिशोऽभवन् २७ यंत्रोत्थना
नागुटिकाभिर्जघ्नुस्तेपरस्परम् ॥ शतघ्नीभिस्तथाजघ्नुःशकटस्थाभिरादरात् २८ तथावीरानिजघ्नुस्तेबाणैःखड्गैःपरश्वधैः ॥ परस्परंतोमरैश्चभिंदिपालैश्चमुद्गरैः २९
परिघैश्चक्रबाणैश्चकुंतैःशूलैश्चपट्टिशैः ॥ तदाजघानपितरंपुत्रःपुत्रंतथापिता ३० पितामहस्तथापौत्रंपौत्रश्चापिपितामहम् ॥ अन्योन्यंकुलजात्याख्यादिकंसंश्राव्य
वैमुहुः ३१ तथारणेप्रपौत्रायजघानप्रपितामहः ॥ तथाबाणैःप्रपौत्रोऽपिजघानप्रपितामहम् ३२ मातामहंतुदौहित्रस्तदाबाणैःप्रताडयत् ॥ तथामातामहश्चापि
दौहित्रायरणेऽहनत् ३३ एवंपरस्परंचासीद्युद्धंतल्लोमहर्षणम् ॥ तत्रयेयेहतावीराःसंगरेरामसेवकाः ३४ तान्सर्वान्जीवयामासतदापवननंदनः ॥ द्रोणाचलौषधीभिश्च
वारंवारंस्वसैनिकान् ३५ रिपुसैन्येमृतायेयेतेमृताएवनोत्थिताः ॥ एवंतदासोमवंशनृपास्तेक्षीणतांययुः ३६ तदालोहितपूरासाबभूवसुरनिम्नगा ॥ अर्कपद्ममिता
सेनानलादीनांतदारणे ३७ निपातितारावीयैर्नृपैःसावरसंगरैः ॥ एवंबभूवसमरःषण्मासंहस्तिनापुरे ३८ ततस्तेसोमवंशस्थानृपाःकिंचिद्बलैर्युताः ॥ विषण्णाविग
तोत्साहानिर्ययुःसंगरंस्वयम् ३९ तानागतांस्तदावीक्ष्यकुशाद्याबालकाश्चते ॥ रामादीनांययुस्त्वग्रेरथस्थारणभूतलम् ४० नलंययौकुशःशीघ्रंनद्युकंसययौलवः ॥ जा
तीकरमंगदश्चतथाचवसुदंनृपम् ४१ चित्रकेतुर्ययौशीघ्रंतथालघुश्रुतंनृपम् ॥ ययौसपुष्करःशीघ्रंतक्षकःसुरथंययौ ४२ अजमीढंसुबाहुश्चयूपकेतुर्ययौबलम् ॥ यूपके
तुर्हतत्सैन्यंचकाराऽगोचरंशरैः ४३ वायव्यास्त्रेणचिक्षेपलवस्तल्लवणांमसि ॥ तदातेसप्तवीराश्चनलाद्याःपर्वताइव ४४ युयुधूरघुवीरस्यबालकैःसहसंगरे ॥ नविरेजुर्वं
लैर्हीनाःस्कंधहीननगोपमाः ४५ कुशोविव्याधबाणैस्तंनलंसंग्राममूर्धनि ॥ तदानलःप्रभिन्नांगःस्वबाणैस्तंव्यतर्जयत् ४६ ततःकुशःस्वबाणौघैर्नलस्याश्वान्ध्वजं
धनुः ॥ छत्रंसारथिनंछित्त्वानलंबाणैरताडयत् ४७ नद्युकंचापिविव्याधस्वबाणौघैर्लवस्तदा ॥ नद्युकश्चलवंबाणैस्तदाव्याकुलमातनोत् ४८ नद्युकंनिजबाणौघैश्चकार
विरथंलवः ॥ एवंजातीकरंबाणैरंगदःसंप्रताडयत् ४९ प्रताडयज्जातीकरःपरिघेणांगदंतदा ॥ ततोजातीकरंबाणैरंगदोऽपारयद्दुवि ५० चित्रकेतुःस्वबाणौघैःक्रोशेन

१ सैनिकास्तेक्षयंययुरितिपाठः ।

वसुदंतपम् ॥ चिक्षेपस्यंदनाद्वेगात्तदद्भुतमिवाऽभवत् ९१ यथालघुश्रुतोबाणैर्हंदिविव्याधपुष्करम् ॥ तदासपुष्करःक्रोधाद्बाणैर्लघुश्रुतंरथे ९२ भित्तिचित्रोपमंकृत्वावा
दयामासदुन्दुभिम् ॥ सुरथश्चाऽपितक्षंसववर्षशरवृष्टिभिः ९३ ततस्तक्षःस्वबाणौघैःसुरथंगगनांगणे ॥ सरथंभ्रामयामासशुष्कपर्णंयथामरुत् ९४ अजमीढस्तदासर्वा
न्पूर्वजान्व्याकुलीकृतान् ॥ वीक्ष्यरामात्मजाद्यैस्तैर्ववर्षशरवृष्टिभिः ९५ सुबाहुस्तंस्वबाणौघैश्चकारविरथंतदा ॥ अजमीढस्ततोऽन्येसरथेस्थित्वाययौपुनः ९६
मुमोचपवनास्त्रंसकुशादीनांवधेक्रुधा ॥ तंदृष्ट्वायूपकेतुस्तंपन्नगास्त्रंमुमोचसः ९७ तदातेकोटिशःसर्पाःप्रपिबुःकंपनंक्षणात् ॥ रथस्थःसनलःसर्पान्दृष्ट्वागारुडमुत्तमम्
९८ मुमोचपन्नगास्त्रस्यनिवृत्त्यर्थंतदाऽस्त्रवित् ॥ तदाकुशःप्रमुमोचराक्षसास्त्रंभयावहम् ९९ नहुकश्चतदावेगाद्ब्रह्मचक्रंतंमुमोचसः ॥ तदाक्रोधाल्लवश्चाऽपिमेघास्त्रंतंव्य
सर्जयत् ६० तदाल्घुश्रुतश्चाऽपिपवनास्त्रंमुमोचसः ॥ तदासहनुमानशीघ्रंव्यादायविकटाननम् ६१ प्रपिबन्मरुतंवेगान्ननादजलदस्वनः ॥ एवंतच्चमहद्युद्धंपुष्प
कारामसंस्थितौ ६२ सीतारामौमुदायुक्तौलक्ष्मणाद्यैर्ददर्शतुः ॥ एवंयुद्धंपंचमासान्सैकादशदिनान्यभूत् ६३ एकादशेदिनेमार्गेगतास्तेऽस्मिन्समीरिताः ॥ एवमेका
दशेर्मासैरेकादशदिनैरपि ६४ त्रेतायुगभवैर्दिव्यैःसमाक्षिःसंगरस्यच ॥ अदृष्टासकुशोवेगाद्ब्रह्मास्त्रंसंदधेतदा ६५ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गत श्री
मदानन्दरामायणे वाल्मीकीये पूर्णकांडे रामदासविष्णुदाससंवादे सोमवंशोद्भवनृपाणां युद्धवर्णनं नाम तृतीयःसर्गः ॥ ३ ॥ ॥ श्रीरामदासउवाच ॥ ॥ ब्रह्मा
स्त्रंसंदधानंतंदृष्ट्वावेधाःसुरैःसह ॥ सोमेनचबुधेनाऽपिविमानेनययौभुवम् १ विमानादवरुह्याऽथतदाब्रह्माकुशंययौ ॥ कुशंतंप्रार्थयामासमात्वमस्त्रंविसर्जय २ पाल
यस्वबचोमेऽद्यनाकेसोमाद्यवैमया ॥ द्वापरांतेवरोदत्तस्त्वजेयाश्चरणाजिरे ३ भविष्यन्तिनलाद्याश्चसर्वेयुष्मत्कुलोद्भवाः ॥ पुरात्वितिसुराग्रेहिकस्मिश्चित्कारणां
तरे ४ अतस्त्वंकुशमाऽस्त्रंमेनलाद्येषुविसर्जय ॥ तद्ब्रह्मवचनंश्रुत्वाकुशोवाक्यमथाऽब्रवीत् ५ अधुनाक्षणमात्रेणसर्वान्दग्धान्करोम्यहम् ॥ नोचेत्कथयरामायतस्या
ज्ञांमानयाम्यहम् ६ यद्दात्वयावरोदत्तस्तदाकिंविदितंतव ॥ नासीच्छ्रीरामसामर्थ्यंह्यधुनाप्रार्थ्यसेसुधा ७ त्वयिचेद्वर्ततेकिंचित्सारंकर्तुरणंमया ॥ तर्हिकुरुष्वसाहा
य्यंनलादीनांसुरैर्युतः ८ त्वयारणेसंगरोऽद्यममपश्यतुराघवः ॥ सीताऽपिपुष्पकासीनाजालरंध्रेश्चपश्यतु ९ एवंकुशस्यवचनंश्रुत्वालज्जायुतोविधिः ॥ सोमेनाथबुधे
नाऽपिनलाद्यान्प्राहवेगतः १० रेरेमूढाःशृणुध्वंमेवचनंहितायुषः ॥ साक्षान्नारायणंरामंयूयंयोद्धुंसमुद्यताः ११ केनेयंशिक्षिताबुद्धिःसर्वेषांघातकारिणी ॥ गच्छ
ध्वंशरणंरामंनोचेद्यूयंमरिष्यथ १२ ममाऽयंजनकःसाक्षाद्रामोविष्णुर्नसंशयः ॥ इतिधिक्कृत्यतान्वेधाःकुशंवचनमब्रवीत् १३ यावद्यास्याम्यहंरामात्पुनस्त्वांकुशबाल
क ॥ तावत्त्वंमोक्ष्यसेबाणंतर्हिमांहतवानसि १४ इत्युक्त्वातंकुशंवेधानलाद्यैःपरिवेष्टितः ॥ ययौरामंसुरैर्युक्तःपुरस्कृत्यवृषध्वजम् १५ शिवमागतमाज्ञायपुष्पका
द्रघुनन्दनः ॥ प्रत्युद्गम्यशिवंनत्वाप्रणनामततोविधिम् १६ ततस्तान्पूजयामासशिवादीन्रघुनन्दनः ॥ ततःसभार्यारामायतिष्ठन्वेधानलादिभिः १७ प्रणामस्त
न्कारयामाससोमेनचबुधेनच ॥ ततस्तान्सहसोत्थाप्यरामचन्द्रःकरेणहि १८ श्रुत्वातेषांहिनामानिविधेरास्यात्पृथक्पृथक् ॥ ततःपप्रच्छवेगेनब्रह्माणंपुरतः

आ. रा. स्थितम् १९ सर्वेकिमर्थमानीतास्त्वत्रैतेसोमवंशजाः ॥ यदत्वेकारणंश्रीघ्रंसत्यमेवममाग्रतः २० तद्रामवचनंश्रुत्वारामंवेधावचोऽब्रवीत ॥ रामराममहाबाहोपा पूर्णकां.
लयस्वाऽद्यमेवचः २१ रक्षस्वैतान्नृपानद्यवरदानान्ममप्रभो ॥ द्वापारांतमजेयत्वंदत्तमस्तिमयापुरा २२ ममाऽस्त्रंसन्दधानंतंनिवारयकुशंसुतम् ॥ इतितद्वच
॥ ४ ॥ नंश्रुत्वाविहस्यरघुनायकः २३ सभायामाहब्रह्माणमजेयत्वंत्वयोदितम् ॥ कगतंचाऽद्यसमरात्किमर्थमिहचागताः २४ तद्रामवचनंश्रुत्वारामंप्राहविधिःपुनः ॥ ९
सर्वेषांपुरतोमेऽस्तिबलंनतुतवाग्रतः २५ त्वंतुमेजनकःसाक्षादतस्त्वांप्रार्थयाम्यहम् ॥ ततोरामःपुनःप्राहविहस्यचतुराननम् २६ नश्रोष्यतिवचोमेऽद्यकुशोयं
यौवनस्थितः ॥ प्रायःकुमाराद्वृद्धानांवाक्यमग्रेभजन्तिन २७ अन्यच्चाऽपिशृणुष्वत्वंयच्छास्त्रेऽप्युच्यतेवचः ॥ लालयेत्पंचवर्षाणिदशवर्षाणिताडयेत २८ प्रा
प्तेतुषोडशेवर्षेपुत्रंमित्रवदाचरेत ॥ अतस्तेबालकाःसर्वेकुशाद्याःस्वार्थतत्पराः २९ नश्रोष्यंतिवचोमेऽद्यतान्मत्वाप्रार्थयस्वहि ॥ ततःप्राहपुनर्ब्रह्मारणक्रोधात्कु
शोभया ३० वाक्यंरम्यंमंजुलंचनैवाऽद्यवदतिप्रभो ॥ ततःप्राहविधिंरामःपुनर्वाक्यंविनोदयन् ३१ विधेत्वंगच्छवाल्मीकिंसत्वांयुक्तिंवदिष्यति ॥ ततःसरा
मवाक्येनवाल्मीकिंपुष्पकेस्थितम् ३२ मुनिभिर्मुनिशालायामूर्ध्वंसर्वैःस्थितंविधिः ॥ नलाद्यैःसहितोगत्वावृत्तंसर्वंन्यवेदयत ३३ विधिमाहाऽथवाल्मीकिर्ज्ञात्वा
राममनोगतम् ॥ स्त्रीलब्धजीविताश्चैतेभवन्तुसुखिनस्त्विति ३४ नलादीनांस्त्रियःसर्वाःप्रार्थयन्तुविदेहजाम् ॥ कुशोऽपिजानकीवाक्याच्छान्तिमेष्यतिबाल
कः ३५ तथेतितेनलाद्याश्चदूतान्प्रेष्याऽथसादरम् ॥ आनीयस्वकलत्राणिशतशस्तुतदाजवात् ३६ जानकींप्रेषयामासुस्ताःसर्वाःपार्थिवस्त्रियः ॥ उपायना
निसंगृह्यजानकींप्रययुर्जवात् ३७ ददृशुर्जानकींनारीशालायांस्वसखीवृताम् ॥ स्नुषाभिःसेवितपदांपर्यंकेनिद्रितांमुदा ३८ ताःस्त्रीःसमागताःसीतादृष्ट्वाचामर
वीजिता ॥ मंचकादवरुह्याऽथधृतपार्श्वोपबर्हणा ३९ स्वपृष्ठेमंचकंकृत्वासंस्थितासीत्सखीवृता ॥ स्नुषाभिर्वीजितारम्यांप्रणेमुस्तांपरास्त्रियः ४० तासां
सीमंतरत्नौघप्रभयापदपंकजे ॥ विरेजतुस्तेसीतायाश्चित्ररागविचित्रिते ४१ उपायनानिसंगृह्यताभ्यःसाजनकात्मजा ॥ समालिंग्यनिवेश्याऽथताःप्राहसु
स्वरंवचः ४२ किमर्थमागतायूयंमामेतव्यमितःपरम् ॥ कथयध्वंस्वीयमिष्टंयत्तद्वोऽद्यकरोम्यहम् ४३ तदाताःकथयामासुःसर्वंवृत्तंसविस्तरम् ॥ देहिकंक
णदानानिकुशंयुद्धान्निवारय ४४ तथेतिजानकीचोक्त्वाज्ञात्वाराममनोगतम् ॥ नारीहस्तान्मोचनीयाश्चैतेनिर्जरवस्त्विति ४५ आरुह्यशिबिकायांसाताभिर्यु
क्ताकुशंययौ ॥ तदातंसांत्वयामासक्रोधंत्यजकुशाऽधुना ४६ निवर्तस्वरणादद्यशृणुमेवचनंशिशो ॥ तथेतिजानकीवाक्याद्विहस्याऽथकुशस्तदा ४७ मात्रा
तैर्बंधुभिर्युक्तःसैनयासंन्यवर्तत ॥ पुष्पकंप्रययौसीतानृपस्त्रीपरिवेष्टिता ४८ कुशाद्यास्तेकुमाराश्चसभायांराघवंययुः ॥ ततोवाल्मीकिनाब्रह्मानलाद्यैःसहितस्त ॥ ४ ॥
दा ४९ सनिर्जरःसभांगत्वातस्थौश्रीराघवाग्रतः ॥ कुशाद्यास्तेऽपिश्रीरामंप्रणम्यतस्यसंनिधौ ५० तस्थुस्तेनालिंगिताश्चस्त्रीभिर्नीराजिताअपि ॥ तदा
रामोऽब्रवीद्वाक्यंब्रह्माणंसदसिस्थितम् ५१ रणान्निवर्तिताबालाःकिमग्रेतववांछितम् ॥ नमेराज्येछत्रपतिर्द्वितीयोऽत्रभविष्यति ५२ करणीयंनलाद्यैः

किंतद्ददस्वसविस्तरम् ॥ तदासनादुत्थितःसवैधारामाग्रतःस्थितः ९३ उवाचमधुरंवाक्यंसमायांरघुनन्दनम् ॥ रामराममहाबाहोप्रभारश्चत्वयाहृतः ९४ चि
रकालंकृतंराज्यंवैकुण्ठंपाल्याऽधुना ॥ कुरुसत्यंवचोमेऽद्यददस्वहस्तिनापुरम् ९५ नलादिम्यस्त्वयोध्यायांकुशोराज्यंप्रशासतु ॥ तंदारामोविधिंप्राहममाप्येतन्नरोचते
९६ वैकुण्ठंश्वोगमिष्यामिसीतयाबन्धुभिर्युतः ॥ दशसहस्रवर्षाणिप्रोक्तमायुर्युगेऽत्रहि ९७ तन्मयास्वीयसामर्थ्यात्कृतमत्रविधेमृषा ॥ एकादशसहस्राणिसमास्त्वेकाद
शैवतु ९८ तथैकादशमासाश्चगतामेदिवसाअपि ॥ शेषमायुश्चकिंचिन्मेतच्छ्वःपूर्णंभविष्यति ९९ द्वादशायांघटिकायांसोऽहंवैकुण्ठमाश्रये ॥ ततोविधिंकुशःप्राहनला
द्यायदिमांविधे ६० दास्यंतिकरभारंमेतर्हितिष्ठंतुचाऽत्रते ॥ मदाज्ञांपालयंत्वेतेतववाक्यात्सुरक्षिताः ६१ छत्रहीनाःसुखंत्वद्यवसन्तुहस्तिनापुरे ॥ तद्वाक्यंसविधिः
श्रुत्वापुनःप्राहकुशंप्रति ६२ छत्रमाज्ञापयस्वैतांस्त्वदाज्ञावशवर्तिनः ॥ दास्यंतिकरभारंत्वांममवाक्यंहिपालय ६३ तथेतिसकुशःप्राहविधिंकिंचित्स्मिताननः ॥ अथ
तेसोमवंशस्थान्नृपाःसर्वेविधिंतदा ६४ प्रोचुर्वयंत्वयासार्धंभियांस्यामोदिवमध्रुवे ॥ अजमीढोऽद्यनृपतिर्भवत्वत्रगजाव्हये ६५ तथेतितान्विधिश्चोक्त्वासभायांसमुपावि
शत् ॥ अथब्रह्माऽजमीढायब्राह्मणैरभिषिच्यच ॥ गजाव्हयेतंराजानंचकारराघवाज्ञया ६६ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मी
कीये पूर्णकांडे सोमवंशसूर्यवंशजयोमत्रीकरणंनामचतुर्थःसर्गः ॥ ४ ॥ ॥ श्रीरामदासउवाच ॥ अथरामंसुषेणश्चसुग्रीवश्चविभीषणः ॥ वानराःप्रार्थयामासुर्वयंरा
मत्वयादिवम् १ यास्यामोनाऽत्रजीवामस्त्वयारामविनाभुवि ॥ ददस्वाज्ञांत्वयागन्तुंतदाहराघवोऽपिसः २ विभीषणत्वयास्थेयंलंकायांममवाक्यतः ॥ प्रचरिष्यति
यावन्मेरामनामाऽवनीतले ३ त्वंगच्छाद्यैवमेवाक्यात्तथेतिसविभीषणः ॥ नत्वारामंययौलंकांराघवेणातिमानितः ४ ततःप्राहजांबवंतंराघवःपुरतःस्थितम् ॥ हेजांबवं
स्त्वयास्थेयंयावद्भूम्यांकथामम ५ प्रचरिष्यतितावच्चद्वापरांतेपुनर्मम ॥ भविष्यतिदर्शनंतेगच्छाऽद्यैवसुखंवस ६ त्वयाकृतंयत्साहाय्यंलंकायांविनेऽपिच ॥ अतस्त्वं
श्वशुरोभूत्वाद्वापरेख्यातिमेष्यसि ७ तथेतिरामवचनाद्रामंसीतांप्रणम्यसः ॥ जांबवान्निर्ययौशीघ्रंराघवेणाऽतिपूजितः ८ रामःप्राहहनूमंतंवत्सतिष्ठयथासुखम् ॥
यदासेतौपणस्तेहिद्वापरांतेऽर्जुनेनवै ९ भविष्यतिशिरैःसेतुंकर्तुंमेदर्शनंतदा ॥ त्वंलभिष्यसिगच्छाऽद्यसुखंवसभजस्वमाम् १० तद्रामवचनंश्रुत्वानत्वारामंचलक्ष्म
णम् ॥ सीतांप्रणम्यहनुमान्गमनायोपचक्रमे ११ ततोरामोनिजात्कंठाद्रत्नवरत्नविभूषितम् ॥ हारंददौतथासीतातंददौबाहुभूषणे १२ ततोनत्वारामचन्द्रंसार्द्रनेत्रःस
मारुतिः ॥ परिक्रम्यययौवेगात्तस्तुंतुहिमपर्वतम् १३ ततोंगदंरामचन्द्रःपूज्यवस्त्रादिमण्डनैः ॥ प्रेषयामासकिष्किंधांशृंगवेरंतुगूहकम् १४ पातालंप्रेषयामासराघवोम
करध्वजम् ॥ वस्त्रादिभिस्तोषयित्वासुहृदःस्वस्थलानिहि १५ ततोरामःसमाहूययूपकेतुंमहामनाः ॥ वस्त्रादिभिस्तोषयित्वाविदिशागनरंप्रति १६ प्रेषयामाससैन्येन
सोऽपिनत्वारघूत्तमम् ॥ जानकींचययौवेगात्स्त्रीपुत्रैःपरिवारितः १७ एवंरामःसुबाहुंतंमथुरांप्रेषयत्तदा ॥ एवंरामःपुष्करंचप्रेषयामासबालकम् १८ सैन्येनपुष्करा

१ तुहिनपर्वतमिपाठः ।

वत्यांतक्षंतक्षशिलाव्हये ॥ ततोऽगदंगजाश्वंतंप्रेषयामासराघवः १९ घनरत्नंचित्रकेतुंस्त्रीपुत्रबलवाहनैः ॥ प्रेषयामासश्रीरामस्तोषितंवसनादिभिः २० ततोलवंसमा
हूयससीतोरघुनन्दनः ॥ वस्त्रालंकारयानाद्यैस्तोष्यस्त्रीपुत्रसंयुतम् २१ उत्तरेपुकुरुष्वत्रप्रेषयामाससेनया ॥ कामधेनुंददौसीतालवायव्रजतेमुदा २२ ततःकुशंसमाहू
यरामःस्त्रीपुत्रसंयुतम् ॥ प्रेषयामाससाकेतंसैन्येनपार्थिवैर्युतम् २३ दत्त्वास्वीयानिशस्त्राणिकोदंडंचमहोज्ज्वलम् ॥ नानायानानिवस्त्राणिरामश्चितामणिंददौ २४
सस्त्रीपुत्रंकुशंतोष्यराघवोवाक्यमब्रवीत ॥ वत्सगच्छसुखंतिष्ठभूमिंधर्मेणपालय २५ जंबुद्वीपनृपान्सर्वांस्तथाद्वीपांतरस्थितान् ॥ सर्वानितान्पालयस्वपुत्रवत्कुशबालक
२६ इत्युक्त्वातान्नृपान्प्राहयुष्माभिःकुशबालकः ॥ मत्स्थानेमाननीयोऽयंरक्षणीयस्त्वहर्निशम् २७ तद्रामवचनंश्रुत्वानृपाःप्रोचूरघूत्तमम् ॥ त्वत्तेजःपूरितोबालस्त्वत्तो
ऽस्माकंशताधिकः २८ अस्त्येवनाऽत्रसंदेहःसत्यंविद्धिरघूत्तम ॥ यथात्वयापालिताःस्मोवयंतद्वत्कुशोप्ययम् २९ रक्षिष्यतिसदाऽस्माकंदृष्टोऽस्यालपराक्रमः ॥ इत्यु
क्त्वाराघवंनत्वासर्वेतेपार्थिवोत्तमाः ३० रामेणपूजिताःसम्यग्वस्त्रालंकारवाहनैः ॥ ययुःकुशंपुरस्कृत्यस्वस्वसैन्यसमन्विताः ३१ कुशोऽपिराघवंनत्वामूर्ध्निसीताऽवघ्रा
पितः ॥ वसिष्ठेनरथेस्थित्वापुरींगन्तुंप्रचक्रमे ३२ तदारामस्तंरजकंमंथरांप्रेषयत्पुरीम् ॥ कुशेनसहवेगेनसमाहूयाऽथसादरम् ३३ पूर्ववैरमनुस्मृत्यनांऽत्रंयातामघर्मि
णौ ॥ कृष्णावतारेतावेवरजकोरजकोऽभवत् ३४ मंथरापूतनाजाताहतौतौपूर्ववैरतः ॥ ततःकुशःसार्द्रनेत्रःपश्यन्रामंचजानकीम् ३५ परिवर्त्यमुखंपृष्ठेवारंवारंरथेस्थि
तः ॥ गच्छगच्छेतिरामेणसीतयाऽपिनिजैःकरैः ३६ सूचितःसन्ययौसैन्यैर्वेष्टितःस्वपुरींप्रति ॥ ददर्शनगरींशून्यांश्रीरामविरहातुराम् ३७ गत्वापुर्यांमहोत्साहैर्निजासिं
हासनस्थितः ॥ पूज्यसर्वान्पार्थिवांश्चसमालिंग्यव्यसर्जयत् ३८ तेऽपिनत्वाकुशंस्वंस्वंस्थलंजग्मुर्नृपोत्तमाः ॥ करभारंददुस्तस्मैतदाज्ञावशवर्तिनः ३९ मन्थराराजकौ
द्वौतौदैवात्पुर्यांबहिर्मृतौ ॥ प्रापतुर्जन्मसाकेतेमृतानांनपुनर्भवः ४० अथरामोऽब्रवीत्सर्वान्वानरान्जान्हवीतटे ॥ मदर्थंश्रमिताःसर्वेयूयंवानरसत्तमाः ४१ द्वापराग्रे
पुनःसर्वेव्रजेगोपाभविष्यथ ॥ युष्माभिःसहितःप्रीत्याकरिष्याम्यशनादिकम् ४२ तदाऽब्रवीत्ससौमित्रिरामःप्रीत्यापुरःस्थितम् ॥ महान्श्रमःकृतःपूर्वंसेवायांममदण्ड
के ४३ भवत्वंद्वापरेज्येष्ठःशुश्रूषांतिकरोम्यहम् ॥ ततस्तान्राघवःप्राहऋक्षान्पौरान्कपीनपि ४४ सर्वानेवमयासार्धंप्रयातेतिदयान्वितः ॥ ततोददौकल्पवृक्षपारिजा
तौसुराधिपम् ४५ ततस्तंपुष्पकंप्राहकुबेरंवहसादरम् ॥ गच्छाऽद्यैवतथेत्युक्त्वारामंनत्वातुपुष्पकम् ४६ सीतांप्रज्ञाययौशीघ्रंराघवेणाऽतिमानितम् ॥ ततःप्राहरघु
श्रेष्ठश्चोर्मिलांमांडवींतथा ४७ श्रुतकीर्तिंसमाहूयवाल्मीकेश्चमुनेःपुरः ॥ युष्माभिर्मद्देहैश्चनिजदेहानिवेगतः ४८ श्वोऽग्नौदग्ध्वास्वर्गलोकंगंतव्यंममवाक्यतः ॥ तथेति
राघवंप्रोचुस्तदाताश्चोर्मिलादिकाः ४९ रामंनत्वाययुःसर्वाःस्वंस्वंतद्वसनगृहम् ॥ अथरामोऽपितांरात्रिंसीतयाऽक्रममंचके ५० निनायशंकराद्यास्तेसुरास्तस्थुर्मुनी
श्वरैः ॥ स्वस्वपत्न्यालक्ष्मणाद्याश्चकुःक्रीडांयथासुखम् ५१ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणेवा०पूर्ण०सर्वेषांविसर्जनंनामपंचमःसर्गः ॥ ५ ॥ ॥ ९ ॥

१ स्वर्गंनयातावित्यर्थः । २ अग्नौदग्ध्वेतिपाठः ।

॥ श्रीरामदासउवाच ॥ अथरामःसमुत्थायप्रभातेसीतयासह ॥ अजमीढंसमाहूयमंजुलंवाक्यमब्रवीत् १ अद्याऽहंसीतयास्वीयंपदंगच्छामिबन्धुभिः ॥ वानरैःसकलैः
पौरैःस्त्वयाशेषंतुयज्जडम् २ वस्त्रगृहादिकंसर्वंप्रेषणीयंकुशंप्रति ॥ यच्चरंकीटकांतंतन्मयायास्यतिवैदिवम् ३ अतस्त्वंतंकुशंगत्वासर्वंवृत्तंनिवेदय ॥ करोत्युत्तरकार्यां
णिकुशोऽस्माकंसविस्तरम् ४ माकरोतुकुशोऽस्माकंखेदंतंत्वंनिवारय ॥ इतिरामवचःश्रुत्वासाश्रुनेत्रस्तथेतिसः ५ अजमीढस्तदाप्राहननामरघुनायकम् ॥ अथ
रामःशनैःपौरैःस्नात्वाभागीरथीजले ६ कृत्वानित्यविधिंपूर्वंहुत्वावन्हिंसविस्तरम् ॥ ददौदानान्यनेकानिगंगासैकतसंस्थितः ७ ततःप्रास्थानिकंकर्मचकारसयथावि
धि ॥ वन्हिंविसर्जयामासवैकुण्ठंप्रतिराघवः ८ तदारामस्यपश्चात्सागतादक्षिणहस्ततः ॥ मूर्तिरूपधरावेदावैकुंठमाययुस्तदा ९ त्रिपदाप्रणवेनैवश्रीरामास्याद्विनिर्गं
ता ॥ नत्वारामंययौशांतिःक्षमामेधाधृतिर्दया १० तेजोबलंयशःस्वर्गंययौसर्वंतदापुरः ॥ ततःपौरावानराश्चसर्वेभागीरथीजले ११ स्नात्वानिरुध्यवायूंश्चनिजदेहानि
तत्यजुः ॥ अथरामोमुदागंगांस्पृष्ट्वादर्भासनोपरि १२ दर्भपाणिःस्थितस्तूष्णीमुत्तराभिमुखःक्रिया ॥ तावत्सर्वेददृशुस्तेदेवाविष्णुंपुरःस्थितम् १३ चतुर्भुजंनीलकांतिंपी
तकौशेयधारिणम् ॥ कौस्तुभांकितहृद्देशंश्रीवत्सांकोपशोभितम् १४ सीताबभूवसालक्ष्मीर्विष्णुवामांकसंस्थिता ॥ शेषोबभूवसौमित्रिःफणाभिरतिभासुरः १५ शंखो
बभूवभरतःश्रीविष्णोःसव्यसत्करे ॥ वामेकरेबभूवाथशत्रुघ्नश्चसुदर्शनम् १६ देवेषुविविशुःसर्वेवानरास्तेक्षणात्तदा ॥ चांडालकृमिकीटांताअयोध्यापुरवासिनः १७ प्रा
पुस्तेदिव्यदेहानिविमानसंस्थिताबभुः ॥ तदानिनेदुर्वाद्यानिदेवानांगगनांगणे १८ ववर्षुर्देवपत्न्यश्चपुष्पवृष्टिभिरादरात् ॥ ननृतुर्वैह्यप्सरसोजगुर्गंधर्वकिन्नराः १९ प्रण
नामतदाताक्ष्र्यःश्रीविष्णुंरविभासुरम् ॥ देहानिमुमुचुःसर्वेस्त्रीभिःसोमादिकाश्चते २० पतिदेहानिचालिंग्यतदाताऊर्मिलादिकाः ॥ देहान्यग्नौत्यजुःसर्वास्म्येभागीरथी
तटे २१ अथतादेवपत्न्यश्चरत्नदीपैःसहस्रशः ॥ विष्णुंनीराजयामासुर्लक्ष्मीयुक्तंमहाभुजम् २२ विष्णुस्ततोऽब्रवीद्वाक्यंवेधसंमंजुलंशनैः ॥ अयोध्यावासिनःसर्वेतिर्य
ङ्मात्रादयःशुभाः २३ एतेसमागताब्रह्मन्येषांस्थानंवदाधुना ॥ तद्विष्णोर्वचनंश्रुत्वातदाब्रह्माऽब्रवीद्वचः २४ मल्लोकादुपरिष्टाच्चलोकान्सांतानिकाञ्शुभान् ॥ एते
यांतुजनाःसर्वेत्वद्दर्शनमहोज्ज्वलाः २५ ततःप्राहपुनर्विष्णुरयोध्यायांस्थिताश्चये ॥ अग्रेतेऽपिसमायांतुलोकान्सांतानिकाञ्शुभान् २६ तथेतिसविधिःप्राहमहाविष्णुं
मुदान्वितः ॥ ततस्तेदिव्यदेहाश्चसाकेतपुरवासिनः २७ नानाविमानसंस्थाश्चदिव्यवस्त्रविभूषिताः ॥ दिव्यालंकारसंयुक्ताह्यप्सरोभिर्विलेपिताः २८ नानासुगंधगंधा
ढ्यैर्दिव्यचामरवीजिताः ॥ विरेजुर्गगनेचंद्रवदनारविभासुराः २९ ततोब्रह्मादयोदेवाःप्रणेमुर्विष्णुमादरात् ॥ तुष्टुवुर्विविधैःस्तोत्रैर्वेदघोषैर्मुनीश्वराः ३० तदातुष्टावशंभु
६४ स्तंविष्णुंत्रैलोक्यपालकम् ॥ वनमालांदधानंतंदिव्यचन्दनचर्चितम् ३१ ॥ ॥ शंभुरुवाच ॥ ॥ राघवंकरुणाकरंभवनाशनंदुरितापहंमाधवंखगगामिनंजलरूपिणं
परमेश्वरम् ॥ पालकंजनतारकंभवहारकंरिपुमारकंत्वांभजेजगदीश्वरंनररूपिणंरघुनन्दनम् ३२ ॥ १ भूधवंवनमालिनंघनरूपिणंधरणीधरंश्रीहरिंत्रिगुणात्मकंतुलसीध
वंमधुरस्वरम् ॥ श्रीकरंशरणप्रदंमधुमारकंव्रजपालकंत्वांभजेजगदीश्वरंनररूपिणंरघुनन्दनम् ३३ ॥ २ विठ्ठलंमथुरास्थितंरजकांतकंगजमारकंमन्नतंबकमारकंत्रकचा

तकेंतुरगार्दनम् ॥ नन्दजंवसुदेवजंबलियज्ञगंसुरपालकंत्वांभजेजगदीश्वरंनररूपिणंरघुनन्दनम् ३४ ॥ ३ केशवंकपिवेष्टितंकपिमारकंमृगमर्दिनंसुंदरंद्विजपालकंदिति
जार्दनंदनुजार्दनम् ॥ बालकंखरमर्दिनंऋषिपूजितंमुनिचिंतितंत्वांभजेजगदीश्वरंनररूपिणंरघुनंदनम् ३५ ॥ ४ शंकरंजलशायिनंकुशबालकंरथवाहनंशरयूनतंप्रिय
पुष्पकंप्रियभूसुरंलववालकम् ॥ श्रीधरंमधुसूदनंभरताग्रजंगरुडध्वजंत्वांभजेजगदीश्वरंनररूपिणंरघुनन्दनम् ३६ ॥ ५ गोप्रियंगुरुपुत्रदंवदतांवरंकरुणानिधिंभक्तपं
जनतोषदंसुरपूजितंश्रुतिभिःस्तुतम् ॥ भुक्तिदंजनमुक्तिदंजनरंजनंनृपनंदनंत्वांभजेजगदीश्वरंनररूपिणंरघुनन्दनम् ३७ ॥ ६ चिद्घनंचिरजीविनंमणिमालिनंवरदो
न्मुखंश्रीधरंधृतिदायकंबलवर्धनंगतिदायकम् ॥ शांतिदंजनतारकंशरधारिणंगजगामिनंत्वांभजेजगदीश्वरंनररूपिणंरघुनन्दनम् ३८ ॥ ७ शार्ङ्गिणंकमलाननंकम
लादृशंपदपंकजंश्यामलंरविभासुरंशशिसौख्यदंकरुणार्णवम् ॥ सत्पतिंनृपपालकंनृपवंदितंनृपतिप्रियंत्वांभजेजगदीश्वरंनररूपिणंरघुनन्दम् ३९ ॥ ८ निर्गुणंसगुणा
त्मकंनृपमण्डनंमतिवर्धनमच्युतंपुरुषोत्तमंपरमेष्ठिनंस्मितभाषिणम् ॥ ईश्वरंहनुमन्नतंकमलाधिपंजनसाक्षिणंत्वांभजेजगदीश्वरंनररूपिणंरघुनन्दनम् ४० ॥ ९ ईश्व
रोक्तमेतदुत्तममादराच्छतनामकंयःपठेद्रुविमानवस्तवभक्तिमांस्तपनोदये ॥ त्वत्पदंनिजबन्धुदारसुतैर्युतश्चिरमेत्यनोसोऽस्तुतेपदसेवनेबहुतत्परोममवाक्यतः ४१
॥ १० इतिस्तुत्वामहाविष्णुंप्रोवाचगिरिजापतिः ॥ आरुह्यस्वरमानाथगरुडोपरिवेगतः ४२ वैकुण्ठारोहणस्याऽयंकालोवाल्मीकिनाकृतः ॥ एकादशसह
स्राश्वसमास्त्वेकादशैवच ४३ तथैकादशमासाश्वदिनान्येकादशैवच ॥ तथैकादशनाडीश्वपलान्येकादशैवच ४४ गतानितेऽत्रभूम्यांहिजन्मादारभ्यराघव ॥
वसन्तपञ्चमीनाम्नीतिथिश्चैत्रासिताऽद्यहि ४५ पुण्येऽन्हिस्वपदंगन्तुंत्वरांकुरुरमेश्वर ॥ तदाविहस्यश्रीविष्णुर्वाल्मीकिंमुनिपुंगवम् ४६ समालिंग्यमुनीन्पृष्ट्वात
स्थौसगरुडोपरि ॥ ध्वनत्सुदेववाद्येषुस्तुवत्सुनारदादिषु ४७ पुष्पैर्वर्षत्सुदेवेषुप्रनर्तत्स्वप्सरस्सुच ॥ नानाविमानजालैश्चसर्वत्रपरिवेष्टितः ४८ ययौविष्णुःस
वैकुण्ठंलोकान्पश्यन्शनैःशनैः ॥ वैकुण्ठेस्वपदेस्थित्वाविससर्जशिवादिकान् ४९ तस्थौलक्ष्म्यानन्दमयःपरिपूर्णमनोरथः ॥ खगेंद्रसेवितपदःशेषतल्पविभू
षितः ५० अयोध्यावासिनःसर्वेययुःसांतानिकंपदम् ॥ ततस्तेमुनयःसर्वेययुःस्वंस्वंस्थलंप्रति ५१ रामवाक्यात्सोऽजमीढःसांत्वयामासतंकुशम् ॥ स्व
र्गारोहणविस्तारंकथयामासतंकुशम् ५२ कुशेनमानितःसोऽपिययौस्वीयंगजाह्वयम् ॥ लब्ध्वाकुमुद्वतींतस्यांकुशःपुत्रान्सनिर्ममे ५३ एवंश्रीरघुनाथस्य
स्वर्गारोहणकौतुकम् ॥ येशृण्वंतिनराभक्त्यातेऽपिस्वर्गंप्रयांतिहि ५४ वैकुण्ठारोहणाध्यायमिमंनित्यंपठेत्तुयः ॥ सोंतेगच्छतिवैकुण्ठंरामचन्द्रप्रसादतः ५५ ॥ इति
श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये पूर्णकांडे वैकुण्ठारोहणंनामषष्ठःसर्गः ॥ ६ ॥ ॥ श्रीरामदासउवाच ॥ ॥ एवंत्वयायथापृष्टं
स्वर्गारोहणमंगलम् ॥ श्रीरामस्यमयाचैतत्तवाग्रेऽद्यनिवेदितम् १ किमन्यच्छ्रोतुमिच्छाऽस्तितांत्वंवदवदाम्यहम् ॥ इतितीर्थवचःश्रुत्वाविष्णुदासस्तमब्रवीत् २ ॥ ६०

१ पौर्णिमांतमासमानेनफाल्गुनकृष्णप्रतिपच्चैत्रकृष्णसंज्ञका तावसंवर्तोःप्रथमार्पचश्रीवसंतपंचमीत्यर्थः ।

विष्णुदासउवाच ॥ कुशात्सूर्यवंशोऽत्रगुरोपूर्वंत्वयेरितः ॥ कुशाग्रेश्रोतुमिच्छामिसूर्यवंशंसविस्तरम् ३ ॥ श्रीरामदासउवाच ॥ विष्णोरारम्यकथिताएकषष्टितमाः
पुरा ॥ एकषष्टिनृपाह्यग्रेतान्वदामिसविस्तरम् ४ श्रीरामस्यकुशःपुत्रोऽतिथिःपुत्रःकुशस्यसः ॥ निषधस्त्वतिथेःपुत्रोनिषधस्यात्मजोनभः ५ नभाज्जातोपुंडरी
कःक्षेमधन्वातुतत्सुतः ॥ देवानीकस्ततसुतोऽभूद्देवानीकसुतोमहान् ६ अहीनःप्रोच्यतेसद्भिःपार्यात्रस्ततसुतःस्मृतः ॥ पार्यात्रस्यबलःपुत्रोस्थलःपुत्रोबलस्यहि ७ स्थ
लस्यवज्रनाभस्तुखगणस्तस्यकीर्त्यते ॥ खगणाद्विधृतिर्जातोविधृतेस्तनयःशुभः ८ जातोहिरण्यनाभस्तुतस्यपुष्पःप्रकीर्त्यते ॥ पुष्पात्सध्रुवसंधिस्तध्रुवसंधेःसुदर्शनः ९
सुदर्शनादग्निवर्णस्तस्माच्छीघ्रःप्रकीर्त्यते ॥ शीघ्राज्जातोमरुःपुत्रोमरोश्चप्रश्रुतःसुतः १० प्रश्रुतस्यचसंधिर्हिसंधेःपुत्रस्तुमर्षणः ॥ मर्षणस्यमहस्वांश्चविश्ववाहश्चतत्सुतः ११
तस्मात्प्रसेनजित्प्रोक्तस्तस्माज्जातस्तुतक्षकः ॥ बृहद्बलस्तक्षकाच्चतस्माज्जातोबृहद्रणः १२ तस्मादुरुक्रियःप्रोक्तोवत्सवृद्धस्तुतत्सुतः ॥ वत्सवृद्धस्यव्योमस्तुव्योमाद्भा
नुःप्रकीर्त्यते १३ भानोःपुत्रोदिवाकस्तुसहदेवश्चतत्सुतः ॥ सहदेवात्मजोवीरोवीरस्यतनयःशुभः १४ बृहदश्वइतिख्यातस्तस्यपुत्रस्तुभानुमान् ॥ भानुमतःप्रतीकाशः
सुप्रतीकश्चतत्सुतः १५ सुप्रतीकस्यपुत्रोऽभून्मरुदेवइतिस्मृतः ॥ मरुदेवात्सुनक्षत्रःसुनक्षत्राच्चपुष्करः १६ पुष्करस्यांतरिक्षश्चसुतपाअंतरिक्षजः ॥ सुतपातनयो
मित्रोमित्रजित्तत्सुतःशुभः १७ बृहद्राजइतिख्यातस्तस्यबर्हिःस्मृतोबुधैः ॥ बर्हेःकृतंजयःपुत्रस्तस्यपुत्रोरणंजयः १८ रणंजयात्संजयस्तुसंजयाच्छाक्यउच्यते ॥
शाक्यपुत्रस्तुशुद्धोदःशुद्धोदाल्लांगलःस्मृतः १९ प्रसेनजिल्लांगलस्यतत्पुत्रःक्षुद्रकःस्मृतः ॥ क्षुद्रकाद्रणकःप्रोक्तोरणकात्सुरथःस्मृतः २० सुरथात्तनयोजातस्तन
यस्यसुतोमहान् ॥ नाम्नासुमित्रःपरमःपूर्णोवंशस्ततःपरम् २१ पूर्वमुक्तोमरुरितिनाम्नायोनृपतिर्मया ॥ कलापग्राममाश्रित्यहिमाद्रौबद्रिकाश्रमे २२ सतप
श्चिरकालंहिकरोत्यत्रसमाधिमान् ॥ कृतेयुगेपुनःप्राप्तेसूर्यवंशंकरिष्यति २३ एवंमयासमाख्यातःसूर्यवंशोमनोरमः ॥ विष्णोरारम्यकथिताएकषष्टितमामया २४
एकषष्टिनृपाश्चाग्रेमध्येरामोविराजते ॥ त्रयोविंशोत्तरशताश्चैवंविष्णोर्मयोदिताः २५ एवंयथात्वयापृष्टंशिष्यवंशानुकीर्तनम् ॥ तन्मयाकथितंसर्वंश्रवणात्पुण्यवर्द्ध
नम् २६ विष्णुदासउवाच ॥ गुरोमयाश्रुतंकस्यचिन्मुनेर्मुखतःपुरा ॥ रामायणंसविस्तारंतच्चेदंनैवभासते २७ तस्माद्यत्रांतरंप्रोक्तंत्वयासर्वत्रमांगुरो ॥ संदेहोऽनेनमे
जातस्तंत्वंछेत्तुमिहार्हसि २८ रामदासउवाच ॥ पुनःपुनःकल्पभेदाज्जाताःश्रीराघवस्यच ॥ अवताराःकोटिशोऽत्रतेपुभेदःक्वचित्क्वचित् २९ कृतोऽस्तिराघवेणैवनस
र्वेसदृशाःकृताः ॥ रामायणान्यपितथापुरावाल्मीकिनैवहि ३० अनेकान्यंतरेणैवकीर्तितानिसविस्तरात् ॥ शतकोटिमितातेषांसर्वेषांगणनाकृता ३१ तस्मात्त्वयानसं
देहःकार्यःशिष्याऽत्रबुद्धिमन् ॥ यन्मयाकथितंतेहितत्तथ्यंविद्धिनान्यथा ३२ भागाद्भरतखंडांतर्गताद्रामायणात्पुरा ॥ नारदादिपुराणानिव्यासेनाऽत्रकृतानिहि ३३
तेषुमत्कथितंचेदंसम्यग्विस्तारितंद्विज ॥ तवजातोयथाशिष्यसंदेहोऽत्रकथांतरात् ३४ भविष्यतितथाऽन्येषामग्रेयदिकदाचित ॥ नारदादिपुराणेषुदर्शनीयंहितैर्जनैः ३५
इत्थमद्युक्तंसर्वंपुपुराणादिषुपंडितैः ॥ त्यक्तव्याःस्वीयसंदेहाःसत्यंज्ञेयंमयेरितम् ३६ ॥ इतिश्रीशतकोटिरामचरितांतर्गतश्रीमदानंदरामायणेवाल्मीकीयेपूर्णकांडेसूर्यवंशवर्ण

नंनामसप्तमःसर्गः ॥७॥ विष्णुदासउवाच ॥ गुरोऽधुनावदस्वत्वंयन्मयापृच्छ्यतेतव ॥ अनुक्रमणिकासर्गंतथापाठादिभिःफलम् १ कांडसंख्यांसर्गसंख्यांश्लोकसंख्यांस
विस्तरां ॥ उद्यापनंग्रंथदानंफलंवैशकुनेक्षणम् २ अनुष्ठानविधानंचश्रोतुंकालविनिर्णयम् ॥ कांडानांचपृथक्संख्यांसर्वंत्वंवक्तुमर्हसि ३ ॥ श्रीरामदासउवाच ॥ अनुक्रम
णिकासर्गःप्रोच्यतेऽयंमयाधुना ॥ यस्याःसंश्रवणात्प्रोक्तंसर्वग्रंथफलंशुभम् ४ सर्गेऽत्रप्रथमेप्रोक्तंकौसल्यायाःस्वयंवरम् ॥ रामादीनांसुजन्मानिद्वितीयेकीर्तितानिहि ५
सीतास्वयंवरंप्रोक्तंतृतीयेमिथिलापुरि ॥ वृंदाशापादिकथनंचतुर्थेमुद्गलेनहि ६ दशरथपूर्वजन्मकैकेय्याश्चाऽपिपंचमे ॥ वनप्रयाणंरामस्यप्रोक्तंषष्ठेसविस्तरम् ७ विरा
धखगमारीचवधादिसप्तमेऽकथि ॥ किष्किंधायांवालिघातोराघवेणाऽष्टमेकृतः ८ नवमेजानकीशुद्धिर्लंकादग्धाहनूमता ॥ दशमेसेतुमाहात्म्यंकाशिविश्वेश्वरागमः ९
एकादशेरावणादिवधाःप्रोक्ताश्चराघवात् ॥ सीतयास्वपुरींगत्वाद्वादशेऽभूनृपोविभुः १० त्रयोदशेराघवस्यविक्रमश्चहनूमतः ॥ समाप्तंसारकांडंहियात्राकांडमुदीर्यते ११
वाल्मीकात्प्रथमेसर्गेश्लोकोत्पत्तिःप्रकीर्तिता ॥ रामायणविभागोऽत्रद्वितीयेसमुदाहृतः १२ तृतीयेसीतयारामोयात्रार्थंप्रार्थितोमुदा ॥ चतुर्थेरामचंद्रस्यप्रस्थानंजान्हवीं
प्रति १३ पंचमेमुनिवाक्येनयात्रांगंतुंविनिश्चयः ॥ षष्ठेप्रोक्तापूर्वदेशतीर्थयात्रासविस्तरा १४ प्रोक्तादक्षिणतीर्थानांयात्रारामस्यसप्तमे ॥ तीर्थाटनंपश्चिमायामष्टमेरा
घवस्यच १५ यात्रोत्तरप्रदेशस्यरामस्यनवमेऽकथि ॥ यात्राकांडसमाप्तंतुयागकांडमुदीर्यते १६ सर्गेऽत्रप्रथमेप्राहयज्ञोपकरणंगुरुः ॥ द्वितीयेरामचंद्रस्य
यागारंभोऽत्रवर्णितः १७ पृथ्वीप्रदक्षिणाप्रोक्तातृतीयेऽध्वरवाजिनः ॥ कुंभोदरस्यरामस्यसंवादोऽत्रचतुर्थके १८ पंचमेरामनाम्नांवैह्यष्टोत्तरशतंशुभम् ॥ षष्ठेऽन्हिकं
हिसर्वेषांवाजिमेधेप्रकीर्तितम् १९ ध्वजारोपविधानंचसप्तमेसमुदाहृतम् ॥ अष्टमेऽवभृथस्नानंराघवस्याऽत्रवर्णितम् २० नवमेवाजिमेधस्यसमाप्तिःकीर्तिताऽत्रसा ॥
यागकांडंसमाप्तंहिविलासाख्यमुदीर्यते २१ प्रथमेरघुवीरस्यस्तवराजोऽत्रकीर्तितः ॥ द्वितीयेरतिशालायाजानक्याश्चाऽपिवर्णनम् २२ तृतीयेराघवेणोक्तंदेहरामा
यणंस्त्रियै ॥ दिनचर्याभूषणानिजानक्याश्चचतुर्थके २३ जलयंत्रगताक्रीडापंचमेशेषमान्हिकम् ॥ द्विजस्यपत्न्यैप्रासादेषष्ठेऽलंकारमंडनम् २४ मूर्तीनांसप्तमेदानंदेवस्त्रीणां
वरास्तथा ॥ गुणवत्यापिंगलायावरदानमथाऽष्टमे २५ कुरुक्षेत्रस्ययात्रायांनवमेजानकीजयः ॥ विलासाख्यंसमाप्तंहिजन्मकांडमुदीर्यते २६ आरामेदोहदक्रीडासी
तायाःप्रथमेऽकथि ॥ द्वितीयेविविधाःक्रीडाःसीमंतोन्नयनोत्सवः २७ रजकस्योदितंश्रुत्वासीतात्यागस्तृतीयके ॥ जन्मकर्मचतुर्थेऽत्रकुशस्याऽथलवस्यच २८ सर्गेऽत्र
पंचमेप्रोक्तारामरक्षासुखावहा ॥ षष्ठेलवस्यकमलहरणेजयईरितः २९ युद्धादिकौतुकंप्रोक्तंपुत्रयोःसप्तमेविभोः ॥ सीतादिव्यंचतल्लाभोऽष्टमेप्रोक्तोऽत्रमंडपे ३० ज
न्मोपनयनादीनिबालानांनवमेऽकथि ॥ जन्मकांडसमाप्तंहिविवाहाख्यमुदीर्यते ३१ स्वयंवरार्थंगमनंरामस्यप्रथमेऽकथि ॥ स्वयंवरंचंपिकायाद्वितीयेसमुदाहृतम् ३२
स्वयंवरंसुमत्याश्चतृतीयेपरिकीर्तितम् ॥ कुशस्याऽथलवस्याऽपिविवाहौह्यौचतुर्थके ३३ गंधर्वनागकन्यानांमोचनंपंचमेऽकथि ॥ षष्ठेतासांविवाहानांनिश्चयःसमुदाहृतः ३४
विवाहाद्वादशप्रोक्ताःसर्वासांसप्तमेऽत्रहि ॥ अष्टमेयूपकेतोश्चवर्णितोऽत्रपराक्रमः ३५ प्रोक्तोमदनसुंदर्याविवाहोनवमेमहान् ॥ पूर्णंविवाहकांडंचराज्यकांडमुदीर्यते ३६

रामनामसहस्रंचसर्गेप्राथमिकेऽकथि ॥ द्वितीयेऽत्रसमानीतौरामेणसुरपादपौ ३७ रामकृष्णोपासकयोःसंवादश्चतृतीयके ॥ शतस्त्रीणांचनिद्रायावरदानंतथापुनः ३८
रामविश्लेषविरहःसीतायाःपंचमेऽकथि ॥ मूलकासुरघातश्चषष्ठेराज्यानिवैपृथक् ३९ जयोभरतखंडस्यरामेणसप्तमेकृतः ॥ जंबुद्वीपजयःप्रोक्तोऽष्टमेरामस्यविस्त
रात् ४० षड्द्वीपानांजयःप्रोक्तोनवमेराघवस्यच ॥ यतिशूद्रद्विजशिक्षारामेणदशमेकृता ४१ चतुःस्त्रीणांवरदानंरामेणैकादशेकृतम् ॥ स्त्रीषोडशसहस्राणांद्वादशे
ऽत्रवरार्पणम् ४२ अश्वत्थहसितंहास्यमुक्तिराज्ञात्रयोदशे ॥ चतुर्दशेवाल्मीकिनास्वजन्मत्रयमीरितम् ४३ पंचदशेरामराज्यवर्णनंविस्तरात्कृतम् ॥ वर्णिताराजनी
तिःश्रीराघवेणाऽत्रषोडशे ४४ सप्तदशेऽत्रकथितंकुशकन्यास्वयंवरम् ॥ अष्टादशेरामनाथपुरंदत्तंद्विजन्मनाम् ४५ एकोनविंशेरामस्यदिनचर्येरिताशुभा ॥ राज्ञां
विंशेऽवतारेपुश्रेष्ठःप्रोक्तस्त्वयंमहान् ४६ एकविंशेराघवेणदास्यैदत्तोवरोमुदा ॥ सीतयातुलसीपत्रंद्वाविंशेसंधितंशुभम् ४७ त्रयोविंशेस्मृताऽऽनन्दरामायणफलश्रुतिः ॥
यमशिक्षाचतुर्विंशेधर्मशिक्षाचभूतले ४८ राज्यकांडंसमाप्तंहिमनोहरमुदीर्यते ॥ सर्गेऽत्रप्रथमेप्रोक्तंलघुरामायणंशुभम् ४९ नागराणांचमातॄणामुपदेशंद्वितीयके ॥
रामपूजोपासनादिविस्तारश्चतृतीयके ५० रामतोभद्रविस्तारश्चतुर्थेसमुदीरितः ॥ रामलिंगतोभद्राणांभेदाःप्रोक्ताश्चपंचमे ५१ नवमीव्रतविस्तारःषष्ठेप्रोक्ताचतत्क
था ॥ श्रीरामनाम्नांलक्षस्योद्यापनादीनिसप्तमे ५२ वेदादीनांहिसर्वेषामष्टमेफलमीरितम् ॥ सार्द्धमासद्वयीपूजाकथितानवमेविभोः ५३ दशमेचैत्रमासस्यमहिमा
समुदीरितः ॥ एकादशेमधुस्नानात्सर्वेषांगतिरीरिता ५४ अद्वैतंदर्शितंराज्ञाद्वादशेस्त्रीकदंबकम् ॥ वायुपुत्रस्यरामस्यकवचेद्वेत्रयोदशे ५५ सीतायाःकवचादीनि
प्रोक्तान्यत्रचतुर्दशे ॥ पंचदशेकवचानितद्बन्धूनांस्मृतानिहि ५६ मतंहनुमतःप्रोक्तंपताकाख्यंहिषोडशे ॥ प्रोक्तंसप्तदशेसाररामायणमनुत्तमम् ५७ अष्टादशेशरसे
तोःखंडनंचहनूमता ॥ जातंमनोहरकांडंपूर्णकांडमथोच्यते ५८ वाल्मीकिनासोमवंशविस्तारःप्रथमेऽकथि ॥ रामचन्द्रस्यप्रस्थानंद्वितीयेहस्तिनापुरम् ५९ सूर्य
सोमवंशजयोर्युद्धंप्रोक्तंतृतीयके ॥ सोमसूर्यवंशजयोर्मैत्रीकीचचतुर्थके ६० कुशादीनांराघवेणपंचमेऽत्रविसर्जनम् ॥ वैकुंठारोहणंषष्ठेगंगायांराघवस्यच ६१ सप्तमेसूर्यवं
शीयनृपाणांस्थापनंकृतम् ॥ अनुक्रमणिकासर्गःप्रोक्तोऽयमष्टमोमहान् ६२ ग्रंथश्रुतिफलादीनिनवमेकीर्तितानिहि ॥ नवसर्गःपूर्णकांडंसंपूर्णनवमंत्विदम् ६३ अनुक्रम
णिकाचेयंमयाशिष्यप्रवर्णिता ॥ अस्याःश्रवणमात्रेणरामायणश्रुतेःफलम् ६४ रामायणपुस्तकस्यनित्यंकार्यंप्रपूजनम् ॥ विशेषंपूजनस्याऽपिशृणुवदामिशिष्यतम्
६५ सारकांडंविभोःस्थानेलक्ष्मणीयेद्वितीयकम् ॥ नवायतनरीत्येत्थंशेषाणिस्थापयेत्क्रमात् ६६ सप्तकांडानिविधिवत्तेषांपूजनमाचरेत् ॥ अथवाराज्यकांडस्यपूर्वार्धं
रामसत्स्थले ६७ राज्यकांडस्योत्तरार्धंसीतास्थानेन्यवेशयेत् ॥ लक्ष्मणीयेसारकांडंशेषाण्यग्रेक्रमेणतु ६८ एवंसंस्थाप्यकांडानितेषांपूजनमाचरेत् ॥ नवायतनपूजायाः
फलमेतेनकीर्तितम् ६९ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गत श्रीमदानन्दरामायणे वाल्मीकीये आदिकाव्ये पूर्णकांडे अनुक्रमणिकानामाऽष्टमःसर्गः ॥ ८ ॥
श्रीरामदासउवाच ॥ सारंयात्राख्यंयागाख्यंविलासाख्यंतुजन्मकम् ॥ विवाहाख्यंहिराज्याख्यंश्रीमनोहरपूर्णके १ कांडान्यनुक्रमेणैवाऽऽनन्दरामायणेनव ॥ त्रयोदशे

सारकांडेसर्गावाल्मीकिनेरिताः २ यात्राकांडेनवज्ञेयायागकांडेऽपि वैनव ॥ नवज्ञेयाविलासाख्येजन्मकांडेऽपिवैनव ३ नवज्ञेयाविवाहाख्येचतुर्विंशाश्वराज्यके ॥
मनोहराख्येज्ञातव्यासर्गाअष्टादशाऽत्रवै ४ पूर्णकांडेनवज्ञेयाःसर्गाःपापहरान्नृणाम् ॥ एवंनवोत्तरशते १०९ सर्गाज्ञेयाःशुभावहाः ५ सारकांडेपंचविंशच्छतंश्लोकाः
 सत्रिंशकाः २५३० ॥ यात्राकांडेसप्तशतंपंचत्रिंशोत्तरंस्मृताः ७३५ ॥ ६ यागकांडेषट्शतंचपंचविंशोत्तरंशुभाः ६२५ ॥ विलासाख्येषट्शतंचसाष्टसप्ततिसंस्मृ 
ताः ६७८ ॥ ७ जन्मकांडेह्यष्टशताःसद्विश्लोकाःप्रकीर्तिताः ८०२ ॥ विवाहाख्येपंचशतंकीर्तिताःसत्र्यशीतयः ९८३ ॥ ८ सद्वाविंशाराज्यकांडेसुषड्विंशच्छतं
स्मृताः २६२२ ॥ एकत्रिंशच्छतंश्लोकाःप्रोक्ताःकांडेमनोहरे ३१०० ॥ ९ पूर्णकांडेपंचशतंसप्तसप्ततिमिश्रिताः ५७७ ॥ आनन्दरामचरितेसहस्राणिद्विद्वादश १०
द्वेशतेचद्विपंचाशच्छ्लोकाज्ञेयामनीषिभिः १२२५२ ॥ एवंशिष्यमयाप्रोक्तंयथापृष्टंत्वयापुरा ११ रामस्यतोषचरितंश्रवणात्पातकापहम् ॥ पूर्णकांडमिदंज्ञेयंश्रवणा
त्पुण्यवर्धनम् १२ सारकांडश्रवादेवसंसारान्मुच्यतेनरः ॥ यात्राकांडेनयात्राणांलभ्यतेमानवैःफलम् १३ यागकांडेनयज्ञानांलभ्यतेफलमुत्तमम् ॥ विलासकांडश्रवणा
दप्सरोभिर्विमोदते १४ जन्मकांडेनप्राप्नोतिनरःपुत्रादिसन्ततिम् ॥ विवाहकांडश्रवणाद्रम्याश्रीर्लभ्यतेभुवि १५ राज्यकांडेनराज्यंहिमानवैर्भुविलभ्यते ॥ कांडंमनो
हरंश्रुत्वालभ्यतेमनसेप्सितम् १६ पूर्णकांडश्रवादेवविष्णोःपूर्णपदंलभेत् ॥ सर्वंविस्तरतःश्रुत्वाऽऽनन्दरामायणंत्विदम् १७ सच्चिदानन्दरूपेसलीनोभवतिमानवः ॥
रामायणंनरैःश्रुत्वाकार्यंमुद्यापनंनरैः १८ रामायणेश्रुतेदद्याद्रथंहेममयंसुधीः ॥ चतुर्भिर्वाजिभिर्युक्तंतथाक्षौमपताकया १९ यंत्रैश्चैवसमायुक्तंकिंकिणीनादनादितम् ॥
संपादितेऽस्यसम्यग्वैधेनुंदद्यात्पयस्विनीम् २० ब्राह्मणान्भोजयेत्पश्चाच्छतमष्टोत्तरंसुधीः ॥ एवंकृतेविधानेतन्महाकाव्यंफलप्रदम् २१ रामायणंभवेन्नूनंनाऽत्रकार्या
विचारणा ॥ यस्मिन्रामस्यसंस्थानंरामायणमथोच्यते २२ नरःप्रातःसमुत्थायाऽऽनन्दरामायणंपठेत् ॥ यःसकामानवाप्नोतिसकलान्यदिविदुर्लभान् २३ चैत्रमासे
सितेपक्षेनवम्यांरामजन्मनि ॥ शतमाषसुवर्णेनवायुपुत्रंविधायच २४ एकविंशतिमाषैर्वायथाशक्त्याऽथवानरैः ॥ वायुपुत्रंसंविधायाऽऽनन्दरामायणंत्विदम् २५
मौल्यद्वारालिखित्वान्यैर्लिखित्वावास्वहस्ततः ॥ तत्पुनश्चित्ररंगाद्यैर्भूषितंसुविशोधितम् २६ वेष्टितंपट्टकूलाद्यैस्ततस्तत्पुस्तकंशुभम् ॥ स्कंधेश्रीमारुतेःस्थाप्यपू
जितंदक्षिणान्वितम् २७ मध्याह्नेब्राह्मणंपूज्यनानाशास्त्रविशारदम् ॥ तस्मैदेयंपुस्तकंतद्वायुपुत्रसमन्वितम् २८ एवंयःकुरुतेदानंतस्यपुण्यंवदाम्यहम् ॥ कोटि
मारसुवर्णस्यकुरुक्षेत्रेरविग्रहे २९ दानेनपुण्यंयत्प्रोक्तंतस्मादेतच्छताधिकम् ॥ अक्षराण्यत्रयावन्तिसंतिह्यानंदसंज्ञके ३० तावद्युगसहस्राणिवैकुण्ठेमोदतेनरः ॥
सप्तजन्मभवेद्विप्रस्ततोऽत्रवेदपारगः ३१ रम्यंपवित्रमानन्दनायकंचमनोहरम् ॥ आनन्दसंज्ञकंरामचरितंपुण्यवर्द्धनम् ३२ रामायणमिदंपुण्यंयेशृण्वंतिनरोत्तमाः ॥
पुत्रैःपौत्रैःसुहृद्भिश्चनवियोगंलभन्तिते ३३ रामायणमिदंयेऽत्रभक्त्याशृण्वंतिमानवाः ॥ तेषांस्त्रीभिर्वियोगोऽत्रनकदापिहिजायते ३४ आनन्दसंज्ञकंपुण्यंयाःशृण्वं 
त्यत्रवैस्त्रियः ॥ स्वभर्तृभिर्वियोगंतानगच्छतियथारमा ३५ ग्रामंदेशांतरंतीर्थंयेगताश्चचिरंनराः ॥ तेषामागमनार्थंहिपठनीयमिदंसदा ३६ येषांभावीनिकार्याणिलब्धुं

त्वरयतेमनः ॥ आनंदसंज्ञकंतैस्तुपठनीयंप्रयत्नतः ३७ प्रथमेदिवसेकांडमेकमेवपठेच्छुभम् ॥ प्रथमंचद्वितीयंचद्वितीयेदिवसेपठेत् ३८ एवंक्रमेणकांडानांवृद्धिःकार्यादिने
दिने ॥ नवकांडानिनवमेदिवसेसंपठेन्नरः ३९ अष्टकांडानिदशमेक्षयस्त्वेकेनवैक्रमात् ॥ सप्तदशदिनैर्ज्ञेयमनुष्ठानमिदंमहत् ४० अथवाक्रमेणकांडानिप्रथमंप्रथमेपठेत् ॥
द्वितीयंचद्वितीयेऽन्हिनवमंनवमेदिने ४१ अष्टमंदशमेप्रोक्तंक्षयःकार्यःक्रमेणहि ॥ सप्तदशदिनैरेतदनुष्ठानंसुखावहम् ४२ अथवापृथक्कांडेषुसर्गवृद्धिक्षयःक्रमात् ॥ ए
वमेकदिनन्यूनसप्तमासैश्चरेद्व्रतम् ४३ ॥ दिनसंख्या २०९ ॥ अथवाप्रथमेसर्गस्त्वेकएवपठेन्नरः ॥ द्वौसर्गौचद्वितीयेऽन्हिवृद्धिस्त्वेवंक्रमेणहि ४४ नवोत्तरशतेप्राप्तेदिनेकृत्स्नं
त्विदंपठेत् ॥ पुनःक्षयोऽनुक्रमतस्त्वेवंसप्तदिनोत्तरैः ४५ सप्तमासैरनुष्ठानंज्ञेयंकार्यैकसाधनम् ॥ दिनसंख्या२१७ ॥ अथवाप्रथमेचाऽन्हिसर्गंप्राथमिकंपठेत् ४६ द्वितीये
ऽन्हिद्वितीयश्चतृतीयेह्नितृतीयकम् ॥ नवोत्तरशतेप्राप्तेदिनेचचरमंपठेत् ४७ दशोत्तरशतेप्राप्तेह्यष्टोत्तरशताभिधम् ॥ पठेत्सर्गंक्रमेणैवशिष्यसप्तदिनोत्तरैः ४८ सप्तमासैरनु
ष्ठानंज्ञेयंसाधारणंनृणाम् ॥ पंचानुष्ठानभेदाश्चमयैवंपरिकीर्तिताः ४९ अनुष्ठानसमाप्तौहिहोमःकार्योयथाविधि ॥ पृथक्श्लोकंसमुच्चार्यस्वाहांतंपायसैःफलैः ५० नावान्नेना
थवाकार्योहोमोद्विजवरैःसह ॥ ब्राह्मणान्भोजयेत्पश्चादनुष्ठानादिनैर्मितान् ५१ एतत्प्रातःसमुत्थायानंदरामायणंशुभम् ॥ येपठंतिनराभक्त्यातेसुखंप्राप्नुवंतिहि ५२ द्वाद
श्यामपिचैतद्धिपठनीयंप्रयत्नतः ॥ पारायणंनवदिनैःकार्यमस्यसुखावहम् ५३ कांडंसर्गोऽथवाश्लोकस्त्वानन्दाख्यस्यप्रत्यहम् ॥ ननराःकीर्तयंत्यत्रतेषांजन्मनिरर्थकम्
५४ पुत्रार्थंरतिशालायांशृणोतिपुरुषःस्त्रिया ॥ निशायांशयनारूढोऽपुत्रीपुत्रमवाप्नुयात् ५५ नवराशिपुव्रीहीणांध्यात्वाकार्यंतुविन्यसेत् ॥ पूगीफलानिचत्वारिपूर्वेणकां
डमुच्यते ५६ द्वितीयेनहिसर्गस्तुतृतीयेनफलेनहि ॥ दशकोऽस्यचविज्ञेयश्चतुर्थेनफलेनच ५७ श्लोकोज्ञेयःपूर्वराशेःसर्वेषांगणनेरिता ॥ सर्वत्रांत्येनश्लोकेनविपरीतंफलं
स्मृतम् ५८ एवंसर्वैर्दर्शनीयःशकुनश्चशुभोऽशुभः ॥ एवंशिष्यत्वयायद्यत्पृष्टंतत्तन्मयोदितम् ५९ आनन्दरामायणमेतदुत्तमंनवोत्तरंसर्गशतंमयेरितम् ॥ कांडानियस्मि
न्नवकीर्तितानितेहेविष्णुदासाऽघहरंमनोहरम् ६० दिनेदिनेपापचयान्प्रकुर्वन्नरःपठेत्श्लोकमपीहभक्त्या ॥ विमुक्तसर्वापचयःप्रयातिरामस्यसालोक्यमनन्यलभ्यम्
६१ आनन्दरामायणमेतदुत्तमंयेरामदासस्यमुखेनकीर्तितम् ॥ श्रीराघवेणैवजनाघनाशनंनानाचरित्रैर्वरकौतुकैर्युतम् ६२ धन्यःसवाल्मीकिमुनिःकवीश्वगेरामायणंवै
शतकोटिसंमितम् ॥ कृतपुरायेनसविस्तरंशुभंयस्माचसारंकथितंमयातव ६३ आनंदरामायणमेतदुत्तमंश्रीजानकीक्रीडनकौतुकैर्युतम् ॥ शृण्वंतिगायंतिवदंतिवाप
रान्कुर्वंतिपारायणमादराच्चये ६४ लभंतिपुत्रानतिबुद्धिमत्तरान्स्त्रीश्चाऽपिपौत्रान्परमान्मनोहरान् ॥ धनानिधान्यानिपशूंश्चमानवाःश्रीरामचंद्रस्यपदंप्रयांतिते ६५
६९ आनंदसंज्ञंपठतश्चनित्यंश्रोतुश्चभक्त्यालिखितुश्चरामः ॥ अतिप्रसन्नश्चसदासमीपेसीतासमेतःश्रियमातनोति ६६ आनंदरामायणजान्हवीयंपापापहंत्रीमलिनस्यजं
तोः ॥ आनंदरामायणकामधेनुस्त्वियंजनानामतिकामदोग्ध्री ६७ रामायणंजनमनोहरमादिकाव्यंब्रह्मादिभिःसुरवरैरपिसंस्तुतंच ॥ श्रद्धान्वितःपठतियःशृणुयात्स
नित्यंविष्णोःप्रयातिसदनंसविशुद्धदेहः ६८ नवोत्तरशतैःसर्गैरामकीर्तनमालिकाम् ॥ कृत्वाकण्ठेसुखंतिष्ठशिष्येमांत्वंमयोदिताम् ६९ ॥ श्रीशिवउवाच ॥ आनन्दराम

चरितमिदंस्वीयगुरोर्मुखात् ॥ श्रुत्वासविष्णुदासस्तंननामार्च्यपुनःपुनः ७० रामदासःस्वशिष्यायानंदरामायणंप्रिये ॥ एवमुक्त्वामुनिःसंध्यांकर्तुंगोदांगमिष्यति ७१
एवंदेवितवाग्रेऽद्यमयाऽपिपरिकीर्तितम् ॥ आनंदरामचरितंश्रवणात्पुण्यवर्द्धनम् ७२ रामकीर्तनमालायांमेरुस्थानेत्वयंमहान् ॥ सर्गोमयातेकथितःश्रवणान्मंमलप्रदः ७३
॥ श्रीपार्वत्युवाच ॥ यदावाल्मीकिनादेवकृतंरामायणंवरम् ॥ तदाकरामदासःससंवादोऽस्मिंस्त्वयाऽकथि ७४ कतदाविष्णुदासोऽपिसंशयोमेऽत्रजायते ॥ श्रीशिव
उवाच ॥ त्रिकालयाज्ञानदृष्ट्यामुनिनाऽत्रकथांतरे ७५ उभयोर्भाविसंवादःसोऽपिपूर्वंप्रवर्णितः ॥ यथारामस्यचरितंरामात्पूर्वंप्रवर्णितम् ७६ संदेहोऽत्रत्वयानैवकार्यः
पर्वतकन्यके ॥ रामदासमुखेनैतद्राघवेणैववर्णितम् ७७ आनंदरामायणमादरेणश्रीरामचंद्रेणमुनेर्मुखेन ॥ तद्रामदासस्यमुदैवचोक्तंभक्तिप्रदंमुक्तिदमेतदत्र ७८ आनंद
रामायणमादरेणपुत्रेप्रजातेपठनीयमेतत् ॥ विवाहकालेव्रतबंधकालेश्राद्धेपठेत्पर्वणिमंगलेच ७९ आनंदरामायणमादरेणकारागृहस्थस्यविमुक्तयेच ॥ उत्पातशांत्यैभयना
शनायप्रमोःकृपार्थंपठनीयमारदात् ८० आनंदरामायणमादरेणशृणोतिवाश्रावयतेचभक्त्या ॥ स्वकीयकामानखिलानवाप्यवैकुण्ठलोकंखलुजंग्मतुस्तौ ८१ आनंदरा
मायणतोऽधिकानिनसंतितीर्थानिहरेःस्थलानि ॥ क्षेत्राणिदानान्यपिपुण्यदानितथापुराणान्यऽथकीर्तितानि ८२ आनंदरामायणमेतदुत्तमंप्रोक्तंमयातेगिरिजेसविस्त
रम् ॥ त्वंचिंतयस्वाऽघहरंनिरन्तरंमनोहरंलप्स्यसिराघवेमतिम् ८३ आदौहत्वादशास्यंद्विजवचनगुरुत्वेनयात्राश्चयज्ञान्कृत्वाभुक्त्वातिभोगानवनितलविशर्तीग्रहीत्वा
ऽथसीताम् ॥ लब्ध्वानानास्नुषास्तास्त्ववनितलगतान्पार्थिवादींश्चजित्वाकृत्वानानोपदेशान्गजपुरनिकटेस्वीयलोकंजगाम ८४ वामेभूमिसुतापुरस्तुहनुमान्पृष्ठेसुमि
त्रासुतःशत्रुघ्नोभरतश्चपार्श्वदलयोर्वायव्यकोणादिषु ॥ सुग्रीवश्चविभीषणश्चयुवराट्तारासुतोजांबवान्मध्येनीलसरोजकोमलरुचिरामंभजेश्यामलम् ८५ आनंदरामायण
हारकोपमंयेपूर्णकांडंचरमंनरोत्तमाः ॥ पठंतिशृण्वंतिहरेःपरंपदंव्रजंतिपूर्णेप्सितमाल्यंतिते ८६ आनंदरामायणमेतदुत्तमंजप्यंपवित्रंश्रवणीयमादरात् ॥ यन्मंगलाना
मपिमंगलप्रदंस्मरामिनित्यंप्रणमामिसादरम् ८७ ॥ ॥ इति श्रीशतकोटिरामचरितांतर्गतश्रीमदानन्दरामायणे वाल्मीकीये आदिकाव्ये पूर्णकांडे उमामहेश्वरसं
वादे तथारामदासविष्णुदाससंवादे ग्रंथफलश्रुतिर्नामनवमःसर्गः ॥ ९ ॥ ॥ इतिपूर्णकांडंनवमंसंपूर्णम् ॥ ९ ॥ ॥ समाप्तमानन्दरामायणम् ॥ ॥ ॥

१ गच्छतिस्वैरितिपाठः । २ रामोहत्वेतिपाठः ।

इदं शतकोटिरामायणांतर्गतश्रीमदानन्दरामायणं ऐतापुरेइत्युपाख्यश्रीखण्डाळाचार्यात्मजवासुदेवाचार्यैः लिखितमुद्रितपुस्तकानिसंपाद्य तद्द्वारासंशोध्य विषमस्थलेषुटिपण्यातथापाठांतरैःसंयोज्य मुम्बय्यां गोपाळनारायणप्रभृतिजनतायाः मुद्रायन्त्रालये पिङ्गळेउपनामककृष्णात्मजरामचन्द्रेण मुद्रायन्त्रालयाधिपतये मुद्रितम् । चतुर्विंशाधिकाष्टादशशततमे शाके मार्गशीर्षकृष्णद्वादश्यां भृगुवासरे मुद्रणंसमाप्तिमगमत् । शके १८२४ शुभकृन्नामसंवत्सरे ।

